(२) **सर्वज्ञनारायणः** । सर्वान् केशान् वापयन्त इति क्वचित् गृह्ये विकल्पेन गोदानकर्मणि सर्वकेशवपनविधेस्तेनोपलक्षणेन गोदानकर्म **केशान्त** उच्यते केशानामन्तो वेति व्युत्पत्त्या ।।६५।।

(३) **कुल्लूकः** । 'केशान्ताख्यो गृह्योक्तसंस्कारो गर्भादिसङ्ख्या वर्षाणा'-मिति बौधायनवचनाद्गर्भषोडशे वर्षे ब्राह्मणस्य, क्षत्रियस्य गर्भद्वाविंशे, वैश्यस्य ततो द्व्यधिके गर्भचतुर्विंशे कर्तव्यः ।।६५।।

(४) **राघवानन्दः** । गृह्योक्तसंस्कारविशेषस्य कालमाह **केशान्त इति । षोडश** इत्यागर्भात् । तथा च **बौधायनः** 'केशान्ताख्यः स्वगृह्योक्तः संस्कारो गर्भादिसंङख्यावर्षाणा'मिति **द्व्यधिके** ततश्चतुर्विंशतिवर्षे एतदेव पुनर्गोदानाख्यं कर्म ।।६५।।

(५) **नन्दनः** । **षोडशे** जन्मन आरभ्य । **ततो द्व्यधिके** चतुर्विंशे ।।६५।।

(६) **रामचन्द्रः** । द्विजानां गोदानाख्यं कर्माह । ब्राह्मणस्य **केशान्तः** संस्कारः गोदानाख्यं कर्मेत्यर्थः । **षोडशे वर्षे** विधीयते । क्षत्रियस्य **द्वाविंशे** वर्षे केशान्तसंस्कारः कार्यः । **वैश्यस्य द्व्यधिके** द्वाभ्यां अधिके चतुर्विंशे वर्षे केशान्तं कर्म ।।६५।।

(७) **मणिरामः** । श्मश्रुकर्मरूपं केशान्ताख्यसंस्कारमाह **केशान्त इति ।** अत्रापि गर्भादेव षोडशादिसङख्या ज्ञेया । 'गर्भादिसङख्या वर्षाणा'मिति **बौधायनोक्तेः** । **ततो द्व्यधिके** द्वाविंशात् द्व्यधिके गर्भचतुर्विंश इत्यर्थः ।।६५।।

(८) **गोविन्दराजः । केशान्त इति ।** केशान्ताख्यः संस्कारः ब्राह्मणादीनां यथाक्रमं षोडशद्वाविंशचतुर्विंशेषु वर्षेषु विधीयते ।।६५।।

**अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ।**
**संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ।।६६।।**

(१) **मेधातिथिः । इयमावृदशेषतः** स्त्रीणा**ममन्त्रिका** कार्या । जातकर्मण आरभ्येयं संस्काराणाम् **आवृत्** परिपाटी, सेतिकर्तव्यताकः संस्कारकलाप इति यावत् । **संस्कारार्थं** शुद्धचर्थं शरीरस्य । पुंसामिव स्त्रीणामपि प्रयोजनमाह **यथाकालम् ।** यस्मिन्काले यः संस्कार उक्तस्तं कालमनतिक्रम्य । पदार्थानतिवृत्तौ 'यथासादृश्ये' (पा. २।१।७) अव्ययीभावः । एवं क्रमेऽपि द्रष्टव्यम् ।

मन्त्रमात्ररहिताया आवृतो विहितत्वादयथाकालक्रमप्राप्तिरेव नास्ति । अतो निषेधो नित्यानुवादो वृत्तपूरणार्थः । एतावद्विवक्षितं स्त्रीणां चैते अमन्त्रका इति ।।६६।।

(२) **सर्वज्ञनारायणः**। 'प्राङ्नाभिवर्धनात्पुंस' इत्यनुवर्ततेऽतः स्त्रीणामप्राप्तौ विधिः। इयमावृज्जातकर्मादिक्रियापरिपाटी गर्भाधानादेस्तत्पूर्वकर्मणः स्त्रीत्वानिश्चयेनामन्त्रकत्वायोगात्। अशेषतः सकलाङ्गवती संस्कारार्थं बैजिकगार्भिकदोषहृत्त्वात् ऋत्वाद्यधिकारसिद्ध्यर्थं यथाकालं 'दशम्यां नामधेय'मित्यादिकालेऽपि कार्या असंभवेऽन्येनापि। स्वकाले च कर्तुं [अ]शक्तानां कालान्तरेपि नामकरणादीनां यथोक्तक्रमेणैवानुष्ठानमित्येतदर्थं यथाक्रममित्युक्तम्। अत्र शूद्रस्य विशेषानभिधानात् नामकरणगुणविधेश्च स्त्रीणामिवामन्त्रकं सर्वं कार्यमिति गम्यते ॥६६॥

(३) **कुल्लूकः**। **अमन्त्रिकेति**। इयमावृदयं जातकर्मादिक्रियाकलापः समग्र उक्तकालक्रमेण शरीरसंस्कारार्थं स्त्रीणाममन्त्रकः कार्यः ॥६६॥

(४) **राघवानन्दः**। तेषु स्त्रीणां विशेषमाह **अमन्त्रिका त्विति** द्वाभ्याम्। आवृत् जातकर्मादिक्रियाकलापपरिपाटी अमन्त्रिका अत्रोपयुक्ता होमास्तु समन्त्रका एव ॥६६॥

(५) **नन्दनः**। एवं तावज्जातकर्मादयः संस्काराः पुंसामुक्ताः, स्त्रीणामप्येतानमन्त्रकानतिदिशति **अमन्त्रिकेति**। **आवृत्** प्रयोगः, क्रियेति यावत् ॥६६॥

(६) **रामचन्द्रः**। **स्त्रीणां** कन्यानां **आवृत्** जातकर्मादिक्रिया प्रधानक्रिया **अमन्त्रिका** कर्तव्या आविवाहं शरीरस्य संस्कारार्थं **यथाकालं** कालानुसारेण ॥६६॥

(७) **मणिरामः**। **आवृत्** जातकर्मादिक्रियाकलापः। **यथाकालं** जातकर्माद्युक्तकाले ॥६६॥

(८) **गोविन्दराजः**। 'प्राङ्नाभिवर्धनात्पुंस' इति पुंग्रहणस्य स्त्र्यर्थत्वे प्रमाणाभावात् स्त्रीणामप्राप्त इत्यत आह **अमन्त्रिकेति**। **एषा** सकलसंस्कारपद्धतिः कालक्रमानतिक्रमणेन **स्त्रीणां संस्कारार्थं मन्त्रवर्जिता कार्या** ॥६६॥

**वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।**
**पतिसेवा गुरौ वासो, गृहार्थोऽग्निपरिक्रिया ॥६७॥**

(१) **मेधातिथिः**। पूर्वेणावृद्वचनेन जातकर्मादिवदुपनयनेऽप्यमन्त्रके प्राप्ते तन्निवृत्त्यर्थमारभ्यते। वेदग्रहणार्थो **वैदिकः संस्कार** उपनयनाख्यो यः स **स्त्रीणां वैवाहिको विधिः**। विवाहे भवो विवाहविषयो विवाहसाध्यः। अतो विवाहस्योपनयनस्थाने विहितत्वात्तदापत्तिवचनं विवाहस्य। तस्य च निवृत्तिर्यदि विवाहस्तत्कार्यकरः।

---

(६७) संस्कारो वैदिकः स्मृतः = औपनायनिकः स्मृतः (ठ)
(६७) गृहार्थोग्निपरिक्रिया = गृहार्थोग्निपरिग्रहः (क)
= गृहार्थेग्निपरिक्रिया (ख, ग)

हन्त प्राप्तं वेदाध्ययनं, प्राप्ता च व्रतचर्या। उपनयनं नाम मा भूत्। एतदुभयमपि निवर्तयति **पतिसेवा गुरौ वासः।** पतिं यत्सेवत उपचरत्याराधयति स एवास्या गुरौ वसतिः। गुरौ वसत्याऽध्ययनं कर्तव्यम्। न चास्या गुरौ वासोऽस्त्यतः कुतोऽध्ययनम्। **गृहार्थो** गृहकृत्यानि रन्धनपारिणाह्यप्रत्यवेक्षणादीनि यानि नवमे वक्ष्यन्ते (श्लो. ११) "अर्थस्य संग्रहे चैनाम्" इत्यादि। सायम्प्रातर्ब्रह्मचारिणो यत्समिदाधानं तदेवास्या गृहकृत्यम्। अग्निक्रियया च यावान्यमनियमसमूहो ब्रह्मचारिणः स सर्व उपलक्ष्यते।

एवं चैतदुक्तं विवाहस्योपनयनापत्त्य (र्थे) म्। यथैव पुरुषस्योपनयनात्प्रभृति श्रौताः स्मार्ता आचारप्राप्ताश्च विधयो भवन्ति, प्राक्तनं कामचारः कर्माक्षमत्वमेवं स्त्रीणां प्राग्विवाहात्कामचारः, परस्मात् श्रौतस्मार्तेष्वधिकारः।

एवं वा पदयोजना। विवाह एव स्त्रीणां वैदिकः संस्कार उपनयनम्। अनुपनयनेऽपि विवाहे भक्त्योपनयनत्वमुच्यते। किं तदुपनयनेन विवाहस्य साम्यं येनास्य तद्व्यपदेश अत आह **पतिसेवेत्यादि**॥६७॥

(२) **सर्वज्ञनारायणः**। उपनयनं तु न कार्यं तासां विवाहसंस्कारस्य तत्स्थानीयत्वादित्यर्थः। वैदिको वेदाधिगमार्थ उपनयनरूपः। धर्मातिदेशार्थं तदङ्गसंपादनोक्ता **पतिसेवेति**। यथा गुरुशुश्रूषा व्रतिनस्तेनैव प्रकारेण स्त्रिया पतिः शुश्रूष्यः। यथा चाप्रमादेनाग्न्युपचरणं तत्र यथा गृहार्थेषु गृहप्रयोजनेषु पाकादिष्वप्रमत्तया भाव्यमित्यर्थः। परिष्क्रिया परिचर्या शूद्रस्य तु द्विजसेवैव गुरौ वास इति ग्राह्यम्॥६७॥

(३) **कुल्लूकः**। अनेनोपनयनेऽपि प्राप्ते विशेषमाह **वैवाहिक** इति। विवाहविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः। पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः। गृहकृत्यमेव सायंप्रातः समिद्धोमरूपोऽग्निपरिचर्या। तस्माद्विवाहादेरुपनयनस्थाने विधानादुपनयनादेर्निवृत्तिरिति॥६७॥

(४) **राघवानन्दः**। वैवाहिको वक्ष्यमाणविवाहसंबन्धी संस्कारः उपनयनसंस्कारस्थानीयः। तेन तन्निवृत्तिः **वैदिकः** वेदमन्त्रकृतः 'विवाहस्तु समन्त्रक' इत्युक्तेः। तासां पतिसेवैव गुरुकुलवासतया विधीयते। अकरणे प्रत्यवायस्मरणात्। करणे च स्तुतिस्मरणात्। एवं **गृहार्थो** गृहकृत्यमेव सायंप्रातः समिद्धोमरूपाग्निपरिचर्या॥६७॥

(५) **नन्दनः**। उपनयनान्तं तासां समन्त्रकं, तच्च विवाह एवेत्याह **वैवाहिक** इति। **संस्कार** उपनयनम्। **वैदिकः** समन्त्रकः। तत्र गुरुकुलवासोऽग्निकार्यं चोत्तरार्धेनोक्तम्। **गृहार्थः** गृहकार्यम्। **अग्निपरिक्रिया**ऽग्निपरिचर्या। विवाहस्योपनयनत्वप्रतिपादनं तत ऊर्ध्वं कामचारवादभक्षादिवर्जनार्थम्॥६७॥

(६) **रामचन्द्रः।** **स्त्रीणां संस्कारः** वैवाहिको विधिः **वैदिकः** वेदमन्त्रैः **स्मृतः**। स्त्रीधर्मानाह **पतिसेवा गुरौ वासः** गुरोः आचार्यस्य समीपे वासः कार्यः। **अग्नेः परिक्रिया** गृहार्थे पाकनिमित्तम् ।।६७।।

(**रामचन्द्रः।** अग्निहोत्रस्येति त्रिभिः। अग्निहोत्रस्य शुश्रूषा कार्या सायं-काले उद्वासं वैदिकं अग्निकर्म प्रतिदिनं पत्न्या कार्यम् ।।१।।)

(७) **मणिरामः**। अनेन स्त्रीणामुपनयनमपि प्राप्तम्। तत्र विशेषमाह **वैवाहिको विधिरिति**। तथा च स्त्रीणां विवाहविधिरेव उपनयनाख्यः संस्कारः पति-सेवैव वेदाध्ययनरूपो गुरुकुले वासः। गृहकार्यमेव सायंप्रातः समिद्धोमरूपाग्निपरि-चर्या। तस्माद्विवाहादेरुपनयनादिस्थाने विधानात् स्त्रीणामुपनयनादेर्निवृत्तिः ।।६७।।

(८) **गोविन्दराजः**। एवमुपनयनेऽप्यमन्त्रके प्राप्ते आह **वैवाहिक इति**। **यद्विवाहविधानं** तदेवासां **वैदिकसंस्कारः** उपनयनस्थाने। **पतिसेवा** च गुरुशुश्रूषा-स्थाने, **गृहकृत्यं** चाग्निपरिचरणस्थाने ।।६७।।

**एष प्रोक्तो द्विजातीनामौपनायनिको विधिः।**
**उत्पत्तिव्यञ्जकः पुण्यः, कर्मयोगं निबोधत।। ६८ ।।**

(१) **मेधातिथिः।** प्रकरणोपसंहारः—

एतावदुपनयनप्रकरणम्। अत्र यदुक्तं तत्सर्वमुपनयनार्थम्। "ननु केशान्तोऽप्येवं प्राप्नोति"। न। अतिवृत्ते उपनयने स्वकाले तस्य विधानात्। प्रकरणेऽपि पठितस्य वाक्यादन्यार्थता भवति। तथा च केशान्तः समावृत्तस्यापि कैश्चिदिष्यते।

उपनयने भव **औपनायनिकः**। उत्तरपदस्य दीर्घत्वम् पूर्ववत्। उत्पत्तिः माता-पित्रोः सकाशाज्जन्म तां व्यनक्ति प्रकाशयति सगुणतां करोती**त्युत्पत्तिव्यञ्जकः**। जातोऽप्यजातसमोऽनुपनीतोऽधिकाराभावात्। अतोऽयं विधिरुत्पत्तिव्यञ्जकः। **पुण्य** इत्युक्तार्थः। उपनीतस्य येन **कर्मणा योगः** सम्बन्धोऽधिकारो, यत्तेनोपनीतेन कर्तव्यं, तदिदानीं वक्ष्यमाणं **निबोधत** ।।६८।।

(२) **सर्वज्ञनारायणः**। उपनयनसंबन्धः उत्पत्तेर्द्वितीयस्या द्विजत्वरूपाया **व्यञ्जको** जनकः **कर्मयोग**मुपनेयस्य कर्मणा संबन्धम् ।।६८।।

(३) **कुल्लूकः। एष इति। औपनायनिक** इत्यनुशतिकादित्वादुभयपद-वृद्धिः। अयं द्विजातीनामुपनयनसम्बन्धी कर्मकलाप **उक्तः**। उत्पत्तेर्द्वितीयजन्मनो **व्यञ्जकः** ।।६८।।

(४) **राघवानन्दः**। वर्तिष्यमाणकर्मयोगं वक्तुं वृत्तं कीर्तयति **एष** इति। **औपनायनिक** उपनयनसंबन्धी उपनयनपर्यन्तो वा उपनीतस्य येन **कर्मणा योगस्तं** उत्पत्तिव्यञ्जकः उत्पत्तेर्द्वितीयजन्मनो व्यञ्जकः पुण्यस्तत्प्रदः ।।६८।।

(५) **नन्दनः । उत्पत्तिव्यञ्जको** मातापितृजन्मविशेषकः उपनयनस्य संस्कारान्तरेभ्यः प्रधानसंस्कारत्वं प्रतिपादितं **पुण्य** इति **कर्मयोगं** कर्माभ्यासं शौचाचारादिषु कौशलम् अत्रापि द्विजातीनामित्यनुकर्षः कर्मयोग्यमिति च पठन्ति ।।६८।।

(६) **रामचन्द्रः** । अतः **कर्मयोगं निबोधत** ।।६८।।

(७) **मणिरामः । उत्पत्तिव्यञ्जकः** । द्वितीयजन्मव्यंजकः ।।६८।।

(८) **गोविन्दराजः** । **एष इति** । एष द्विजातीनामुपनयनभवो विधिरुक्तः **उत्पत्तेर्व्यञ्जकः** प्रकाशकः जातस्याप्यनुपनीतस्याजा(ज्ञा)तसमत्वात् पुण्यहेतुत्वात् **पुण्यः** । इदानीमुपनीतस्योपनयनकर्मणि संबन्धः तच्छृणुत ।।६८।।

**उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः ।**
**आचारमग्निकार्यं च सन्ध्योपासनमेव च ।।६९।।**

(१) **मेधातिथिः** । **शिक्षयेद्व्युत्पादयेच्छौचमादितः** । **आदित इति** वचनेनाचारादिभ्यः प्रागुपदेशः शौचस्य नेष्यते, किं तर्ह्यनियतक्रमकाः परस्परमेते । केवलमुपनयनानन्तरं व्रतादेशनं वक्ष्यति । आदिष्टवेदव्रतस्य च वेदाध्ययनम् । अतोऽग्नीन्धनसन्ध्योपासनयोः समन्त्रकत्वादकृते व्रतादेशे मन्त्रोच्चारणमप्राप्तं विधीयेत । शौचं चानियतकालं, तदवश्यं तदहरेवोपदेष्टव्यम् । एवमाचारोऽपि । अत इदमादित इति वचनमादरार्थं न प्रथमोपदेश्यतां शौचस्य विधत्ते । **शौचम्**—'एका लिङ्गे' (अ. ५ श्लो. १३६) इत्याद्याचमनान्तम् ।

**आचारो** गुर्वादीनां प्रत्युत्थानासनदानाभिवादनादि । **अग्निकार्यं** अग्न्याधानकार्यं समित्समिन्धनम् ।

सन्ध्यायामादित्यस्योपासनं तत्स्वरूपभावनं **सन्ध्याया उपासनम्** । एवं वा 'पूर्वां सन्ध्यामित्यादि' (अग्रे १०१ श्लो.) । एष व्रतधर्मः ।।६९।।

(२) **सर्वज्ञनारायणः । शौचं** मृज्जलपरिमाणनियमादिविशिष्टं **आदितः** पूर्वं **आचारं** अभिवादनादि **अग्निकार्यं** समिदाधानं **सन्ध्योपासनं** सन्ध्यात्रयस्याचरणम् ।।६९।।

(३) **कुल्लूकः** । इदानीमुपनीतस्य येन कर्मणा योगस्तं शृणुतेत्याह **उपनीय गुरुरिति । गुरुः शिष्यमुपनीय** प्रथमम् 'एका लिङ्गे गुदे तिस्र' (अ. ५।१३६) इत्यादि वक्ष्यमाणं **शौचं** स्नानाचमनाद्या**चारमग्नौ** सायंप्रातः समिद्धोमानुष्ठानं समन्त्रक**सन्ध्योपासन**विधिं च शिक्षयेत् ।।६९।।

(४) **राघवानन्दः** । तत्रादौ गुरुशिक्षणीयमाह **उपनीयेति । शिष्यमिति** लिङ्गसङ्ख्ये अविवक्षिते 'अष्टवर्षं ब्राह्मणमुपनयीते'त्यादिश्रुते'र्जातिवत्पशुमालभेते'तिवत्

विधेयगतत्वात् पूर्वप्राप्तेरेकवाक्योपात्तत्वाच्च । अतो वक्ष्यति 'अध्येष्यमाण' (अ. २ । ६०) इत्येकवचनान्तं **शौचं** वक्ष्यते 'एका लिङ्गे' इत्यादिभिः । **अग्निकार्यं** अग्नौ सायंप्रातः समिद्धोमानुष्ठानम् ।।६९।।

(५) **नन्दनः । शौचं** हस्तपादादिप्रक्षालनम् । **आचार**माचमनादिकम् ।।६९।।

(७) **मणिरामः ।** इदानीं गुरुरुपनयनं कृत्वा यच्छिक्षयति तदाह—**उपनीय गुरुरिति । शौचं** 'एका लिङ्गे गुदे तिस्र' इत्यादि । आचारं स्नानाचमनादि । अग्निकार्यं सायंप्रातः समिद्धोमरूपम् ।।६९।।

(८) **गोविन्दराजः। उपनीयेति । गुरुः** शिष्योपनयनं कृत्वा **आदौ** प्रथमत एव **शौचं शिक्षयेत्** । अशुद्धस्य सर्वत्रानधिकारात् । तत **आचारं** प्रत्युत्थानादि, **अग्निकार्यं** च सायंप्रातरग्निप्रक्षेपादि **सान्ध्यकर्मानुष्ठानं** च शिक्षयेत् ।।६९।।

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।**
**ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ।। ७० ।।**

(१) **मेधातिथिः ।** अध्ययनधर्मानिदानीमाह—

प्रत्यासन्ने भविष्यति लृडयं द्रष्टव्यः । अध्ययने प्रवर्तमानः अध्ययनमारभमाणः अध्येतुमिच्छन्निति यावत् ।

**उदङ्मुखोऽध्याप्यः ।** गौतमीये तु "प्राङ्मुखो वा शिष्यः प्रत्यङ्मुख आचार्य" इति ( अ. १ सू. ५५ ) ।

**आचान्तो यथाशास्त्रमिति ।** प्रागुक्तमाचमनविधिं स्मारयति ।

ब्रह्माञ्जलिः कृतो येनेति । आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तस्य परनिपातः । 'ब्रह्माञ्जलिकृदि'ति वा पाठः ।

**लघुवासा** धौतवासाः । प्रक्षालनेन लघुनी वाससी भवतः । अतो लघुत्वेन वाससः शुद्धिर्लक्ष्यते । अथवाऽयं रोमादिस्थूलवसनः चित्तव्याक्षेपे ताड्यमानो न प्रहारं वेदयेत्ततश्च न युक्तः पठेत् । अपनीयमाने तु वाससि गुरोः खेदः स्यात् । निरावरणे च काये रज्ज्वादिना ताड्यमानो महतीं बालो वेदनामनुभवेत् । अतो दृष्टार्थं लघुवासस्त्वम् ।

जितानि नियमितानीन्द्रियाण्युभयान्यपि येन स **जितेन्द्रियः** । न इतस्ततो वीक्षेत, यत्किञ्चिन्न शृणुयादध्ययनेऽवहितो भवेदित्युक्तं भवति ।।७०।।

(२) **सर्वज्ञनारायणः । यथाशास्त्रमाचान्तः उदङ्मुखः** शिष्यः प्राङ्मुखेनाध्याप्यो, **ब्रह्माञ्जलिकृतः** कृतब्रह्माञ्जलिः लघुवासाः स्वल्पवासाः जितेन्द्रियोऽनन्यमनाः ।।७०।।

(३) **कुल्लूकः । अध्येष्यमाण इति ।** अध्ययनं करिष्यमाणः शिष्यो **यथाशास्त्रं** कृताचमन **उत्तराभिमुखः** कृताञ्जलिः पवित्रवस्त्रः कृतेन्द्रियसंयमो गुरुणा **अध्याप्यः** प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वेति गोतमवचनात्प्राङ्मुखस्याप्यध्ययनम् । **ब्रह्माञ्जलिकृत** इति वाहिताग्न्यादिष्वित्यनेन कृतशब्दस्य परनिपातः ।।७०।।

(४) **राघवानन्दः ।** शिष्यस्य वेदग्रहणनियममाह **अध्येष्यमाण इति** त्रिभिः । **लघुवासा** गुरुतो लघुवासाः पवित्रवासा वा एवंविध एवाध्याप्यः ।।७०।।

(५) **नन्दनः ।** अथाध्ययननियमानाह **अध्येष्यमाणमिति । यथाशास्त्रमाचान्तः** प्राङ्मुखस्य गुरोर्दक्षिणत उदङ्मुख आसीनः । **अध्याप्यो** गुरुणा ब्रह्मचारी लघुवासा अनुल्बणवस्त्रः । **ब्रह्माञ्जलिकृतः** कृतब्रह्माञ्जलिः ।।७०।।

(६) **रामचन्द्रः ।** पूर्वं **आचान्तः यथाशास्त्रं** यथावेदं उदङ्मुख अध्येष्यमाणः शिष्यः ब्रह्माञ्जलिकृतः सन् अध्याप्यः ।।७०।।

(७) **मणिरामः । लघुवासः** पवित्रवस्त्रः ।।७०।।

(८) **गोविन्दराजः । अध्येष्यमाण इति ।** प्रत्यासन्नाध्ययनः शिष्यः कृत**शास्त्र**चोदितेतिकर्तव्यतायुक्ता**चमनः कृत**वक्ष्यमाण**ब्रह्माञ्जलिः** अस्थूल**वसनः** सन् **जितेन्द्रियः उदङ्मुखोऽध्याप्यः** ।।७०।।

**ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।**
**संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ।।७१।।**

(१) **मेधातिथिः । ब्रह्म**शब्दोऽयमनेकार्थोऽप्यध्ययनाधिकारादत्र वेदवचनः प्रतीयते । तस्या**रम्भे** । निमित्तसप्तम्येषा । अध्ययनाधिकारादेव च तद्विषयाऽध्ययनक्रिया, तस्यायमारम्भः, प्रथमावृत्तिः पुरुषस्य । तत्रेदं पादग्रहणम् । वेदस्य तु यान्याद्याक्षराणि 'अग्निमीळे' 'इषे त्वा' 'अग्न आयाहि' इति न सोऽत्रारम्भ उच्यते । नहि तस्य निमित्तभावः सम्भावितः, नित्यत्वात् । कादाचित्कं हि निमित्तं भवति । तेनैतदुक्तं भवति —वेदाध्ययनमारिप्समानो गुरोः पादसङ्ग्रहणं कुर्यात्कृत्वा ततः स्वाध्यायाक्षराण्युच्चारयेन्न पुनः प्रवृत्ताध्ययनक्रियः पादौ गृह्णीयात् ।

"ननु चाद्यक्रियाक्षण आरम्भः, स च निमित्तम् । विद्यमानस्य च निमित्तत्वं युक्तं जीवनस्येव । अत्र गेहदाहाद्यतीतमपि निमित्तं तत्र तथैव श्रवणम् । तस्मात्सहप्रयोग एवाध्ययनपादोपसङ्ग्रहणयोर्युक्तः" ।

उच्यते । अध्यापनाध्यवसाय 'आरम्भ' उच्यते, नाद्यः क्रियाक्षणः । यदैव गुरुरधीष्वेत्याह तदैवाध्यवस्यति माणवकः । अतस्तदनन्तरं पादोपग्रहः । उपकारप्रवृत्तस्य गुरोश्चित्तप्रसादनमेतत् । यथा लोके कश्चिदुपकारप्रवृत्तं सभाजयति वाचा

'ननु त्वया वयमस्मात्पापान्मोचिता' इति । अनक्षरा चेयमध्येषणा 'उपसन्नोऽस्म्यध्ययनायेति' । न हि गुरुरुपरोध्योऽध्यापयेति । केवलमुपसदनमस्य कर्तव्यं सम्बोधार्थमवसरोऽध्ययनस्येति । अतः कृतोपसदनस्य वेदाक्षरोच्चारणम् । अपि च **संहृत्य हस्तावध्येतव्य**मित्युच्यते । तत्राधीयानः पादोपसङ्ग्रहणविधिमतिक्रमेत ।

**अवसानं** समाप्तिरध्ययनादुपरमः । यद्यपि ब्रह्मशब्द आरम्भे गुणभूतस्तथाप्यवसानस्य सापेक्षत्वात्सन्निहितत्वाद् ब्रह्मपदेनैव सम्बन्धः प्रतीयते, अन्यस्याश्रुतत्वात् ।

**सदाग्रहणमन्वहं** भाविप्रयोगारम्भावसानयोरेष विधिर्यथा स्यादितरथा य एव व्रतादेशानन्तरो मुख्यप्रारम्भः तत्रैव स्यात् । यथाऽन्वारम्भणीया दर्शपूर्णमासारम्भे चोदिता य एवाधानानन्तरभावी दर्शपूर्णमासप्रयोगारम्भः तत्रैव भवति, न मासिकप्रयोगारम्भे ।

प्रातरारभ्य यावदाह्निकं न निवृत्तं प्रपाठकद्वयमात्रपरिमाणं, तावदेकैव साऽध्ययनक्रियेति । अन्तरा कथञ्चिद्विच्छेदेऽपि पुनः प्रवृत्तौ नारम्भशब्दवाच्यताऽस्तीति, न पुनः पादोपसदनं क्रियते । स्मृत्यन्तरे च पठ्यते "पादोपग्रहणं गुरोः प्रातरन्वहमिति" ।

**संहृत्य**–संलग्नौ संश्लिष्टौ परस्परं कृत्वाऽ**ध्येयम्** । कच्छप इव यः संनिवेशो हस्तयोः प्रसिद्धस्तथा कर्तव्यः । **स हि ब्रह्माञ्जलिः** । पदार्थकथनमेतत् ।।७१।।

**(२) सर्वज्ञनारायणः । सदा प्रत्यहं संहृत्य हस्तौ** हस्ततले संमील्य ।।७१।।

**(३) कुल्लूकः । ब्रह्मारम्भेऽवसाने चेति** । वेदाध्ययनस्यारम्भे कर्तव्ये समापने च कृते गुरोः पादोपसंग्रहणं कर्तव्यं **हस्तौ संहृत्य** संश्लिष्टौ कृत्वाऽ**ध्येतव्यं** स एव 'ब्रह्माञ्जलिः स्मृत' इति पूर्वश्लोकोक्तब्रह्माञ्जलिशब्दार्थव्याकारः ।।७१।।

**(४) राघवानन्दः** । किं च **ब्रह्मेति** । ब्रह्मारम्भे वेदस्याध्ययनसमाप्त्योर्ब्रह्माञ्जलिकृत इत्युक्तं तल्लक्षणमाह **संहृत्येति** । अञ्जलिरत्र कदलीपुष्पाकारः ।।७१।।

**(५) नन्दनः** । ब्रह्माञ्जलिं वक्ष्यति **ब्रह्मारम्भ** इति । **सदा** अहरहः **ग्राह्यौ** ब्रह्मचारिणा ।।७१।।

**(६) रामचन्द्रः** । **ब्रह्मारम्भे** वेदारम्भे तथा **वेदावसाने** गुरोः पादौ ग्राह्यौ भवतः । हस्तौ संहृत्य संयोज्य अध्येयं स हि ब्रह्माञ्जलिः स्मृतः ।।७१।।

**(७) मणिरामः** । **ब्रह्मारम्भे** वेदारम्भे **हस्तौ संहृत्य** संश्लिष्टौ कृत्वा ।।७१।।

(८) **गोविन्दराजः । ब्रह्मारम्भ इति ।** अन्वाहिकवेदपाठा**रम्भान्तयोः सदा** अहरहः **गुरोः पादोपसंग्रहणकं** कर्तव्यम् । **संहतौ** च कच्छपके इति प्रसिद्ध-सन्निवेशेन हस्तौ कृत्वाऽध्येतव्यम् । यस्मात् **स ब्रह्माञ्जलि**शब्देनोच्यत **इत्यृषिभिः स्मृतः** इत्यलौकिकत्वात् ब्रह्माञ्जलिस्वरूपनिरूपणम् ।।७१।।

**व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।**
**सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ।।७२।।**

(१) **मेधातिथिः ।** यदुपसङ्ग्रहणं पूर्वश्लोके गुरोरुक्तं **तद्व्यत्यस्तपाणिना कार्यम् ।**

कीदृशः पुनः पाण्योर्व्यत्यासः कर्तव्य इत्यत आह । **सव्येन** हस्तेन **सव्यः** पादः **स्प्रष्टव्यः** स्पर्शः कर्तव्यो, न तु चिरं निपीड्यासितव्यम् । एष च व्यत्यासो युगपदित-रेतरदिक्सञ्चारेण हस्तयोर्भवति । अग्रतः स्थितेन सम्मुखेन **गुरोरुपसङ्ग्रहणं** कर्तव्यम् । तत्र वामो दक्षिणमार्गं नीयते, दक्षिणो वाममित्येवं **सव्येन सव्यः** स्पृष्टो भवति, **दक्षिणेन च दक्षिण** इत्येष पाणिव्यत्यासः ।

अन्ये तु 'विन्यस्तपाणिने'ति पठन्ति । स्पर्शादेव च विन्यासे सिद्धे नाग्नि-तप्तायःपिण्डस्पर्शनवद्दाहभयादङ्गुल्यग्रमात्रेण स्पर्शनं कर्तव्यमपि तु हस्तौ विन्यसित-व्यौ निधातव्यौ । पीडनं तु पीडाकरं निषिद्धमिति वर्णयन्ति ।।७२।।

(२) **सर्वज्ञनारायणः ।** उपसंग्रहणप्रकारमाह **व्यत्यस्तेति । व्यत्यस्तौ** दक्षिणो-त्तरौ स्वस्तिकाकारेण संहतौ **पाणी** यस्य । एवं चार्थादाभिमुख्येनाभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः प्राप्तः, तथापि यत्र पर्यङ्कबन्धादिवशात् व्यत्यस्तपाद एवास्ते गुरुः, तत्र पाणिव्यत्यासो न कार्यः । तथा सन्ध्यायामात्माभिवादने सव्येन हस्तेन सव्यस्य पादस्य स्पर्शः स्पशार्थत्वात् व्यत्यासस्य इत्येतदर्थं सव्येन सव्य इत्युक्तम् ।।७२।।

(३) **कुल्लूकः । व्यत्यस्तपाणिनेति ।** पादोपसंग्रहणं कार्यमित्यनन्तरमुक्तं तद्व्यत्यस्तपाणिना कार्यमिति विधीयते । कीदृशो व्यत्यासः कार्य इत्यत आह **सव्येन** पाणिना **सव्यः** पादो **दक्षिणेन** पाणिना **दक्षिण** : पादः गुरोः स्प्रष्टव्यः । उत्तानहस्ताभ्यां चेदं पादयोः स्पर्शनं कार्यम् । यदाह **पैठिनसिः**–'उत्तानाभ्यां हस्ता-भ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत् ।' दक्षिणोपरिभावेन व्यत्यासो वाऽयं शिष्टसमाचारात् ।।७२।।

(४) **राघवानन्दः ।** गुरोः पादौ ग्राह्यावित्युक्तं तत्प्रकारमाह **व्यत्यस्तेति । उपसंग्रहणं** पादयोरिति शेषः । एतद्व्यनक्ति**सव्येनेति । सव्येन** स्वस्य वामहस्तेन

**सव्यो गुरो:** पाद: एवमुत्तरत्र नायं क्रम:। तथा च पैठीनसि:। 'उत्तानाभ्यां दक्षिणं दक्षिणेन सव्यं सव्येन पादावभिवादये'दिति ।।७२।।

(५) **नन्दन:**। कथं ग्राह्यौ पादावित्यपेक्षायामाह **व्यत्यस्तेति** । उपसंग्रहणं गुरुपादस्पर्श:। अस्य व्याख्यानमुत्तरार्धम्। **सव्येन** पाणिना **सव्य:** पाद: स्प्रष्टव्य: ।।७२।।

(६) **रामचन्द्र:**। ।।७२।।

(७) **मणिराम:**। पादोपसङ्ग्रहणप्रकारमाह **व्यत्यस्तपाणिनेति**। व्यत्यासस्वरूपमाह **सव्येनेति**। पादयो: स्पर्शनं चोत्तानहस्ताभ्यां कार्यम्। 'उत्तानाभ्यां हस्ताभ्या'मिति **पैठीनसि**वचनात् ।।७२।।

(८) **गोविन्दराज:**। कथं पुन: पादोपसंग्रहणं कर्तव्यमित्यत आह **व्यत्यस्तपाणिनेति**। इतरेतरदिगर्पितहस्तेन **गुरो: पादोपसर्पणं** कर्तव्यम्। **वामेन** च हस्तेन **वामपाद:** स्पर्शनीय: **दक्षिणेन** तु दक्षिण: ।।७२।।

**अध्येष्यमाणं तु गुरुर्नित्यकालमतन्द्रित: ।**
**अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ।।७३।।**

(१) **मेधातिथि:**। **अध्येष्यमाण**मित्यादीनि प्राग्व्याख्यातानि पदानि। गुरोरयं नियोग:। गुरोर्यदा माणवकोऽध्यापयितुमभिलषितस्तदा **अधीष्व भो इत्या**मन्त्रयितव्य:। अनामन्त्रितेन न गुरु: खेदयितव्य 'उपदिशानुवाकमिति'। उक्तं च "आहूतश्चाप्यधीयीतेति" ।

**विरामोऽस्त्वि**त्येतं शब्दं समुच्चार्यारमेत् निवर्तेत। क: ? गुरुरेव, प्रथमान्तनिर्देशात्। अथवा गुरुणोत्सृष्टो निवर्तेत, न स्वेच्छया। एवं चेदं व्याख्यायते, 'यदा गुरुर्विरामोऽस्त्विति ब्रूयात्तदा विरमेद्ब्रह्मचारी।'

अन्ये त्वध्येतृमात्रस्य—शिष्याणामुपाध्यायस्य च–उपरमणकाले धर्ममिममिच्छन्ति। तथा च स्मृत्यन्तरम्। "स्वाध्यायमधीत्य विरमणकाले प्रदेशिन्या पृथिवीमालभ्य स्वस्तीति यजुर्ब्रूयाद्विस्पष्टामिति सामसु, विराम: परमास्वृक्षु, आरमस्त्वथर्वसु।"

**अतन्द्रित:** अनलस:। तन्द्राऽऽलस्यम्। तद्योगात्पुरुषस्तन्द्रित इत्युच्यते। त्यक्त्वाऽऽलस्यमतन्द्रित:। अनुवादश्चायम्। नात्र तन्द्रा श्रम:। न त्वियमाशंका कर्तव्या "य अतंद्रितस्तस्यायं विधि:, आलस्यवतस्त्वन्य:" ।।७३।।

(२) **सर्वज्ञनारायण:**। अध्ययनार्थं शिष्यो गुरुमधीष्वेति ब्रूयात्। स्वाध्यायान्ते विरामोऽस्त्विति ब्रूयात्। अत्र पाठे अधीष्वेत्यन्तर्भावितण्यर्थं शिष्येण गुरुं प्रति वाच्यम्। अध्येष्यमाणं तु गुरुरिति क्वचित्पाठ:। तत्र गुरुणा तद्वाच्यम् ।।७३।।

(३) **कुल्लूकः**। **अध्येष्यमाणमिति**। अध्ययनं करिष्यमाणं शिष्यं सर्वदाऽनलसो गुरुरधीष्व भो इति प्रथमं वदेत्। शेषे विरामोऽस्त्वित्यभिधाय विरमेन्निवर्तेत ॥७३॥

(४) **राघवानन्दः**। गुरुशिष्ययोर्नियममाह **अध्येष्यमाणं त्विति** त्रिभिः। **अध्येष्यमाणं** शिष्यं **अधीष्व भो** इति ब्रूयात्तथा विरामोऽस्त्वित्युक्ते **आरमेत्** निवर्तेताध्ययनात्, **शिष्य** इति शेषः ॥७३॥

(५) **नन्दनः**। **अधीष्वेति** प्रार्थनायां लकारः, विधेरलायुक्तत्वात्। **ब्रूयात्** ब्रह्मचारी ॥७३॥

(६) **रामचन्द्रः**। **अतन्द्रितः** गुरुः **अध्येष्यमाणं** शिष्यं भो शिष्य **अधीष्व** इति ब्रूयात् अन्यत्र क्रीडातः विरामः अस्तु इति वारयेत् ॥७३॥

(७) **मणिरामः**। **अध्येष्यमाणं** अध्ययनं करिष्यमाणं शिष्यं, नित्यकार्ये सर्वदा, **अतन्द्रितः** आलस्यरहितः। **गुरुः** अधीष्व भो इति आदौ ब्रूयात् पाठान्ते विरामोऽस्त्वित्युक्त्वा विरमेदित्यर्थः ॥७३॥

(८) **गोविन्दराजः**। **अध्येष्यमाणमिति**। प्रत्यासन्नाध्ययनं शिष्यं अनलसो **गुरुः** सर्वकाल**मधीष्व भो इति ब्रूयात्**। **विरामोऽस्त्विति** चोक्त्वा अनन्तरमध्यापनान्निवर्तेत ॥७३॥

**ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।**
**स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति ॥ ७४ ॥**

(१) **मेधातिथिः**। अत्रापि पूर्वोक्तेन न्यायेन **ब्रह्मण आदावन्ते च प्रणवं कुर्यात्**, ब्रह्मविषयाया अध्ययनक्रियाया इति द्रष्टव्यम्।

प्रणवशब्द ॐकारवचनः। तथा च वक्ष्यति **स्रवत्यनोङ्कृतमिति**।

**सर्वदा**ग्रहणमध्ययनविधिमात्रधर्मो यथा स्यादितरथा प्रकरणाद्ग्रहणार्थ एव ब्रह्मचारिणः स्यात्। अस्मिंस्तु सति योऽप्यविस्मरणार्थो, यच्च "अहरहः स्वाध्यायमधीयीत" इति गृहस्थादीनां, तत्र सर्वत्र सिद्धं भवति। सन्ध्याजपादौ तु स्वशब्देन विधास्यति 'एतदक्षरमेतां चेति'। न चायं वेदधर्मो येन यत्र कुत्रचिद्वैदिकवाक्योच्चारणमारभेत तत्र प्राप्नुयात्। अतो होम-मन्त्रजप-शास्त्रानुवचन-याज्यादीनामारम्भे नास्ति प्रवणः, अन्यत्राप्युदाहरणार्थे वैदिकवाक्यव्याहारे। तस्मात्स्थितं प्राकारणिकस्वाध्यायाध्ययनविधिधर्मार्थं **सर्वदा**ग्रहणम्। प्रणवप्रयोगस्यान्वाहिकारम्भार्थता तु नित्यकालग्रहणानुवृत्त्यैव सिद्धा।

अस्यार्थवादः **स्रवत्यनोंकृतम्**। पूर्वं प्रारम्भे अनोङ्कृतं ब्रह्म स्रवति। ओमा कृतं ॐशब्देन संस्कृतम्। साधनं कृतेति समासः। अथवा ॐकृत उच्चारितो यस्मिन्ब्रह्मणि तदोंकृतं सुखादित्वात्परनिपातः। **परस्ताच्च** समाप्तौ। चकारेणानोंकृतमिति सम्बध्यते।

**स्रवति विशीर्यति** इत्युभाभ्यामपि नैष्फल्यमध्ययनस्य प्रतिपाद्यते। अधीतं ब्रह्म यस्मिन्कर्मणि विनियुज्येत तन्निष्फलं भवतीति निन्दार्थवादश्च। पाकार्थं निषिक्तस्याप्राप्तपाकक्षीरादेरवच्छिद्रिते भाजने य इतस्ततो विक्षेपः प्रक्षरणं तत् स्रवतीत्युच्यते। लब्धपाकस्य पिण्डीभूतस्य भोग्यतां प्राप्तस्य यो विनाशः स विशरणम् ।।७४।।

(२) **सर्वज्ञनारायणः। आदावन्ते** च **प्रणवं** कुर्यादुपादद्यात्। **सर्वदा** ब्रह्मयज्ञादावपि। **पूर्वं** प्राग्गृहीतं **स्रवति** नश्यति **परस्तात्** गृहीष्यमाणं विशीर्यते ग्रहणकाले एव सम्यक् न गृह्यते ।।७४।।

(३) **कुल्लूकः। ब्रह्मणः प्रणवमिति**। ब्रह्मणो वेदस्याध्ययनारम्भेऽध्ययनसमाप्तौ चोङ्कारं कुर्यात्। यस्मात्पूर्वं यस्योङ्कारो न कृतस्तत्**स्रवति** शनैःशनैर्नश्यति यस्य **पुरस्तान्न** कृतस्तद्विशीर्यत्यवस्थितिमेव न लभते ।।७४।।

(४) **राघवानन्दः**। ॐकाराद्यन्तमध्ययनं नियमयति **ब्रह्मण इति**। ब्रह्मणो वेदस्य पूर्व**मनोंकृतं** ब्रह्म **स्रवति** च्यवते स्वरवर्णतः विशीर्यते। यदप्यधीतं तदपि विस्मृतं स्यादिति प्रणवोच्चारणेऽर्थवादः ।।७४।।

(५) **नन्दनः**। ब्रह्मणो वेदस्याध्येतव्यप्रदेशस्या**दावन्ते** च **सर्वदा** सदा आश्रमान्तरेऽपि **आद्यन्तयोरनोंकृतं** ब्रह्म। ब्रह्मगीतमदृष्टसाधनं परम् ।।७४।।

(६) **रामचन्द्रः। ब्रह्मणः** वेदस्यारम्भे अध्ययनारम्भे **सदा प्रणवं कुर्यात्। अनोंकृतं पूर्वं** वेदः स्रवति ॐकारं उच्चरति **परस्ताद**ध्ययनात् पश्चादध्ययनाद्वेदः विशीर्यते विस्मरणं यातीत्यर्थः ।।७४।।

(७) **मणिरामः। ब्रह्मणो** वेदस्य **प्रणवं** ओंकारं उच्चारयेत्। तदकरणे दोषमाह **स्रवतीति। स्रवति** शनैःशनैः नश्यति। **विशीर्यति**। हृदये अवस्थितिमेव न लभत इत्यर्थः ।।७४।।

(८) **गोविन्दराजः। ब्रह्मण इति**। वेदपाठस्या**रम्भान्तयोः** ओंकारं सर्वदा ग्रहणार्थाध्यापनकालात् कालान्तरेऽपि कुर्यात्। **यस्मात्** यस्य ब्रह्मणः **पूर्वमनोंकृतः** तत् **स्रवति** गृहीतमपि विस्मृत्य गच्छति। **परस्ताच्च विशीर्यते**। यस्य न कृतः तद्विशीर्यते नैव गृह्यते ।।७४।।

**प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।**
**प्राणायामैस्त्रिभिः पूतस्तत ॐकारमर्हति ।। ७५ ।।**

(१) **मेधातिथिः** । कूलशब्दो दर्भाग्रवचनः । **तान्पर्युपासीनः** तेषु प्रागग्रेषु दर्भेषूपविष्ट इत्यर्थः । 'अधिशीङ्स्थासा'मिति ( पा. सू. १।४।४६ ) स्था आ आसामित्याङ्ग प्रश्लेषात्कर्मत्वम् । परि उप आ आसीन इति इहाप्याङ्ग श्लिष्टनिर्दिष्टो द्रष्टव्यः । पर्युपशब्दावनर्थकौ ।

**पवित्रै**र्दर्भैरेव **पावितः** शुचित्वमापादितः । अघमर्षणादिस्तु मन्त्रो नेह पवित्रशब्देनोच्यते, ब्रह्मचारिणस्तदानीमनधीतत्वात्तेषाम् । न च दर्भाः स्वसत्तामात्रेण काञ्चित् क्रियामकुर्वतः पावने करणं भवन्तीति । अवान्तरव्यापारापेक्षया स्मृत्यन्तरे प्राणोपस्पर्शनं प्रतीयते । आह च गौतमः । (अ. १ सू. ४९।५०) "प्राणोपस्पर्शनं दर्भैः । प्राक्कूलेष्वासनं च" ।

**प्राणायामैस्त्रिभिः पूतः** । मुखनासिकासञ्चारी वायुः प्राणः तस्यायामो निरोधः शरीरे धारणं, बहिर्निष्क्रमणनिषेधः, तस्य स्मृत्यन्तरे धारणकालस्य मानं समाम्नातम् । मन्त्रानुस्मरणं च । "प्रतिप्रणवसंयुक्तां गायत्रीं शिरसा सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते" । वसिष्ठेन भगवता महाव्याहृतयोऽप्युक्ताः । मन्त्रावसान एव निरोधावधिः । अन्यस्यानाम्नातत्वात्सर्वस्मृतीनां चासति विरोध एकार्थत्वादिहाप्येवमेवानुष्ठानम् ।

"नन्वेवमितरेतराश्रयः स्यात् कृतेषु प्राणायामेषु ओङ्कारो न कर्तव्यो, न चोङ्कारेण विना प्राणायामो निर्वर्तते" ।

नैष दोषः । त्रिर्जपेदिति प्राणायामेषु मानसव्यापारेणोङ्कारस्य स्मरणमुच्यते । न हि निरुद्धप्राणस्य शब्दोच्चारणं सम्भवति । यद्यपि जपः कश्चिद्वाग्व्यापारसाध्यो भवति । स्वाध्यायाध्ययने तु पुनरुच्चारणं विवक्षितम् । अध्ययनक्रियाया एवंरूपत्वाच्छब्दक्रियायां ह्ययं धातुः, श्रोत्रग्राह्यश्च शब्दो न केवलेन मनसा गृह्यते ।

न चायमोङ्कारधर्मो येनान्यत्रापि तस्मिन्नुच्चार्यमाणेऽपि प्रसज्येत । उक्तं च "स्वाध्यायारम्भे कर्तव्य" इति । ओङ्कारधर्मत्वे हि लौकिकेषु वाक्येष्वोमिति ब्रूम इत्यादिषु प्रसज्येत ।

गौतमेन तु पठितम् ( अ. १ सू. ४९) — "प्राणायामास्त्रयः पञ्चदशमात्रा" इति । मात्राशब्देन चाविकृतस्य स्वरस्याकारादेर्यावान्कालः स उच्यते । तत्र विरोधात्स्मृत्यन्तरोक्तः कालो नास्ति, न च मन्त्रस्मरणं, तत्रानोङ्कारा अपि प्राणायामाः सन्तीति नेतरेतराश्रयदोषापत्तिः ।

---

(७५) उपासीन=उदासीनः (च)

**तत ॐकारमर्हति** कर्तुमिति शेषः, यदाऽयं समुदाय एव रूढिरूपेण प्रणववचनः। यदा तु करणं कारः। ओमित्येतस्य 'कार' उच्चारण 'मोङ्कार' स्तदा नास्ति पदान्तरापेक्षा।

प्रणवशब्देन कर्तव्यतामुक्त्वाऽत्रोङ्कारमित्यनुवदत्यत एतावेकार्थौ। तथा च दर्शितम् ।।७५।।

(२) **सर्वज्ञनारायणः**। **प्राक्कूलानि** कूलमग्रं प्रागग्रेषु दर्भेषूपरि वेष्टयित्वा स्थितेष्वासीनः **पवित्रैर्दर्भैः पावितः**। यथा **गौतमः** प्राणोपस्पर्शनं दर्भैरिति। **प्राणा** इन्द्रियाणि प्राणदेशो हृदयं वा, प्राणायामैरिति प्राणायामास्त्रयः पञ्चदशमात्रा इति **गौतमः**। ॐकारं ब्रह्मण आदिभूतम् ।।७५।।

(३) **कुल्लूकः**। **प्राक्कूलानिति**। **प्राक्कूला**न्प्रागग्रान्दर्भानध्**यासीनः पवित्रैः** कुशैः करद्वयस्थैः पवित्रीकृतः 'प्राणायामास्त्रयःपञ्चदशमात्रा' इति **गौतमस्मरणात्**। पञ्चदशमात्रैस्त्रिभिः प्राणायामैः प्रयतोऽकारादिलघ्वक्षरकालश्च मात्रा ततोऽध्ययनार्थमोङ्कारमर्हति ।।७५।।

(४) **राघवानन्दः**। किंच **प्रागिति**। **प्राक्कूलान्** प्रागग्रान् कुशानिति शेषः। **पवित्रै**र्हस्तद्वयस्थितकुशैः ।।७५।।

(५) **नन्दनः**। **प्राक्कूला**न्कुशान्परि प्रागग्रेषु पवित्रैर्मन्त्रप्रोक्षणादिभिः। **ओङ्कार**मोङ्कारोच्चारमर्हति प्राप्नोति। एष विधिः प्रथमाध्ययनपरः 'सर्वदेति' वचनाभावात् ।।७५।।

(६) **रामचन्द्रः**। **प्राक्कूलान्** कुशान् गृहीत्वा गुरुं पर्युपासीत **पवित्रैः कुशैः** पावितः त्रिभिः प्राणायामैः पूतो भवेत् ओंकारोच्चारणार्थं सः **अर्हति** ।।७५।।

(७) **मणिरामः**। **प्राक्कूलान्** प्रागग्रान्। अर्थात् कुशान् पर्युपासीनः तादृशकुशोपरि स्थितः पवित्रैः पावितः, अर्थात् करद्वयस्थैः कुशैः पवित्रीकृतः। एवं भूत्वा प्राणायामं कृत्वा पूतः सन् ओंकारमुच्चार्य वेदाध्ययनं कुर्यादित्यर्थः ।।७५।।

(८) **गोविन्दराजः**। **प्राक्कूलानिति**। "प्राणोपस्पर्शनं दर्भैः प्राक्कूलेष्वासनं चे"ति गौतमस्मरणात् **प्रागग्रेषु च दर्भेष्वासीनः**, अतएव च **पवित्रैर्दर्भै**रेव प्राणस्थानात् हृदयस्पृष्टैः पवित्रीकृतः प्राणायामैश्च श्वासनिरोधरूपैः "त्रिभिः प्राणायामः त्रिपञ्चदशमात्रा" इति गौतमोक्तप्राणायामैः **पवित्रीकृतः** ततः ओंकारं पूर्वोक्तं कर्तुं **योग्यो** भवति ।।७५।।

**अकारं चाप्युकारं च मकारं च प्रजापतिः ।**
**वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥ ७६ ॥**

(१) **मेधातिथिः** । पूर्वस्य विधेरर्थवादः । अक्षरत्रयसमाहाररूप ॐकारस्तत्रैकैकस्य उत्पत्तिमाह । **वेदत्रयात्**त्रिभ्यो वेदेभ्यः **निरदुहद्**उद्धृतवान्यथा दध्नो घृतमुद्ध्रियते । न केवलमक्षरत्रयं यावदिदम् अपरं **भूर्भुवः स्वरिति** ।।७६।।

(२) **सर्वज्ञनारायणः** । प्रणवस्य प्रकृतस्तुतौ कार्यायां व्याहृतिगायत्र्योः स्तुतिस्तयोरप्यादौ जपार्था ॐकारमात्रजपस्तु प्रागुक्तस्तदसंभवे निरदुहदुद्धृतवान् इतीति । इतीति द्वयेन प्रकारद्वयाभिधानेन भूर्भुवःस्वरित्येवं प्रकारा व्याहृतयः संगृहीताः ।।७६।।

(३) **कुल्लूकः** । **अकारं चेति** । 'एतदक्षरमेतां च'ेति (अ. २. ७८) वक्ष्यति तस्यायं शेषः । **अकारमुकारं मकारं च** प्रणवावयवभूतं ब्रह्म **वेदत्रयाद्**ृग्यजुःसामलक्षणा**द्भूर्भुवः स्वरिति** व्याहृतित्रयं च क्रमेण **निरदुहद्**उद्धृतवान् ।।७६।।

(४) **राघवानन्दः** । प्राणायामपूतस्यैव प्रणवोच्चारणाधिकार इत्युक्तेस्तदङ्गगायत्रीप्रणवव्याहृतिसंयुक्तं ज्ञापयन् आदौ प्रणवस्य वेदत्रयसारतामाह—**अकारं चेति** द्वाभ्यां । **वेदत्रयात्** ऋग्यजुःसामभ्यः **निरदुहत्** उद्धृतवान् दध्न इव नवनीतम् ।।७६।।

(५) **नन्दनः** । वेदग्रहणारम्भे व्याहृतित्रयसावित्र्योरपि प्रयोज्यतां श्लोकद्वयेनाह **अकारमिति** । **निरदुहन्नि**श्चकर्ष । अस्यानन्तरं द्वितीयस्येति करणस्यान्वयः । पश्चात् **भूर्भुवः स्वरिति** चेत्यन्वयः । ततोऽयमर्थः— इति एवं यथाऽकारादीन्वर्णान्निरदुहदेवं भूर्भुवः स्वरिति च निरदुहदिति ।।७६।।

(६) **रामचन्द्रः** । **प्रजापतिः अकारं** ऋग्वेदाद**दूदुहत्** । **उकारं** च यजुर्वेदाददूदुहत् । **मकारं** सामवेदा**ददूदुहत्** । ऋग्वेदाद्भूः अदूदुहत् । यजुर्वेदात् भुवः । सामतः स्वरिति अदूदुहत् । तिस्रः व्याहृतयः भवन्ति ।।७६।।

(७) **मणिरामः** । **निरदुहत्** उद्धृतवान् ।।७६।।

(८) **गोविन्दराजः** । ब्रह्मणः प्रणवं कुर्यादित्यस्यार्थवादमाह **अकारमिति** । **त्रिभ्य इति** अकारोकारमकारात्मकः किलोंकारः । एतच्चाक्षरत्रयं **वेदत्रयात्** सारभूतं **प्रजापति**रुद्धृतवान् । तथा **भूर्भुवः स्वरित्ये**तश्च महाव्याहृतित्रयमुद्धृतवान् इदं(त्थं) **चेयं** व्याहृतिस्तुतिः । अध्ययनकाले तद्विधानार्था अत्राकस्मात् स्तुतिर्वर्तत इति प्रयोजनात् तत्सवितुर्वरेण्यमित्यस्याः सवितृदेवताकाया **ऋचः** पादं पादं यथाक्रमं त्रिभ्य एव वेदेभ्यः परमेष्ठी हिरण्यगर्भः प्रजापतिः उद्धृतवानित्ययमपि अध्ययनकाल(ः) विध्यर्थः सावित्र्यर्थवादः ।।७६—७७।।

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।**
**तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ।।७७।।**

(१) **मेधातिथिः**। अयं "तत्सवितुर्वरेण्यम्" इत्येतस्याः गायत्र्या उत्पत्त्यर्थवादो विधानार्थः। पूर्वश्लोके चार्थवादादेव व्याहृतीनामपि विधानम्। क्रमस्तु पाठावगम्यः। वक्ष्यति च--"एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम्" इति।

**अदूदुहदुद्धृ**तवानिति। यद्यपि **तदित्ये**तत्प्रतीकेन 'तत्सवितुर्वृणीमहे' इति वा शक्यते लक्षयितुम्। न तु सा त्रिपदेति। त्रिपदा च ग्राह्या। त्रिपदा चैव सावित्रीति।

कश्यपादयोऽपि प्रजापतयः सन्त्यतो विशिनष्टि **परमेष्ठीति**। हिरण्यगर्भः। स हि परमे स्थानेऽनावृत्तिलक्षणे स्थितः। आदरातिशयार्थं चैतत्सावित्र्याः। साक्षात्किलेयं सर्वमुख्येन प्रजापतिना **वेदेभ्यः** समुद्धृतेति।।७७।।

(२) **सर्वज्ञनारायणः**। **अदूदुहत्** सारप्राप्त्यर्थमाकृष्टवान्। **सावित्र्याः** सावित्रीति निरुपपदेन पठनरूढा तत्सवितुर्वरेण्यमिति गृह्यते। न तत्सवितुर्वृणीमह इत्यादयः ।।७७।।

(३) **कुल्लूकः**। **त्रिभ्य एवेति**। तथा त्रिभ्य एव वेदेभ्य ऋग्यजुःसामभ्य**स्तदित्यृच** इति प्रतीकेनानूदितायाः **सावित्र्याः पादं पादमिति** त्रीन्पादान् ब्रह्माऽऽचकर्ष। परमे स्थाने तिष्ठतीति परमेष्ठी ।।७७।।

(४) **राघवानन्दः**। तेभ्यो गायत्र्यास्त्रीन्पादानदूदुहदित्याह **त्रिभ्य इति**। **तदित्यृचः** तत्सवितुरित्याद्या या ऋचः परमेष्ठी हिरण्यगर्भः "आपो ज्योति"रित्यादिशिरोऽपि ज्ञेयम्। "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" (अ. ना. ११) इति श्रुतेः। "गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकां। प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयम" इति(अ. १ श्लो.२३)याज्ञवल्क्योक्तेश्च।। गायत्रीत्युपलक्षणं त्रिष्टुब्जगत्योः। "संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यःश्लेषगायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण" इति श्रुतेः। त्रिष्टुभं राजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीमिति। त्रिष्टुभं क्षत्रियाय त्रिष्टुप्छंदस्कां, तथा वैश्याय प्रजापतिदृष्टां जगतीछन्दस्काम्। सवितृदेवत्यां रुक्मपाशविमोचने उखासंभरणे विनियुक्तां विश्वा रूपाणि प्रतिमुञ्चते कविः। प्रासावीद्भद्रं द्विपदे चतुष्पदे विनाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो विराजति ।। इत्येतामृचं प्रब्रूयात्। बृहस्पतिदृष्टसवितृदेवत्यां देवसवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचमद्यः स्वदातिनः स्वाहा जपे त्वाज्यविनियुक्ताम् ।।७७।।

(५) **नन्दनः**। **तदिति** तत्सवितुरिति **सावित्र्याः** सवितृदैवत्याया **ऋचो-ऽदूदुहदधु**क्षत्। तस्माद्वेदत्रयसारत्वाद्व्याहृतित्रयसावित्र्यौ वेदारम्भे प्रयोज्येति ॥७७॥

(६) **रामचन्द्रः**। तस्मात् कारणात् अस्याः सावित्र्याः ऋचः इति निश्चितं **त्रिभ्य एव वेदेभ्यः पादं पादं अदूहत्** ॥७७॥

(७) **मणिरामः**। **तदित्यृच इति** प्रतीकेनानूदितायाः **सावित्र्याः पादं पादं** त्रीन् पादान् ॥७७॥

(८) **गोविन्दराजः** ॥७७॥

**एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम्।**
**सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥७८॥**

(१) **मेधातिथिः**। सत्यपि स्वाध्यायविधिप्रकरणे वाक्यात्सन्ध्याजप-विधिरयम्। तत्र गायत्र्या अनुवादः प्रणवव्याहृतीनामप्राप्तविधिः।

अत्र कश्चिदाह। "नायं सन्ध्याविधिरप्रकरणात्। विधिर्हि भवन्ब्रह्मचारिणः स्यात्तस्य प्रकृतत्वात्। न च तस्य सम्भवति। इह हि **वेदविदि**त्युच्यते। न च तस्य प्रथमोपनीतस्य वेदवित्त्वमस्ति। अपि च फलमत्र श्रूयते **वेदपुण्येन युज्यते**। नित्यश्च सन्ध्योपासनविधिः न फलार्थः। न चैतद्विद्मः किमिदं वेदपुण्यं नाम फलं, येन योगो-ऽयं जप उच्यते। यदि तावद्वेदाध्ययनात्पुण्यमभिप्रेतं तदवाप्तिर्वेदपुण्येन 'योगो'-ऽभिप्रेतस्तत्र यस्तावदयं प्रकृतः स्वाध्यायविधिस्तस्य नार्थावबोधादृते किञ्चित्फल-मस्त्यश्रुतत्वात् दृष्टत्वाच्चार्थावबोधस्य कल्पनाऽपि नास्ति। यश्च गृहस्थादीनां विधिः "अहरहः स्वाध्यायमधीयीत" इति सोऽपि नित्य एव। यत्तत्र फलश्रवणं 'पयो दधि घृतं मधु' इति सोऽर्थवाद एव। तस्मान्नायं विधिः। विधौ हि सर्वमेतद्विवक्षि-तव्यम्। यदा त्वयमर्थवादस्तदा 'जपन्नि'ति प्रकृतमध्ययनमुच्यते, 'वेदपुण्येने'-त्येतदपि यथाकथञ्चिन्नीयते"।

अत्रोच्यते। वाक्येन प्रकरणं बाध्यत इत्युक्तमेव। यत एव वेदवित्पदं सन्ध्या-पदं च न प्रकृतविषयतयाऽन्वेति, तत एवान्यत्रायं विधिः। सन्ध्ययोरेतत्त्रयं जपेदि-त्येतावान्विधिः। वेदवित्पदमनुवदिष्यते। गृहस्थादीनां वेदवित्त्वस्य सम्भवात्। "ब्रह्मचारिणो वेदवित्त्वं न सम्भवतीति" चेत् किं तदीयेन सम्भवेन। यथाप्राप्तानु-वादे हि सर्वाश्रमिणामधिकारः। कर्तृविशेषणे हि वेदवित्पदे ब्रह्मचारिणो नाधि-कारः स्यात्। "कथं पुनरस्यानुवादः"। वाक्यभेदप्रसङ्गात्। विधौ सन्ध्याविधौ प्राप्ते प्रणवव्याहृतयस्तावदप्राप्तास्तत्र विधातव्याः। तत्र यद्यपरं वेदविदिति विधी-यते तदा वाक्यभेदः स्यात्। प्राप्ते हि कर्मणि नानेकार्थविधानं सम्भवति। प्रणव-

व्याहृतीनां तु नानुवादः सम्भवति। तेनायमत्र वाक्यार्थः 'सन्ध्ययोर्यत्सावित्रीं जपेदित्युक्तं तत्रायमपरो गुणः प्रणवव्याहृतिपूर्विकां तां जपेत्'। विप्रग्रहणं च तदा प्रदर्शनार्थमेव।

यदप्युक्तं—"फलमत्र श्रूयते नित्यश्च विधिः सन्ध्यायाः"। को नामायं विरोधः? नित्य एव तस्मिन्गुणे कामो भविष्यति। प्रणवव्याहृतिगुणकात्तस्मादिदं फलमिति। यथा गोदोहनप्रणयनकादग्निहोत्रात्पशवः फलम् "गोदोहनेन पशुकामस्य प्रणयेत्" इति। वाक्यसामर्थ्येनाध्यारुह्यैतदुक्तं, न त्वयं काम्यो विधिः। स्मृत्यन्तरे हि नित्य एवायं विधिः स्पष्ट एवोक्तो "गायत्रीं शिरसा सार्धं जपेत् व्याहृतिपूर्विकाम्" इति। फलानवगमो भवतैवोक्तः। अयं ह्यर्थो **वेदपुण्येनेति**। 'वेदे यत्सन्ध्योपासनात्पुण्यमुक्तं तेन त्रिकमेतज्जपन्युज्यते, न केवलं गायत्रीम्'। पुण्यं च धर्मः, वेदमूलत्वात्स्मृतीनां स्मृत्युक्तमपि वेदपुण्यतया व्यपदिश्यते, वेदस्य पुण्यं 'वेदपुण्यम्'। किं च वेदस्य पुण्यम्। यत्तेन प्रतिपाद्यते। पठ्यमानाद्वेदाद्यज्जायते तदपि शक्यते तस्येति वक्तुम्, किंत्वसाधारणत्वात्प्रतिपाद्यमेव युक्तं व्यपदेष्टुं नोत्पाद्यम्। यागादयो धर्ममुत्पादयन्ति, प्रतिपादकस्तु वेद एव।

येऽप्यन्त्यस्य पादस्य सामर्थ्यमाहुः "यदुक्तं 'नित्यः स्वाध्याय' इति तत्र सन्ध्यायां त्रिकजपादेव कृतार्था भवन्तीति" — तदप्यसत्। एवं सति तेन विधिना विकल्पेत। तत्र च पाक्षिको नित्यस्वाध्यायतताया बाधः स्यात्। न चाबाधे सम्भवति बाधोऽभ्युपगन्तव्यः।

**एतदक्षरमि**त्योङ्कारस्य प्रतिनिर्देशः। "ननु च नैतदेकमक्षरम्। द्वे वा त्रीणि वा"। उच्यते। अक्षरशब्देन केवलं स्वर उच्यते, व्यञ्जनसंयोगश्च। तत्रेह यादृशः प्रकृतः तादृशस्याभिधानम्। **एतां च** "तत्सवितुर्वरेण्यमिति" सावित्रीम्। व्याहृतयः पूर्वाः यस्यास्तां **व्याहृतिपूर्विकाम्**। तिस्रः प्रकृता एव ता व्याहृतयो गृह्यन्ते, प्रकृतपरत्वादस्य, न सप्त सत्यान्ताः॥७८॥

(२) **सर्वज्ञनारायणः**। प्रसंगादन्यदप्येतैः कार्यमाह **एतदिति**। **वेदविदिति** वेदाध्ययनवान्। ननु "गायत्रीमात्रसारोऽपी"ति श्रुतिदर्शनादनधीतवेदोऽपि, **वेदपुण्येन** कृत्स्नवेदाध्ययनफलेन॥७८॥

(३) **कुल्लूकः**। यत एवमत **एतदक्षरमिति**। **एतदक्षरमो**ङ्काररूप**मेतां** च त्रिपदां सावित्रीं **व्याहृतित्रयपूर्विकां** सन्ध्याकाले **जपन्**वेदज्ञो विप्रादिर्वेदत्रयाध्ययनपुण्येन युक्तो भवति। अतः सन्ध्याकाले प्रणवव्याहृतित्रयोपेतां सावित्रीं जपेदिति विधिः कल्प्यते॥७८॥

(४) **राघवानन्दः** । संप्रत्यस्या जपार्थमानुपूर्वीं प्रदर्शयति **एतदिति** । एतदक्षरं ओंकाराक्षरं एतां तत्सवितुरित्यादिप्रचोदं यादित्यन्तां भूर्भुवः स्वरिति व्याहृतयः प्रणवात्परस्मिन्पूर्वे च व्याहृतयो यस्याः तदित्यादिकायाः तामित्यर्थः । वेदपुण्येन वेदत्रयाध्ययनजतुल्यपुण्येन ।।७८।।

(५) **नन्दनः** । अथ प्रणवव्याहृतिसावित्रीणां माहात्म्यं प्रसङ्गादाह **एतदिति** । अक्षरं प्रणवम् । एतां सावित्रीम् । विप्रशब्दोऽत्र क्षत्रियवैश्ययोरप्युपलक्षणार्थः । वेदविद्वेदविदः पुण्येन युज्यते वेदत्रयार्थविदो वेदत्रयजापिनश्च यत्फलं तल्लभत इत्यर्थः ।।७८।।

(६) **रामचन्द्रः** । एतदक्षरमोंकारं एतां त्रिपदीं व्याहृतिपूर्विकां सन्ध्ययोर्जपन् तदा वेदपुण्येन वेदाध्ययनजन्यपुण्येन युज्यते ।।७८।।

(७) **मणिरामः** । गायत्रीजपे फलमाह **एतदिति** । एतदक्षरं ओंकाररूपं, एतां च त्रिपदां सावित्रीं वेद, पुण्येन वेदत्रयाध्ययनपुण्येन ।।७८।।

(८) **गोविन्दराजः** । **एतत्** ओंकाराख्यमक्षरं एतां च सावित्रीं भूर्भुवस्वरित्येतद्व्याहृतिपूर्विकां वेदार्थज्ञो विप्रः सन्ध्ययोर्जपन् समस्तवेदपुण्येन संबध्यते इति विद्वान् ब्राह्मणः सन्ध्याजपसंभूतफलमाहात्म्यकथनेन प्रकृतविधित्रयस्तुतिः ।।८७।।

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।**
**महतोऽप्येनसो मासात् त्वचेवाऽहिर्विमुच्यते ।।७९।।**

(१) **मेधातिथिः** । **बहिरि**त्यनावृतो देश उच्यते । तेनैतदुक्तं भवति, ग्रामनगराभ्यां बहिररण्यनदीपुलिनादौ । सहस्रवारान् **अभ्यस्य** आवर्त्य । "ननु कृत्वसुचोऽप्यावृत्तिः प्रतिपाद्यते, अभ्यस्येत्यनेनापि । तत्र पौनरुक्त्यम्" । सामान्यविशेषभावाददोषः । **अभ्यस्ये**त्यनेन सामान्यतोऽभ्यास उक्तस्तत्र विशेषापेक्षायां **सहस्रकृत्वे**ति । न च कृत्वसुजन्तादेवोभयावगतिस्तस्य क्रियाविशेषापेक्षत्वात् । न हि देवदत्तः पञ्चकृत्वोऽह्न इत्युक्ते यावद्भुङ्क्त इति नोच्यते तावद्वाक्यार्थः समाप्यते ।

"ननु चाभ्यस्येत्यनेनापि न काचिद्विशिष्टा क्रियोपात्ता" ।

सत्यम् । जपः प्रकृतस्तमभ्यस्येति प्रतीयते । 'आवृत्तिः' पौनःपुन्येन सेवा ।

**महतोऽप्येनसः** । महत्पापं च ब्रह्महत्यादि, ततोऽपि मुच्यते, किं पुनरुपपातकेभ्यः । **अपिः** सम्भावने, न समुच्चये । भेदोपादानेन समुच्चयावगमो यथा देवदत्तस्यात्र प्रभुत्वं यज्ञदत्तस्यापि । इह न तथा निर्देशः ।

"केभ्यः पुनरुपपातकेभ्योऽयं मोक्ष उच्यते । गोवधादीन्युपपातकानि । तानि च प्रतिपापमाम्नातप्रायश्चित्तानि सरहस्यानि । यानि वा संवेत्ति न कृतान्यनुक्तपरिहारा-

ण्यवश्यम्भावितया च ज्ञायते कृतानीति, तेषामपि नित्यानि सन्ध्योपासनादीन्यपनोदकानि। यदि चैतत्प्रायश्चित्तं स्यात्तदा तत्रैवावक्ष्यत्, "जपेद्वै नियताहारः त्रिर्वै वेदस्य संहितामिति"वत्। प्रायश्चित्ते चास्मिन्प्रायश्चित्तप्रकरणमेवानर्थकं स्यात्। को हि दैवशप्तो जपमात्रसाध्यां निष्कृतिं हित्वा कृच्छ्रेषु शरीरप्राणहरेष्वध्यवस्येत्। उक्तं च–"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संप्राप्तौ को विद्वान्यत्नमाचरेत्"। तथा "पणलभ्यं हि न प्राज्ञः क्रीणाति दशभिः पणैः" इति। न च प्रकृतेनैकवाक्यताबीजं किञ्चिद्विभज्यमानसापेक्षत्वाद्यस्ति येन तच्छेषतयाऽर्थवाद उच्येत"।

अत्रोच्यते। विधिरेवायम्। पापप्रमोचनार्थ एवायं प्रयोगः। यत्तूक्तं "विषमशिष्टैर्विकल्पो न सिध्यतीति"— जपप्रायश्चित्त एवास्मिन्विकल्पार्थो भविष्यति। अघमर्षणादिभिः सर्वपापापनोदनमुक्तं, तेनास्य विकल्पः। अघमर्षणे हि त्र्यहमुपवास उक्तः। इहाश्नन्नेव मासिकेन प्रयोगेण शुध्यति। ततो न दूरविप्रकृष्टेन तपसा समीयते, येन विषमशिष्टता स्यात्। अथवा पूर्वकृतस्यैनसः शुद्धिरेषा ग्रहदौःस्थित्यादिसूचिते दैवे दोषे। तस्मान्मोक्षः। अनिष्टम् 'एन' उच्यते। तस्मान्मुच्यते। तत्फलेन न सम्बध्यत इत्यर्थः।

**त्वचेवाहिः**। जीर्णया त्वचा मुक्तः सर्पो यथा भवति। निरवशेषेण पापनाश एतेन प्रतिपाद्यते। यत्तु दौश्चर्मादिसूचितं पूर्वकृतमशुभं तत्र स्मृत्यन्तरे प्रायश्चित्तमाम्नातं बहु। तत्प्रायश्चित्तेष्वेव निदर्शयिष्यामः। एतदेवाभिप्रेत्योक्तम् "जपतां जुह्वतां चैव विनिपातो न दृश्यते" इति ॥७९॥

(२) **सर्वज्ञनारायणः**। **बहिर्ग्रामात् त्रिकं** प्रणवव्याहृतिगायत्रीरूपं **महतो** ब्रह्महत्यादेरपि अबुद्धिपूर्वकृतव्रात्यब्राह्मणवधादिरूपात् मासात्कालमात्रात् **त्वचे**त्यादिदृष्टान्तो दार्ष्टान्तिकदार्ढ्यार्थः ॥७९॥

(३) **कुल्लूकः**। **सहस्रकृत्व इति**। सन्ध्यायामन्यत्र काल **एत**त्प्रकृतं प्रणवव्याहृतित्रयसावित्र्यात्मकं **त्रिकं** ग्रामा**द्बहि**र्नदीतीरारण्यादौ **सहस्रा**वृत्ति जपित्वा **महतोऽपि** पापात्सर्प इव कञ्चुकान्मुच्यते। तस्मात्पापक्षयार्थमिदं जपनीयमित्यप्रकरणेऽपि लाघवार्थमुक्तम्। अन्यत्रैतत्त्रयोच्चारणमपि पुनः कर्तव्यं स्यात् ॥७९॥

(४) **राघवानन्दः**। किं च तस्या जपविशेषे फलविशेषमाह **सहस्रेति**। **त्रिकं** प्रणवादित्रयं **बहिः** ग्रामात् न धरण्यादौ, **त्वचः** कञ्चुकात् इव उपमानार्थः **त्वचेवेति** क्वचित् **महतो** ब्रह्महत्यादेः तस्मात्सर्वपापक्षयकामेनैषा जपनीयेति भावः ॥७९॥

(५) **नन्दनः**। बहिः संध्याभ्यामन्यस्मिन्कालेऽपि ग्रामाद्बहिरिति वा ॥७९॥

(६) **रामचन्द्रः** । **तु** पुनः जलाद्बहिर्गत्वा **एतत्त्रिकं** त्रिपदां **सहस्रकृत्वः** सहस्रसङ्ख्यां **जपित्वा महतोऽपि एनसः** पापात् **मासात्** मासपर्यन्तात् विमुच्यते ॥७९॥

(७) **मणिरामः** । **बहिः** सन्ध्यायामन्यकाले वा ग्रामाद्बहिः नदीतीरारण्यादौ ॥७९॥

(८) **गोविन्दराजः** । **सहस्रकृत्व इति** । **एतत् त्रयं** सहस्रवारान् अह**र्मासं** यावत् बहिर्ग्रामात् द्विजोऽभ्यस्य महत् ब्रह्महत्याद्यपि पापमपनुदति । जीर्णचर्मेव सर्प इति रहस्यप्रायश्चित्तगतमाहात्म्यकथनेन प्रकृतविधित्रयस्तुतिः ॥७९॥

**एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।**
**ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥**

(१) **मेधातिथिः** । **एतया** सावित्र्या । **विसंयुक्तः** हीनसन्ध्योपासनस्त्यक्तस्वाध्यायश्च । **गर्हणां** निन्दां **साधुषु** विशिष्टेषु **याति** प्राप्नोति । कीदृशीं गर्हणां प्राप्नोत्यत आह **काले च क्रियया स्वया** । काल "आषोडशात्" इत्यस्मिन्वियुक्ते गते निन्द्यते । एवमुपनीतोऽपि स्वाध्यायारम्भयोग्यः सावित्रीवर्जितो व्रात्य एव भवति । त्रयाणां या साधारणी स्वक्रिया । सेह निर्दिष्टा । सा चोपनयनमेव । कालशब्दश्चैवमर्थवान् । अध्ययनादिस्वकर्मविवक्षायामेतावदेव वाच्यं स्यात् यत् **क्रियया स्वयेति** ।

**योनि**शब्दो जन्मपर्यायो जात्यर्थं गमयति । विप्रादिजातीय इत्यर्थः । अर्थवादोऽयं व्रात्यप्रायश्चित्तार्थः ॥८०॥

(२) **सर्वज्ञनारायणः** । **विसंयुक्तो** वियुक्तः **स्वया कृतया** अग्निहोत्रादिकया **गर्हणां**, 'निन्दां ग्रहण'मिति पाठे ग्रहणं परिग्रहं तत्रापि संयुक्त इत्यकारप्रश्लेषेण पाठः ॥८०॥

(३) **कुल्लूकः** । **एतयर्चेति** । सन्ध्यायामन्यत्र समय **ऋचैतया** सावित्र्या **वियुक्त**स्त्यक्तसावित्रीजपः स्वकीयया **क्रियया सायंप्रातर्होमादिरूपया** स्वकाले त्यक्तो ब्राह्मणः क्षत्रियो वैश्योऽपि सज्जनेषु निन्दां गच्छति तस्मात्स्वकाले सावित्रीजपं स्वक्रियां च न त्यजेत् ॥८०॥

(४) **राघवानन्दः** । एतद्वैमुख्ये दोषमाह **एतयेति** । **एतया ऋचा** 'तत्सवितु'रित्यादिकया **विसंयुक्तः** परित्यक्तः **क्रियया** सन्ध्याग्निहोत्रादिकया च **गर्हणां** निन्द्यताम् ॥८०॥

(५) **नन्दनः** । **एतयर्चा** प्रणवव्याहृतिपूर्वया सावित्र्या विसंयुक्तः **काले च क्रियया स्वये**त्युपन्यासो दृष्टान्तार्थः । यथा सन्ध्योपासनादिस्वकर्मणा वियुक्तस्त-

थेति । **गर्हणां याति साधुषु** दोषभूयिष्ठत्वात्साधुभिस्त्याज्य इत्यर्थः । अपरे तु मन्यन्ते **एतयर्चा** विसंयुक्तोऽनुपनीत अत एव तत्तत्कालविहितस्वकर्मरहितो **विप्रक्षत्रियविड्योनि**जातोऽपि सत्सु त्याज्यतां **यातीति** ।।८०।।

(६) **रामचन्द्रः** । **एतया ऋचा** गायत्र्या **विसंयुक्तः** विरहितः **काले** जपकाले च **पुनः स्वया क्रियया** सायंप्रातर्होमादिक्रियया विसंयुक्तः रहितः विप्रक्षत्रियविड्योनिः साधुषु गर्हणां **याति** ।।८०।।

(७) **मणिरामः** । एतज्जपाकरणे स्वकर्माकरणे च पापमाह **एतयर्चेति** । तस्मात् स्वकाले सावित्रीजपं स्वक्रियां च न त्यजेत् ।।८०।।

(८) **गोविन्दराजः** । **एतयेति** । **एतया** ऋचा सावित्र्या **वियुक्तः** वेदाध्ययनाभावात् उपनयनकाले चात्मीययोपनयनाख्यक्रियया वियुक्तः **ब्राह्मणक्षत्रियवैश्य**जातीयः निन्द्यतां शिष्टविषये प्राप्नोतीत्यनुष्ठाननिन्दाद्वारेण विधित्रयोपनयनयोः स्तुतिः ।।८०।।

**ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।**
**त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ।। ८१ ।।**

(१) **मेधातिथिः** । ॐकारः पूर्वो यासां ता **ओङ्कारपूर्विकाः** । **महाव्याहृतयः** प्रकृता एव भूर्भुवः स्वरित्येते शब्दा अभिधीयन्ते । **अव्ययाः** अविनाशिन्यः । फलस्य दीर्घकालत्वादेवमुच्यते । अन्यथा "सर्व एव शब्दा नित्या" इति विशेषणमनर्थकम् । **त्रिपदा** 'तत्सवितु'रित्येषा **सावित्री ब्रह्मणो मुखम्** । आद्यत्वान्मुखव्यपदेशः । अतश्चारम्भे अध्येयमेतदित्यस्यैवार्थवादः । अथवा **मुखं** द्वारमुपायो ब्रह्मप्राप्तिरनेन भवतीत्येतदेवाह ।।८१।।

(२) **सर्वज्ञनारायणः** । **ब्रह्मणो** वेदस्य **मुखं** ततस्तदारभ्य एतत्त्रयजपः कार्य इत्यर्थः ।।८१।।

(३) **कुल्लूकः** । **ॐकारपूर्विकेति** । ओंकारपूर्विकास्तिस्रो व्याहृतयो भूर्भुवः स्वरित्येता अक्षरब्रह्मावाप्तिफलत्वेनाव्ययाः **त्रिपदा** च **सावित्री ब्रह्मणो** वेदस्य **मुख**माद्यं तत्पूर्वकं वेदाध्ययनारम्भात् । अथवा ब्रह्मणः परमात्मनः प्राप्तेर्द्वारमेतदध्ययनजपादिना निष्पापस्य ब्रह्मज्ञानप्रकर्षेण मोक्षावाप्तेः ।।८१।।

(४) **राघवानन्दः** । मुमुक्षूणां तदेव शरणमित्याह **ॐमिति** । **अव्ययाः** अव्ययफलदात्रीं (त्र्यः) ब्रह्मणः परब्रह्मणः मुखं प्राप्त्युपायं वेदस्य प्रधानभूतं वा ।।८१।।

(५) **नन्दनः** । **ब्रह्मणो** वेदस्य **मुखं** शरीरम् । तथा च सामुद्रिकवचनं 'मुखमर्धं शरीरस्ये'ति । अथवा **ब्रह्मणो मुखं** वेदाधिगमनद्वारम् ।।८१।।

(६) **रामचन्द्रः । त्रिपदा चैव सावित्री ब्रह्मणः** वेदस्य **मुखं** आद्यं तत्पूर्वकं वेदाध्ययनं विज्ञेयम् । **ओंकारपूर्विका महाव्याहृतयः तिस्रः अव्ययाः ।** तद्यथा ओंभूः ओंभुवः ओंस्वरिति त्रयः व्याहृतयः । अथवा ब्रह्मणः परमात्मनः प्राप्तेः मुखं द्वारं एतदध्ययनजपादिना ॥८१॥

(७) **मणिरामः** । **ब्रह्मणो मुखम्** वेदावाप्तेर्द्वारम् ॥८१॥

(८) **गोविन्दराजः । ओंकारपूर्विका इति । ओंकारपूर्विकास्तिस्र** एताः भूराद्या **महाव्याहृतयः अव्ययाः** अविनाशिन्यः तत्फलस्य दीर्घकालत्वात् **पादत्रययुक्ता** चैषा 'तत्सवितुर्वरेण्य'मिति **सावित्री ब्रह्मणो मुखं** वेदप्राप्तिद्वारं **विज्ञेयम्** । अतः स्वाध्यायादावेतदध्येयमिति प्रकृतार्थस्तुतिः ॥८१॥

**योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।**
**स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥८२॥**

(१) **मेधातिथिः** । आकाश इव सर्वव्यापी विभुः सम्पद्यते, **खमूर्तिः** खस्वभाववान् भवति । न तु 'मूर्तिः' शरीरम्, आकाशस्य शरीराभावात् । "अथ किमिदं ब्रह्म, यद्रूपापत्तिरुच्यते" । परमात्माऽऽनन्दरूपः, यस्येमे क्षेत्रज्ञा पवनजवोद्धतस्य वारिराशेरिवोर्मयः । ते यथा प्रशान्तावस्थे तस्मिंस्तद्रूपा भवन्ति, एवममी तद्रूपा आत्मानः सम्पद्यन्ते । विशेषतश्च सर्वमेतद् द्वादशे वक्ष्यते ।

अध्ययनमिदं गायत्र्याश्चोदितं न जपो, न चात्रावृत्तिगणनाऽस्ति । **अतन्द्रित** इति वचनाद्बहुकृत्वः करणं प्रतीयते । सकृत्प्रयोगे हि नास्ति तन्द्राशंका । मोक्षार्थिनोऽयं विधिः ॥८२॥

(२) **सर्वज्ञनारायणः** । **वायुभूतो**ऽप्रतिहतगतिः **खमूर्तिमान्** शुद्धः ॥८२॥

(३) **कुल्लूकः** । अत एवाह **योऽधीत इति** । यः प्रत्यहमनलसः सन्सावित्रीं प्रणवव्याहृतियुक्तां **वर्षत्रयमधीते स परं ब्रह्माभिमुखेन गच्छति** स वायुभूतो वायुरिव कामचारी जायते खं ब्रह्म तदेवास्य मूर्तिरिति **खमूर्तिमान्**भवति शरीरस्यापि नाशात् ब्रह्मैव संपद्यते ॥८२॥

(४) **राघवानन्दः** । किंच **य इति । अधीते** अभ्यस्यति । संख्या पूर्वोक्तैव । **वायुभूतः** 'वायुर्वै गौतम तत्सूत्र'मित्यादिश्रुतेर्हिरण्यगर्भपदवीं प्राप्य खमूर्तिमान् आकाशवद्देहाद्यनवच्छिन्नः ब्रह्म भवेदिति क्रममुक्तिरित्यर्थः ॥८२॥

(५) **नन्दनः । एतां** प्रणवव्याहृतिपूर्विकां सावित्रीम् । **अतन्द्रितः** शक्तौ सत्यां न कदाचिदप्यन्यपरः । **वायुभूतः** सर्वव्यापी । **खमूर्तिमान्** लेपरहितः । **परं ब्रह्माप्येति** परस्मिन्ब्रह्मणि लीयते ॥८२॥

(६) **रामचन्द्रः**। **अहनि अहनि** प्रत्यहं **एतां** त्रिपदीं यः अधीते **त्रीणि वर्षाणि** त्रिवर्षपर्यन्तं **स** पुरुषः **परं ब्रह्म अध्येति** ब्रह्मत्वं **एति वायुभूतः** वायुरूपः **खमूर्तिमान्** अमूर्तित्वात् ॥८२॥

(७) **मणिरामः**। **परं ब्रह्म अभ्येति** परं ब्रह्माभिमुखेन गच्छति। **वायुभूतः** वायुरिव कामचारो भवति। **खमूर्तिमान्** खं ब्रह्म तदेवास्य मूर्तिरिति **खमूर्तिमान्** भवति। शरीरस्यापि नाशाद् ब्रह्मैव संपद्यत इत्यर्थः ॥८२॥

(८) **गोविन्दराजः**। **य इति**। **य एतां** सावित्रीं प्रत्यहं **त्रीणि वर्षाणि अनलसोऽधीते स** वायुरिव सर्वत्राप्रतिहतगतिः **खमूर्तिमान्** आकाशरूपः सन् सर्वव्यापित्वात् **परं ब्रह्म** परमात्मलक्षणमाभिमुख्येन प्राप्नोतीति जपमाहात्म्यकथनेन प्रकृतविधिस्तुतिः ॥८२॥

**एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः।**
**सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ ८३ ॥**

**(१) मेधातिथिः**। ओंकार **एकाक्षरम्**। तत्परं **ब्रह्म**। ब्रह्मप्राप्तिहेतुत्वात्। "तज्जपस्तदर्थभावना" (योगसू. १।२८) तया ब्रह्मप्राप्तेरेवमुच्यते। ओमिति ब्रह्माभिधानम्। एवं ह्याहुः 'तस्य वाचकः प्रणव' इति। (योगसू. १।२७) तत्परं प्रकृष्टं कुतः अन्याभ्यः ब्रह्मोपासनाभ्यः? "अन्नं ब्रह्मेत्युपासीत," (तैति.३।२) "आदित्यो ब्रह्मेत्यादेश" (छां. ३।१९।१) इति एवमाद्याभ्य उपासनाभ्यः ओंकारोपासना प्रकृष्यते। अध्ययनादेव तत्प्राप्त्यभिधानात्। शब्दस्यैव च ब्रह्मत्वेन श्रवणात्– "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती"ति। सर्वो ह्यर्थो वाग्व्यवहारानतीतो, वाचश्च सर्वस्या ओंकारो मूलम्। तथा च श्रुतिः "तद्यथा शंकुना सर्वाणि पत्राणि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा; ओंकार एवेदं सर्वमिति" (छां. २।२३।३)। सन्तर्दनमनुस्यूतिः आश्रयभावापत्तिर्वा।

"कथं पुनः सर्वा वागोङ्कारेण सन्तृण्णा" ?

वैदिक्यास्तावदोङ्कारपूर्वकत्वमुक्तम्। लौकिक्या अपि, 'तदादीनि वाक्यानि स्यु'रित्या**पस्तम्ब**वचनात्।

**उपनिषद्भाष्ये** चैतदन्यथा व्याख्यातम्। तत्त्विहानुपयोगान्न प्रदर्शितम्।

**प्राणायाम**शब्द आचमनवद्विशिष्टेतिकर्तव्यताके प्राणनिरोधे वर्तते। **'परं तपः'** चान्द्रायणादिभ्यः। "किं पुनस्तस्य श्रैष्ठचम्" ? भक्तिरेषा।

**सावित्र्याः परं** मन्त्रज्ञानं **नास्ति**। एषामिति प्रशंसा। **मौनात्सत्यं विशिष्यते**। मौनं वाङ्नियम उच्यते। तस्य च यत्फलं ततोऽधिकं सत्यवचनात्प्राप्यते।

(६) **रामचन्द्रः।** **मध्वादि** वर्जयेत्, **स्त्रियः** भोगार्थं वर्जयेत्, सर्वप्राणिनां **हिंसनं** वर्जयेत्। शुक्तानि द्रव्यान्तरसंयोगात् अम्लतामापन्नानि निष्ठुरवचनानि वा ॥ १७७ ॥

(७) **मणिरामः।** ब्रह्मचारिणा यानि वर्ज्यानि तान्याह **वर्जयेदिति।** **शुक्तानि** यानि कालातिक्रमेण उदकवासादिना च अम्लयन्ति तानि शुक्तानि ॥१७७॥

(८) **गोविन्दराजः। वर्जयेदिति।** माक्षिक**मांसमाल्यस्त्रीप्राणिहिंसनानि** वर्जयेत् तथा **गन्ध**वद् द्रव्यं कर्पूरादि उद्रिक्तरसं च गुडादि। मधुनो रसशब्दग्रहणेऽपि प्रायश्चित्तविशेषार्थं पृथगुपदेशः। **शुक्तानि** यानि प्राप्तस्वरसानि कालपरिवासेनोदकादिद्रव्यान्तरकालपरिवासाभ्यां चाम्लीभवन्ति। **सर्व**ग्रहणं पादपूरणम्। न त्वस्यार्थान्तरग्रहणे सामर्थ्यमस्ति। यत्तु **गौतमीये** 'शुक्ता वाच' इति तत् वाक्शब्दसन्निधानात् शुक्तशब्दस्यार्थान्तरवृत्तित्वम्। इह चैवमभिप्रेते बुद्धिपूर्वकारी शुक्लाश्चैव गिरस्सर्वा इत्येवमवेक्षते। यद्यपि "सर्वशुक्तानि चैवेह" इत्यनेन ब्रह्मचारिणोऽपि प्रतिषेधसिद्धिः तथापीहाभिधानं स्वाध्यायाङ्गत्वार्थम्। एतेन प्रतिषेधेन भक्षणे पुरुषार्थोऽतिक्रममात्रं स्यात् न विधिवैगुण्यम् का वा गतिरनृतहिंसादिप्रतिषेधानाम्। पुनरभिधानस्यात्र चोपभोगार्थं मांसादिप्रतिषेधो न औषधार्थः। तथा च **वसिष्ठेन** सा 'चान्याधीयीत कामाद्गुरोरुच्छिष्टं भेषजार्थं प्राश्नीयात् इति 'मांसाद्यभ्यनुज्ञानम् ॥ १७७॥

**अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ॥**
**कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥१७८॥**

(१) **मेधातिथिः।** घृततैलादीनां स्नेहेन शिरःशरीरम्रक्षण**मभ्यङ्गः। अञ्जनं चाक्ष्णोः।** अक्षिग्रहणं वृत्तपूरणार्थम्। अनयोश्चापि देहमण्डनार्थतया प्रतिषेधो नौषधार्थतया। गन्धमाल्यादिसाहचर्यात्। **उपानहौ** चर्मपादुके, न केवले। **छत्रधारणं** च स्वहस्तेन परहस्तेन वोभयस्यापि निषेधः। **कामो रागः**। मन्मथस्य स्त्रीप्रतिषेधादेव सिद्धः। **क्रोधो** रोषः, **लोभो** मोहः। अहंकारममकारौ चित्तधर्मावेते। **नर्तनं** प्राकृतपुरुषाणां हर्षाय, गात्रविक्षेपो भरतादिदृष्टाभिनयप्रयोगश्च। **गीतं** षड्जादिस्वरप्रदर्शनम्। **वादनं** वीणावंशादिभिः स्वरवच्छब्दकरणं, पणवमृदङ्गाद्यभिघातश्च तालानुवृत्त्या ॥ १७८ ॥

(२) **सर्वज्ञनारायणः।** **अभ्यङ्गं** तैलादिम्रक्षणम्। **स्त्रिय** इति। स्त्रीसम्बन्धो निषिद्धः। कामशब्देन त्वत्र तदभिलाषो निषिध्यते ॥ १७८ ॥

(३) **कुल्लूकः।** तैलादिना शिरःसहितदेहमर्दनं कज्जलादिभिश्च चक्षुषो-

रञ्जनं पादुकायाश्छत्रस्य च धारणं **कामं** मैथुनातिरिक्तविषयाभिलाषातिशयं मैथुनस्य स्त्रिय इत्यनेनैव निषिद्धत्वात् **क्रोधलोभनृत्यगीत**वीणापणवादि वर्जयेत् ।।१७८।।

(४) **राघवानन्दः**। **अभ्यङ्गं** तैलादिनोन्मर्दनम्। **कामो** धनाभिलाषः ।।१७८।।

(५) **नन्दनः**। अत्र वर्जयेदित्यनुवर्तते ।। १७८।।

(६) **रामचन्द्रः**। अभ्यङ्गं तैलादिना अक्ष्णोरञ्जनं कज्जलादिना वर्जयेत्। उपानत्छत्रधारणं कामादि वर्जयेत् ।। १७८ ।।

(७) **मणिरामः**। **कामं** मैथुनातिरिक्तविषयाभिलाषातिशयं रूपं मैथुनस्य स्त्रिय इति पूर्वश्लोकेनैव निषिद्धत्वात् ।। १७८ ।।

(८) **गोविन्दरामः**। **अभ्यङ्गमिति**। **अभ्यङ्गमञ्जन**घृताद्यभ्यञ्जनो**पानच्छत्रधारणकामक्रोध**परद्रव्यादि**गीतवादनानि** वर्जयेत्। **कामः** भोजनाद्यभिलाषातिशयः। मन्मथस्य स्त्रीग्रहणेन निषिद्धत्वात् ।। १७८ ।।

**द्यूतं च जनवादं च परिवादं तथानृतम् ।।**
**स्त्रीणां च प्रेक्षणालम्भावुपघातं परस्य च ।।१७९।।**

(१) **मेधातिथिः**। **द्यूतम्** अक्षक्रीडा समाह्वयः कुक्कुटादिभिः, प्रतिषिद्धः, द्यूतशब्दस्य सामान्यशब्दत्वात्। जनैर्वादः अकारणेन लौकिकेष्वर्थेषु वाक्कलहः, देशवार्ताद्यन्वेषणं प्रश्नो वा। **परिवादः** असूयया परदोषकथनम्। **अनृतम्** अन्यथा दृष्टमन्यथा च श्रुतं यदन्यथोच्यते। सर्वत्र वर्जयेदित्यनुषङ्गाद्द्वितीया। **स्त्रीणां च प्रेक्षणालम्भौ** अवयवसंस्थाननिरूपणम् **प्रेक्षणम्** इदमस्याः शोभतेऽङ्गमिदं नेति। **आलम्भः** आलिङ्गनम्। मैथुनशङ्कायां चेतौ प्रतिषिध्येते। वालस्य यथातथम्। **परस्योपघातो**ऽपकारः कस्याञ्चिदर्थसिद्धौ प्रतिवन्धः कन्यालाभादौ पृच्छमानेन अयोग्यस्याप्ययोग्यत्वं न वक्तव्यम्, तूष्णीमासितव्यम्, अनृतप्रतिषेधात् ।।१७९।।

(२) **सर्वज्ञनारायणः**। **जनवादं** वार्तादिकथनं **स्त्रीणां** मातृतुल्याभ्योऽन्यासामकामतोऽपि **प्रेक्षणमालम्भं** च **उपघातं** मनोदुःखकरणम् ।।१७९।।

(३) **कुल्लूकः**। अक्षक्रीडां जनैः सह निरर्थकवाक्कलहं परस्य दोषवादं मृषाभिधानं **स्त्रीणां च** मैथुनेच्छया सानुरागेण **प्रेक्षणालिङ्गनं** परस्य चापकारं वर्जयेत् ।।१७९।।

(४) **राघवानन्दः**। **जनवादं** निरर्थकवाक्कलहम्। **स्त्रीणामिति**। इदमस्याः सौकुमार्यमित्यादिसरागेक्षणस्पर्शने। **उपघातं** अपकारं मनोवचोभिः, हिंसा तु कार्येनेति भेदः ।।१७९।।

(५) **नन्दनः । प्रेक्षणालम्भं** रागयुक्ते दर्शनस्पर्शने । **उपघातं** द्रोहम् ।।१७९।।

(६) **रामचन्द्रः । द्यूतादि स्त्रीणां प्रेक्षणं** तथाभ्यङ्गं आलिङ्गनं **परस्य** अन्यस्य **उपघातं** मनोदुःखकारणं वर्जयेत् ।। १७९ ।।

(७) **मणिरामः । जनवादं** लोकैः व्यर्थवाक्कलहं, **परिवादं** परदोषकथनम् । **उपघातं** अपकारम् ।। १७९ ।।

(८) **गोविन्दराजः । द्यूतमिति** । अक्षादिक्रीडां जनैः सह कलहं परदोषादि-कीर्तनं असत्यं च **स्त्रीणां च** मैथुनसेवाशङ्कया आलिङ्गनं **परस्य च** अर्थनाशाद्युपघातं च वर्जयेत् ।। १७९ ।।

**एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।।**
**कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ।। १८० ।।**

(१) **मेधातिथिः । एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित्**, अयोनावपि । योनौ स्त्रीप्रतिषेधादेव सिद्धत्वात् ।

अत्रार्थवादः **कामाद्धि स्कन्दयन्**। इच्छाऽत्र 'कामः'। हस्तव्यापारादिना, अयोनौ मैथुनेन च, रेतः शुक्रं स्कन्दयन् क्षरयंन्हिनस्ति नाशयति ब्रह्मचर्य-**व्रतमात्मनः** ।। १८० ।।

(२) **सर्वज्ञनारायणः । एको** न द्वितीयेन सहैकशय्यायाम् । **सर्वत्र** जनाकीर्णेऽपि क्वचिद्भूम्यादावपि **न स्कन्दयेत् । कामतः स्कन्दयन्** कामतस्तु स्त्रियं दृष्ट्वापि स्कन्दनेन व्रतहानिः । **व्रतं हिनस्त्यतः** पुनरुपनयनं तस्येत्यर्थः ।। १८० ।।

(३) **कुल्लूकः । सर्वत्र** नीचशय्यादावेकाकी **शयनं** कुर्यात् । इच्छया न स्वशुक्रं पातयेद्यस्मादिच्छया स्वमेहनाच्छुक्रं पातयन्स्वकीयव्रतं नाशयति व्रतलोपे चावकीर्णिप्रायश्चित्तं कुर्यात् ।। १८० ।।

(४) **राघवानन्दः । न स्कन्दयेत्** स्वेच्छया न पातयेत् । **क्वचिद**योनावपि । **कामादिति** । प्रायश्चित्तार्थमनुवादः 'अवकीर्णी नैर्ऋतगर्दभालम्भनं कुर्यादि'ति स्मृतेः ।।१८० ।।

(५) **नन्दनः । सर्वत्र** मातृपितृसमीपे । **हि** हेतौ । **व्रतं** ब्रह्मचर्यम् । **हिनस्ति** हन्त्येव ।।१८०।।

(६) **रामचन्द्रः । एकः शयीत** स्त्रिया सह न **शयीत रेतः क्वचित् न स्कंदयेत्** न पातयेत् । तद्यथा 'अयोनौ च वियोनौ च पशुयोनौ तथाविधः' ।।१८०।।

(७) **मणिरामः । न रेतः स्कन्दयेत्** इच्छया न शुक्रं पातयेत् । तदेव स्पष्टयति **कामाद्धीति** ।। १८० ।।

(८) **गोविन्दराजः । एक इति ।** नान्येन सह **शयीत । सर्वत्र** गुरुगृहे पितृगृहादौ । न च स्त्रीप्रयोगात् प्रकारान्तरेणापि रेतः प्रक्षारयेत् **क्वचिद**योनावपि । यस्मात् बुद्धिपूर्वं रेतः **स्कन्दयन्** आत्मनो ब्रह्मचर्यं खण्डयति ।। १८० ।।

**स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः ।।**
**स्नात्वाऽर्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ।।१८१।।**

(१) **मेधातिथिः ।** कामाद्व्रतलोपेनावकीर्णिप्रायश्चित्तम्, अकामात्त्विदमाह । **स्वप्न**ग्रहणमविवक्षितम्, **अकामत** इत्येतदेव निमित्तम् । न हि स्वप्ने कामसम्भवः । अतो यद्यसुप्तस्यापि कथञ्चिदनिच्छया स्वमलासृगवयववत्प्रक्षरति **शुक्रं** तत्राप्येतदेव प्रायश्चित्तम् । **अकामतो** रेतः **सिक्त्वेदं** प्रायश्चित्तं कुर्यात्–**पुनर्मामिति ऋचं जपेत्** ।।१८१।।

(२) **सर्वज्ञनारायणः । अकामतः** स्त्रियमनुध्यायापि सुप्तः सकृद्गन्धपुष्पादिनार्चयित्वा त्रिर्जपेत् । अत्र प्रायश्चित्तोक्तिः प्रसङ्गात् । एतच्चान्येषामपि वनस्थादीनां ब्रह्मचर्यनियमप्रवृत्तानाम् ।। १८१ ।।

(३) **कुल्लूकः । ब्रह्मचारी** स्वप्नादावनिच्छया रेतः सिक्त्वा कृतस्नानश्चन्दनाद्यनुलेपनपुष्पधूपादिभिः सूर्यमभ्यर्च्य **पुनर्मामैत्विन्द्रिय**मित्येतामृचं वारत्रयं पठेत् । इदमत्र प्रायश्चित्तम् ।। १८१ ।।

(४) **राघवानन्दः । ऋचं पुनर्मामैत्विन्द्रियमित्येताम्** ।। १८१ ।।

(५) **नन्दनः । अकामतो** हि रेतःस्कन्दने प्रायश्चित्तप्रकरण उक्तमप्यत्रादरातिशयार्थमाह **स्वप्न इति** ।।१८१।।

(६) **रामचन्द्रः । ब्रह्मचारी द्विजः स्वप्ने शुक्रं अकामतः सिक्त्वा** शुक्रं पातयेत् चेत्पूर्वं **स्नात्वा अर्कं** अर्घ्यं दत्वा **त्रिः** त्रिवारं '**पुनर्मामि**'**त्यृचं जपेत्** ।।१८१ ।।

(७) **मणिरामः ।** 'अकामतः रेतःस्खलने प्रायश्चित्तमाह **स्वप्ने सिक्त्वेति** ।। १८१ ।।

(८) **गोविन्दराजः । स्वप्न इति** (यत्) **द्विजो ब्रह्मचारी** अबुद्धिपूर्वं **स्वप्ने** रेत उत्सृज्य **स्नात्वा अर्कं** पुष्पादिनाऽ**र्चयित्वा** त्रीन् वारान् '**पुनर्मामैत्विन्द्रियं**' इत्येताम**ृचं जपेत्** । अस्य प्रायश्चित्तस्य प्रकरणोत्कर्षो रेतःसंरक्षणनियमान्तरेभ्यो ब्रह्मचारिणो गुरुत्वप्रख्यापनार्थः ।। १८१ ।।

देवता सिद्धा यामुदिश्य पूजा विधीयते। न ह्यादित्यादीनां 'देवता' सामान्यशब्दः गोशब्दवच्छागलेयादीनाम् ।"

अत्रोच्यते– सत्यं, नादित्यादयः स्वरूपतो 'देवताः'। सम्बन्धिशब्दोऽयम्। विधित एव देवतार्थोऽवगन्तव्यः–"यस्य हविश्चोद्यते सा तस्य देवता" इति। स एवाग्निराग्नेयादन्यत्र न देवतेत्युक्तम्। किंतु न पूजाविधिः पूज्यमानमन्तरेण सम्भवति। देवताश्च पूज्यत्वेन श्रुताः। तत्र यदि देवतार्थे मुख्येन पूजा सम्भवति तदा याग एव पूजा विज्ञेया। तस्य चारूपत्वादसति द्रव्यदेवताश्रवणे पूर्वाह्णकाल-विध्यर्थोऽयमनुवादो विज्ञेयः। अतः 'पूर्वाह्णे दैवतानि कर्तव्यानी'त्युक्तं भवति।

"किमुच्यते देवता न श्रूयते।" यावता न साक्षाद्देवताशब्दोऽस्ति। "नायं सामान्यवचनो देवताशब्दः। यासामन्यत्र देवतात्वं दृष्टं तासामेतत्पूजाविधानम्। तेनाग्निरादित्यो रुद्र इन्द्रो विष्णुः सरस्वतीत्येवमादयः पूज्याः। पूजार्थं च धूपदीपमाल्योपहारादीनां निवेदनम्। तत्राग्नेस्तावत्साक्षात्सम्बन्धः। आदित्यस्य दूरदेशवर्तित्वाच्छुचौ देशे तदुद्देशेन गन्धादिप्रक्षेपः। इन्द्रादीनां स्वरूपस्याप्रत्यक्षत्वा-दिन्द्रादिशब्दोद्देशेनैव तथा विधानम्। यद्यपि पूज्यमानप्रधाना पूजा, तथापि हि पूज्यमानानां कार्यान्तरशेषभावे पूजैव कर्तव्यतया विज्ञायते। द्रव्यप्रधाने हि न विधिविषयत्वसम्भवः। "तानि द्वैधं गुणप्रधानभूतानि" इति (मी० सू० २।१।६) "यैस्तु द्रव्यं चिकीर्ष्यते" इति (२।१।७)।" न्याय्यं तु स्तुतिशस्त्रादिवत्। यथा न स्तुतिः स्तुत्यर्था, एवमियमपि पूजा न पूज्यार्था। स्तौतिशंसत्योर्निर्देशो नास्तीति चेत्? अत्रोक्तम्—द्वितीया, सक्तुषु दर्शनात्।

एवं 'मृदं गां दैवतं प्रदक्षिणानि कुर्वीतेति' दक्षिणाचारता विधीयते। दक्षिणेन दैवानि कर्माणि कर्तव्यानि। न हि मृदादिवद्देवताया दक्षिणेन मार्गेण स्थानममूर्तत्वात् युज्यते। एवं "दैवतान्यभिगच्छेदि"ति; पादविहारव्यापारेण देवता-समीपप्राप्त्यसम्भवाद्गमेश्च ज्ञानार्थत्वादभिगमनं स्मरणात्किं विशिष्यते? देवता अभिगच्छेत्, कर्मकाले मनसा ध्यायेत् चित्तव्याक्षेपतामाकुलताख्यां परिहरेदित्यर्थः। तथा चोपलभ्य मानमूलैवेयं स्मृतिर्भवति। 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति'। "ननु चैतदप्युद्देश्यत्वान्यथानुपपत्तेः प्राप्तमेव।" सव्याक्षेपस्याकुलस्य च सम्भवाददोषः।

एवं 'देवस्वं' 'देवपशवो' 'देवद्रव्यमि'त्यादयो व्यवहारास्तादर्थ्येनोपकल्पितेषु पश्वादिषु द्रष्टव्याः। दण्डाधिकारे तु प्रतिकृतिविषयमेव देवताव्यवहारमिच्छन्ति। अन्यथा व्यवस्थाभङ्गः स्यात्। कल्पितदेवतारूपाणां प्रतिकृतीनां कल्पितेनैव स्वस्वामिभावेन यत्सम्बन्धि तदेव "देवब्राह्मणराज्ञां तु द्रव्यं विज्ञेयमुत्तमम्"

**वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ॥**
**ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ १८३ ॥**

(१) **मेधातिथिः।** येभ्यो भैक्ष्यमासादयितव्यं तान् वक्ति **वेदयज्ञैश्च ये अहीना** वेदाध्ययनेन संयुक्ताः, यज्ञानां च सत्यधिकारे कर्तारः। **अहीना** अवर्जिताः तदुपेता इति यावत्। **स्वकर्मसु च प्रशस्ताः।** येषां यज्ञेऽधिकारो नास्त्यन्यस्मिन् शस्ते कर्मणि तत्पराः। अथवा स्वकर्मप्रशस्तास्त उच्यन्ते ये स्ववृत्तावेव सन्तुष्टा न वार्द्धुषिकादिवृत्त्युपजीविनः।

तेषां गृहेभ्यो **भैक्षमाहरे**द्याचित्वा गृह्णीयात्**प्रयतः** शुचिः। **अन्वह**मित्यनुवादः ॥ १८३ ॥

(२) **सर्वज्ञनारायणः। प्रशस्तानां** लब्धोत्कर्षाणां **स्वकर्मसु** ब्रह्मचारिकर्मसु ॥ १८३ ॥

(३) **कुल्लूकः। वेदज्ञै**श्चात्यक्तानां **स्वकर्मसु** दक्षाणां **गृहेभ्यः** प्रत्यहं **ब्रह्मचारी** सिद्धान्नभिक्षासमूहमाहरेत् ॥ १८३ ॥

(४) **राघवानन्दः।** येभ्यो भैक्ष्यमाहार्यं तानाह **वेदे**ति। **प्रशस्तानां** दक्षाणां **स्वकर्मसु** ॥ १८३ ॥

(५) **नन्दनः।** अथ भैक्षेऽप्यादाननियममाह **वेदयज्ञैरिति। प्रयतो** वाङ्मनश्चक्षुर्भिः ॥१८३॥

(६) **रामचन्द्रः। वेदयज्ञैः अहीनानां** न हीनानां पूर्णानां **स्वकर्मसु** स्वस्वकर्मसु **प्रसक्तानां गृहेभ्यः अन्वहं** प्रत्यहं प्रत्यक्षः सन् **ब्रह्मचारी भैक्षं आहरेत्** ॥१८३॥

(७) **मणिरामः।** येषां गृहाद्भिक्षा याचनीया तानाह **वेदयज्ञैरिति। स्वकर्मसु प्रशस्तानां** समर्थानाम्। एतेषां गृहेभ्यो भिक्षा**माहरेत्** ॥१८३ ॥

(८) **गोविन्दराजः। वेदयज्ञैरिति** वेदवेदार्थानुष्ठानयुक्तानां **स्वकर्मसु** च वृत्त्यर्थेषु अध्यापनादिषु **प्रशस्तानां** स्ववृत्त्या जीवतां **गृहेभ्यो ब्रह्मचारी** शुचिः सन् प्रत्यहं **भैक्षमाहरेत्** ॥ १८३ ॥

**गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ॥**
**अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ १८४ ॥**

(१) **मेधातिथिः।** सत्यप्येतद्गुणयोगे गुरुगृहे **न भिक्षेत।** पूर्वं **कुलं** वंशः ततो गुरोर्ये पितृव्यादयस्तेभ्योऽपि न ग्रहीतव्यम्। **ज्ञातयः,** ब्रह्मचारिणः पितृपक्षाः, तेषां कुले। **बन्धुषु** च मातृपक्षेषु मातुलादिषु। नैवमभिसम्बन्धः

---

(१८३) प्रशस्तानां—प्रसक्तानां (ठ)

कर्तव्यः–'गुरुज्ञात्यादिष्विति'। **गुरोः कुल** इति कुलशब्देनैव तेषां सङ्गृहीतत्वात् ।

"कुतस्तर्हि भिक्षेत?" एतद्व्यतिरेकेणान्यगेहेभ्यः ।

**अलाभेऽसम्भवेऽन्यगेहानाम्** । सर्व एव यदि ग्रामो गुरुज्ञातिबन्धुभिर्व्याप्तो भवत्यन्ये नैव सन्ति, सन्तो वाऽन्नं न ददति । एतेष्वपि गृहेषु भिक्षितव्यम् । अन्याभावे प्रथमं बन्धुं भिक्षेत, तदभावे ज्ञातिं, तदभावे गुरुकुलम् ।। १८४ ।।

(२) **सर्वज्ञनारायणः** । गुरोराचार्यस्य पितुः कुलस्य मातरं चेत्यत्रानुज्ञानात् । अतएव स्वस्रादिभ्योऽन्येषामेव बन्धूनां निवासः ज्ञातिसपिण्डस्तस्य कुले तथा **बन्धुषु** तदन्यसमानयोनिषु **अन्यगेहानां** निषिद्धान्यगृहाणां **पूर्वंपूर्वं**मुक्तेषु त्रिषु ।। १८४ ।।

(३) **कुल्लूकः** । आचार्यस्य सपिण्डेषु **बन्धुषु** च मातुलादिषु न भिक्षेत् । तद्गृह-व्यतिरिक्तभिक्षायोग्यगृहाभावे चोक्तेभ्यः **पूर्वं पूर्वं** वर्जयेत् । ततश्च प्रथमं बन्धुं भिक्षेत, तत्रालाभे ज्ञातींस्तत्रालाभे गुरोरपि ज्ञातीन्भिक्षेत ।। १८४ ।।

(४) **राघवानन्दः** । भिक्षाहरणे प्रतिषिद्धानाह **गुरोरिति** । तस्योद्वेगहेतुत्वात् दूरदृष्टाशङ्कया यस्मै देयं ततो ग्राह्यमिति न्यायविरोधात् **ज्ञातिकुलबन्धुषु** स्नेहाद्र-सादिदानहेतोः **बन्धुषु** मातुलादिषु । **अलाभे** इत्यादेः गुरुत्यागे तात्पर्यम् ।। १८४ ।।

(५) **नन्दनः** । **बन्धुषु** मातृष्वसृपितृष्वसृबन्धुषु । अन्यगेहाना**मलाभे** भिक्षाऽलाभे गेहानामलाभे वा **पूर्वं पूर्वं वर्जयेत्** । अयमर्थः—अन्यगेहालाभे बन्धुषु भिक्षेत, तदलाभे ज्ञातिकुले, तदलाभे **गुरुकुल इति** । अत्र पूर्वार्धेन मुख्यकल्प उक्तः, उत्तरार्धेनापत्कल्प इति विवेकः ।। १८४ ।।

(६) **रामचन्द्रः** । **अन्यगृहाणां** अलाभे **पूर्वं विवर्जयेत्** ।। १८४ ।।

(७) **मणिरामः** । यतो भिक्षा न ग्राह्या तानाह **गुरोरिति** ।। १८४ ।।

(८) **गोविन्दराजः** । **गुरोरिति** । **गुरुगृहे न भिक्षेत** । तथा आत्मनः पितृमातृ-गृहेषु । यदि पुनरेतद्व्यतिरिक्तगृहेभ्यो न लभ्यते तदा **पूर्वं पूर्वं** परिहरेत् । प्रथमं बन्धुगृहे भिक्षेत । तदलाभे गुरुगृहे ।। १८४ ।।

**सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसम्भवे ।।**
**नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ।।१८५।।**

(१) **मेधातिथिः** । **पूर्वोक्तानां** वेदयज्ञैरहीनानाम**सम्भवे सर्वं ग्राम**मनपेक्ष-वर्णविभागं **विचरेत्** भ्राम्येत् जीवनार्थम् । केवल**मभिशस्तान्**कृतपातकत्वेन प्रसिद्धान् अदृष्टपातकानपि वर्जयित्वा । तथा च **गौतमः** (अ० २ सू० ३५) "सार्ववर्णिकं

भैक्ष्यचरणमभिशस्तपतितवर्जम् ।" **नियम्य वाचं** भिक्षावाक्यं वर्जयित्वा आ भैक्षलाभादन्यां वाचं नोच्चरेत् ।। १८५ ।।

(२) **सर्वज्ञनारायणः।** पूर्वोक्तानां देवयज्ञादीनां संपूर्णभिक्षादातृत्वासंभवे **नियम्य** वाग्यमपरां तदर्थभाषां, **प्रयतो**ऽशुच्याद्यस्पर्शी। **अभिशस्तानिति** पतितशूद्रयोरप्युपलक्षणम् ।। १८५ ।।

(३) **कुल्लूकः**। पूर्वं 'वेदयज्ञैरहीनानामि'त्यनेनोक्तानामसंभवे **सर्वं वा ग्राम**मुक्तगुणरहितमपि शुचिर्मौनी भिक्षेत्। महापातकाद्यभिशस्तांस्त्यजेत् ।। १८५ ।।

(४) **राघवानन्दः। पूर्वोक्तानां** वेदयज्ञैरहीनानां **असंभवः** स्वरूपतो द्रव्यतश्च। **अभिशस्तान्**महापातकित्वादिना संदिग्धान् ।। १८५ ।।

(५) **नन्दनः**। आपद्यप्य**भिशस्तानां** प्रतिषेधः कृतः पतितानां दण्डापूपिकया ।। १८५ ।।

(६) **रामचन्द्रः**। **पूर्वोक्तानामसम्भवे सर्वं ग्रामं** भिक्षार्थं **विचरेत्**। मौनपूर्वकं वर्जनमाह **अभिशस्तान्**पतितान्वर्जयेत् ।। १८५ ।।

(७) **मणिरामः**। वेदयज्ञैरहीनांश्चेन्न प्राप्नुयात् तदा कुतो भिक्षा ग्राह्येत्यत आह **सर्वं वेति।** वाचं **नियम्य प्रयतः भूत्वा अभिशस्तान्** महापातकाद्यभिशस्तान् ।। १८५ ।।

(८) **गोविन्दराजः। सर्वमिति**। बन्धुगृहादिभ्योऽप्यलाभे चातुर्वर्ण्यादिष्वाहरेत्। स जितेन्द्रियः सन् भिक्षावाक्यवर्जं मौनं **अभिशस्तान्** पुनः पातकित्वेन प्रसिद्धान् निश्चितपातकान् दण्डापूपिकया पतितांश्च **वर्जयेत्** ।। १८५ ।।

**दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।।**
**सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ।। १८६ ।।**

(१) **मेधातिथिः।** दूरग्रहणमपरिगृहीतदेशोपलक्षणार्थम्। ग्रामात्किल दूरमरण्यं, न च तत्र कस्यचित्परिग्रहः। अनुपलक्षणे हि दूरार्थे कियद्दूरमित्यनवस्थितः शास्त्रार्थः स्यात्। **आहृत्य** आनीय। **संनिदध्या**त्स्थापयेत्। **विहायसि** गृहस्योपरि। न हि निरालम्बनेऽन्तरिक्षे निधानं सम्भवति। **ताभिः सायंप्रातर्जुहुयात्**। आहरणं तु तात्कालिकमन्यदा वेच्छया। **विहायसि** निधानमदृष्टार्थमित्याहुः। अन्ये तु ब्रुवते सम्प्रत्यानीयमानं वृक्षाद्दारु आर्द्रं भवतीति, गृहस्योपरि अन्यस्य वा प्रकारादेः तन्निधातव्यम् ।। १८६ ।।

(२) **सर्वज्ञनारायणः**। **दूरात्** ग्राम्याशुचिशङ्काशून्याद्देशात्। **विहायसि** मठादौ ।। १८६ ।।

(३) **कुल्लूकः** । **दूराद्** वृक्षेभ्यः परिगृहीतवृक्षेभ्यः **समिध** आनीयाकाशे धारणाऽशक्तः पटलादौ स्थापयेत् । **ताभिश्च** समिद्भिः **सायंप्रातर**नले होमं कुर्यात् ॥ १८६ ॥

(४) **राघवानन्दः** । **दूराद्** वनादेः । **विहायसि** भूम्यतिरिक्तशुचिदेशे । **ताभिः** समिद्भिः ॥ १८६ ॥

(५) **नन्दनः** । नियमान्तरमाह **दूरादिति** । **दूराद्** विप्रकृष्टप्रदेशात् । रजस्वलादिस्पर्शो भूमिष्ठजन्तुसंक्रान्तिश्च मा भूदित्युक्तं **सन्निदध्याद्विहायसीति** । **विहायस्या**काशे **सन्निदध्यात्** रज्ज्वादिष्ववलम्बयेत् ॥ १८६ ॥

(६) **रामचन्द्रः** । **समिधः** दूरात् **आहृत्य** आनीय **विहायसि** आकाशे गृहादिके उच्चप्रदेशे मण्डपादौ **संनिदध्यात्** स्थापयेत् । 'पुंस्याकाशविहायसी'त्यमरः । **ताभिः** समिद्भिः **अग्निः सायं** संध्याकाले **प्रातः** प्रातःकाले **जुहुयात्** ॥ १८६ ॥

(७) **मणिरामः** । **दूरात्** । परिगृहीतवृक्षेभ्यः । आकाशे उच्चस्थाने ॥ १८६ ॥

(८) **गोविन्दराजः** । **दूरादाहृत्येति** । अरण्यात् **समिध आहृत्येति** गृह्यदर्शनात् । दूरस्य वा अपर्यवसितत्वात् अपरिगृहीताः समिध आनीय **विहायसि** आकाशे निधानासंभवात् गृहपटकादौ स्थापयेत् । **ताभिश्चानलस**ः सन् **सायं प्रातर**ग्निकार्यं कुर्यात् ॥ १८६ ॥

**अकृत्वा भैक्षचरणमसमिध्य च पावकम् ॥**
**अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १८७ ॥**

(१) **मेधातिथिः** । अग्नीन्धनभैक्षचरणे नैरन्तर्येण **सप्तरात्रं** सप्ताह**मकृत्वा** । **अनातुरः** अव्याधितः सन् **अवकीर्णिव्रतं** नाम प्रायश्चित्तमेकादशे (श्लो. ११८) वक्ष्यमाणस्वरूपं **चरे**त्कुर्यात् । दोषगुरुत्वख्यापनार्थं, न त्वेतदत्र प्रायश्चित्तमेव । स्मृत्यन्तरे ह्यत्राल्पमन्यत्प्रायश्चित्तमुक्तम्, 'आज्यहोमः सवितुर्वा रेतस्याभ्याम्' इति । इहापि च लिङ्गं—यदि प्रायश्चित्तमिदमभविष्यत्तदा स्त्रीगमनमिवावकीर्णिप्रायश्चित्तप्रकरणे निमित्तत्वेनापठिष्यत् । ये तु व्याचक्षते "सप्तरात्रमेतदुभयमवश्यकर्तव्यम् । अकरणात्तत्र दोषः । कृतसप्तरात्रस्य तु परतोऽक्रियायां न दोषः । तानि च सप्ताहानि प्राथम्यादुपनयनप्रभृति गृह्यन्ते"—तदेतदयुक्तम् 'आ समावर्तनात्कुर्यादिति' विरोधात्, उपरितनानन्तरश्लोकविरोधाच्च ॥ १८७ ॥

(२) **सर्वज्ञनारायणः** । भैक्षातिरिक्तानां नोपयोगः । समिदाधानाकरणेनेत्यर्थः । एतच्च उभयोः समुच्चितयोः सप्तरात्रमकरणे अवकीर्णिव्रतमेकादशे वक्ष्यमाणम् । अनातुर इत्यनापदुपलक्षणम् । आपदि तु रोगादावदोषः । अन्यतरातिक्रमैकाहाद्यतिक्रमयोस्तु गौतमोक्तः क्रमादाज्यहोमः सद्द्वयहोमश्च ॥१८७॥

(३) **कुल्लूकः** । भिक्षाहारः सायंप्रातः समिद्धोममरोगो नैरन्तर्येण सप्तरात्र-मकृत्वा लुप्तव्रतो भवति । ततश्चा**वकीर्णि**प्रायश्चित्तं कुर्यात् ।। १८७ ।।

(४) **राघवानन्दः** । उपदिष्टाकरणे दोषमाह **अकृत्वेति** । **असमिध्य** अप्रज्वाल्य होमार्थम् । **अवकीर्णिव्रतं** नैर्ऋतं गर्दभालम्भनम् ।। १८७ ।।

(५) **नन्दनः** । अथ भिक्षाचरणाग्निकार्ययोरवश्यकर्तव्यतां तदकरणे प्राय-श्चित्तोपदेशेन प्रकाशयति **अकृत्वेति** । उभयोः समुदितयोरकरणे प्रायश्चित्तमेतत् चकारेण समुच्चयावगमात् । **सप्तरात्रमिति** निमित्तयोर्नैमित्तिकस्य च कालोपदेशः स्मृत्यन्तरानुगुण्यात् । तथा च **गौतमः** 'अग्नीन्धनभैक्षचरणे सप्तरात्रमकृत्वाऽऽज्य-होम' इति । अस्मिन्नधिकारे **बृहस्पतिः** 'अवकीर्णिव्रतं कुर्यात्सप्तरात्रमसंशय-' मिति ।। १८७ ।।

(६) **रामचन्द्रः । पावकं असमिध्य** अग्निं अनुपास्य **भैक्षचरणं अकृत्वा** एकस्य गृहे भुक्त्वा **सप्तरात्र**पर्यंतं **अनातुरः** सन् सः **अवकीर्णी** भवेत् । 'अवकीर्णी क्षतव्रत' इत्यमरः । तदा प्रायः पवित्रतार्थं यदुक्तं व्रतं तच्चरेत् ।।१८७।।

(७) **मणिरामः । सप्तरात्रं** नैरन्तर्येण भिक्षाहारादिकमकृत्वा । आतुरस्य तु न दोषः ।। १८७ ।।

(८) **गोविन्दराजः । अकृत्वेति** । प्रायश्चित्तगुरुत्वात् भैक्षाग्निकार्ये समुच्चिते । कामकारेण सप्ताहानि प्रबन्धेन **अनातुरः** सन् **अहत्वा अवकीर्णी** प्रायश्चित्तं एकादशे वक्ष्यमाणं **चरेत्** । कथंचित् पुनः प्रत्येकव्यक्तिक्रमे **गौतमीयं** अग्नीन्धनभैक्षचरणे सप्तरात्रमकृता आज्यहोमं समिधो वा रेतस्याभ्या-मिति । **अनातुर** इत्यातुरस्य प्रायश्चित्तान्तरम् । नतु प्रायश्चित्ताभावः । एतावद्यतः प्रतीयते अनातुरस्येदं प्रायश्चित्तं न त्वातुरस्य व्यतिक्रमो नास्ति इति । वाह्यं (नहि) तत् अनातुरः स्वानि खानि न स्पृशेत् । इतिवन्नियमवाक्यगतं विशेषणं, येनातुरस्यानधिकार इति गम्येत । अपितु प्रायश्चित्तविशेषणं तस्मादातुरस्य प्राय-श्चित्तान्तरं भवत्येव । अस्यापि प्रायश्चित्तस्य प्रकर्षेणोत्कर्षो लाघवार्थः । तत्र हि क्रियमाणे ब्रह्मचारिग्रहणं कर्तव्यं स्यात् ।। १८७ ।।

**भैक्षेण वर्तयन्नित्यं नैकान्नादी भवेद्व्रती ।।**
**भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ।। १८८ ।।**

(१) **मेधातिथिः** । 'नच भैक्षं परपाकः स्यान्न भैक्षं प्रतिग्रहः । सोमपानसमं भैक्षं तस्माद्भैक्षेण वर्तयेत् ।। १ ।। भैक्षस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च । यांस्तस्य ग्रसते ग्रासान् ते तस्य क्रतुभिः समाः' ।।२।।

"ननु च भैक्षमहरहश्चरेदिति श्रुतमेवैतत्" ।

एवं हि भैक्षचर्या दृष्टार्था भवति । उक्तं च "निवेद्य गुरवेऽश्नीयात्" इति । न च तदशनं भैक्षसंस्कारः येन न वृत्त्यर्थः स्यात् ।

केचिदाहुः—"अनूद्यते **नैकान्नादी भवेद्व्रतीति** वक्तुम् ।"

एतदसत् । भैक्षशब्देनैवैकान्नादनस्य निषेधात् । भिक्षाणां समूहो भैक्षमुच्यते । ततः कुत एकान्नादनप्राप्तिः ? तस्य पित्र्येभ्योऽनुज्ञानार्थं सर्वमेतदनूद्यते । **भैक्षेण वर्तयेदा**त्मानं भैक्षभोजनेन पालयेत् । जीवितस्थितिं कुर्यान्नैकस्य सम्बन्धि अन्नमद्यान्नैक-भिक्षान्नं भुञ्जीत ।

न पुनरियमाशङ्का कर्तव्या "नैकस्वामिकं भुञ्जीत, अपि तु बहुस्वामिकम्, अविभक्तभ्रातृसम्बन्धि" । एकस्यान्नमेकं वाऽन्नमेकान्नं तदत्ति भुंक्ते **एकान्नादी । व्रती** ब्रह्मचारी । प्रकरणादेव लब्धः, श्लोकपूरणार्थो **व्रती**शब्दः । अत्रार्थवादः । **भैक्षेणेव** केवलेन व्रतिनो या वृत्तिः शरीरधारणमुपवासतुल्यफला सा वृत्तिः स्मर्यते ।। १८८ ।।

(२) **सर्वज्ञनारायणः । वर्तयेत्** जीवेत् । **नैकान्नादी** एकस्यान्नेनैकदिनक्षपण-कृतभैक्षेणेति । नित्यत्वेऽपि भैक्षस्य नित्योपवासफलहेतुरित्यर्थः । **प्रोषितस्य** प्रवासादा-गतस्य ।। १८८ ।।

(३) **कुल्लूकः** । ब्रह्मचारी **नैकान्नम**द्यात्किंतु बहुगृहाहृतभिक्षासमूहेन प्रत्यहं जीवेत् यस्माद्भिक्षासमूहेन ब्रह्मचारिणो **वृत्तिरुपवासतुल्या** मुनिभिः **स्मृता** ।।१८८ ।।

(४) **राघवानन्दः । नैकान्नादी** नैकमात्रस्यान्नं गृह्णीयात् । **उपवाससमा** इति परपाकरुचिर्न स्यात्'अनिन्द्यामन्त्रणादृत' इति यत्परपक्वान्नाशने पापं तन्न स्यात् 'संन्यासी ब्रह्मचारी च पक्वान्नस्वामिनावुभौ'इत्युक्तेः । स्तुतिरिति **मेधातिथिः** ।। १८८ ।।

(५) **नन्दनः** । एकान्नाशनं प्रतिषेधति **भैक्षेणेति** ।। १८८ ।।

(६) **रामचन्द्रः । भैक्ष्येणान्नेन नित्यं वर्तयेत् व्रती** ब्रह्मचारी **नैकान्नादी** भवेत् । एकस्यान्नं न भक्षयेदिति एकं चान्नं न भक्षयेत् इत्यर्थः । **व्रतिनः** ब्रह्मचारिणः **'वृत्तिः'** भैक्षेण भैक्षान्नेन **वृत्तिः** प्राणधृतिः' **उपवाससमा स्मृता** ।। १८८ ।।

[**रामचन्द्रः । न भैक्ष्यमिति** । 'परपाकरुचिर्न स्यात्' (१।११२) इति **याज्ञ-वल्क्यः** । **भैक्षं** भिक्षान्नं **परपाकः** न स्यात् । **भैक्ष्यं** भिक्षान्नं **प्रतिग्रहो न भवति** प्रतिग्रहस्तु निषेध्यः । **आगमशुद्धस्य** प्रतिग्रहशुद्धस्य **प्रोक्षितस्य हुतस्य** च हुतशेषस्य च भैक्षस्य **यान् ग्रासान् ग्रसते ते** ग्रासा **क्रतुभिः समा** भवन्ति ।। १–२ ।।]

(७) **मणिरामः । नैकान्नादी** एकस्यान्नमत्तीत्येकान्नादी तादृशो न भवे-दित्यर्थः ।। १८८ ।।

(८) **गोविन्दराजः। भैक्षेणेति**। ब्रह्मचारी **भैक्षेण** यावद्ब्रह्मचर्यं प्राणयात्रां कुर्यात्। **न त्वेक**संबन्धि **अन्न**मश्नीयात्। यस्मादस्य **भैक्षेण वृत्तिः उपवास**तुल्यफलेति। एतन्नियमफलाभिधानार्थं च भैक्षेण वर्तयेदित्युक्तसंकीर्तनम्। चानित्यत्वाशङ्का, प्रायश्चित्तस्योक्तत्वात् **न** भैक्षं परपरकः स्यात्, न च भैक्षं प्रतिग्रहः। 'सोमपानसमं भैक्षं तस्माद्भैक्षेण वर्तयेत्। भैक्षस्यागमशुद्धस्य प्रोक्षितस्य हुतस्य च। यस्तस्य ग्रसते ग्रासान् तत्तस्य क्रतुभिस्समाः' ॥ १८८ ॥

**व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत्॥**
**काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते ॥ १८९ ॥**

(१) **मेधातिथिः**। अयमपवादो निमित्तविशेषे भैक्षवृत्त्युपदेशस्य। **देवदैवत्ये** देवोद्देशेन ब्राह्मणभोजने क्रियमाणे, **पित्र्ये** च पितॄनुद्दिश्या**भ्यर्थितो**ऽध्येषितः, **काममे**कान्न**मश्नीयात्**। नतु स्वयं याचेत। तच्च **व्रतवद्** व्रताविरुद्धं मधुमांसवर्जितमित्यर्थः। **व्रतवदृषिवदिति** च शब्दद्वयेनैक एवार्थ उच्यते, न पुनर्ग्रामारण्ययोः कर्मभेदेन व्यवस्था। वृत्तानुरोधात्तु द्विरभिधानम्। ऋषिवैखानसस्तदशनाभ्यनुज्ञाने मांसमपि ब्रह्मचारिणोऽनुज्ञातं स्यात्। तस्य हि 'वैष्णवमप्युपभुञ्जीत' इति मांसाशनमप्यस्ति। देवा देवता यस्य तद् **देवदैवत्यम्**। तच्चाग्निहोत्रदर्शपूर्णमासादिषु कर्मसु ब्राह्मणभोजनमाम्नातम्, आग्रहायण्यादिषु चाम्नातं 'ब्राह्मणान्भोजयित्वा स्वस्त्ययनं वाचयेदिति'। तत्रेयमनुज्ञा।

अन्ये तु सप्तम्यादावादित्यादिदेवोद्देशेन यत्क्रियते ब्राह्मणभोजनं **तद्देवदैवत्यं** मन्यन्ते। तदसत्। न हि भुजेर्देवतासम्बन्धोऽस्ति, अयागसाधनत्वात्तस्य। न तूद्देश्यमात्रं देवता 'उपाध्यायाय गां ददाति', 'गृहं संमार्ष्टी'त्युपाध्याये ग्रहेऽपि प्रसङ्गात्। भुजेर्हि प्रत्यक्षो भोक्त्रा सम्बन्धः। आदित्यस्तु न कारकं, न चोद्देश्यो गृहवत्, न तदर्थं भोजनम्। द्वितीया हि भोक्त्रर्थतां ज्ञापयति, नादित्यार्थताम्। न चैतत्क्वचिन्नोदितम् 'आदित्याद्युद्देशेन ब्राह्मणान्भोजये'दिति। "समाचाराद्विधिः कल्प्यत" इति चेत्? न, तस्योपलभ्यमानमूलत्वात्। "अस्ति हि मूलं, बाह्याः स्मृतयः।" तत्र तर्हि ब्राह्मणभोजनेन देवताः प्रीणयेदिति शास्त्रार्थः। न चायमर्थः शक्यः कल्पयितुम्। न हि देवताप्रीतिप्रधानः शास्त्रार्थः, किं तर्हि? विध्यर्थप्रधानः। न चास्मिन्विध्यर्थ आदित्यादीनां देवताभिमतानां विषयद्वारकः सम्बन्धः, नाप्यधिकारद्वारकः। न हि भेदनादिवन्निमित्तम्। नापि पश्वादिवत्स्वसम्बन्धितया काम्यते। अभोग्यरूपत्वात्। अथ तद्गता तुष्टिः काम्यते। साऽप्यात्मसिद्धौ प्रमाणान्तरमपेक्षते। न च तदस्ति। न ह्यादित्यादितुष्टिः प्रत्यक्षादिसिद्धा पश्वादिवद्येन काम्येत परेष्टिविधिना युज्येत।

अथ तु 'मत्प्रभुरिति स्वाभिप्रेतेन फलेन योजयिष्यती'ति। एतदपि प्रमाणाभावादुपेक्षणीयम्। न चास्मिन्नर्थे विधिः प्रमाणम्। स हि ज्ञातस्यानुष्ठातृविशेषणस्य स्वसम्बन्धितया पुरुषं नियुङ्क्ते, न पुनः काम्यमानस्य सद्भावमवगमयति। प्रमाणान्तरावगतं हि काम्यमनुष्ठातृविशेषणम्——अनुष्ठानसाध्यमनुष्ठातृसम्बन्धीति विधिः प्रमाणमिति मीयते। "अथायं यागस्तस्य च स भोजनं प्रतिपत्तिः," भवतु, यदि शिष्टसमाचारः। भोजनं तावन्न देवतासम्बन्धि साक्षादिति न साध्यम्। यागव्यवहितस्तु सम्बन्धो न निवार्यते। न चात्र यागबुद्ध्या प्रवर्तते, किं तर्हि? ब्राह्मणेषु भोजितेषु देवता तुष्यतीति। अतो न देवता भोजनकारकं न कारकविशेषणम्। ततो न विषयत्वेन सम्बन्धः। उद्देश्यत्वमप्यादित्यादीनां नास्ति। भोजने हि स उद्दिश्यते यस्मै भोजनं दीयते। तच्च ब्राह्मणेभ्यः। न चोद्देश्यमात्रं देवता 'उपाध्यायाय गां ददाति, गृहं सम्मार्ष्टी'ति ग्रहोपाध्याययोरपि प्रसङ्गात्।

"ननु च पित्र्ये कथं ब्राह्मणभोजनम्? तत्रापि हि न पितरो देवताः स्युः। न च होमस्य पित्र्यत्वम्, देवतान्तरश्रवणात्। आदित्यादिप्रीतेरिव पितृप्रीतेः प्रमाणान्तरासिद्धत्वान्न विधेः सम्बन्धः साध्यतया।" अत्र वदन्ति। सिद्धा ह्यत्र पितृप्रीतिः। आत्मनामविनाशित्वात् पितरः सिद्धास्तेषां च शरीरसम्बन्धः क्रियते कर्मभ्यः। तद्भोजनं ह्यत्र प्रधानम्। तस्य हि फलं श्रुतम्——'भोजयन्पुष्कलं फलमाप्नोति।' तच्च फलं पितॄणां तस्य तृप्तिः स्यादिति। तृप्तिश्च प्रीतिमात्रम्, न मनुष्याणामिव भुजिक्रियाफलं सौहित्यलक्षणमुच्यते। काचित्पितॄणां प्रीतिः स्वकर्मवशतो यत्र तत्र जातानुत्पन्नानाम्। प्रीतिमात्रवचनोऽयं धातुः, सौहित्यं तु विशेषः। स प्रमाणान्तरावसेयः। न चात्रैतच्चोदनीयम्—"पुत्रः कर्ता, पितृषु कथं कर्तृगामिफलम्? न हीमानि कर्माणि वैदिकानि परस्य फलदानीति न्यायविदो वदन्ति।" यतः पितर एवात्राधिकारिणः कर्तारश्च। अपत्योत्पादनेनैव सर्वमेतत्पितृभिः कृतम्। एवमर्थमेवासावुत्पादितो "दृष्टादृष्टमुपकारं करिष्यतीति।" ततश्च यथा सर्वस्वारेऽभावादौत्तरकालिकेष्वङ्गेषु 'ब्राह्मणाः संस्थापयत मे यज्ञ'मिति प्रैष्य मृतस्य कर्तृत्वम्। एवमत्रापि द्रष्टव्यम्। एतावान्विशेषः। तत्राधिकारान्तरप्रयुक्ता जीविकार्थिनो भृतिपरिक्रीता ऋत्विजः 'कर्तारः'। इह तु तद्विधिप्रयुक्त एव पुत्रः। यथैवापत्योत्पत्तिविधिप्रयुक्तस्य पुत्रार्थेषु पितुः संस्कारेषु अधिकारोऽनुशासनपर्यन्तत्वात्तस्य विधेः, एवं पित्रर्थे श्राद्धादौ पुत्रस्य। तथैव जीविनः पितुः "वृद्धौ तु मातापितरौ" इत्यवश्यं कर्तव्यम्। एवं दिष्टं गतं तस्यापि। न चायं वैश्वानरवत्काम्योऽधिकारः "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियवान् न भवति" इति। एवमादिपुत्रफलार्थिनोऽधिकारः

पितुर्वैश्वानरे न चूडादिष्विवावश्यकः। इह तु 'पित्र्यमा निधनात्कार्यमिति' यावज्जीविकः ।

न कर्तुर्वैदिकं फलमित्येतदन्यथा परिष्क्रियते। यथैव वैश्वानरविशिष्टपुत्र-वत्तालक्षणं पितुरेव फलं, नाकर्तृगामिता फलस्य, एवमिहापि पुत्रस्यैव तत्फलं या पितुः प्रीतिः । उभयथा पितृकर्तृगामिता फलस्य, न विरुध्यते । अपत्योत्पादने-नैवैतादृशस्य फलस्येष्टत्वात् पितॄणामपि नाकामितफलापत्तिः। "यदि न श्राद्धे पितरो 'देवताः' कथं तर्हि पित्र्यमेतत्कर्मेति देवतातद्धितः ?"

उद्देश्यत्वसामान्यादिति वदामः। 'युष्मदुपकारार्थमिदं ब्राह्मणभोजन'मिति पितर उद्दिश्यन्ते। पिण्डपितृयज्ञे तु पितरो 'देवता' एव। न श्राद्धे पितॄणां देवतात्वं मन्यन्ते। यत्तु ब्राह्मणा भोज्यन्ते तद्यथाऽग्नौ होम आज्यपुरोडाशादीनाम-वदानस्य, तादृशमेतत्। तथा च ब्राह्मणाः पितृत्वमापद्यन्ते। अतोऽन्नपरिवेषणकाले पितर एवोद्देश्याः—'युष्मभ्यमिदं न मम'ेति ब्राह्मणास्त्वाहवनीयस्थानीयाः। एतावान्विशेषो यदाहवनीये हविः प्रक्षिप्यते, ब्राह्मणानां तु सन्निधाप्यते, ते तु स्वयमुपाददत इति। न च 'श्राद्धं न यागो, न तत्र देवतार्थः स्वाहाकारः,' स्विष्टकृदादिषु दर्शनात्। अतो यागोऽपि सन् श्राद्धकर्म पित्र्यर्थं भविष्यति। पितॄणां देवतात्वं फलभावित्वं न विरोत्स्यते। तृतीये किञ्चिदनुक्तमेव तत्सम्बद्धं वक्ष्यामः। तस्मान्नादित्यादयो ब्राह्मणभोजने देवता इति स्थितम्।

"ननु चाव्यापकमेतदपि लक्षणम्—यागे उद्देश्यः देवते"ति, अन्तरेणापि याग-सम्बन्धं देवताव्यवहारदर्शनात्—'देवतानां च पूजनम्' "दैवतान्यभिगच्छेदिति' न पूजा नाप्याभिमुख्येन गमनं पादविहारात्मकं देवताः प्रति सम्भवति।" नैष दोषः, यत्र देवताचोदना तत्रैतत्पूजाविधानं भविष्यति, वैश्वदेवदेवतास्वग्निहोत्रादि-सम्बन्धिनीषु वा।

"ननु चैवमपि नोपपद्यते। न हि देवतायाः पूज्यत्वं सम्भवति, स्वरूपहानि-प्रसङ्गात्। पूजाकर्मत्वे हि यागसम्प्रदानता न स्यात्। उक्तम् 'न क्रियान्तरस्य किञ्चिद्भवति' इति। शक्तिर्हि कारकं, सा च प्रतिक्रियं भिद्यते। कार्यावगम्य-त्वाच्च तस्या यावत्कार्यं भेदो न्याय्यः। अतो यत्सम्प्रदानं तत्सम्प्रदानमेव, न तस्य कर्मापत्तिः। कथं तर्हि 'पाचकाय देहि' पचेः कर्ता ददातेः सम्प्रदानम्? 'शरैः क्षताङ्गः प्रियया कटाक्षैर्निरीक्ष्यमाणो विवशो जगाम।' उक्तोऽत्र परिहारः शक्तिशक्तिमतोर्भेदस्यौपचारिकत्वात्सिद्धं 'व्रजति भुक्त्वेति'। तस्माद्यदि पूजा-विषयमेतत् न देवतालाभः अथ देवता आदित्यादयः, न पूजाविधिः। न हि

देवता सिद्धा यामुदिश्य पूजा विधीयते। न ह्यादित्यादीनां 'देवता' सामान्यशब्दः गोशब्दवच्छागलेयादीनाम्।"

अत्रोच्यते– सत्यं, नादित्यादयः स्वरूपतो 'देवताः'। सम्बन्धिशब्दोऽयम्। विधित एव देवतार्थोऽवगन्तव्यः–"यस्य हविश्चोद्यते सा तस्य देवता" इति। स एवाग्निराग्नेयादन्यत्र न देवतेत्युक्तम्। किंतु न पूजाविधिः पूज्यमानमन्तरेण सम्भवति। देवताश्च पूज्यत्वेन श्रुताः। तत्र यदि देवतार्थे मुख्येन पूजा सम्भवति तदा याग एव पूजा विज्ञेया। तस्य चारूपत्वादसति द्रव्यदेवताश्रवणे पूर्वाह्णकाल-विध्यर्थोऽयमनुवादो विज्ञेयः। अतः 'पूर्वाह्णे दैवतानि कर्तव्यानी'त्युक्तं भवति।

"किमुच्यते देवता न श्रूयते।" यावता न साक्षाद्देवताशब्दोऽस्ति। "नायं सामान्यवचनो देवताशब्दः। यासामन्यत्र देवतात्वं दृष्टं तासामेतत्पूजाविधानम्। तेनाग्निरादित्यो रुद्र इन्द्रो विष्णुः सरस्वतीत्येवमादयः पूज्याः। पूजार्थं च धूपदीपमाल्योपहारादीनां निवेदनम्। तत्राग्नेस्तावत्साक्षात्सम्बन्धः। आदित्यस्य दूरदेशवर्तित्वाच्छुचौ देशे तदुद्देशेन गन्धादिप्रक्षेपः। इन्द्रादीनां स्वरूपस्याप्रत्यक्षत्वा-दिन्द्रादिशब्दोद्देशेनैव तथा विधानम्। यद्यपि पूज्यमानप्रधाना पूजा, तथापि हि पूज्यमानानां कार्यान्तिरशेषभावे पूजैव कर्तव्यतया विज्ञायते। द्रव्यप्रधाने हि न विधिविषयत्वसम्भवः। "तानि द्वैधं गुणप्रधानभूतानि" इति (मी० सू० २।१।६) "यैस्तु द्रव्यं चिकीर्ष्यते" इति (२।१।७)।" न्याय्यं तु स्तुतिशस्त्रादिवत्। यथा न स्तुतिः स्तुत्यर्था, एवमियमपि पूजा न पूज्यार्था। स्तौतिशंसत्योर्निर्देशो नास्तीति चेत्? अत्रोक्तम्—द्वितीया, सक्तुषु दर्शनात्।

एवं 'मृदं गां दैवतं प्रदक्षिणानि कुर्वीतेति' दक्षिणाचारता विधीयते। दक्षिणेन दैवानि कर्माणि कर्तव्यानि। न हि मृदादिवद्देवताया दक्षिणेन मार्गेण स्थानममूर्तत्वात् युज्यते। एवं "दैवतान्यभिगच्छेदि"ति; पादविहारव्यापारेण देवता-समीपप्राप्त्यसम्भवाद्गमेश्च ज्ञानार्थत्वादभिगमनं स्मरणात्कि विशिष्यते? देवता अभिगच्छेत्, कर्मकाले मनसा ध्यायेत् चित्तव्याक्षेपतामाकुलताख्यां परिहरेदित्यर्थः। तथा चोपलभ्य मानमूलैवेयं स्मृतिर्भवति। 'यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति'। "ननु चैतदप्युद्देश्यत्वान्यथानुपपत्तेः प्राप्तमेव।" सव्याक्षेपस्याकुलस्य च सम्भवाददोषः।

एवं 'देवस्वं' 'देवपशवो' 'देवद्रव्यमि'त्यादयो व्यवहारास्तादर्थ्येनोपकल्पितेषु पश्वादिषु द्रष्टव्याः। दण्डाधिकारे तु प्रतिकृतिविषयमेव देवताव्यवहारमिच्छन्ति। अन्यथा व्यवस्थाभङ्गः स्यात्। कल्पितदेवतारूपाणां प्रतिकृतीनां कल्पितेनैव स्वस्वामिभावेन यत्सम्बन्धि तदेव "देवब्राह्मणराज्ञां तु द्रव्यं विज्ञेयमुत्तमम्"

इत्यादिषु 'देवद्रव्यम्'। न हि देवतानाम् स्वस्वामिभावोऽस्ति, मुख्यार्थासम्भवाद्गौण एवार्थो ग्राह्यः।

"कः पुनरत्र गौणोऽर्थः? सर्वत्र हि साधारणगुणयोगाद्गौणार्थावगतिः।" 'अग्निर्माणवक' इत्यादिषु शुक्ले माणवके तद्गुणदर्शनात्। ते च गुणाः प्रत्यक्षाद्यवसेयाः। इह तु देवतार्थस्य कार्यावगम्यत्वात् कार्यतः स्वरूपविशेषानवगमात् कुतः प्रतिकृतिषु साधारणगुणावसायः। अत्रोच्यते। मन्त्रार्थवादेषु तथाविधरूपश्रवणात्तेषां च गुणवादेन व्याख्यानम्। तन्मूलमपश्यन्तो यथाश्रुतार्थग्राहिणस्ताद्रूप्यमिन्द्रादिषु प्रतिपद्यमानाः प्रतिकृतुषु सादृश्यं पश्यन्तीति युक्तैव गौणता।

ये तु श्राद्ध एव वैश्वदेवब्राह्मणभोजनं **देवदैवत्य**माचक्षते, तेषां पित्र्यङ्गत्वात् तस्य पित्र्यग्रहणेन गृहीतत्वादनर्थकं पुनर्वचनम्। सामान्यशब्दत्वाच्च कुतो विशेषावगतिः? साहचर्यादिति चेत्—यदि न पित्र्यशब्देन ग्रहणं भवेत्। गोबलीवर्दन्यायोऽप्यसति विषयभेदे भवति ।। १८९ ।।

(२) **सर्वज्ञनारायणः।** **व्रतं** मधुमांसाद्यभक्षणनियमस्तद्युक्त**मृषिवत्** वानप्रस्थवदिति मुन्यन्नाशनमभिप्रैति। **देवदैवत्ये** विश्वेदेवता यत्र तत्र पित्र्ये वा अत्यन्ताभ्**यर्थनयो**परुद्धो**ऽश्नीयात्** अकामानुमतौ **कामं** अत एवोक्तम्। **व्रतमस्य न लुप्यते** न प्रत्यावर्तते। प्रत्यवायस्तु स्यादेव तदर्थं प्राणायामादि कुर्यात्। पित्र्यस्य समभिव्याहारेण दैवकर्मप्रतीतिरितरदैवव्यवच्छेदः। अथ पित्र्ये कर्मणीत्यन्वयः। अथेति च पित्र्यकर्मणो दैवापेक्षया विशेषद्योतनार्थम्। तेन दैविकान्नभोजनात् पित्र्यान्नभोजनस्याधिकं पापहेतुता सूच्यते। देवदैवत्यपदसमभिव्याहाराच्च वैश्वदेविकश्राद्धाशने व्रतलोप एव। एतदपि निरन्तरं सप्तरात्रं क्रियमाणं **गौतमो**क्तप्रायश्चित्तेनैव शोध्यते ।।१८९।।

(३) **कुल्लूकः**। पूर्वनिषिद्धस्यैकान्नभोजनस्यायं प्रतिप्रसवः। **देवदैवत्ये** कर्मणि देवतोद्देशेना**भ्यर्थितो** ब्रह्मचारी**व्रतवदिति** ब्रह्मचारी**व्रतवदिति** व्रतविरुद्धमधुमांसवर्जितमेकस्याप्यन्नं यथेप्सितं भुञ्जीत। **अथ** पित्रुद्देशेनाभ्यर्थितो भवति **तदर्षिर्य**तिः सम्यग्दर्शनसंपन्नत्वात्स इव मधुमांसादि**वर्जित**मेकस्याप्यन्नं यथेप्सितं **भुञ्जी**तेति स एवार्थो वैदग्ध्येनोक्तः, तथापि भैक्षवृत्तिनियमरूपं **व्रतमस्य लुप्तं न भवति। याज्ञवल्क्योऽपि** (१।३२) श्राद्धेभ्यर्थितस्यैकान्नभोजनमाह "ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि। ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडय"न्निति। **विश्वरूपेण** तु व्रतमस्य न लुप्यत इति पश्यता ब्रह्मचारिणो मांसभक्षणमनेन मनुवचनेन विधीयत इति व्याख्यातम् ।। १८९ ।।

(४) **राघवानन्दः**। **देवदैवत्ये** आग्रयण्यादिषु तत्र ब्राह्मणं भोजयित्वा स्वस्त्ययनं वाचयीतेत्युक्तेरिति **मेधातिथि**स्तन्न, कर्माङ्गत्वात्तस्य किंतु **मार्कण्डेयो**क्तविष्णवादिश्राद्धे तत्र श्राद्धभेदाः—"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् । पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्धयर्थमष्टकम् ।। कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृत"मिति **विश्वामित्रो**क्तः ।। नैमित्तिकमेकोद्दिष्टम् । तत्रैकान्नमद्यात् **व्रतवन्मधु**मांसवर्जम**श्नीयात्** तथा पित्र्ये **ऋषिवदृषेः** सम्यग्दर्शनसंपन्नत्वेऽपि मधुमांसयोर्वर्जनात् । अथवा **ऋषिमुनिः** संन्यासीति तद्वदास्वादनासक्त औषधवदशनमाचरेदिति संन्यासप्रकरणश्रुतेः । एवं देवाद्यर्थेऽभ्यर्थितो **व्रतलोपनं न** प्राप्नोतीत्याह **काममिति** । तदुक्तं **याज्ञवल्क्येन** (१।३२) "ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि । ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन्नि"ति ।। १८९ ।।

(५) **नन्दनः**। प्रतिषिद्धमेकान्नाशनं प्रति प्रस्तौति **व्रत इति**। मधुमांसादिवर्जनमभिप्रेतम् । **ऋषिवदि**त्यल्पवन्याशनम् ।। १८९ ।।

(६) **रामचन्द्रः**। **देवदैवत्ये** कर्मणि विश्वेदेवकर्मणि **अभ्यर्थितः** 'सन्निमन्त्रितः' स **कामं अश्नीयात्** भोजनं कुर्यात् । **व्रतिवत्** ब्रह्मचारीव्रतं **पित्र्ये** कर्मणि **ऋषिवत्** अश्नीयात् । **अस्य** ब्रह्मचारिणः **व्रतं न लुप्यते** लोपं न यातीत्यर्थः ।। १८९ ।।

(७) **मणिरामः** । क्वचिदेकान्नभोजनमाह **व्रतवदिति**। **देवदैवत्ये कर्मणि** देवतोद्देशेन प्रार्थितो ब्रह्मचारी **व्रतवत्** व्रतविरुद्धमधुमांसादिवर्जितं एकस्याप्यन्नं **कामं** यथेच्छं भुञ्जीत । **अथ पित्र्योद्देशे**नाभ्यर्चितः तदा **ऋषिवत्** यतिवत् मधुमांसादिवर्जमेव ।। १८९ ।।

(८) **गोविन्दराजः**। **व्रतवदिति**। दैवे कर्मणि व्रतार्थं मध्वादिवर्जितम् । श्राद्धे च **ऋषिवत्** अरण्यनीवारादि न ग्राम्यं, **प्रार्थितः** सन् (अ) **कामं** इच्छते एकान्नं **समश्नीयात्** । नास्यैवं कुर्वतो व्रतलोपो भवति । ऋषिशब्दश्च वसिष्ठादौ प्रसिद्धप्रयोगो न वैखानसे येन तदर्हान्नाभ्यनुज्ञाने चैकमप्युपभुंजीतेति मांसाशनाशङ्का स्यात् । श्राद्धभोजनस्याचाराधिकदुष्टत्वादृषिवदिति नियमातिशयमाह ।। १८९ ।।

**ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।।**
**राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ।।१९०।।**

(१) **मेधातिथिः** । यदेतदेकान्नभोजनकर्मादिष्टमेतद्ब्राह्मणस्यैव **मनीषिभि**र्विद्वद्भिर्वेदादुपलभ्यो**पदिष्टम्**, क्षत्रियवैश्ययोस्तु नैतदिच्छन्ति । न कदाचित्तयोरन्नभैक्षभोजनम् । "ननु च श्राद्धभोजने ब्राह्मणानामेवाधिकारः । 'ये तत्र भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः । अर्हत्तमाय विप्राय' इति वचनाद्ब्राह्मणस्यैव प्रतिग्रहाधिकारः । तत्र कुतोऽयं प्रतिषेधो राजन्यवैश्ययोरिति ? । प्रतिप्रसवश्चायं

नापूर्वविधिः। प्राप्तिसव्यपेक्षाश्च प्रतिषेधा भवन्ति।" उच्यते—भुक्तवतां ब्राह्मणानामेव शिष्टस्यान्नस्य प्रतिपत्तिराम्नाता—'ज्ञातिप्रायं प्रकल्पयेत्' इति। न च तत्र जात्यपेक्षा, यस्य ज्ञातिः स तेन भोजयितव्यः। न च तत्र क्षत्रियादयः प्रतिग्रहीतृतया सम्बध्यन्ते, अपि तु ज्ञातयः। अतोऽस्याः प्राप्तेः प्रतिषेधः ॥१९०॥

(२) **सर्वज्ञनारायणः। एतत्कर्म** श्राद्धान्नाशनम्। केचित्त्वेतत्पदेनैकान्नाशनमात्रपरामर्श इत्याहुः ॥१९०॥

(३) **कुल्लूकः**। ब्राह्मणक्षत्रियविशां त्रयाणामेव ब्रह्मचारिणां भैक्षाचरणविधानाद्व्रतवदित्यनेन तदपवादरूपमेकान्नभोजनमुपदिष्टम्। क्षत्रियवैश्ययोरपि पुनरुक्तेन पर्युदस्यते। तदेकान्नभोजनरूपं **कर्म तद्ब्राह्मणस्यैव** वेदार्थविद्भिर्विहितम्। क्षत्रियवैश्ययोः पुनर्न **चैतत्कर्मेति** ब्रूते ॥१९०॥

(४) **राघवानन्दः। एतत्कर्म** निमन्त्रितभोजनं **राजन्यवैश्ययोर्ब्र**ह्मचारित्वेऽपि श्राद्धादिषु नाश्नीयादित्याहुः **राजन्येति** ॥१९०॥

(५) **नन्दनः**। ब्रह्मचारिप्रकरणविषयत्वात्क्षत्रियवैश्ययोरयं विधिः प्राप्तः प्रतिषिध्यते **ब्राह्मणस्यैवेति। कर्म** पूर्वश्लोकोक्तम् ॥१९०॥

(६) **रामचन्द्रः। एतत्कर्म** दैवपितृरूपं कर्म निमन्त्रणं **ब्राह्मणस्यैव मनीषिभिः उपदिष्टम्। एवं राजन्यवैश्ययोर्व्र**तिनोः **एतद्दै**वकर्मणि पित्र्ये निमन्त्रणं **न विधीयते** ॥१९०॥

(७) **मणिरामः**। ब्राह्मणादीनां त्रयाणां भैक्षाचरणविधानात् इदमेकान्नभोजनमपि त्रयाणां भविष्यतीत्याशङ्कां निवारयति **ब्राह्मणस्यैवेति** ॥१९०॥

(८) **गोविन्दराजः**। **ब्राह्मणस्येति**। **एतत्** दैवपित्र्यैकान्नभोजनाख्यं कर्म **ब्राह्मणस्यैव** मन्वादिभिः स्मृतम्। क्षत्रियवैश्ययोः पुनः **नैतत्कर्म** ब्रुवते भैक्षस्य प्रतिग्रहप्रकारत्वेऽपि। ब्रह्मचारित्वं च प्रकरणात् क्षत्रियवैश्ययोरपि। ब्रह्मचारिणो [ऽ] भैक्ष्यभोजनाभ्यनुज्ञाने सति तदपवादैकान्नभोजनेऽपि तयोरपि प्रस्तुतत्वात् प्रतिग्रहस्य च ब्रह्मचारिव्यतिरिक्तक्षत्रियविषये चरितार्थत्वात् प्राप्तौ सत्यामेवं प्रतिषेधः ॥१९०॥

**चोदितो गुरुणा नित्यमप्रचोदित एव वा ॥**
**कुर्यादध्ययने योगमाचार्यस्य हितेषु च ॥ १९१ ॥**

(१) **मेधातिथिः। नोदितो गुरुणा**ऽनियुक्तोऽपि **कुर्यादध्ययने योगं** यत्नम्। "ननु चाहूतोऽधीयीत इत्युक्तम्। कथमप्रणोदितस्य योग उच्यते?" गृहीतवेदैकदेशस्य

परिशेषकगुणार्थमेतदुच्यते। न तत्राचार्यनियोगोऽपेक्षितव्यः। एवमाचार्याय हितं यदुदकुम्भाहरणादि श्रान्तसंवाहनादि तदप्यनियुक्तेन कर्तव्यम् ।। १९१ ।।

(२) **सर्वज्ञनारायणः। योगमुद्यमम्**। यत्नमिति क्वचित्पाठः। **अचोदितोऽपि** गृहीतवेदभागाभ्यासं कर्तुं स्वत एव शक्नोतीति न तत्र गुर्वपेक्षा ।। १९१ ।।

(३) **कुल्लूकः**। आचार्येण प्रेरितो न प्रेरितो वा स्वयमेव प्रत्यह**मध्ययने गुरुहितेषु चोद्योगं कुर्यात्** ।। १९१ ।।

(४) **राघवानन्दः**। किंच **चोदित** इति। **कुर्यात् योगं** उपायम् ।। १९१ ।।

(५) **नन्दनः**। **योगमभ्यासम्** ।। १९१ ।।

(७) **मणिरामः**। **गुरुणा चोदितः** प्रेरितः ।। १९१ ।।

(८) **गोविन्दराजः**। **नोदित** इति। **गुरुणा** नियुक्तः अनियुक्तो वा गृहीताध्ययनभागाभ्यासयत्नं आचार्यपरिचर्यायत्नं यावद्ब्रह्मचर्यं **कुर्यात्** ।।१९१ ।।

**शरीरं चैव वाचं च बुद्धीन्द्रियमनांसि च ।।**
**नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ।। १९२ ।।**

(१) **मेधातिथिः**। कुतश्चिदागतो गुरोर्मुखं **वीक्षमाणस्तिष्ठे**न्नोपविशेत्। **नियम्य च शरीरम्**। पादहस्तचालनहसितानि न कुर्यात्, न किञ्चिद्वदेत्, अनुपयोगि।

**बुद्धीन्द्रियाणि** नियच्छेत्। यदाश्चर्यरूपं किञ्चिद् गुरुसकाशे न तत्पुनःपुनर्भावयेत्। श्रोत्रादीन्यपि। चक्षुर्नियमस्तु गुरुवक्त्रप्रेक्षणादेव सिद्धः। मनश्च नियच्छेच्छास्त्रीयान्विकल्पान्गृहकृशलाद्यारम्भान्मनसा वर्जयेत्। उक्तस्तु 'संयमे यत्नम्' इति सक्तिप्रतिषेधार्थः स प्रतिषेधः। गुरुसन्निधौ स्वल्पेऽपीन्द्रियाणामप्रतिषिद्धेऽपि विषये प्रसरो न देयः। **प्राञ्जलि**रूर्ध्वकृतकरकपोतः ।। १९२ ।।

(२) **सर्वज्ञनारायणः**। **शरीरनियमो** वृथा चेष्टा **बुद्धीन्द्रियाणि** पञ्च **मनश्च नियम्य** स्वस्वविषयव्यावृत्तानि कृत्वा गुरुसमीपावस्थाने सर्वदैतद्विधेयं विशेषतः स्वाध्यायकाले ।। १९२ ।।

(३) **कुल्लूकः**। देह**वाग्बुद्धीन्द्रियमनांसि नियम्य** कृताञ्जलि**र्गुरुमुखं** प**श्यं-स्तिष्ठे**न्नोपविशेत् ।। १९२ ।।

(४) **राघवानन्दः**। किंच **शरीरमिति**। प्राप्ते गुरौ तथाभूत**स्तिष्ठन् मुखं** निरीक्षमाण इत्यध्ययनकाल इति शेषः ।। १९२ ।।

(५) **नन्दनः**। **बुद्धि**रध्यवसायात्मिका, **मनः** संशयात्मकम् ।। १९२ ।।

(७) **मणिरामः** । गुरोराज्ञां विना गुरुसमीपे नोपविशेदित्याह द्वाभ्याम् ॥ १९२ ॥

(८) **गोविन्दराजः** । **शरीरमिति** । देहवाक्चक्षुरादि**बुद्धीन्द्रियमनांसि नियम**बद्धाञ्जलिः सन् **गुरोर्मुखं वीक्षमाणस्तिष्ठेत्** ॥ १९२ ॥

**नित्यमुद्धृतपाणिः स्यात्साध्वाचारः सुसंवृतः ॥**
**आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १९३ ॥**

(१) **मेधातिथिः** । न केवलं सूत्रकात्पाणिरुद्धर्तव्योऽपितु वाससोऽपि । **नित्यग्रहणं**–न तिष्ठत एवायं पाण्युद्धारः, नाप्यध्ययनलवेलायाम्, किं तर्हि ? ततोऽन्यत्रापि । **साध्वाचारः** साधुः अनिन्द्यः आचारो वाग्व्यवहारादिः कार्यः । अश्लीलादिभाषणमसन्निधानेऽपि गुरोर्नित्यग्रहणान्न कर्तव्यम् । **सुसंवृतः** वाङ्मनश्च-क्षुर्भिः नियतात्मा । स्वल्पोऽपि यो दोषस्तं परिहरेत् । अनावृतो लोक उच्यते यो यथाकामी; तद्विपरीतः **सुसंवृतः** ।

अन्ये तु मन्यन्ते–वस्त्रेणाच्छादितशरीरो गुरुसन्निधौ भवेत् नोत्तरीयमव-तारयेत् । एवं तिष्ठेत् । यदा तु गुरुणा **आस्यतामित्युक्तः**–एतेन शब्देन भ्रूविक्षे-पादिना वा–विधेः प्रतिपादनार्थत्वात्, प्रतिपादनं च न शब्दव्यापार एव । तदा **आसीत** उपविशेत् । **अभिमुखं** सम्मुखम् ॥ १९३ ॥

(२) **सर्वज्ञनारायणः** । **उद्धृतपाणिः** उत्तरीयवहिरुपरिस्थदक्षिणवाहुः **साध्वाचारो** गुर्वनुगमनादिविशिष्टाचारकारी **सुसंयतो**ऽचपलचित्त **उक्तो** गुरुणा **अभिमुखं** दर्शनविषये ॥ १९३ ॥

(३) **कुल्लूकः** । सततमुत्तरीयाद्बहिष्कृतदक्षिणवाहुः **शोभनाचारो** वस्त्रावृत-देह **आस्यतामिति** गुरुणोक्तः **सन् गुरोरभिमुखं** यथा भवति तथाऽऽ**सीत** ॥ १९३ ॥

(४) **राघवानन्दः** । किंच **नित्यमिति** । **उद्धृतपाणिः** वस्त्रादिभ्यो विकासितदक्षिणपाणिः **सुसंवृतः** वस्त्रावृतदेहः **प्रोक्तो** गुरुणेति शेषः ॥ १९३ ॥

(५) **नन्दनः** । नित्यमाश्रमान्तरेऽप्युद्धृत**पाणिः स्यात्** वस्त्रादिभिराच्छा-दितदक्षिणपाणिः स्यात् ॥ १९३ ॥

(६) **रामचन्द्रः** । **नित्यं उद्धृतपाणिः स्यात्** पठनसमये उद्धृतपाणिः स्यात् **साध्वाचारः** साधु यथा स्यात्तथा आचारवान् भवेत् **सुसंयतः** यतचित्तः सन् व्रतमपीडयन्नित्यर्थः । **आस्यतां** उपविश्यतामिति गुरुणा चोदितः **सन् गुरोर-भिमुखं आसीत** उपविशेदित्यर्थः ॥ १९३ ॥

(७) **मणिरामः। उद्धृतपाणिः** वस्त्राद्बहिष्कृतदक्षिणबाहुः **आस्यतामिति** चोक्तः गुरुणेति शेषः ।। १९३ ।।

(८) **गोविन्दराजः। नित्यमिति** । यावज्जीवं गुरुसन्निधौ वसेत् **उद्धृत**बाहुः सदाचारयुक्तोऽनलसः स्यात् । गुरुणा उपविश्यतामिति **चोक्तः सन् गुरोः** सम्मुखमुपविशेत् ।। १९३ ।।

**हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ।।**
**उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ।।१९४।।**

(१) **मेधातिथिः। हीनं** न्यूनं **अन्नं** भुञ्जीत **गुरुसन्निधौ**। न्यूनता च परिमाणतः क्वचित्क्वचित्संस्कारतः । यदि संस्कृतमाज्यं दधिक्षीरादिव्यञ्जनं भिक्षातो लब्धं स्यात्तदा, यदि गुरुणा तादृशमन्नं न भुक्तं स्यादेककाले च गुरुणा सह भोजने, यदि गुरोस्तादृशमन्नं गृहे न सिद्धं स्यात्, तदा तत्तेन नाशितव्यम् । अथ गुरोरपि तादृशमन्नं स्यात्तदाऽपचयः कर्तव्यः । **वस्त्रं** यदि गुरोरौर्णं स्यात्तदा न कार्पासादि शिष्येण प्रावरितव्यम् । **वेष** आभरणमण्डनादिः। सोऽपि हीनः । **सर्वदा** ब्रह्मचर्यात्परेणापि । अत एव वेषग्रहणम् । न च ब्रह्मचारिणो मण्डनमिष्यते । **उत्तिष्ठेत् प्रथमं चास्य** शय्याया रात्र्युपरमे, आसनाद्वा उत्थानावसरं बुद्ध्वा, **प्रथमं** पूर्वं गुरो**रुत्तिष्ठेत्**। **चरमं** पश्चात्स्वापकाले सुप्ते गुरौ **संविशे**च्छय्यां समाश्रयेदासने चोपविशेत् ।।१९४।।

(२) **सर्वज्ञनारायणः। हीनमपकृष्टं** गुरुभोग्यान्नवस्त्रः गुरुवेषेभ्यः स्वस्य वस्त्रादेर्हीनत्वम् । **उत्तिष्ठेत्** शयनात् । **संविशेत्** शयीत ।।१९४।।

(३) **कुल्लूकः। सर्वदा** गुरुसमीपे गुर्वपेक्षया त्वपकृष्टान्नवस्त्रप्रसाधनो भवेत्। गुरोश्च **प्रथमं** रात्रिशेषे शयना**दुत्तिष्ठे**त्प्रदोषे च गुरौ सुप्ते पश्चाच्छयीत ।। १९४ ।।

(४) **राघवानन्दः। हीनान्नवस्त्रवेषः** अपकृष्टान्नादिर्गुरुतः **प्रथमं** गुरूत्थानात्पूर्वं **चरमं** गुरुसंवेशनादुत्तरं **संविशेत्** शयीत ।। १९४ ।।

(५) **नन्दनः**। सर्वदा आश्रमान्तरेऽपि सन्निधाविति विशेषणादसन्निधावदोषः ।। १९४ ।।

(६) **रामचन्द्रः। सर्वदा गुरुसंनिधौ हीनान्नवस्त्रवेषः** स्यात् गुरोः स्वरूपात् हीनः अन्नवस्त्रवेषो यस्य सः हीनान्नवस्त्रवेषः, **अस्य** गुरोः प्रबोधनात्पूर्वं **उत्तिष्ठेत् चरमं** तस्मात् **संविशेत्** सुप्यात् ।। १९४ ।।

(७) **मणिरामः। हीनान्नवस्त्रवेषः** गुर्वपेक्षया। **उत्तिष्ठेत्** रात्रिशेषे शयनादुत्तिष्ठेत्। **संविशेत्** गुरौ सुप्ते पश्चाच्छयीत ।। १९४ ।।

(८) **गोविन्दराजः। हीनान्नवस्त्रवेष इति।** गुर्वपेक्षया संस्कारपरिमाणादिना न्यूनान्नवस्त्रालङ्कारो यावज्जीवं **गुरोः सन्निधाने स्यात्।** शयनाच्च गुरूत्थानात् **प्रागुत्तिष्ठेत्।** तत्स्वप्नानन्तरं शयीत ॥१९४॥

**प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ॥**
**नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥**

(१) **मेधातिथिः। प्रतिश्रवणमा**हूयमानस्य कार्ये नियुज्यमानस्य गुरुसम्बन्धिवचनाकर्णनम्। **सम्भाषा** गुरुणा सहोक्तिप्रत्युक्तिकरणम्। ते **प्रतिश्रवणसम्भाषे। शयानः** स्वे स्रस्तरे निक्षिप्तगात्रः। **न समाचरेन्न** कुर्यात्। **नासीन** आसने चोपविष्टः, **न भुञ्जानः। न तिष्ठन्नेक**स्मिन्नेव देशेऽविचलन्नूर्ध्वं स्थितः। न **पराङ्मुखः** यस्यां दिशि गुरुर्दृश्यते ततः परावृत्य स्थितिर्न कुर्यात् ॥ १९५ ॥

(२) **सर्वज्ञनारायणः। प्रतिश्रवण**माज्ञास्वीकारः ॥ १९५ ॥

(३) **कुल्लूकः। प्रतिश्रवण**माज्ञाङ्गीकरणं **संभाषणं** च गुरौ शय्यायां सुप्त आसनोपविष्टो **भुञ्जानस्तिष्ठन्विमुखश्च न** कुर्यात् ॥ १९५ ॥

(४) **राघवानन्दः। प्रतिश्रवणसंभाषे** आज्ञाङ्गीकरणसंभाषणे **नासीनः** पीठादिषु न **तिष्ठन्** दूरत इति शेषः, न **पराङ्मुखः** गुरुं पृष्ठतः कृत्वा ॥ १९५ ॥

(५) **नन्दनः। प्रतिश्रवण**मात्मानं प्रति गुरुणा प्रयुज्यमानस्य वाक्यस्याश्रवणम्। **प्रतिसंभाषा** गुरुं प्रति वाक्यम् ॥ १९५ ॥

(६) **रामचन्द्रः।** शयानः शिष्यः **प्रतिश्रवणसंभाषे न समाचरेत्** प्रतिश्रवणं च संभाषा च प्रतिश्रवणसंभाषे **प्रतिश्रवणं** विनयं **संभाषा** वचनं **न समाचरेत्** ॥ १९५ ॥

(७) **मणिरामः। प्रतिश्रवणं** आज्ञाङ्गीकरणम् ॥ १९५ ॥

(८) **गोविन्दराजः। प्रतिश्रवणसंभाषे इति।** आज्ञाङ्गीकरणकार्यार्थिसंभाषणे शयितः उपविष्टः अश्नन्नुत्थितः अनभिमुखो न कुर्यात् ॥ १९५ ॥

**आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ॥**
**प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥**

(१) **मेधातिथिः।** कथं तर्हि ? आसीनो यदाऽऽज्ञां ददाति तदा **स्थित** आसनादुत्थाय प्रतिश्रवणसम्भाषे **कुर्यात्। अभिगच्छंस्तु तिष्ठतः।** तिष्ठन्गुरुर्यदाऽऽदिशति तदाऽभिगच्छंस्तदभिमुखं कतिचित्पदानि गत्वा। **आव्रजत** आगच्छत **प्रत्युद्गम्या**भिमुखमेव गत्वा। प्रतिराभिमुख्ये। **धावतो** वेगेन गच्छतः **पश्चाद्धावन्** ॥ १९६ ॥

(२) **सर्वज्ञनारायणः**। यथा समाचरेत्तदाह **आसीनस्येति। अभिगच्छन्** संमुखमागच्छन् ।। १९६ ।।

(३) **कुल्लूकः।** कथं तर्हि कुर्यात्तदाह **आसीनस्येति**। आसनोपविष्टस्य गुरोराज्ञां ददतः स्वयमासनादुत्थितस्**तिष्ठतो** गुरोरादिशतस्तदभिमुखं कतिचित्पदानि गत्वा यदा गुरुरागच्छति तदाप्यभिमुखं गत्वा, यदा †तु गुरुर्धावन्नादिशति तदा तस्य **पश्चाद्धावन्**प्रतिश्रवणसंभाषे कुर्यात् ।। १९६ ।।

(४) **राघवानन्दः**। **आसीनो** यदा जातस्तदा **स्थित** आसनादुत्थितः **अभिगच्छन्** कतिचित्पदानि **प्रत्युद्गम्य** आसनादेरुत्थितः तत्तत्क्रियां कुर्वन् प्रतिश्रवणसंभाषणे कुर्यात् गुरोरित्यन्वयः ।। १९६ ।।

(५) **नन्दनः।** प्रतिश्रवणसंभाषे कथं कुर्यादित्यपेक्षायामाह **आसीनस्येति। कुर्यात्** प्रतिश्रवणसंभाषे इत्येव। **अभिगच्छंस्तु** गच्छत इति पाठः ।। १९६ ।।

(६) **रामचन्द्रः। आसीनस्य** गुरोः स्थितः शिष्यः अभिवादं कुर्यात् **तिष्ठतः** गुरोः **अभिगच्छन्** सम्मुखः सन्नमस्कुर्यात्। **आव्रजतः** आगच्छतः **प्रत्युद्गम्य** नमस्कारं कुर्यात्। **गुरोर्धावतः पश्चाद्धावेत्** ।। १९६ ।।

(७) **मणिरामः।** कथं तर्हि प्रतिश्रवणं कुर्यात् तदाह **आसीनस्येति। स्थितः** आसनादुत्थाय **अभिगच्छन्** गुर्वभिमुखं कतिचित्पदानि गत्वा **प्रत्युद्गम्य** यद्यपि गुरुरागच्छति तथाप्यभिमुखं गत्वा ।। १९६ ।।

(८) **गोविन्दराजः**। कथं तर्हि ? **आसीनस्येति। पराङ्मुखस्येति**। उपविष्टस्याज्ञां ददतः उत्थितः प्रतिश्रवणसंभाषे कुर्यात्। उत्थितस्य च तदभिमुखं गत्वा, वेगेन गच्छतः तस्य पश्चाद्वेगेन गच्छन्। परावृत्तस्य अवस्थितस्य च **अभिमुखो** भूत्वा **दूरावस्थितस्य** समीपमागत्य, शयानस्य प्रह्वो भूत्वा निकटे च देशे **तिष्ठतः** ।। १९६–१९७ ।।

**पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।।**
**प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ।।१९७।।**

तथा **पराङ्मुखस्य** गुरोः सम्मुखोपविष्टः शिष्यः। यदि गुरुः परावृत्य कथञ्चित्स्थितः प्रेष्यति, तां दिशं गत्वाऽभिमुखीभूय पूर्वोक्तं कर्तव्यम्। **दूरस्थस्य** समीपं **अन्तिकं एत्य**ागत्य प्राप्य। आसीनस्यापि **शयानस्य प्रणम्य** प्रह्वो भूत्वा गात्राण्यवनमय्य **निदेशे** निकटे **तिष्ठतो**ऽपि **प्रणम्यैव** यत्प्रागुक्तम् 'अभिगच्छन्निति' ।।१९७।।

---

† यथा=यदा (अ)

(२) **सर्वज्ञनारायणः**। **निदेशे**ऽधःस्थानान्नीचे निम्ने देशे गर्तादौ **तिष्ठतः** **प्रणम्य** कुर्यादित्यन्वयः। **निदेशे** निकटे देशे इत्यन्ये ॥१९७॥

(३) **कुल्लूकः**। तथा **पराङ्मुखस्येति**। **पराङ्मुखस्य** वा दिशतः संमुखस्थो **दूरस्थस्य** गुरोः समीपमागत्य **शयानस्य** गुरोः **प्रणम्य** प्रह्वो भूत्वा **निदेशे** निकटेऽव**तिष्ठतो** गुरोरादिशतः प्रह्वीभूयैव प्रतिश्रवणसंभाषे कुर्यात् ॥१९७॥

(४) **राघवानन्दः**। किंच **पराङिति**। **पराङ्मुखस्य** गुरोः **अभिमुखः** सन् दूरस्थः गुरो**रन्तिकमेत्य** गत्वा **निदेशे** निकटदेशे **तिष्ठतो** गुरोः **प्रणम्य शयानस्य**। गुरोः **निदेशे** समीपे प्रतिश्रयणादिकं कुर्यादित्यनुषज्यते। उक्तपदार्थजातमतिशय-विनयसूचनार्थम् ॥१९७॥

(५) **नन्दनः**। **प्रणम्य** प्रवणो भूत्वा। **विदेशे** विनते देशे श्वभ्रादौ ॥१९७॥

(६) **रामचन्द्रः**। **पराङ्मुखस्य** गुरोः **अभिमुख**स्तिष्ठेत्। **दूरस्थस्य** गुरोः **अन्तिकं** समीपं एत्य आगत्य तिष्ठेत्। **शयानस्य** गुरोः **पृष्ठतः** चरणौ प्रणम्य **निदेशे** चैव तिष्ठति गुरोर्निदेशे तिष्ठेदित्यर्थः ॥१९७॥

(७) **मणिरामः**। **निदेशे च** निकटेऽव**तिष्ठतो** गुरोरादिशतश्च **प्रणम्य** प्रह्वीभूय ॥१९७॥

**नीचं शय्यासनं चास्य नित्यं स्याद् गुरुसन्निधौ ।**
**गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १९८ ॥**

**(१) मेधातिथिः**। **नीच**मनुन्नतं गुरुशय्याद्यपेक्षया च नीचत्वम्। **नित्य**-ग्रहणाद्ब्रह्मचर्यादुत्तरकालमपि। **गुरोश्च** दृष्टिगोचरे, यत्र गुरुः पश्यति तत्र न **यथेष्टमासीत,** पादप्रसारणाङ्गनिषङ्गादिना। **आसन**ग्रहणं चेष्टामात्रोपलक्षणार्थम्। यथेष्टचेष्टो न भवेत् ॥ १९८ ॥

(२) **सर्वज्ञनारायणः**। अत्र **शय्यानीच**त्वाभिधानात् **अधःशय्या**मिति प्रागुक्तं खट्वाद्यूर्ध्वशय्यानिषेधपरं न तु भूशयनपरम्। **यथेष्टासनः** पर्यङ्कबन्धादिना केवलं चरणाद्युपपदशून्यम् ॥ १९८ ॥

(३) **कुल्लूकः**। गुरुसमीपे चास्य गुरुशय्यासनापेक्षया **नीचे** एव **शय्यासने नित्यं** स्याताम्। यत्र च देशे समासीनं गुरुः पश्यति **न** तत्र यथेष्टचेष्टां चरणप्रसा-रादिकां कुर्यात् ॥ १९८ ॥

(४) **राघवानन्दः**। किंच **नीचमिति**। **अस्य** शिष्यस्य नीचमित्यादिनिषे-धार्थः। न **यथेष्टासनः** कृतपर्यङ्कबन्धः ॥ १९८ ॥

(६) **रामचन्द्रः**। **दूरादेव ब्राह्मणं** वेदपारगं **परीक्षेत** पितृपितामहपूर्वकम्। **देवलः** 'पुरुषत्रयविख्यातं श्राद्धे विप्रं नियोजयेत्।' कीदृशं ब्राह्मणं? तस्य श्राद्धस्य संबन्धीनि हव्यकव्यानि तेषां तद्धव्यानां प्रदाने तीर्थम्। **तीर्थम्**उदकावतरणमार्गः। यथा तीर्थेनोदकं प्राप्यते तथा तादृशैर्ब्राह्मणैर्हव्यकव्यानि पितॄन्गच्छन्तीति प्रशंसा। **स** ब्राह्मण **अतिथिः स्मृतः** अतिथितुल्यः॥ १३०॥

(७) **मणिरामः**। **दूरादेव** पितृपितामहादिशुद्धिनिरूपणेन॥ १३०॥

(८) **गोविन्दराजः**। **दूरादिति**। 'ये मातृतो दशपुरुषं पितृतो दशपुरुषं' इत्यादि-सूत्रकारोक्तर्त्विक्परीक्षान्यायेन समस्तशाखाध्यायिनं ब्राह्मणं **परीक्षेत** यस्मात् तस्मात् तथा-विधो ब्राह्मणो **हव्यकव्यानां तीर्थ**मिव (यथा) तीर्थेनोदकावतरणमार्गेणोदकार्थिनो गच्छन्ति एवं तथाविधेन ब्राह्मणेन हव्यकव्यानि देवान् पितॄन् गच्छन्ति। तथाविधो ब्राह्मणः **अतिथि** तुल्यः **स्मृतः**, महाफलत्वात्॥ १३०॥

**सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते॥**
**एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति धर्मतः॥ १३१॥**

(१) **मेधातिथिः**। **अनृचां** अनृगर्थविदाम्। उपलक्षणम्—यतोऽनृचानां प्राप्तिरेव नास्ति, श्रोत्रियायैवेति नियमात्। समासान्तः छान्दसत्वान्न कृतः, वृत्तानुरोधाच्च। एवं हि पठन्ति। "अपि माषं मषं कुर्यान्न तु छन्दो विचालयेत्" इति। अथवा अनृचा इति प्रथमाबहुवचनम्। 'अनृचाः सहस्रं यत्र भुञ्जते' इति सम्बन्धः। यथा सहस्रं गाव इति।

**एकः प्रीत**स्तर्पितो भोजितो **मन्त्रवि**द्वेदार्थवित्—**सर्वांस्तान् अनृचानर्हति** स्वीकरोति आत्मसात्करोति, तैरभेदमापद्यते। अभेदे च यत्तेषु सहस्रेषु भोजितेषु फलं तदेकस्मिन्न-वाप्यते इत्यवगतिरुत्पद्यते। निन्देयमविदुषो विद्वद्विध्यर्था। न पुनः सहस्रसंख्यातानामेकस्य च समफलत्वमुच्यते। विदुषां विधानादविदुषां प्राप्तिरेव नास्ति। अथाप्यसति विदुषि 'श्रोत्रियायैवे'त्यनेन पाक्षिकी अविदुषोऽपि प्राप्तिराशंक्येत, तथापि विस्तरस्य प्रतिषेधो मा भूदित्यतो यथाश्रुतार्थसम्भवः॥ १३१॥

(२) **सर्वज्ञनारायणः**। **अनृचा**ममन्त्राणां **यत्र** येषु हव्यकव्येषु **तान्** तानि हव्य-कव्यानि लिङ्गव्यत्ययश्छान्दसः। युक्तो नियुक्तः। **धर्मत** औचित्येन॥ १३१॥

(३) **कुल्लूकः**। यत्र श्राद्धे ब्राह्मणानामवेदविदां दशलक्षाणि भुञ्जते तत्रैको वेदविद्भो-जनेन परितुष्टो **धर्मतो** धर्मोत्पादनेन **तान्सर्वानर्हति** स्वीकर्तुं योग्यो भवति। तद्भोजनजन्यं फलं जनयतीत्यर्थः। छान्दसत्वादेकवचनम्। अथवा बहुवचनानां स्थाने सहस्रमिति मनोरभिमतम्। **गोविन्दराजस्त्वा**[१]ह 'सहस्रं गच्छन्तु भूतानी'ति वेदे॥ १३१॥

(४) **राघवानन्दः**। श्राद्धे वेदपारगं विदधत्फलतः **अनृचां** दशलक्षतस्तस्याधिक्य-माह **सहस्रमिति**। **अर्हति** दशलक्षब्राह्मणभोजनजन्यफलद इत्यर्थः। **धर्मतः** अदृष्टबलतः **प्रीतः** श्राद्धेन तुष्टः॥ १३१॥

---

१ एषोक्तिरस्मदीयादर्शे न दरीदृश्यते।

(५) **नन्दनः**। इदानीमविद्वद्विदुषोर्वैषम्यमुक्त्वार्थवादस्थापनमाह **सहस्राणीति**। **यत्र** हव्यकव्यदानकर्मणि। **अनृचाममन्त्रविदाम्। सहस्राणां** सहस्राणि **भुञ्जते**। **मन्त्रविद्वेदार्थ-**वित्। भुङ्क्ते चेति विपरिणामः। **तत्र** तान्भुक्तवतः सर्वानृचः स **मन्त्रविद्धर्मतोऽर्हति**। तस्य तेषाञ्च भोजनं फलतः स्तुत्यमित्यर्थः। पात्रे खलु दात्रा स्वमूलं मृज्यते, तच्च शुद्धे तस्मिञ्छक्यते प्रमार्ष्टुंत्वशुद्ध इति।। १३१।।

(६) **रामचन्द्रः**। **अनृचां** अनृचपाठानां यत्सहस्रेषु भोजितेषु फलं तदेकस्मिन्नवाप्यते।। १३१।।

(७) **मणिरामः**। **सहस्रं हि सहस्राणां** दशलक्षाणि **धर्मतः** धर्मोत्पादनेन।। १३१।।

(८) **गोविन्दराजः**। **सहस्राणामिति**। **यत्र** दैवपित्र्यादौ **अनृग्विदां** ब्राह्मणानां दशलक्षाणि **भुञ्जते** तत्रैको वेदवित् भुक्त्वा **प्रीतस्तुष्टः धर्मतो** धर्मोत्पादनेन तान् **सर्वानर्हति** स्वीकर्तुं योग्यो भवति, तद्भोजनजन्यधर्मानुत्पादयतीत्यर्थः। इति विद्वद्ब्राह्मणभोजनस्तुतिः।। १३१।।

**ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि च।।**
**न हि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः।। १३२।।**

(१) **मेधातिथिः**। 'ज्ञानेन' विद्यया 'उत्कृष्ट' अधिकः तस्मै **देयानि** कव्यानि। अयमसौ हस्तरुधिरदिग्धोपमार्थः। रुधिरदिग्धौ हस्तौ रुधिरेणोपमृज्यमानावधिकतरं रज्येते, न निर्मलौ भवतः, एवमविद्वान् ब्राह्मणः भोज्यमानः पितॄनधो नयतितराम्।। १३२।।

(२) **सर्वज्ञनारायणः**। नहि श्राद्धाकरणजन्यप्रत्यवायित्वमवेदज्ञताप्रत्यवाययुक्तविप्रभोजनेन शुध्यतीत्यर्थः।। १३२।।

(३) **कुल्लूकः**। विद्ययोत्कृष्टेभ्यो हव्यानि **कव्यानि च देयानि**, न मूर्खेभ्यः। अर्थान्तरन्यासो नामालङ्कारः। नहि रक्ताक्तौ **हस्तौ** रक्तेनैव विशुद्धौ भवतः, किंतु विमलजलेन; एवं मूर्खभोजनेन जनितं दोषं न मूर्ख एव भोजितोऽपहन्ति, किंतु विद्वान्।। १३२।।

(४) **राघवानन्दः**। अनृचां फलराहित्यं दृष्टान्तेन वदन् वेदज्ञमनुवदति **ज्ञानेति**। **ज्ञानं** वेदार्थज्ञानमुत्कृष्टं यस्य तस्मै। **कव्यानि** पितृदेयानि **हवींषि** देवदेयानि **असृग्दिग्धौ** रुधिरलिप्तौ **रुधिरेण** न शुध्यत एवमज्ञोऽफलद इति भावः।। १३२।।

(५) **नन्दनः**। दृष्टान्तेन सूचयन्नाह **ज्ञानेति**।। १३२।।

(६) **रामचन्द्रः**। **ज्ञानोत्कृष्टाय** विप्राय **कव्यानि** पितॄणां देयानि **हवींषि** देवानां देयानि। **असृग्दिग्धौ** असृक्स्पृष्टौ **हस्तौ** रुधिरेण नैव **शुध्यतः**। **रुधिरेणैव** प्रक्षालितौ न शुध्यतीत्यर्थः।। १३२।।

(७) **मणिरामः**। **न हि हस्ताविति** दृष्टान्तेन मूर्खभोजनेन जनितं दोषः न मूर्ख एव भोजितोऽपहन्ति किन्तु विद्वानिति बोध्यम्।। १३२।।

(८) **गोविन्दराजः। ज्ञानोत्कृष्टायेति।** विद्योत्कृष्टेभ्यो हव्यकव्यानि देयानि नान्येभ्यो यस्मात् यथा रुधिरोपलिप्तौ हस्तौ रुधिरेणैवापगतलेपौ कर्तुं न पार्यते, अपि तूदकेनैव शक्यते, एवं चाज्ञदानमुखेन नात्मा उत्तारयितुं शक्यते अपितु, विद्वद्दानद्वारेणैवेत्यविद्वन्निन्दया विद्वद्दानस्तुतिः ।। १३२ ।।

**यावतो ग्रसते ग्रासान्हव्यकव्येष्वमन्त्रवित् ।।**
**तावतो ग्रसते प्रेतो दीप्तशूलष्टर्ययोगुडान् ।। १३३ ।।**

(१) **मेधातिथिः।** सत्यपि श्राद्धप्रकरणे वाक्याद्भोक्तुरयं दोषानुवादः। तथा चोक्तं "तस्मादविद्वान् बिभियाद्यस्मात्तस्मात्प्रतिग्रहात्" (४।१९१) इति। **शूलष्टर्ययः** आयुधविशेषाः, **अयोगुडः** आयसः पिण्डः। यदर्थं श्राद्धमारब्धं स दीप्तान् तप्तायःपिण्डान् यमपुरुषैराश्यते। **व्यास**दर्शनात्तु भोजयितुरयं दोषो न भोक्तुः न पितॄणां, न तावन्मृतानामन्यकृतेन प्रतिषेधातिक्रमेण दोषसम्बन्धो युक्तः, अकृताभ्यागमादिदोषापत्तेः। यदि हि पुत्रेण तादृशो ब्राह्मणो भोजितः कोऽपराधो मृतानाम्? "ननु चोपकारोऽपि पुत्रकृतः पितॄणामनेन न्यायेन न प्राप्नोति"। न प्राप्नुयाद्यदि तादर्थ्येन श्राद्धादि नोदितं स्यात्। इह तु अस्ति चोदना, पितुरुपकारकामेनैवं कर्तव्यं, श्येनवत्। यत्तु "तावतो ग्रसते प्रेत" इति तद्भोजयितृसम्बन्धेऽप्युपपद्यते। 'यस्य **ब्राह्मण** ईदृशः श्राद्धं भुंक्ते स इदं फलमाप्नोति' इति युक्तः सम्बन्धः। प्राकरणिकश्चायमविद्वद्भोजनप्रतिषेधः। तदतिक्रमणे कर्मवैगुण्यं, तद्वैगुण्ये च श्राद्धाधिकारान्निवृत्तिरेव दोषः। पितृणां श्राद्धोपकारालाभः। ततोऽपि विध्यतिक्रमे पुत्रस्य युक्तः प्रत्यवायः। किं तर्हि? तद्भगवतो व्यासस्य वचनम्, "ग्रसते यावतः पिण्डान् यस्य वै हविषोऽविदः। ग्रसते तावतः शूलान् गत्वा वैवस्वतक्षयम्"। पाठान्तरं प्रेत्येति। भोक्तुरेव प्रेत्यता। नाविदुषा दैवपित्र्ययोर्भोक्तव्यम् ।। १३३ ।।

(२) **सर्वज्ञनारायणः।** एतेनामन्त्रज्ञस्य भोक्तुरपि प्रत्यवायितोक्ता **ऋषिः** खड्गः **अयोगुडो** लोहगुंडकः ।। १३३ ।।

(३) **कुल्लूकः।** अविद्वन्निन्दया विद्वद्दानमेवोक्तं वक्रोक्त्या स्तौति **यावत इति।** यत्सङ्ख्या**कान्ग्रासान्हव्यकव्येष्ववे**दविद्भुङ्क्ते तत्सङ्ख्याकानेव प्रकृतश्राद्धकर्ता ज्वलित**शूलष्टर्या**ख्यायुधलोहपिण्डान्**ग्रसते**। श्राद्धकर्तुरेवेदमविद्वद्दानफलकथनम्। तथा च **व्यासः** 'ग्रसते यावतः पिण्डान् यस्य वै हविषोऽनृचः। ग्रसते तावतः शूलान्गत्वा वैवस्वतक्षयम्' ।। १३३ ।।

(४) **राघवानन्दः।** न केवलमेवं प्रत्यवायोऽपि स्यादित्याह **यावत इति। यावतो** यावत्सङ्ख्याकान् पिण्डाकारान् **ग्रासान्। अमन्त्रविद**वेदाध्यायी **भुङक्ते तावतः शूलष्टर्ययोगुडान्** शूलाकारा ऋष्टिरस्त्रं तया युक्तान् लोहमयान् गुडान् गुडपिण्डाकारान् ग्रासान् तावतः तावत्सङ्ख्याकान् **प्रेत्य** श्राद्धकर्तेति शेषः। तथा **व्यासः** 'ग्रसते यावतः पिण्डान् यस्य वै हविषोऽनृचः। ग्रसते तावतः शूलान् गत्वा वैवस्वतक्षय"मिति। यत्तदोर्नित्यसंबन्धात् ।। १३३ ।।

(५) **नन्दनः।** न केवलं भोजयित्रैव भोजने ज्ञानहीनो वर्जनीयः, किन्तु ज्ञानहीनेनापि स्वयमेव सुतरां भोजनं वर्जनीयमित्याह **यावत इति।** दीप्तानग्निमयान्। अयोगुडान् गुडो द्विमुखं फलं शराग्रम् ।। १३३ ।।

मनुस्मृतिः २/१०

(६) **रामचन्द्रः।** **अमन्त्रविद्विप्रः** वेदाध्ययनरहितः। **हव्यकव्येषु यावतः** पिण्डान्**ग्रसते** ग्रासान् यावतो ग्रसते। **तावतः दीप्तान्स्थूलान् अयोगुडान्** अयोलगुडान् **ग्रसते**। यस्य ब्राह्मण ईदृशः श्राद्ध भुङ्क्ते स इदं फलं प्राप्नोतीति वा। **अविद्वान्भोजने** प्रतिषिद्धः ॥१३३॥

(७) **मणिरामः। दीप्तशूलर्ष्टर्ययोगुडान्** ज्वलितशूलऋष्टयाख्यायुधलोहपिण्डान् श्राद्धकर्ता **प्रेत्य ग्रसते** इत्यर्थः॥ १३३ ॥

(८) **गोविन्दराजः। यावत इति।** यत्सङ्ख्याकान् **ग्रासान् हव्यकव्येष्ववेदविद्ग्रसते** तत्सङ्ख्याकानेव प्रस्तुतश्राद्धकर्ता ज्वलितान् स्थूलान् **शूलर्ष्टर्याख्यायुधान्** अयःपिण्डान् **ग्रसते** इति अविद्वद्दानफलकथनम्। तथा च **व्यासो** दातुरेव फलमाह "ग्रसते यावतः पिण्डान् यस्य वै हविषोऽनृचः। ग्रसते तावतः शूलान् गत्वा वैवस्वतक्षयम्" ॥ १३३ ॥

**ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथाऽपरे ॥**
**तपःस्वाध्यायनिष्ठाश्च कर्मनिष्ठास्तथापरे ॥ १३४॥**

(१) **मेधातिथिः।** सर्वगुणेभ्यो विद्यां प्रशंसितुं गुणविभागकथनम्, प्रशंसा च विदुषे दानार्था। ज्ञाने विद्यायां 'निष्ठा' प्रकर्षो येषां ते **ज्ञाननिष्ठाः** ज्ञानाधिकारिणः। गमकत्वाद्व्यधिकरणानामपि बहुव्रीहिः। भृशमभ्यस्तवेदार्थास्तत्परा एवमुच्यन्ते। एवं सर्वत्र निष्ठान्तेषु द्रष्टव्यम्। तपश्च स्वाध्यायश्चेति द्वन्द्वगर्भो बहुव्रीहिः। 'तपांसि' चान्द्रायणादीनि, 'स्वाध्यायो' वेदाध्ययनम्। कर्माण्यग्निहोत्रादीनि। सर्व एते गुणाः सर्वेषु समुच्चिता इति द्रष्टव्याः। न हि एकगुणसद्भाव इतरगुणहीनस्य पात्रतामापादयति, किं तु कस्यचित्कोऽपि प्रकर्ष उच्यते। यथा च निष्ठाशब्दः समाप्तिवचनः प्रकर्षं लक्षयति। तन्निष्ठस्तत्पर उच्यते। सर्वगुणसद्भावेऽपि यदि एकत्र प्रकर्षोऽन्ये च गुणाः मध्यमाः, तथा च भवत्येव पात्रम्। अप्रकृष्टे त्वेकस्मिन् सर्वगुणसद्भावेऽपि न पात्रतां लभन्ते।

समुच्चयश्च व्याख्यायते, येन न ज्ञानरहितस्य कर्मानुष्ठानसद्भाव इत्युक्तं द्वितीये। अन्यैस्तु **ज्ञाननिष्ठः** परिव्राजको व्याख्यायते। तस्य हि आत्मज्ञानाभ्यासः कर्मन्यासेन विशेषतो विहितः। **तपोनिष्ठो** वानप्रस्थः। स हि तापस इत्याख्यायते। "ग्रीष्मे पञ्चतपास्तु स्यादिति" (६।२३)। **तपःस्वाध्यायनिष्ठा** ब्रह्मचारिणः। **कर्मनिष्ठा** गृहस्थाः। अतश्चानाश्रमिणो निषिध्यन्ते। तथा च पौराणिकाः "चातुराश्रम्यबाह्येभ्यः श्राद्धं नैव प्रयोजयेत्" ॥ १३४ ॥

(२) **सर्वज्ञनारायणः। ज्ञान**मात्मज्ञानं तन्निष्ठा यतयः। **तपश्**चान्द्रायणादि तन्निष्ठा वनस्थाः। **तपो** गुरुशुश्रूषादि **स्वाध्यायो** वेदाध्ययनं तन्निष्ठा ब्रह्मचारिणः। **कर्म** यज्ञादि तन्निष्ठा गृहस्थाः। अत्राश्रमिवाचि यतय इति पदत्यागेन ज्ञाननिष्ठादिपदेन तदभिधानमाश्रमान्तरवर्तिनां ज्ञाननिष्ठत्वादिगुणवतां प्राप्त्यर्थम्। एतेन वानप्रस्थानां श्राद्धभोजनं गम्यते ॥ १३४ ॥

(३) **कुल्लूकः।** केचिदात्म**ज्ञान**परा ब्राह्मणा भवन्ति। अन्ये प्राजापत्यादितपःप्रधानाः। अपरे तपोऽध्ययननिरताः। इतरे यागादिपराः॥ १३४ ॥

(४) **राघवानन्दः।** 'ज्ञानोत्कृष्टाय देयानि कव्यानि च हवींषि चे'(३।१३२) त्युक्तम्। तत्रैव व्यवस्थितविषयार्थं तत्पात्राण्यनुवदन् व्यवस्थितिमाह **ज्ञाननिष्ठा** इति द्वाभ्याम्। **ज्ञान**मध्यात्मं **तप**श्चान्द्रायणादि **स्वाध्यायो** वेदाभ्यासः। **कर्मा**ग्निहोत्रादि **तन्निष्ठा**स्तदेकशरणाः ।। १३४ ।।

(५) **नन्दनः।** हव्यकव्ययोः पात्रविशेषे नियमं वक्तुं पात्रवैविध्यं तावदाह **ज्ञानेति। ज्ञाननिष्ठाः** अध्यात्मज्ञानिनः। **तपोनिष्ठाः** कृच्छ्रचान्द्रायणादिप्रधानाः। **स्वाध्यायज्ञाननिष्ठा** मन्त्रब्राह्मणार्थविदः। **कर्मनिष्ठा** याज्ञिकाः ।। १३४–५ ।।

(६) **रामचन्द्रः।** द्वाभ्यामाह **ज्ञाननिष्ठा इति। ज्ञाननिष्ठाः** संन्यासिनः। **तपोनिष्ठाः** वानप्रस्थाः। **तपःस्वाध्यायनिष्ठा** ब्रह्मचारिणः। **कर्मनिष्ठाः** गृहस्थाः ।। १३४ ।।

(७) **मणिरामः।** चतुर्विधान् ब्राह्मणानाह **ज्ञानेति** ।। १३४ ।।

(८) **गोविन्दराजः। ज्ञाननिष्ठा इति।** केचिदात्मज्ञानपरा विप्रा भवन्ति। अपरे कृच्छ्रा**दितपः**प्रधानाः। अन्ये तु **तपो**ऽध्ययननिरताः। अपरे यागादितत्पराः ।। १३४ ।।

**ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ।।**
**हव्यानि तु यथान्यायं सर्वेष्वेव चतुर्ष्वपि ।। १३५ ।।**

(१) **मेधातिथिः।** गुणविभागे प्रयोजनमाह **कव्यानि** पितॄनुद्दिश्य यद्दीयते तत् 'कव्यम्'। तानि **ज्ञाननिष्ठेषु प्रतिष्ठाप्यानि** प्रदेयानीत्यर्थः। यत्नवचनात्तदभावे चतुर्ष्वपि हव्यवत्। पित्र्ये ज्ञाननिष्ठाः पात्रतमाः। उक्तं हि "पात्राणामपि तत्पात्रं" इति, अन्नदानमविशेषेण चतुर्भ्योऽपि इति श्लोकार्थः। **न्यायः** शास्त्रीयो विधिः ।। १३५ ।।

(२) **सर्वज्ञनारायणः।** किंतु वन्याहारेणैव तत्कर्तव्यमिति **यत्नत** इत्यसंभवेऽपीत्यर्थः ।। १३५ ।।

(३) **कुल्लूकः।** ततः किमत आह **ज्ञानेति।** ज्ञानप्रधानेभ्यः पित्र्यर्थान्नानि यत्नाद्दातव्यानि। देवान्नानि पुनर्न्यायावधृतार्थशास्त्रानुसारेण चतुर्भ्योऽपि ।। १३५ ।।

(४) **राघवानन्दः। प्रतिष्ठाप्यानि** देयानि। **यथान्यायं** पूर्वपूर्वालाभे उत्तरोत्तरस्य ग्राह्यतेति ।। १३५ ।।

(६) **रामचन्द्रः। ज्ञाननिष्ठेषु** ज्ञाननिष्ठादिषु सर्वेषु चतुर्षु **यत्नतः कव्यानि हव्यानि** च **यथान्यायं** यथाक्रमं **प्रतिष्ठाप्यानि** देयानीत्यर्थः ।। १३५ ।।

(७) **मणिरामः।** हव्यकव्यदाने विभागमाह **ज्ञाननिष्ठेष्विति। यथान्यायं** न्यायावधृतार्थशास्त्रानुसारेण ।। १३५ ।।

(८) **गोविन्दराजः।** इति किमाह **ज्ञाननिष्ठेष्विति।** ज्ञानप्रधानेभ्यो यत्नेन पित्र्यर्थानि देयानि। देवार्थानि पुनः शास्त्रमर्यादानतिक्रमेण चतुर्भ्यो ज्ञाननिष्ठादिभ्योऽपीति ।। १३५ ।।

**अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ॥**
**अश्रोत्रियो वा पुत्रः स्यात्पिता स्याद्वेदपारगः ॥ १३६ ॥**

(१) **मेधातिथिः।** संशयोपन्यासार्थः श्लोकः ॥ १३६ ॥

(२) **सर्वज्ञनारायणः। अश्रोत्रियो**ऽनधीतवेदः ॥ १३६ ॥

(३) **कुल्लूकः।** यो**ऽश्रोत्रियपितृकः** स्वयं च श्रोत्रियः यः श्रोत्रियपितृकः। स्वयं वा**ऽश्रोत्रियः** ॥ १३६ ॥

(४) **राघवानन्दः।** तत्रैव प्रासङ्गिकं विशेषमाह **अश्रोत्रिय** इति द्वाभ्यां। **वेदपारगः** शाखाध्यायी ॥ १३६ ॥

(५) **नन्दनः ।** एवं तावद्गुणवान्पात्रमित्युक्तम् । इदानीं गुणवतो निर्गुणपितृकादगुणोऽपि गुणवत्पितृकः पात्रमित्यर्धाधिकश्लोकेनाह **अश्रोत्रिय** इति। **पुत्रो**ऽश्रोत्रियस्य ॥ १३६ ॥

(६) **रामचन्द्रः। यस्य पिता अश्रोत्रियः** मूर्खः स्यात् **पुत्रः वेदपारगः** स्यात्। यद्वा **पुत्र** अश्रोत्रियः **पिता** वेदपारगः स्यात्। अनयोस्तयोर्मध्ये **यस्य श्रोत्रियः पिता स्याद्वेदपारगः** स्यात्। तस्य पुत्रं ज्यायांसं पूज्यं जानीयादित्यर्थः। 'आत्मा वै जायते पुत्र' इति श्रुतेः। इतरः पुत्रो वेदपारगो मन्त्रपूजनार्थं सत्कारमर्हति ॥ १३६-७ ॥

(८) **गोविन्दराजः। अश्रोत्रिय इति।** यः अश्रोत्रियपुत्रः आत्मना श्रोत्रियो, यः श्रोत्रियपुत्रः आत्मना चाश्रोत्रियः ॥ १३६ ॥

**ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता ॥**
**मन्त्रसम्पूजनार्थं तु सत्कारमितरोऽर्हति ॥ १३७ ॥**

(१) **मेधातिथिः।** यस्य पिता अपाठः, स्वयं तु वेदपारगः साङ्गवेदाध्यायी, इतरस्य तु पिता वेदपारगः, स्वयं तु मूर्खः, तयोः कः श्रेयानिति संशयं कृत्वा सिद्धान्तमाह **अनयोः** स्वयंश्रोत्रियपितृमूर्खस्वयंमूर्खपितृश्रोत्रिययोः स्वयंमूर्खपितृश्रोत्रियं **ज्यायांसं** प्रशस्यं श्राद्धे योग्यं जानीयात्, यद्यस्य श्रोत्रियः पिता। इतरो मन्त्रपूजनार्थं, न ब्राह्मणबुद्ध्या, किं तु मन्त्रास्तेन येऽधीतास्ते तत्र पूज्यन्ते। न मन्त्राणां श्राद्धे पूजा विहिता, तस्मान्नासौ भोजयितव्यः।

श्लोकद्वयेन संशयसिद्धान्तरूपोपन्यासेनार्थवादभंग्या पितृश्रोत्रियत्वमात्मश्रोत्रियत्वं च श्राद्धभोजने कारणमित्येतदुच्यते, न केवलमात्मश्रोत्रियत्वम्। न तु स्वयमनधीयानस्य पितृश्रोत्रियत्वेन भोज्यता विधीयते। तदुक्तं "दूरादेव परीक्षेत" (३।१३०) इति। अत्राध्ययनपरीक्षा पुरुषद्वयविषयाऽनेन नियम्यते। जातिगुणपरीक्षा तु ततोऽधिकपुरुषविषयाऽपि यथा। अतस्तस्यैव विशेषाभिधानार्थत्वादपौनरुक्त्यम् ॥ १३७ ॥

(२) **सर्वज्ञनारायणः। मन्त्र**संमानना वेदपूजा **सत्कारं** पूजामात्रम्, हव्यकव्यानि श्रोत्रियायैव देयानीत्युक्तत्वात् पितृश्रोत्रियत्वं श्रुतिमात्रपरम् ॥ १३७ ॥

(३) **कुल्लूकः।** तयोः कः श्रेष्ठ इत्युपन्यस्य विशेषमाह **ज्यायांसमिति। अनयोः** पूर्वश्लोकनिर्दिष्टयोर्मध्ये श्रोत्रियपुत्रं स्वयमश्रोत्रियमपि ज्येष्ठं जानीयात्। पितृविद्यादरपरमिदम्। यः पुनरश्रोत्रियस्य पुत्रः स्वयं च श्रोत्रियः स तदधीतवेदपूजनार्थं पूजामर्हति, वेद एव तद्द्वारेण पूज्यत इति पुत्रविद्यादरपरमिदम्। तस्माद्वचनभङ्ग्या श्रोत्रियपुत्रः स्वयं च श्रोत्रियः श्राद्धे भोजयितव्य इत्युक्तम्। न तु श्रोत्रियपुत्रस्य स्वयमश्रोत्रियस्यैवाभ्यनुज्ञानं श्रोत्रियायैव देयानीति विरोधात्। एवं च 'दूरादेव परीक्षेते'ति विद्याव्यतिरिक्ताचारादिपरीक्षार्थत्वेनावतिष्ठते ।। १३७ ।।

(४) **राघवानन्दः।** अनयोरश्रोत्रियश्रोत्रियपुत्रयोः। **मन्त्रो** वेदस्तस्य **संपूजनमेव** अश्रोत्रियपुत्रपूजा। अतः श्रोत्रियपुत्रस्यैव पात्रता। एतस्यैव विशिष्टसंस्कारवत्त्वादित्यर्थः ।। १३७ ।।

(५) **नन्दनः।** श्रोत्रियपुत्रं **ज्यायांसं विद्यात्।** पात्रतायामिदं न पूज्यतायामित्युत्तरार्धेनोक्तम्। **इतरो**ऽश्रोत्रियः ।। १३७ ।।

(७) **मणिरामः। इतरः** अश्रोत्रियपुत्रः स्वयं श्रोत्रियः सः **मन्त्रसंपूजनार्थं** वेदपूजनार्थं पूजामर्हतीत्यर्थः ।। १३७ ।।

(८) **गोविन्दराजः।** तयोः कः श्रेयानित्युपन्यस्याह **ज्यायांसमिति।** अनयोः पूर्वनिर्दिष्टयोर्मध्यात् श्रोत्रियपुत्रं आत्मनाऽश्रोत्रियमपि प्रशस्यतरं जानीयात्। पश्चात् अश्रोत्रियपुत्रः आत्मना च श्रोत्रियः स तदधीतवेदपूजार्थं पूजामर्हति। वेदस्तद्द्वारेण पूज्यते। न त्वसौ पूजार्ह इति पित्रादिविद्यापरीक्षार्थम्। एतच्चाश्रोत्रियदानार्थं। "श्रोत्रियायैव देयानी"ति नियमात्। एवं च 'दूरादेव परीक्षेते' त्येतत् विद्याव्यतिरिक्तजात्यतिशयपरीक्षार्थत्वेनावतिष्ठते ।। १३७ ।।

**न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ।।**
**नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ।। १३८ ।।**

(१) **मेधातिथिः।** सत्यामेव श्रोत्रियत्वादिपूर्वगुणसंपदि मैत्र्यादिनिमित्तेन प्रतिषेधोऽयम्। **मित्रं** समानसुखदुःखम् आत्मनिर्विशेषं **न श्राद्धे भोजयेत्। धनैः** अन्यैः **अस्य** मित्रस्य स्वीकारो मैत्रीकरणम्। अविच्छेदो वा मैत्र्यम्, उपकार इति यावत्। न केवलं **न मित्रं** भोजयेत्, यावदरिं शत्रुमपि। **नारिं न मित्रं यं विद्याद्यत्र** न रागो न द्वेषो, न चान्यः कश्चित्सम्बन्धो यत्र प्रीतिनिमित्ता कार्यार्थिता शंक्येत; अरिमित्रयोः प्रदर्शनार्थत्वात्। तथा सम्बन्धाशङ्कयैव मातामहादयोऽनुकल्पपक्षोक्ताः। शत्रावपि मैत्रीकरणार्थदानसम्भावना यदि मैत्रीकरणमिति (संग्रहः)। "अरिसंग्रहणं न कर्तव्यम्।" विस्पष्टार्थं भविष्यति ।। १३८ ।।

(२) **सर्वज्ञनारायणः। मित्र**मिति सौजन्यरूपमैत्र्यसिद्ध्यर्थमित्यर्थः। **नारि**मित्यनेन वैरिणः श्राद्धभोजनीयता निषिद्धा, न **मित्र**मिति मैत्रीनिमित्तकत्वाभावेऽप्यग्निसाक्षिककृतवैधमैत्रीकर्मणो मित्रस्य ।। १३८ ।।

(३) **कुल्लूकः। श्राद्धे न मित्रं भोजयेत्।** धनान्तरैरस्य मैत्री संपादनीया, न **शत्रुं न च मित्रं** यञ्जानीयात्तं ब्राह्मणं **श्राद्धे भोजयेत्** ।। १३८ ।।

(४) **राघवानन्दः**। तत्प्रतियोगिनं निवेदयन्नाह **नेति**। **अस्य** मित्रस्य धनैः श्राद्ध-द्रव्यव्यतिरिक्तैः **संग्रहो** मित्रतासंपादनम्। व्यतिरेकमुक्त्वान्वयमाह **यमिति**। **द्विजं** विप्रं 'ब्राह्मणाश्चाहवनीयार्थं' इत्युक्तेः ।। १३८ ।।

(५) **नन्दनः। धनैः कार्योऽस्य संग्रहः**। धनैस्तत्संग्रहणीयं मित्रं न श्राद्धेन। एवं वचनादसंग्रहार्थस्य गुणवत्तामात्रहेतुकस्य मित्रभोजनस्यानुज्ञानमर्थात्सिद्धम् ।। १३८ ।।

(६) **रामचन्द्रः**। वर्ज्यानाह **नेति**। मित्रं श्राद्धे न भोजयेत्। यस्य धनैः संग्रहः कार्यः वार्धुषिकः तस्य श्राद्धेऽधिकारो नास्ति। **अरिं** शत्रुं **मित्रं वा यं विद्यात्तं द्विजं श्राद्धे न भोजयेत्** ।। १३८ ।।

(७) **मणिरामः। धनैः** श्राद्धीयव्यतिरिक्तैः ।। १३८ ।।

(८) **गोविन्दराजः। न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः। नारिं न मित्रं नाभिभर्तुं विज्ञातं भोजयेद् द्विजम् ।। मित्रं श्राद्धे न भोजयेत्।** किं तर्हि? धनान्तरैरस्य मैत्र्या-दिस्नेहः कार्यः। **यं** पुनः **शत्रुं न मित्रं नाभिभर्तुं विज्ञानं ब्राह्मणं श्राद्धे भोजयेत्** ।। १३८ ।।

**यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।।**
**तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च ।। १३९ ।।**

(१) **मेधातिथिः**। पूर्वप्रतिषेधस्यार्थवादोऽयम्। मित्रशब्दोऽयं भावप्रधानः, 'मित्रप्रधानानि' मैत्रीप्रधानानि। तेनोभयोः अरिमित्रयोः (अवि)शेषः। देवतोद्देशेन दानमदृष्टार्थं वा केवलं ब्राह्मणभोजनं 'हवींषि' इति लक्ष्यते।

**प्रेत्य फलं नास्ति।** "ननु चासमानकर्तृत्वात्कार्यानुत्पत्तिः। प्रेणः कर्ता पुरुषः श्राद्धकृत्, अस्तिताया नञर्थोपहितायाः फलम्।" केचिदाहुः—प्रेत्येति शब्दान्तरं परलोकवचनं निपातसंज्ञम्। अथवा प्रेणोऽपि फलं कर्तृ 'तस्य फलं प्रेत्य' प्रकर्षेण निकटमागत्यापि 'न भवति' न भोग्यतां याति ।। १३९ ।।

(२) **सर्वज्ञनारायणः। मित्रप्रधानानि** सन्त्युद्देशप्रवृत्तानि। **हवींषि** यज्ञाः ।। १३९ ।।

(३) **कुल्लूकः**। मित्रशब्दोऽयं भावप्रधानः। यस्य **मैत्रीप्रधानानि** हव्यकव्यानि **तस्य** पारलौकिकं **फलं** न भवतीति फलाभावकथनपरमिदम्। **प्रेत्येति** परलोक इत्यर्थे शब्दान्तरमव्य-यमिदं नतु क्त्वान्तम्। तेनासमानकर्तृकत्वे कथं क्त्वेति नाशङ्कनीयम् ।। १३९ ।।

(४) **राघवानन्दः**। मित्रभोजने निन्दामाह **यस्येति। हवींषि** देवतायै देयानि। ननु श्राद्धस्य फलमेव नास्ति, कथं तदभावोक्तिरिति चेत्—"आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः" (आचार. २७०) इति **याज्ञ-वल्क्योक्तेरा**युरादिकं फलमस्तीत्यर्थः ।। १३९ ।।

(५) **नन्दनः।** न केवलं श्राद्ध एव मित्रं वर्जनीयं, किंतु दैवेऽपीत्याह **यस्येति। मित्रप्रधानानि** मैत्रफलप्रधानानि। गुणवत्ताप्रधानानि। **हवींषि** दैवानि कर्माणि ।। १३९ ।।

(६) **रामचन्द्रः। यस्य** पुंसः **श्राद्धानि मित्रप्रधानानि तस्य** पुंसः **प्रेत्य श्राद्धेषु हवनीयेषु** च **फलं नास्ति** ।। १३९ ।।

(७) **मणिरामः।** तत्कृते निन्दामाह **यस्येति** ।। १३९ ।।

(८) **गोविन्दराजः। यस्येति।** यस्य मित्रोपकारपराणि हव्यकव्यानि तस्य पारलौकिकं **फलं** न भवतीति फलाभावकथनपरमेतत्, न केवलं पूर्वमित्रस्य श्राद्धादिना देयं यावत् ।। १३९ ।।

## यः सङ्गतानि कुरुते मोहाच्छ्राद्धेन मानवः ।।
## स स्वर्गाच्च्यवते लोकाच्छ्राद्धमित्रो द्विजाधमः ।।१४०।।

(१) **मेधातिथिः। सङ्गतानि** मित्रभावान् यः कुरुते **श्राद्धेन मोहात्** शास्त्रार्थमजानानः **स स्वर्गात् च्यवते**, न प्राप्नोति स्वर्गमित्यर्थः। असम्बन्धसामान्यात् च्यवत इत्युच्यते। यथा प्राप्तः स्वर्गं ततश्च्युतः स्वर्गेण न सम्बध्यते एवमयमपि। अनेन च श्राद्धफलाप्राप्तिरेव कथ्यते। सर्वशेषता हि तथा भवति। **श्राद्धमित्रः** श्राद्धं मित्रमस्येति। मित्रलाभहेतुत्वात् श्राद्धमेव 'मित्रम्' —अतो बहुव्रीहिः। द्विजानामधमः। द्विजग्रहणं प्रदर्शनार्थम्। शूद्रेणापि न मित्राणि भोजनीयानि। "ननु चाब्राह्मण्यादेव शूद्रस्य मित्रत्वप्राप्तिर्नास्ति।" केनैषा परिभाषा कृता, शूद्रस्य ब्राह्मणैर्मित्रैर्न भवितव्यम्?'। "समानजातीयानामेव मित्रव्यवहारो नोत्तमजातीयानां हीनजातीयैः सहेति" चेत्—एतदपि न; "एवं ह्याह श्वेतकेतुर्ह वा आरुणेयः अस्ति मे पञ्चालेषु क्षत्रियो मित्रम्।" इति। किं च सम्बन्धोपलक्षणार्थं च मित्रप्रतिषेधो व्याख्यातः। भवन्ति च शूद्रस्य ब्राह्मणा अर्थसम्बन्धिनः, पारशवस्य ज्ञातयोऽपि ।। १४० ।।

(२) **सर्वज्ञनारायणः। श्राद्धमित्रः** श्राद्धोत्पादितमैत्रः ।। १४० ।।

(३) **कुल्लूकः।** स्वर्गफलं श्राद्धस्य दर्शयितुं पूर्वोक्तफलाभावमेव विशेषेण कथयति **य इति। यो** मनुष्यः **संगतानि** मित्रभावं शास्त्रानभिज्ञतया। **श्राद्धेन कुरुते** श्राद्धमेव मित्रलाभहेतुत्वान्मित्रं यस्य **स श्राद्धमित्रो** द्विजापसदः। स **स्वर्गलोकाच्च्यवते** तं न प्राप्नोतीत्यर्थः। श्राद्धस्यापि स्वर्गफलत्वमाह **याज्ञवल्क्यः** (१।२७०) "आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च। प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः" ।। १४० ।।

(४) **राघवानन्दः।** न केवलं फलं नाप्नोति प्रत्युतानर्थं चर्च्छेदित्याह **य इति। संगतानि** मित्रभावं **कुरुते** संपादयति। **श्राद्धेन** श्राद्धीयद्रव्येणैव मित्राणां लाभो यस्य स **श्राद्धमित्रः। द्विजाधम**श्चातुर्वर्ण्यः ।। १४० ।।

(५) **नन्दनः।** मित्रस्य हव्येषु परिग्रहो दोषवत्तर इत्याह **य इति। संगतानि** संश्लेषान्। **स्वर्गा**द्धर्मान्तरार्जितादपि ।। १४० ।।

(६) **रामचन्द्रः। यः** मानवः **श्राद्धेन मोहात्संगतानि** मित्रभावं गतानि **कुरुते सः स्वर्गलोकाच्च्यवते।** श्राद्धे मित्रं यस्य सः **श्राद्धमित्रः** सः द्विजाधमः ।। १४० ।।

(७) **मणिरामः। श्राद्धेन संगतानि** मैत्रीभावं, श्राद्धं भोजयित्वा मैत्री न कर्तव्येत्यभिप्रायः ।। १४० ।।

(८) **गोविन्दराजः। य इति।** 'श्राद्धदानेनानेन सह मैत्री मे भविष्यती'ति एवं यो मनुष्यः शास्त्रानभिज्ञतया **श्राद्धेन** मित्रभावं कुरुते स मित्रहेतुत्वात् श्राद्धं मित्रमस्येति **श्राद्धमित्रो** द्विजापसदः कर्मान्तरार्जितेनापि स्वर्लोके न संबध्यत इति ।। १४० ।।

## सम्भोजनी साऽभिहिता पैशाची दक्षिणा द्विजैः ।।
## इहैवास्ते तु सा लोके गौरन्धेवैकवेश्मनि ।।१४१।।

(१) **मेधातिथिः।** संशब्दः सहार्थे वर्तते। सह भुज्यते यया सा **सम्भोजनी।** मैत्र्या हि सहभोजनं प्रवर्तते। गोष्ठीभोजनं वा सम्भोजनमिष्यते। पिशाचानामयं धर्मो यत् श्राद्धे मित्रसंग्रहः। रथ्याः पुरुषाः पिशाचाः। **सा** दक्षिणा **इहैव** लोके **आस्ते,** नामुत्र फलं दातुं समर्था। **गौर्यथाऽन्धैकस्मिन्नेव** गृहे तिष्ठति, एवमियं दक्षिणा **इहैवास्ते,** मित्रजनार्थैव भवति। न पितृभ्य उपकारार्थाय प्रभवति। **दानं दक्षिणा** ।। १४१ ।।

(२) **सर्वज्ञनारायणः। संभोजनी** संगत्यर्थभोजनसंबन्धिनी **दक्षिणा** दानं। **पैशाची** पिशाचगामिनी। **इहैव** न पितृलोकं याति ।। १४१ ।।

(३) **कुल्लूकः। सा दक्षिणा** दानक्रिया **संभोजनी** सह भुज्यते यया सा संभोजनी गोष्ठी बहुपुरुषभोजनात्मिका। पिशाचधर्मत्वात्पैशाची मन्वादिभिरुक्ता। सा च मैत्रीप्रयोजनकत्वान्न परलोकफले**हलोक एवास्ते** यथाऽन्धा **गौरेकस्मिन्नेव** गृहे तिष्ठति न गृहान्तरगमनक्षमा ।। १४१ ।।

(४) **राघवानन्दः।** "न प्रसज्जेत विस्तर" (३।१२५) इत्युक्तस्तत्रैव परिषदि दत्तमदत्तमिति श्रुतिमाश्रित्याह **संभोजनीति।** सह बहुभिर्भोज्यतया सा **संभोजनी।** पिशाचानां बहुभिः सह भोजनस्य प्रसिद्धत्वादस्यापि तथात्वमित्याह **पैशाची दक्षिणा** दक्षिणाप्रवणादिसाध्यतया श्राद्धक्रिया श्राद्धस्य प्रकृतत्वात् इह लोके स्थितौ दृष्टान्तः **गौरन्धेति।** एषा यथा **एकवेश्मन्येवावस्थिता** गृहान्तरं न याति तद्वत्पारलौकिकं फलमददती **इहैव** यशोर्थे **तिष्ठतीति** भावः ।। १४१ ।।

(५) **नन्दनः। सा दक्षिणा** तन्मित्रश्राद्धम्। **सम्भोजनी** सम्भोजनरूपा। बहूनामेकत्र भोजनं संभोजनम्। **पैशाची** पिशाचैरुपभोग्येति द्विजैरभिहिता। **इहैवास्ते** इह लोके मित्रमेव सा संगृह्णाति नामुत्र पितॄन्। अन्यत्र गमनाशक्तौ दृष्टान्त उक्तः **गौरन्धेवैकवेश्मनीति** ।।१४१।।

(६) **रामचन्द्रः।** सह भुज्यते यया सा **संभोजनी** मित्रद्विजे **पैशाची दक्षिणा** अभिहिता उक्ता। पिशाचानुपतिष्ठतीत्यर्थः। केवलं **एकवेश्मनि अन्धा गौरिव** सा दक्षिणा भोजनी

दक्षिणा इहलोके अत्रार्थे आस्ते। परत्र पितृभ्यो' **नोपतिष्ठत** इत्यर्थः। 'पिशाचानामयं धर्मो यः श्राद्धे मित्रसंग्रहः' ।। १४१ ।।

(७) **मणिरामः। या दक्षिणा** दानक्रिया **संभोजिनी** सह भुज्यते यया सा संभोजिनी गोष्ठीति यावत्। सा बहुपुरुषभोजनात्मिका पिशाचधर्मत्वात् **पैशाची द्विजैः** मन्वादिभिः उक्ता। सा मैत्रीप्रयोजनत्वान्न परलोकफला। **इहैव लोके आस्ते** यथा **अन्धा गौः** एकस्मिन्नेव गृहे तिष्ठति न गृहान्तरगमनक्षमा तथेत्यर्थः ।। १४१ ।।

(८) **गोविन्दराजः। संभोजिनीति। सा** दक्षिणा तद्दानं सह भुज्यते ययेति **सम्भोजिनी** या गोष्ठी पिशाचधर्मत्वात् **पैशाची** मन्वादिभिरुक्ता। सा च मित्रार्थत्वा**दिहलोके एवास्ते अन्धा गौर्यथैकस्मिन्** गृहे। न परलोके प्रत्युपकाराय भवति ।। १४१ ।।

**यथेरिणे बीजमुप्त्वा न वप्ता लभते फलम् ।।**
**तथाऽनृचे हविर्दत्वा न दाता लभते फलम् ।। १४२ ।।**

(१) **मेधातिथिः। ईरिणं** ऊषरम्। यस्मिन् क्षेत्रे भूमिदोषात् बीजमुप्तं न चोद्गच्छति तदीरिणम्। यत्र **वप्ता** कर्षको न **लभते फलम्**। एव**मनृचे** वेदाध्ययनरहिते **हविर्दैवं** पित्र्यं च दत्वा न लभते **फलम्**।' अनृच' इति सप्तम्यन्तम्। ऋचो वेदोपलक्षणार्थम् ।। १४२ ।।

(२) **सर्वज्ञनारायणः। ईरिणे** ऊषरे **हविर्दैवं** पित्र्यं वा ।। १४२ ।।

(३) **कुल्लूकः। ईरिण**मूषरदेशो यत्र बीजमुप्तं न प्ररोहति तत्र यथा **बीजमुप्त्वा कर्षको** न फलं प्राप्नोत्येवमविदुषे श्राद्धदानफलं दाता न प्राप्नोतीति ।। १४२ ।।

(४) **राघवानन्दः**। अविदुषे दानं न देयमिति सदृष्टान्तमाह **यथेति। ईरिणे** ऊषरे देशे **वप्ता** क्षेत्रे बीजक्षेप्ता **अनृचे** वेदशून्ये **हविरिति** कव्यस्याप्युपलक्षणम् ।। १४२ ।।

(५) **नन्दनः।** इदानीं हव्येषु मित्रश्रोत्रिययोरश्रोत्रियो वर्जनीयो न मित्रमित्याह **यथेरिण इति** ।। १४२ ।।

(६) **रामचन्द्रः। यथेरिण** ऊषरे **उप्त्वा फलं बीजं न लभते तथा अनृचे** अनधीयानाय **हविर्दत्वा दाता फलं न लभते** ।। १४२ ।।

(७) **मणिरामः। ईरिणे** ऊषरे ।। १४२ ।।

(८) **गोविन्दराजः। यथेति।** यथा ऊषरे भूप्रदेशे धान्यान्युप्त्वा कर्षकः **फलं** न प्राप्नोति एवमश्रोत्रियाय श्राद्धादि दत्वा **दाता न फलं** प्राप्नोति। अश्रोत्रियदाने वैफल्यकथनार्थमेतत् ।। १४२ ।।

**दातॄन्प्रतिग्रहीतॄंश्च कुरुते फलभागिनः ।।**
**विदुषे दक्षिणां दत्वा विधिवत्प्रेत्य चेह च ।। १४३ ।।**

(१) **मेधातिथिः।** "विदुषे या दक्षिणा दीयते सा दातॄन् फलभागिनः कुरुते इति युक्तम्। प्रतिग्रहीतारस्तु कतरत् फलं भुञ्जते ? यदि तावददृष्टं, तदयुक्तम्; अनोदितत्वात्

प्रतिग्रहस्य दृष्टफललाभेन प्रवृत्तेः। अथ दृष्टं, तदविदुषोऽपि दृश्यते" सत्यम्; प्रशंसैषा। 'ईदृशमेतद्विदुषे दानं यत्प्रतिग्रहीताऽप्यदृष्टफलभाग्भवेत्; सत्यपि दृष्टे किं पुनर्दातेति'। **प्रेत्य** स्वर्गे। इह कीर्तिः—'यथाशास्त्रमनुतिष्ठती'ति जनैः साधुवादो दीयते। **विधि-वदि**त्यनुवादो 'ददाति चैवं धर्मेष्वि'ति ।। १४३ ।।

(२) **सर्वज्ञनारायणः। दातृन्प्रेत्य फलभागिनः। इह** प्रतिग्रहीतॄन्। अनृचां तु इह भोगसंभवेऽपि प्रत्यवायोदर्कत्वात्फलं सदप्यसदेवेति तात्पर्यम् ।। १४३ ।।

(३) **कुल्लूकः।** वेदतत्त्वविदे यथाशास्त्रं दत्तमैहिकामुष्मिक**फलभागिनो** दातॄन् करोति। ऐहिकं फलं यथाशास्त्रानुष्ठानेन लोके ख्यातिरूपमानुषङ्गिकमिति **मेधातिथि-गोविन्दराजौ**। वयं त्वायुरादिकमेवैहिकफलं ब्रूमः। 'आयुः प्रजां धनं विद्या' (याज्ञ. १।२७०) मित्याद्यैहिकामुष्मिकादिफलत्वेनापि श्राद्धस्य याज्ञवल्क्यादिभिरुक्तत्वात्। **प्रतिग्रहीतॄंश्च** श्राद्धलब्धधनानुष्ठितयागादिफलेन परलोके सफलान्कुरुते अन्यायार्जितधनानुष्ठितया-गादेरफलप्रदत्वात्। **इह** लोके न्यायार्जितधनारब्धकृष्यादिफलातिशयलाभात्सफलान्कुरुते ।। १४३।।

(४) **राघवानन्दः।** विदुषे तु देयमित्याह **दातृनिति। विदुषे** वेदार्थविदे दक्षिणा श्राद्धे दीयमाना **दातृन्** श्राद्धकर्तॄन् **प्रतिग्रहीतॄन्** श्राद्धादेश्यान्। उक्तफलेन **फलभागिनः कुरुत** इत्यन्वयः। वाक्यार्थानुरोधेन पदार्थत्यागस्योचितत्वात् दक्षिणाशब्देन श्राद्धान्नभोजनम्। दृष्टफलत्वादिति भावः ।। १४३ ।।

(५) **नन्दनः।** यत एवं तस्मान्मित्रायापि विदुषे हव्यानि दातव्यानि, न कदाचिदप्य-विदुष इत्याह **दातृनिति।** तस्मान्मित्रेभ्योऽश्रोत्रियो वर्जनीय इत्यभिप्रायः ।। १४३ ।।

(६) **रामचन्द्रः।** विधिव**द्विदुषे** दत्ता **दक्षिणा प्रेत्य** परलोके **इह** चेहलोके **दातॄन्प्रति-ग्रहीतॄंश्च फलभागिनः कुरुते** ।। १४३ ।।

(७) **मणिरामः।** विदुषे दानस्तुतिमाह **दातृनिति** ।। १४३ ।।

(८) **गोविन्दराजः। विदुषे दक्षिणा दत्ता भवति प्रेत्य चेह च।** वेदार्थविदे च यथाशास्त्रं श्राद्धादि दत्तं पितृतृप्त्याख्यामुत्रिकफलेन कीर्त्यनुषङ्गैहिकफलेन च **दातॄन्** सफला कुरुते। **प्रतिग्रहीतॄंश्च** तत्प्रतिग्रहलब्धधनानुष्ठितयागादिफलेन अमुत्र सफलान् कुरुते। अधर्मार्जितद्रव्यानुष्ठितयागादिनैष्फल्यात्। इह लोके च धर्मार्जितधनकृतकृष्यादिफलविषयान् सफलान् कुरुते इति विद्वद्दानस्य दातृप्रतिग्रहीतृदृष्टादृष्टाफलकथनार्थमेतत् ।। १४३ ।।

**कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम्।**
**द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ।। १४४ ।।**

(२) **सर्वज्ञनारायणः। मित्रं** सोपकारं इहैव लाभसंभवात् अकामानुमतौ कामं, तेनान्यसंभवेऽपि मित्रस्य कथंचिदनुज्ञोक्ता। अभिरूपमुक्ताभिमतरूपशालिनम् ।। १४४ ।।

(३) **कुल्लूकः**। **वरं** विद्वद्ब्राह्मणाभावे गुणवन्मित्रं भोजयेन्नतु विद्वांसमपि **शत्रुं**, यतः शत्रुणा **श्राद्धं भुक्तं** परलोके **निष्फलं** भवति। यथोक्तपात्रासंभवे मित्रप्रतिप्रसवार्थमिदम् ।। १४४ ।।

(४) **राघवानन्दः**। पात्रान्तरालाभे प्रतिप्रसवमाह **काममिति। अभिरूपं** गुणवन्तम् । रिपोः पात्रत्वाभावे हेतुः। **द्विषतेति**। अरिणा **भुक्तं न** केवलं **निष्फलं** अपि त्वयशस्करमित्याह **हीति**। मित्रभोजने यशो दृश्यते ।। १४४ ।।

(५) **नन्दनः**। श्राद्धेऽप्यरिमित्रयोररिरेव वर्जनीयतर इत्याह **काममिति। अभिरूपं** विद्वांसम् । **हविः**शब्दोऽयं सामर्थ्यात्किव्यवचनः ।। १४४ ।।

(६) **रामचन्द्रः**। **कामं** ऐच्छिकं **श्राद्धे** मित्रमर्चयेत् । अपि निश्चयेन, **अभिरूपं** योग्यं गुणसंपन्नम**रिं** शत्रुं **नार्चयेत्** हि निश्चयेन। **द्विषता** शत्रुणा **भुक्तं हविः** दातुः **प्रेत्य निष्फलं** भवति ।। १४४ ।।

(७) **मणिरामः**। यद्यन्यो विद्वान्न लभ्यते तदा किं कर्तव्यमत आह **काममिति**। तथा चैतादृशस्थलेऽपि मित्रं चेद्रोचयति तदा न पूर्वोक्तदोष इत्यर्थः ।। १४४ ।।

(८) **गोविन्दराजः। काममिति**। वरं गुणवद्ब्राह्मणान्तराभावे सगुणं मित्रं **श्राद्धे** भोजयेत् न योग्यमपि शत्रुं, यतोऽरिणा श्राद्धादि **भुक्तं** परलोके **निष्फलं भवतीति**। अन्याभावे गुणवन्मित्रप्रतिप्रसवार्थमेतत् । छन्दोमात्राध्यायिनि श्रोत्रियशब्दप्रयोगात् तदाश्रयणं नैयमिकमुक्तम् ।। १४४ ।।

**यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।।**
**शाखान्तगमथाध्वर्युं छन्दोगं तु समाप्तिकम् ।। १४५ ।।**

(१) **मेधातिथिः**।' वेदपारग–शाखान्तग–**समाप्तिकाः**' शब्दा एकार्थाः समन्त्रब्राह्मणिकायाः कृत्स्नायाः शाखाया अध्येतृनाचक्षते––न मन्त्रसंहिताया, नापि ब्राह्मणस्य, तदेकदेशस्य वा। वेदैकशाखाध्यायिनोऽपि श्रोत्रिया उच्यन्ते। 'श्रोत्रियाय देय'मित्यत्र, श्रोत्रियश्च वेदाध्यायी, वेदशब्दश्च समन्त्रब्राह्मणिकां शाखामाचष्टे, तदेकदेशमपि अतस्तन्निवृत्त्यर्थमुक्तम् कृत्स्नशाखाध्यायी कथं गृह्येतेत्येवमर्थमिदम् ।

"ननु चाश्रमिणो भोजनीया इत्युक्तम् । तत्रानधीतसकलस्वाध्यायानां नैव गार्हस्थ्याद्याश्रमसम्भवः। एवं ह्युक्तं 'वेदः कृत्स्नोऽधिगन्तव्य' इति"। ब्रह्मचारिणस्तर्हि प्रक्रान्तवेदाध्ययनस्य असमाप्तिगस्यापि स्यात्। वेदपारगशाखान्तगसमाप्तिकशब्दैरेकार्थैः कात्स्न्यं सर्वैरेव प्रतिपाद्यते। एकेनैव सिद्धे वृत्तानुरोधान्नानारूपैकार्थानेकशब्दोच्चारणम्। वेदानां पारं गच्छति। शाखाया अन्तःसमाप्तिरस्यास्तीति **समाप्तिकः**। **अध्वर्युर्यजुर्वेदशाखाध्यायी**, नायमृत्विग्विशेषवचनोऽध्वर्युशब्दः। 'आध्वर्यवः' प्रवचनमुच्यते, तदध्ययनसम्बन्धात् पुरुषोऽध्वर्युः। **छन्दोगः** सामवेदाध्यायी। स्मृत्यन्तरे त्रिसाहस्रविद्यः **समाप्तिक** उक्तः। तत्र 'सहस्र'शब्दः सहस्रगीतिसम्बन्धात् सामवेदे वर्तते, तस्य इमाः

साहस्र्यस्तिस्रः साहस्र्यः विद्या यस्य स 'त्रिसाहस्रविद्यः'। ताण्डिकमौक्थिक्यं सामगानमिति सहस्रवर्त्मनः सामवेदस्य तिस्रो विद्याः। दशतयी चतुःषष्टि ब्राह्मणं च बह्वृचम्। अन्ये त्वाथर्वणिकनिषेधार्थमिमं श्लोकं मन्यन्ते। कार्त्स्न्यविवक्षायामेतदेवावक्ष्यत्—— 'अधीते वेदशाखां यः कृत्स्नां तं भोजयेद् द्विजम्' इति "ननु चाथर्वणिकनिषेधेऽप्येतत्समानम्। तत्रापि शक्यमेवं वक्तुं तन्निषेधे प्रायेण——'न भोज्य आथर्वणिक' इत्येवमेवावक्ष्यत्। स्वशब्देन निषेधप्रतिपत्तिर्लाघवं च"। नैतदेवम्; कमन्यविधानेनान्यनिषेधोऽवगम्यते स्वशब्देन वा निषेधः ? । विचित्रा धर्मोपदेशस्य कृतिर्मनोः ॥(१४४)१४५॥

(२) **सर्वज्ञनारायणः।** वेदपारगमेकवेदसंबन्धिपूर्णैकशाखाध्यायिनम्। शाखान्तगमित्यस्याप्ययमर्थः। अध्वर्युं यजुर्वेदिनं समाप्तिकं शाखापारगं। समाप्तिगमिति क्वचित्पाठः ॥ १४५ ॥

(३) **कुल्लूकः।** श्रोत्रियायैव देयानीत्यनेन छन्दोमात्राध्यायिनि श्रोत्रियशब्दप्रयोगात्तदाश्रयणमावश्यकमुक्तम्। इदानीं त्वधिकफलार्थं मन्त्रब्राह्मणात्मककृत्स्नशाखाध्यायिनि श्रोत्रिये दानमाह **यत्नेति।** ऋग्वेदिनं मन्त्रब्राह्मणात्मकशाखाध्यायिनं यत्नतो भोजयेत् तथाविधमेव यजुर्वेदिनम्। वेदस्य पारं गच्छतीति **वेदपारगः।** शाखाया अन्तं गच्छतीति **शाखान्तगः।** समाप्तिरस्यास्तीति **समाप्तिकः।** सर्वैरेव शब्दैर्मन्त्रब्राह्मणात्मककृत्स्नशाखाध्येताऽभिहितः ॥ १४५ ॥

(४) **राघवानन्दः।** श्राद्धभोक्तृषु नियममाह **यत्नेनेति। बह्वृचं** ऋग्वेदमन्त्राध्यायिनं। **शाखान्तगं** शाखाध्यायिनं तमेव **अध्वर्युं** यजुर्वेदिनं। सामगं **छन्दोगं समाप्तिगं** मन्त्रब्राह्मणोपनिषदन्तगं अथर्ववेदविन्निवृत्त्यर्थं विशेषणानीति केचित् ॥ १४५ ॥

(५) **नन्दनः।** पूर्वं श्रोत्रिया एव पात्रमित्युक्तम्। इदानीं तेषु विशेषमाह **यत्नेनेति। वेदपारगं** एकस्या ऋग्वेदशाखायाः पारगम्। एतेन शाखान्तगं समाप्तिगमिति पदद्वयमिह व्याख्यातम्। **अध्वर्युर्यजुर्वेदाध्यायी** ॥ १४५ ॥

(६) **रामचन्द्रः। बह्वृचं** ऋग्वेदाध्यायिनं **वेदपारगं यत्नेन भोजयेत्। शाखान्तगं** स्वशाखापारगं वा। **अधाध्वर्युं** यजुर्वेदाध्यापकं वा। **छन्दोगं** सामशाखाध्यायिनं वा। **समाप्तिगं** स्वशाखापारगमित्यर्थः ॥ १४५ ॥

(७) **मणिरामः।** अधिकफलार्थमाह **यत्नेनेति। बह्वृचं** ऋग्वेदिनं **अध्वर्युं** यजुर्वेदिनं **समाप्तिकं** समाप्तिरस्यास्तीति समाप्तिकः तं वेदपारग-शाखान्तग-समाप्तिकशब्दैः मन्त्रब्राह्मणात्मककृत्स्नशाखापाठकोऽभिधीयते ॥ १४५ ॥

(८) **गोविन्दराजः।** अधुना तु सति संभवे फलविशेषार्थं समस्तशाखाध्यायिनि दानमाह **यत्नेनेति।** समस्तशाखाध्यायिनं **बह्वृचं** तथाविधमेवा**ध्वर्युं छन्दोगं** चैवंविधमेव **यत्नेन श्राद्धे भोजयेत्।** वृत्तवशान्नानाप्रकारैः शब्दैः सकलशाखाध्यायिन एवैते युक्ताः। ये तु छन्दोमात्राध्यायिप्रतिषेधार्थं श्रोत्रियायैव देयानीत्येतद्विशेषणार्थत्वमस्याहुः। तेषां अनेनैव सिद्धे श्रोत्रियायैव देयानीत्येतदनर्थकं स्यात् ॥ १४५ ॥

**एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।।**
**पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ।। १४६ ।।**

(१) **मेधातिथिः ।** कश्चिन्मन्येत पितृकृत्ये त्रीनित्युक्तम् । पूर्वश्लोके च नानाशाखाध्यायिन उपात्ताः । तत्र सब्रह्मचारिणां नास्ति प्राप्तिरिति तदाशङ्कानिवृत्त्यर्थमिदम् । **एषां** त्रयाणां त्रैविद्यानाम**न्यतमो** भोजनीयः । एतदुक्तं भवति– समानशाखाध्यायिनो नानाशाखाध्यायिनो वा भोजनीयाः । **अर्चितः** पूजितः प्रार्थित अर्घादिना । **साप्तपौरुषी तृप्तिः ।** सप्तपुरुषान्व्याप्नोति । अनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः । कालमहत्त्वोपलक्षणार्थं चैतत् । दीर्घकाला पितॄणां तृप्तिर्भवति । यावत्सप्तपुरुषा आगामिनः पुत्रपौत्रादयो जाता जनिष्यन्ते वा तावत्तथाविधब्राह्मणदानात् पितरस्तृप्यन्ति । **शाश्वती** नान्तरा विच्छिद्य पुनरुद्भवति, किं पुनः सर्वदा स्थितैव ।। १४६ ।।

(२) **सर्वज्ञनारायणः । शाश्वती** चिरस्थायिनी **साप्तपौरुषी** पिण्डतत्तल्लेपभागितया सप्तमपुरुषपर्यन्तगामिनी ।। १४६ ।।

(३) **कुल्लूकः ।** तद्भोजनेऽधिकं फलमाह **एषामिति । एषां** संपूर्णशाखाध्यायिनां बह्वृचादीनां मध्या**दन्यतमो** यस्य सम्यक् **पूजितः** सञ्छ्राद्धे भुङ्क्ते **तस्य** पुत्रादिसप्तपुरुषाणां **शाश्वत्य**विच्छिन्ना **पितॄणां तृप्तिः** स्यात् । **साप्तपौरुषी**त्यनुशतिकादित्वादुभयपदवृद्धिः, तस्य चाकृतिगणत्वात् ।। १४६ ।।

(४) **राघवानन्दः ।** एतत्त्रयाणां भोजने पितृतृप्तिविशेषमाह **एषामिति । अर्चितः** श्राद्धादौ शाश्वतं अनवच्छिन्नं 'शतायुर्वै पुरुष' इति श्रुतेः काललक्षणा सप्तशतवर्षपर्यन्ता **साप्तपौरुषी**त्येवं सर्वत्र । आगामिसप्तपुरुषपर्यन्तेति **मेधातिथिः** ।। १४६ ।।

(५) **नन्दनः । एषां** बह्वृचादीनाम् । **साप्तपौरुषी शाश्वती** तृप्तिः स्यात्, सप्तपुरुषाणां सदातनी तृप्तिः स्यादित्यर्थः । सप्तपुरुषा यमेनोक्ताः त्रयः पूर्वे पराश्चैव ह्यात्मा तत्रैव सप्तमः । ते सप्तपुरुषाः सर्वे तदन्नमुपभुञ्जत इति ।। १४६ ।।

(६) **रामचन्द्रः । यस्य** श्राद्ध **एषां** श्रोत्रियाणा**मन्यतमो भुञ्जीत तस्य पितॄणां शाश्वती तृप्तिः** स्यात् । **साप्तपौरुषी** सप्तपुरुषपर्यन्तेत्यर्थः ।। १४६ ।।

(७) **मणिरामः ।** तद्भोजनेऽधिकफलमाह **एषामिति । एषां** मध्ये **अन्यतमः** यः कश्चित् ।। १४६ ।।

(८) **गोविन्दराजः । एषामिति ।** एषां बह्वृचादीनां मध्यात् **अन्यतमो यस्य** त्वर्चितमनाः **श्राद्धं भुञ्जीत तस्य** पित्रादिसप्तपुरुषव्यापिनी अनवच्छिन्ना **पितॄणां तृप्तिः स्यादिति** समस्तशाखाध्यायिभोजनफलकथनम् । अत एव विज्ञायते-यत्रक्वचनावस्थिताः पितरः पुत्राद्युपहृतकव्यैः सुखमासते । इतश्च पितृतृप्तिफलमेतत्; श्राद्धकर्मणि च अकृताभ्यागमकृतविप्रणाशावत्र चोदनीयौ, शास्त्रैकगोचरत्वे वैश्वानरवत्तथैवागमात् ।। १४६ ।।

**एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।।**
**अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ।। १४७ ।।**

(१) **मेधातिथिः ।** पितृयज्ञमित्यारभ्य पञ्चविंशतिमात्राः श्लोका अतिक्रान्तास्तत्रैतावानर्थोऽभिहितः । अमावास्यायां श्राद्धं कर्तव्यम् । श्रोत्रियो विद्वान् साधुचरणः प्रख्याताभिजनः श्रोत्रियापत्यं असम्बन्धी भोजनीयः । परिशिष्टं सर्वमर्थवादार्थम् । **एषो**ऽनन्तरोक्तः **प्रथमो** मुख्यः **कल्पो** विधिः, श्राद्धे यदसम्बन्धिने दीयते । **अयं तु** वक्ष्यमाणो**ऽनुकल्पो** ज्ञेयः । मुख्याभावे योऽनुष्ठीयते प्रतिनिधिन्यायेन सोऽनुकल्प उच्यते । **सदे**त्यादि स्तुत्यर्थः ।। १४७ ।।

(२) **सर्वज्ञनारायणः । प्रथमः कल्पो** मुख्यः पक्षः ।। १४७ ।।

(३) **कुल्लूकः ।** हव्यकव्ययोरुभयोरेव प्रदाने यदसंबन्धिश्रोत्रियादिभ्यो दीयत इत्ययं **मुख्यः कल्प** उक्तः । **अयं** तु मुख्याभावे वक्ष्यमाणो**ऽनुकल्पो** ज्ञातव्यः सर्वदा साधुभिर**नुष्ठितः** ।। १४७ ।।

(४) **राघवानन्दः ।** कल्पान्तरं वदन्नुक्तमनुवदति **एष इति । प्रथमो** मुख्यः । **अनुकल्प** एषामभावप्रयुक्तः प्रतिनिधिः ।। १४७ ।।

(५) **नन्दनः । एष** इत्युक्तस्य परामर्शः। **अयमिति ।** वक्ष्यमाणस्य । **अनुकल्पोऽपि** प्रशस्त एवेत्युक्तम् । **यः सदा सद्भिरनुष्ठित** इति ।। १४७ ।।

(६) **रामचन्द्रः ।** हव्यकव्ययोः प्रदाने **एष प्रथमः कल्पः उक्तः । अयं अनुकल्पो** वक्ष्यमाणलक्षणः । **सदा सद्भिरनुष्ठितः** ।। १४७ ।।

(७) **मणिरामः । प्रथमः कल्पः** मुख्यः पक्षः । **अयं** वक्ष्यमाणः **अनुकल्पः** गौणः पक्षः ।। १४७ ।।

(८) **गोविन्दराजः । एष इति ।** हव्यकव्यप्रदानेन **एष** मुख्यो विधिः यदसंबन्धिभ्यः श्रोत्रियादिभ्यो दीयत इति । **अयं** वक्ष्यमाणः पुनर्मुख्याभावे विधिर्बोद्धव्यः; मुख्याभावे च सर्वदा साधुभिर**नुष्ठितः** ।। १४७ ।।

**मातामहं मातुलं च स्वस्त्रीयं श्वशुरं गुरुम् ।।**
**दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ।। १४८ ।।**

(१) **मेधातिथिः । स्वस्त्रीयो** भगिन्याः पुत्रः । **विट्पति**र्जामाता, प्रजावचनत्वात् विट्शब्दस्य । अतिथिरित्यन्ये । स हि सर्वविशां पतिः गृहाभ्यागतो लोकेऽपि विट्शब्देनोच्यते । **बन्धुः** शालः सगोत्रादिः ।। १४८ ।।

(२) **सर्वज्ञनारायणः । गुरु**माचार्यं । **विट्पतिं** जामातरं । **बन्धुं** मातुलपुत्रादिम् ।। १४८ ।।

(३) **कुल्लूकः । स्वस्त्रीयो** भागिनेयः । **गुरु**र्विद्यागुरुराचार्यादिः । **विड्**दुहिता

तस्याः **पतिर्**विट्पतिर्जामाता । **बन्धुर्**मातृष्वसृपितृष्वसृपुत्रादिः । एतान्मातामहादीन्दशमुख्यश्रोत्रियाद्यसंभवे भोजयेत् ।। १४८ ।।

(४) **राघवानन्दः** । तमेवाह **मातामहमिति** । **स्वस्त्रीयं** भागिनेयं । **दौहित्रं** दुहितुरपत्यं । **विट्पतिं** जामातरं । **बन्धुं** मातृष्वसुः पुत्रादिकम् ।। १४८ ।।

(५) **नन्दनः** । **विशः** प्रजायाः **पति**रिति **विट्पति**र्जामाता ।। १४८ ।।

(६) **रामचन्द्रः** । **मातामहादयः** प्रसिद्धाः, **विट्पतिं** पितृगृहे कन्या तस्याः **विट्पतिं** भगिनीपतिमित्यर्थः । **ऋत्विक्** प्रसिद्धः । **याज्यः** शिष्यः **बन्धुः** शालसगोत्रादिः एतान्भोजयेत् ।। १४८ ।।

(७) **मणिरामः** । अनुकल्प एवाह **मातामहमिति** । **विट्पतिं** जामातरं, **बन्धुः** मातृस्वस्रादिपुत्रम् । श्रोत्रियाद्यसंभवे एतान् दश भोजयेदित्यर्थः ।। १४८ ।।

(८) **गोविन्दराजः** । **मातामहमिति** । **मातामहमातुलभागिनेयश्वशुरविद्यागुरुदौहित्र**र्त्विग्याज्यान् भोजयेत् । विट् प्रजा तस्याः पतिं **विट्पतिं** जामातरं **बन्धुं** च सगोत्रादिकम् ।। १४८ ।।

**न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।।**
**पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ।। १४९ ।।**

**[तेषा*मन्ये पंक्तिदूष्यास्तथान्ये पंक्तिपावनाः ।**
**अपांक्तेयान् प्रवक्ष्यामि कृत्यानर्हान् द्विजाधमान् ।।]**

(१) **मेधातिथिः** । नायं दैवे कर्मणि ब्राह्मणपरीक्षाप्रतिषेधः, किं तर्हि ? काणश्लीपद्यादीनां कदाचिद्दैवेऽभ्यनुज्ञानार्थः । **पित्र्ये कर्मणि** श्राद्धकाले प्राप्ते परीक्षां यत्नेन कुर्यात्, न दैवे । कदाचिद्वक्ष्यमाणानपि भोजयेत् । ये चाभ्यनुज्ञायन्ते तान्दर्शयिष्यामः । अन्ये तु वक्ष्यमाणस्य प्रतिषेधप्रकरणस्य यत्नतो वर्जनार्थमुपक्रममात्रं श्लोको, न तु काणादीनां दैवेऽभ्यनुज्ञानार्थः ।। १४९ ।।

(२) **सर्वज्ञनारायणः** । **न परीक्षेत** दोषगुणौ सूक्ष्मेक्षिकया नावश्यमन्वेष्यौ । **दैवे** वैश्वदेविके तत्रापि स्तेनवृत्तित्वादिकं वक्ष्यमाणमवश्यं परीक्ष्यम् ; 'हव्यकव्ययो'रित्यभिधानात् ।। १४९ ।।

(३) **कुल्लूकः** । धर्मज्ञो **दैव**श्राद्धे भोजनार्थं **न ब्राह्मणं** यत्नतः **परीक्षेत** लोकप्रसिद्धिमात्रेणासौ साधुतया भोजयितव्यः । **पित्र्ये** पुनः **कर्मण्यु**पस्थिते पितृपितामहाद्यभिजनपरीक्षा कर्तव्येति **प्रयत्नतः**शब्दस्यार्थः ।। १४९ ।।

(४) **राघवानन्दः** । पैत्र्ये ब्राह्मणपरीक्षामनुवदन् दैवे तदभावमाह **नेति** । **दैवे** देवपक्षे देवतादेये श्राद्धे वा ।। १४९ ।।

(५) **नन्दनः** । **प्रयत्नत** इति दैवेऽप्यवकृष्य योजनीयम् । **दैवे** कर्मणि **प्रयत्नतो न परीक्षेत** । अनेन किंचित्परीक्षणमप्रतिषिद्धमित्यवगन्तव्यम् ।। १४९ ।।

(६) **रामचन्द्रः** । पितृकर्मणि **प्राप्ते ब्राह्मणान्यत्नतः परीक्षेत** ।। १४९ ।।

[**रामचन्द्रः** । **तेषा*मिति** । ये पङ्क्तिसंदूष्याः पङ्क्तिसन्दूषणकर्तारः ।। १ ।।]

(७) **मणिरामः। दैवे कर्मणि** दैवश्राद्धभोजनार्थम् ।। १४९ ।।

(८) **गोविन्दराजः। नेति।** धर्मज्ञः **दैवे कर्मणि** भोजनार्थं **ब्राह्मणं न परीक्षेत** लोकप्रसिद्धिमात्रेणैवासौ तथा प्रतिपद्य तत्र भोजनीयः। **पित्र्ये कर्मण्युपस्थिते** 'दूरादेव परीक्षेते'त्युक्तनीत्या **यत्नतः परीक्षेत** ।। १४९ ।।

**ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः ।।**
**तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ।। १५० ।।**

(१) **मेधातिथिः। स्तेनः** चौरः। **पतितः** पञ्चानां महापातकानां अन्यतमस्य कर्ता। **क्लीबो** नपुंसकः उभयव्यञ्जनो वातरेताः षण्ढश्च। **नास्तिका** लोकायतिकादयः, 'नास्ति दत्तं नास्ति हुतं नास्ति परलोक' इति ये स्थितप्रज्ञास्तेषां 'वृत्ति': आचारः अश्रद्दधानता, नास्तिकवृत्तिर्वृत्तिर्येषां ते **नास्तिकवृत्तयः।** उत्तरपदलोपी समासः। नास्तिका इत्येव सिद्धे वृत्तिपदसमाश्रयणं श्लोकपूरणार्थम्। अथवा नास्तिकेभ्यो वृत्तिर्जीवनं येषां त एवमुच्यन्ते। **तान् हव्यकव्ययो**र्दैवे पित्र्ये च **अनर्हान्मनुरब्रवीत्।** प्रतिषेधादरार्थं मनुग्रहणम्। सर्वधर्माणां मनुनोक्तत्वात् ।। १५० ।।

(२) **सर्वज्ञनारायणः। स्तेना** अल्पस्तेयवृत्तयः। **पतिता**स्त्यक्तस्ववर्णधर्मतया। पतिततुल्याः। **क्लीबाः** षण्ढाः। **नास्तिकवृत्तयो** नास्ति कर्मफलमित्यभिमानिनः ।। १५० ।।

(३) **कुल्लूकः। स्तेन**श्चौरः स च सुवर्णचोरादन्यः, तस्य पतितशब्देनैव ग्रहणात् **पतितो** महापातकी। **क्लीबो** नपुंसकः। **नास्तिकवृत्ति**र्नास्ति परलोक इत्येवं वृत्तिः यस्य। **एतान्** दैवपितृकृत्ययोरुभयोरेवायोग्यान्**मनुरब्रवीदिति**। मनुग्रहणं निषेधादरार्थं। सर्वधर्माणामेव मनुनोक्तत्वात् ।। १५० ।।

(४) **राघवानन्दः।** परीक्षामाह **य इति** सप्तदशभिः। **स्तेना**श्चौराः। **पतिताः** पातित्यहेतवो वक्ष्यन्ते **क्लीबा** नपुंसकाः। कृत्रिमाकृत्रिमभेदेन द्विधा **नास्तिकवृत्तयः।** नास्ति कं परलोकसुखं इति वृत्तिर्वाङ्मानसयोर्येषां ते। हव्यकव्ययोरिति विषयसप्तमी। **अनर्हान्** न पात्रभूतान्। **हव्यं** देवदेयं, **कव्यं** पितृदेयमित्युक्तम् ।। १५० ।।

(५) **नन्दनः। स्तेना** अत्र स्वर्णादन्यस्य द्रव्यस्यापहर्तारः। **क्लीबाः** षण्ढाः। स्वयमास्तिका अपि नास्तिकेभ्यो वृत्तिर्जीवनं येषामिति तथोक्ता अश्रद्दधाना वा ।। १५० ।।

(६) **रामचन्द्रः। हव्यकव्ययोः** ये स्तेनादयस्तान**नर्हान्मनुरब्रवीत्। स्तेनाः** सुवर्णव्यतरिक्तचौराः ।। १५० ।।

(७) **मणिरामः।** अपूज्यानाह **य** इत्याद्यष्टभिः श्लोकैः। **स्तेनाः** सुवर्णचौरादन्ये। तस्य पतितशब्देनैव ग्रहणात्। **पतिताः** महापातकिनः ।। १५० ।।

(८) **गोविन्दराजः। ये स्तेनाः पतिताः क्लीबा इति।** स्तेनादीन् विप्रान् हव्य-कव्ययोरुभयोरप्ययोग्यान् मनुराह। चोरान् ब्राह्मणसुवर्णादन्यत्र, तस्य पतितत्वेनोपसंग्रहात्। **पतित**मेकादशे वक्ष्यति सुवर्णादन्यत्र, तस्य पतितत्वेनोपसंग्रहात्। पतितमेकादशे वक्ष्यति क्लीबो नपुंसकम्। नास्ति परलोककर्मेत्येवं वर्तनं येषां ते नास्तिकवृत्तयः ।।१५०।।

**जटिलं चानधीयानं दुर्बलं कितवं तथा ॥**
**याचयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत् ॥ १५१ ॥**

(१) **मेधातिथिः। जटिलो** ब्रह्मचारी। तस्य ह्ययं केशविशेषः पाक्षिको विहितो–"मुण्डो वा जटिलो वा स्यात्" इति। उपलक्षणं च जटा ब्रह्मचारिणस्ततो मुण्डोऽपि प्रतिषिध्यते। तस्य चानधीयानस्य प्रतिषेधः। "ननु 'श्रोत्रियायैव देयानि' इति चानधीयानस्य प्राप्तिरेव नास्ति"।

प्रक्रान्ताध्ययनः अनधीतवेदः अगृहीतवेदश्चेत्प्राप्नुयात्। "ननु च 'वेदपारग' इति वचनात् कुतः प्रक्रान्ताध्ययनस्य प्राप्तिः?"। एवं तर्हि अधीतवेदोऽप्यस्वीकृतवेदोऽनधीयानोऽभिप्रेतः। "व्रतस्थमपि दौहित्रम्" (मनु. ३।२३४) इत्यनेन वा दौहित्रतैवात्र नाध्ययनमिति कश्चिन्मन्येत तदर्थमिदम्। अनधीयानस्य प्रतिषेधाद्विदुषस्तस्याधिकारोऽस्तीत्यवगम्यते। **दुर्बालः** स्खलितलोहितकेशो विकलेन्द्रियो वा। तस्य हि निर्वचनं कुर्वन्ति–दूर्वया शाद्वलेनाप्यलं तस्य वासो भवतीति। स हि दूर्वयैव प्राव्रियते लज्जया च वाससामभावे तावन्मात्रेणाप्यपिदधाति शेफम्। **कितवो** द्यूतकारः। **याजयंति च ये पूगान्** संघान्। व्रात्यस्तोमादिभिर्व्रात्यानां हि संहितानां यागो विहितः। प्रतिषिद्धं च तद्याजनं 'व्रात्यानां कृत्वेति'। वयं ब्रूमः–यः क्रमशः प्रत्येकमपि बहून्याजयति बहुकृत्व आर्त्विज्यं करोति, सोऽपि न भोज्यः। तथा च **वसिष्ठः** "यश्चापि बहुयाज्यः स्याद्यश्चोपनयते बहून्" इति। केचिदाहुः–श्राद्धग्रहणात्पित्र्य एवैषां प्रतिषेधो न तु दैवे। तदयुक्तम्। तदपि श्राद्धांगमेव श्राद्धशब्देन युक्तं वक्तुम् ॥ १५१ ॥

(२) **सर्वज्ञनारायणः। जटिलं** ब्रह्मचारिणं। मन्त्र**मनधीयानम**ध्ययनाद्विरतं। **दुर्वालो** दुश्चर्मा, शिपिविष्ट इति यावत्। **कितवो** द्यूतरहितः। **पूगान्**समूहान् याजयन्तीत्यनेन याजका विवक्षिताः। तत्र ह्यनेके यजमाना भवन्ति, सत्रे तु यजमानत्वादृत्विजामदोषः ॥ १५१ ॥

(३) **कुल्लूकः। जटिलो** ब्रह्मचारी। 'मुण्डो वा जटिलो वा स्यादि'त्युक्तब्रह्मचार्युपलक्षणत्वाज्जटिलत्वस्य मुण्डोऽपि निषिध्यते। **अनधीयानं** वेदाध्ययनरहितं यस्योपनयनमात्रं न वेदादेशः। तेनास्वीकृतवेदस्यापि ब्रह्मचारिणो वेदाध्ययनकर्तुरभ्यनुज्ञानार्थोऽयं निषेधः। अतः 'श्रोत्रियायैव देयानीति' (३।१२८) ब्रह्मचारीतरविषयम्। **दुर्बलो** दुश्चर्मा। **मेधातिथिस्तु दुर्बालमिति** पठित्वा खलतिर्लोहितकेशो वा दुश्चर्मा वेत्यर्थत्रयमुक्तवान्। **कितवो** द्यूतकृत् **पूगयाजका** बहुयाजकाः। 'पूगः क्रमुकवृन्दयो'रित्याभिधानिकाः। अत एव **वसिष्ठः** 'यश्चापि बहुयाज्यः स्याद्यश्चोपनयते बहूनि'ति। **ताञ्छ्राद्धे** न **भोजयेदिति** न दैवे निषेधः। यत्रोभयत्र निषेधो मनोरभिमतः, तत्र हव्यकव्यग्रहणमुभयत्रेति वा करोति ॥ १५१ ॥

(४) **राघवानन्दः। जटिलं** ब्रह्मचारिणं **अनधीयानं** वेदाध्ययनरहितं। **दुर्बलं** दुश्चर्माणं **दुर्वालं** कपिलकेशमिति **मेधातिथिः। कितवं** द्यूतरतं। **पूगान्**बहून् श्रेणीर्वा ॥ १५१ ॥

मनुस्मृति २/११

(५) **नन्दनः**। **जटिलं** ब्रह्मचारिणम्। तस्य विशेषणम**नधीयानमिति**। **दुर्वालं** दुश्चर्माणम्। **कितवं** द्यूतकारकम्। **पूगान्** गणान् श्राद्धे निषेधाद्दैवेऽनुज्ञानमर्थात्सिद्धम् ॥ १५१ ॥

(६) **रामचन्द्रः**। **जटिलो** ब्रह्मचारी। स भोजने प्रतिषिध्यते। **दुर्बलं** दुःखेन बलिनमिति। दुर्वर्णं दुश्चर्माणमित्यर्थः। **पूगाः** श्रेणयः। एतान् श्राद्धे न भोजयेत् ॥ १५१ ॥

(७) **मणिरामः**। **जटिलं** ब्रह्मचारिणम्। जटिलशब्दो ब्रह्मचार्युपलक्षकः। तेन मुण्डोऽपि निषिद्धः। **दुर्बलः** दुश्चर्मा। **कितवः** द्यूतकर्ता। **पूगयोजकः** बहुयाजकः ॥ १५१ ॥

(८) **गोविन्दराजः**। **जटिलमिति**। ब्रह्मचारिणं अस्वीकृतवेदं अत्यन्तानध्ययनस्य श्रोत्रियायैव देयानीति नियमे सति प्राप्त्यभावात्। तथा दुश्चर्मद्यूतवृत्त्ययाज्ययाजकान् श्राद्धे न भोजयेत्। दैवे त्वनिषेधः, तथा यत्रोभयनिषेधमिच्छति तत्र हव्यकव्यग्रहणं उभयत्र चेति करोति ॥ १५१ ॥

**चिकित्सका देवलका मांसविक्रयिणस्तथा ॥**
**विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥ १५२ ॥**

(१) **मेधातिथिः**। भिषजः **चिकित्सकाः**। **देवलकाः** प्रतिमापरिचारकाः। आजीवनसम्बन्धेनैतौ प्रतिषिध्येते। धर्मार्थत्वे तु चिकित्सकदेवलत्वयोरदोषः। **मांसविक्रयिणः** सौनिकाः। द्वितीयान्तपाठे पूर्वश्लोकादाख्यातानुषङ्गः। **विपणेन जीवन्तः** प्रतिषिद्धेन पणेन। प्रतिषिद्धाः पणा दशमाध्याये वक्ष्यन्ते। तेन ये जीवन्ति ते। **वर्ज्याः** उभयत्र। **मांसविक्रयिणस्तु** धर्मार्थमपि निषिध्यन्ते। यस्य केनचिन्मांसमुपहृतम्; अन्यस्य च तेनार्थः, उपहृतमांसस्य च घृतेन होमोपयोगिना,—स मांसं घृतेन विनिर्मिमीते,—भवत्यसौ धर्मार्थो विनिमयः। विक्रयशब्दवाच्यता विनिमयस्यापि भवतीत्यत ईदृशा धर्मार्थमांसविक्रयिणोऽपि प्रतिषिध्यन्ते ॥ १५२ ॥

(२) **सर्वज्ञनारायणः**। **चिकित्सकान्** भिषग्वृत्तीन्। **देवलकान्** धनार्थं देवार्चकान् **विपणेन** पण्यवीथ्यां विक्रेयप्रसारणेन जीवन्तः ॥ १५२ ॥

(३) **कुल्लूकः**। चिकित्सको भिषक्। **देवलः** प्रतिमापरिचारकः। वर्तनार्थत्वेनैतत्कर्म कुर्वतोऽयं निषेधो नतु धर्मार्थम्; 'देवकोशोपभोजी च नाम्ना देवलको भवे'दिति **देवल**वचनात्। **मांसविक्रयिणः** सकृदपि। 'सद्यः पतति मांसेने'ति लिङ्गात्। **विपणेनेति**। **विपणो** वणिज्या तया जीवन्तः। 'हव्यकव्ययो'रित्यभिधानाद्दैवे पित्र्ये चैते त्याज्याः ॥ १५२ ॥

(४) **राघवानन्दः**। **देवलकाः** 'देवकोशोपजीवी च नाम्ना देवलको भवेदि'ति **देवलेन** निर्णीताः। **मांसविक्रयिणः** सकृदपि 'सद्यः पतति मांसेने'ति वचनात्। **विपणेन** वाणिज्येन। **वर्ज्याः** पात्रत्वेनेति शेषः ॥ १५२ ॥

(५) **नन्दनः।** 'देवकोशोपजीवी तु नाम्ना देवलको भवेदि'ति स्मृत्यन्तरवचनम्। मांसविक्रयादन्येनापि जीविनो **वर्ज्याः** प्रतिषिद्धाः। क्षीरादिद्रव्यं तद्विक्रयो विपणस्तेन जीवन्तः।। १५२ ।।

(६) **रामचन्द्रः।** **चिकित्सकादयो** हव्यकव्ययोः प्रदाने **वर्ज्याः** स्युः। धर्मार्थे तु चिकित्सकदेवलयोर्दोषाभावः। **विपणेन जीवन्तः** निन्द्यपण्येन जीवन्तः।। १५२ ।।

(७) **मणिरामः।** **देवलः** प्रतिमापरिचारकः 'देवकोषोपभोगी च नाम्ना देवलको भवेदि'ति **देवलवचनात्।** एतत्कर्म कुर्वत एवायं निषेधो ज्ञेयः।। १५२ ।।

(८) **गोविन्दराजः।** **चिकित्सका देवलका मांसविक्रयिणस्तथेति।** चिकित्सकादयो हव्यकव्ययोरुभयोरपि वर्जनीया भवेयुः। **चिकित्सको** भिषक्, **देवलकः** प्रतिषेधः न धर्मार्थम्, तत्र विहितत्वात्। **मांसविक्रयिणः** सकृदपि। तथाच 'सद्यः पतति मांसेने'ति लिङ्गम्। अन्यथा विपणेन गतार्थं स्यात्, इह च **जीवन्त** इत्युपादानात् मांसेन सकृदपि प्रतीयते। **विपणो** वाणिज्यम्।। १५२ ।।

## प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्धुषिस्तथा ॥
## प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ॥१५३॥

(१) **मेधातिथिः।** **प्रेष्य** आज्ञाकरः। ग्रामेण यो यत्रकुत्रचित् कार्येण प्रेष्यते। एवं राजप्रेष्यः। **कुनखी श्यावदन्तकः।** **प्रतिरोद्धा** गुरोर्वाग्व्यवहारेऽन्यत्र च यो गुरोः प्रतिबन्धे प्रातिकूल्ये च वर्तते। **त्यक्ताग्निस्त्रेतावसथ्ययोरन्यतरस्यापि।** **वार्धुषिः** सत्यन्यस्मिन् जीविकोपाये वृद्धिजीविकः। "वृद्धिस्तु योक्ता धान्यानां वार्धुषित्वं तदुच्यते' इति यत्स्मरणं तत्स्वप्रक्रियामेव। वैयाकरणा हि वृद्धिजीविनो धान्यादन्यत्रापि वार्धुषिकशब्दं स्मरन्ति। ते च शब्दार्थस्मरणे प्रमाणतराः, अभियोगविशेषात्।। १५३ ।।

(२) **सर्वज्ञनारायणः।** **प्रेष्यो** धनार्थमादिष्टकारी। **श्यावदन्तकः** कपिशवर्णदन्तः। **प्रतिरोद्धा** विरोधी। **त्यक्ताग्निस्त्यक्ताहितत्रेताग्निः।** **वार्धुषिर्वृद्धिजीवी।।** १५३ ।।

(३) **कुल्लूकः।** भृतिग्रहणपूर्वकं ग्रामाणां राज्ञश्चाज्ञाकारी। कुत्सितनखकृष्णदन्तगुरुप्रतिकूलाचरणशीलत्यक्तश्रौतस्मार्ताग्निकलोपजीविनश्च हव्यकव्ययोर्वर्ज्या इति पूर्वस्यैवात्रानुषङ्ग उत्तरत्र च।। १५३ ।।

(४) **राघवानन्दः।** **प्रेष्य इति।** ग्रामस्य राज्ञो वा। **श्यावदन्तकः** श्यामाः स्वत एवैकद्वित्रा दन्ता यस्य सः। **प्रतिरोद्धा** गुरोः प्रतिकूलाचरणः **त्यक्ताग्निः** विधितः स्वीकृताग्निः अविधितस्त्यक्ता। **वार्धुषिर्वृद्धिमात्रोपजीवी।।** १५३ ।।

(५) **नन्दनः।** पूर्वजन्मनि स्वर्णचोरत्वात्**कुनखिनः** प्रतिषेधः। सुरापानाच्**छ्यावदन्तस्य** प्रतिषेधः। **प्रतिरोद्धा** प्रतिकूलकः। 'समर्थं पण्यमादाय महार्घं यः प्रयच्छति। स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत्।। 'यश्च निन्द्यतरं जीवन्प्रशंसत्यात्मनो गुणान्। स च वार्धुषिको नाम ब्रह्मवादिषु गर्ह्यत' इति **यमवचनम्।।** वर्जनीया इति वक्ष्यति।। १५३ ।।

(६) **रामचन्द्रः।** वर्ज्यानाह **प्रेष्य इति।** ग्रामस्य **प्रेष्यः** प्रेषकः राज्ञः। **गुरोः प्रतिरोद्धा** गुरोः प्रतिकूलः। **त्यक्ताग्निः** अग्नित्यागी त्रेतावसथ्यो त्यागी। वृध्दयोपजीवी **वार्धुषिः**। 'वृध्दया जीवी तु वार्धुषि'रित्यमरः।। १५३।।

(७) **मणिरामः।** **श्यावदन्तकः** कृष्णदन्तः **प्रतिरोद्धा** प्रतिकूलकर्माचरणशीलः **वार्धुषिः** शिल्पादिकलोपजीवी।। १५३।।

(८) **गोविन्दराजः।।** १५३।।

**यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः।।**
**ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च।। १५४।।**

(१) **मेधातिथिः। यक्ष्मी** व्याधितः। राजयक्ष्मगृहीत इत्यन्ये। **पशुपालः** यष्टिहस्तस्तद्वृत्तिजीवनः। **निराकृतिः** सत्यधिकारे महायज्ञानुष्ठानरहितः। अद्यत्वेऽप्यनुपजीव्यः अनद्धा निराकृतिरुच्यते। एवं हि **शतपथे** "यो न देवानर्चति न पितॄन्न मनुष्यान्" इति। यैस्तु पठ्यते "अस्वाध्यायश्रुतधनै (नो) निराकृतिरुदाहृतः" इति न ते शब्दार्थसम्बन्धविदः। तस्येहाप्राप्तिरेव, श्रोत्रियनियमात्। निराकर्ता देवादीनां 'निराकृतिरिति' धात्वर्थानुगमोऽस्ति। धर्मधर्मिणोश्चाभेदविवक्षायां क्तिनापि प्रयोग उपपन्न इति। निपूर्वोऽयं धातुरपवर्जने वर्तते। निराकृता अपवर्जिता उच्यन्ते, 'भोजनान्निराकृता' 'अधिकारान्निराकृता' इति। अवर्जनं चाकृतिः सा निर्गताऽस्मादिति 'निराकृतिः" संस्थानं चाकृतिस्तथा च कुत्सायां निर्द्रष्टव्यो दुराकृतिर्निषिध्यते। आह च "वाग्रूपवयःशीलसंपन्नः" (गौ. सू. १५।९)। वाक्संपन्नो वाग्मी पटुवागिन्द्रियश्च। बहुजिह्वो न भोज्यः। रूपसंपन्नो मनोहरावयवसंनिवेशः। वयःसंपन्नः। 'युवभ्यो दानं प्रथमं प्रतिवयस इत्येक' (गौ. सू. १५।१०) इति। संज्ञाशब्दो वाऽयं क्तिजन्तः। **ब्रह्मद्विट्** ब्राह्मणानां वेदस्य वा द्वेष्टा ब्रह्मशब्दस्योभयार्थवाचित्वात्। "ब्रह्मापि ब्राह्मणः स्मृतः' इति। **गणः** सङ्घः। सहैकया क्रियया जीवन्ति ये ते गणशब्दवाच्यास्तदन्तर्गताश्चतुर्विद्यब्राह्मणाः। **परिवेत्तृपरिवित्ती** वक्ष्यमाणस्वरूपौ।। १५४।।

(२) **सर्वज्ञनारायणः।** पशुपालो वृत्त्यर्थं। निराकृतिरस्वाध्यायः। **ब्रह्म** ब्राह्मणस्तद्द्विट्। **गणाभ्यन्तरो** गणानां नेता ग्रामणीरिति यावत्। गणानामाधिपत्येन देशान्तरप्रापयितार्थलोभेनेति वा।। १५४।।

(३) **कुल्लूकः। यक्ष्मी** क्षयरोगी। **पशुपालो** वृत्त्यर्थतया च्छागमेषादिपोषकः **परिवेत्तृपरिवित्ती** वक्ष्यमाणलक्षणौ। **निराकृतिः** पञ्चमहायज्ञानुष्ठानरहितः। तथाच **च्छन्दोग**परिशिष्टं 'निराकर्ताऽमरादीनां स विज्ञेयो निराकृतिः'। **ब्रह्मद्विड्**ब्राह्मणादीनां द्वेष्टा। **गणाभ्यन्तरो** गणार्थोपसृष्टसंबन्धिधनाद्युपजीवी ।। १५४।।

(४) **राघवानन्दः। यक्ष्मी** कासविशेषयुक्तः। **पशुपाल**स्तदेकजीवी। **परिवित्तिः** वक्ष्यते। **निराकृतिः** पञ्चयज्ञानुष्ठानहीनः। **ब्रह्मद्विट्** वेदविप्रयोर्द्वेष्टा। **गणाभ्यन्तरः** गणार्थोत्सृष्टधनाद्युपजीवी।। १५४।।

(५) **नन्दनः।** **यक्ष्मी** क्षयरोगी तस्य पूर्वजन्मनि ब्रह्महत्वात्प्रतिषेधः। **वृत्त्यर्थं** यः पशून्पालयति स पशुपालः। **परिवेत्तारं** वक्ष्यति। 'अधीत्य विस्मृते वेदे भवे-द्विप्रो **निराकृति**'रिति **देवलः**।। 'आधाय योऽग्निमालस्याद्देवादीन्नैभिरिष्टवान्। निरा-कर्ताऽमरादीनां स विज्ञेयो निराकृति'रिति **कात्यायनः**।। **ब्रह्मद्विट्** ब्राह्मणद्वेषी, **परिवित्ति** वक्ष्यति, **गणावभ्यन्तरो** गणप्रधानो गणस्य नेतेति यावत्।। १५४।।

(६) **रामचन्द्रः।** **यक्ष्म**रोगी। **परिवेत्ता** ज्येष्ठे अकृतदारे सति कनीयान्दारा-नग्नीन्गृण्हाति स परिवेत्ता। ज्येष्ठस्तु **परिवित्तिः।** **निराकृतिः** महायज्ञानुष्ठानरहितः देवादीनां निराकर्ता च। **ब्रह्मद्विट्**ब्राह्मणानां वेदस्य वा द्वेष्टा वेदविस्मरणशीलो वा। **गणाभ्यन्तरः** गणवाहः। क्रियया जीवन्ति एते गणशब्दवाच्याः। तदभ्यन्तरगताः।। १५४।।

(७) **मणिरामः।** **यक्ष्मी** क्षयरोगी, **पशुपालः** वृत्त्यर्थं छागादिपोषकः, **परिवेत्ता** विवाहसंस्काररहिते ज्येष्ठे तत्संस्कारयुक्तः कनिष्ठः **निराकृतिः** पञ्चमहायज्ञानुष्ठान-रहितः, **परिवित्तिः** परिवेत्तुर्ज्येष्ठभ्राता, **गणाभ्यन्तरः** गणार्थदत्तसर्वधनोपजीवी।। १५४।।

(८) **गोविन्दराजः।** **यक्ष्मीति।** क्षयी वृत्त्यर्थत्वेन पशुपालः प्रसिद्धः, परिवेत्तृ-परिवित्ती च वक्ष्यमाणौ। **निराकृतिः** वेदादीनां निराकर्ता अनुपजीव्यः ब्राह्मणानां द्वेष्टा गणमध्यगतो ब्राह्मणादिभिः इत्येते हव्यकव्ययोः वर्ज्याः स्युः।। १५४।।

## कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।।
## पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ।। १५५ ।।

(१) **मेधातिथिः।** चारणनटनर्तकगायकादयः **कुशीलवाः।** **अवकीर्णी** विप्लुत-ब्रह्मचर्यः। **वृषली** शूद्रा तस्याः पतिः। असत्यामन्यस्यां चात्र मन्यन्ते। वृषल्या एव च यः पतिः, यस्य द्विजातिभार्या नास्ति। "कुत एतत् ?"। प्रकरणमन्तरे विगर्हिता-चारसंग्रहे श्रूयते "एतान्विगर्हिताचारान्" (३।१६७) इति। शूद्राविवाहश्च सर्वेषामनुज्ञातत्वात्, न गर्हितः। स च कृतसजातीयापरिणयनस्यानुज्ञातः। अतोऽसत्यां सजातीयायां वृषल्या भर्ता प्रतिषिध्यतेऽत्र।

**पौनर्भवः।** 'पुनर्भूः' पुनरूढा। वक्ष्यति नवमेऽध्याये (१७५) "पत्या वा परित्यक्तेति"। **काण** एकेनाक्ष्णा विकलः। **यस्य च उपपति**र्जायाजारोऽवस्थितायां भार्यायामस्ति। उपेक्षया निन्द्यते। तदुक्तं "अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणीति"।। १५५।।

(२) **सर्वज्ञनारायणः।** **कुशीलवो** नटवृत्तिः। **अवकीर्णी** व्रतमध्ये स्खलित-ब्रह्मचर्यः। पुनर्भूपुत्रः **पौनर्भवः।** **गृहे** भार्यायाम्।। १५५।।

(३) **कुल्लूकः।** **कुशीलवो** नर्तनवृत्तिः। **अवकीर्णी** स्त्रीसंपर्काद्विप्लुतब्रह्मचर्यः प्रथमाश्रमी यतिश्च। **वृषलीपतिः** सवर्णामपरिणीय कृतशूद्राविवाहः। **पौनर्भवः** पुनर्भूपुत्रो वक्ष्यमाणः। **उपपतिर्यस्य** जायाजारो **गृहे**ऽस्ति।। १५५।।

(४) **राघवानन्दः।** **कुशीलवो** नर्तकवृत्तिः। **अवकीर्णी** स्त्रीसंपर्कादुपप्लुत-

ब्रह्मचर्यः। **वृषलीपतिः** सवर्णामपरिणीय कृतशूद्राविवाहः। **पौनर्भवः** पूनर्भूपुत्रः। **यस्योपपतिः** स्वजायाजारः। **गृह** इत्यनेन नान्यत्र तथा दूषणमिति भावः ॥ १५५ ॥

(५) **नन्दनः। कुशीलवो** गायकः। 'गूढलिङ्गय**वकीर्णो** स्याद्यश्च भग्नव्रतस्तथेति' **देवलः** ॥ **वृषलीपतिः** अनूढत्रैवर्णिकस्त्रीकः केवलशूद्रापतिः। **काणस्य** पूर्वजन्मनि परनेत्रोत्पाटकत्वात्प्रतिषेधः। 'परदाराभिसंयोगात्पुरुषो जार उच्यते। स एवोपपतिर्ज्ञेयो यः सदा संवसेद्गृहे' इति **देवलः** ॥ १५५ ॥

(६) **रामचन्द्रः। कुशीलवो** नटनर्तकः। **अवकीर्णो** क्षतव्रतः। **पौनर्भवः** पुनर्भ्वाञ्जातः। परपूर्वापतिः **पुनर्भूः। काणः** एकाक्षी। **यस्य गृहे चोपपतिः** जारः। एते वर्ज्याः ॥ १५५ ॥

(७) **मणिरामः। कुशीलवः** नर्तनवृत्तिः, अवकीर्णी स्त्रीसंसर्गाद्भ्रष्टब्रह्मचर्यः। **वृषलीपतिः** सवर्णामपरिणीय कृतशूद्राविवाहः, **पौनर्भवः** पुनर्भूपुत्रः, उपपतिः स्त्रीजारः ॥ १५५ ॥

(८) **गोविन्दराजः। कुशीलव इति।** नटगायकादिः। कृतस्त्रीसंसर्गयोगो ब्रह्मचारी शूद्राया भर्ता। पुनर्भ्वाः पुत्रो वक्ष्यमाणः, काणः, यस्य च जायाजारो गृहे इत्येते हव्यकव्ययोः परिहरणीयाः ॥ १५५ ॥

**भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ॥**
**शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥ १५६ ॥**

(१) **मेधातिथिः। भृतकाध्यापकः** भृतकः सन् यो स्थितोऽध्यापकः। भृतक इति 'यदीयद्ददासि वेदमध्यापयामीति' यः प्रवर्तते पणेन स भृतकाध्यापकः। एषा हि भृतिः प्रसिद्धा कायवाहादिषु। यस्त्वियता धनेनेदमध्यापयामीति न निश्चित्य वचनव्यवस्थया पूर्वमध्यापयति लभते चाध्यापनार्थं, नासौ 'भृतकाध्यापकः'। अनिरूपितपरिमाणपूर्वं चार्थदाने विहितमध्यापनम्।

एवं **भृतकाध्यापितः**। यो व्युत्पन्नबुद्धिः सत्यकामवत् स्वयं भृतिं दत्वाऽधीते स एवमुच्यते। यस्तु पित्रादिना भृतिं दत्वा उपाध्यायान्तराभावेऽध्याप्यते न तस्य विगर्हिताचारत्वम्। बालो हि पित्रा प्रतिषिद्धेभ्यो निवर्तनीयः। एतदुक्तं "गुरौ शिष्यश्च याज्यश्चेति"। शूद्रस्य **शिष्यो** व्याकरणादिविद्यासु। **गुरुश्च** शूद्रस्यैव। उपसर्जनीभूतस्यापि सम्बन्धः, स्मृतिशास्त्रत्वात् विगर्हिताचारत्वस्य सर्वशेषत्वात्। शूद्रगुरुत्वं च गर्हितं नान्यत्। वाचा दुष्टः परुषानृतभाषी। अभिशस्त इत्यन्ये। **कुण्डगोलकौ** वक्ष्यमाणौ ॥ १५६ ॥

(२) **सर्वज्ञनारायणः। भृतको** भृत्या परिक्रीतः। स एवाध्यापको यस्य स **भृतकाध्यापकः**। एवमध्यापितोऽपि। **गुरुश्चैव** शूद्रस्येत्यनुषङ्गः। **वाग्दुष्टः** परुषवादी ॥ १५६ ॥

(३) **कुल्लूकः।** भृतिर्वेतनं तद्ग्राही **भृतकः** सन्योऽ**ध्यापकः** स तथा एवं **भृतकाध्यापितः। शूद्रशिष्यो** व्याकरणादौ **गुरुश्च** तस्यैव **वाग्दुष्टः** परुषभाषी, अभिशस्त इत्यन्ये। **कुण्डगोलकौ** वक्ष्यमाणौ ॥ १५६ ॥

(४) **राघवानन्दः। भृतकाध्यापकः** भृतिं गृहीत्वैव योऽध्यापयति। स **भृतकाध्यापकः।** भृतेन शिष्यपुष्टेन गुरुणा योऽध्यापितः स **भृतकाध्यापितः।** कः कुत्सितार्थे, **शूद्रशिष्यः** शूद्रस्य शिष्यः। **गुरुः** शूद्रस्येति शेषः। **वाग्दुष्टः** परुषभाषी। **कुण्डगोलकौ** वक्ष्यमाणौ ।। १५६ ।।

(५) **नन्दनः। भृतकः** भृतिभुक्। अत्र **देवलः** 'भृतकाध्यापितो यश्च भृतकाध्यापकश्च यः। तावुभौ पितरौ ज्ञेयौ स्वाध्यायक्रयविक्रया'दिति ।। **गुरुः** शूद्रगुरुः। **कुण्डगोलकौ** वक्ष्यति ।। १५६ ।।

(६) **रामचन्द्रः। भृतकाध्यापकः** वेतनादानेन योऽध्यापयते सः। यः **भृतकाध्यापितः** अध्येता। **शूद्रः शिष्यो** यस्य एतादृशो गुरुः। **कुण्डगोलकौ**। 'पत्यौ जीवति कुण्डस्तु मृते भर्तरि गोलकः' ।। १५६ ।।

(७) **मणिरामः। भृतकाध्यापकः** वेतनं गृहीत्वा योऽध्यापकः, **भृतकाध्यापितः** वेतनेन योऽध्यापितः, तथा च एतादृशौ गुरुशिष्यावपि निषिद्धावित्यर्थः। **गुरुः** शूद्रगुरुः **कुण्डगोलकौ** अमृते मृते च भर्तरि क्रमेण जारजातौ ।। १५६ ।।

(८) **गोविन्दराजः। भृतकाध्यापक इति।** पणपूर्वाध्यापकः, पणपूर्वाध्यापितः, शूद्रशिष्यः तस्यैव च गुरुः, न स्वगुरुः, तस्यानुकल्पे भोज्यत्वेनोक्तत्वात्। परुषभाषी, कुण्डगोलकौ वक्ष्यमाणौ, एते हव्यकव्ययोः वर्ज्याः ।। १५६ ।।

**अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ।।**
**ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ।। १५७ ।।**

(१) **मेधातिथिः।** असति कारणे यः परित्यजति मातरं पितरं आचार्यं च। गुरुशब्दः सामान्यशब्दत्वादुपाध्यायेऽपि प्रवर्तते। यत्तु "तथा सति मातापितृग्रहणं न कर्तव्यं स्यात्, गुरुत्वादेव सिद्धेरत आचार्य एवेह गुरुरिति व्याचक्षते"––तदयुक्तम्; असति मातापितृग्रहणे पितर्येव कृत्रिमाकृत्रिमन्यायेन प्रवर्तेत। पृथगुपादाने तु शास्त्रान्तरवदाचार्यः श्रेष्ठो गुरूणामिति सामान्यशब्दता सिद्धा भवति। परित्यागकारणं च "त्यजेत् पितरं राजघातकम्" इत्यादि। मातापित्रोः परित्यागस्तत्पादसेवादेः शुश्रूषायाः अकरणं, तदाराधने अतत्परत्वम्। गुरोरेवमेव। अध्यापनसमर्थेऽध्यापयितरि च तत्त्यागेनान्यत्राध्ययनम्।

**पतितैः संयोगं गतः** सम्बन्धं कृतवान्। **ब्राह्मै**र्याजनाध्यापनादिभि**र्यौनैः** कन्यादानादिभिः। "ननु च पतितत्वादेवासौ वर्ज्यः।" केचिदाहुः––"संवत्सरेण पतति पतितेन सहाचरन्" (११।१८०)––अवर्गियं प्रतिषेधः। "अथ केयं वाचोयुक्तिः सम्बन्धसंयोगं गत इति"। नात्र सम्बन्धशब्दो वैशेषिकादिप्रसिद्धया संयोगादिवचनः, किं तर्हि? क्रियैवात्र सम्बन्धहेतुत्वात्सम्बन्धशब्देनोच्यते। याजनादिलक्षणे संयोगशब्दश्च सम्बन्धमात्रमुपलक्षयति ।। १५७ ।।

(२) **सर्वज्ञनारायणः। अकारणा**त्पातित्यं विना। **गुरो**राचार्यस्य **ब्राह्मै**रध्ययनाध्यापनैः। **यौनै**र्योनिसम्बन्धैर्वैवाहिकैः। **पतितैः** सावित्रीपतितैः व्रात्यैः ।। १५७ ।।

**(३) कुल्लूकः।** **मातुः पितुर्गुरूणां** च परित्यागकारणं विना **त्यक्ता** शुश्रूषादेरक र्ता। **पतितै**श्चाध्ययनकन्यादानादिभिः संबन्धैः संपर्कं गतः। पतितत्वादेवास्य निषेध इति चेन्न, संवत्सरात्प्रागिदं भविष्यति, 'संवत्सरेण पततीति' वक्ष्यमाणत्वात् ।। १५७ ।।

**(४) राघवानन्दः।** अकारणं पतितादिप्रयोजकजात्यन्तरादीन्विना गुर्वादीनां **परित्यक्ता संयोगं पतितैर्गतः संयोगं** विद्याग्रहणकन्याग्रहणरूपं। तदुत्तरत्र 'संवत्सरेण पतति' इति स्वयमेव वक्ष्यमाणत्वात्पूर्वपतितापेक्षया अन्यः भाविपातित्ययुक्तः। अतो न पुनरुक्तिः ।। १५७ ।।

**(६) रामचन्द्रः।** **ब्राह्मैः संबन्धैः संयोगं गतः।** वेदाध्ययनसंबन्धैः संयोगं गतः। तथा **यौनै**र्विवाहसंबन्धैः संयोगं गतः ।। १५७ ।।

**(७) मणिरामः।** **पतितैः** सह **ब्राह्मैः** अध्ययनादिभिः **यौनैः** कन्यादानादिभिः **संबन्धैः संयोगं गतः** ।। १५७ ।।

**(८) गोविन्दराजः।** **अकारणपरित्यक्तेति।** **मातृविद्यागुरूणां** निष्कारणं **परित्यक्ता पतितैश्चा**ध्ययनकन्यादानादिसंबन्धः संपर्कं गतः अर्वागपि संवत्सरात्। संवत्सरेण तु पतितत्वादेव गतार्थता 'संवत्सरेण पतती'ति ।। १५७ ।।

## अगारदाही गरदः कुण्डाशी सोमविक्रयी ।।
## समुद्रयायी बन्दी च तैलिकः कूटकारकः ।। १५८ ।।

**(१) मेधातिथिः।** अगारस्य गृहस्य दग्धा। गरं ददातीति। प्रदर्शनार्थं च गरग्रहणं विषादीनामपि। कुण्डस्य अन्नमश्नाति। एवं गोलकस्य, प्रदर्शनार्थत्वात् कुण्डस्य। सोमं विक्रीणीते। ओषधिः सोमस्तं यो विक्रीणीते, यागार्थमौषधार्थं वा। अन्ये तु सोमसाधनान् ज्योतिष्टोमादियागानाहुः। तेषां च विक्रयो यद्यपि न संभवति, अमूर्तत्वात् क्रियायास्तथाप्यविदुषामेवंविधस्याचारस्य दर्शनादयं प्रतिषेधः। दृश्यन्ते ह्यविद्वांस एवं वदन्तो 'यन्मया सुकृतं कृतं तत्तेऽस्त्विति'। 'सुकृतं' सुकृतैः साधितं धर्मम्। तथा च 'यां च रात्रीमजायेथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीय यदि मे द्रुह्युरिति'। यथैव शपथा एवं दानविक्रयावपि वाचा यः करोति स वर्ज्यते। अकार्यता चात एव ईदृशानां शपथदानविक्रयादीनां वाचा क्रियमाणानामनुमीयते। समुद्र उदधिस्तं यो याति। **बन्दी** स्तुतिपाठकः। **तैलिकः** तिलादीनां बीजानां पेष्टा। **कूटकारकः** साक्ष्येष्वनृतवादी ।। १५८ ।।

**(२) सर्वज्ञनारायणः।** गरदो विषदो विप्रव्यतिरिक्तानाम्। कुण्डाशी कुण्डं षष्टिपलानि तावत्परिमाणतण्डुलान्नभोजी। **समुद्रयायी** नौकया समुद्रसंचारी। **बन्दी** स्तुतिपाठकः। **तैलिकः** तिलयन्त्रप्रवर्तकः। कुटं छद्म तत्कारकः ।। १५८ ।।

**(३) कुल्लूकः।** गृहदाहकः मरणहेतुद्रव्यस्य दाता। **कुण्डस्य** वक्ष्यमाणस्य योऽन्नमश्नाति। प्रदर्शनार्थत्वात्कुण्डस्य गोलकस्यापि ग्रहणम्। अत एव **देवलः** 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः। यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते'। सोमलताविक्रेता। समुद्रे यो वहित्रादिना द्वीपान्तरं गच्छति। **बन्दी** स्तुतिपाठकः। तैलार्थं तिलादिबीजानां पेष्टा। साक्षिवादे **कूटस्य** मृषावादस्य कर्ता ।। १५८ ।।

(४) **राघवानन्दः**। **अगारदाही** अगारो गृहं। **कुण्डाशी** कुण्डस्यान्नभोजी बह्वाशी वा। 'भीमः कुण्डाशी'ति स्मरणात्। **सोमविक्रयी** सोमोऽत्र लताविशेषः। **समुद्रयायी** वहित्रादिना द्वीपान्तरगन्ता। **बन्दी** स्तुतिवृत्तिः। **तैलिकः** तैलार्थे तिलादीनां पेष्टा। **कूटकारकः** कूटसाक्षी भूम्यर्थमिथ्याभाषी॥ १५८॥

(५) **नन्दनः**। '**अगारदाही** स ज्ञेयः प्रेतं दग्ध्वा धनेन यः। स चाप्यगारदाही स्याद्विद्वेषाद्वेश्मदाहकः'। 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः। यस्तयोरन्नमश्नाति स **कुण्डाशीति** कीर्त्यते' इति **देवलः**। **कूटकारकः** तुलामानलेखादिषु वञ्चनाकरः॥ १५८॥

(६) **रामचन्द्रः**। **कुण्डाशी** यस्त्रिपलतण्डुलान्नभोक्ता। **बन्दी** कारागृहस्थितः स्तुतिपाठको वा अनृतपाठकः। **तैलिकः** तैलविक्रयी। **कूटकारकः**। **अगारदाही** गृहदाहकारी। **सोम**लताविक्रयी शूद्रयाजी शूद्रं यो याजयति॥ १५८॥

(७) **मणिरामः**। **कुण्डाशी** कुण्डगृहभोजनकर्ता, गोलकगृहभोजिनोऽप्युपलक्षकमिदम्। 'यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते' इति **देवल**वचनात्। **बन्दी** स्तुतिपाठकः। **कूटकारकः** साक्षिवादे कूटस्य मिथ्यावादस्य कर्ता॥ १५८॥

(८) **गोविन्दराजः**। **अगारदाहीति**। गृहस्य दाहको, मारणद्रव्यदाता **कुण्डस्य** वक्ष्यमाणस्य योऽन्नमश्नाति, **सोमस्य** लतारूपस्य **विक्रेता समुद्रं** यो गच्छति, स्तुतीनां पाठकः, तिलादेः पेषकः, लेख्यसाक्ष्यादौ **कूटस्य** कर्ता इत्येत उभयत्र परिहरणीयाः॥ १५८॥

**पित्रा विवदमानश्च कितवो मद्यपस्तथा॥**
**पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी॥ १५९॥**

(१) **मेधातिथिः**। **पित्रा** यो 'विवदते' परुषं भाषते, राजकुले व्यवहरति पूर्वपक्षोत्तरपक्षभंग्या भागादिनिमित्तम्। तथा च **गौतमः** (१५।१९) "पित्राऽकामेन विभक्तानिति"। "प्रतिरोद्धा गुरोरित्यनेनैतत्कथं पुनरुक्तमुच्यते?"। अन्यः 'प्रतिरोधः, अन्यश्च विवादः'। यत्किंचित् गुरोरभिप्रेतं वस्तु 'कथमिदं सिध्येदिति' तत्र सम्बन्धिकत्वम् प्रतिरोधः। न्याय्येऽपि वस्तुनि तदिच्छाप्रतिघातः प्रतिरोद्धृत्वम्। प्रतिराद्धेति तत्र पाठान्तरम्। आभिमुख्येन हिंसिता, हस्तादिना गुरोः प्रतिरोद्धा चपेटादिदानेन। अस्मिन्पक्षे स्थितमन्यत्वं विवादस्य।

**कितवो** द्यूतस्य कारयिता सभिकः। यस्तु स्वयंदेविता स प्रागेव निषिद्धः। केकरमन्ये पठन्ति, 'केकरो मद्यप' इति। स च वलितप्रेक्षो अध्यर्धदृष्टिः। कातरमन्ये। स च शुकपक्षतारकः। **मद्यपः** सुराया अन्यस्यारिष्टादेर्मद्यस्य पाता सुरापः पतितत्वेनैव निरस्तः। **पापरोगी** कुष्ठी। स हि लोकेऽत्यन्तनिन्द्यः, पापरोगीत्यभिधातुं युक्तः। अस्मादेव च प्रतिषेधात् यक्ष्मीत्यत्र न सर्वो व्याधिगृहीतो गृह्यते, कस्तर्हि? क्षयी यदि हि सर्वो गृह्यते तेनैव, सिद्धत्वात्पापरोगीति नाकरिष्यत्। **अभिशस्तः** पातकोपपातकयोः कर्तेति लोके प्रसिद्धः, असत्यपि तत्कर्तृकत्वनिश्चये। **दाम्भिकः** छद्मना धर्मं चरति लोकपक्त्यर्थं, न कर्तव्यमिति कृत्वा करोति। **रसविक्रयी** विषस्य विक्रेता। तस्य ह्येतदभिधानम्—'उपांशुभेदी रसदः' 'रसदः सत्री'त्यादि विषदो रसद उच्यते॥ १५९॥

(२) **सर्वज्ञनारायणः**। **पित्रा** धनार्थं **विवदमानः**। **कितवः** वृत्त्युद्देशं विना द्यूतकारी। **केकर** इति क्वचित्पाठे वक्रदृष्टिरित्यर्थः। **मद्यं** द्राक्षादिमद्यं। **पापरोगः** कुष्ठभगन्दरा-

दिनिन्दितरोगः। **अभिशस्तो** वचनीयेन युक्तः। **दाम्भिको** दम्भेन कर्मचारी। **रसा** गुडादयः, एतेनाविक्रय्यमुपलक्षितम् ॥ १५९ ॥

(३) **कुल्लूकः।** **पित्रा** सह शास्त्रार्थे लौकिके वा वस्तुनि निरर्थं यो विवदते। **कितवो** यः स्वयं देवितुमनभिज्ञः स्वार्थं परान्देवयति, न स्वयं देविता, तस्योक्तत्वात्। **न** च सभिकः तस्य द्यूतवृत्तिपदेनाभिधास्यमानत्वात्। **केकर** इति पाठे तिर्यग्दृष्टिः। सुराव्यतिरिक्त-मद्यपाता। कुष्ठी। अनिर्णीतेऽपि तस्मिन्महापातकादौ जाताभिशापः। छद्मनाऽधर्मकारी। **रसवि**क्रेता ॥ १५९ ॥

(४) **राघवानन्दः।** **पित्रा विवदमानस्त**द्विवादे शास्त्रीये लौकिके वा रतः। **कितवो** यः स्वार्थेन परान् देवयते। यः सुरातिरिक्तपायी **मद्यपः** सुरापस्य पतितत्वात् विप्रप्रकरणात्। **पापरोगी** कुष्ठादियुक्तः। **अभिशस्तः** आशङ्कितमहापातकः। **दाम्भिको**ऽत्र छद्मना धर्माचरणं यस्य। **रसविक्रयी** रसो गोरसादिः ॥ १५९ ॥

(५) **नन्दनः।** अयं **कितवो** वञ्चकः। केचित्पुनरुक्तिभयात् **केकरो मद्यपस्तथेति** पठन्ति, **केकरः** आकेकरतारनेत्रः। तस्य क्रूरनेत्रत्वात्प्रतिषेधः। **मद्यपो** मदकरद्रव्याणां तालासवादीनां पाता। सुरापस्तु पतितप्रतिषेधेनोक्तः। मधुमेहभगन्दरादयः **पापरो-गस्थाः।** **दाम्भिको** धर्मध्वजः। **रसविक्रयी** विषविक्रयी ॥ १५९ ॥

(६) **रामचन्द्रः।** **पापरोगी** दीर्घरोगी। **अभिशस्तः** कलङ्कीत्यर्थः ॥ १५९ ॥

(७) **मणिरामः।** **कितवः** स्वार्थं अन्यं देवयति सः, तेन न पुनरुक्तिः **पापरोगी** कुष्ठी, **अभिशस्तः** अनिर्णीतेऽपि महापातकादौ जाताभिशापः, **दांभिकः** कपटेन धर्मकारी ॥ १५९ ॥

(८) **गोविन्दराजः।** **पित्रेति।** **पापरोग्यभिशस्तश्च जातिको रसविक्रयी।** शास्त्रा-लोकवस्तुषु यः **पित्रा** सह विवदते, **कितवः** अपरः देवयति, इतरस्योक्तत्वात्। **केकर** इति पाठकाचारः। सुराव्यतिरिक्त**मद्यस्य पाता** कुष्ठी, पातकोपपातककर्तृत्वेनोत्पन्नाभिशापो-ऽसत्यपि तत्कारित्वनिश्चये, सव्याजो धर्मानुष्ठाने, **रस**शब्दस्येक्षुरसादावपि प्रसिद्धत्वात् **तद्विक्रयी** विषस्येव तत्राप्यर्थशास्त्रे रसशब्दप्रयोगात् इत्येते उभयत्र परिहर्तव्याः ॥ १५९ ॥

**धनुःशराणां कर्ता च यश्चाग्रेदिधिषूपतिः ॥**
**मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्यस्तथैव च ॥ १६० ॥**

(१) **मेधातिथिः।** धनुः शरांश्च यः शिल्पीव करोति। **यश्चाग्रेदिधिषूपतिः** दिधिषूशब्दः काकाक्षिवदुभयेन सम्बध्यते। स्मृतिशास्त्रत्वाच्चेदृशः सम्बन्धो लभ्यते। लेखा लोष्टादयोऽपि स्मृत्यर्थं संकेत्यन्ते भवन्ति चार्थकराः। अत एतन्न वाच्यं "कथमेकशब्दः समासान्तर्गतो द्वाभ्यां भिन्नप्रस्थानाभ्यां अभिसम्बध्येत" इति। गौतमेन हि द्वयं निषिद्धम्। इहापि सम्बन्धभेदे लिङ्गम्। द्विपदः समासः। न ह्यग्रेदिधिषूपतिर्नाम कश्चिदस्ति। एतौ च वक्ष्यमाणलक्षणौ।

**मित्रध्रुक्**। मित्रं यो द्रुह्यति। मित्रस्य यः कार्योपघाते प्रवर्तते। **द्यूतवृत्तिः** द्यूतं वृत्तिर्जीविका यस्य। "ननु कितवो मद्यप' इत्यत्रोक्तमेव"। नावश्यं द्यूतवृत्तिरेव द्यूतस्य प्रयोजकः, किं तर्हि ? यः स्वयं देवितुं न जानाति गुरुभयाद्वा न दीव्यति। व्यसनी स तु देवे शप्ततयाऽन्यं देवयति। तदर्थो द्वितीयः कितवशब्दः। अथवा अकृतश्रीका द्यूतसभास्थाणवो द्यूतवृत्तयः। पुत्र आचार्योऽध्यापको यस्य। मुख्यमाचार्यत्वं न पुत्रे सम्भवति ।। १६० ।।

(२) **सर्वज्ञनारायणः। द्यूतवृत्ति**र्जीविकार्थं द्यूतकृत्। पुत्र एव यस्याचार्यो धर्मोपदेष्टा स **पुत्राचार्यः** ।। १६० ।।

(३) **कुल्लूकः। धनूंषि शरांश्च** यः **करोति**। ज्येष्ठाय सोदरभगिन्यामनूढायां या कनिष्ठा विवाहेन दीयते साऽग्रेदिधिषूस्तस्याः **पतिः**। तथाच **लोकाक्षिः** 'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता। **गोविन्दराजस्तु** भ्रातुर्मृतस्य भार्यायामित्यनेनाग्रे दिधिषूपतिरेव वृत्तिवशादग्रेपदलोपेन दिधिषूपतिरिति मनुना वक्ष्यते स इह ग्राह्य इत्याह। **मित्रध्रुग्यो** मित्रस्यापकारे वर्तते। **द्यूतवृत्तिः सभिकः** पुत्रेणाध्यापितः पिता मुख्येन पुत्राचार्यत्वासंभवात् ।। १६० ।।

(४) **राघवानन्दः। धनुःशराणां** धनुषः शराणां च **अग्रेदिधिषूपतिः** दिधिषूर्लक्षिष्यते तस्याः पतिः। द्यूतमुपजीव्यं यस्य स **द्यूतवृत्तिः**। केकर इति पाठे तिर्यग्दृष्टिः **पुत्राचार्यः** पुत्रेणाध्यापितः ।। १६० ।।

(५) **नन्दनः**। ज्येष्ठायां यद्यनूढायामूढाग्रे**दिधिषूः स्मृता**। द्यूतेन जीवनं यस्य स **द्यूतवृत्तिः** ।। १६० ।।

(६) **रामचन्द्रः। धनुःशराणां कर्ता** चकाराद्विक्रयी च। य **अग्रेदिधिषूपतिः** पुनर्भ्वाः पतिः। 'द्विस्तस्या दिधिषूपति'रित्यमरः। पुत्र आचार्यो यस्य स **पुत्राचार्यः** ।। १६० ।।

(७) **मणिरामः। अग्रेदिधिषूपतिः** ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। 'सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृता'।। इति **लोकाक्षि**वचनोक्तायाः पतिः। द्यूतवृत्तिः **सभिकः** द्यूतदेविनां वृद्धया द्रव्यदातेति यावत्। पुत्राचार्यः पुत्रस्य शिष्यः ।। १६० ।।

(८) **गोविन्दराजः। धनुश्शराणामिति। धनुश्शरस्य** कारकः। **अग्रेदिधिषूपतिः** 'भ्रातुर्मृतस्य' इति वक्ष्यमाणः। वृत्तवशात् अग्र इत्यध्यलोपेन सत्यभामा भामेतिवत्। यत्तु गौतमीयपर्यालोचनया अग्रेदिधिषूपतिशब्देन द्वयं निषिध्यते—अग्रेदिधिषूपतिः दिधिषूपतिश्च। तत्राग्रेदिधिषूपतिः अनूढाकन्यागामी, दिधिषूपतिस्तद्वोढेत्याहुः-तदसत्, अशब्दार्थत्वात्। न च दिधिषूपतिश्च तद्वोढेति व्याख्यानं युक्तं, "भ्रातुर्मृतस्ये" ति मानवलक्षणविरोधात्। मित्रस्य योऽपकारे वर्तते, **द्यूतवृत्तिः** सभिकः, पुत्रेणाध्यापितः मुख्यस्य पुत्राचार्यत्वस्यासंभवात् ।। १६० ।।

## भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।।
## उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ।। १६१ ।।

(१) **मेधातिथिः।** व्याधिविशेषवचना एते। **भ्रामरी** अपस्मारी। **गण्डमाली।** कपोले कण्ठे पिटका मालाकारा जायन्ते। **श्वित्री** श्वेतकुष्ठः। **पिशुनः** परमर्मप्रकाशकः

कर्णेजपः। **उन्मत्तः** अनवस्थितचित्तो, धातुसंक्षोभेण पिशाचगृहीतः यत्किंचनवादी यत्किंचनकारी वा। **अन्धः** चक्षुर्विकलः। **वेदनिन्दकः।** "ननु च ब्रह्मद्विट्शब्देनैव ब्रह्मशब्दस्यानेकार्थकत्वात् वेदनिन्दको गृहीत एव"। नैवम्। अन्या निन्दा, अन्यो द्वेषः। चित्तधर्मो द्वेषः, तदुपर्यप्रीतिशब्देन कुत्सनं 'निन्दा'॥ १६१॥

(२) **सर्वज्ञनारायणः। भ्रामरी** अपस्मारी। **गण्डमाला** व्याधिभेदः॥ १६१॥

(३) **कुल्लूकः।** अपस्मारी। **गण्डमालाख्यव्याध्युपेतः।** श्वेतकुष्ठयुक्तः। दुर्जनः उन्मादवान्। अचक्षुः वेदनिन्दाकरः॥ १६१॥

(४) **राघवानन्दः। भ्रामरी** अपस्मारी **गण्डमाली** गले गण्डयुतः। **शिवत्री** श्वेतकुष्ठयुक्तः। **पिशुनः** प्रच्छन्नदोषाख्यायी। **वेदनिन्दकः** धिक्शब्दादिवादेन वेदकुत्सकः कुत्सकः॥ १६१॥

(५) **नन्दनः। भ्रामरी** अपस्मारी। **गण्डमाली** उपचित उद्भूतो मांसपिण्डो गण्डशब्देनोच्यते। तस्य मालेव लम्बमानत्वान्मालात्वम्, तद्वान्**गण्डमाली**॥ १६१॥

(६) **रामचन्द्रः। भ्रामरी** अपस्मारी **गण्डमाला** कपोलकण्ठे पिटकमालाकारा जायते॥ १६१॥

(७) **मणिरामः। भ्रामरी** अपस्मारी, **गण्डमाली** गलशोथवान्। **शिवत्री** श्वेतकुष्ठी, **पिशुनः** दुष्टः॥ १६१॥

(८) **गोविन्दराजः। भ्रामरीति।** अपस्मारी, गण्डमालाख्यव्याध्युपेतः, श्वित्री, सूचकः, धातुसंक्षोभादियुक्तः, अन्धो, वेदस्य कुत्सकः, इत्येते हव्यकव्ययोर्वर्ज्याः स्युः॥ १६१॥

**हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति॥**
**पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च॥ १६२॥**

(१) **मेधातिथिः।** हस्त्यादीनां विनेता **दमकः** गतिशिक्षयिता। **नक्षत्रैर्यश्च जीवति** नक्षत्रशब्देन ज्योतिःशास्त्रं लक्ष्यते, तेन जीवति ज्योतिषिकः। **पक्षिणां** श्येनादीनां आखेटार्थं पोषयिता **युद्धाचार्यो** धनुर्वेदोपदेशकः॥ १६२॥

(२) **सर्वज्ञनारायणः। हस्त्यादीनां दमकस्त**द्दमनेन जीवनः। **नक्षत्रै**र्ज्योतिषवृत्त्या **युद्धाचार्यः** शस्त्रनियुद्धाद्युपायोपदेष्टा॥ १६२॥

(३) **कुल्लूकः।** हस्तिगवाश्वोष्ट्राणां विनेता। **नक्षत्र**शब्देन ज्योतिःशास्त्रमुपलक्ष्यते तेन यो वर्तते। **पक्षिणां** पञ्जरसंजातानां क्रीडाद्यर्थं पोषिता। युद्धार्थमायुधविद्योपदेशकः॥ १६२॥

(४) **राघवानन्दः।** हस्त्यादीनां दनकः शिक्षकः। **नक्षत्रै**र्ज्योतिःशास्त्रैः **पक्षिणां** पञ्जरस्थानां क्रीडार्थं विक्रयार्थं वा **पोषकः। युद्धाचार्यः** युद्धार्थमायुधविद्योपदेशकः। तद्द्वारा विप्रवधादिसंभवात्॥ १६२॥

(५) **नन्दनः**। **दमकः** शिक्षकः। **पक्षिणः** पोषयति स पक्षिणां **पोषकः** ।। १६२ ।।

(६) **रामचन्द्रः**। **हस्तिगोश्वोष्ट्रादीन्** दमयतीति **दमकः** ।। १६२ ।।

(७) **मणिरामः**। **दमकः** शिक्षकः **पक्षिणां पोषकः** क्रीडार्थं पञ्जरस्थानाम् ।। १६२ ।।

(८) **गोविन्दराजः**। **हस्तिगोश्वोष्ट्रदमक इति**। हस्तिगवाश्वोष्ट्राणां विनेता, ज्योतिश्शास्त्रेण जीवनः पक्षिणां वार्तनपूर्वकं क्रीडार्थं पोषयति युद्धशिक्षयिता एते उभयत्र परिहर्तव्याः ।। १६२ ।।

**स्रोतसां भेदको यश्च तेषां चावरणे रतः ।।**
**गृहसंवेशको दूतो वृक्षारोपक एव च ।। १६३ ।।**

(१) **मेधातिथिः**। 'स्रोतांसि' उदकागमाः तेषां **भेदकः** सेतुं भित्वा देशान्तरे व्रीह्यादिसेकार्थं नयति। **तेषां च** स्रोतसामेव **चावरणे रतः**। 'आवरणं' आच्छादनम्। यतः प्रदेशादुदकमुद्भवति तत् स्थगयति। गृहाणां संनिवेशोपदेशकः, वास्तुविद्याजीवी, स्थपतिः सूत्रधारादिः। न त्वात्मनो गृहाणां सन्निवेशयिता। **दूतो** राज्ञः प्रेष्यो दासवद्विनियोज्यः। दूतस्तु सन्धिविग्रहादावेव प्रेष्यते। वृक्षान् रोपयति, मूल्येन। धर्मार्थं तु न दोषः, अविगर्हिताचारत्वात्। विहितं वृक्षारोपणं "दशाम्रवापी नरकं न याति" ।। १६३ ।।

(२) **सर्वज्ञनारायणः**। **स्रोतसां भेदकः** स्रोतोनिरोधकः स तु भेदकृत्। **देशिक** इति पाठे जलशिराया स्रोतस उपदेष्टेत्यर्थः। **तेषां** स्रोतसां प्रवर्तमानानां। **गृहसंवेशको** वृत्त्यर्थं गृहनिर्माता। **दूतो** दूत्यवृत्तिः। **वृक्षरोपको** वृत्त्यर्थम् ।। १६३ ।।

(३) **कुल्लूकः**। प्रवहज्जलानां सेतुभेदादिना देशान्तरनेता। **तेषामे**वावरणकर्ता निजगतिप्रतिबन्धकः। गृहवन्निवेशोपदेशको वास्तुविद्योपजीवी। **दूतो** राजग्रामप्रेष्यव्यतिरिक्तोऽपि। **वृक्षरोपयिता** वेतनग्रहणेन न तु धर्मार्थो 'पञ्चाम्ररोपी नरकं न याती'ति विधानात् ।। १६३ ।।

(४) **राघवानन्दः**। **स्रोतसां** नद्यादीनां विमार्गप्रापयिता। **आवरणे** रतः निजगतिप्रतिबन्धकश्च। **गृहसंवेशको** वास्तुविद्योपजीवी। **दूतो** राजैकनियतप्रेष्यः। **वृक्षारोपकः** भृतिमादाय न तु धर्मार्थं, 'पञ्चप्ररोपी नरकं न पश्येदि'त्युक्तेः ।। १६३ ।।

(५) **नन्दनः**। **स्रोतसां भेदकः** स्रोतसां भञ्जकः। **तेषामावरणे रतः** प्रजोपयोगार्हमार्गगमननिरोधतत्परः। स्रोतसां दर्शकस्तथेति वा पठन्ति। स्रोतसां जलोद्भवस्थानानामुपदेष्टा। **गृहसंनिवेशको** वृत्त्यर्थं गृहाणां निर्माता। **वृक्षारोहको** वृक्षाणामारोढा ।। १६३ ।।

(६) **रामचन्द्रः**। **तेषां** वा **आचरणे रतः**। **गृहसंवेशकः**। वृक्षानारोपयति मूल्येन **वृक्षारोपकः** ।। १६३ ।।

(७) **मणिरामः**। **स्रोतसां भेदकः** प्रवहज्जलानां सेतुभेदादिना देशान्तरनेता, **तेषां** स्रोतसामेव **आवरणे** प्रतिरोधने **रतः गृहसंवेशकः** गृहसन्निवेशोपजीवी, वास्तुविद्योपजीवीत्यर्थः। **वृक्षारोपकः** वेतनग्रहणेन ।। १६३ ।।

(८) **गोविन्दराजः। स्रोतसमिति।** उदकागमनसेतुबन्धभेदकः भेदादिना देशान्तरं नेता च। तेषामवच्छादनकृत्, बास्तुविद्याजीवनः **दूतो** राजप्रेष्यव्यतिरिक्तोऽपि। **वृक्षाणां रोपयिता** मूल्येन, न धर्मार्थं "दशाम्रवापी नरकं न याति" इत्यादिनोदनात् ।। १६३ ।।

**श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ।।**
**हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः ।। १६४ ।।**

(१) **मेधातिथिः।** श्वभिः क्रीडति **श्वक्रीडी।** क्रीडार्थे शुनो बिभर्ति। श्येनैर्जीवति क्रयविक्रयादिना। प्रागुक्तः पक्षिणां पोषकः पञ्जरादिसंस्थितानां धारयिता। कन्यामकन्यां यः करोति **स कन्यादूषकः। हिंस्रः** स्वभावक्रूरः वधरतः। **वृषलवृत्तिः** शूद्रेभ्यः सेवादिना यो जीवति। वृषलपुत्र इति पाठान्तरम्। केवला एव वृषलाः पुत्रा यस्य। "शूद्रापत्यैश्च केवलैः" इति गर्हिताचारः। **गणानां** देवतायाजकः। गणयागाः प्रसिद्धाः ।। १६४ ।।

(२) **सर्वज्ञनारायणः। श्वक्रीडी** श्वभिः क्रीडन्। **कन्यादूषकः** कन्याया अङ्गुल्यादिनाऽकन्यात्वापादकः। वृषल एव पुत्रोऽस्य स तु **वृषलपुत्रः।** गणानामनेकेषांक्रमेण ।। १६४ ।।

(३) **कुल्लूकः।** क्रीडार्थं शुनः पोषयति **श्येनैर्जीवति** क्रयविक्रयादिना। कन्याभिगन्ता। हिंसारतः। शूद्रोपक्लृप्तवृत्तिः। **वृषलपुत्र** इति पाठान्तरम्। वृषला एव केवलाः पुत्रा यस्येत्यर्थः। विनायकादि**गणयागकृत्** ।। १६४ ।।

(४) **राघवानन्दः। श्वक्रीडी** क्रीडार्थं शुनः पोष्टा। **श्येनजीवी** श्येनेनान्यपक्षिणो घातयित्वा व्यवहारी। पक्षिपोषकस्य निन्दितत्वेऽपि अधिकदूषणार्थं वा। **कन्यादूषकः** अङ्गुल्यादिना योनिविदारकः, अथवा तस्याः परिवादी कुमारीगन्तुरुपपातकित्वोक्तेर्दण्डप्रायश्चित्तापाङ्क्त्यादिभेदेन कुमार्या दूषकाणां पुनरुक्ताद्यभावो ध्येयः। **वृषलवृत्तिः** वृषलावक्लृप्तवृत्तिः वृषलोपजीवी वा **वृषलपुत्र** इति। पाठान्तरं वृषला एव केवलाः पुत्राः पुत्रस्थानीया वा यस्य स तथा। **गणानां** विनायकानां बहुयाजकस्योक्तत्वात्। 'बहूनामुपनेता वा यश्चोपनयते बहूनि'ति निन्दितत्वात् ।। १६४ ।।

(५) **नन्दनः।** श्वभिः क्रीडतीति **श्वक्रीडी।** वृषल एव पुत्रो यस्य स **वृषलपुत्रः।** गणानाञ्चैव याजकः नाना जातीयाअनियतवृत्तयः संहता गणास्तेषां याजको याजयिता ।। १६४ ।।

(६) **रामचन्द्रः। वृषलपुत्रः।** 'निर्धर्मो वृषलो ज्ञेयस्तत्सुतो वृषलात्मजः' ।। च पुनः गणानां याजक एवं विनायकादि**गणयाजकः** सर्वेषां याजको वा ।। १६४ ।।

(७) **मणिरामः। श्येनजीवी** क्रयविक्रयादिना, **कन्यादूषकः** कुमारिकाभिगन्ता, **वृषलवृत्तिः** वृषला एव पुत्रा यस्येत्यर्थः। **गणानां याजकः** विनायकादिगणानां यागकृत् ।। १६४ ।।

(८) **गोविन्दराजः। श्वक्रीडीति।** श्वभिः यः क्रीडति, याजकक्रियादिजीवकः कन्याया निन्दकः हिंसारतः, शूद्रजीवनः। वृषलपुत्र इति वा पाठः। चतुर्दश्यादौ विनायकादिगणयागकृत् इत्येव उभयत्र वर्जनीयाः ॥ १६४ ॥

**आचारहीनः क्लीबश्च नित्यं याचनकस्तथा ॥**
**कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥ १६५ ॥**

(१) **मेधातिथिः। आचारो** गृहाभ्यागतानाम् पूजादिप्रयुक्तिर्लौकिकसमाचारः, तेन वर्जितः। **क्लीबो**ऽल्पसत्वः, भग्नोत्साहः कर्तव्येषु। **याचनकः** सदैव यो याचते, यश्च याच्ञया परानुद्वेजयति। वस्तुस्वभावोऽयं याच्ञया याच्यमानोद्वेजनम्। 'नन्द्यादिभ्यो ल्युः' (पा. ३।१।१३४), स्वार्थे कः।

**कृषिजीवी** स्वयंकृतया कृष्या जीवति, सति चोपायान्तरे अस्वयंकृतयाऽपि। **श्लीपदी** एकः पादो महान् यस्य। **सद्भिर्निन्दितः** दुर्भगः, विनाऽपि दोषेण सतां द्वेष्यः ॥ १६५ ॥

(२) **सर्वज्ञनारायणः। क्लीबो** धर्मोद्यमशून्यः। **नित्यं याचनको** याचकः। **सद्भिर्विनिन्दितो**ऽकारणेऽपि ॥ १६५ ॥

(३) **कुल्लूकः।** गुर्वतिथिप्रत्युत्थानाद्या**चार**वर्जितः। **क्लीबो** धर्मकृत्यादौ निरुत्साहः नपुंसकस्योक्तत्वात् ॥ नित्यं याचनेन परोद्वेजकः। स्वयंकृतया कृष्या यो जीवति वृत्त्यन्तरेऽपि वा संभवत्यस्वयंकृतयापि। श्लीपदी व्याधिना स्थूलचरणः। केनापि निमित्तेन साधूनां निन्दाविषयः ॥ १६५ ॥

(४) **राघवानन्दः। क्लीबो** धर्माद्यनुत्साही नपुंसकस्योक्तत्वात्। **नित्यं याचनकः** श्वस्तनादिषु सत्स्वपि। **कृषिजीवी** स्वयंकृतकृष्या जीवति। **श्लीपदी** व्याधिकृतस्थूलपदः। अशिष्टोऽयमिति निन्दितः ॥ १६५ ॥

(५) **नन्दनः। क्लीब** उपहतशुक्रः पुरुषः ॥ १६५ ॥

(६) **रामचन्द्रः। क्लीबः** धर्मोत्साहरहितः। **कृषिजीवी** कृषिकृत्। **श्लीपदी** पदे महती यस्य स हि। **सद्भिर्निन्दितो** दुर्भगः ॥ १६५ ॥

(७) **मणिरामः। श्लीपदी** व्याधिना पादशोथी ॥ १६५ ॥

(८) **गोविन्दराजः। आचारहीन इति।** प्रत्युत्थानाद्याचारवर्जितः, **क्लीबः** निरुत्साहः, नपुंसकस्योक्तत्वात्, सर्वदा याच्ञास्वभावः। अस्वयंकृतं वापि यः कृष्या वृत्त्यन्तरसंभवेऽपि जीवति, **श्लीपदी** व्याधिविशेषादुच्छूनैकचरणः, साधुभि**र्निन्दितः** केनापि निमित्तेनेत्येतत्। उभयत्र बहिःकार्याः ॥ १६५ ॥

**औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ॥**
**प्रेतनिर्यापकश्चैव वर्जनीयाः प्रयत्नतः ॥ १६६ ॥**

(१) **मेधातिथिः।** 'उरभ्रा' मेषास्तैश्चरति क्रयविक्रयादिना व्यवहरन्ति, तद्धनप्रधानो वा। एवं **माहिषिकः।** परः पूर्वो यस्याः, तस्याः 'पतिः' भर्ता। या अन्यस्मै दत्ता अन्येन वा ऊढा तां पुनः यः संस्करोति, पुनर्भवति भर्ता पौनर्भवो नरो भर्ताऽसाविति शास्त्रेण। प्रेतान् यो निर्यापयति वहति। एते यत्नतो **वर्जनीयाः** ।। १६६ ।।

(२) **सर्वज्ञनारायणः।** **औरभ्रिको** मेषपोषकः। **माहिषिको** महिषपोषकः। **परपूर्वा** प्रागन्यस्मै दत्ता तस्याः **पतिः** परिणेता। **प्रेतनिर्यातको** वृत्त्यर्थे प्रेतवाहः।। १६६ ।।

(३) **कुल्लूकः।** मेषमहिषजीवनः। परपूर्वा पुनर्भूस्तस्याः पतिः। **प्रेतनिर्हारको** धनग्रहणेन, न तु धर्मार्थं। 'एतद्वै परमं तपो यत्प्रेतमरण्यं हरन्ती'ति अवश्यश्रुत्या विहितत्वात् ।। १६६ ।।

(४) **राघवानन्दः।** **औरभ्रिको** मेषजीवी। **माहिषिकोऽपि** तथा। **परपूर्वा** पुनर्भूः तस्याः पतिः अस्याः पुत्रः **पौनर्भव** उक्तः। **प्रेतनिर्यातकः** धनग्रहणेन मृत-निर्हारकः ।। १६६ ।।

(५) **नन्दनः।** उरभ्रा मेषास्तैर्यो जीवति स **औरभ्रिकः।** एतेन **माहिषिको** व्याख्यातः। **प्रेतनिर्यातको** वृत्त्यर्थं शवनिर्हारकः। **प्रयत्नतः** आपद्यपि ॥ १६६ ।।

(६) **रामचन्द्रः।** **औरभ्रिको** मेषपालकः महिषपालको वा। **परपूर्वापतिः** परपूर्वा पुनर्भूस्तस्याः पतिः **प्रेतनिर्यातकः** प्रेतं लोभेन निर्यातयति प्रेतवाहक इत्यर्थः ।।१६६ ।।

(७) **मणिरामः।** **औरभ्रिकः** मेषजीवनः, **परपूर्वापतिः** पुनर्भूपतिः **प्रेतनिर्यातकः** प्रेतहारकः धनग्रहणेन न तु धर्मबुद्ध्या ॥ १६६ ।।

(८) **गोविन्दराजः।** **औरभ्रिकः** मेषमहिषजीवी पुनर्भुवो भर्ता मूल्येन प्रेतानां निर्हारकः न धर्मार्थम्, "एतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति" इति श्रुत्या नोदितत्वात्। एते यत्नत उभयत्र वर्जनीयाः ।। १६६ ॥

**एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान् ॥**
**द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत् ॥ १६७ ॥**

(१) **मेधातिथिः।** विगर्हितो निन्दितः आचारः कर्मानुष्ठानमेषामिति। काणादयः पूर्वदोषलिङ्गेन। स्तेनादयोऽनुभूयमानदोषाः प्रत्यक्षादिना। **उभयत्र** दैवे पित्र्ये च। **वर्जयेत्** परिहरेत्। **अपाङ्क्तेयाः** पङ्क्तिं नार्हन्ति। भवार्थे ढक्कर्तव्यः। अनर्हत्वमेव पङ्क्तावभवनेन प्रतीयते। अन्यैर्ब्राह्मणैः सह भोजनं नार्हन्ति। अत एव 'पङ्क्तिदूषका' उच्यन्ते। तैः सहोपविष्टा अन्येऽपि दूषिता भवन्ति ॥ १६७ ॥

(२) **सर्वज्ञनारायणः।** एतानन्यांश्च **विगर्हिताचारान्।** **अपाङ्क्तेयानित्येषां** पङ्क्तावपि न भोक्तव्यमित्यर्थः। **उभयत्र** दैवे पित्र्ये च ।। १६७ ।।

(३) **कुल्लूकः।** **एतान्स्तेनादीन्निन्दिताचारात्काणादींश्च** पूर्वजन्मार्जितनिन्दि-तकर्मशेषलब्धकाणादिभावान्साधुभिः सहैकत्र भोजनाद्यनर्हान्ब्राह्मणापसदान्ब्राह्मणश्रेष्ठः शास्त्रज्ञो दैवे पित्र्ये च त्यजेत् ॥ १६७ ॥

(४) **राघवानन्दः**। उपसंहरति **एतानिति। उभयत्र** दैवे पित्र्ये च। **प्रवरः** द्विजातिश्रेष्ठो विप्रः।। १६७।।

(५) **नन्दनः। द्विजातिप्रवरविद्वच्छब्दौ** वर्जयितृप्रशंसापरौ। **उभयत्र** दैवपित्र्योः।। १६७।।

(६) **रामचन्द्रः। उभयत्र** दैवे पित्र्ये हव्यकव्यादिषु। अपीति निश्चये।। १६७।।

(७) **मणिरामः। उभयत्र** दैवे पित्र्ये च **एतांस्त्यजेदित्यर्थः**।। १६७।।

(८) **गोविन्दराजः। एतानिति**। एते निन्दिताचाराः स्तेनादयः इहजन्मनि। काणादयश्च "एवं कर्मविशेषेण जायन्ते" इति वक्ष्यमाणत्वात् प्रागजन्मनि। अत एतान् योग्यब्राह्मणैः सह एकपङ्क्तिभोजनानर्हान् ब्राह्मणापसदान् द्विजश्रेष्ठः शास्त्रज्ञः दैवे पित्र्ये च वर्जयेत्।। १६७।।

**ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति।।**
**तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते।। १६८।।**

(१) **मेधातिथिः**। यथैते स्तेनादयः पङ्क्तिदूषकाः—एवमनधीयानस्तत्तुल्यदोष इत्येवमर्थं पुनर्वचनम्। अन्ये तु व्याचक्षते— अधीयानानां काणादीनामसति वर्तमाने विगर्हिताचारत्वे दैवे कदाचित् प्राप्त्यर्थम्। 'अनधीयानो ब्राह्मणो वर्ज्यः, यस्तु अधीते तस्मै हव्यं किमिति न दीयते' एवमर्थमेवात्र हव्यग्रहणम्। हव्ये **अनधीयानः** केवलो वर्ज्यः। ये च दृश्यमानगर्हिताचाराः। अतो ये च वचनेन उभयत्र प्रतिषिद्धास्ते दैवे पित्र्ये च वर्ज्याः, न तु पित्र्य एव। तथा च **वसिष्ठः**— "अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः। अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः"।। इति।।

**तृणाग्निरिव शाम्यतीति**। तृणाग्निर्यथा न शक्नोति हवींषि पक्तुं, हुतमात्रेण हविषा शाम्यति उद्वाति च। यस्मिन्नग्नौ हुतं न भस्मीभवति। न ततो होमात्फलम्। एवं हि श्रूयते "असमिद्धे न होतव्यम्। अग्निर्वै सर्वा देवता" इति। एवमनधीयानो ब्राह्मणस्तृणाग्नितुल्यः। एतदेवाह **न हि भस्मनि हूयत** इति। यथा तृणाग्निः प्राग् भस्मीभवति, न तत्र हूयते, एवं तादृशो ब्राह्मणो न भोज्यते।। १६८।।

(२) **सर्वज्ञनारायणः। तृणाग्निरिवे**त्यल्पफलहेतुतोक्ता। **भस्मनि** तृणाग्निभस्मनि।। १६८।।

(३) **कुल्लूकः। तृणाग्निर्यथा** न हविर्दहनसमर्थो हविषि प्रक्षिप्ते **शाम्यति,** निष्फलस्तत्र होमः। एवं वेदाग्निशून्यो **ब्राह्मण**स्तृणाग्निसमस्तस्मै देवोद्देशेन त्यक्तं **हविर्न दातव्यं** यतो **भस्मनि न हूयते**। 'श्रोत्रियायैव देयानी'त्यनेनैवानधीयानस्यापि प्रतिषेधसिद्धौ स्तेनादिपङ्क्तिदूषकत्वज्ञापनार्थं पुनर्वचनम्। **अन्ये** तु दैवे अनधीयान एव वर्जनीयः। अधीयानस्तु काणादिरपि शारीरदोषयुक्तो ग्राह्य इति एतदर्थं पुनर्वचनम्। अत एव **वसिष्ठः** "अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः। अदूष्यं तं यमः

प्राह पङ्क्तिपावन एव सः।।" शारीरैः काणत्वादिभिर्न तु स्वयमुत्पाद्यैः स्तेनत्वादिभिः ।। १६८ ।।

(४) **राघवानन्दः।** दैवे तु ब्राह्मणपरीक्षाभावेऽपि वेदविद्यापेक्षितेत्याह **ब्राह्मण इति। अनधीयानो** वेदरहितः। **शाम्यति** वेदतेजोरहितत्वात्। **हव्यं** कव्योपलक्षणम् ।। १६८ ।।

(५) **नन्दनः।** उभयत्र श्रोत्रियत्वमादरणीयमित्याह **ब्राह्मण इति। हव्यमिति** कव्यस्याप्युपलक्षणम् ।। १६८ ।।

(६) **रामचन्द्रः। तृणस्याग्निर्यथा शाम्यति** तथा**ऽनधीयानो** द्विजः **शाम्यति।** तस्मै द्विजायान्नं न **दातव्यम् नहि भस्मनि हूयते** तृणाग्निर्यथा हविर्दग्धुं न शक्नोति हुतमात्रेण शाम्यति तथा अस्मिन्नग्नौ हुतं न भस्मीभवति। वेदाध्ययनरहितो भस्मतुल्यो द्विजो भवतीत्यर्थः ।। १६८ ।।

(७) **मणिरामः।** अनधीयानस्य अपांक्तेयत्वज्ञापनार्थं पुनराह **ब्राह्मणस्त्विति** ।। १६८ ।।

(८) **गोविन्दराजः। ब्राह्मण इति।** तृणाग्निर्यथा हविषोपशाम्यति न हविर्दहनसमर्थः, ततश्च निष्फलः तत्र होमः, एवं निष्फलत्वात् वेदाध्ययनेन शून्यो ब्राह्मणः तृणाग्नितुल्यः तस्मा उद्देशेन न दातव्यम्। यतो **न भस्मनि** होमः क्रियते। 'श्रोत्रियायैव देयानि' इत्यनेनैव अनधीयाननिषेधसिद्धौ इदं वचनं दैवे काणादीनां छन्दोऽध्यायिनां स्वाचाराणां अभ्यनुज्ञानार्थम्। गर्हिताचारं वर्जयेत् अनधीयानं च। यस्तु स्वाचारोऽधीयानश्च तस्य दैवे काणत्वलिङ्गसंसूचितं प्राग्जन्मार्जितगर्हितकर्मशेषवत्वमनपेक्षम्। तथा **वसिष्ठः** 'अथ चेन्मन्त्रसंयुक्तः शारीरैः पङ्क्तिदूषणैः। अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः।।' इति ।। १६८ ।।

## अपङ्क्त्यदाने यो दातुर्भवत्यूर्ध्वं फलोदयः।।
## दैवे कर्मणि पित्र्ये वा तं प्रवक्ष्याम्यशेषतः।। १६९ ।।

(१) **मेधातिथिः।** अस्य प्रतिषेधविधेः फलमाह। पंक्तिमर्हन्तीति 'पङ्क्त्याः', न पङ्क्त्याः 'अपङ्क्त्याः'। दण्डयादिदर्शनाद्रूपसिद्धिः। तेभ्यां दाने यः फलोदयः फलोत्पत्तिर्भवति दातुः, तं सर्वमिदानीं ब्रवीम्यवहिता भवतेति ।। १६९ ।।

(२) **सर्वज्ञनारायणः।** अपाङ्क्तदाने अपाङ्क्तेभ्यो दाने कृते ।। १६९ ।।

(३) **कुल्लूकः।** पङ्क्तिभोजनानर्हब्राह्मणाय **दैवे** हविषि **पित्र्ये वा** दत्ते दातुर्यो दानादूर्ध्वं फलोदय**स्तम**शेषमभिधास्यामि ।। १६९ ।।

(४) **राघवानन्दः।** प्रतिज्ञान्तरं प्रतिजानीते **अपाङ्क्त्ये**ति। अपाङ्क्त्याः विप्रभोजनपङ्क्तौ प्रवेशानर्हाः। **ऊर्ध्वं** परलोके। **फलोदयो** विरुद्धफलप्राप्तिः ।। १६९ ।।

(६) **रामचन्द्रः । अपाङ्क्त्यदाने** अपाङ्क्तेयानां पुंसां दाने **दातुर्यः** फलोदय **ऊर्ध्वं** परे लोके भवेत् तदशेषतः फलं **वक्ष्यामि दैवे पित्र्ये वा कर्मणि** ।। १६९ ।।

(७) **मणिरामः । ऊर्ध्वं** दानोत्तरम् ।। १६९ ।।

(८) **गोविन्दराजः । अपङ्क्त्यदान इति ।** पङ्क्तिभोजनानर्ह**दाने दातुर्य**देनो देवपित्रर्थहविषि फलोत्पत्तिर्भवति तत् साकल्येन **प्रवक्ष्यामि** ।। १६९ ।।

## अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा ।।
## अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते ।। १७० ।।

(१) **मेधातिथिः । अव्रताः** असंयताः शास्त्राचारवर्जिताः । परिवेत्तृप्रभृतयो यद्यपि शास्त्रबाह्यास्तथापि भेदेन स्मरणार्थं दोषगुरुत्वार्थे वा कथ्यन्ते । अन्ये **चापाङ्क्त्याः** काणश्लीपद्यादयः तैर्यदन्नं भुक्तं श्राद्धे भवति, तद्रक्षांसि देवद्विषो भुञ्जते, न च पितरः । अतो निष्फलं तच्छ्राद्धं भवतीत्युक्तं भवति । रक्षोग्रहणमर्थवादः ।। १७० ।।

(२) **सर्वज्ञनारायणः । अव्रतै**रकृतस्नातकादिव्रतैः **अन्यै**रपाङ्क्तेयैः । स्मृत्यन्तरोक्तैः ।। १७० ।।

(३) **कुल्लूकः ।** वेदग्रहणार्थं व्रतरहितैस्तथा **परिवेत्त्रादिभिरन्यैश्चापाङ्क्तेयैः** स्तेनादि**भिर्यद्**हव्यं **भुक्तं तद्रक्षांसि भुञ्जते ।** निष्फलं तच्छ्राद्धं भवतीत्यर्थः ।। १७० ।।

(४) **राघवानन्दः ।** तदेवाह **अव्रतैः** वेदार्थव्रतरहितैः **अपाङ्क्तेयैः परिवेत्त्रादिभिः यदन्यै**स्तत्सदृशैः काणाद्यैः । तस्मात्पाङ्क्तेया रक्षोघ्नाः इति भावः । अत एव **वसिष्ठः** 'अथ चेन्मंत्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । अदूष्यस्तं यमः प्राह पङ्क्तिपावन एव स' इति ।। १७० ।।

(५) **नन्दनः । रक्षांसि भुञ्जते** न देवा नापि पितरः । तेन तन्निष्फलमित्यभिप्रायः ।। १७० ।।

(६) **रामचन्द्रः । अन्यैरपाङ्क्त्यैः** ।। १७० ।।

(७) **मणिरामः । अव्रतैः** वेदग्रहणार्थं व्रतरहितैः **रक्षांसि भुंजते** निष्फलं भवतीत्यर्थः ।। १७० ।।

(८) **गोविन्दराजः ।** वेदग्रहणार्थं सावित्र्यादिव्रतरहितैः तथा **परिवेत्त्रादिभिरन्यैश्च** स्तेनादिभिरपाङ्क्त्यैः **यत्** देवपित्रर्थं **भुक्तं** तत् सुकृतलेशवशेन **रक्षांसि भुञ्जते** न दात्रभिमतफलाय भवति । अव्रतानां च निषिद्धमध्यापठितानामप्यस्मादेव निषेधो बोध्यः ।। १७० ।।

## दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।।
## परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ।। १७१ ।।

(१) **मेधातिथिः ।** अग्रे आदौ जातः **अग्रजः** सोदर्यो भ्रातोच्यते । एवं हि पठ्यते— "पितृव्यपुत्रान् सापत्नान्परनारीसुतांस्तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने' इति ।

अत्र सोदर्योऽग्रजः। तस्मिन् स्थितेऽकृतदाराग्निसंयोगे। तिष्ठतिः प्रकृतव्यापार-निवृत्तौ प्रयुक्तः। अग्निहोत्रशब्दः कर्मवचनोऽपि तदर्थेऽग्न्याधाने वर्तते।

स्मृत्यन्तरे विशेषः पठ्यते–"उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीब एव च। राजयक्ष्माऽऽमयावी च न योग्यः स्यात्प्रतीक्षितुम्" ।।

एतदप्यधिकारोपलक्षणार्थम्। अतश्चापांक्तेयोऽपि गृह्यते। कालविशेषोऽधिको व्यपेक्ष्यते। तथा च स्मृतिः– (गौ. सू. १८/१९)। "अष्टौ वर्षाण्युदीक्षेत, षडित्येके" इति एषा च वर्षसंख्या यदा कनीयान् प्राप्तविवाहकालः ततः प्रभृति द्रष्टव्यः। विवाहकालश्च स्वाध्यायविधिनिवृत्तिः। "ननु च प्रोषिताधिकारे तत्पठितम्। भर्तरि प्रोषिते यः स्त्रीणां प्रवासकालस्तमुपक्रम्य भ्रातरीत्यादि पठितम्"। सत्यम्। वाक्यान्तरे प्रोषित-शब्दस्य प्रत्यक्षः सम्बन्धोऽवगतः। वाक्यान्तरे तु सम्बन्धे प्रमाणं वक्तव्यम्। न च तदस्ति। "यथा स्वरितेनाधिकार इति"। न चात्र तच्छब्दोऽस्ति। न च तदपेक्षया विनैव तस्य वाक्यस्यापरिपूर्णत्वम्। वसिष्ठेन चाविशेषेणाभिशब्देन स्मार्तस्याप्यग्नेर्ग्र-हणं कृतम्। केचित्पितर्यप्यकृताधाने विधिमिच्छन्ति। अग्रजशब्दस्य यौगिकत्वात् पिताप्यग्रजो भवतीति। यद्येवमन्योऽपि योऽग्रजस्तत्राप्येवं प्राप्नोति। न चायमग्रजा-नुजव्यवहारः पितापुत्रयोर्विद्यते। स्मृत्यन्तरेऽपि तु पठ्यते (गौ. १८/१८) "भ्रातरि च ज्यायसीति"। **परिवित्तिः पूर्वजो** ज्येष्ठः।। १७१ ।।

(२) **सर्वज्ञनारायणः**। परिवेत्त्रादिपदानि व्याचष्टे **दाराग्निहोत्रेति। दाराग्नि-होत्रयोरन्यतरस्य संयोगं** संबन्धम्। **स्थिते** अकृते **अग्निहोत्र**पदं लक्षणया त्रेताग्निपरम्। आधाने च ज्येष्ठानुमतिं विना कृते परिवेत्तृता न तदनुमत्या।। १७१ ।।

(३) **कुल्लूकः**। अप्रसिद्धत्वात्परिवेत्त्रादिलक्षणमाह **दारेति**। अग्निहोत्रशब्दो-ऽयमग्निहोत्राद्याधानपरः यः सहोदरे ज्येष्ठे भ्रातर्यनूढेऽनग्निके च दारपरिग्रहे श्रौतस्मा-र्ताग्निहरणं च कुरुते **स परिवेत्ता** ज्येष्ठश्च **परिवित्ति**र्भवति ।। १७१ ।।

(४) **राघवानन्दः**। परिवेत्तृपरिवित्त्योर्लक्षणमाह **दारेति**। **परिवेत्ता** परि ज्येष्ठं त्यक्त्वा आदौ वेत्ता कन्याग्न्योर्लब्धा। यः पूर्वजो ज्येष्ठः स **परिवित्तिः**।। १७१ ।।

(५) **नन्दनः**। अथ परिवेत्त्रादिशब्दानामपाङ्क्त्यानुक्रमेणोद्दिष्टानां लोकविषयतां परिजिहीर्षुंस्तेषामर्थमाह **दारेति**।। १७१ ।।

(६) **रामचन्द्रः। य अग्रजे स्थिते सति दाराग्निहोत्रं कुरुते** स्वीकुर्यात्स **परिवेत्ता विज्ञेयः। पूर्वजो** ज्येष्ठः **परिवित्तिसंज्ञो** भवति।। १७१ ।।

(७) **मणिरामः**। परिवेत्त्रादिलक्षणमाह **दारेति। अग्रजे**ऽनूढे अनग्निके च **स्थिते**।। १७१ ।।

(८) **गोविन्दराजः**। परिवेत्त्रादीनप्रसिद्धत्वाल्लक्षयति **दाराग्निहोत्रसंयोगमिति।** यो ज्येष्ठे भ्रातरि अकृतदारके तिष्ठति सति दारश्रौतस्मार्ताग्न्यानयनं कुरुते **स परिवेत्ता**, ज्येष्ठश्च **परिवित्ति**र्बोध्यः।। १७१ ।।

**परिवित्तिः परीवेत्ता यया च परिविद्यते॥**
**सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः॥ १७२॥**

(१) **मेधातिथिः**। प्रसङ्गात्परिवेदनसम्बन्धिनामन्येषामपि दोषदर्शनद्वारेण निषेधं करोति निषेधपरिवर्जितः परिभूतो वा वेदनेन **परिवित्तिः**। परिवर्ज्यं ज्येष्ठं करोति परिवेदनं **परीवेत्ता**। **यया कन्यया च परिविद्यते**। **सर्वे ते नरकं यान्ति**। दाता याजकश्च येषां नरकगामिनां पञ्चमः। 'दाता' कन्यायाः एवं प्रकृतत्वात्पित्रादिः। 'याजको' विवाहे यः करोति होमं यो वा तत्रोपदेष्टा। अथवा तेषामेव परिवेत्तृपरिवित्तितत्कन्यादातॄणां ज्योतिष्टोमादीनामपि यज्ञानामृत्विक्। तस्माज्ज्येष्ठेन तथा कर्तव्यं यथाऽस्य कनीयसो भ्रातुर्विवाहे विघ्नकर्तृत्वं न भवति। कनीयसाऽपि कालप्रतीक्षा द्वादशाष्टषड्वर्षादिविषया कर्तव्या। कन्ययाऽपि तादृशाय दातुं न देयम्। दातृयाजकौ पञ्चमौ येषामिति द्वन्द्वगर्भो बहुव्रीहिः॥ १७२॥

(२) **सर्वज्ञनारायणः**। **यया** कन्यया दाता कन्यायाः **याजकस्तत्र** ब्रह्मत्वेनार्त्विज्यकारी दातृसहितो याजकः पञ्चमो येषां ते **दातृयाजकपञ्चमाः**। याजकोऽत्र परिवेत्तुर्दर्शपूर्णमासयागेष्वृत्विगित्येके॥ १७२॥

(३) **कुल्लूकः**। प्रसङ्गात्परिवेदनसंबन्धिनां पञ्चानामप्यनिष्टं फलमाह **परीति**। **परिवित्तिः परीवेत्ता** च **यया** च कन्यया परिवेदनं क्रियते कन्याप्र**दाता याजकश्च** तद्विवाहहोमकर्ता **स पञ्चमो** येषां **ते सर्वे नरकं** व्रजन्ति॥ १७२॥

(४) **राघवानन्दः**। तत्रैव प्रासंगिकं दोषमाह **परिवित्तिरिति**। **यया** स्त्रिया। **परिवेदनं** विवाहः॥ १७२॥

(५) **नन्दनः**। परिवेदनसम्बन्धिनोऽपि वर्जनीय इत्यभिप्रायेणाह **परिवित्तिरिति**। दातृसहितो याजकः पञ्चमो येषां ते **दातृयाजकपञ्चमाः**॥ १७२॥

(६) **रामचन्द्रः**। **परिवित्तिः** लघुप**रिवेत्ता यया** स्त्रिया सह **परिविद्यते**। **याजको** विवाहकर्ता आचार्यः **पञ्चमः**। ते **सर्वे नरकं यान्ति** गच्छन्तीत्यर्थः॥ १७२॥

(७) **मणिरामः**। प्रसङ्गात् परिवेदनसंबन्धिनामपि अनिष्टफलमाह **परीति**। **यया** कन्यया **परिविद्यते परिवेत्ता** भवति सापि **याजकः** तद्विवाहहोमकर्ता च। एते पञ्चापि **नरकं** गच्छन्तीत्यर्थः॥ १७२॥

(८) **गोविन्दराजः**। प्रसङ्गादेतद्व्यतिक्रमफलमाह **परिवित्तिरिति**। **परिवित्तिपरिवेत्तारौ यया** च कन्यया हेतुभूतया परिवेदनं क्रियते **दाता** च कन्यायाः **याजकश्च** तदुद्वाहहोमस्योपदेष्टा येषां **पञ्चमः** ते नरकं गच्छन्ति॥ १७२॥

**भ्रातुर्मृतस्य भार्यायां योऽनुरज्येत कामतः॥**
**धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः॥ १७३॥**

(१) **मेधातिथिः।** नियोगधर्मेण प्रवृत्तो **भ्रातुर्मृतस्य** तद्भार्यागमने **योऽनुरज्येत** प्रीतिं भावयेत् **कामतः।** नियोगधर्मातिक्रमेण "सकृत्सकृद्दृतौ" इत्येवं विधिं हित्वा इच्छानुरागगाढालिङ्गनपरिचुम्बनादि कुर्यादसकृद्वा प्रवर्तेत, चेतसा वा विक्रियेत, कामिनीप्रेमदृष्टिबन्धवचनादिलिङ्गेनानुरागित्वेन विभावितो **दिधिषूपतिर्वेद्यः।**

**अग्रेदिधिषूपति**लक्षणं तु स्मृत्यन्तरात् ज्ञेयम्। "जीवत्यग्रेदिधिषूपतिः" इति।

केचित्तु नैवायं समाम्नाये श्लोकोऽस्तीत्याहुः। अपरिपूर्णं च लिङ्गं ब्रुवते। द्वयस्य लक्षणे कर्तव्ये, न कर्तव्यकारिणामेकस्योपपद्यते। स्मृत्यन्तरे चैतदुभयं लक्ष्यते— "परपूर्वापतिं धीरा वदन्ति दिधिषूपतिम्। यस्त्वग्रेदिधिषूर्विप्रः सैव यस्य कुटुम्बिनी।।" न त्विह सम्भवति, परपूर्वापतेः पृथगेव निषिद्धत्वात् तस्मादन्यो दिधिषूपतिः।। १७३।।

(२) **सर्वज्ञनारायणः। धर्मेण** प्रथमं **नियुक्तायां** पश्चा**द्योऽनुरज्येत** अपिशब्दाद्रागमात्रेणाऽपि **दिधिषूपति**रग्रेदिधिषूपतिः। एवं च तस्या अपि स्त्रिया दिधिषूरग्रेदिधिषूर्वेति नामोक्तं भवति।। १७३।।

(३) **कुल्लूकः। मृतस्य भ्रातु**र्वक्ष्यमाणनियोग**धर्मेणापि नियुक्तायां भार्यायां** "सकृत्सकृदृतावृता"वित्यादिविधिं हित्वा कामेनानुरागं भावयेदाश्लेषचुम्बनादि कुर्यादसकृद्वा प्रवर्तेत **स दिधिषूपति**र्ज्ञातव्यः। अतः श्राद्धनिषिद्धपात्रमध्यपाठादस्यापि हव्यकव्यपात्रयोर्निषेधः कल्पनीयः।। १७३।।

(४) **राघवानन्दः।** दिधिषूपतिरित्युक्तस्य लक्षणमाह **भ्रातुरिति। अनुरज्येत** स्तनालिङ्गनादिना। **नियुक्तायां** पुत्रार्थमपि। 'ज्येष्ठायां यद्यनूढायां कन्या योद्वाह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृते'ति।। तयोः पतिर्वा। **गोविन्दराजस्तु** वृत्तवशादग्रेपदलोपादयमेवाग्रेदिधिषूपतिरिति।। १७३।।

(५) **नन्दनः।** अनिर्दिष्टस्य दिधिषूपतिशब्दस्यार्थकथनेन दिधिषूपतेरप्यपाङ्क्तेयत्वं गम्यते।। १७३।।

(६) **रामचन्द्रः। मृतस्य भ्रातुर्भार्यायां कामतो योऽनुरज्येत** अनुरक्तो भवेत्। **धर्मेणापि नियुक्ताया**माज्ञप्तायां **स दिधिषूपतिर्ज्ञेयः।** यथा व्यासं धृतराष्ट्रपाण्डुजनकत्वात् परपूर्वापतिं धीरा वदन्ति दिधिषूपतिरिति ज्ञेयः।। १७३।।

(७) **मणिरामः। धर्मेणापि** वक्ष्यमाणनियोगधर्मेणापि **कामतः** "सकृत्सकृदनावृत्तौ" इत्यादिविधिं हित्वा कामेनेत्यर्थः।। १७३।।

(८) **गोविन्दराजः। भ्रातुरिति। मृतस्य भ्रातुः** वक्ष्यमाणनियोगे **धर्मेणापि नियुक्तायां भार्यायां यो** नियोगधर्मं हित्वा कामेन हेतुभूतेनानुरागं भावयेत् **सोऽग्रेदिधिषूपतिः** निषिद्धत्वात्। अत्र वृत्तवशात् सत्यभामावच्चाग्रशब्दस्याप्रयोगः।। १७३।।

**परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ।।**
**पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः।।१७४।।**

(१) **मेधातिथिः**। पत्यौ जीवति तद्गृहे स्थितायां तद्भार्यायां यो गूढोत्पन्नः भंग्या उपपतित्वेन वा पत्युः क्षमया जायते सोऽन्यजातः **कुण्ड** उच्यते। **मृते** तु **गोलकः**। एतावनियुक्तासुताविति केचित् – तदयुक्तम्, तयोरब्राह्मण्यादेवाप्राप्तिः। तस्मान्नियोगोत्पन्नौ कुण्डगोलकौ। "कथं पुनरनियुक्तासुतयोरब्राह्मण्यमितरयोस्तु ब्राह्मण्यम्?"। जातिलक्षणे पत्नीग्रहणात्––'सर्ववर्णेषु तुल्यासु पत्नीष्विति'। सम्बन्धिशब्दश्च पत्नीशब्दो भर्तृशब्दवत्। यज्ञसंयोगे च पत्नीशब्दो व्युत्पाद्यते न चान्यदीयया भार्यया सहान्यस्य यज्ञाधिकारः। "यद्येवं नियोगोत्पन्नयोरपि समानन्यायत्वान्नैव ब्राह्मण्यम्"। दशम एतन्निर्णेष्यामः। मा भूद्वा नियुक्तानियुक्तासुतयोः कस्यचिदपि ब्राह्मण्यम्। ननूक्तमसति ब्राह्मण्ये प्राप्त्यभावात्प्रतिषेधानुपपत्तिः। पतितप्रतिषेधादेव एतद्भविष्यति। द्विजातिकर्मभ्यो हानिः 'पतनम्'। द्विजातिकर्मत्वे सति श्राद्धभोजनस्य कुतः पतिते प्राप्तिः?। आम्नायते च प्रतिषेधो "ये स्तेनपतिता" (१५० श्लो.) इति ।। १७४ ।।

(३) **कुल्लूकः**। परदारेषु कुण्डगोलकाख्यौ द्वौ सुतावुत्पद्येते। तत्र जीवत्पतिकायामुत्पन्नः कुण्डो मृतपतिकायां च **गोलकः**।। १७४ ।।

(४) **राघवानन्दः**। कुण्डगोलकौ लक्षयति **परदारेष्विति**। परजातत्वेन व्यक्तो गर्भः **कुण्डः**। अनियुक्तयोः स्त्रियोः अयमेव गूढोत्पन्न इति वा ।। १७४ ।।

(५) **नन्दनः**। सवर्णोत्पत्ताविमे संज्ञे ।।१७४।।

(६) **मणिरामः**। द्वौ स्पष्टार्थौ।। १७४ ।। ।। १७५ ।।

(८) **गोविन्दराजः। परदारेष्विति**। परभार्यायां **कुण्डगोल**काख्यौ सुतावुत्पद्येते। तत्र सपतिकायां य उत्पद्यते स **कुण्डः**, विधवायाञ्च **गोलकः**।। १७४ ।।

**ते तु जाताः परक्षेत्रे प्राणिनः प्रेत्य चेह च ।।**
**दत्तानि हव्यकव्यानि नाशयन्ति प्रदायिनाम् ।।१७५।।**

(१) **मेधातिथिः**। "जात्याख्यायामिति" (पा. सू. १।२।५८) बहुवचनं **प्राणिन** इति। ब्राह्मण्यादिव्यपदेशमवजानते 'प्राणिन' इत्येवं व्यपदेशार्हा, न व्यपदेशान्तरमर्हन्ति। अतस्ते **नाशयन्ति हव्यकव्यानि** निष्फलीकुर्वन्ति **प्रदायिनां** दातॄणाम्। परिवेत्त्रादीनां लोके नातिप्रसिद्धत्वात् शाब्दैश्चास्मृतत्वाद्व्यवस्थार्थं लक्षणप्रणयनम् ।। १७५ ।।

(२) **सर्वज्ञनारायणः**। द्वौ सुतौ जीविनौ प्रेत्य परलोके भोग्यानि हव्यकव्यानि हव्यकव्यफलानि नाशयेते। इह लोके भोग्यानि शान्त्यादिफलानि। यद्यपि **याज्ञवल्क्येन** (४।९०) 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातय इत्युक्ता "विन्नास्वेष विधिः स्मृत" (इति।) विवाहितसवर्णस्त्रीजातानामेव सजातितोक्ता। तथापि कुण्डगोलकयोरविन्नस्त्रीजनितत्वेऽपि ब्राह्मणब्राह्मणीजन्मनोरेतयोः श्राद्धपात्रतानिषेधाद्ब्राह्मण्यं गम्यत इत्येके नेत्यपरे ।। १७५ ।।

(३) **कुल्लूकः।** मर्यादायामाङ् नाभिविधौ। सपिण्डीकरणश्राद्धपर्यन्तमचिरमृतस्य **द्विजातेश्च** वैश्वदेवब्राह्मणभोजनरहितं श्राद्धार्थमन्नं ब्राह्मणं **भोजयेदेकं च पिण्डं** दद्यात्। अस्य च श्राद्धस्यानुष्ठानं एकोद्दिष्टं दैवहीनमेकार्धैकपवित्रकम्। 'आवाहनाग्नौकरणरहितं ह्यपसव्यवदि'ति (१।२५१) **याज्ञवल्क्यादि**स्मृतिष्ववगन्तव्यम्।। २४७।।

(४) **राघवानन्दः।** एकोद्दिष्टस्य पार्वणविकृतितया सर्वधर्मप्राप्तौ, यथा गृहमेधीये दर्शविकृतावपि आज्यभागौ यजेतेति तयोरेवानुष्ठानं नान्यस्येति वचनात् तन्न्यायेनाह **आ सपिण्डेति द्वाभ्यां।** सपिण्डीकरणपर्यन्तम् मर्यादायामाङ। **संस्थितस्या**सन्नमृतस्य **एकं पिण्डं** एकब्राह्मणभोजनं दैवहीनं एकावर्घ्यैकपवित्रं आवाहनाग्नौकरणरहितं स्मृत्यन्तरादवगन्तव्यम्। तच्च यावज्जीवम्। 'मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरं। प्रतिसंवत्सरे चैवमाद्यमेकादशेऽहनीति' स्मृतेः।। २४७।।

(५) **नन्दनः।** असपिण्डीकृतपितृकस्य श्राद्धे विशेषमाह **आ सपिण्डेति। आ सपिण्डक्रियाकर्म** आ सपिण्डक्रियायामनुष्ठानं सपिण्डीकरणात्प्राक् कर्तव्यं श्राद्धकर्मेति यावत्। उच्यत इति शेषः।। २४७।।

(६) **रामचन्द्रः। संस्थितस्य** मृतस्य **द्विजातेः असपिण्डक्रिया** सपिण्डकरणव्यतिरिक्तं कर्म। **अदैवं** वैश्वदेवरहितं श्राद्धं **भोजयेत्,** च पुनः **एकं पिण्डं निर्वपेत्।** एकोद्दिष्टमित्यर्थः।। २४७।।

(७) **मणिरामः। आ सपिण्डक्रियाकर्म** सपिंडीकरणश्राद्धपर्यंतं। **संस्थितस्य।** अचिरमृतस्य। दैवहीनं श्राद्धं कुर्यात् **एकं च पिंडं** दद्यात्। तथा चैतदेकोद्दिष्टम्।। २४७।।

(८) **गोविन्दराजः। असपिण्डक्रियाकर्मेति।** अचिरमृतस्य द्विजातेरेकादशाहादौ असपिण्डक्रियाधिष्ठानं कर्तव्यम्। नामावास्यावत् पूर्वाभ्यां सहपिण्डदानं कार्यम्। किं तर्हि? वैश्वदेवब्राह्मणभोजनरहितं श्राद्धार्थमन्नं ब्राह्मणं च भोजयेत्। एकं पिण्डं तस्मा एव दद्यात्। तस्मात् यावद्ब्राह्मणं भोजयेत्। साधितं चैतत् सविस्तरं **स्मृतिमञ्जर्यां ऋजुपञ्जिकायां च।** इह तु ग्रन्थभारभयान्न प्रतायते।। २४७।।

**सहपिण्डक्रियायां तु कृतायामस्य धर्मतः।।**
**अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः।। २४८।।**

(१) **मेधातिथिः।** यदा तु सपिण्डीकरणं कृतं भवति तदा **अनयैवावृता** पार्वणश्राद्धविधिना त्रिभ्यो दद्यात्। **आवृदिति**कर्तव्यता। सपिण्डीकरणश्राद्धं दैवपूर्वं नियोजयेत्। पितॄनेवाशयेत् तत्र पुनः प्रेतन्न निर्दिशेत्।। पितरश्चात्र प्राक्सपिण्डीकृताः पितृवर्गमनुप्रवेशिताः पितामहादय उच्यन्ते। तानाशयेत्। 'तत्र पुनः' शब्दस्तेष्वेव ब्राह्मणेषु प्रेत आवाहयितव्यः, तत्र हि सर्वैस्तैः सह संसर्गस्तस्य संसृजनाय तत्कर्म।

यदपि **विष्णुना** पठितं "प्रेताय ब्राह्मणान् भोजयेत् प्रेतपित्रे प्रेतपितामहाय च प्रेतप्रपितामहायेति", अत्रापि नैवं श्रूयते पृथक् भोजयेदिति। तत्र यथा बहुदैवत्यं हविर्बह्वीर्देवता उद्दिश्य

सकृदेकं हूयते, एवं ब्राह्मणोऽपि बहूनुद्दिश्य भोज्येतेति न किञ्चिदनुपपन्नम्। तथाहि सहवचन-मनुगृहीतं भवति, पित्र्ये च न युग्मा भोजिता भवन्ति। यथा 'एकैकमुभयत्र वे' ति येषां विधिस्तन्मते एकः सर्वोद्देशेन भोज्यते। एवमेतद्द्रष्टव्यम्।

"नन्वेवं सति पितृकृत्ये त्रीनिति सर्वदैव सहोद्देशः प्राप्नोति। एकैकस्मिन् ब्राह्मणे सर्वं उद्देश्येरन् तत्रापि न पृथक्ग्रहणमस्ति"। कथं नास्ति ? । गृह्ये हि पठ्यते "न त्वेवैकम्। सर्वेषां पिण्डैर्व्याख्यातम्"। किंच 'प्रेतपात्रं पितृपात्रेषु सेचयेदर्घार्थं'मित्याह। तत्र कृतासनपात्रा-भावे प्रेतपात्रोदकस्य कुतः पात्रादर्घदानं? यदि तावत्संमीलितात्--तदयुक्तं; पितामहादेस्तत्क-ल्पितं, न पितुः। न चान्यार्थं कल्पितादित्यन्यार्थता युक्ता। अथ कृत्वाऽर्घदानं पश्चात्संनयनं कुर्यात्, तदा कृत्वाऽर्घदानं तदर्थं सन्नयनस्य स्वतंत्रार्घार्थं प्रसेचयेदिति विरुध्येद् वचनम्। उक्तेनात्र प्रकारेण न कश्चन विरोधः।

"अथ कोऽयं प्रेतो नाम?। प्रपितामहाय पिण्डः सपिण्डीकरणादूर्ध्वं न दीयते यत-स्तेष्वेवानुप्रविष्टः। तथा च स्मृतिः—"यः सपिण्डीकृतं प्रेतं पृथक् पिण्डेन योजयेत्। विधिघ्नस्तेन भवति पितृहा चोपजायते"।। इति।

पृथगेव हि तस्मै निरूप्यते। न त्वेकः सर्वेभ्य इति। मन्त्राश्च एतमेवार्थमभिवदन्ति 'ये समाना' इत्यादयः।

अत्रोच्यते। नायं प्रेतशब्दोऽयतेः क्रियायोगेन वर्तते। रूढिरियं मृतः प्रेत 'इदानीं प्रेत' उच्यते। न हि दूरमध्वानं गतः प्रेत उच्यते। अस्ति च क्रियायोगः अविशेषेण पूर्वप्रेत इदानीं प्रेते च। तथा च श्रुतिः "प्रयन्नेवास्माँल्लोकाद्ये समाना" इति अचिरमरणे प्रेतप्रयोगं दर्शयति 'प्रेतायान्नं दिनत्रयमिति' सद्यःसंस्थितमधिकृत्य।

यत्तु 'पृथक्पिण्डेनेति' अस्यायमर्थः—सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं न कर्तव्यम्। यदा यदा श्राद्धं तदा तदा त्रिभ्यः, मृताहनि पितृभ्यस्त्रिभ्य एव कर्तव्यम्। नैकस्मा एव पित्रे। तथा 'अनयैवावृता कार्यमिति' पार्वणश्राद्धेतिकर्तव्यता वाऽतिदिश्यते।

"ननु चानयैवेति प्रकृतपरामर्शाः प्रतीयन्ते, सन्निहितवचनत्वात्सर्वनाम्नां, सन्नि-हितश्चैकोद्दिष्टविधिः"। नैवम्; यदि हि कृतेऽपि सपिण्डीकरणे एकस्यैव क्रियेत, तदा भेद-निर्देश एव नोपपद्यते। तुशब्दश्च प्रकृतायामितिकर्तव्यतायां भेदं सूचयति, 'असपिण्डक्रियाया-मेष विधिः, सहपिण्डक्रियायां पुनः कृतायां नायं मन्तव्य' इति। अतो व्यवहिताऽपि बुद्धि-स्थत्वात्पार्वणताऽतिदिश्यते। किंच कृते सपिण्डीकरणे यदैकोद्दिष्टं स्यात्कर्तव्यं, तदा त्रिभ्यो दानमिति अमावास्यायामिति चेत् को विशेषः ? । तत्रापि सहपिण्डक्रियामित्येवमर्थः किं नास्ति? न च मानवशास्त्रे कालान्तरं 'मृताहे प्रतिसंवत्सरं' चेत्यादि प्रतीतं येन तद्विषयमेतद् व्याख्यायते। अतोऽविशेषात्सर्वत्रैकोद्दिष्टानि प्राप्नुवन्ति। तत्र **महाभारत**वचनं विरुध्येत, तीर्थानि प्रकृत्योक्तं "श्राद्धेन तर्पयामास स वै पूर्वं पितामहान्" इति।

यदपि स्मृत्यन्तरं 'प्रतिसंवत्सरं चैव श्राद्धं वै मासिकार्थवत्'—तत्रापि मासिकशब्देनामा-वास्यायामेव श्राद्धमुच्यते; सर्वश्राद्धानां तस्य प्रकृतित्वात्। तत्र हि धर्माः समाम्नाताः। न तु "प्रतिमासं तु वत्सरमिति" एतन्मासिकशब्देनाभिधातुं युक्तम्। न हि तस्य विशिष्टाः

केचिद्धर्माः समाम्नाता यैर्भिद्येत। एकोद्दिष्टं त्वाद्यमेकादशे, क्षत्रियस्य त्रयोदशे इत्याद्यत्रापि विद्यते। अतो नैकोद्दिष्टं मासिकशब्देनाभिधातुं युक्तम्। मासकालसम्बन्धाद्धि तन्मासिक-मुच्यते। न च तस्य मासेनैव सम्बन्धः; कालान्तरेणापि सम्बन्धस्य दर्शितत्वात्। 'शुचिर्भूतः पितृभ्यो दद्यादिति' मासादूर्ध्वमपि करणान्मासे चाकरणात्तत्र 'मासिक'शब्देन तस्याभिधानम्, अमावास्याया उत्पत्तौ पौर्णमासिकशब्दश्रवणात्। 'पिण्डानां मासिकश्राद्धमिति' नियतत्वा-त्कालान्तरसंयोगस्याभावाद्धर्मवत्त्वाच्च युक्तस्तदीयधर्मातिदेशः।

आमश्राद्धमपि पार्वणप्रकृतिकमेव। तत्प्रकृतित्वे च त्रिभ्यो दाने प्राप्ते एकोद्दिष्टता विधीयते।

यदपि याज्ञवल्क्यवचनं (आचार० २५६) "मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्। प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि"॥ तत्राप्येवमेतादृशीतिकर्तव्यता उच्यते। तत्रापि ह्यमावास्यामेव प्रकृतत्वेनावगतम्। अतो न मासकालयोगेऽपि एकोद्दिष्टे तदीय-धर्मातिदेशोऽन्यत्र युक्तः। न हि भिक्षुको भिक्षुकाद्याचते। सोऽपि यतोऽन्यस्य विकारः।

किंच एकमेव श्राद्धम्। तस्मान्न मासिकशब्दस्य सामान्यस्यैकोद्दिष्टविशेषविषयतायां प्रमाणमस्ति। याज्ञवल्क्येऽप्येवमिति। यद्यनन्तरावमर्शः तदा सपिण्डीकरणेतिकर्तव्यतातिदेशः प्राप्नोति। तदनन्तरं ह्येतच्छ्रुतम्। एतत्सपिण्डीकरणमिति (याज्ञ० आचार० २५४) पठित्वा'अर्वाक्सपिण्डीकरणा'दिति (याज्ञ० आ० २५५)', च ततोऽनन्तरमुक्तम् "मृता-हनीत्यादि (याज्ञ० आ० २५६)"। तस्मात्सन्निधानमकारणीकृत्य धर्मवत्त्वेनामावास्यस्यैव-मिति निर्देशः।

मन्त्राश्चास्मत्पक्षमेव सुतरामवद्योतयन्ति। "संसृज्यध्वं पूर्वैः पितृभिः सहेति"—'पूर्वैः पितृभिः सह' वर्तमाना उच्यन्ते। 'संसृज्यध्वमिति' बहुवचनं पूजायाम्। तथा च **निरुक्तकारः** "एता (उ त्या) उषस इति। एतास्ता उषस इत्येकस्या एव पूजनार्थे बहुवचनमिति"।

अथ "संसृज्यध्वमिति येषु पिण्डेषु निक्षिप्यन्ते त उच्यन्ते। यश्च निक्षिप्यते स बहु-वचनेन पूर्ववत्पूर्वैभिः पितृभिरिति। एवं च पूर्वैभिरित्येवमेव बहुवचनं प्रायोगिकं भविष्यति। इतरथा संसृज्यध्वमिति निक्षिप्यमाणपिण्डाभिधाने उभयत्र बहुवचनमयथार्थं कल्प्यमिति"। तदेतदपि न किंचित्। यत एकैकेन पिण्डेन पिण्डांशः संसृज्यते। 'चतुर्थं पिण्डमुत्सृज्य त्रैधं कृत्वा पिण्डेषु निदध्यादिति'। अतो नैवात्र युगपदधिकरणवचनताऽस्ति येन बहुवचनमवकल्पेत।

"एकैकाभिधानेन कुत आन्वयिकं संसृज्यध्वमिति बहुवचनं परोक्षवत्त्वाभिधानं न कल्प्यते?। पूर्वैभिरिति निक्षिप्यमाणपिण्डवचनाच्च न एभिरिति निर्देशो युक्तः स्यात्।" न चायं मन्त्रो विधायको येन तदर्थनिर्णये प्रयतामहे। अभिधायकोऽयम्। अभिधानगुणं च विनियोगतः। विनियोगश्च संसर्गः तञ्च प्रकाशयति। संख्याऽत्र न विनियुक्ता न प्रकाशाप्ता, संभवमात्रेणान्वीयते। तस्य च मन्त्रात्पूर्वं प्रतिपत्तिः।

येऽप्याहुः—"चतुर्थशब्दः पूर्वतर उपपद्यते। पिता हि प्रथमः तदपेक्षया प्रपितामहः पूर्वश्चतुर्थ" इति। एतदपि न सम्यक्; पूर्वेषां पिण्डान्निधाय चतुर्णां पूर्णश्चतुर्थः प्रेतपिण्ड एव भवति। पितृपक्रमं चेदं श्राद्धं न प्रेतोपक्रमम्। एवं ह्युच्यते "पितॄनेवाशयेत्पुनः प्रेतं न

निर्दिशेदिति"। यस्यायं प्रेताय प्रथमः पिण्डस्ततस्तत्पित्रे इत्यादिक्रमः, तस्यापि कुतोऽयं नियमः, य एवासौ चतुर्थस्तस्यैवेदं त्रैधं करणं पिण्डेषु निधानं विधीयते। एतावद्धि तद्वाक्यम्-चतुर्थं पिण्डमुत्सृजेत्त्रैधं कृत्वेति। तत्रानन्तर्यादुत्सृजतिना सम्बन्ध'श्चतुर्थं' 'पिण्ड' मित्यनयोः प्रतीयते। त्रैधं कृत्वेत्यत्र तु कस्येदं त्रैधं करणमित्यपेक्षायां सन्निहितः पिण्डः सम्बन्ध्यते। तावतैव निराकांक्षीकृते वाक्ये चतुर्थमित्यस्य सम्बन्धे न किञ्चित्प्रमाणमस्ति। तावतैव निराकांक्षीकृते वाक्ये चतुर्थमित्यस्य सम्बन्धे न किञ्चित्प्रमाणमस्ति। तत्र यस्य कस्य विभागे प्राप्ते स्मृत्यन्तरान्निर्णयः। "निरुप्य चतुरः पिण्डान्पिण्डदः प्रतिनामतः। ये समाना इति द्वाभ्यामाद्यं तु विभजेत्त्रिधा" इति॥

आद्यत्वं दानाभिप्रायेण, न पुनरादिपुरुषसम्बन्धात्। तथाहि प्रपितामहादिः स्यात्पितामहात्पूर्वः, पितामहोऽपि पितुः पूर्व इत्यनवस्थानादप्रतिपत्तिः। दाने तु नियतक्रमतो व्यवस्थितमादित्वम्। एवं च चतुर्थमिति पदेन विशिष्टे पिण्डे क्रियात्रयेऽपि स्मृत्यन्तरवशाद्दानक्रमेणैवाद्यस्य विभागो युक्तः। अतो यदुक्तं **काठके** "पूर्वप्रेतस्येष्टो विभागः प्रतीयते" इति कासावस्येष्टता?।

यच्चोक्तम्-"अत एव तस्मै अदानं यत एव वाऽसावन्तर्भावितः" तन्न किंचित्। वचनान्न दीयते-'न चतुर्थं पिण्डो गच्छतीति'। तथा 'त्रिषु पिण्डः प्रवर्तते' इति। यत्स्वयं स्वकृतः पाठः 'पुनः प्रेतं न निर्दिशेदिति' व्याख्यातं च "अन्तर्भाविते पूर्वप्रेते पुनर्दानं निषेधति"-नैवायं पाठोऽस्ति प्रतिषेधार्थीयो 'न' पठ्यते, समुच्चयार्थीयश्चकारः पठ्यते। सत्यपि वा तत्र पाठे 'यः सपिण्डीकृत'मित्यत्र पृथक्पिण्डप्रतिषेधस्य या गतिरुक्ता सैवात्र वेदितव्या।

यानि तु वाक्यानि- "सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः। एकोद्दिष्टं तु कुर्वीत पित्रोरन्यत्र पार्वणम्।" इत्यादीनि-यद्येतानि वाक्यानि सन्ति तदा किममावास्याया नामघोषणिकया? न चैतानि वाक्यानि शिष्टपरिगृहीतासु प्रसिद्धासु स्मृतिषु कासुचिदुपलभ्यन्ते।

तस्मान्न किञ्चिद्विशेषे लिङ्गमस्ति येन पूर्वप्रेतपिण्डान्निधीयत इति प्रतिपद्येमहि। तस्मात्समाचारो न त्याज्यः। अयमेव पक्षो युक्तियुक्त इति दर्शितः। तस्मान्मतभेदेनापच्छेदतः पूर्वप्रेतनिधानपक्षोपन्यासः केषांचित्। "असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य च। अदैवं भोजयेच्छ्राद्धं पिण्डमेकं च निर्वपेत्।"

अत्र सपिण्डीकरणं मृते पितरि जीवति पितामहे पाक्षिकं ज्ञेयम्। यदा 'न जीवन्तमतिक्रम्य ददाती'त्येवं नाश्रीयते। यदा तु स एषाग्रता स्यादिति पक्षस्तदा पितामहमतिक्रम्य पूर्वैः संसर्जनीयः। एवं तु पुत्रस्यापि मृतस्य पित्रा विकल्पेनैव कर्तव्यमेवमनपत्यभार्यामरणे जीवन्मातृकस्यैष एव विधिः। "प्रमत्तानामितरे कुर्वीरंस्ताश्च तेषामिति"। **सुतैरपत्यैरि**त्यर्थः। यद्यपि सुतग्रहणं तत्स्थानापन्नानामन्येषामपि ग्रहणं, यदि स्वशब्देन नास्ति निषेधः॥ २४८॥

(२) **सर्वज्ञनारायणः। धर्मतो** धर्मैरङ्गैः सह **अनयाऽऽवृता** पार्वणप्रयोगेण **सुतै**रौरसक्षेत्रजपुत्रिकापुत्रैः॥ २४८॥

(३) **कुल्लूकः। अस्येति।** यस्येदमेकोद्दिष्टं विहितं तस्य **धर्मतः** स्वगृह्यादिविधिना सपिण्डीकरणश्राद्धे कृते **अनयैवावृता** उक्तामावास्याश्राद्धेतिकर्तव्यतया **पिण्डनिर्वपणं** पार्वणविधिना श्राद्धं पुत्रैः सर्वत्र मृताहादौ कर्तव्यम्। नन्वनयैवावृता इत्यनेन प्रकृतमेकोद्दिष्टमेव हि किमिति न परामृश्यते? । उच्यते। तर्हि सपिण्डीकरणात्पूर्वमेकोद्दिष्टं सपिण्डीकरणे कृते पुनः अनयैवावृता इति भेदनिर्देशो न स्यात्, ततोऽमावास्येतिकर्तव्यतैव प्रतीयेत ।। २४८।।

(४) **राघवानन्दः।** तस्यैव विशेषमाह' **सहेति। धर्मतः** स्वगृह्यविधिना **सहपिण्डक्रियायां कृतायामिति।** सा तु गन्धोदकतिलैर्विमिश्रं कुर्यात् पात्रचतुष्टयं अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। 'ये समाना' इति द्वाभ्यां। शेषं पूर्ववदाचरेत्। एतत् सपिण्डीकरणमिति **याज्ञवल्क्यः। अनयै**कोर्घ्य इत्यादिकया **आवृता** परिपाटया। तदुक्तम् 'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं पुनः। एकोद्दिष्टं तु कुर्वीत पित्रोरन्यत्र पार्वण'मिति।। पार्वणे तु पार्वणपरिपाटीति।। २४८।।

(५) **नन्दनः। सहपिण्डक्रियायां** सपिण्डीकरणे । **आवृता** क्रियया। **अनयोक्तेन** मासि श्राद्धप्रयोगेणेत्यर्थः।। २४८।।

(६) **रामचन्द्रः। सहपिण्डक्रियायां कृतायां** तु **अस्य** द्विजस्य **धर्मतः अनयैव** पार्वणरूपया **आवृता** परिपाटचा **सुतै**रौरसादिभिः **पिण्डनिर्वपणं** कार्यम्।। २४८।।

(७) **मणिरामः।** अस्य यस्यैकोद्दिष्टं विहितं तस्य धर्मतः स्वगृह्यादिविधिना, सहपिंडक्रियायां तु कृतायां सपिंडीकरणे कृते अनयैवावृता अमाश्राद्धेतिकर्तव्यतया।। २४८।।

(८) **गोविन्दराजः। सहपिण्डक्रियायामिति। अस्ये**त्युपादानात् अनन्तरप्रकृतस्य एकोद्दिष्टक्रियासम्प्रदानभूतस्याचिरमृतस्य सपिण्डीकरणे शास्त्रव्यवस्थया कृते सति यथा **याज्ञवल्क्ये** (आचार. २५३) उक्तं–'गन्धोदकतिलैर्युक्तं कुर्यात् पात्रचतुष्टयम्। अर्घार्थं पितृपात्रेषु प्रेतपात्रं प्रसिञ्चयेत्। ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्।' यथा **चोशनसा** उक्तम्–'सपिण्डीकरणं श्राद्धं कुर्यात् पार्वणवत्सदा।। पृथक् च कल्पयेदन्यत् एकोद्दिष्टविधानतः' इति। तथा च **शातातपेनोक्तम्** 'सपिण्डीकरणं श्राद्धं दैवपूर्वं नियोजयेत्। पितॄनावाहयेत्तत्र पुनः प्रेतं च निर्दिशेत्।' इति।

तथा च **गृह्यपरिशिष्टे** उक्तम्–'दत्वा पिण्डान् पितृभ्यस्तु पश्चात् प्रेताय पार्श्वतः। तं तु पिण्डं त्रिधा कृत्वा आनुपूर्व्यर्थसन्ततम्। निदध्यात् त्रिषु पिण्डेषु एष संमार्जनो विधिः।।' इति। प्रेतपात्रं च (न) सर्वं पितृपात्रेषु प्रसेक्तव्यम्। अपितु पृथक् प्रेतब्राह्मणोपदेशसामर्थ्यात् तदर्घार्थं तत्र किंचिद(नु)वशेषणीयम्। साधारणत्वात् अविभक्तभ्रातृधनोपयोगवत्' तस्मादर्घो देयः। एवं च यत् कैश्चित् सपिण्डीकरणे पञ्चब्राह्मणभोजनं प्रपितामहपितृसंबन्ध्यर्घ्यपात्रं पिण्डत्रिधाधारणं चोक्तम्–तदसत्; उक्तवाक्यविरोधादेव **शास्त्रतः कृते सति अनयैवावृता** अमावास्यप्रक्रियया पुत्रैः प्रतिसंवत्सरं मृताहे कर्तव्यम्।

ननु सन्निहितपरामर्शकत्वात् सर्वनाम्नः 'अनयै'वेत्येकोद्दिष्टातिदेशो न्याय्यः। नैवम्; एवं भेदनिर्देशेन शास्त्रनिर्देशं न कुर्यात्। असपिण्डक्रियायामेष विधिः। सहपिण्डक्रियायां पुनः कृतायां अयमिति। तस्मादमावास्येतिकर्तव्यतानिर्देश एवं न्याय्यः। इति सपिण्डकरणसांवत्सरिकेऽपि **स्मृतिमञ्जर्यां। ऋजुपञ्जिकायां** विस्तरतो निरूप्यते।। २४८।।

**श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति ।।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ।। २४९ ।।**

(१) **मेधातिथिः।** यद्यपि श्राद्धभुजो दोषग्रहणं तथापि कर्तुरयमुपदेशः। तेन तथा कर्तव्यं यथा न प्रयच्छति। ऋत्विङ्नियमवत्। **वृषलः** शूद्रः। **अवाक्शिरा** ऊर्ध्वपादः। प्रकृत एव सपिण्डीकरणम्मा विज्ञायीति श्राद्धग्रहणम् ।। २४९ ।।

(२) **सर्वज्ञनारायणः।** श्राद्धं भुक्त्वेत्यादिश्लोकद्वयं सर्वं श्राद्धसङ्गतेर्निषेधविधिः। **उच्छिष्टं** पात्रस्थम् ।। २४९ ।।

(३) **कुल्लूकः।** आश्रितशूद्राय उच्छिष्टदानप्रसक्तावयं निषेधः। श्राद्धभोजनो**च्छिष्टं** यः शूद्राय ददाति **स** मूर्खः **कालसूत्रं** नाम **नरकम**धोमुखं गच्छति ।। २४९ ।।

(४) **राघवानन्दः।** श्राद्धभुज उत्तरकालीननियममाह **श्राद्धमिति। स** श्राद्धभोक्ता। **अवाक्शिरा** अधोमुखः ।। २४९ ।।

(५) **नन्दनः।** अथ भुक्तवतां वर्जनीयं श्लोकद्वयेनाह ।। २४९–५० ।।

(६) **रामचन्द्रः।** यः **श्राद्धं भुक्त्वा वृषलाय** शूद्रायोच्छिष्टं प्रयच्छति **स कालसूत्रं** नरकम् **अवाक्शिरा** अधोमुखः **सन्याति** ।। २४९ ।।

(७) **मणिरामः। वृषलाय** शूद्राय **कालसूत्रं** नाम नरकम् ।। २४९ ।।

(८) **गोविन्दराजः। श्राद्धमिति।** श्राद्धभोजनो**च्छिष्टं** यः शूद्राय ददाति **स** मूर्खः **कालसूत्राख्यनरकमध्ये** अधोमुखो व्रजति। आश्रितसच्छूद्रत्वात् उच्छिष्टमन्नं दातव्यमिति प्राप्तेऽयं प्रतिषेधः ।। २४९ ।।

**श्राद्धभुग्वृषलीतल्पं तदहर्योऽधिगच्छति ।
तस्याः पुरीषे तं मासं पितरस्तस्य शेरते ।। २५० ।।**

(१) **मेधातिथिः। वृषली** स्त्रीमात्रोपलक्षणार्थमेतदित्याहुः। निरुक्तं कुर्वन्ति–वृषस्यति चलयति भर्तारमिति वृषली। सा च ब्राह्मणी अन्या वा सर्वा निषिध्यते। तथा च स्मृत्यन्तरं "तदहर्ब्रह्मचारी स्यान्नियत" इति। तल्पशब्देन मैथुनसंयोगो भण्यते। न शयनारोहणप्रतिषेध एव। अहर्ग्रहणमहोरात्रलक्षणापरम्। रात्रावपि निषेधः स्यात्। **पुरीष इति** निन्दार्थवादो निवृत्त्यर्थः। **पितरस्तस्य** श्राद्धभुजः। अयमपि पूर्ववद्वचनीयः। इदं तु युक्तं यदुभयोर्नियम इति। नैमित्तिकोऽयं भोक्तुर्धर्मः श्राद्धभोजने निमित्ते विधीयते। प्रकरणाच्च कर्मार्थोऽपि ।। २५० ।।

(२) **सर्वज्ञनारायणः। वृषलीतल्पं** शूद्रयाधिष्ठितां **शय्यां तदह**स्तदहोरात्रे ।। २५० ।।

(३) **कुल्लूकः।** वृषलीशब्दोऽत्र स्त्रीपर इत्याहुः। निरुक्तं च कुर्वन्ति। वृषस्यन्ती चपलयति भर्तारमिति वृषली। ब्राह्मणस्य परिणीता ब्राह्मण्यपि वृषलीति। श्राद्धं भुक्त्वा तदहोरात्रे यः स्त्रीसंप्रयोगं करोति **तस्य पितरस्तस्याः पुरीषे मासं शेरत** इति निवृत्त्यर्था निन्दा ।। २५० ।।

(४) **राघवानन्दः।** वृषलीति पदं स्त्रीमात्रपरं वृषस्यन्ती या पतिं भर्तारमिति व्युत्पत्तेः। **तं मासमिति** कालकर्मासा(व)नमासाख्यं **तस्या** वृषल्याः **पुरीषे पितरः तस्य** श्राद्धभोक्तुरिति शेषः॥ २५०॥

(६) **रामचन्द्रः। तस्याः। पुरीषे** च वृषल्याः पुरीषे। **तं मासं तस्य** श्राद्धभोक्तुः **पितरः शेरते**॥ २५०॥

(७) **मणिरामः। वृषली**शब्दोऽत्र स्त्रीपरः॥ वृषस्यंती चपलयति भर्तारमिति वृषलीति निरुक्तेर्ब्राह्मण्यपि वृषली। 'वृषस्यंती च कामुकी'त्यमरः॥ २५०॥

(८) **गोविन्दराजः। श्राद्धभुगिति।** आमन्त्रितस्तु यः श्राद्धे (इति) भोजनात् प्राक् ब्रह्मचर्यमुक्तम्। अनेन तु तदुत्तरकालं तदहोरात्रमुच्यते। **वृषली** च व्याख्याता। श्राद्धं भुक्त्वा **यः तदहोरात्रं** स्त्रीसंयोगं भजते तस्य तद्विष्ठायां **मासं पितरः** अवतिष्ठन्ते इत्यतश्च इयानस्या धर्मयोगो भवति॥ २५०॥

**पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः॥**
**आचान्तांश्चानुजानीयादभितो रम्यतामिति॥२५१॥**

(१) **मेधातिथिः।** आचमनिकमन्नपानं दत्वा प्रष्टव्याः, **'स्वदित'**मित्यनेन शब्देन। स्मृत्यन्तराच्चान्नं परिगृह्य प्रश्नोऽयं कर्तव्यः। भवति हि कस्यचिदयं स्वभावो यदसंनिहितमन्नं सत्यपि तदभिलाषे यन्त्रणया न मृगयते संनिहितं तु गृह्णाति। **तृप्तानाचामयेत्।** अन्ये तु "तृप्ताः स्थ' इत्यनेन शब्देन प्रष्टव्याः। ज्ञात्वा च तृप्तान् 'स्वदितमिति' अनेन शब्देन बृंहणीयाः। वक्ष्यति—"पित्र्ये स्वदितमित्येव वाच्यमिति"। **आचान्तांश्चानुजानीयादभितो रम्यतामिति।** 'अभितः' उभयतः, इहैव स्वगृहे वा यथेष्टमास्यतामित्यर्थः॥ २५१॥

(२) **सर्वज्ञनारायणः। पृष्ट्वा स्वदित**मित्याद्येकोद्दिष्टविषये विशेषाभिधानम्। **तृप्ताः थेति** स्मृत्यन्तरप्रसिद्धश्राद्धान्तरीयप्रश्नस्थाने स्वदितमिति प्रश्नः। विसर्जने चा**भिरम्यता**-स्मति। अभित इति छन्दोऽनुरोधात्॥ २५१॥

(३) **कुल्लूकः। तृप्तान्** ब्राह्मणान् बुद्ध्वा **स्वदितमिति पृष्ट्वा** तेषामाचमनं कारयेत्। कृताचमनांश्च भो इति संबोध्या**भिरम्यतामिति** ब्रूयादभित इति पाठेऽभित उभयत इह वा स्वगृहे वाऽऽस्यतामित्यर्थः॥ २५१॥

(४) **राघवानन्दः।** प्रकृतं श्राद्धसमापनाङ्गमाह **पृष्ट्वेति द्वाभ्यां। तृप्तान्** भूरिभोजनेन। **स्वदितमिति पृष्ट्वा वानुजानीयादि**त्यन्वयः। तैरपि सुस्वदितमित्यभिधेयम्। **अभिरम्यतां** यत्र क्वापि सुखेनास्यतां भो ब्राह्मणाः पात्रभोजिनः इत्यनुजानीयादनुज्ञां दद्यात्॥ २५१॥

(५) **नन्दनः।** स्वदतेऽपि भवद्भ्यो भोज्यजातमिदमिति **पृष्ट्वा। अभितो रम्यता**-मस्मिन्स्थान आस्यतां सुखमिति॥ २५१॥

(६) **रामचन्द्रः** । तृप्ताः स्थ इति पृच्छति तृप्ताः स्म इति तं ब्रूयुः । **स्वदितमिति** पृच्छति सुस्वदितमिति ब्रूयुः । तत **आचामयेत्** आचान्तांस्तान**नुजानीयात्** अनुज्ञां दद्यात् । **अभिरम्यतां** स्वेच्छया । अभिरताः स्म इति ।। २५१ ।।

(७) **मणिरामः । पृष्ट्वा स्वदित**मित्येवं । **तृप्तान्** ब्राह्मणान् । ज्ञात्वा स्वदितमिति पृष्ट्वा आचमनं कारयेत् । कृताचमनांश्च भो इति संबोध्य **अभिरम्यतामिति** ब्रूयात् ।। २५१ ।।

(८) **गोविन्दराजः । पृष्ट्वा स्वदितमित्येवमिति** । तान् ब्राह्मणान् **तृप्तान्** 'बुद्ध्वा **स्वदितमित्येवं पृष्ट्वा** तत उपस्पर्शयेत् । कृताचमनांश्च इह वा स्वगृहे वाऽऽस्यतामित्येवमनुज्ञातव्याः ।। २५१ ।।

**स्वधाऽस्त्वित्येव तं ब्रूयुर्ब्राह्मणास्तदनन्तरम् ।।**
**स्वधाकारः परा ह्याशीः सर्वेषु पितृकर्मसु ।। २५२ ।।**

(१) **मेधातिथिः** । भुक्तवद्भिर्गृहगमनाभ्यनुज्ञातैरनन्तरं **स्वधेति** वाच्यम् । **स्वधाकारः** स्वधाशब्दोच्चारणम्, प्रकृष्टा **आशीः** । पितृकार्येषु **सर्वेषु** पक्वान्नापक्वान्नश्राद्धेषु ।। २५२ ।।

(२) **सर्वज्ञनारायणः** । तत्र **स्वधाऽस्त्विति** तैः प्रतिवक्तव्यम् । **स्वधाकारः** स्वधोच्चारणं **परा ह्याशीः** पितॄणामिष्टार्थोक्तिः । अत्र **सर्वेष्वि**त्यभिधानात् एतत्स्मृतिविहिते पार्वणेऽप्येतदेव तृप्तिप्रश्नादि कार्यमित्येके ।। २५२ ।।

(३) **कुल्लूकः** । अनुज्ञानान्तरं **ब्राह्मणाः** श्राद्धकर्तारं **स्वधाऽस्तु** इति **ब्रूयुः** । यस्मात्**सर्वेषु** श्राद्धतर्पणादि**पितृकर्मसु** स्वधाशब्दोच्चारणं प्रकृष्टा **आशीः** ।। २५२ ।।

(४) **राघवानन्दः** । किंच **स्वधेति** । **तं** श्राद्धकर्तारं **ब्राह्मणाः स्वधेति ब्रूयुः** । किमिति स्वधेति ब्रूयुस्तत्राह **स्वधाकार इति** । स्वधोच्चारणं प्रकृष्टाऽऽशीर्यतः ।। २५२ ।।

(६) **रामचन्द्रः** । ते **स्वधा** इति **ब्रूयुः** स्वधोच्यतां अस्तु स्वधा । **स्वधाकारः पितृकर्मसु परा ह्याशीः** ।। २५२ ।।

(७) **मणिरामः** । **तदनन्तरं** अभिरम्यतामित्यनुज्ञानंतरं । **तं** श्राद्धकर्तारं ।। २५२ ।।

(८) **गोविन्दराजः । स्वधेत्येवं वचनं ब्रूयुरिति** । अनुज्ञानन्तरं दातारं **स्वधेत्येवं ब्राह्मणा ब्रूयुः** यस्मात् सर्वेषु कृतान्नाकृतान्नश्राद्धोदकतर्पणादिषु पितृकर्मसु स्वधाशब्दोच्चारणं प्रकृष्टा **आशीः** ।। २५२ ।।

**ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ।।**
**यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्ततो द्विजैः ।। २५३ ।।**

(१) **मेधातिथिः** । भुक्तमन्नं तेभ्यो निवेदयितव्यम् । प्रष्टव्यास्ते 'इदमस्तीति' । **यथा ब्रूयुस्तथा कुर्यादनुज्ञातः** । अतोऽननुज्ञातेन नान्यत्र विनियोक्तव्यम् ।। २५३ ।।

(२) **सर्वज्ञनारायणः** । **ततो भुक्तवतामि**त्यादि प्रकृतपार्वणविषयम् ।। २५३ ।।

(३) **कुल्लूकः।** स्वधाशब्दोच्चारणानन्तरं कृतभोजनानां ब्राह्मणानां शेषमन्नमप्यस्तीत्यवशिष्टमन्नं निवेदयेत् तैर्ब्राह्मणैरिदमनेनान्नेन क्रियतामित्य**नुज्ञातो यथा** ते **ब्रूयुस्तथान्नशेष**विनियोगं कुर्यात् ॥ २५३ ॥

(४) **राघवानन्दः।** तेषां चाज्ञा पालनीयेत्याह **तत इति। तैः** श्राद्धभोजिभिः। इष्टेभ्यो विनियुज्यतामित्यनुज्ञातः ॥ २५३ ॥

(६) **रामचन्द्रः। ततः** तेषां भुक्तवता**मन्नशेषं निवेदयेत्। तैर्द्विजैर्यदनुज्ञातं यथा** ब्रूयु**स्तथा** कुर्यात्। तद्यथा 'अन्नशेषं किं क्रियतां?' तदाज्ञा यथा 'इष्टैः सह भुज्यतां' इति ॥२५३॥

(७) **मणिरामः। ततः** स्वधाशब्दोच्चारणानंतरं। शेषमन्नमप्यस्ति, किं कर्तव्यमिति निवेदयेत्, ततो द्विजैः इदमेवान्नेन क्रियतामित्यनुज्ञाते **यथा** ते **ब्रूयु**स्तथाऽन्नशेषनियोगं कुर्यात् ॥ २५३ ॥

(८) **गोविन्दराजः। तत इति।** सहकृतभोजनानां विप्राणां स्वधाकारादनन्तरं शेषमन्नं इत्येवं गृह्योक्तविधिना **अन्नशेषं निवेदयेत्।** तैश्च **द्विजैः** इदमनेनान्नेन क्रियतामिति दत्तानुज्ञः **यथा** तैरुक्तं **तथा** विनियुञ्जीत ॥ २५३ ॥

**पित्र्ये स्वदितमित्येव वाच्यं, गोष्ठे तु सुशृतम् ॥**
**संपन्नमित्यभ्युदये, दैवे रुचितमित्यपि ॥ २५४ ॥**

(१) **मेधातिथिः।** अन्येनापि तत्कालोचितोपस्थितेनैवमेभिः शब्दैः मोदयितव्याः। अन्यस्त्वाह– अनुज्ञापनमेतैः शब्दैर्भोजनादिप्रवृत्तौ कर्तव्यम्। अतश्च श्राद्धकृता परितुष्ट्यैवं वक्तव्यम्–स्वदध्वमिति, न हि स्वदितम्। स्वदतु इति वा पाठः। एतस्यार्थस्य प्रतिपादकं एतद्व्याख्यानं स्मृत्यन्तरसमाचारसापेक्षम्, तस्मात्प्रवृत्तभोजनाः श्राद्धकृताऽन्येन वैवं प्रीणयितव्याः॥ **गोष्ठे** गोषु तिष्ठन्तीष्वेकदेशेषु **सुशृत**मिति वाच्यम्। अस्त्विति सर्वत्र प्रतीयते। **दैवे रुचितं** रोचितमिति वा ॥ २५४ ॥

(२) **सर्वज्ञनारायणः। पित्र्ये** एकोद्दिष्टे पार्वणेऽपि वा। **स्वदत** इति क्वचित्पाठः। तत्प्रागुक्तेन स्वदितमित्यनेन विकल्पितं ज्ञेयं। **गोष्ठे** गोमङ्गलार्थं **गोष्ठे** ब्राह्मणभोजने तृप्तेषु विप्रषु **सुशृत**मिति वाच्यम्। **सुश्रुतमिति** शोभनं श्रवणं गवामस्त्विति तस्यार्थः। सुश्रितमिति क्वचित्पाठः। **अभ्युदये** विवाहादौ विप्रभोजने। **दैवे** वैश्वदेविके **रोचितमिति। रुचितमिति** क्वचित्पाठः ॥ २५४ ॥

(३) **कुल्लूकः।** इदानीं प्रसंगाच्छ्राद्धान्तरेषु विशेषविधिमाह **पित्र्य इति। पित्र्ये** निरपेक्षपितृमातृदेवताक एकोद्दिष्टश्राद्धे तृप्तिप्रश्नार्थं स्वदितमिति वाच्यम्। तथा च **गोभिलसाङ्ख्यायनौ। स्वदितमिति** तृप्तिप्रश्नः। **मेधातिथिगोविन्दराजौ** तु श्राद्धकालागतेनान्येनापि स्वदितमित्येव कर्तव्यमिति व्याचक्षतुः। "श्राद्धे स्वदितमित्येतद्वाच्यमन्येन केनचित्। नानुरुद्धमिदं विद्वद्वृद्धैर्न श्रद्धीमहि"॥ **गोष्ठे** गोष्ठिश्राद्धे **सुशृतमिति** वाच्यम्। गोष्ठयां शुद्ध्यर्थ-

मष्टममिति द्वादशविधश्राद्धगणनायां गोष्ठीश्राद्धमपि **विश्वामित्रेण** पठितम्। **अभ्युदये** वृद्धि-श्राद्धे **संपन्नमिति** वाच्यम्। **दैवे** देवतोद्देशेन श्राद्धे **रुचितमिति** वचनीयम्। दैवश्राद्धं तु **भविष्य-पुराणोक्तम्** "देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः" ॥ २५४ ॥

(४) **राघवानन्दः। स्वदित**मित्यादेः पदस्य व्यवस्थित्यर्थमाह **पित्र्य इति। पित्र्ये** पार्वणे तस्यैव प्रकृतत्वात्। **गोष्ठे** विश्वामित्रपठितगणकृतश्राद्धे "**गोष्ठ्यां** यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते"। तस्य सत्रस्येव फलं प्रत्येकगामि गणस्याचेतनत्वेन गणिनिष्ठत्वा-त्फलस्य। **अभ्युदये** वृद्धिश्राद्धे दैवे ॥ 'देवानुद्दिश्य यच्छ्राद्धं तत्तु दैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यद्भवेदि'ति ॥ भविष्योक्तं गोमयशुद्धिवत्स्वदितमित्यादौ वाचनिकं तेन न कवितादर इति ॥ २५४ ॥

(५) **नन्दनः। स्वदित इति** । पृष्ट्वाऽऽचामयेदित्युक्तम्। अयमेव प्रश्नादिर्युक्त इत्युपपादयति **पित्र्य इति** ॥ २५४ ॥

(६) **रामचन्द्रः। पित्र्ये** एकोद्दिष्टे **स्वदितमित्येवं वाच्यं गोष्ठेषु सुशृतं** अन्नादि अधिकं शुद्धिसंपन्नं वा **अभ्युदये दैवे रोचितं** यथा रोचितम् ॥ २५४ ॥

(७) **मणिरामः**। इदानीं श्राद्धांतरेषु विशेषमाह **पित्र्ये इति। पित्र्ये** निरपेक्षपितृ-भ्रातृएकोद्दिष्टश्राद्धे। तृप्तिप्रश्नार्थं स्वदितमिति वाच्यं। **गोष्ठे तु** गोष्ठीश्राद्धे **सुशृतं। अभ्युदये संपन्नमिति। दैवे** देवतोद्देशेन श्राद्धे **रुचित**मिति पृच्छेत् ॥ दैवश्राद्धं **भविष्य-**पुराणे 'देवानुद्दिश्य' यच्छ्राद्धं तत्तद्दैविकमुच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु 'यत्नत' इति ॥ २५४ ॥

(८) **गोविन्दराजः। पित्र्ये स्वदितमित्येवं गोष्ठे वाच्यमिति शृतमिति**। अन्येनापि श्राद्धकालोपस्थितेन **स्वदित**मित्येवं गोगणमध्ये च शृतमिति, **सम्पन्नमिति**; विवाहादौ देव-तार्थं **रोचितमिति** ॥ २५४ ॥

**अपराह्णस्तथा दर्भा वास्तुसंपादनं तिलाः ॥**
**सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्मसु सम्पदः ॥ २५५ ॥**

(१) **मेधातिथिः**। अपराह्णे श्राद्धं कर्तव्यम्। **श्राद्धकर्मसु संपदः**। संपादयितव्यान्ये-तानि वस्तूनि। अविशेषाभिधानेऽप्यपराह्णे न सर्वश्राद्धेषु। एवं हि स्मृत्यन्तरम् "पूर्वाह्णे दैविकं कार्यमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" इति ॥

**वास्तु** वेश्म, तस्य **संपादनं** सम्मार्जनं सुधादिना भित्तीनां गोमयेन भूमेरुपलेपनं दक्षिण-प्रवणता च। **सृष्टि**र्विसर्गः अकार्पण्येनान्नव्यञ्जनदानम्। **मृष्टि**र्मार्जनम्। अन्नसंस्कारविशेषः। अन्ये तु व्याचक्षते-**संपदेषा** विभवशक्तिः, न त्वेतैर्विना अकरणम् ॥ २५५ ॥

(२) **सर्वज्ञनारायणः**। अपराह्णोऽह्नो द्विभागस्य द्वितीयो भागः। **वास्तुसंपादनं** दक्षिणाप्रवणत्वादिना। **सृष्टिः** स्वादुबहुतरान्नोत्पादनं। **मृष्टि**रन्नादीनां शुद्धत्वं। **संपदः** फलोत्कर्षहेतवः ॥ २५५ ॥

(३) **कुल्लूकः।** अमावास्याश्राद्धस्य प्रकृतत्वात्तद्विषयोऽयमपराह्णकालः। '**प्रात-र्वृद्धिनिमित्तकमि**त्यादिना वृद्धिश्राद्धादौ स्मृत्यन्तरे प्रातःकालादिविधानात्। विष्टराद्यर्था **दर्भाः**। गोमयादिना श्राद्धदेशसंशोधनम्। **तिलाश्च** विकिरणाद्यर्थाः। **सृष्टिर**कार्पण्येनान्नादि-विसर्गः। **मृष्टिर**न्नादेश्च संस्कारविशेषः। पङ्क्तिपावनादयश्च ब्राह्मणाः। 'एताः श्राद्धे संपत्तय' इत्यभिधानादङ्गान्तरापेक्षं प्रकृष्टत्वमेषां बोधितम्।। २५५।।

(४) **राघवानन्दः।** पार्वणस्य कालं विदधदुक्तचोक्षादिधर्मान् स्मारयति **अपराह्णे इति।** पूर्वाह्णो वै देवानामपराह्णः पितृणां। तथा 'प्रातर्हि मातृकं श्राद्धं पूर्वाह्णे दैविकं स्मृतं। एकोद्दिष्टं तु मध्याह्ने सायाह्ने पार्वणं स्मृतम्'।। इत्यादिश्रवणात्। मातृकमन्वष्टकाश्राद्धं, **वास्तुसंपादनं** गोमयादिना स्थललेपनं। **सृष्टिर**कार्पण्येनान्नादेस्त्यागः। **मृष्टिर**न्नादेः संस्कारः। **अग्र्याः** पङ्क्तिपावनाः। **संपदः** साधनानि।। २५५।।

(५) **नन्दनः।** अथ श्राद्धसम्पदोऽपि प्रसङ्गादाह **अपेति। वास्तुसम्पादनं** रमणीय-प्रदेशस्वीकारः। **सृष्टिः** सर्जनम्, दानमित्यर्थः। **मृष्टिः** शुद्धिः।। २५५।।

(६) **रामचन्द्रः।** श्राद्धकर्मसु संपद आह **अपराह्ण इति। अपराह्णस्तथा दर्भाः। वास्तुसंपादनं** गोमयेनोपलेपनं दक्षिणाप्रवणं। **तिलाः सृष्टिर्विसर्गः** अकार्पण्येनान्नव्यञ्जनदानं। **मृष्टिः** पात्राणां शुद्धिः। **अग्न्याः** द्विजाः ब्राह्मणाः सर्ववेदेषु श्रेष्ठाः।। २५५।।

(७) **मणिरामः।** श्राद्धसंपत्तिमाह **अपरेति। वास्तुसंपादनं** गोमयादिना श्राद्ध-देशसंशोधनं **मृष्टिः**। अकार्पण्येनान्नादिविसर्गः **सृष्टिः**। अन्नादेः संस्कारविशेषः। एताः **श्राद्धे संपदः** संपत्तयः।। २५५।।

(८) **गोविन्दराजः। अपराह्णस्तथा दर्भा इति। अपराह्णः** विष्टरार्थं **दर्भाः वास्तु-संपादनं** सुधागोमयादिना गृहसंशोधनं, **तिला**श्चान्तर्भूविकिरणाद्यर्थाः, **सृष्टिः** अकार्पण्येनान्न-विसर्गः। **मृष्टिः** अन्नसंस्कारः, **अग्न्या ब्राह्मणाः** इत्येताः **श्राद्धे सम्पदः** इत्यङ्गान्तरेभ्यः एषां प्रशस्यत्वज्ञापनार्थमेतत्।। २५५।।

**दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः।।**
**पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः।। २५६।।**

(१) **मेधातिथिः। दर्भाः** प्रसिद्धाः। **पवित्रं** मन्त्राः। हविषे हितानि योग्यानि **हविष्याण्युत्तर**श्लोके तानि वक्ष्यन्ते। **पवित्रं** पावनं शुच्याचारता। **यच्च पूर्वोक्तम्।** वास्तुसंपादनं सृष्टिर्मृष्टिर्ब्राह्मणाश्च श्रेष्ठाः श्रुतशीलसंपन्नाः। **हव्यसंपदः।** हव्यं देवतोद्देशेन यागादि ब्राह्मणभोजनं च। हव्यशब्दः कर्म दैविकमुपलक्षयति।। २५६।।

(२) **सर्वज्ञनारायणः। पवित्रं** पावनान्तरं यवजलादि। **पूर्वाह्णोऽह्नो** द्विभागस्य प्रथम-भागः। **हविष्याणि** मुन्यन्नादीनि। **यच्च पूर्वोक्तं** पित्र्यकर्मण्यमुक्तं। **पवित्रं** पावनं। मृष्टि-र्द्विजाग्र्याश्च। **हव्यं** वैश्वदेविकं कर्म लक्षणया। एवं च श्राद्धे दैवकर्मणोऽनुरोधार्थं कुतपे

प्रारम्भः। पित्र्यस्य च प्रधानत्वात् अपराह्णेऽनुष्ठानेऽसमाप्तिरिति लभ्यते। तदादायैव च श्राद्धे कुतपप्रशंसा। तत्रापि 'पितृयज्ञं तु निर्वर्त्ये'त्यभिधानादपराह्णप्राप्तौ श्राद्धप्रयोगमध्य एव प्रधानकर्मणः प्राक् पिण्डपितृयज्ञानुष्ठानम् ।। २५६ ।।

(३) **कुल्लूकः। पवित्रं** मन्त्राः **पूर्वाह्णः** कालः **हविष्याणि** मुन्यन्नादीनि सर्वाणि च यच्च पवित्रं पावनं वास्तुसंपादनादि पूर्वमुक्तम्। एताश्च देवार्थस्य कर्मणः समृद्धयः। **हव्य**शब्दो दैवकर्मोपलक्षणार्थः।। २५६ ।।

(४) **राघवानन्दः।** तत्प्रतियोगितया दैवं कालं विदधदपूर्वधर्मान् विधत्ते**ऽदर्भा इति।** उदगयने पूर्वपक्षे प्रागावर्तनादह्नः कालं विद्यादि'ति **गोभिल**सूत्रात्। **पवित्रं** मन्त्रं। पुनः पवित्रपदं अविगीतब्राह्मणविषयम् ।। २५६ ।।

(५) **नन्दनः।** हव्यसम्पदोऽपि प्रसङ्गादाह **दर्भा इति। शक्तितः** पवित्राणि सूक्तानि जप्यानि। **पूर्वोक्तं** पवित्रदेशादयः।। २५६ ।।

(६) **रामचन्द्रः। पवित्रं** मन्त्राः यच्च पवित्रं पूर्वोक्तं सृष्टयादिद्रव्यसंपदः **हव्य**कव्य-कर्मणि **संपदः एता** उक्ताः दर्भादयः।। २५६ ।।

(७) **मणिरामः।** हव्यसंपत्तिमाह **दर्भा इति।। पवित्रं** मन्त्राः **पवित्रं** पावनं ।।२५६।।

(८) **गोविन्दराजः। दर्भा इति।** विष्टराद्यर्थं **दर्भाः पवित्रं** दार्भं प्राधान्यात् पृथगुप-दिष्टम्। **पूर्वाह्णकालः हविष्याणि** मुन्यन्नादीनि सर्वाणि। **यच्च** वास्तुसंपादनादि पावनं **पूर्वमुक्तम्** एतावदेवार्थकर्मणः सिद्धयः।। २५६ ।।

**मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।।**
**अक्षारलवणं चैव प्रकृत्या हविरुच्यते।। २५७ ।।**

(१) **मेधातिथिः। मुनि**र्वानप्रस्थः, तस्या**न्नानि** आरण्यानि नीवारादीनि। एतच्च प्रदर्शनं ग्राम्याणामपि व्रीह्यादीनाम्। तथाऽर्वाचीने श्लोके सर्वग्रहणम्। उत्तरत्र च "हविर्यच्चिररात्रायेति" प्रक्रम्य "तिलैर्व्रीहियवैर्माषैरिति" (३।२६६-६७) ग्राम्याणा-मप्यनुक्रमणम्। **पयः** क्षीरम्। तद्विकारा अपि दध्यादयो गृह्यन्ते, स्मृतिसमाचाराभ्याम्। **सोम** ओषधिविशेषः। **अनुपस्कृत**मधिकृतमप्रतिषिद्धम्। सूनामांसाद्यनुपस्कृतम्। **अक्षारलवणम्।** अत्र संदिह्यते-"किं द्वन्द्वगर्भोऽयं नञ्समासः, उत नञ्समास एव? अक्षारलवणम्, उत लवणविशेषः 'क्षारलवणं' ततोऽन्यदभ्यनुज्ञायते।" लवणमेवं भवितुमर्हम्। द्वन्द्वगर्भे हि वृत्तिद्वयमाश्रयणीयम्। प्रतिपदं च नञः सम्बन्धभेदः। तद्गुरु भवति। **प्रकृत्या हवि**रनाश्रिते विशेषे एतद्धविर्ज्ञेयम्। 'हविष्येण वर्तते', 'हविष्यात्प्रातराशाद्भुङ्क्त' इत्यादिसामान्यचोदनासु तद्धविष्यं ज्ञेयम् ।। २५७ ।।

(२) **सर्वज्ञनारायणः। मुन्यन्ना**न्यकृष्टपच्यानि श्यामाकनीवारादीनि। **पय** इति सविकारग्रहणात् दुग्धदधिघृतानां ग्रहणम्। **सोमः** सोमलता **अनुपस्कृतं** मरीचादिना स्वादान्तर-मप्रापितम्। **अक्षारलवणं** बिडादेः क्षारादन्यल्लवणं सामुद्रं सैन्धवं वा। **प्रकृत्या** स्वभावेन स्थितं। वस्त्वन्तरामिश्रितं। सर्वमेतद्धविर्हव्यम् ।। २५७ ।।

(३) **कुल्लूकः। मुनेर्वा**नप्रस्थस्या**न्नानि** नीवारादीनि। **पयः** क्षीरं। सोमलतारसः। **अनुपस्कृत**मविकृतं पूतिगन्धादिरहितं **मांसम्। अक्षारलवण**मकृत्रिमलवणं सैन्धवादि एतत्स्व-भावतो हविर्मन्वादिभिरभिधीयते।। २५७।।

(४) **राघवानन्दः।** हविष्याणीत्युक्तं व्याचष्टे **मुन्यन्नानीति।** नीवारादीनि। गव्यं **पयः। सोमः** सोमलतारसः। **मांसं** वार्ध्रीणसादेः। **अनुपस्कृत**मविकृतं पूतिगन्धादिरहितमिति यावत्। **प्रकृत्या** स्वभावतः अनुक्ते विशेषे।। २५७।।

(५) **नन्दनः। अनुपस्कृतं** लौकिकसंस्कारसंस्कृतम्। **प्रकृत्या हविः** स्वभावरसेन युक्तं हविरुच्यते विद्वद्भिः।। २५७।।

(६) **रामचन्द्रः। पयः** क्षीरं **सोमलतारसः मांसं अनुपस्कृतम**प्रतिषिद्धं हविष्यादि-संस्कृतं **अक्षारलवणं** सैन्धवादि, एते **प्रकृत्या** स्वभावेन **हविर्ह**विष्यान्नमुच्यन्ते।। २५७।।

(७) **मणिरामः। मुन्यन्नानि** नीवारादीनि। **सोमः** सोमलतारसः। **अनुपस्कृतं** अविकृतं पूतिगंधादिरहितं **मांसं। अक्षारलवणं** अकृत्रिमलवणं सैंधवादि।। २५७।।

(८) **गोविन्दराजः। मुन्यन्नानीति।** आरण्यान्नं क्षीरं **सोमो मांसं** चानतितीक्ष्णं बिडलवणादिवर्जितं लवणं सैन्धवं स्वभावत एवैतद्धविरिति मन्वादिभिरुच्यते।। २५७।।

**विसर्ज्य ब्राह्मणांस्तांस्तु प्रयतो विधिपूर्वकम्।।**
**दक्षिणां दिशमाकांक्षन्याचेतेमान्वरान्पितॄन्।। २५८।।**

(१) **मेधातिथिः।** प्रासङ्गिकः पूर्वश्लोकः। इदानीं प्रकृतशेषमेवाह **विसर्ज्यानुज्ञाय** यथासुखविहारे। **ब्राह्मणांस्तान्**प्रभुक्तवतः। अनन्तरं **दक्षिणां दिशमी**क्षमाण **इमान् वरान**-भिलषितार्था**न्पितॄन्याचेत** स्वपितॄन्प्रार्थयेत्। स्वपितॄन् ध्यायन् 'युष्मासु प्रसन्नेष्विदं नः संप-द्यता'मित्येवं याचितव्यम्।। २५८।।

(२) **सर्वज्ञनारायणः। प्रयतो**ऽनन्यमनाः। **आकांक्षन्** साभिलाषं पश्यन्। **इमान्वक्ष्य-**माणान्। **वरान**भीष्टार्थान्। **पितॄन् याचेत।।** २५८।।

(३) **कुल्लूकः। तान्ब्राह्मणान्विसृज्या**नन्यमनाः मौनी पवित्री **दक्षिणां दिशं** वीक्षमाण **एतान्**वक्ष्यमाणान् अभिलषितानर्थान् **पितॄन्**प्रार्थयेत्।। २५८।।

(४) **राघवानन्दः।** श्राद्धस्योत्तराङ्गमाशीरिति ख्यापयन् तत्त्वमाह **विसृज्येति। नियतो**ऽनन्यमनाः। **आकाङ्क्षन्न**वलोकयन्। **इमान्** दातादिपञ्चकान् **पितॄन्प्रति।।** २५८।।

(५) **नन्दनः।** आकाङ्क्षणमाभिमुख्यम्। **इमान्वक्ष्यमाणान्।।**२५८।।

(६) **रामचन्द्रः। विसृज्य तान्ब्राह्मणान् नियतः** शुचिः वाग्यतः स**न्दक्षिणां दिशं आकांक्षन्**साभिलाषं पश्य**न्पितॄनिमान्वरान्**प्रमाणलक्षणा**न्याचेत।।** २५८।।

(७) **मणिरामः। दक्षिणां दिशं वीक्ष्य**माणः। **इमान्** वक्ष्यमाणान्। **आकांक्षन्** अभिलषितानर्थान्। **पितॄन् याचेत** प्रार्थयेत्।। २५८।।

(८) **गोविन्दराजः। विसृज्येति। तान् ब्राह्मणान् विसृज्य** अनन्यमनाः शुचिः सन् **दक्षिणां दिशमीक्षमाणः इमान्** वक्ष्यमाणान् अभिलषितार्थान् **पितॄन्** प्रार्थयेत् ।। २५८ ।।

**दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।।**
**श्रद्धा च नो मा व्यगमद् बहु देयं च नोऽस्त्विति ।। २५९ ।।**

[***अन्नं 'च' नो 'बहु' भवेदतिथींश्च लभेमहि।**
**याचितारश्च नस्सन्तु मा 'च' याचिष्म कंचन ।।**]

(१) **मेधातिथिः।** के पुनस्ते वरा याचितव्या इत्यत आह, दातार इति। मन्त्रवदयं श्लोकः पठितव्यः ।। २५९ ।।

(२) **सर्वज्ञनारायणः। देयं बहु** भवतु दानप्रधानाः स्यामेत्यर्थः ।। २५९ ।।

(३) **कुल्लूकः।** अस्मत्कुले **दातारः** पुरुषा वर्धन्ताम्। **वेदाश्**चाध्ययनाध्यापनतदर्थ-बोधतदर्थयागाद्यनुष्ठानैर्वृद्धिमाप्नुवन्तु पुत्रपौत्रादिकं च वर्धताम्। वेदार्थ**श्रद्धा** चास्मत्कुले **न** व्यपैतु। दातव्यं च धनादिकं **बहु** भवतु ।। २५९ ।।

(४) **राघवानन्दः। नः** अस्मत्कुले **वेदाः** स्वाध्यायेनानवच्छिन्ना भवन्तु। **सन्ततिः** पुत्रपौत्रादिः **वर्धता**मित्यनुषङ्गः, किंच **श्रद्धा मा व्यगमत्** माऽपैतु ।। २५९ ।।

[**राघवानन्दः।** किंच ***अन्नमिति। नः** अस्मान्प्रति **याचितारो** याचकाः सन्तु आयान्तु। **मा च याचिष्म कंचन** न कंचन प्रति याचनां नाम कुर्मः ।। ]

(६) **रामचन्द्रः।** अस्माकं **दातारः अभिवर्धन्तां वेदा** वर्धन्ताम् **सन्ततिरेव च** पुनः सन्तत्यः वर्धन्तां **नः** अस्माकं **श्रद्धा मा व्यगमत्** अस्माकं **बहु देयम् अस्तु** इति ।। २५९ ।।

[ **रामचन्द्रः। *अन्नमिति।** कंचन **मा स्म याचिष्म कंचन याचेम** इत्यर्थः ।।१ ।। ]

(७) **मणिरामः।** अभिलषितार्थनिवाह **दातेति** ।। २५९ ।।

(८) **गोविन्दराजः। दातार इति। श्रद्धा च नो मा व्यगमत् बहु देयं च नोऽस्त्विति।** अस्मत्कुले बहवो दानशीला भवन्तु। **वेदाश्च** अध्ययनाध्यापनावबोधेज्यारूपेण **वर्धन्ताम्। सन्ततिः** पुत्रादिः वर्धताम्। हव्यकव्यविषया **श्रद्धा**ऽस्माकं **मा व्यगमत्। बहु देयं च नोऽ-स्त्विति।** दानार्थं च धनं बह्वस्माकं भवतात् ।। २५९ ।।

**एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम् ।।**
**गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ।। २६० ।।**

(१) **मेधातिथिः। तदनन्तरं** वरयाचनानन्तरं **पिण्डान्**पितृभ्यो निरुप्तान् **गवादीन्प्राशयेत्। अग्नौ** प्रक्षेप एव प्राशनम्। प्रापयेदिति पाठान्तरम् ।। २६० ।।

(२) **सर्वज्ञनारायणः। एवं** पूर्वोक्तविधिना वरान्याचित्वा **तदनन्तरं** प्रार्थनानन्तरं पिण्डानां **निर्वपणं कृत्वा तान्**पिण्डान् गवाद्यन्यतर**माशयेदप्सु** वा **निक्षिपेदिति** वैशिष्टकालिकं पिण्डनिर्वपणं प्रतिपत्तिविशेषसहितं दर्शितम्। विप्रं श्राद्धिभ्योऽन्यम् ।। २६० ।।

(३) **कुल्लूकः**। **एवमुक्तप्रकारेण** पिण्डानां प्रदानं कृत्वा प्रकृतवरयाचनानन्तरं **तान् पिण्डान् गां** ब्राह्मणं छागं वा भोजयेत्। अग्नौ जले वा क्षिपेत् ।। २६० ।।

(४) **राघवानन्दः**। प्रकृतं श्राद्धमुपसंहरन्पिण्डस्योत्तरप्रतिपत्तिस्थानान्याह **एवमिति**। **अजं** छागं **अग्निं** गार्हपत्यादिम् ।। २६० ।।

(५) **नन्दनः**। **एवमिति**। पिण्डनिर्वपणप्रकारस्य पूर्वोक्तस्य परामर्शः। पूर्वोक्तेन प्रयोगेण ब्राह्मणभोजनानन्तरं **पिण्डनिर्वपणं कृत्वे**त्यर्थः ।। २६० ।।

(६) **रामचन्द्रः**। **एवं पिण्डनिर्वपणं कृत्वा** तदनन्तरं **तान्पिण्डान् गां प्राशयेद्** भक्षणं कारयेत्। **विप्रं** वा **अजं** वा प्राशयेत् **अग्निं** वा अग्निमध्ये वा प्रक्षिपेत्। **अप्सु** वा क्षिपेत् ।।२६०।।

(७) **मणिरामः**। **निर्वपणं कृत्वा**, पिंडदानं कृत्वा। **तान्** पिंडान् ।।२६०।।

(८) **गोविन्दराजः**। **एवमिति**। एवं 'त्रींस्तु तस्माद्धविःशेषात्' (३/२१५) इत्यादिप्रक्रियया **पिण्डनिर्वपणं कृत्वा तान्** पिण्डान् **अनन्तरं** प्रक्रान्तवरयाचनानन्तरं **गोविप्राजा**नामन्यतममाशयेत्। अग्नावुदके **वा क्षिपेत्** ।। २६० ।।

**पिण्डनिर्वपणं केचित्परस्तादेव कुर्वते ।।**
**वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु वा ।।२६१।।**

(१) **मेधातिथिः**। ब्राह्मणभोजनात् **परस्तात्**कृते ब्राह्मणभोजने केचित् हविः कुर्वन्ति। **वयोभिः** पक्षिभिः **खादयन्त्यन्ये**। अधिकेयं पूर्वस्मात्प्रतिपत्तिः। **अनलो**ऽग्निः। एतत्पूर्वोक्तमेवानूदितम्। उच्छिष्टसन्निधौ चैतत्परस्तात्पिण्डदानमिष्यते ।। २६१ ।।

(२) **सर्वज्ञनारायणः**। नन्वेवं भोजनात् प्राक् पिण्डनिर्वपणं पूर्वोक्तं विरुध्यत इत्यत आह **पिण्डनिर्वपणमिति**। ये **पुरस्तात्** ब्राह्मणभोजनात् **कुर्वते** ते वयोभिरित्यादिप्रतिपत्तित्रयस्यान्यतरं कुर्वन्ति ।। २६१ ।।

(३) **कुल्लूकः**। पिण्डप्रदानं **केचिदा**चार्याः ब्राह्मणभोजनानन्तरं **कुर्वते**। **अन्ये** पक्षिभिः पिण्डान् **खादयन्ति**। इयं च पक्षिभोजनरूपा प्रतिपत्तिरग्न्युदकप्रक्षेपयोर्वैकल्पिकीति दर्शयितुमुक्तयोरप्यभिधानम् ।। २६१ ।।

(४) **राघवानन्दः**। पार्वणविषये स्वमते पिण्डदानमादाविति स्पष्टयन् मतान्तरमाह **केचिदिति**। **परस्ता**द्विप्रभोजनानन्तरं। तस्य मतभेदेन प्रतिपत्तिस्थानान्याह **वयोभि**रित्यादिकं प्रतिपत्तिस्थलम्। **मेधातिथिस्तु परस्ता**दिति पठित्वा व्याख्याति भोजनात्परस्तात् कृते ब्राह्मणभोजने हविः कुर्वन्तीति उच्छिष्टसंनिधावेतत्पिण्डदानमिष्यत इति हेतुं चाचष्टे। अतो वयोभिः खादयन्ति केचिदिति संबन्धः साधीयान्। प्रक्षेपे विकल्पो न तु पिण्डदान इति सुष्ठूक्तम् ।। २६१ ।।

(५) **नन्दनः**। पक्षान्तरमाह **पिण्डेति**। **पुरस्तादेव कुर्वते** न पश्चादिति। प्रतिपत्तावपि पिण्डानां प्रकारान्तरमुत्तरार्धेनोक्तम् ।। २६१ ।।

(६) **रामचन्द्रः । केचित् पिण्डनिर्वपणं पुरस्तादेव कुर्वते वयोभिः** पक्षिभिः **खादयन्ति । अन्ये अनले** वा **प्रक्षिपन्ति** ।। २६१ ।।

(७) **मणिरामः । पुरस्तात्** ब्राह्मणभोजनादनंतरं । **अन्ये वयोभिः** पक्षिभिः पिंडान् **खादयन्ति** ।। २६१ ।।

(८) **गोविन्दराजः । पिण्डनिर्वपणमिति** । पिण्डदानं केचिदाचार्याः ब्राह्मणभोजनादर्वाक् **कुर्वते । अन्ये** पक्षिभिः खादयन्ति । इदं पूर्वप्रतिपत्तिवैकल्पिकम् । अप्यन्ये अग्न्युदकप्रक्षेपं पक्षिभक्षणं वैकल्पिकमिच्छन्ति ।। २६१ ।।

**पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।।**
**मध्यमं तु ततः पिण्डमद्यात्सम्यक् सुतार्थिनी ।। २६२ ।।**

(१) **मेधातिथिः ।** आद्यन्तयोः पिण्डयोरेषा प्रतिपत्तिः । मध्यमं तु **ततस्तेषां** पिण्डानां **यो मध्यमः** तं **धर्मपत्नी** पुत्रार्थिनी **अद्यात् ।** या न कामार्थमूढा । पतिरेव मया परिचरणीयो मनसाऽपि व्यभिचारो न कर्तव्य इति यस्या नियमः सा **पतिव्रता** पतिभक्ता । **पितृपूजने** श्राद्धादिकर्मणि **तत्परा** श्रद्धावती । प्रयत्नेन तदाराधनादौ प्रवर्तते । **सम्यगद्यादा**चमनादिविधिना नियमेन च ।। २६२ ।।

(२) **सर्वज्ञनारायणः । धर्मपत्नी** सवर्णा **सम्यक्** मन्त्रवत् यदि **सुतार्थिनी** तदा**ऽद्यात्** ।। २६२ ।।

(३) **कुल्लूकः ।** धर्मार्थकामेषु मनोवाक्कायकर्मभिः पतिरेव मया परिचरणीय इति व्रतं यस्याः सा **पतिव्रता । धर्मपत्नी** सवर्णा प्रथमोढा श्राद्धक्रियाणां श्रद्धाशालिनी **पुत्रार्थिनी** तेषां पिण्डानां **मध्यमं** पितामहपिण्डं भक्षयेत् । **सम्यक्** "आधत्त पितरो गर्भम्" इत्यादिगृह्योक्तमन्त्रेण ।। २६२ ।।

(४) **राघवानन्दः** । गोदोहन्यायेन पिण्डमाश्रित्य दृष्टफलं किंचिद्विधत्ते **पतिव्रतेति** द्वाभ्यां । **पतिव्रता** धर्मार्थकामेषु मनोवाक्कायकर्मभिः पतिरेव परिचरणीय इति व्रतं यस्याः **सा मध्यमं** पितामहपिण्डं । **सम्यगिति** सम्यक् । "आधत्त पितरो गर्भ'मित्यादिमन्त्रोपलक्षणार्थम् ।। २६२ ।।

(६) **रामचन्द्रः । पतिव्रता धर्मपत्नी मध्यमं पिण्डं सुतार्थिनी अद्यात् । सम्यक्** मन्त्रवत् ।। २६२ ।।

(७) **मणिरामः । धर्मपत्नी** सवर्णा । **मध्यमं** पितामहपिण्डं सम्यक् "आधत्त पितरो गर्भ" मित्यादि गृह्योक्तमंत्रेण ।। २६२ ।।

(८) **गोविन्दराजः । पतिव्रता धर्मपत्नीति ।** मनोवाक्कायकर्मभिः धर्मार्थकामेषु पतिरेव मया (परि)चरणीय इति व्रतं यस्याः सा **पतिव्रता धर्मपत्नी** प्रथमोढा सवर्णा श्रद्धावती पुत्रार्थिनी तेषां पिण्डानां **मध्यमपिण्डं सम्यक्** 'आधत्त पितरो गर्भं' इत्यादिसूत्रकारोक्तमन्त्रे**णाद्यात्** ।।२६२।।

**आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम् ॥**
**धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा ॥ २६३ ॥**

(१) **मेधातिथिः।** भक्षयित्वा **तु तं** पिण्डं **सुतं** पुत्रं **सूते** जनयति। **मेधा** ग्रहणशक्तिः तया **समन्वितं** युक्तम्। 'सत्त्वं' नाम गुणः साङ्ख्येषु प्रसिद्धः धैर्योत्साहादिद्योत्यस्तद्युक्तम् ॥ २६३ ॥

(२) **सर्वज्ञनारायणः। सात्त्विकं** सत्वगुणसंपन्नम् ॥ २६३ ॥

(३) **कुल्लूकः।** तेन पिण्डभक्षणेन दीर्घायुषं कीर्तिधारणात्मकबुद्धियुक्तं धनपुत्रादि-सन्ततिधर्मानुष्ठानसत्वाख्यगुणान्वितं पुत्रं जनयति ॥ २६३ ॥

(४) **राघवानन्दः। सात्त्विकमिति।** धार्मिकत्वेऽपि कामनानिवृत्त्यर्थं सात्त्विक-धर्मरतं वा ॥ २६३ ॥

(६) **रामचन्द्रः। आयुर्यशोमेधासमन्वितं।** एतादृशं **सुतं सूते** ॥ २६३ ॥

(७) **मणिरामः।** पिण्डाशनफलमाह **आयुष्मन्तमिति** ॥ २६३ ॥

(८) **गोविन्दराजः। आयुष्मन्तमिति।** धर्मानुष्ठानरतं द्वादशाध्यायवक्ष्यमाणस-त्त्वाख्यगुणयुक्तं चिरायुषं ख्यातिमन्तं अतीतार्थस्मरणयुक्तं हिरण्यादिधनयुक्तं सन्ततिमन्तं एवंविधगुणयुक्तं पुत्रं जनयति ॥ २६३ ॥

**प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ॥**
**ज्ञातिभ्यः सत्कृतं दत्वा बान्धवानपि भोजयेत् ॥ २६४ ॥**

(१) **मेधातिथिः।** पिण्डेषु प्रतिपादितेषु तौ हस्तौ प्रक्षालयेत्। ततः आचमनविधिं कुर्यात्। ज्ञातीन् प्रैति गच्छति प्राप्नोतीति **ज्ञातिप्रायं** कुर्यात् ज्ञातिभ्यो दद्यात्। तेभ्यः **सत्कृतं** दत्वा बान्धवेभ्योऽपि दद्यात्। 'ज्ञातयः' सगोत्राः, मातृश्वशुरपक्षा 'बान्धवाः'।

अत्र चोद्यते—"यदुक्तं 'यथा ब्रूयुस्तथा कुर्यादिति'। यदि तैरुक्तं 'गृहानस्मदीयानेतदन्नं प्राप्यतामिति,' तदा वैश्वदेवहोमादीनां का गतिः?"। पाकान्तरं कर्तव्यम्। अथवाऽदृष्टार्थ-मेवान्नशेषनिवेदनं नित्यवदाम्नायते। 'शेषमन्न'मित्युक्ते 'इष्टेभ्य' इति ब्रूयुरिति, पाक्षिकं चैतत्स्याद्यदि ते गृह्णीयुः ॥ २६४ ॥

(२) **सर्वज्ञनारायणः। ज्ञातिप्रायं** ज्ञातिभिः सपिण्डैर्बहुभिर्भुक्तमन्नं यथा भवति तथा **प्रकल्पयेत्** कुर्यात्। **बान्धवान्मा**तुलादीन् संबन्धिनः ॥ २६४ ॥

(३) **कुल्लूकः।** तदनु हस्तौ प्रक्षाल्य **ज्ञातिप्राय**मन्नं कुर्यात्, ज्ञातीन् प्रैति गच्छतीति ज्ञातिप्रायम्। कर्मण्यण्। ज्ञातीन्भोजयेदित्यर्थः। तेभ्यः पूजापूर्वकमन्नं दत्वा मातृपक्षानपि सार्हणं भोजयेत् ॥ २६४ ॥

(४) **राघवानन्दः।** शूद्रादिव्यावृत्त्यर्थमुक्तसृष्टेः पात्रमाह **प्रक्षाल्येति। ज्ञातिप्रायं** ज्ञातीन् प्रैति प्रीणाति गच्छतीति वा ज्ञातिभ्यो देयमिति। 'राक्षसं तद्भवेच्छ्राद्धं दश यत्र न भुञ्जत' इति स्मृतेः। **बान्धवान्** मातृपक्षान् ॥ २६४ ॥

(५) **नन्दनः।** पिण्डप्रतिपत्त्यनन्तरं कर्तव्यमाह **प्रक्षाल्येति। ज्ञातिप्रायं** ज्ञातिबाहुल्यम्। **प्रकल्पयेदा**पादयेत् ज्ञातीन्संघातयेदित्यर्थः। **ज्ञातिबान्धवान्** सम्बन्ध्यादीन् ॥ २६४ ॥

(६) **रामचन्द्रः। ज्ञातिभ्यः** भोज्यं सत्कृतं **प्रकल्पयेत्।** ज्ञातिं प्रैति गच्छति प्राप्नोतीति प्रायं कुर्वीत तत् ज्ञातिभ्यो भोजयेदिति। ज्ञातिभ्यो दत्वा पश्चाद्बान्धवानपि पूजयेत् ॥२६४॥

(७) **मणिरामः। ज्ञातिप्रायं** ज्ञातीन् प्रैति गच्छतीति ज्ञातिप्रायं ज्ञातीन् भोजयेदित्यर्थः। **सत्कृतं** अन्नं दत्त्वा। **बांधवान्** मातृपक्षीयानपि भोजयेत् ॥ २६४ ॥

(८) **गोविन्दराजः। प्रक्षाल्य हस्तावाचम्येति। ज्ञातिभ्यः सत्कृतं दत्वा ब्राह्मणानपि पूजयेत्।** तदनु **हस्तौ प्रक्षाल्याचम्य** ज्ञातीन् पितृपक्षात् प्रतिगच्छतीति **ज्ञातिप्रायम**न्नं कुर्यात्। तेभ्यः पूजापूर्वकं **दत्वा** मातृपक्षादिभ्योऽपि संपूजां दद्यात् ॥ २६४ ॥

**उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ॥**
**ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥ २६५ ॥**

(१) **मेधातिथिः।** भुञ्जानानां यत्किञ्चिद्भुज्यधिकरणपात्रसंलग्नं भूमिपतितं च तन्न तस्माद्देशादवमार्ष्टव्यं, यावद्ब्राह्मणा न निष्क्रान्ताः। ततो **गृहबलिं** निष्पन्ने श्राद्धकर्मण्यनन्तरं वैश्वदेवहोमान्वाहिकातिथ्यादिभोजनं कर्तव्यम् ; बलिशब्दस्य प्रदर्शनार्थत्वात्।

अन्ये तु "भूतयज्ञ एव बलिशब्देन प्रसिद्धतरः। ततश्चाग्नौ होमो न प्राग्विरुध्यत" इत्याहुः। "न चैतद्वाच्यं–'पित्र्ये कर्मणि प्रारब्धे कथं कर्मान्तरस्य तदन्तःकरणम् ?"। यथैव पूर्वेद्युर्निमन्त्रितेषु ब्राह्मणेषु सायंप्रातर्होमकरणं द्व्यहकल्पे श्राद्धस्याविरुद्धमेवं वैश्वदेवहोमोऽप्यौपसदाग्निकः। तेन भूतयज्ञात्पराञ्चः पदार्था उत्कृष्यन्ते, नार्वाञ्चः।"

अत्रोच्यते–यदि प्रागग्नौ वैश्वदेवहोमः क्रियते ततः श्राद्धानन्तरं बलिहरणं, तथा सति देवयज्ञभूतयज्ञौ व्यवधीयेताम्। ततश्च क्रमोपरोधः। न च वैश्वदेवस्य कालबाधः क्रियते ; पितृश्राद्धकालहानेः। तस्मात्सर्वं महायज्ञानुष्ठानं श्राद्धादौत्तरकालिकम् ॥ २६५ ॥

(२) **सर्वज्ञनारायणः।** विसर्जितास्तत्र यावत्तिष्ठन्तीति **तिष्ठेदि**त्येतस्य वचनपरिणामेनानुषङ्गः। **गृहबलिमिति** वैश्वदेवस्याप्युपलक्षणम् ॥ २६५ ॥

(३) **कुल्लूकः।** तद्ब्राह्मणोच्छिष्टं **तावत्**कालं **तिष्ठेद्यावद्** ब्राह्मणानां विसर्जनं, ब्राह्मणेषु तु निर्गतेषु मार्ष्टव्यमित्यर्थः। **ततः** संपन्ने श्राद्धकर्मणि वैश्वदेवबलिहोमकर्म नित्यश्राद्धातिथिभोजनानि कर्तव्यानि बलिशब्दस्य प्रदर्शनार्थत्वात्। अत एव **मत्स्यपुराणे** 'निर्वर्त्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं च मन्त्रवित्। वैश्वदेवं प्रकुर्वीत नैत्यकं विधिमेव चे'ति ॥२६५॥

(४) **राघवानन्दः।** उच्छिष्टस्थितिकालविशेषं विदधद्वैश्वदेवादेः श्राद्धोत्तरत्व**माह उच्छेषणमिति।** तथाच मात्स्यम् 'निर्वर्त्य प्रतिपत्त्यर्थं पर्युक्ष्याग्निं स मन्त्रवित्। वैश्वदेवं प्रकुर्वीत नैत्यकं बलिकर्म चे'ति ॥ अतो **मेधातिथिः** तस्मात्सर्वमहायज्ञानुष्ठानं श्राद्धादुत्तरकालिकमिति। **उच्छेषणं** ब्राह्मणोच्छिष्टम् ॥ २६५ ॥

(५) **नन्दनः। गृहबलिं** वैश्वदेवहोमभूतबल्यात्मकम् ॥ २६५ ॥

(६) **रामचन्द्रः**। तावदुच्छेषणमुच्छिष्टः **तिष्ठेत् यावद्विप्रा** विसर्जिताः, विसर्जयेदित्यर्थः ।। २६५ ।।

(७) **मणिरामः**। उच्छेषणं ब्राह्मणोच्छिष्टं तावत्कालं तिष्ठेत् यावद्विसर्जिताः विप्रा निर्गच्छेयुः। तेषु निर्गतेषु प्रमार्ष्टव्यमित्यर्थः। ततः संपूर्णे श्राद्धे। गृहबलिं वैश्वादेवादि कर्म कुर्यात्, बलिशब्दस्य प्रदर्शनार्थत्वात् ।। २६५ ।।

(८) **गोविन्दराजः**। **उच्छेषणमिति**। तत् ब्राह्मणोच्छिष्टं तावन्न मार्ष्टव्यं यावद्ब्राह्मणा न निर्गताः। सम्पन्ने च श्राद्धे वैश्वदेवाद्यन्वाहिकं समग्रं कुर्यात्। यथा **व्यासेनोक्तम्**— 'यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः। वैश्वदेवं तदा कुर्यात् निर्वृत्ते श्राद्धकर्मणि ।।' **इति धर्मो व्यवस्थितः** ।। २६५ ।।

**हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते ।।**
**पितृभ्यो विधिवद्दत्तं तत्प्रवक्ष्याम्यशेषतः ।।२६६।।**

(१) **मेधातिथिः**। **चिररात्र**शब्दो दीर्घकालवचनः। **यच्चानन्त्याय कल्पते** दीर्घकालतृप्तये जायते तदुभयं ब्रवीमीति प्रणिधानार्थमुच्यते। **कल्पते**, प्रेत इत्यध्याहार्यम् ।।२६६।।

(२) **सर्वज्ञनारायणः**। **चिररात्राय** मासादिद्वादशवर्षपर्यन्तानेककालतृप्तये। **आनन्त्याया**नन्ताय कालाय तदूर्ध्वमपि **तृप्तये** ।। २६६ ।।

(३) **कुल्लूकः**। 'यैश्चान्नै'रिति पूर्वमुक्तमपि व्यवधानादबुद्धिस्थं शिष्यसुखप्रतिपत्तये पुनर्वक्तव्यतया प्रतिजानीते **हविरिति**। **चिररात्राय**पदमव्ययं चिरकालवाचि। अत **एव** 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थका' इत्याभिधानिकाः। **यद्धविः** पितृभ्यो यथाविधि दत्तं चिरकालतृप्तये अनन्ततृप्तये च संपद्यते। तन्निःशेषेणाभिधास्यामि ।। २६६ ।।

(४) **राघवानंदः**। खादिरन्यायेन श्राद्धाङ्गद्रव्यं विदधत्फलं प्रतिजानीते **हविरिति**। चिररात्रिव्याप्यातीव सुखायेति वाक्यार्थः ।। २६६ ।।

(५) **नन्दनः**। **चिररात्रायेति** कालदैर्घ्यम्। **आनन्त्यायेति** हविषोऽक्षय्यत्वम् ।।२६६।।

(६) **रामचन्द्रः**। **यत् हविः चिररात्राय** बहुकालपर्यन्ताय **तदानन्त्याय कल्पते** भवति **पितृभ्यो यद्विधिवद्दत्तं तदशेषतः प्रवक्ष्यामि** ।। २६६ ।।

(७) **मणिरामः**। **यत् हविः** पितृभ्यो विधिवद्दत्तं **चिररात्राय** चिरकालतृप्तये **आनंत्याय** च **कल्पते** संपद्यते तन्निःशेषेणाऽभिधास्यामि ।। इदं 'पूर्वमुक्तमपि' शिष्यावधानार्थं पुनरुक्तम् ।। २६६ ।।

(८) **गोविन्दराजः**। **हविर्यच्चिररात्रायेति**। **यत्पितृभ्यो** यथा च **दत्तं** हव्यकव्यमन्नं दीर्घकालतृप्तये सम्यक् प्रतिपद्यते। यच्चान्नं तत्तृप्तये तन्निश्शेषेण **वक्ष्यामि** ।। २६६ ।।

**तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।।**
**दत्तेन मासं तृप्यन्ति विधिवत्पितरो नृणाम् ।। २६७ ।।**

(१) **मेधातिथिः**। तिलादिग्रहणं नेतरधान्यपरिसंख्यानार्थमपि तूक्तानां फलविशेषप्रदर्शनार्थम्। एतैर्विधिवद् दत्तैरपि मासं प्रीयन्ते। **विधिवत्पितरो नृणामित्याद्यनुवादपदानि** वृत्तपूरणार्थानि ॥ २६७ ॥

(२) **सर्वज्ञनारायणः**। **मूलफलेन** स्मृत्यन्तरे श्राद्धीयत्वेनोक्तेन ॥ २६७ ॥

(३) **कुल्लूकः**। तिलधान्ययवमाषजलमूलफलानामन्यतमेन यथाशास्त्रं श्रद्धया **दत्तेन** मनुष्याणां **मासं पितरस्तृप्यन्ति**। 'कृष्णा माषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालय' इति ॥ **वायुपुराण**वचनान्माषैरिति कृष्णमाषा बोद्धव्याः ॥ २६७ ॥

(४) **राघवानन्दः**। तदेवाह **तिलैरिति** नवभिः। तिलमाषयोः कृष्णत्वं विवक्षितम्। 'कृष्णा माषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालय' इति **वराहपुराणोक्तेः** ॥ **अद्भिः** नवोदकैः। **विधिवद्दत्तै**रित्यन्वयः। **मास**मित्यादि कालकर्म ॥ २६७ ॥

(५) **नन्दनः**। **दत्तेन** श्राद्धेनेति शेषः ॥ २६७ ॥

(७) **मणिरामः**। तानाह **तिलैरिति** ॥ २६७ ॥

(८) **गोविन्दराजः**। **तिलैरिति**। **द्वौ मासौ मत्स्यमांसेनेति**। **षण्मासांश्छागमांसेनेति**। तिलधान्ययवमाषोदकमूलफलानां श्राद्धेन **दत्तेन** मनुष्याणां **मासं पितरस्तृप्यन्ति द्वौ** पाठीनादिमत्स्यमांसेन **त्रीन्** मार्गेण मांसेन **चतुरो** मेषसंबन्धिना, **पञ्च** भक्ष्यपक्ष्युद्भवेन षडाजेन सप्त चित्रमृगसंबन्धिना अष्टौ सारङ्गमांसेन, नव शम्बराख्यमृगजेन ॥ २६७–२६९ ॥

**द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ॥**
**औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ २६८**

(१) **मेधातिथिः**। **उरभ्रा** मेषाः। **शकुनय** आरण्याः कुक्कुटाद्याः। **मत्स्याः** पाठीनाद्याः ॥ २६८ ॥

(२) **सर्वज्ञनारायणः**। **मत्स्यः** पाठीनादिः। **उरभ्रो** मेषः। **शाकुनेन** भक्ष्यपक्षिमांसेन ॥ २६८ ॥

(३) **कुल्लूकः**। पाठीनादि**मत्स्यानां मांसेन द्वौ मासौ** पितरः प्रीयन्त इति पूर्वेण संबन्धः। **त्रीन्मासान् हारिणेन** मांसेन। **चतुरो** मेषमांसेन **पञ्च** द्विजातिभक्ष्यपक्षिमांसेन ॥ २६८ ॥

(४) **राघवानन्दः**। **मत्स्यमांसेन** पाठीनादिमत्स्यानां मांसेन मांसपदं शल्ककण्टकदग्धादिव्यावृत्त्यर्थं। **हारिणेन** हरिणमांसेन **औरभ्रेण** मेषमांसेन **शाकुनेन** निषिद्धेतरपक्षिमांसेन इह श्राद्धे दत्तेनेत्यन्वयः ॥ २६८ ॥

(५) **नन्दनः**। **हारिणेन** हरिणमांसेन। हरिणः कृष्णमृगः। **औरभ्रेणो**रभ्रमांसेन, उरभ्रो मेषः ॥ २६८ ॥

(६) **रामचन्द्रः**। **औरभ्रेण मांसेन** मेषस्य मांसेन **चतुरो मासान्** तृप्तिर्भवति ॥२६८॥

(८) **गोविन्दराजः**। **नेति**। **तं** ब्राह्मं निधिं **न** चौरा नापि शत्रवो हरन्ति। अन्यनिधिवन्नापि मृत्संयोगादिना नश्यति। तस्माद्योऽयमक्षयो निधिर्ब्राह्मणाख्यनिधिर्जन्मान्तरे उत्तमान्तफलावाप्तये राज्ञा धनादिर्ब्राह्मणेषु निधातव्यः ॥८३॥

(९) **भारुचिः**। यथा **स्तेना** आटविकाः **अमित्राः** नृपद्रव्यापहारिणः न तथा ब्राह्मणादिभ्यो हिरण्यादिदानेन निधेः कुतश्चिद्विनाश इत्यर्थः। इत्यर्थवादोऽयं नियतदानस्तुत्यर्थः ॥८३॥

**न स्कन्दते न च्यवते न विनश्यति कर्हिचित्।**
**वरिष्ठमग्निहोत्रेभ्यो ब्राह्मणस्य मुखे हुतम् ॥८४॥**

(१) **मेधातिथिः**। एष एवार्थोऽवश्यानुष्ठेयः प्रकारान्तरेण पुनरुच्यते। अग्नौ यद्धूयते तत्कदाचित् **स्कन्दत्यधः** पतति हूयमानम्, तथा **च्यवते** पुरोडाशादि क्षामतया। ततश्च कर्मवैगुण्याद्विनश्यति शिष्टानाम्। इदं तु यद् ब्राह्मणेभ्यो दानं न तस्मिन्‌ दोषाः सन्ति। अत एवाह **वरिष्ठा(ष्ठम)ग्निहोत्रेभ्यः** अग्नौ होमेभ्य इत्यर्थः। मुख्यार्थवृत्त्या कर्मनामधेयमेवाग्निहोत्रशब्दस्तदा चादिग्रहणं व्याख्येयम्। **मुखे** हुतमिति। पाणिरेव ब्राह्मणस्य मुखं "पाण्यास्यो हि द्विजः स्मृत" इति वचनात्। **वरिष्ठं** श्रेष्ठम्। अर्थवादश्चायं न पुनर्होमनिन्दैव ॥८४॥

(२) **सर्वज्ञनारायणः**। **न स्कन्दते** न स्रवति। **न च्यवते** न पतति। कठिनं न व्यथत इति पाठेऽप्ययमर्थः। **न विनश्यति** श्वावलेहादिना ॥८४॥

(३) **कुल्लूकः**। अग्नौ यत् हविर्हूयते तत् कदाचित् स्कंदते स्रवत्यधः पतति, कदाचिद्व्यथते शुष्यति, कदाचिद्दाहादिना नश्यति, ब्राह्मणस्य मुखे यत् हुतं 'पाण्यास्यो हि द्विजः स्मृत' इति ब्राह्मणहस्तदत्तमित्यर्थः। तस्य नोक्ता दोषाः, तस्मादग्निहोत्रादिभ्यः श्रेष्ठं ब्राह्मणाय दानमित्यर्थः ॥८४॥

(४) **राघवानन्दः**। किंच **न स्कन्दते** नाधः पतति न व्यथते न नंक्ष्यतीति कृत्वा व्यथा दुःखं नोत्पादयति पुत्रादिवत्प्रत्यक्षं न नश्यतीति वरिष्ठमिति। अग्नौ हविः क्षिप्तं देवतृप्तौ संदिग्धं ब्राह्मणमुखे तु न तथा साक्षात्प्रीत्युक्तेः, 'ब्राह्मणो मनुष्येषु' (बृह. १।४।१५) इति श्रुतेः। 'नाहं तथाद्मि यजमानहविर्वितानैश्चोध्दृतप्लुतमदन्हुतभुङ्मुखेन। यद्ब्राह्मणस्य मुखतश्चरतो नु घास'मिति **भागवतोक्तेश्च** ॥८४॥

(५) **नन्दनः**। यजेत दद्याच्चेत्युक्तम्, यजनाद्दानं विशिष्टमित्याह **नेति**। **स्कन्दनं** परिस्रवणम्। केशकीटापत्तिर्व्यथनम्। अदर्शनं नाशः। अग्निहोत्रेभ्योऽग्निहोत्रहुतेभ्यो द्रव्येभ्यः ॥८४॥

(६) **रामचन्द्रः**। यद् ब्राह्मणस्य मुखे हुतं तन्न स्कन्दते न क्षरते। 'स्कन्दि गतिशोषणयो'रित्यस्य धातो रूपं ज्ञेयम् ॥८४॥

(७) **मणिरामः**। तेन अधः पतति। न व्यथते न शुष्यति। न विनश्यति दाहादिना। मुखे हस्ते। हुतं दत्तं। 'पाण्यास्यो हि द्विजः स्मृतः' इत्युक्तत्वात्। तस्मादग्निहोत्रादिभ्यः श्रेष्ठं ब्राह्मणाय दानमित्यर्थः ॥८४॥

(८) **गोविन्दराजः**। **न स्कन्दत** इति। अग्निहोत्राद्याहुतेः किल स्रवणं चलम् नाशाख्या दोषा भवन्ति। अतश्च कर्मवैगुण्यं यत्पुनरेतद् ब्राह्मणमुखाग्नौ हुतं, ब्राह्मणस्य दत्तं तन्न स्रवति न चलति नापि दाहादिना कदाचिद् विनश्यति। तस्मादेतद्दोषाऽसंभवादग्निहोत्रादिभ्यः श्रेष्ठमिति प्रकृतदानस्तुतिपरमेतत् ॥८४॥

(९) **भारुचिः** अयं चान्य :—यथा स्कन्ना आहुतिर्दोषाय पात्रभेदाच्च व्यथिताः अविज्ञातदेवता च यथाहुतिर्नश्यति । तथा च ब्राह्मणं 'अर्धा ह्वा एषाहुतिर्यां देवताम् अविज्ञाप्य हुता' एवं च सति या आहुतेर्दोषत्रयेण निन्दा सा प्रकृतब्राह्मणदानस्तुत्यर्था। तथा चोक्तम्'वरिष्ठमग्निहोत्रेभ्यः' इति । अग्निहोत्रेभ्योऽग्निहोत्रादिभ्य इत्यर्थः । सर्वनित्यकर्मोपसंग्रहार्थमेतदेवं विज्ञेयम् । मुखग्रहणाच्चान्नदानमिति केचिदाहुः। तदयुक्तं; 'पाण्यास्यो हि द्विजः स्मृतः' इति वचनात् । सर्वं प्रतिग्रहविषयमेतद्विज्ञेयम् ॥८४॥

**सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।**
**आचार्ये शतसाहस्रमनन्तं वेदपारगे ॥८५॥**

(१) **मेधातिथिः**। "विप्रेभ्य" इति च प्रकृतम् । तथा च प्रागप्युक्तम् (३ । ९६) "वेदतत्त्वार्थविदुषे ब्राह्मणाये"ति । न च यथाश्रुतदानफलोपपत्तिः। कीदृशं हि तत्साम्यं—जातितः परिमाणत उपकारतो वा? यदि तावज्जातितस्तदिति, औषधपानोद्देशेन देवलेभ्यो दत्तं खाद्यदानं दुःखायैव स्यात्। तिक्तकटुकषायानि प्रायश औषधानि विरेचनीयानि, न प्रीतिजननानि। अथ परिमाणतः, तत्रापि यदि द्रव्यमनपेक्ष्य केवलपरिमाणसाम्यम्, सुवर्णं दत्तं तत्परिमाणं ताम्रं लभ्येत, अन्यद्वा मृत्काष्ठादि। अथ जातितः परिमाणतश्च, तत्र प्रागुक्ता एव दोषाः। अथोपकारतः, तत्रापि हि यदि तज्जातीय एवोपकारः व्याधिनिवृत्तिरौषधोपकारः। असति च व्याधौ फलस्य विनिवृत्तिरतो व्याधिनिवृत्तिफलकेनौषधदानेन व्याधिराक्षेप्तव्यः। सुसमं वा अन्यद्दुःखं इति प्राप्तम्। तस्मात् यथा निवीतं मनुष्याणां उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इत्युपव्यानविशेषान्निवीतादयो न पृथग्वाक्यानि तथेदमपि द्रष्टव्यम्।" अत्रोच्यते। नात्राख्यातश्रवणमस्ति, सर्वेषां समत्वात्। तत्र यद्यर्थवादः 'सहस्रं वेदपारग' इति तदर्थवादोऽस्तु। अथायं विधिः विध्यन्तरशेषभावात्सर्वत्र विधिरभ्युपेतव्यो विशेषाभावात्। निवीतादिषु तूपव्ययत इत्यत्राख्यातदर्शनात् तदस्य विधिविषयत्वयोग्यत्वाभावादेकत्वावगमाच्च युक्तार्थवदेव तद्ध्यनुक्तिविशेषः। यत्तु नाब्राह्मणेभ्यो दानमस्तीति तद्विस्मृतं भवेत्। दीनानाथादिभ्यः सर्ववर्णेभ्यो दानस्य विहितत्वात्। एतान्येव च विधायकानि वाक्यानि ब्राह्मणेभ्यो राज्ञां दानस्य। यत्तूक्तं "यथाश्रुतफलानुपपत्तिः सर्वप्रकारेणायाभ्युपगम्यमानत्वादिति"। अत्रोच्यते। लौकिकीयं वाचोयुक्तिः। **सममिति**। यल्लोके नात्युत्कृष्टं तदेवमुच्यते। समलवणाः सक्तव इति। उपकारापेक्षा च 'द्विगुणमिति' संख्याश्रुतिर्यावत्तस्योपकारस्तावद्द्विगुणो भवति। न तद्द्रव्यप्राप्तिर्नापि तज्जातीय एवोपकारः, किंतु प्रीत्यतिशयोत्पत्तिः। न चेह फलविशेषश्रुतिर्येनेयमाशङ्काऽपि स्यात्किं तदेव द्रव्यं प्राप्येत उत स एवोपकार इति। अश्रुतफलविशेषेषु स्वर्गः फलम्। किंच तिलादिदाने प्रजाप्तिः फलं श्रूयते। तत्र का द्रव्य-

साम्याशङ्का? तस्माच्चायमप्यर्थ उत्तरोत्तरोऽत्र च पात्रातिशयदानात्फलातिशयसिद्धिः। तथा चाह "पात्रस्य हि विशेषेणेति" (८६)।

**ब्राह्मणब्रुवे** ब्रुवशब्दः कुत्सायाम्। जातिमात्रब्राह्मणोऽध्ययनादिगुणहीन इत्यर्थः। **आचार्य** उपनेता। **वेदपारगो**ऽध्ययनश्रवणाभ्यां वेदस्यान्तं गतः ॥८५॥

(२) **सर्वज्ञनारायणः**। दानमवैधमपि अब्राह्मणे क्षत्रियादौ दीयमानमानृशं-स्यात्तत्समं यावन्मात्रं दानस्यानृशंस्यं कृतं फलं तत्र तावन्मात्रम्। **द्विगुणं ब्राह्मणब्रुवे** जाति-मात्रोपजीविनि प्रतिग्रहरूपेण दत्ते आनृशंस्यं दानफलं च प्रतिग्रहदानफलं च। आचार्ये अध्यापयितरि वेदैकदेशस्य द्विगुणीभूतमेव सहस्रगुणम्। **वेदपारगे** वेदस्यैकस्यार्थतो ग्रन्थतश्च पारंगते ॥८५॥

(३) **कुल्लूकः**। ब्राह्मणेतरक्षत्रादिविषये यद्दानं तत्समफलं यस्य देयद्रव्यस्य यत्फलं श्रुतं ततो नाधिकं न च न्यूनं भवति। यो ब्राह्मणः क्रियारहित आत्मानं ब्राह्मणं ब्रवीति स **ब्राह्मणब्रुवः** तद्विषयदानं पूर्वापेक्षया द्विगुणफलं। एवं प्राधीते प्रक्रांताध्ययने ब्राह्मणे लक्षगुणं फलं। समस्त-शाखाध्यायिन्यनंतफलं। 'सहस्रगुणमाचार्ये' इति वा तृतीयपदस्य पाठः ॥८५॥

(४) **राघवानन्दः**। विप्राणामिति प्रकृतं, तत्र प्रासंगिकान्पात्रगुणानाह **समेति**। क्षत्रिय-ब्राह्मणपदवाच्याध्ययनप्रवृत्तब्रह्मचारिकृतवेदाध्ययनाश्चत्वारोऽब्राह्मण इत्यादिपदचतुष्टयवाच्य इति। ब्राह्मणब्रुवः ब्राह्मणोऽहं ब्रवीति न तु कर्मणा ब्राह्मण इति। गर्भाधानादिसंस्कारैर्युक्तः स नियमव्रती। नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुव इति पारिभाषिको वा। ब्राह्मणभ्रमात्पात्रं क्षत्रियः तस्मात्सर्वेभ्यो देयमेतेभ्यः परंतु यस्य श्रुतं फलमिति ॥८५॥

(५) **नन्दनः**। पात्रविशेषात्फलविशेषमाह **सममिति**। समं तावन्मात्रम्। **अब्राह्मणे** क्षत्रियादौ दानमदानफलम् ॥८५॥

(६) **रामचन्द्रः**। न ब्रह्म वेदो यस्यास्तीति सः अब्राह्मणस्तस्मिन्दत्तं दानं **समं** ज्ञेयम्। **ब्राह्मणब्रुवे** वेदाध्यायिनि किंचिन्मात्रे एवंविधे द्विजे दत्तं **द्विगुणं** भवेत्। **वेदपारगे** एक-शाखाध्यायिनि ॥८५॥

(७) **मणिरामः**। अब्राह्मणे क्षत्रियादौ। **समं** कथितफलतुल्यं। **ब्राह्मणब्रुवे** ब्राह्मण-क्रियारहितः आत्मानं ब्राह्मणं ब्रवीति स ब्राह्मणब्रुवः तस्मिन् **द्विगुणं** उक्तफलद्विगुणं। प्राधीते प्रक्रांताध्ययने। **शतसाहस्रं** लक्षगुणं ॥८५॥

(८) **गोविन्दराजः**। **सममिति**। **सहस्रगुणमाचार्ये, अनन्तं वेदपारगे**। ब्राह्मणव्यति-रिक्तविषये उपकारकरणरूपेण यद्दानं न दानप्रतिग्रहरूपेण तत्र तदभावात्तत्समं यस्य देयद्रव्यस्य यत्फलं श्रुतं तत्ततो नात्युत्कृष्टं इति प्राप्यते। एवं जातिमात्रोपजीविनि ब्राह्मणे पूर्वापेक्षया द्विगुणं फलमेवं प्रक्रान्ताध्ययने लक्षगुणं फलं, समस्तशाखाध्यायिनि अनन्तफलम् ॥८५॥

(९) **भारुचिः**। इतश्चैतेभ्यो देयं गुणवत्स्नातकब्राह्मणनियमदानस्तुतिप्रकरणाद् ब्राह्मणादिग्रहणमिदं विद्वद्दानप्रशंसार्थं वेदितव्यम्। कथं कृत्वा अब्राह्मणब्रुवयोर्नोपपद्यते। उक्तं च "वेदविद्याव्रतस्नाताञ्छ्रोत्रियान् गृहमागतान्। पूजयेद्धव्यकव्याभ्यां विपरीतांस्तु

वर्जयेत्" इति। न चायं फलविधिः। फलविधौ हि काम्यदानस्य स्यादेवं च यथोक्तार्थ-सामर्थ्यान्नायं फलविधिकल्पोपदेशार्थः श्लोकः । अन्यथा हि प्रकरणमुपरुध्येतेति । अथवा यथोक्ते(दी)नानाथनिमित्ते अब्राह्मणादिदाने पात्रविशेषात् फलविशेषप्रदर्शनार्थः स्यादयं राज्ञां विशेषधर्मः। यत्कारणं न ह्यकस्मात् प्रशंसा स्यादिति । तथा चोत्तरश्लोकः — दाने समानेभ्योऽपि ब्राह्मणेभ्य इति पात्रविशेषापवादोऽयं विज्ञेयः। पूर्वश्लोकार्थस्य तु द्वितीयस्येदमधुना विवरणं क्रियते। न च देयद्रव्यस्य फलेन जातितः साम्यम्। न च परिमाणतो युज्यते शास्त्रविरोधान्न्यायविरोधाच्च। कथं तर्हीदं समं व्याकरणीयं लोकप्रसिद्धया नोत्कृष्टं न च निकृष्टम्? यत्तत्समं तथा च लोकप्रसिद्धिमेवावधिं कृत्वा द्वैगुण्यादयो वक्तव्याः। अन्ये तु मन्यन्ते न देयद्रव्यसमं फलं घटते तस्माद्दातृगतं साम्यं प्रत्येतव्यम्। अब्राह्मणाय दत्वा भिक्षाद्यपि मानुषशरीरेणैव तद्दानोपफलोपभोगं प्राप्नोति; नोत्कृष्टपात्रदानात्। तदेतद्विचारणीयम्। **अब्राह्मणौ** च क्षत्रियवैश्यौ। तथा च गौतमीये भिक्षादानप्रकरणे चैतदुक्तम् 'ब्राह्मणवर्णादिनन्तरौ च तौ प्रयोगश्चाब्राह्मणा-द्विद्योपयोग' इति । न च शूद्रादब्राह्मणाद्विद्योपयोगः । अर्थलोभाच्छास्त्रप्रतिषेधाच्च। ब्राह्मणजाते...नितेनेति । क्षत्रियवैश्ययोस्तु ब्रह्मचारिणोरिष्यत एव । भैक्षादिप्रति-ग्रहोपदेशसामर्थ्यादिवं च । अब्राह्मणशब्देन तावपि युक्त...॥८५॥

पात्रस्य हि विशेषेण श्रद्दधानतयैव च ।
अल्पं वा बहु वा प्रेत्य दानस्य फलमश्नुते ॥८६॥

(१) **मेधातिथिः**। पातयतोऽधर्मकर्मणः, पात्यमानं वा त्रायत इति **पात्रं** संप्रदानम्। अथवा घृततैलाद्याधारः पात्रमुपचारादिदमपि पात्रम्। अत्रापि हि द्रव्यं निधीयते। आह च (७/८२) "नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयत" इति। तस्य विशेषो भेदः सगुणनिर्गुणत्वादिः। तेन हेतुना दानस्य फलमवाप्यते। अल्पं वा। गुणवते वृत्तस्वाध्याय-संपन्नाय दत्तं **बहु**, निर्गुणाय स्वल्पम्। **प्रेत्येति**। क्रियासमनन्तरं फलोत्पत्तेरनियममाह, न पुनर्जन्मान्तरफलतामेव वैदिकानां कर्मणां फल एव कामस्य नियमावगमात् ॥८६॥

**[देशकालविधानेन द्रव्यं श्रद्धासमन्वितम्। पात्रे प्रदीयते यत्तु तद्धर्मस्य प्रसाधनम् ॥१॥]**
**[एष एव परो धर्मः कृत्स्नो राज्ञ उदाहृतः। जित्वा धनानि संग्रामाद् द्विजेभ्यः प्रतिपाद-येत् ॥२॥]**

[(१) **मेधातिथिः**। तत्र **देशः** स्वनिवासदेशादन्यो जानपदः। दूरदेशप्रोषितायां संनिहितत्वा- द्वृत्तमस्य हेतुरुपघातः। यज्ञप्रवृत्तस्य केनचिदंगेन न्यूनता ग्रहोपराग इत्येवमादिः। **विधानम्**। उदकपूर्वकस्वस्तिवाचनसंस्कारातिशयो भावप्रसाद इत्यादि। **द्रव्यं** गोभूहिरण्यादि। **श्रद्धा** प्राप्त्यभिलाषातिशयः, 'कथमिदं मे निवर्तेतेति बुद्धिसंतानः।']

(२) **सर्वज्ञनारायणः** । **विशेषेण** दोषेण गुणेन वा । **श्रद्दधानतया** श्रद्धानिकर्ष-प्रकर्षाभ्याम् ॥८६॥

(३) **कुल्लूकः** ' विद्यातपोवृत्तियुक्ततया पात्रस्य तारतम्यमपेक्ष्य शास्त्रे तथेति प्रत्यय-रूपायाः श्रद्धायास्तारतम्यपात्रमासाद्य दानस्याल्पं महद्वा फलं परलोके लभ्यते ॥८६॥

(४) **राघवानन्दः**। किंच **पात्रस्येति**। **प्रेत्य** मृत्वा। स्थितस्य फलावश्यंभावनियमादित्याह **अवाप्यत इति** ॥८६॥

[**राघवानन्दः**। किंच **देशेति**। **देशः** कुरुक्षेत्रादिः। **काल** उपरागादिः। **विधान**मुदकपूर्वकस्वस्त्युक्तिः। **श्रद्धया**ल्पं दीयमानं पात्रविशेषे च बहव स्यादिति वाक्यार्थः ॥१॥]

(५) **नन्दनः**। श्रद्धातश्च फलविशेषमाह **पात्रस्येति** ॥८६॥

(७) **मणिरामः**। **पात्रस्य** हि विशेषेण विद्यातपोवृत्तितया पात्रस्य तारतम्यमवेक्ष्य। **प्रेत्य** परलोके ॥८६॥

(८) **गोविन्दराजः**। पात्रस्य हि विशेषेण श्रद्धानस्तथैव च। **अल्पं वा बहु वा प्रेत्य** दानस्यावाप्यते फलम्। अध्ययनं विज्ञानतपोयुक्ततया पात्रतारतम्यमपेक्ष्य श्रद्धातारतम्यं चान्यं वा बहु चापरलोके वा दानस्य फलं प्राप्यते ॥८६॥

(९) **भारुचिः**। एवं च सति यथा पात्रविशेषात् फलविशेष एवं श्रद्धया ॥८६॥

**समोत्तमाधमै राजा त्वाहूतः पालयन्प्रजाः।**
**न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन् ॥८७॥**

(१) **मेधातिथिः**। सर्वोपायपरिक्षये राज्ञो विहितं युद्धम्। तत्र संग्रामभूमिगतस्याहूतस्य समन्यूनाधिकबलेनोपेक्षाप्रतिषेधार्थमिदं पदम्। न मन्तव्यं निकृष्टबलं न हन्मीति। अथवा ये शत्रव आटविकादयः प्राक्स्थितां मर्यादामतिलंघ्य देशमुत्क्रामन्ति शत्रुभिर्वा राज्ञः संदधते, न चेत्ते युद्धेन विना नियन्तुं शक्यन्ते,—तदा निकृष्टबलैरपि तैर्योद्धव्यमेव। यद्यपि तैरसौ शब्देन नाहूतो वस्तुतस्त्वाहूत एव भवति। एष हि क्षत्रियाणां धर्मः यदाहूतः प्रकृतैस्तैर्युद्धे सर्वेण सह योद्धव्यमेव। जातिवयःशिक्षापुरुषकारादि नापेक्षितव्यम्। एष धर्मः स्मर्तव्यः ॥८७॥

(२) **सर्वज्ञनारायणः**। **अधमः** शूद्रः। **आहूतो** युद्धार्थम्। न **निवर्तेत** न प्रवर्तेत ॥८७॥

(३) **कुल्लूकः**। समबलेनाधिकबलेन हीनबलेन च राज्ञा युद्धार्थमाहूतो राजा प्रजारक्षणं कुर्वन् युद्धान्न निवर्तेत क्षत्रियेण युद्धार्थमाहूतेनावश्यं योद्धव्यमिति क्षात्रं धर्मं स्मरन् ॥८७॥

(४) **राघवानन्दः**। प्रासंगिकमुक्त्वा प्रकृतमाह **सम** इति। धनविद्याशूरत्वादिना समोत्तमाधमैः युद्धायाहूतो न निवर्तेतेत्यन्वयः ॥८७॥

(५) **नन्दनः**। राष्ट्रात्करमादाय यष्टव्यञ्च दातव्यं चेत्युक्तम्, इदानीं राष्ट्रप्रत्यर्थिभिराहूतेन योद्धव्यमित्याह **समेति**। प्रजाः पालयन्प्रजापालनहेतोः ॥८७॥

(६) **रामचन्द्रः**। समश्चोत्तमश्चाधमश्च तै राजा आहूतः संग्रामान्न निवर्तेत ॥८७॥

(७) **मणिरामः**। **समोत्तमाधमैः** आत्मनः समबलेनाऽधिकबलेन न्यूनबलेन वा। क्षात्रं धर्मं युद्धार्थमाहूतेनावश्यं योद्धव्यमित्युक्तं ॥८७॥

(८) **गोविन्दराजः**। **समोत्तमाधमैरिति**। समाधिकहीनबलैः राजभिर्युद्धार्थमाहूतः प्रजारक्षणोद्यतः क्षत्रियेणाहूतेनावश्यं योध्दव्यमित्येवं क्षात्रधर्मं संभावयन् संग्रामान्न निवर्तेत ॥८७॥

(९) **भारुचिः** । आहूतस्य...केनापि संग्रामादनिवृत्तिः स्याद्यत्कारणमेष हि राज्ञां विशिष्टो धर्मः । यत् ॥८७॥

**संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।**
**शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥८८॥**

(१) **मेधातिथिः** । त्रयाणां धर्माणां तुल्यफलत्वाय श्लोकोऽयम् ॥८८॥

(३) **कुल्लूकः** । यस्मात् **संग्रामेष्विति** । युद्धेष्वपराङ्मुखत्वं प्रजानां च रक्षणं ब्राह्मणपरिचर्या एतद्राज्ञामतिशयितं स्वर्गादिश्रेयःस्थानम् ॥८८॥

(४) **राघवानन्दः** । प्रासंगिके फलमाह **संग्रामेष्विति** । प्रजापरिपालनवद्द्विज-शुश्रूषाया युद्धानिवर्तित्वस्यापि श्रेयस्करत्वमित्यर्थः ॥८८॥

(५) **नन्दनः** । कोऽयं क्षात्रो धर्मस्तमाह **संग्रामेष्विति** । पालनशुश्रूषयोरुपन्यासो दृष्टान्तार्थः ॥८८॥

(७) **मणिरामः** । **श्रेयस्करं परं** अतिशयितं स्वर्गादिश्रेयःस्थानं ॥८८॥

(८) **गोविन्दराजः** । **संग्रामेष्विति** । युद्धेभ्योऽपराङ्मुखत्वं, प्रजानां पालनं, ब्राह्मणानां परिचर्येत्येतद्राज्ञां प्रकृष्टं स्वर्गादिसाधनम् ॥८८॥

(९) **भारुचिः** । यथा प्रजापालनब्राह्मणशुश्रूषणे राज्ञां विशिष्टो धर्मः, एवं **संग्रामेष्वनिवर्तित्वस्तु**तिः ॥८८॥

**आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।**
**युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥८९॥**

(१) **मेधातिथिः** । आहूयन्ते युद्धार्थमितरे यत्र वीराः स **आहवः** संग्रामः । **मिथः** स्पर्धमाना अन्योन्यं परस्परं जिघांसन्तो हन्तेच्छवः युद्धयमानाः प्रहरन्तः **परं शक्त्या** परया शक्त्या यथाबलमित्यर्थः । छांदसत्वात्परेत्यस्य स्थाने परमिति रूपम् । **अपराङ्मुखा** युद्धयमाना इति संबन्धः । **स्वर्गं यान्ति** । "ननु च राज्यलोभात्प्रवृत्तानां दृष्टस्य फलस्य संभवात्कुतः स्वर्ग उच्यते" । वक्ष्यमाण युद्धनियमापेक्षः स्वर्गः । न हि तेषां नियमाना-मन्यत्प्रयोजनमस्ति । 'न कूटैरायुधै'रित्यादिना त्यक्तराज्यस्यापि शक्तप्रणिपातेन तदनुजीवन-संभवात् भवेत् । तस्मादर्हस्तत्फलसंभवः । अथवा निश्चिते पराजये निराशस्य युद्धावतरणम्, तत्स्वर्गायैव । अस्मादेव वचनान्नात्मत्यागनिषेधस्य विषयोऽयम् । **महीक्षितो** मण्डलेश्वरा न पुनस्तदनुजीविनः । तेषां हि स्वाम्यर्थैव प्रवृत्तिर्न स्वार्था । अतश्च कुतस्तेषां फलसम्बन्धः, ऋत्विजामिव दक्षिणापणेन परिक्रीतानाम् । एवमेषामपि वृत्तिपरिक्रीतानां कुतः स्वर्गादिफलोत्पत्तिः? ननु च अविशेषेणैतदुक्तम् । (५/९७) "उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः सन्तिष्ठते यज्ञ" इति । तथा "द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च शूरश्चाभिमुखो हतः।" इति । तथा **भारते**

युद्धप्रेक्षिणामपि स्वर्गः संदर्शितः। **मन्त्रलिङ्गानि** च सन्ति "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः। ये वा सहस्रदक्षिणास्तांश्च देवापि गच्छतात्॥" सहस्रदक्षिणानां यजमानानां शूराणां च रणशिरसि त्यक्तप्राणानां महाफलत्वं च दर्शयन्ति। 'ये युध्यन्ते' न च मरणायैव क्रीयन्ते। नहि संपरिग्रहकालेऽयमुपसंवादोऽस्ति। यथा होत्रोद्गात्रादीनां स्वप्रवचनसमाख्या-नियतार्त्विज्यपदार्थानुष्ठानायैव वरणम्। तस्मात्प्रभुकार्योद्देशेन यन्मरणं तदनुक्रान्त-फलायैव। न च परप्रयुक्तात्कर्मणोऽन्यस्य फलं नास्ति। अश्वमेधावभृथे हि ब्रह्मघ्नस्य स्नानादयजमानस्यैव शुद्धिः। अत्रोच्यते—प्रजार्थे युद्धे प्राणत्यागो धर्मायैव। यदुक्तम् **'उद्यतैराहव'** इति, तदा भृतिपरिक्रीतस्यास्वतंत्रस्य यस्य वा 'कुर्विति' प्रयाणं रण इत्येव परिकरो बद्धस्तदपेक्षमेतत् यज्ञसंस्थावचनम्। एवंभूतश्चाभिमुखो हत इति। अथवा नरकाभाव एव 'सूर्यमंडलभेदनं' युद्धचमानस्य भविष्यति। यत्र विषयान्तरेश्वरेण राज्ञा परस्य राज्ञो विषयो हन्यते भज्यते जनो लुप्येत्तत्र तदर्थं युद्धे प्राणत्यागो धर्मार्थः। अन्धंतमो हि नरके तदभावात्सति प्राकाश्ये सूर्यमंडलभेदनवचनम्। सूर्यमण्डलं भिनत्ति, उपरिष्टाल्लोकानाप्नोति, नाधः प्रपततीत्यर्थः। भृतिपरिक्रीतस्य प्रभोः संग्रामे समुपस्थिते, तमेव जहतो नरकनिपतनम्, तदर्थं युध्यमानस्य भर्तृपिण्डानृण्यं गतवतो दुष्कृतेन प्रतिबध्यमानस्य स्वैः सुकृतैर्युक्त एव स्वर्गादिलाभः। अत उक्तं "सद्यः संतिष्ठते यज्ञ" इति। अव्यवधानेन यज्ञफलमविशेषश्रुतौ स्वर्गमवाप्नोतीत्यर्थः। एवं **भारते**ऽपि भृतिपरिक्रीतानां स्वर्गफलावाप्तिवचनमुपपद्यते। युद्धप्रेक्षिणां तु स्वर्गावाप्तिरर्थवाद एव। अथवा बहुषु जीवनोपायेषु सत्सु यच्छस्त्रेण जीवनं ततो नियमात्स्वर्गः। यत्तु न मरणाय क्रीयन्त इति, शस्त्रभृतां भृतिदाने नान्यद्युद्धात्प्रयोजनमस्ति, विशेषानुपदेशात्—'सर्वकार्योद्यताः, सर्वप्रकारं मदर्थः संपादनीयः' इति परिक्रीयन्ते—तत्र यदा युद्धमुपस्थितं भवति, तदा आ शरीरपाता-त्प्रभोरर्थः कर्तव्यः, तथाऽऽनृण्यं भवति। अनुपस्थिते तु युद्धे यदि भृत्यस्य मरणं भवति, तदा सर्वेऽनृणा एव। उद्युक्ते ह्यसौ तत्कार्ये तादृश एवास्योपसंवादः। युद्धकाले योद्धव्यं भवतीति लिङ्गदर्शनमपि तूपपद्यत एव। **अश्वमेधावभृथे** तु स्पष्टं वचनं 'तस्मात्समागमे तेषामिति', इह तु युद्धसाध्यमिति विशेषः ॥८९॥

(२) **सर्वज्ञनारायणः। मिथो जिघांसन्तोऽन्योन्यं** युद्धचमाना इत्यपौनरुक्त्यम् ॥८९॥

(३) **कुल्लूकः**। अत एव **आहवेष्विति**। राजानो **मिथः** स्पर्धमाना युद्धेष्वन्योन्यं हंतुमिच्छंतः प्रकृष्टया शक्त्या संमुखीभूय युध्यमानाः स्वर्गं गच्छंति। यद्यपि युद्धस्य शत्रुजय-धनलाभादिरूपं दृष्टमेव फलं न स्वर्गः तथापि युद्धाश्रिता पराङमुखत्वनियमस्य स्वर्गः फलमिति न दोषः ॥८९॥

(४) **राघवानन्दः। आहवेषु** युद्धेषु। **महीक्षितो** राजानः **स्वर्गं यान्तीति** फल-संबन्धमात्रमत्र विधेयमन्येषां स्वधर्मत्वेन प्राप्तेः ॥८९॥

(५) **नन्दनः**। अनिवर्तित्वस्य श्रेयस्करं चेत्कारणमाह **आहवेष्विति**। यद्यस्मात्**स्वर्गं यान्ति** तस्माच्छ्रेयस्करत्वमनिवर्तित्वमिति ॥८९॥

(८) **गोविन्दराजः। तथा चाहवेष्विति**। महीपालाः **मिथः** स्पर्धमानाः संग्रामे-ष्वितरेतरं हन्तुकामाः प्रकृष्टया शक्त्या सम्मुखं युध्यमानाः स्वर्गं गच्छन्ति ॥८९॥

(९) भारुचिः। तथा चाह अतश्च संग्रामादनिवर्तित्वं राज्ञां विशेषधर्मः। तस्य च युध्यमानयोः नियमः शिष्यते च ॥८९॥

न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून्।
न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥९०॥

(१) मेधातिथिः। तानिदानीमदृष्टार्थान्नियमान्दर्शयति। कूटानि यानि बहिःकाष्ठमयान्यन्तर्निशितशस्त्राणि। कर्णिनः शरा ये शल्यस्य मूले मध्ये वा कर्णाकारैः फलकैः क्रियन्ते। ते हि प्रविष्टा दुरुद्धरा भवन्ति। उद्ध्रियमाणाः प्रहारैरभिन्नमपि शरीरैकदेशं भिन्दन्ति। दिग्धा विषोपलिप्ताः। अग्निना ज्वलितमादीपितं तेजोमयफलकं येषाम्। एतैर्न योद्धव्यम् ॥९०॥

(२) सर्वज्ञनारायणः। कूटैश्छन्ननिन्हुतैः। कर्णिभिः कर्णाकारफलकैः। दिग्धैर्विषाक्तैः। अग्निज्वलिततेजनैरग्निधमनोष्णीकृतफलकैः ॥९०॥

(३) कुल्लूकः। कूटान्यायुधानि बहिःकाष्ठादिमयान्यन्तर्गुप्तनिशितशस्त्राणि एतैः समरे युध्यमानः शत्रून्न हन्यान्नापि कर्ण्याकारफलकैर्बाणैर्नापि विषाक्तैर्नाप्यग्निदीप्तफलकैः ॥९०॥

(४) राघवानन्दः। तत्रान्याययुद्धं स्वर्गासाधनमिति निषेधति न कूटैरिति चतुर्भिः। कूटता हि दृश्यमानकाष्ठादिमयत्वेऽप्यन्तर्निहितलोहाद्यस्त्रयुक्तता। कर्णिभिः कर्णिकारवत्फलकैर्बाणैः। दिग्धैः विषाक्तैः। ज्वलिततेजनैः प्रदीप्तफलकैः ॥९०॥

(५) नन्दनः। सजातीयानि शस्त्राण्याह न कूटैरायुधैरिति। कूटः कृत्रिमैः। कर्णयुक्तः शरः कर्णी। दिग्धो विषलिप्तः। अग्निज्वलिततेजनैः अग्निदीपितशल्यमुखैः ॥९०॥

(६) रामचन्द्रः। कर्णिभिः कर्णिसंज्ञैः बाणैः दिग्धैर्विषसंयुक्तैः अग्निज्वलिततेजनैः अग्निधमितोष्णीकृतफलकैः एतादृशैर्बाणैर्न युध्येत ॥९०॥

(७) मणिरामः। कूटान्यायुधानि बहिः काष्ठादिमयानि अंतर्गुप्तनिशितानि। कर्णिभिः कर्ण्याकारफलकैर्बाणैः। दिग्धैः विषाक्तैः। नाग्निज्वलिततेजनैः अग्निदीप्तफलकैः ॥९०॥

(८) गोविन्दराजः। न कूटैरिति। न कर्णिकैर्नापि दिग्धैर्नाग्निज्वलिततेजनैः। संग्रामे युद्धं कुर्वन् कूटशस्त्रादिभिः शत्रून् हन्यमानोऽपि कृतकर्णाकारफलकैर्नापि विषलिप्तैर्न चाग्निज्वलितफलकैः ॥९०॥

न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम्।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥९१॥

(१) मेधातिथिः। रथस्थेन रथारूढ एव हन्तव्यः, स्थलस्थितो न हन्तव्यः। क्लीबो नपुंसकः, पौरुषहीनो वा। अन्यत्र दृढ आसीन उपविष्टो रथपृष्ठे भूमौ वा। तवास्मीति वदति यस्तमपि न हन्यात्। शब्दनियमोऽत्र न विवक्षितः। दीन वदन्नेवंजातीयकैरपि शब्दैः 'त्वदीयोऽहं त्वामाश्रितोऽस्मीति'—न हन्तव्यः ॥९१॥

(२) **सर्वज्ञनारायणः**। **स्थलारूढं** युद्धभूमिं त्यक्त्वा स्थलेऽन्यैरप्राप्त्यर्थं स्थितम् ॥९१॥

(३) **कुल्लूकः**। स्वयं रथस्थो रथं त्यक्त्वा **स्थलारूढं न हन्यात्**। तथा नपुंसकं बद्धाञ्जलिं मुक्तकेशमुपविष्टं त्वदीयोऽहमित्येवंवादिनं **न हन्यात्** ॥९१॥

(४) **राघवानन्दः**। किंचैतानष्टादश न **हन्यात्**सतां धर्ममनुस्मरन्नित्याह **न चेति** त्रिभिः। स्वयं रथारूढः त्यक्तरथमरिं **न हन्यात्**। एवं **क्लीबं** क्लैब्यभाषिणं नपुंसकं वा। **आसीनं** रथमध्ये भूमौ वोपविष्टम्। **तवास्मीति वादिनं** शरणागतम् ॥९१॥

(५) **नन्दनः**। अवध्यानाह **न च हन्यादिति**। **स्थलं** तुङ्गप्रदेशम् ॥९१॥

(७) **मणिरामः**। **स्थलारूढं** विगतवाहनं ॥९१॥

(८) **गोविन्दराजः**। **न चेति**। युद्धभूमिं त्यक्त्वा स्थलमारूढं नपुंसकं बद्धाञ्जलिं। मुक्तकेशोपविष्टं, त्वदीयोऽहमित्येवं वक्तारं **न हन्यात्** ॥९१॥

**न सुप्तं न विसन्नाहं न नग्नं न निरायुधम्।**
**नायुध्यमानं पश्यन्तं न परेण समागतम् ॥९२॥**

(१) **मेधातिथिः**। **न नग्नम्**। 'न भग्नमिति' वा पाठः। **विसन्नाहस्य** प्रतिषेधान्नग्नस्य प्राप्तिरेव नास्ति। तेन शिरस्त्राणाद्यभावेनैकदेशेन नग्नतया नग्नो द्रष्टव्यः। भग्नस्यापि परावृत्तप्रतिषेधात्संमुखस्थोऽपि, 'त्वया सह न युद्धये'मिति वक्ति, स नानुबन्धनीयोऽवश्यं योद्धव्यमिति। **नायुध्यमानं पश्यन्तम्**। यः प्रेक्षक एव केवलः स न हन्तव्यः। यस्तु प्रेक्षते युध्यते च, न तत्र प्रतिषेधः। **परेण समागतः**। अन्येन सह युध्यमानोऽन्येन न हन्तव्यः ॥९२॥

(२) **सर्वज्ञनारायणः**। अयुध्यमानं पश्यन्तमित्येव समागतं युद्धार्थम् ॥९२॥

(३) **कुल्लूकः**। **सुप्तं** मुक्तसन्नाहं विवस्त्रमनायुधम् युध्यमानं प्रेक्षकमन्येन सह युध्यमानं च न हन्यात् ॥९२॥

(४) **राघवानन्दः**। **सुप्तं** स्वप्नायितं श्रमवशात्। **विसन्नाहं** सन्नाहः कवचादिः तच्छून्यम्। **पश्यन्तं** रणोत्सवम्। **परेण समागतं** परेण सह युद्धासक्तम् ॥९२॥

(५) **नन्दनः**। **विसन्नाहं** विकवचम्। **पश्यन्तं** युद्धदर्शिनम्। न हन्यादित्यनुवर्तते ॥९२॥

(६) **रामचन्द्रः**। विगतः सन्नाहो यस्य स विसंनाहस्तं न हन्यात् ॥९२॥

(७) **मणिरामः**। **परेण समागतं** अन्येन सह युध्यमानं ॥९२॥

(८) **गोविन्दराजः**। **न सुप्तमिति**। **सुप्तं**, **विगतसन्नाहं** अपरिधानानायुधप्रधन-प्रेक्षकान् अन्यैश्च **युध्यमानान् न हन्यात्** ॥९२॥

**नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम्।**
**न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥९३॥**

(१) **मेधातिथिः**। **आयुधव्यसनमा**युधकृच्छ्रमायुधभङ्गः, कुण्डलिभावः खड्गस्य, ज्याछेद इत्येवमादिस्तं प्राप्तम्। **आर्तः** हतपुत्रभ्रातादिः। **भीतं** मुखरागादिना विज्ञाय, शस्त्रसंमुखमपि। **परावृत्तं** प्रत्यावृत्य स्थितम्। एते नियमाः। प्रतिषेधपक्षे प्रत्यवायः।

तदा च स्वर्गप्राप्तिवचनमर्थवादः। किं पुनरत्र युक्तम्? पुरुषार्थः प्रतिषेधः। "न कलञ्जं भक्षयेत्" इतिवत्। तथा हि नञो मुख्यार्थवृत्तिता भवति। **सतां धर्ममिति**। शिष्टानामेष आचार इत्याह **अनुस्मरन्निति** ॥९३॥

(२) **सर्वज्ञनारायणः**। **युद्धव्यसनं** दैवकृतं रथभङ्गादिना। **आयुधव्यसनमिति** क्वचित्पाठः तत्रायुधव्यसनं खड्गादिभङ्गः। **आर्तं** पुत्रादिशोकार्तम्। **अतिपरिक्षतम**न्येन सह युध्वा। **परावृत्तं** युद्धात् ॥९३॥

(३) **कुल्लूकः**। भग्नखड्गाद्यायुधं पुत्रशोकादिनाऽऽर्तं बहुप्रहाराकुलं **भीतं** युद्धपराङ्मुखं च शिष्टक्षत्रियाणां धर्मं स्मरन् न हन्यात् ॥९३॥

(४) **राघवानन्दः**। **आयुधव्यसनं प्राप्तं** भग्नरथाद्यायुधम्। **आर्तं** पुत्रादिशोकैः। **परिक्षतमा**पादतलमस्तककृतक्षतम्। **भीतं** वेपमानं भयेन। **परावृत्तं** युद्धात्पराङ्मुखम्। **सतां** भीष्मादीनाम् ॥९३॥

(५) **नन्दनः**। **आयुधव्यसनं** आयुधभङ्गादिकम्। **आर्तं** पुत्रादि। **सतान्धर्मं** कूटयुद्धादिभिरयोधनं स्थलारूढादिनञ्चानुस्मरन् राजा न हन्यादित्यनुवर्तते ॥९३॥

(६) **रामचन्द्रः**। **आयुधव्यसनं प्राप्तं** भग्नायुधं **आर्तं** पुत्रादिशोकविकलं **अतिपरिक्षतं** शस्त्रादिपरिक्षतं क्षतसंयुक्तम् ॥९३॥

(७) **मणिरामः**। **नायुधव्यसनं प्राप्तं** भग्नायुधं। **आर्तः** पुत्रशोकादिना पीडितं। **नातिपरिक्षतं** बहुप्रहाराकुलं ॥९३॥

(८) **गोविन्दराजः**। **नायुधव्यसनप्राप्त**मिति। भग्नायुधं, हतपुत्रादिकं, प्रहारोपेतं भीतं, संग्रामप्रतिनिवृत्तं शिष्टाचारं स्मरन् न हन्यात् ॥९३॥

(९) **भारुचिः**। संग्रामनियमविधिरतो...यार्थम् ॥९३॥

**यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः।**
**भर्तुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते ॥९४॥**

(१) **मेधातिथिः**। नैवं मन्तव्यं–परावृत्तो यदि हन्यते तदा, दुष्कृत्यहतस्तु नेति—किं तर्हि? परावृत्तमात्रनिबन्धनं दोषवचनम्। किंच न परावृत्तहतेनेयं बुद्धिः कर्तव्या—'अनुभूतखड्गप्रहारोऽस्म्यनृणः कृतभर्तृकृत्य' इति। तथाविधाः प्रहारा न कस्मैचिदर्थायेति दोषातिशयदर्शनेन दर्शयति भर्तृसंबन्धिदुष्कृतमिति। यच्च वचनमुत्तरत्र तदीयसुकृतग्रहणमिति, तदर्थवादः। न ह्यन्येन कृतं शुभमशुभं वाऽन्यस्य संभवति। न च सुकृतस्य नाशः, किन्तु महता दुष्कृतेन प्रतिबन्धे चिरकालभाविता सुकृतस्य फलस्य उच्यते ॥९४॥

(२) **सर्वज्ञनारायणः**। **भर्तुर्यद्दुष्कृतमि**ति बहुतरदुष्कृतोत्पादोपलक्षणं न तु मुख्यार्थं अदुष्कृते भर्तरि तदभावापत्तेः ॥९४॥

(३) **कुल्लूकः**। **यस्तु** योधो **भीतः** पराङ्मुखस्सन् युद्धे शत्रुभिर्हन्यते स पोषणकर्तुः प्रभोर्यद्दुष्कृतं तत्सर्वं प्राप्नोति शास्त्रप्रमाणके च सुकृतदुष्कृते यथा शास्त्रसंक्रमयोग्य एव सिद्ध्यतः अत एवोपजीव्यशास्त्रेण बाधनान्न प्रतिपक्षानुमानोदयोऽपि। एतच्च षष्ठे 'प्रियेषु (स्वेष) सुकृत' (६/७९) मित्यत्राविष्कृतमस्माभिः। पराङ्मुखहतस्य स्यात्पापमेतद्विवक्षितम्।

**न** त्वत्र प्रभुपापं स्यादिति **गोविन्दराजः**। **मेधातिथि**स्त्वर्थवादमात्रमेतन्निरूपयन् मन्ये नैतद् द्वयं व्युक्तं व्यक्तमन्वर्थवर्जनात्। अन्यदीयपुण्यपापेऽन्यत्र संक्रमेत इति शास्त्रप्रामाण्याद्वेदान्तसूत्रकृता बादरायणेन निर्णीतोऽयमर्थ इति यथोक्तमेव रमणीयम् ॥९४॥

(४) **राघवानन्दः**। **संग्रामे** पराङमुखादेर्दोषमाह **यस्त्विति** द्वाभ्याम्। परस्थपापं परत्र फलदमिति च न तस्य नातिभारः। **मेधातिथि**स्त्वाहार्थवादमात्रम्। **भर्तुः** शस्त्र-भरणयोग्यस्य वान्यस्य यत्पापं तत्पराङमुखघातकानां भवेदिति **गोविन्दराजः**। प्रकरणादिति **परैः** शत्रुभिः **परावृत्तः** पराङमुखो यदि घात्यते तदा पोषकस्य भर्तुर्यत्पक्षपातितया बुध्यति तस्य **दुष्कृतं** सर्वमाप्नोतीति वस्त्वर्थः। तस्मात्पराङमुखेन न भाव्यमिति भावः ॥९४॥

(५) **नन्दनः**। अयोध्यस्य **परावृत्तस्य** दोषमाह **यस्तु भीत** इति। **भर्तुः** स्वामिनः ॥९४॥

(७) **मणिरामः**। **भर्तुः** पोषणकर्तुः। **दुष्कृतं** पापं। **प्रतिपद्यते** प्राप्नोति ॥९४॥

(८) **गोविन्दराजः। यस्त्विति। यो भीतः** पराङमुखीभूतः **संग्रामे** शत्रुभिर्हन्यतेऽपि यदि तथापि प्रभोर्य**त्किञ्चित्पापं तत्सर्वं** प्राप्नोति। पापं तस्य भवति ह्येतावदत्र विवक्षितम्। अन्यं वा कथयति अपापे प्रभौ पापाभावप्रसङ्गेन च प्रभोरेव तत्प्रायश्चित्तं तेनासौ दुष्कृतात्प्रमुच्यते। भर्तृग्रहणादमात्यस्यापि परावर्तनादिदोष एव, न प्रकृतस्यैव राज्ञः ॥९४॥

(९) **भारुचिः**। राज्ञोऽन्यस्यापि दण्डपुरुषस्य परावृत्तस्य निन्दा श्लोकद्वयेनोक्ता। युक्ता च तन्निन्दा यदर्थमसौ ह्रियते तदकुर्वन् . . . ॥९४॥

**यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्।**
**भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥९५॥**

(१) **मेधातिथिः। यच्चास्य सुकृतं किंचिद्भर्ता तत्सर्वमादत्त इति। अमुत्रार्थमु-पार्जितम्**। अर्थोऽस्यास्तीत्यर्थः। अर्शआदित्वादच्। अमुत्रामुष्मिल्लोके यत्प्रयोजनं तदर्जितम्। तदप्यस्य निष्फलं भवति। अमुत्रार्थोऽस्येति वा अमुत्रार्थं व्यधिकरणो बहु-व्रीहिगमकत्वात्प्रयोजकत्वाच्च ॥९५॥

(२) **सर्वज्ञनारायणः**। अस्य च **परावृत्तहतस्य** चकारात्परावृत्तमात्रस्य यदमुत्रार्थं च सुकृतं चकारादिह लोकार्थं च ॥९५॥

(३) **कुल्लूकः**। पराङमुखहतस्य यत्किंचित्सुकृतं परलोकार्थमर्जितमनेनास्ति **तत्सर्वं** प्रभुर्लभते ॥९५॥

(४) **राघवानन्दः**। न केवलमेवमपि त्वस्य पराङमुखस्य भर्ता पोष्टा **परावृत्तः** पराङमुखः स चासौ हतश्चेति तस्य **परावृत्तहतस्य** परलोकार्थमुपार्जितं सुकृतमुपादत्त इत्यन्वयः ॥९५॥

(७) **मणिरामः**। अस्य पराङमुखहतस्य। **अमुत्रार्थं** परलोकार्थं ॥९५॥

(८) **गोविन्दराजः। यदिति**। अस्य च पराङमुखहतस्य यत्किञ्चित्परलोकार्थं सुकृतमर्जितमस्ति तत्सर्वं प्रभोर्भवति ॥९५॥

**रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून्स्त्रियः ।**
**सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥९६॥**

(१) **मेधातिथिः**। **कुप्यं** शयनासने ताम्रभाजनादि। **यो यज्जयति तस्य तत्**। राज्ञः स्वामित्वाद्ग्रहणे प्राप्ते तदपवादार्थमेतत्। सुवर्णरूप्यभूम्यावासकादि राज्ञ एव। एवमर्थपरिगणनम्। आयुधसंवाहनादि राज्ञ एव। धान्यादीनां पृथगुपादानाद्धनशब्देन गोमहिष्यादिकमुच्यते। तथा राजधनं चार्धमिति प्रयुञ्जते ॥९६॥

(२) **सर्वज्ञनारायणः**। **धनं** रत्नादि। **सर्वद्रव्याणि** वस्त्रादीनि। **कुप्यं** हेमरूप्यान्यधातुद्रव्यम् ॥९६॥

(३) **कुल्लूकः**। राज्ञः स्वामिनः सर्वधनग्रहणे प्राप्ते तदपवादार्थमाह। रथाश्वहस्तिछत्रवस्त्रादिधनधान्यगवादिदास्यादिस्त्रियः सर्वाणि द्रव्याणि गुडलवणादीनि। **कुप्यं** च सुवर्णरजतव्यतिरिक्तं ताम्रादिधनम् यः पृथग्जित्वा सततं गृहमानयति तस्यैव तद्भवति सुवर्णरजतभूमिरत्नाद्यनपकृष्टधनं तु राज्ञ एव समर्पणीयं, एतदर्थमेवात्र परिगणनीयम् ॥९६॥

(४) **राघवानन्दः**। अरिधनस्य ग्रहीतारमाह **रथाश्वमिति**। दन्तिनं **कुप्यं** सुवर्णरजतं भूमिरत्नाद्यतिरिक्तं शयनासनादि ॥९६॥

(५) **नन्दनः**। योधैर्जितं द्रव्यं न राज्ञा हार्यमित्यभिप्रायेणाह **रथाश्वमिति**। स्वर्णरजतव्यतिरिक्तद्रव्यं **कुप्यम्** ॥९६॥

(६) **रामचन्द्रः**। रथादिकं **यो यज्जयति तस्य** तत्सर्वं भवेत्। च पुनः **कुप्यं** सुवर्णरौप्यव्यतिरिक्तं धातुसंज्ञम् ॥९६॥

(७) **मणिरामः**। सर्वं धनं स्वामिना ग्राह्यमिति प्राप्ते तदपवादमाह **रथाश्वमित्यादि**। **कुप्यं** च सुवर्णरजतधनं तु राज्ञ एव समर्पणीयं न स्वयं ग्राह्यमित्यर्थः ॥९६॥

(८) **गोविन्दराजः**। **रथाश्वमिति**। रथाश्वहस्तिध्वजहिरण्यधान्यपशुदास्यात्मकं सर्वाणि गुडलवणादीनि **कुप्यं** ताम्रलोहादि यो यत्परानवजित्य हरति **तस्यैव तत्** भवति न राज्ञः ॥९६॥

(९) **भारुचिः**। स्वामित्वाद्राजग्रहणनिवृत्त्यर्थो नियमः ॥९६॥

**राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।**
**राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥९७॥**

(१) **मेधातिथिः**। येन यज्जितं तेन तद्ग्रहीतव्यमित्यस्यायं विशेष उच्यते। स्वयमुद्धारं राज्ञे दद्युरुत्तमद्रव्यमुद्धृत्य दद्युरित्यर्थः। न सर्वं तैर्ग्रहीतव्यमिति। एषा वैदिकी श्रुतिः। "इन्द्रो वै वृत्रं हत्वा" इत्याद्युपक्रम्य "स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरतेति"। **राज्ञा** वा पृथग्जये स्वयंजये यत्रायं विभागो नास्त्यनेनायं ग्रामो जितः, एष च परकीयः सामन्तादिः सर्वेण सर्वं उत्खातमूलः। तत्र राज्ञा लब्धप्रशमनन्यायेन भृत्याः संविभजनीयाः ॥९७॥

(२) **सर्वज्ञनारायणः** । **उद्धारं** तन्मध्ये यदिष्टं वसु राज्ञस्तदुद्धृत्य **दद्युः** । तथाच **श्रुतिः** 'इन्द्रो वै वृत्रं हत्वे'त्युपक्रम्य 'स महान्भूत्वा देवता अब्रवीदुद्धारं म उद्धरते'ति यथाप्येतर्हीच्छतीति । पृथक् जितं यैर्योधैर्मिलित्वा जितं तेभ्यो दद्यात् ॥९७॥

(३) **कुल्लूकः** । अत एवाह **राज्ञ** इत्यादि । **उद्धारं** योद्धारो राज्ञे **दद्युः** । उद्ध्रियत **इत्युद्धारः** । जितधनादुत्कृष्टधनं सुवर्णरजतकुप्यादि राज्ञे समर्पणीयं, करितुरगादिवाहनमपि राज्ञे देयं, 'वाहनं च राज्ञ उद्धारं चे'ति **गौतम**वचनात् । उद्धारदाने च **श्रुतिः** 'इन्द्रो वै वृत्रं हत्वे'त्युपक्रम्य 'स महान् भूत्वा देवता अब्रवीत् उद्धारं(मे?)समुद्धरते'ति । राज्ञा **चापृथ**ग्जितं सहजितं **सर्वयोधेभ्यो** यथापौरुषं संविभजनीयम् ॥९७॥

(४) **राघवानन्दः** । **उद्धारं** सुवर्णरजतभूम्याद्युत्कृष्टं करितुरगवाहनमिति **गौतम**-वचनात् । तच्छ्रेष्ठमपि **अपृथग्जितं** सहजितं **दातव्यं** यथापौरुषं विभजनीयम् ॥९७॥

(५) **नन्दनः** । दद्युर्योधाः । **उद्धार**मुत्कृष्टद्रव्यं उद्धारं वा **वैदिकी श्रुतिः** शब्दः । **अपृथक्जितं** सर्वयोधैः सह जितम् ॥९७॥

(६) **रामचन्द्रः** । तन्मध्ये रथाश्वादिमध्ये **उद्धारं** यदिष्टं वस्तु तदुद्धृतं राज्ञो **दद्यु**रिति ॥९७॥

(७) **मणिरामः** । **उद्धारं** उद्ध्रियत इत्युद्धारः, जितधनादुत्कृष्टं धनं सुवर्णादि । **अपृथग्जितं** एकीभूय जितं । **योधेभ्यो दातव्यं** यथापौरुषं विभज्य दातव्यमित्यर्थः ॥९७॥

(८) **गोविन्दराजः** । **राज्ञे चेति** । यद्यपि यो यज्जयति तस्य तद्युक्तं । तथा च यद्यत्तत्र श्रेयस्तत्तत् राज्ञे भृत्या दद्युः । 'माहेन्द्रमुद्धारमुदहरन् वृत्रं हत्वे'त्येवमादिकाऽत्र **वैदिकी श्रुतिः** । यच्चाविभागेन जितं तद्राज्ञा सर्वयोधेभ्यो दातव्यम् ॥९७॥

(९) **भारुचिः** । उद्धारो(?वरि)ष्ठद्रव्यं सर्वयोधेभ्यो राज्ञा आदेयम् । **वैदिकी श्रुति**र्माहेन्द्रमुद्धारमुदहर(त्?)वृ(?त्रं)हत्वेत्यादि...हजितं यत्ततः **सर्वयोधेभ्यो** युद्ध-व्यायामक्लेशानुरूपं देयम् ॥९७॥

**एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः ।**
**अस्माद्धर्मान्न च्यवेत क्षत्रियो घ्नन् रणे रिपून् ॥९८॥**

(१) **मेधातिथिः** । उपसंहारोऽयम् । 'योधाः' योद्धारस्तेषां धर्मो **योधधर्मः** । **अनुपस्कृतः** अगर्हितः । अविकृतो वा । अत एवाह सनातनः—स्वेच्छया प्रवर्तितो विकृतः स्यात् । **न च्यवेत** न चलेत । सर्वदाऽनुतिष्ठेत् । क्षत्रियग्रहणं मुख्यस्तस्यात्राधिकार इति दर्शयितुं न त्वन्यस्य तत्स्थानापन्नस्य नायं धर्म इति ॥९८॥

(२) **सर्वज्ञनारायणः** । **अनुपस्कृतो**ऽधुनाऽसंस्कृतः परंपरागतः इदानीमपि तदवस्थ एव वर्तमानः ॥९८॥

(३) **कुल्लूकः** । अविगर्हित एषोऽनादिसर्गप्रवाहसंभवतया नित्यो **योधधर्म** उक्तः । युद्धे शत्रून् हिंसन् क्षत्रिय एतं धर्मं न त्यजेत् । युद्धाधिकारित्वात्क्षत्रियग्रहणं । अन्योऽपि तत्स्थानपतितो न त्यजेत् ॥९८॥

(४) **राघवानन्दः** । **अनुपस्कृतः** अविगर्हितः । **योधधर्मः** कर्तव्याकर्तव्यविचारः । तस्माद्दृष्टलोभादपि **न च्यवेत** न पराङ्मुखः स्यात् । घ्नन् रिपून्नाशयन् ॥९८॥

(५) **नन्दनः**। **एषोऽनुपस्कृतः** अकृतप्रयत्नः स्वभावसिद्ध इत्यर्थः ॥९८॥

(६) **गोविन्दराजः**। **अनुपस्कृतः** अधुनाऽसंस्कृतः परंपरागतो धर्मः इदानीमपि तदवस्थ एव ॥९८॥

(७) **मणिरामः**। **अनुपस्कृतः** अविगर्हितः ॥९८॥

(८) **गोविन्दराजः**। **एष इति**। एषोऽविगर्हितोऽनादिपारम्पर्यायातो योधधर्म उक्तः। ततः संग्रामे शत्रून् हिंसन् क्षत्रिय एतं धर्मं न परित्यजेत् ॥९८॥

(९) **भारुचिः**। अनुपस्कृतः- अक...क्त्वगुण इत्यर्थः ॥९८॥

**अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः।**
**रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥९९॥**

(१) **मेधातिथिः**। न क्षत्रियः संतुष्टः स्याद्ब्राह्मणवत्किन्त्व**लब्धार्ज**ने यत्नं कुर्यात्। अर्जितं च धनं रक्षेद्रक्षितं च वर्धयेत्कोशसंचयं कुर्यात्। ततः पात्रेभ्यो दद्यात् नायथार्थं व्ययं कुर्यात्। तदुक्तं "आयादल्पतरो व्यय" इति ॥९९॥

(२) **सर्वज्ञनारायणः**। **अलब्धं** ग्रहणार्थम् ॥९९॥

(३) **कुल्लूकः**। अजितं भूमिहिरण्यादि जेतुमिच्छेत्, जितं प्रयत्नतो रक्षेत्, **रक्षितं** च वाणिज्यादिना वर्धयेत्, **वृद्धं** च पात्रेभ्यो दद्यात् ॥९९॥

(४) **राघवानन्दः**। ननु राज्ञः परिपूर्णधनत्वात्किमित्यायो धनोद्धारं गृह्णात्यत आह **अलब्धमिति**। **लिप्सेत** जयकरादिना। **वर्धये**ल्लभ्यादिना। एतदर्थमेव क्षीणवृत्तिर्वणिग्रक्षितः। **पात्रेषु** ब्राह्मणेषु **निक्षिपेत्** दद्यात् ॥९९॥

(७) **मणिरामः**। व्यतिरिक्तं। यो यज्जयति पृथक्जित्वा समानयति। सुवर्णरजतभूमिरत्नाद्युक्तम् ॥९९॥

(८) **गोविन्दराजः**। **अलब्धमिति**। अजितं भूहिरण्यसुवर्णादि जेतुं यत्नं कुर्यात्। जितं च यत्नतो **रक्षेत्**। **रक्षितञ्च** वृद्धिं नयेत्। एवमस्य महाधनत्वात्स्वपरपरिभवो न भवति। वर्धितञ्च पात्रेभ्यो दद्यात्। तथा सति परलोकाऽभ्युदयोऽप्यस्य भवति ॥९९॥

(९) **भारुचिः**। लिप्समानः सन्तुष्टः सन् राजा सपत्नैर्महद्भिः दायादैर्वर्धमानैरुच्छिद्येताल्पतन्त्रत्वादर्जितं चारक्षन् केवलेनार्जितक्लेशेन फलरहितेन सं...**रक्षितं** च सम्यगवर्धयन् क्षीयते। तदुपयुञ्जानोऽन्यस्याभावात् तदर्जितं रक्षितं वर्धितं च यन्महता यत्नतः तदप्रयच्छन् पात्रेभ्यः परलोकाद्धीयेत। निष्फल...त्रयसाध्यं क्लेशत्रयमापद्यते ॥९९॥

**एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्।**
**अस्य नित्यमनुष्ठानं सम्यक्कुर्यादतन्द्रितः ॥१००॥**

(१) **मेधातिथिः**। पुरुषस्य येऽर्थास्तेषां **प्रयोजनं** चतुर्विधम् ॥१००॥

(२) **सर्वज्ञनारायणः**। **चतुर्विधम**लब्धलाभादि। पुरुषार्थो धर्मादिः **प्रयोजनं** यस्य तत्तथा ॥१००॥

(३) **कुल्लूकः**। एतच्चतुःप्रकारं पुरुषार्थो यः स्वर्गादिस्तत्प्रयोजनं यस्मादेवंरूपं जानीयादतोऽनलसः सन्सर्वदाऽनुष्ठानं कुर्यात् ॥१००॥

(४) **राघवानन्दः**। किंच **एतदिति**। एतदलब्धलिप्सादिचतुष्टयं पुरुषार्थचतुष्टयं प्रयोजनार्थम्। अतस्तत्संपादयेत् ॥१००॥

(५) **नन्दनः**। **अस्य** चतुष्टयस्य ॥१००॥

(६) **रामचन्द्रः**। पुरुषार्थो धर्मादिः प्रयोजनं यस्य तत्पुरुषार्थप्रयोजनं एतदलब्ध-मित्यादि चतुर्विधं विद्यात्। अस्य पुरुषार्थस्य अनुष्ठानं विधानं अतन्द्रितः सन् सम्यग्यथा स्यात्तथा कुर्यात् ॥१००॥

(७) **मणिरामः**। **एतच्चतुर्विधं** अलब्धादिपूर्वोक्तं ॥१००॥

(८) **गोविन्दराजः**। **एतदिति**। एतदर्जन-रक्षण-वर्धन-दानात्मकं **चतुःप्रकारं** पुरुषकारस्य **प्रयोजनं** जानीयात्। अतोऽस्यानलसः सर्वदाऽनुष्ठाने यत्नं कुर्यात् ॥१००॥

**अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया।**
**रक्षितं वर्धयेद्वृद्ध्या वृद्धं पात्रेषु निक्षिपेत् ॥१०१॥**

(१) **मेधातिथिः**। पुरुषस्य येऽर्थास्तेषां प्रयोजनं चतुर्विधम्। चतस्र एताः क्रियास्तत्र प्रयोज्याः, अर्जन-रक्षण-वर्धन-दानानि। उपकारवचनोऽर्थशब्दः। पुरुषार्थसिद्ध्यर्थ-मेतत्प्रयोजनम्। तस्य चतुर्विधस्य प्रसक्तस्य। नित्यमनुष्ठानं कुर्यात् ॥१०१॥

(२) **सर्वज्ञनारायणः**। **इच्छेद्दण्डेन** ग्रहीतुं शत्रुतः, वैश्यादेस्तु कुटुम्बिनः साम्नैव ॥१०१॥

(३) **कुल्लूकः**। **अलब्धं** यद्धस्त्यश्वरथपदात्यात्मकेन **दण्डेन जेतुमिच्छेत्**, जितं च **प्रत्यवेक्षणेन रक्षेत्**, **रक्षितं** च वृद्ध्युपायेन स्थल-जल-पथ-वाणिज्यादिना **वर्धयेत्**, **वृद्धं** शास्त्रीयविभागेन **पात्रेभ्यो दद्यात्** ॥१०१॥

(४) **राघवानन्दः**। केन किं संपादयामीत्यपेक्षां पूरयति **अलब्धमित्यादेः**। साधन-चतुष्टयं विधत्ते **अलब्धमिच्छेदिति**। **दण्डेनेति** शुल्कादेरुपलक्षणम्। **वृद्ध्या** वाणिज्यादिना। दद्यान्निक्षेपयेदुत्तरकाले प्राप्त्यै ॥१०१॥

(५) **नन्दनः**। **दण्डेन** सैन्येन। **अवेक्षया**ऽनुसन्धानेन ॥१०१॥

(७) **मणिरामः**। **अलब्धं** हस्त्यश्वादि। **दंडेन** जेतुमिच्छेत्। **अवेक्षया** प्रत्यवेक्षणेन। वृद्ध्या वृद्ध्युपायेन। दानेन शास्त्रीयविभागेन। **निक्षिपेत्** पात्रेभ्यो दद्यात् ॥१०१॥

(८) **गोविन्दराजः**। **अलब्धमिति**। अनर्जितं हस्त्यश्वरथपदात्यात्मकेन **दण्डेन जेतुमिच्छेत्**। जितञ्च शास्त्रदृष्टेन **प्रत्यवेक्षणेन**, **रक्षेत्**। रक्षितञ्च वृद्ध्यर्थैरुपायैः स्थल-पदादिभि**र्वर्धयेत्**। वर्धितञ्च यदधिकं तत्परलोकार्थं पात्रेभ्यो दद्यात् ॥१०१॥

(९) **भारुचिः**। अत्र वृद्ध्यर्थमुपायो वृद्धिशब्देनोच्यते। प्रकरणसामर्थ्याद्वृद्धं दानेन **पात्रेषु निक्षिपेत्**। उ. . .निर्देशः पुरुषार्थसिद्धये राज्ञः। यत एतदेवमतः ॥१०१॥

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।
नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः ॥१०२॥

(१) **मेधातिथिः**। उद्यतो दण्डोऽनेनेत्युद्यतदण्डः, उद्यत उद्युक्तः, सव्यापार इति यावत्। तत्र हस्त्यादिबलं **नित्यं** योग्याभिरभिविनयेत्। शिक्षा वाहनदमनादिभिर्विधेया। करणयोग्या अभ्यासाश्च। तद्वाहनादिषु वस्त्राभरणसंस्कार इत्यादिरुद्यतदण्डता। तथा कुर्वतोऽस्योत्साहशक्तियोगो मण्डले प्रकाशीभवति। तथा **नित्यं विवृतपौरुषः**। विवृतं प्रकाशतामागतं पौरुषं कर्तव्यम्। सन्धिपालाटवीस्थानादिष्वाप्तपुरुषैरधिष्ठिताः सन्निरुद्धाः कवचिनः सततं जागरणार्थं नियोज्याः। **नित्यं संवृतसंवार्यः**। संवरणीयं संगोपनीयमात्मगतं कृत्वा तत्स्थानं संवृतं कर्तव्यमुपग्रहेण परोपजापरक्षणेन च। **नित्यं छिद्रानुसरणेन,** सर्वं शत्रोः कृत्यपक्षं ज्ञात्वा झटिति तदुपजापः ॥१०२॥

(२) **सर्वज्ञनारायणः**। **उद्यतदण्डो** विपरीताचारेषु। विवृतमत्यक्तं **पौरुषं** पुरुषकारो येन स तथा। **संवृतं** निह्नुतं संचारकार्यं यस्य ॥१०२॥

(३) **कुल्लूकः**। **नित्यं** हस्त्यश्वादियुद्धादिशिक्षाभ्यासो **दण्डो** यस्य स तथा स्यात्, नित्यं च प्रकाशीकृतमस्त्रविद्यादिना पौरुषं यस्य स तथा स्यात्, नित्यं संवृतं संवरणीयं मन्त्राचारचेष्टादिकं यस्य स तथा स्यात्, **नित्यं** च शत्रोर्व्यसनादिरूपछिद्रानुसंधानतत्परः स्यात् ॥१०२॥

(४) **राघवानन्दः**। किंच **नित्यमिति**। **विवृतपौरुषः** विवृतं प्रकाशीकृतं योधादिष्वस्त्रविद्यादिप्रकाशरूपं पौरुषं येन सः। **संवृतसंवार्यः** संवृतः संवरणीयः दूतादिर्मन्त्रश्च यस्य सः। न केवलमेवं परच्छिद्रानुसरणमप्यवश्यकर्तव्यमस्तीत्याह **नित्यमिति**। **अरेश्छिद्रानुसारी** स्यादिति ॥१०२॥

(५) **नन्दनः**। धर्मान्तरमाह **नित्यमिति**। उद्यतदण्डः स्यात् कृतापराधदमनोद्यतः स्यात्। **संवृतसञ्चारः** अच्छिद्रकार्यव्यापारः ॥१०२॥

(६) **रामचन्द्रः**। **नित्यं** संवृतसन्धानः **अरेः छिद्रानुसारी** छिद्रान्वेषी स्यात् ॥१०२॥

(७) **मणिरामः**। **उद्यतदण्डः** उद्यतः हस्त्यश्वादियुद्धाभ्यासरूपो दंडो यस्य सः। **विवृतपौरुषः** प्रकटीकृतमस्त्रविद्यादिना पौरुषं यस्य सः। **संवृतं** संवरणीयं मंत्राचारचेष्टादिकं यस्य सः। **छिद्रानुसार्यरेः** शत्रोर्व्यसनादिरूपछिद्रानुसंधानतत्परः ॥१०२॥

(८) **गोविन्दराजः**। **नित्यमिति**। हस्त्यश्वरथपदात्यात्मको दण्डो नित्यमुद्यतः कृतयुद्धादिशिष्याभ्यासो यस्य स तथा स्यात्। नित्यञ्च **विवृतं** प्रकाशीकृतं सीमाटव्यादिदेशोद्यतायुधं सन्नद्धपुरुषमारणेन पौरुषं पराक्रमो यस्य स तथा स्यात्। **नित्यं संवृतं** गुप्तं संवार्यं गोपनीयमन्त्रकृत्योत्थानानि यस्य स तथा स्यात्। सर्वदा च शत्रोर्व्यसनापेक्षणकृत्यदूषणादिना छिद्रान्वेषणपरः स्यात् ॥१०२॥

(९) **भारुचिः**। हस्त्यादिबलयोग्यादिभिर्नित्यमभिविनयेत्। शस्त्रावरणे च संस्कुर्यात्। सततमेवमस्योद्यतदण्डता राजमण्डले प्रकाशीभवति। सन्धिपालाटविकस्थानादिषु चाप्तपुरुषोपगृहीतैः सन्नद्धैः कवचिभिः सततं जागरितव्यम्। एवमस्य **विवृतपौरुषता**विर्भवति। कृत्यपक्षस्य च रक्षणोपग्रहाभ्यां संवृतसञ्चारो भवेत्। परकृत्यदूषणेन **चारछिद्रानुसारी** स्यात् ॥१०२॥

नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १०३॥

(१) **मेधातिथिः।** अनन्तरस्य फलम्। **सर्वं जगदुद्विजते** बिभेति। प्रतापख्यातिर्भवति चेति। **तस्मात्सर्वाणि** भूतानि स्वप्रकृतीः परांश्च **दण्डेनैव प्रसाधयेत्**। एवं यत्नवतो भीताः शत्रवो नमन्त्ययत्नेनैव ॥१०३॥

(२) **सर्वज्ञनारायणः। सर्वाणि भूतानि** स्वकर्तव्येऽनवस्थितानि ॥१०३॥

(३) **कुल्लूकः।** यस्मान्नित्योद्यतदण्डस्य **जगदुद्विजेदिति** तस्मात्सर्वप्राणिनो दण्डेनैवात्मसात्कुर्यात् ॥१०३॥

(४) **राघवानन्दः।** समुद्यतदण्डस्य प्रत्यक्षं फलमाह **नित्यमिति।** उद्विग्नं सज्जगदस्वातन्त्र्यान्नानिष्टाय समर्थमिति नित्यदण्डः प्रशस्त इति भावः ॥१०३॥

(७) **मणिरामः। प्रसाधयेत्** आत्मवशं कुर्यात् ॥१०३॥

(८) **गोविन्दराजः। नित्यमुद्यतदण्डस्येति।** यस्मान्नित्योद्यतदण्डात्सर्वं जगदुद्विजते तस्मात्सर्वाणि भूतानि दण्डेनैव वशीकुर्यात् ॥१०३॥

(९) **भारुचिः।** उद्यतदण्डस्यायत्नेनैव शत्रवः .... ॥१०३॥

अमाययैव वर्तेत न कथंचन मायया ।
बुध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः ॥१०४॥

(१) **मेधातिथिः। माया** छद्म तेन न वर्तेत। अविश्वसनीयस्तथा स्यात्। न च परप्रकृतीरज्ञातरूपा उपजपेत्। अरिणा प्रयुक्तां च मायां यथावद्बुध्येत। बुद्ध्वा ज्ञात्वोपजापं कुर्यात्। तत्र कृत्यपक्षश्चतुर्विधः। क्रुद्धलुब्धभीतावमानितैः। तत्र येन कृतं शिल्पं किंचिदुपकारो वा दर्शितः, तौ विप्रलभ्येते प्रसादेन नियोज्येते अवमन्येते वा। तदर्थोऽपि तत्समानः शिल्पोपकारी क्रुध्यति, नास्यास्मदीयं शिल्पमुपकारो वोपयुज्यते। तादृशा उपजापसहा भवन्ति। तथा वाल्लभ्येनोपगृहीतः, पश्चान्मानाधिकाराभ्यां भ्रष्टः, प्रवासितबन्धुतद्वल्लभः प्रसभमभिपूज्य स्वीकृतः, सकुल्यैरन्तर्हितः, सर्वस्वमाहारितस्तत्समानकर्मविद्योऽन्यः पूज्यते सोऽवधीर्यते इत्येवमादिः क्रुद्धः। केनचित्कृतं पैशुन्यं तत्समानदोषेभ्यो दण्डितं अंतर्भ्रमदण्डपाताः सर्वाधिकारस्थाः सहसोपचितार्था इत्यादिर्लुब्धवर्गः। परिक्षीणः कदर्यो व्यसनी बहुऋण इत्यादिर्भीतवर्गः। आत्मसंभावितः शत्रुपूजामर्थितः नीचैरुपहतः तीक्ष्णः साहसिको भोगेनासंतुष्ट इत्येवमादिरवमानितवर्गः। एतत्परस्योपजपेत् आत्मनश्च रक्षेत् ॥१०४॥

(२) **सर्वज्ञनारायणः। माया** वञ्चनेच्छा। **सुसंवृतो** रक्षितस्वच्छिद्रः ॥१०४॥

(३) **कुल्लूकः। मायया** छद्मतयाऽमात्यादिषु न वर्तेत तथा सति सर्वेषामविश्वसनीयः स्यात्। धर्मरक्षणार्थं यथा तत्त्वेनैव व्यवहरेत् यत्नकृतात्मपक्षरक्षश्च शत्रुकृतां प्रकृतिभेदरूपां मायां चारद्वारेण जानीयात् ॥१०४॥

(४) **राघवानन्दः।** किंच स्वप्रजास्वमायां विधत्ते **अमाययैवेति। अरिप्रयुक्तां** तत्कृतप्रकृतिभेदादिकाम्। **सुसंवृतो**ऽप्रकटदूतद्वारेणेत्यर्थः ॥१०४॥

(५) **नन्दनः**। **कथञ्चन** आपद्यपीत्यर्थः। सुसंवृतः प्रच्छन्नो भूत्वा ॥१०४॥

(६) **रामचन्द्रः**। **सुसंवृतः** आच्छादितः **अरिप्रयुक्तां** मायां बुध्येत ॥१०४॥

(७) **मणिरामः**। **अमायया** अकपटेन वर्तेत अमात्यादिषु। **सुसंवृतः** चारद्वारा ॥१०४॥

(८) **गोविन्दराजः**। **'बुध्येतारिप्रयुक्तां च नित्यं मायां सुसंवृतः'**। यावच्छत्रूणां प्रकृत्युपजापादिछद्मना कृतं तावच्छद्मनैव व्यवहारान्न तु कदाचित्पूर्वं छद्म समाचरेत्। सुव्यक्त-पक्षरक्षश्च भूत्वा शत्रुकृतं प्रकृतिभेदादिछद्म सर्वदा चारादिभिरवेक्षेत ॥१०४॥

(९) **भारुचिः**। क्रुद्धलुब्धभीतमानिनामन्यराजप्रकृतीनामुपजापं पूर्वं न कुर्यात्। आत्मीयान...वैति हि धर्मस्य धार्मिकत्वात् सर्वं प्रत्यनुरागः सुलभः। तत्र विप्रलब्धा-स्तुल्यकारिणः शिल्पे चोपकारे च विमनिता वल्ल(भा)वरुद्धः प्रवासितबन्धुः मान...प्रसभमभिस्पृष्टः। स्त्रीतः सकुल्यैरन्तर्हितः सर्वस्वहारित इत्येवमादिः क्रुद्धवर्गः पापकर्मा तुल्यदोषः दण्डोद्विग्नः। अनन्तभूमिदण्डोपनतसर्वाधिकरणस्थः सहसोपचितार्थं इत्येवमादिर्भीतवर्गः परिक्षीणः तटयोर्व्यसटित्येवमादिर्लुब्धवर्गः। आत्मसंभावितः शत्रुपूजा-मर्षितो नीचैरुपहृतः तीक्ष्णसाहसिको भोगेनासन्तुष्ट इत्येवमादिर्मानिवर्गः। एतानपर-स्यात्मनश्च बुद्ध्वा संरक्षेत् उपजपेच्च ॥१०४॥

**नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य च।**
**गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥१०५॥**

(१) **मेधातिथिः**। एष एवार्थः पुनरुच्यते। तथा यत्नातिशयं कुर्याद्यथा परस्य छिद्रमन्विच्छेदात्मनश्च रक्षेत्। य एवं क्रुद्धादिः कापटिकादिचारपुरुषैर्ज्ञायते स एवात्मीयोऽनुनीयत इति। **कूर्मवदङ्ग गूहेद्रक्षेद्विवरमात्मनः**। परोपजापात्स्वच्छिद्ररक्षणं महाप्रयोजनमित्येतदनेनाह ॥१०५॥

(२) **सर्वज्ञनारायणः**। कूर्मो यथाङ्गानि शिरआदीन्यन्तर्निवेश्य रक्षति तथाङ्गानि सप्त स्वाम्यादीनि गुप्तस्थापनेन रक्षेत्। **विवरं** प्रहारावकाशम् ॥१०५॥

(३) **कुल्लूकः**। तथा यत्नं कुर्याद्यथास्य प्रकृतिभेदादिच्छिद्रं शत्रुर्न जानाति, शत्रोस्तु प्रकृतिभेदादिकं चारैर्जानीयात्। कूर्मो यथा मुखचरणादीन्यङ्गान्यात्मदेहे गोपायत्येवं राज्याङ्गा-न्यमात्यादीनि दानसंमानादिनाऽऽत्मसात्कुर्यात् दैवाच्च प्रकृतिभेदादिरूपे छिद्रे जाते यत्नतः प्रतीकारं कुर्यात् ॥१०५॥

(४) **राघवानन्दः**। किंच **नेति**। **परस्यारेः**। **कूर्म इवेति**। अयमर्थः– यथा कूर्मः करचरणादि परेभ्यो रक्षंस्तद्विवरमपि गोपायत्येवं राजामात्यादीन्दानमानाभ्यां रक्षन्परेभ्यः स्वच्छिद्रं रक्षेत्। अमात्यादयो हि विक्रियमाणाः स्वच्छिद्रं प्रकटयेयुः परच्छिद्रं च गोपयेयुरिति ॥१०५॥

(५) **नन्दनः**। अङ्गानि कर्मारम्भोपायः पुरुषद्रव्यसंपद्विनिपातप्रतीकारदेश-कालविभागकार्यसिद्धिश्चेति। **रक्षेत्** गूहेत् ॥१०५॥

(६) **रामचन्द्रः**। आत्मनः छिद्रं हानिवृद्धि परः शत्रुर्न विद्यात्। विवरं प्रहारा-वकाशं रक्षेत् ॥१०५॥

(७) **मणिरामः ।** गूहेत्कूर्म इवांगानि कूर्मो यथा मुखचरणादीन्यात्मदेहे गोपायति एवं राज्यांगानि अमात्यादीनि दानसन्मानादिना आत्मवशं कुर्यात ॥१०५॥

(८) **गोविन्दराजः । नास्येति ।** तथा यतेत यथाऽस्य च्छिद्रं प्रकृतिभेदादि शत्रुर्न जानीते, शत्रोः पुनरसौ प्रकृतिभेदादि यत्नतो जानीयात् । तथा कूर्म इवावयवानुप्रवेशेन प्रकृत्यादीनि राज्याङ्गानि संग्रामादिना रक्षेत् । कथंचिच्च प्रकृतिभेदादि यदात्मनः छिद्रमुपजातं तत्र यत्नतः समाधानं कुर्यात् ॥१०५॥

(९) **भारुचिः ।** अभियोगातिशयेन स्वच्छिद्रगूहनं परछिद्रदर्शनं च शक्यते कर्तुम् । तच्च स्वविषये गूढपुरुषाणां कापटिकादीनां सञ्चारेण विजानीयात् परविषये चेति ॥१०५॥

**बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।**
**वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥१०६॥**

(१) **मेधातिथिः ।** यथा अप्सु दुर्गाश्रयमपि मत्स्यबलं स्वभावतस्तद्ग्रहणार्थं बकः पर्युदासनपरतया तद्ग्रहणोपायं ध्यानादियोगादासादयति एवमर्थचिन्ताभियोगातिशयेन सुदुष्प्रापा अप्यर्था आसाद्यन्त इति मत्वा न निर्वेदं गच्छेत् । यथा च शशोऽल्पकायत्वाच्छक्नोति निष्पतितुमुपरि संघादपि, तथा एकोऽप्यसहायः सर्वतःसमुत्थितसामन्तप्रकोपोऽशक्तोऽवस्थातुं दुर्गेऽरिसंपातं कृत्वा तस्माद्विनिष्पतेद् गुणवति संश्रयार्थम् । यथा च वृकः पशुग्रहणाभियोगाद् बालप्रमादमासाद्यावलुम्पते, एवं स्वरक्षापर इति मत्वा तद्ग्रहणाभियोगो न मोक्तव्यः, भविष्यति स कालो यत्रायं वृकवदवलुंपिष्यते । यथा सिंहो महाकायानपि हस्त्यादीन्हन्ति पराक्रमोत्साहशक्तियोगात्, एवं महदरिबलमिति न भेतव्यम्, अल्पप्राणेनापि कदाचिदुत्साहवता महाप्राणो निहन्यत इति ॥१०६॥

(२) **सर्वज्ञनारायणः ।** बकवद्गुप्तप्रचारः कर्तव्यं चिन्तयेत् यथा स त्यक्तचेष्टो दुर्गस्थानामपि मत्स्यानामन्तरं पश्यति । सिंहवच्छौर्यमात्रेण न मायया, तदसंभवे वृकवत्परस्यान्तरं दृष्ट्वाऽवलुम्पेत गृह्णीयात् व्याधवेष्टितो यथा शशः शैघ्र्यादलक्षितगत्या बहिर्याति तथा शत्रुवेष्टितोऽप्यशक्तौ निःसरेत् ॥१०६॥

(३) **कुल्लूकः ।** यथा बको जले मीनमतिचञ्चलस्वभावमपि मत्स्यग्रहणादेकतानान्तःकरणश्चिन्तयत्येवं रहसि सुविहितरक्षस्यापि विपक्षस्य देशग्रहणादीनर्थांश्चिन्तयेत् । यथा च सिंहः प्रबलमतिस्थूलमपि दन्तीबलं हन्तुमाक्रमत्येवमल्पबलो बलवतोपक्रान्तः संश्रयाद्युपायान्तरासंभवे सर्वशक्त्या शत्रुं हन्तुमाक्रमेत् । यथा च वृकः पालकृतरक्षणमपि पशुं दैवात्पालानवधानमासाद्य व्यापादयत्येवं दुर्गाद्यवस्थितमपि रिपुं कथंचित्प्रमादमासाद्य व्यापादयेत् । यथा शशः वधोद्धुरविविधव्याधमध्यगतोऽपि कुटिलगतिरुत्प्लुत्य पलायत एवं स्वयमबलो बलवदरिपरिवृतोऽपि कथंचिदरिव्यामोहमाधाय गुणवत्पार्थिवान्तरं संश्रयितुमुपसर्पेत् ॥१०६॥

(४) **राघवानन्दः ।** राज्ञो वृत्त्यन्तरमाह **बकवच्चेति ।** बकवदेकान्तवासित्वं तेन स यथा जलान्तर्गतमतिचपलमपि मत्स्यं गृह्णाति तद्वद्विविक्तः परराष्ट्रग्रहणं चिन्तयेत् । सिंहवत् शूरत्वप्रकटनं स यथाल्पदेहोऽपि करिणमादत्ते तद्वदल्पसैन्योऽपि सामदानभेदेषूपायेषु क्षीणेषु विजयाय पराक्रमेत् । वृकवन्नित्यपशुग्रहणाभियोगात्परग्रहणोपायत्वं परतोऽप्रमादित्वं च । शशवद्व्याधमध्यतः कुटिलगतितयाऽरिमध्यतः पलायनं च शिक्षेदित्यनुषज्यते ॥१०६॥

(५) **नन्दनः**। एकाग्रत्वे बकेन सादृश्यम्। निर्भयत्वे सिंहेन। क्रूरत्वे वृकेण। क्षिप्रकारित्वे शशेन ॥१०६॥

(६) **रामचन्द्रः**। अर्थात् कार्याणि वृकवत्परस्यान्तरं दृष्ट्वा अवलुम्पेत् गृह्णीयात्। च पुनः शशवद्विनिष्पतेत् शशो यथा अलक्षितगत्या बहिर्याति तथा शत्रुवेष्टितोऽलक्षितो निःसरेत् ॥१०६॥

(७) **मणिरामः**। बकवत् एकाग्रचित्तेन वृकवत् यथा वृको रक्षकाऽनवधानमासाद्य पशुं मारयति एवं दुर्गाद्यवस्थितं रिपुं कथंचित्प्रमादमासाद्य मारयेत्। शशवत् यथा शशः बहुव्याधमध्यगतोऽप्युत्प्लुत्य पलायते एवं स्वयमबलोऽपि कथंचिच्छत्रुव्यामोहमाधाय बलवत्पार्थिवांतरं संश्रमितुमुपसर्पेत ॥१०६॥

(८) **गोविन्दराजः**। **बकवच्चिन्तयेदर्थान् शशवच्च विनिष्पतेत्। वृकवच्चावलुम्पेत सिंहवच्च पराक्रमेत्।** यथा बको दुर्गाश्रयमतिचरन् स्वभावमपि मत्स्यमांसग्रहणादनिर्विण्णैकाग्रान्तःकरणतया चिन्तयत्येवमतिगुप्ते च रिपौ तद्राष्ट्रसम्बन्धादीनर्थान् चिन्तयेत्। यथा शबरगोचरतामुपगतोऽपि शशोऽतिचलकुटिलगतितया देशान्तरमुपसरत्येवं सकलसामन्तप्रकोपातिचलरिपुमध्यवर्ती वा कथञ्चिदरिसंमोहमाधाय ततः प्रदेशाद्गुणवद्राजान्तरसंश्रयार्थं उपसर्पेत्। यथा च वृकः कृतरक्षानपि पशूंस्तद्ग्रहणाभियोगेन कथञ्चिदनवधाने पाने(प्राप्ते?)हिनस्त्येवं दुर्गाद्यवस्थितमपि परं कथञ्चिदपि, तत्प्रमादमासाद्यावलुम्पेत। यथा च गिरिवरशिखराकारमपि करिणं उत्साहशक्तियोगात् सिंहो निहन्तुमाक्रामत्येवमल्पबलोऽपि बलवत्तराभिभूतसंश्रयाद्युपायान्तराभावे सकलबलाऽवष्टम्भेन परिहन्तुमाक्रमेत् ॥१०६॥

(९) **भारुचिः**। यथा अदुष्टाश्रयं मत्स्यं चलं च स्वभावतस्तद्ग्रहणार्थं बकः पर्युपासनया तद्ग्रहणोपायध्यानयोगादासादयति एवमर्थचिन्ता(दि)योगातिशयेन दुष्प्रापा अप्यर्था आसाद्यन्त इति मत्वा न निर्वेदं गच्छेत्। यथा शशोऽल्पकायत्वात् शक्नोति विनिष्पतितुमरिध्यानादपि तथैव कोऽप्यसहायः सर्वतः समुत्थितसामन्तप्रकोपोऽशक्तोऽवस्थातुं दुर्गपरिसंग्रहं तस्मान्निष्पतेत्। गुणवति संश्रयार्थी यथा च वृकः पशुग्रहणाभियोगाद् बालः प्रभां समासाद्यावलुम्पेत एवं स्वरक्षापर इति कृत्वा तद्ग्रहणाभियोगो न मोक्तव्यो भविष्यति। स कालः यत्रायं वृकवदवलुम्पिष्यते। यथा च सिंहो महाकायानपि हस्त्यादीन पराक्रम्योत्साहशक्त्या योगाद्धन्ति एवं महदरिबलमिति कृत्वा न भेतव्यम्। महदप्यल्पप्राणमल्पेन महाप्राणेन(प्राणो)हन्यत इति ॥१०६॥

**एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः।**
**तानानयेद्वशं सर्वान्सामादिभिरुपक्रमैः ॥१०७॥**

(१) **मेधातिथिः**। **ये परिपन्थिनः** प्रतिपक्षतया वर्तन्ते ते वशमानतव्याः। न त्वानुकूल्येन ये वर्तन्ते, तेऽपि सामादिभिः पूर्वम्, न प्रथमत एव दण्डेन ॥१०७॥

(२) **सर्वज्ञनारायणः**। उपक्रमैरुपायैः ॥१०७॥

(२) **सर्वज्ञनारायण ।** अब्दात्परं यदग्राह्यं तदाह **आददीतेति ।** अतिनिर्गुणवदतिगुणवदपेक्षया विकल्पः । **सतां धर्ममिति** व्यवहारसिद्धं यावत्तावद्वेत्यर्थः ।। ३३ ।।

(३) **कुल्लूकः ।** देशकालादिसंवादे पुनः **आददीतेति ।** यदेतद्राज्ञा प्रनष्टद्रव्यं प्राप्तं तस्मात् **षड्भागं दशमं, द्वादशं वा** रक्षादिनिमित्तं पूर्वेषां साधूनामयं धर्म इति। जानन्राजा गृह्णीयात् । धनस्वामिनो निर्गुणसगुणत्वापेक्षश्चायं षड्भागादिग्रहणविकल्पः । अवशिष्टं स्वामिने समर्पयेत् ।। ३३ ।।

(४) **राघवानन्दः ।** किंच **आददीत** राजा । तृतीयाद्यब्दतारतम्याद्विकल्पः, तेन प्रथमाब्दे **द्वादशं** भागं, द्वितीये, **दशमं** तृतीये **षड्भागं** अत उक्तं **सतां धर्ममिति** ।। ३३ ।।

(५) **नन्दनः ।** तस्मात्प्र**नष्टाधिगता**द्द्रव्यात्स्वामिप्रत्यर्पणीयं समर्पयेत् **षड्भागमाददीत ।** स्वामिगुणापेक्षया रक्षणादेः कार्यापेक्षया षड्भागादिविकल्प्यव्यवस्था ।। ३३ ।।

(६) **रामचन्द्रः ।** पूर्वं **प्रनष्टः** देशान्तरं गतः आगतः पश्चा**दधिगतः** तस्मात्पुरुषात् राजा **षड्भागं आददीत** स्वीकुर्यात् ।। ३३ ।।

(८) **गोविन्दराजः ।** संख्यादिसंवादे पुनः **आददीतेति ।** यदेतत्प्रनष्टं राज्ञा प्राप्तं ततः स्वामिगतसंख्यादिसंवादानन्तरं रक्षणक्लेशापेक्षया **षड्भागं दशमं द्वादशं** वा साधूनामयं **धर्म** इत्येवं राजा गृह्णीयात् शिष्टं पुनः स्वामिने उत्सृजेत् ।। ३३ ।।

**प्रनष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् ।।**
**यांस्तत्र चौरान् गृह्णीयात्तान् राजेभेन घातयेत् ।। ३४।।**

(१) **मेधातिथिः ।** प्रनष्टमधिगतं **प्रनष्टाधिगतं** पूर्वं प्रनष्टं पश्चादधिगतम् । **अधिष्ठितं युक्तै**स्तत्परैरारक्षपुरुषैः । **तिष्ठेत् ।** तथास्थितमपि यदि केचन **चौरा गृह्णीयुस्तान् राजा इभेन** हस्तिना घातयेत् । हस्तिग्रहणमदृष्टार्थम् ।। ३४ ।।

(२) **सर्वज्ञनारायण. । प्रनष्टं** चौरादिभिर्नीतं राजभृत्यै**रधिगतमन्यै**र्वा । **युक्तै**-र्नियुक्तै राजभृत्यैः । **तत्र** तेषु गृह्यमाणेषु यांस्तच्चौरान्राजा प्राप्नुया**त्तान्घातयेत्** सुवर्णशतोपरि शतादधिके वध इति स्मृतेः ।। ३४ ।।

(३) **कुल्लूकः ।** यद्रव्यं कस्यापि प्रनष्टं सद्राजपुरुषैः प्राप्तं रक्षायुक्तैः रक्षितं कृत्वा स्थाप्यं तस्मिंश्च द्रव्ये यांश्चौरान्गृह्णीयात्तान् हस्तिना घातयेत् । गोविन्दराजस्तु शतादभ्यधिके वध इति दर्शनात् अत्रापि शतसुवर्णस्य मौल्यादिकद्रव्यहरणे वधमाह तन्न तत्र संधिं कृत्वा तु यच्चौर्यमिति यत्स्वाम्येऽपि प्रनष्टराजरक्षितद्रव्यहरणेनैव विशेषेण वधविधानात् शतादभ्यधिके वध इत्यस्य विशेषोपदिष्टवधेतरविषयत्वात् ।। ३४ ।।

(४) **राघवानन्दः । युक्तैः** संयतैः । राजा **यांस्तद्धनहर्तॄन्गृह्णीयात्तान् इभेन** हस्तिना. इभेनेति वाचनिकं वचनस्य नातिभार इति न्यायात् । **गोविन्दराजस्तु** शताधिकसुवर्णहरणे वध इति । तच्च सन्धिं कृत्वा तु ये चौर्यमित्यादि वक्ष्यमाणवचनातिरिक्तविषयम् ।। ३४ ।।

(५) **नन्दनः ।** प्रनष्टाधिगते द्रव्ये प्रत्यर्पणात्पूर्वं कर्तव्यमाह **प्रनष्टाधिगतमिति । युक्तैर**धिकृतैस्तिष्ठेत् यावत्स्वामिदर्शनं स्थापयेत्। **तत्र युक्तैरधिष्ठिते** द्रव्ये। **इभेन** गजेन ।। ३४ ।।

(६) **रामचन्द्रः।** पूर्वं प्रनष्टं पश्चादधिगतं द्रव्यं युक्तै रक्षकैः अधिष्ठितं रक्षितं तिष्ठेत्। तत्र यान् चौरान् राजा गृह्णीयात्तान् इमान् इभेन गजेन घातयेत् ।। ३४ ।।

(७) **मणिरामः। अधिगतं** राजपुरुषैः प्राप्तं **युक्तैः** रक्षायुक्तैः। **अधिष्ठितं** रक्षितं कृत्वा स्थापितम्। तस्मिंश्च द्रव्ये **यान् चौरान् गृह्णीयात् तान्** इभेन हस्तिना घातयेत् ।। ३४ ।।

(८) **गोविन्दराजः। प्रनष्टाऽधिगतमिति।** यद्द्रव्यं कस्यचित्प्रनष्टं सद्राजपुरुषैर्लब्धं तद्रक्षयेत्। नियुक्तं रक्षितं कृत्वा राज्ञा स्थाप्यं तस्मिंश्च द्रव्ये **यान् चौरान् राजा गृह्णीयात्** तान् शतादभ्यधिके वध इति दर्शनात् सुवर्णशतमूल्यादिचौर्ये सति हस्तिना घातयेत् ।। ३४।।

**ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।।**
**तस्याददीत षड्भागं राजा द्वादशमेव वा ।। ३५ ।।**

(१) **मेधातिथिः।** निखातायां भूमौ गुप्तं स्थापितं धनं निधिरुच्यते। वर्षशतिका वर्षसहस्रिकाश्च निधयो भवन्ति। तत्र यदि भूमेर्विदार्यमाणायाः कथंचित्केनचिन्निधि- रासाद्यते स तु राजधनम्। तथा च गौतमः 'निध्यधिगमो राजधनम्' इति (१०।४३)। एतच्चास्मर्यमाणनिधातृके निधौ द्रष्टव्यम्। तस्याख्याता षष्ठं लभेतेत्युक्तम्। अयं तु श्लोको यत्राख्यातैव निधाता तत्पुरुषो वा पितृपितामहादिस्तद्विषयो द्रष्टव्यः। **ममायं निधिरिति यो ब्रूयात्सत्येन** प्रमाणेन ज्ञापयेदित्यर्थः। **तस्याददीत षड्भागमिति।** निश्चिते तत्स्वामिकत्वे राज्ञः षष्ठादिभागग्रहणम्। विकल्पश्चाऽऽख्यातृगुणापेक्षया ।। ३५ ।।

(२) **सर्वज्ञनारायणः।** निधिं स्वपित्रादिनिहितं स्वयमेवोद्धृतं परेण वोद्धृतं **ममेति यो ब्रूयात्। षड्भागं** क्षत्रियादेः। **द्वादशं** ब्राह्मणस्य विदुषः ।। ३५ ।।

(३) **कुल्लूकः।** यो **मानुषः** स्वयं निधिं लब्ध्वाऽन्येन वा निधौ प्राप्ते **ममायं** निधि**रिति** वदति **सत्येन** प्रमाणेन च स्वसंबन्धं बोधयति **तस्य** पुरुषस्य निर्गुणत्वसगुणत्वापेक्षया ततो निधाना**दष्ट**भागं **द्वादश**भागं वा **राजा गृह्णीयात्** अवशिष्टं तस्यार्पयेत् ।। ३५ ।।

(४) **राघवानन्दः।** किंच **ममेति। निधिं** स्वकीयं परेण प्राप्तम्। **तस्य** निधेः। **षट् द्वादशेति** गुणवदभेदेन विकल्पः ।। ३५ ।।

(५) **नन्दनः। य** इति। **तस्य पुरुषस्य षड्भागं** निधेः षष्ठं भागम्। अत्रापि पूर्ववद्वि- कल्प्य व्यवस्था।। ३५ ।।

(७) **मणिरामः। सत्येन** प्रमाणेन। विकल्पश्चात्र सगुणनिर्गुणापेक्षः।। ३५ ।।

(८) **गोविन्दराजः। ममायमिति।** तत्सम्बन्धीदं निधानमित्येवं निधिं अन्येन वा

तथ्ये सति रूपसंख्यादिपूर्वप्रतिज्ञासंवादेन मनुष्यो ब्रूयात् तस्य ततो निधानाद् देशकला-वर्णाद्यपेक्षया षड्भागं द्वादशमेव वा राजा गृह्णीयात् शिष्टं तस्योत्सृजेत् ।। ३५ ।।

**अनृतं तु वदन्दण्ड्यः स्ववित्तस्यांशमष्टमम् ।।**
**तस्यैव वा निधानस्य संख्ययाल्पीयसीं कलाम् ।।३६।।**

(१) **मेधातिथिः**। यस्तु मयाऽयं निहितो मत्पूर्वजेन वेति प्रतिज्ञां न साधयति **सो**ऽसत्य-वादी दण्ड्यः। यावत्तस्य वित्तमस्ति ततोऽ**ष्टमं भागं** तस्यैव वा निधानस्या**ल्पीयसीकलां** मात्रां भागमित्यर्थः। न तु तदेव द्रव्यं सुवर्णादिकं दापयेत्किन्तु तत्परिमाणमन्यद्वा सममूल्यं यया धनमात्रया दण्डितोऽवसादं न गच्छेद्विनयं वा ग्राह्येत। अनुबन्धादिविशेषापेक्षया पुरुष-गुणापेक्षया च विकल्पः आश्रयणीयः। आतिशायनिकात्पूर्वदण्डात्स्वल्पो दण्ड इति ज्ञापयति। तेन यस्य बहुवित्तं स्वल्पो निधिस्तत्र न निध्यपेक्षां मात्रामष्टमांशम् अर्थादीनां **दण्ड्यः**। सा ह्यल्पीयसी भवति ।। ३६ ।।

(२) **सर्वज्ञनारायणः**। तस्यैवेति ब्राह्मणस्य दण्डः। **तस्य** निधानस्य शततमो भागो यावान्भागस्तावतीमल्पीयसीं कलामंशम्। **संख्याय** व्यवस्थाप्य ।। ३६ ।।

(३) **कुल्लूकः**। अस्वीयं स्वीयमिति। ब्रुव**न्स्वधनस्याष्टमं भागं दण्ड्यः** यद्वा तस्यैव निधेरत्यन्ताल्पभागं गणयित्वा येनासादं न गच्छति न विषयश्च लभते **तद्दण्ड्यः**। अल्पीय-सीमितीयसुन्नन्तनिर्देशात्पूर्वस्मादन्योऽयं दण्डः। विकल्पश्च निर्गुणसगुणापेक्षः ।। ३६ ।।

(४) **राघवानन्दः**। तत्रैव विशेषमाह **अनृतमिति। स्ववित्तस्यानृतवा**दिनो यावद्वित्तं तस्य। तस्यैव यं निधिं प्रति लोभान्मिथ्याभाषी। अल्पीयसीमिति नाऽतिपीडया। विकल्पस्तु गुणवदगुणवद्भेदेन ।। ३६ ।।

(५) **नन्दनः**। **अनृतं वदन्** अन्यदीयं स्वकीयमिति सकलमल्पं वा वदन्। **अल्पीयसीं कलां स्ववित्तस्यांशं दण्ड्यः** शासितव्यः। दण्डयतेः शास्तेश्च तुल्यार्थत्वाद्द्विकर्मत्वम् ।। ३६ ।।

(६) **रामचन्द्रः। स्ववित्तस्य अष्टमं अंशं दण्ड्यः। वा** पक्षान्तरं **तस्यैव निधानस्य** द्रव्यपूर्णकुम्भस्य सङ्ख्ययाल्पीयसीं कलां तुच्छककलाम्। 'कला तु षोडशो भाग' **इत्यमरः**। षोडशीं गृह्णीयादित्यर्थः ।। ३६ ।।

(७) **मणिरामः। अनृतं तु** वदन् अस्वीयं स्वीयमिति ब्रुवन्। **तस्यैव** निधेरेव। **अल्पीयसीं** कलां अत्यंताल्पभागम्। येन तस्य पीडा न भवति। अत्रापि निर्गुणसगुणापेक्षो दंडविकल्पः ।। ३६ ।।

(८) **गोविन्दराजः। अनृतमिति**। आप्तपुनः सत्यं ब्रुवन् स्वधनस्याष्टमं भागं दण्ड्यः। यद्वा तस्यैव निधानस्यात्यन्ताल्पं भागं विगणय्य स विषादं न गच्छति विनयं च गृह्णीयात् तं दंड्यो गुणवदगुणापेक्षया विकल्पः ।। ३६ ।।

(९) **भारुचिः**। यया धनमात्रया दण्डितोऽवसादं न गच्छेद्विनयं च ग्राह्येत तावतीमर्थमात्रां दापयेत्। पुरुषविशेषापेक्षायां च दण्डविकल्पः आश्रयितव्यः ।। ३६ ।।

**विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम् ॥**
**अशेषतोऽप्याददीत सर्वस्याधिपतिर्हि सः ॥३७॥**

**ब्राह्मणस्तु निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत् ॥**
**तेन दत्तं तु भुञ्जीत स्तेनः स्यादनिवेदयन् ॥**

(१) **मेधातिथिः ।** विद्वान्ब्राह्मणः पूर्वैः पित्रादिभिरुपहितं निधिं यदा पश्येत्तदा सर्वमेवाददीत । न राज्ञे पूर्वोक्तं भागं दद्यात् । अस्यार्थवादः **सर्वस्याधिपतिर्हि** सः । तथा चोक्तं 'सर्वस्वं ब्राह्मणस्येद'मिति । एतच्चाशेषतो ग्रहणं यो ब्राह्मणस्वामिक एव निधिः । यस्त्वविज्ञातस्वामिकः तस्मिन्विज्ञेयः ब्राह्मणदृष्टेऽप्यस्त्येव राज्ञो भागः । यतो वक्ष्यति "निधीनां तु पुराणानाम्" (८-३९) इति ॥ ३७ ॥

(२) **सर्वज्ञनारायणः । पूर्वैः** स्वपुरुषैरु**पनिहितं निधिम् । सर्वस्य** कृत्स्नस्य तस्य निधेः ॥ ३७ ॥

(३) **कुल्लूकः । विद्वान्पुनर्ब्राह्मणः पूर्वमुपनिहितं निधिं दृष्ट्वा** सर्वं गृह्णीयान्न षड्भागं दद्यात् यस्मात्सर्वस्य धनजातस्य प्रभुः अत एवोक्तम् सर्वस्वं ब्राह्मणस्येदमिति तस्मात्परनिहितविषयमेतद्वचनम् तथा च **नारदः**-'परेण निहितं लब्ध्वा राजा ह्यपहरेन्निधिम्' । राजगामीनिधिः सर्वः सर्वेषां ब्राह्मणादृते ॥ **याज्ञवल्क्यो**ऽप्याह 'राजा लब्ध्वा निधिं दद्याद्द्विजेभ्यो- (व्यव. ३४) ऽर्धं द्विजः पुनः । विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ अतो यन्मे**धातिथिगोविन्दराजाभ्यां** ममाऽयमिति यो ब्रूयादित्युक्तं राजदेयार्थनिरासार्थं पित्रादिनिहितविषयत्वमेवास्य वचनस्य व्याख्यातम्–तदनार्षम् **नारदा**दिमुनिव्याख्याविपरीतं स्वकल्पितम् । न **मेधातिथिगोविन्दराज**व्याख्यानमाद्रिये ॥ ३७ ॥

(४) **राघवानन्दः ।** विदुषा ब्राह्मणेनोपलब्धस्य राजा नांशभाक्, प्रत्युतनिधानस्य स्वलब्धस्य दातेत्याह **विद्वांस्त्विति द्वाभ्याम् । पूर्वोपनिहितं** पूर्वमेवोपसमीपे निहितम् । लब्धं पश्येत् पूर्वमितिशेषः ॥ ३७ ॥

(७) **मणिरामः । निहितं निधिं** स्वपूर्वजैर्निहितं नान्य**दीयम् । अशेषतः** सर्वं न तु तद्भागं राज्ञेत्वित्यर्थः ॥ ३७ ॥

(८) **गोविन्दराजः । विद्वानिति ।** शास्त्रविद् पुनर्ब्राह्मणः पित्रादिस्थापितं निधिं दृष्ट्वा राज्ञो भागं न दद्यात् । अशेषं गृह्णीयाद्यस्मात्सर्वस्य धनजातस्य ब्राह्मणः प्रभुः इत्यशेषग्रहणार्थवादः । एवञ्च ममायमिति । अयमविद्वद्ब्राह्मणविषयः क्षत्रियादिविषयश्च ॥ ३७ ॥

(९) **भारुचिः ।** एवं च सति ममायमित्यस्मिन् पूर्वविधावब्राह्मणविषये । ब्राह्मणस्य विकल्पेन ग्रहणम् अविद्वद्ब्राह्मणविषयं वा ॥ ३७ ॥

**यं तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ ॥**
**तस्माद् द्विजेभ्यो दत्वाऽर्धमर्धं कोशे प्रवेशयेत् ॥३८॥**

(१) **मेधातिथिः ।** यो राज्ञा स्वयं निधिरधिगतस्तस्मान्निधेरयं ब्राह्मणेभ्यो दाननियमो राज्ञः । **कोशशब्देन** वित्तसंचयस्थानमुच्यते । **पुराणं निहितं क्षिताविति** निधिरूपानुवादः ।।३८।।

(२) **सर्वज्ञनारायणः । संपश्येत्** स्वपुरुषैरन्येन चोद्धृतम् । **पुराणमज्ञात**निधातृकम् ।।३८।।

(३) **कुल्लूकः ।** यं पुनरस्वामिकं पुरातनं भूम्यन्तर्गतं निधिं **राजा** लभते **तस्माद्** ब्राह्मणेभ्योऽर्धं **दत्वा**ऽर्धमात्मीयधनागारे **च प्रवेशयेत्** ।। ३८ ।।

(४) **राघवानन्दः । तस्मान्निधेः द्विजेभ्यो** विप्रेभ्यः ।। ३८ ।।

(५) **नन्दनः ।** अस्वामिके निधौ राज्ञा दृष्टे कर्तव्यमाह **यं तु पश्येन्निधिंराजेति** ।।३८।।

(८) **गोविन्दराजः । यमिति ।** यं पुनः चिरन्तनस्वामिकं भूमिप्रक्षिप्तं निधिं लभेत तस्मादर्धं ब्राह्मणेभ्यो दत्त्वा अर्धमात्मनोऽर्थागारे प्रवेशयेत् ।। ३८ ।।

(९) **भारुचिः ।** राज्ञोऽयं निध्यधिगमे दानविषयः न त्वन्यस्य वचनसामर्थ्यात् ।।३८।।

**निधीनां तु पुराणानां धातूनामेव च क्षितौ ।।**
**अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ।। ३९ ।।**

(१) **मेधातिथिः ।** अन्येनापि दृष्टस्य निधेः राज्ञा भागः पूर्वोक्तो ग्रहीतव्य इत्यस्य विधेरर्थवादोऽयम् । **निधीनां हि पुराणानामिति धातूनामेव च क्षितौ । अयं** त्वप्राप्तविधिः । सुवर्णरूप्यादिमृदः सिन्दूरकालाञ्जनाद्याश्च धातवः । सुवर्णाद्याकरभूमीर्यः खनति यो वा पर्वतादिषु गैरिकादिधातूनुपजीवति तेनापि पूर्ववद्राज्ञे भागो दातव्यः । **अर्धभागिति ।** अर्धशब्दोऽशमात्रवचनः, समासनिर्देशात् । यथा ग्रामार्धो नगरार्धमिति । नपुंसकलिङ्गस्तु समग्रविभागः । इह तु समासे लिङ्गविशेषप्रतिपत्त्यभावात्पूर्ववत् षड्दशद्वादशादेर्भागस्य प्रकृतत्वात्तद्वचनो विज्ञायते । अर्धं भजत एकदेशं गृह्णातीत्यर्थः । अत्र हेतू **रक्षणादिति ।** यद्यपि क्षित्तौ निहितस्य केनचिदज्ञानान्न राजकीयरक्षोपयुज्यते तथापि तस्य बलवताऽपहारः संभाव्यते । अतोऽस्त्येव रक्षाया अर्थवत्त्वम् । एतदर्थमेवाह **भूमेरधिपतिर्हि सः ।** प्रभुरसौ भूमेस्तदीयायाश्च भुवो यल्लब्धं तत्र युक्तं तस्य भागदानम् ।। ३९ ।।

(२) **सर्वज्ञनारायणः । धातूनां** हेमादीनामाकरस्थानां चकाराद्रत्नानां च । **रक्षणादिति भूमेरधिपति**रिति च हेतुद्वयम् ।। ३९ ।।

(३) **कुल्लूकः । निधीनां** पुरातनानामस्वकीयानां विद्वद्ब्राह्मणेतरलब्धानां सुवर्णाद्युत्पत्तिस्थानानां **चार्धहरो राजा** यस्मादसौ रक्षति **भूमेश्च** प्रभुः ।। ३९ ।।

(४) **राघवानन्दः ।** विद्वद्ब्राह्मणेतरनिधिलाभे राजांशभागित्याह **निधीनामिति । हि**र्हेतौ । **निधीनाम**स्वामिकानां **पुराणानाम**स्वकीयानाम् । **धातूनां** सुवर्णाद्युत्पत्तिस्थानिनां च भूमेरधिपतिरिति लिङ्गात् अर्धशब्दोऽत्र षष्ठांशवाची समासनिविष्टत्वात् । तथा च याज्ञवल्क्यः । इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् । अनावेदितविज्ञातो दाप्यस्तं दण्डमेव चेति ।। अनावेदितविज्ञातः मया प्राप्तमित्यनुक्ते यदि राज्ञा विज्ञात इत्यर्थः ।। ३९ ।।

(५) **नन्दनः**। अर्धग्रहणे हेतुमाह निधीनां हीति। **धातूनां** हेमरूप्यादिलोहगणानां मृत्तिकाविशेषाणाम् ॥३९॥

(७) **मणिरामः। पुराणानां** स्वकीयानां विद्वद्ब्राह्मणेतरलब्धानां **धातूनां च** सुवर्णाद्युत्पत्तिस्थानानां **च** ॥३९ ॥४०॥

(८) **गोविन्दराजः। निधीनामिति।** चिरन्तनानां निधीनामस्वामिकानां अन्येनापि लब्धानां भूमिगतानाञ्च सुवर्णानां अर्धहरो राजा यस्माद्रक्षणादसौ भूमिस्वामीति ॥३९॥

(९) **भारुचिः**। अर्धभागांशभाक् अर्धशब्दो ह्यंशेऽपि दृश्यते। अधिकः कुलमित्रश्चेति। एवं च सत्यंशप्रक्लृप्तिर्दृष्टगुणापेक्षया राजाभिप्रायेण वा कल्पयितव्या। तथा च समग्रविभागार्थोऽप्यर्धशब्दः ॥३९॥

**दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ॥**
**राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्विषम् ॥ ४० ॥**

(१) **मेधातिथिः**। चौरैर्यन्नीतं किञ्चिद्धनं तद्राजा प्रत्याहृत्य नात्मन्युपयुञ्जीत। किं तर्हि य एव मुषितास्तेभ्य एव प्रतिपादयितव्यम्। **सर्व**ग्रहणेन च चण्डालेभ्योऽपि देयमिति। 'चौराहृतम्' इत्यन्यस्मिन्पाठे चौरैः आहृतमिति विगृह्य 'साधनं कृतेति' समासः। पाठान्तरे चौरहृतमिति तृतीयेति योगविभागात्पूर्ववद्वा समासः। अयं त्वत्रार्थो यच्चौरैर्हृतमशक्यप्रत्यानयनं तद्राज्ञा स्वकोशाद्दातव्यम्।

उत्तरश्लोकार्ध एवं योजनीयः। **राजा तदुपयुञ्जान इति।** अनेकार्थत्वाद्धातूनामुपपूर्वो युजिर्लक्षणयाऽप्रतिपादन एव द्रष्टव्यः। यो ह्यन्यस्मै प्राप्तकालं धनं न ददाति स्वप्रयोजनेषु विनियुङ्क्ते तेन तदीयमेव तदुपयुक्तं भवतीति युक्तमुच्यते। **राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्विषम्। किल्विषं** पापम् ॥४०॥

(२) **सर्वज्ञनारायणः**। चौरैर्हृतं चोरेभ्य आकृष्य ॥४०॥

(३) **कुल्लूकः। यद्धनं चौरै**र्लोकानामपहृतं **तद्राज्ञा चौरेभ्य** आहृत्य धनस्वामिभ्यो देयं **तद्धनं राजा** स्वयमुपयुञ्जानश्चौरस्य पापं **प्राप्नोति** ॥४०॥

(४) **राघवानन्दः**। चोराल्लब्धं सर्ववर्णेभ्यः धनस्वामिभ्यः दातव्यमित्याह दातव्यमिति। अन्यथा तदुपभुंजानो यथेष्टविनियोक्ता। तच्चोरकृतं किल्विषं चोरनिष्ठजातीयं राज्ञस्तादृशप्रायश्चित्तपरं वा ॥४०॥

(५) **नन्दनः। दातव्यं** चोरेभ्यः प्रत्याहृत्य कोशाद्वा ॥५०॥

(६) **रामचन्द्रः। राजा चौरहृतं द्रव्यं उपभुञ्जानः** स्वीकुर्वाणः **चौरस्य किल्बिषं प्राप्नोति** ॥४०॥

(८) **गोविन्दराजः। दातव्यमिति।** यच्चौरैर्हृतं लोकानां धनं तद्राज्ञा चौरेभ्यश्चाहृतं धनं तेभ्यो देयम्। यस्माद्राजा स्वीकुर्वन् चौरस्य यावत्पापं तावत्प्राप्नोति ॥४०॥

(९) **भारुचिः**। अस्मिन् पाठे राज्ञा नीतः स्वद्रव्येण पोषयितव्यः। चौरैरपहृतस्याशक्यादाने। चोराहृतमिति पाठे त्वयमर्थः चोरेभ्य आहृत्य राजा न भागं तस्मात् कञ्चिदुपाददीत। एवं च धर्मयशसी तेनापरित्यक्ते भवतः ।।४०।।

**जातिजानपदान्धर्मान् श्रेणीधर्मांश्च धर्मवित् ।।**
**समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ।। ४१ ।।**

(१) **मेधातिथिः**। कुरुकापिशकाश्मीरादिदेशो नियतावधिः 'जनपदम्'। तत्र भवा धर्मा 'जानपदाः'। केचित् तत्र भवन्ति ये तद्देशव्यपदेश्यैरनुष्ठीयन्ते। अथवा तन्निवासिनो जनाः मंचाः क्रोशन्तीतिवत् जनपदशब्देनाभिधीयन्ते। तेषामनुष्ठेया 'जानपदाः'। 'तस्येदमिति' (पा० ४। ३। १२०) तद्धितः। जातेर्जानपदा **जातिजानपदा** इति षष्ठीसमासः। जातिमात्रविषया देशधर्मा राज्ञा परिपालनीयाः। **समीक्ष्य** विचार्य। किमाम्नायैर्विरुद्धा अथ न—तथा पीडाकराः कस्यचिदुत न—एवं विचार्य येऽविरुद्धास्तान्**प्रतिपादयेद**नुष्ठापयेदित्यर्थः। तथा च वक्ष्यति "सद्भिराचरितं यत्स्यात्" इति, (८।४६)। अथवा जातयश्च ते जानपदाश्चेति विशेषणसमासः। **जाति**शब्देन च नित्यत्वं लक्ष्यते। प्रशंसामात्रं चैतद्देशधर्माणाम्। यथा जातिर्नित्या एवं देशधर्मा अपि शास्त्राविरुद्धा नित्याः। ते नित्यवदनुष्ठेया दृष्टार्था गोप्रचारोदकक्षरणादयः यथा ग्रामीणा अत्र प्रदेशे गावो न चारणीया इति समयमाश्रयन्ति कस्यचित्कार्यस्य सिद्ध्यर्थं तत्र यो व्यतिक्रामति स राज्ञा दण्ड्यः। अथवा जनपदे भवा 'जानपदा' देशनिवासिन उच्यन्ते। जात्या जानपदा 'जातिजानपदाः'। जातिर्जन्मोत्पत्तिरिति यावत्। एतेन देशसम्बन्धस्य पुरुषाणां नित्यता लक्ष्यते। ये तद्देशजास्तद्देशाभिजनास्तन्निवासिनश्च गृह्यन्ते तेषाम्। सर्वविशेषणविशिष्टानामनिदं प्रथमतो जाता ये धर्मास्ते जातिजानपदशब्देनोच्यन्ते। 'वृद्धाच्छेति' तद्धिते प्रसक्ते छान्दसत्वादणेव कृतः। अथवाऽभेदोपचारात् पुरुषशब्दस्तत्ससम्बन्धिषु धर्मेषु प्रयुक्तः। तेनायं देशनियमो धर्माणां स एवंविधात्पुरुषात्प्रतिद्रष्टव्यः। एते हि देशधर्मा म्लेच्छानां न पुनरार्याणाम्। ते हि तिर्यक्समानधर्माणोऽन्यत्रानधिकृताः स्वसमाचारप्रसिद्धं धर्ममनुतिष्ठन्ति मातृविवाहादि। सोऽयं सार्वभौमेन न निवारणीयः। स्वदेशाचारवर्ती तेषां जातिधर्मोऽयं जनपदनिवाससम्बन्धेनाभ्यनुज्ञानात्। आम्नायविरोधोऽप्यत्र नास्ति। अधिकृतानां विरोधात् विरोधो न तिरश्चाम्। ननु "अहिंसा सत्यमक्रोधः शौचमिन्द्रियसंयमः" इति प्रतिलोमाधिकारेणैवोक्तम् (१०। ६३)। म्लेच्छाश्च प्रतिलोका एव। तत्र यदि मातृविवाहे मूत्रोत्सर्गे चोदकशुद्धाभावे न दुष्यति क इन्द्रियसंयमः कीदृशं वा शौचमिति। उक्तमेतत्। आर्यावर्तमध्यवर्तिनामेते धर्माः शौचादयः। चातुर्वर्ण्ये तु तत्तद्देशनियमो धर्माणां नास्ति। केचिददृष्टार्था देशधर्मा इति वक्ष्यामः। एककार्यापन्ना वणिक्कुरुकुसीदचातुर्विद्यादयः। तेषां धर्माः 'श्रेणीधर्माः'। यथा केचन वणिङ्महत्तरा वचनेन परिच्छिन्नं राज्ञो भागं प्रयच्छन्ति इमां वणिज्यां वयमुपजीवाम एष ते राजभागोऽस्माकं यावल्लाभोऽस्तु न्यूनोऽधिको वा। तत्र राज्ञाऽभ्युपगते वणिज्ये लाभातिशयार्थं राष्ट्रविरोधिनीं चेतरेतरव्यवस्थां कुर्वन्ति, इदं

द्रव्यमियन्तं कालमविक्रेयम्, अयं राज्ञोऽपदेशेनार्थो दण्डः पतति, देवतोत्सवार्थो वा। तत्र यदि कश्चिद्व्यतिक्रामति स एवं श्रेणीधर्मव्यतिक्रामन् दण्ड्यः।

**कुलधर्मा इति।** 'कुलं' वंशः। तत्र प्रख्यातमहिम्ना पूर्वजेन धर्मः प्रवर्तितो भवति योऽस्मद्वंशजः कुतश्चन धनं लभेत स नादत्वा ब्राह्मणेभ्योऽन्यत्र विनियुञ्जीतेत्यादयो धर्माः। तथा सति योग्यत्वे य एव पूर्वपुरुषाणां याजकाः कन्यादिसंप्रदानभूता वा त एव कार्याः। तदतिक्रामन् राज्ञोऽनुष्ठापयितव्यः।

एतेषां च सामवायिकत्वादधर्मत्वशङ्कया पुनर्वचनम्। न चायं संविद्व्यतिक्रम इति वक्ष्यामः॥ ४१॥

(२) **सर्वज्ञनारायणः। जातिर्ब्राह्मणादिः जनपदो**ऽनेकग्रामसमुदायः, तद्वासिनो **जानपदाः** तत्संगतान्। **श्रेणी** पाषण्डवणिगादिगणः **कुलं** वसिष्ठकुलमित्यादितन्नियतान्**धर्मान् समीक्ष्य** निरूप्य॥ ४१॥

(३) **कुल्लूकः। धर्मान्** ब्राह्मणादिजातिनियतान्याजनादीन् **जानपदांश्च** नियतदेशव्यवस्थितान् आम्नायाविरुद्धान्। देशजातिकुलधर्माश्च आम्नायैरप्रतिषिद्धाः प्रमाणमिति **गौतम**स्मरणात्। **श्रेणीधर्मांश्च** वणिगादिधर्मान् प्रतिनियतकुलव्यवस्थितान् ज्ञात्वा तदविरुद्धान्राजा**व्यवहारेषु** तत्तद्धर्मान्व्यवस्थापयेत्॥ ४१॥

(४) **राघवानन्दः।** प्रासंगिकं जातिधर्माद्यनुशास्ति **जातीति। जातिधर्मान्** ब्राह्मणादिजातिनियमान् याजनादीन् च **जानपदांश्च** नियतदेशव्यवस्थितान्। तथा **च गौतमः।** 'आम्नायाविरुद्धादेशजातिकुलधर्माप्रतिषिद्धाः प्रमाणमिति। **श्रेणीधर्मान्व**णिगादिधर्मान्। **कुलधर्मान्** तत्तत्कुलप्रतिनियतान्। **कुलं** वंशः ब्राह्मणादिर्मूर्धाभिषिक्तादिरिति वा। एतेषामेतदेव **स्वधर्ममिति वीक्ष्य परिपालयेत् राजेति**॥ ४१॥

(५) **नन्दनः। जाति**धर्मो ब्राह्मणादीनां प्रतिनियतो धर्मः। **जानपदो** धर्मो देशधर्मः यथा दाक्षिणात्यानां मातुलसुतापरिणयनम्। **श्रेणीधर्मो** वणिक्कुशीलवादिततं निकायधर्मः। यथा इयन्तं कालमिदं द्रव्यं विक्रेतव्यं न परमिति। **कुलधर्मः** पूर्वशिखापरशिखादिनियमः॥ ४१॥

(६) **रामचन्द्रः। श्रेणीधर्माः** पाषण्डवणिगादिधर्माः। एकजात्योपजीविनः **श्रेणयः**॥ ४१॥

(७) **मणिरामः। जातिधर्मान्** याजनादीन्। **जानपदान् धर्मान्** नियतदेशव्यवस्थितान् आत्मीयाऽविरुद्धान्। श्रेणीधर्मान् वणिगादिधर्मान्। कुलधर्मान् नियतकुलस्थितान्। स्वधर्मान् जात्यादिधर्मान्। स्वपदेन जातिजानपदादिर्न तु राजाज्ञेयः॥४१॥४२॥

(८) **गोविन्दराजः।** जातिधर्मान् जानपदानिति। जातिधर्मान् अध्ययनादीन् जानपदाँश्च नियतदेशव्यवहारान् अविरुद्धान् एवं वणिक्कर्षणादिगतान् श्रेणीधर्मान् कुलधर्माँश्च प्रतिनियतकुलस्थितान् ज्ञात्वा यस्य यः स्वधर्मस्तं तथा तत् स्थापयेत्। अतश्च तद्विरुद्धव्यवहारिषु वादिनं निगृह्णीयात्॥ ४१॥

(९) **भारुचिः।** जातिधर्मः प्रसिद्धो। जानपदः सामयिकः। न शास्त्रप्रमाणः गोप्रचारोदकरक्षणादिः, श्रेणीधर्मो वणिक्कारुककृषीवलानां स्वकार्यसिद्ध्यर्थप्रवर्तितनियत-सामयिकमपि धर्मं राज्ञा प्रतिपादनीयम्। न सामयिकोऽयमित्यनास्था कर्तव्या यदि च राजा सामयिकेष्वनादरं कुर्यात् ततो व्यवस्थाभङ्गात् मात्स्यन्यायः प्रवर्तते ।। ४१ ।।

**स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।।**
**प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ।। ४२ ।।**

(१) **मेधातिथिः।** पूर्वोक्तस्य जानपदादेर्धर्मस्य दृष्टादृष्टताऽनेन प्रदर्श्यते। **स्वानि कर्माणि** कुलस्थित्यनुरूपाणि ये कुर्वन्ति ते दूरस्था अपि **प्रिया भवन्ति**। सर्वस्यान्यो निकट-वर्त्ती संसर्गातिशयात्प्रियो भवति। स्वकर्मकारी तु दूरस्थ एव प्रियः। **स्वे स्वे कर्मण्यवस्थिता** इत्यनेन परकर्माननुष्ठानमाह। ये न परकर्माणि कुर्वन्ति ते सर्वस्य प्रिया भवन्तीति श्लोकार्थः ।। ४२ ।।

(२) **सर्वज्ञनारायणः।** दूरे देशे देशान्तरे अतो लोका विरुद्धत्वात्स्वस्वजात्यादिधर्म एवं ग्राह्यस्तेषामित्यर्थः। स्वे स्वे धर्म इति प्रियत्वे हेतुतया पुनरुक्तम् ।। ४२ ।।

(३) **कुल्लूकः।** यस्मात् **स्वानीत्यादि** जातिदेशकुलधर्मादीन्यात्मीयकर्माण्यनुतिष्ठन्तः **स्वे स्वे च** नित्यनैमित्तिकादौ कर्मणि वर्तमाना **दूरेऽपि सन्तः** सान्निध्यनिबन्धनस्नेहाभावेऽपि लोकस्य **प्रिया भवन्ति** ।। ४२ ।।

(४) **राघवानन्दः।** अत्रैवार्थवादमाह **स्वानीति। स्वे स्वे** नित्ये नैमित्तिके च। यथोक्तकारी हि दूरे वर्तमानलोकस्य रक्षणादौ लोकने न रक्षणसमर्थस्य राज्ञः सामान्योक्तिर्वा ।। ४२ ।।

(५) **नन्दनः।** उक्तार्थे प्रशंसामाह **स्वानि कर्माणीति** ।। ४२ ।।

(८) **गोविन्दराजः।** **यस्मात्स्वानीति।** जातिकुलदेशधर्माण्यनुतिष्ठन्तः सन्तोऽपि निष्कर्षस्नेहाविदूरेऽपि वर्तमाना मनुष्याः स्वे स्वे कर्मण्यवस्थिता परकर्माणि परलोकस्य प्रिया भवन्ति ।। ४२ ।।

(९) **भारुचिः।** सामयिकधर्मानुपालनप्रशंसेयम्। प्ररोचनार्था ।। ४२ ।।

**नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ।।**
**न च प्रापितमन्येन ग्रसेदर्थं कथंचन ।। ४३ ।।**

(१) **मेधातिथिः। कार्यं** विवादवस्तु। तद्राजा **स्वयं न** प्रवर्तयेत्। कस्यचिद्द्वेष्य-स्योपघातार्थं धनिनो वा धनग्रहणार्थं न तदीयमृणिकमन्यं चापराद्धमुद्वेजयेत्—एष ते धर्म इति किमिति ममाग्रतो नाकर्षति एतेन वा तावदपराद्धं यावदहमेनं निर्घातयामीयेत्वं राज्ञा न कर्तव्यम्। सत्यपि द्वेषे धनलोभे वा। **न च प्रापितमावेदितमन्येनार्थिना ग्रसेत्** निगिरे-न्नोपेक्षेतेति यावत्। अवधीरणायां निगिरेदिति प्रयुज्यते। तत्समानार्थश्च ग्रसतिः। तथा

**च** वक्तारो भवन्ति यावत्किंचिदस्योच्यते तत्सर्वं निगिरति न किंचिदयं प्रतिवक्ति। अन्ये तूत्तरं श्लोकार्द्धमेवं व्याचक्षते। **न च प्रापितं** व्यवहारादन्येन प्रकारेणार्थं धनं ग्रसेत् स्वीकुर्यात्। यदि हि राजा छललेशोद्देशिकया धनदण्डे प्रवर्तेत ततः परलोके दोषो द्रष्टव्यः। स्वराज्ये चोपघातः स्यात्। अथेदमपरं केषांचिद्व्याख्यानम्। **नोत्पादयेत्स्वयं कार्यं राजा।** साक्षादुपलभ्याप्यपकार्यकारिणां न स्वयं किंचिद्ब्रूयात्, तस्य पराधीनेन यावद्व्यवहारेण नाकृष्टः। येन परव्यवहारदर्शनमेव पराजितस्य निग्रहाय भवति, न राजा। एतच्च ऋणादानादिष्वेव द्रष्टव्यम्। ये तु स्तेनसाहसिकादयः कण्टकस्थानीयास्तान् राजा स्वयमेवावगम्य गृह्णीयात्। शेषं समानम्। **नाप्यस्य पुरूषः इति** अस्य राज्ञः पुरुषोऽधिकारी मनुष्यः ॥ ४३ ॥

(२) **सर्वज्ञनारायणः। नोत्पादयेदिति।** एतच्च ऋणादानादौ न तु साहसादावपि तत्र स्वयमप्यन्वेष्यत्वात्। प्रापितमन्येनेति स्वयमृणादिदत्तमृणिनाऽदीयमानं राज्ञे यदा निवेद्येत तदा **न ग्रसेन्नो**पेक्षेत न वा प्रापितमित्यपरः पाठः **अन्येना**न्यतरेण प्रापितं अनुप्रदर्शितप्रमाणं **न ग्रसेत्** ग्रासयेदन्यतरस्मै दापयेत् ॥ ४३ ॥

(३) **कुल्लूकः।** प्रासङ्गिकमिदमभिधाय पुनः प्रकृतमाह **नोत्पादयेदिति।** राजा राजनियुक्तो वा धनलोभादिना कार्यमृणादिविवादं नोत्पादयेत्। तदाह कात्यायनः 'न राजा तुविदत्वेवं धनलोभेन वा पुनः। स्वयं कर्माणि कुर्वीत नराणामविवादिनाम्। न चार्थिना प्रत्यर्थिना वाऽऽवेदितं विवादं धनादिलोभेनोपेक्षेत ॥ ४३ ॥

(४) **राघवानन्दः।** प्रासंगिकमुक्त्वा प्राकृतमाह नेति। कार्यं धनलोभादिना ऋणादिविवादं **नोत्पादयेन्नो**त्थापयेत् अस्य राज्ञः। अनेन नियुक्तः पुमान्। अन्येनोत्कोचादिना स्वयं वा ग्रसेत् प्राप्तं दत्तं वा गृह्णीयात् अर्थं ग्रसित्वा कार्यार्थिनां कार्यं नोपेक्षेतेति। व्यवहारादन्येन प्रापितं वा **न गृह्णीयात्** राज्ञो यन्त्रात्प्राप्तनिध्यादेर्व्यवस्थोक्तेः ॥ ४३ ॥

(५) **नन्दनः।** परिभाषान्तरमाह **नोत्पादयेदिति।** कार्यं विवादपदं दण्डदशबन्धात्-नोपेक्षया स्वय**न्नोत्पादयेत्।** अन्येन व्यवहारवता प्रापितमावेदितं व्यवहारं न ग्रसेन्न निर्हरेत् ॥ ४३ ॥

(६) **रामचन्द्रः। राजा कार्यं नोत्पादयेत्। अस्य** राज्ञः **पुरुषः नोत्पादयेत्। च** पुनः **अन्येन** वादिना वा **प्रापितं** निवेदितं अर्थं कार्यं कथंचन न ग्रसेत् नोपेक्षेत ॥ ४३ ॥

(७) **मणिरामः। कार्यं** ऋणादिविवादं नोत्पादयेत् धनलोभादिना अर्थं विवादं प्रत्यनेन अर्थिना प्रत्यर्थि**प्रापितं** आवेदितं **न ग्रसेत्** धनलोभादिना उपेक्षां न कुर्यात् ॥ ४३ ॥

(८) **गोविन्दराजः।** एवं धनप्रसङ्गो न प्रसक्तानुप्रसक्तिकयाभिधायाधुना प्राकृतमाह। नोपादयेत्स्वयं कार्यं राजा नान्यस्य कस्यचिदिति। यद्यपि पश्येत्कार्याणि कार्यिणामित्युक्तं भवति तथापि तदाक्षेपान्तरेण ऋणादानादिराजकर्तव्यसाहसाधिरक्षणवर्जितेषु राजा स्वयमुपजापेन व्यवहारान्नोत्पादयेत्। नापि राजाऽधिकृतः स्वयमुत्पादयेत् तथा प्रत्यर्थिनामपि तदा वेदितव्यं कार्यार्थं केनापि प्रकारेण रागद्वेषादिना नोपेक्षेत ॥ ४३ ॥

(९) **भारुचिः।** नोत्पादयेत्स्वयमुपजापेनार्थिनः कस्यचिदुपघातस्य पौरजानपदस्य द्वेषाद्धनवतो वा लोभेन राजा नापि तत्प्रकृतो व्यवहाराणां द्रष्टा राजब्राह्मणः न चाप्रापितं व्यवहारेण तस्मादन्येन प्रकारेण ग्रसेदर्थं कथञ्चन, अथवा पाठान्तरं व्याख्यायते, न च प्रापितं व्यवहारादन्येन प्रकारेण ग्रसेदर्थं कथञ्चन, अन्यथा हि लोभाद्राज्ञः परलोकोऽपघातश्च स्यात् दृष्टश्च राज्यतन्त्रोऽपघातदोषः अन्यस्त्वाह—नोत्पादयेत्स्वयं कार्यं राजा सा कदाप्युपलभ्य कार्यकारिणम्। नापि तत्प्रकृतो राजपुरुषः येन व्यवहारदर्शनमेव। जयपराजययोरिष्टेन तु राजेति। नियमो राज्ञ उच्यते अतोऽस्य स्वयं दृष्ट्वाप्यतिक्रमणादिकमुत्सृजतो न दोषोऽस्ति। येन राज्ञापि नार्थिना स्वप्रत्ययेन व्यवहारेऽवस्थाप्यमाने लोभरागद्वेषप्रतीतौ राज्यतन्त्रविरोधः प्रसज्यते। एवं च बृहस्पतिसमेनापि व्यवहारेणाप्राप्यमाणं न ग्राह्यम्। तथा ह्यस्य सर्वलोकानुरञ्जनाद्धर्मं राजतन्त्रयशांसि प्रथन्ते। एवं च साक्षिप्रत्याख्यानेनाप्यनुमानप्रमाणशुद्धिमाश्रित्य व्यवहारेषु तत्प्रधानः स्यादन्वीक्षिक्यां चाविनीतः ॥ ४३ ॥

**यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ॥**
**नयेत्तथाऽनुमानेन धर्मस्य नृपतिः पदम् ॥ ४४ ॥**

(१) **मेधातिथिः।** यदुक्तं न स्वयं दृष्ट्वाऽपि राजा सहसा कंचिदाक्रमेत वा निगृह्णीयाद्यन्नर्मणाऽप्येतत्संभवति । कथं पुनरेतदवगन्तव्यम् किं परिहासकृतमेतदुत क्रोधाद्यनुबन्धकृतमिति। अत आह **अनुमानेने**तज्ज्ञातव्यम्। यथा **मृगयु**र्मृगव्याधो वृथा मृगं दृष्टिपथातिक्रान्तं छिद्रनिसृतैरसृक्पातैः स्रवद्भिः शोणितैः **पदं मृगस्य नयत्या**सायदत्येवं राजाऽनुमानेन परोक्षे प्रत्यक्षे वार्थकारणं निश्चिनुयात्। **धर्मश्च** कृतव्यवहारविषयस्तत्वावगमः। उक्तस्याप्यनुमानस्य पुनर्वचनं स्मृतिदाढर्यार्थम् ॥ ४४ ॥

(२) **सर्वज्ञनारायणः।** यथेत्यनुमानव्यवहारदर्शनस्योक्तम् ॥ ४४ ॥

(३) **कुल्लूकः।** यथा मृगस्य शस्त्रहतस्य रुधिरपातैर्व्याधः पदं स्थानं प्राप्नोति तथानुमानेन दृष्टप्रमाणेन वा धर्मस्य तत्त्वं निश्चिनुयात् ॥ ४४ ॥

(४) **राघवानन्दः।** परनिष्ठाधर्मज्ञानदृष्टान्तमाह **यथे**ति। असृक्पातैर्गलितात्पतितैर्मृगयुना घातितस्य मृगस्य पदमवस्थितिस्थलं नयेज्जानीयात्तथा। मृगयुर्व्याधः। अनुमानेन बाह्यैर्विभावादित्युक्तेन। पदं तत्त्वम् ॥ ४४ ॥

(५) **नन्दनः।** न केवलं साक्ष्यादिभिरर्थो निर्णेतव्यः किन्त्वनुमानेनापीत्याह। **यथा नयत्यसृक्पातै**रिति पदं निर्णयम् ॥ ४४ ॥

(६) **रामचन्द्रः।** दृष्टान्तमाह **यथे**ति। **मृगयुः** लुब्धकः। **मृगस्य** असृक्पातैर्यथा पदं नयति तथाऽनुमानेन हेतुना धर्मस्य पदं नृपतिः नयेत्प्रापयेदित्यर्थः ॥ ४४ ॥

(७) **मणिरामः।** **मृगयु**र्व्याधः **पदं** स्थानं **नयति** प्राप्नोति तथा **नयेत्** निश्चिनुयात् ॥ ४४ ॥

(८) **गोविन्दराजः । यथेति** । यथा मृगस्य विद्धस्य सतो दृष्टिनष्टस्य पदं व्याधो रुधिरस्रावबिन्दुदर्शनेन नयति तथा राजाऽनुमानप्रमाणेन धर्मस्य गतिं नयेत् । विद्वद्भिः धर्मप्रधानैर्द्विजातिभिर्यच्छास्त्राविरुद्धमासेवितं तद्देशकुलजातीनामत्र रूपं कल्पयेत् । वादि-वाद्याशयग्रहणाय यत्नातिशयं कुर्यात् इत्येवमर्थम् ।। ४४ ।।

(९) **भारुचिः** । तत्र दृष्टान्तमाह पूर्वश्लोकार्धेन तथा च प्रत्यक्षागमावुत्सृज्यानु-मानप्रधानौ व्यवहारगतौ स्यादित्यनुमानप्रशंसैषा । येन सर्वलोकप्रत्यक्षोऽर्थः । तथा च शेषशेषिभावाद् पुनरुक्तौ पूर्वोत्तरश्लोकौ अधुना व्यवहारेषु परमार्थावधारणार्थमिदं द्रष्टुः नान्यस्तुतिः यैः प्रत्यक्षानुमानप्रत्याख्यानेन वेदितव्या । तथा च शेषशेषिभावाद्पुनरुक्तौ पूर्वोत्तरश्लोकौ । अधुना व्यवहारेषु परमार्थावधारणार्थमिदं द्रष्टुः प्रसंख्यानमुच्यते ।। ४४ ।।

**सत्यमर्थं च संपश्येदात्मानमथ साक्षिणम् ।।**
**देशं रूपं च कालं च व्यवहारविधौ स्थितः ।। ४५ ।।**

(१) **मेधातिथिः । व्यवहारविधौ** व्यवहारकर्मणि **स्थितः** प्रवृत्तो न केवलं व्यवहारा-क्षराणि संपश्येद्यावदेतदपरं सत्यादि । तत्र सत्यस्य दर्शनम्—यद्यप्यर्थिप्रत्यर्थिनोरन्यतरेण शालीनतया परिपूर्णाक्षरं नाभिहितं तथापि यदि राजा प्रमाणान्तरतः पूर्वोक्ताद्वाऽनुमानादेव कथंचिदीदृशोऽयमर्थ इति निश्चेतुं पारयेत् तदा तदाश्रयेन्नोपेक्षेत । अनेनैतन्न सर्वमुक्तमिति । तदुक्तम् (याज्ञ. व्यव. १९) "छलं निरस्य भूतेषु व्यवहारान्नयेन्नृप इति" । अर्थस्य दर्शनम्—अर्थशब्दो धनवचनः प्रयोजनवचनो वा । तत्र यदि महान्तमर्थमासादयेत्तदा त्यक्त्वाऽप्यन्यानि राजकार्याणि नोद्विजेत, व्यवहारेक्षणं कुर्यादेव । अथवा यदि कश्चिद् ब्रूयात्साक्षि-भिरर्थ एतस्माद् गृहीतोऽन्येन वा सभ्येन तत्र निरूपयितव्यं यदेतद् व्यवहारपदं यदि स्वल्पं न संभवति धनग्रहणम् । अथ गुरुसभ्याः साक्षिणश्च दैन्यं गतास्तदा संभावनीयं प्रमाणान्तराच्च निश्चेतव्यम् । **एतच्चात्मानं साक्षिणं** कृत्वा गवेषणीयम् । एतदुक्तं भवति कण्टकशोधन-न्यायेन चारैश्चारयेत् । अथवाऽऽत्मानं संपश्येदात्मनोऽवस्थां संपश्येत्कोशक्षयं महाकोशतां वा । अस्मिन् पक्षे साक्षिण इति स्वतन्त्रं पदम् । देशस्य दर्शनम्—क्वचिदल्पोऽप्यर्थो महत्त्व-मासादयति, महानपि योऽन्यत्र स क्वचिल्लघुर्भवतीति । एतद्देशस्य दर्शनम् । एवं कालोऽपि द्रष्टव्यः । **रूपं** व्यवहारवस्तुस्वभावः । तस्य गुरुलघुतां पश्येदिति । अन्यैस्तु व्याख्यातम् । सत्यार्थयोः सारफलतां पश्येदात्मानं साक्षिणं कृत्वा । एतदुक्तं भवति अर्थात्सत्यं गुरुत्वेन महाप्रयोजनत्वादुभयोर्लोकसाधनरूपतयाऽऽश्रयितव्यम् । अर्थस्त्यक्तव्योऽसारत्वात् । देशः स्वर्गादिः सत्यसमाश्रयप्राप्यः । कालश्चिरं तत्र वासः । रूपं सुरूपं सुन्दरं मनोहरम् । एतदेव विपरीतम् । सत्यत्यागेन केवलार्थसमाश्रयणात् ।। ४५ ।।

(२) **सर्वज्ञनारायणः । सत्यं** को भागः सत्य इति । **अर्थं** दण्डादिसिद्धं । **आत्मानं** राजानं पश्येत् । ततो राजवृत्तमनुगच्छेत् तथा **साक्षिणो देशादींश्च संपश्येत्** प्रयत्नेनानु-संदध्यादित्यर्थः देशमाम्नायमाचार इति । **कालमत्रै**तद्योग्यमिति । रूपमर्थिप्रभृति नामा-कारम् ।। ४५ ।।

(३) **कुल्लूकः**। व्यवहारदर्शनप्रवृत्तो राजा छलमपहाय सत्यं पश्येत् तथार्थं च। अर्शादित्वान्मत्वर्थीयोऽच्। अर्थवन्तं गोहिरण्यादिधनविषयस्थं व्यवहारं पश्येत् नत्वह- मनेनाक्षिनिकोचनेनोपहसित इत्यादि स्वल्पापराधं आत्मानं च तत्त्वनिर्णये **स्वर्गादि-** फलभागिनं साक्षिणः सत्यवादिनः **देशं कालं** च देशकालोचितं स्वरूपं व्यवहारस्वरूपं गुरुलघुतादिकं **पश्येत्**।। ४५।।

(४) **राघवानन्दः**। किंच, **सत्यमिति**। **व्यवहारविधौ** तत्तत्कर्मणि व्यवस्थितो नृपतिः छलमपहाय **सत्यं पश्येत् अर्थं** हिरण्यादिविषयकव्यवहारम् **आत्मानं च** तत्त्वनिर्णयेन स्वर्गादिफलभागिनम्। **साक्षिणो** यथा दृष्टश्रुतार्थवादिनः। **देशं** वाराणस्यादिकम्। **कालं** दुर्भिक्षादिरूपं लघुगुरुभावादिकं च। पश्येदित्यनुषज्यते।। ४५।।

(५) **नन्दनः**। **सत्यं** संपश्येत् अस्मिन् व्यवहारोपवादिनोः किं प्रयोजनं भविष्यतीति पश्येत् **साक्षिणः पश्येत्** यथोक्तगुणानामपि साक्षिणां रागद्वेषौ **पश्येत्**। इङ्गितादिभिर्देशं कालं च पश्येत्। अस्मिन्**देशे**ऽस्मिन्**काले**ऽय**मर्थो** युज्यते न वेति **पश्येत्**। विवादविषय**स्यार्थ- स्वरूपं च पश्येत्**।। ४५।।

(६) **रामचन्द्रः**। **अर्थं** कार्यम्।। ४५।।

(७) **मणिरामः**। **व्यवहारविधौ स्थितः** व्यवहारदर्शनार्थं भासते स्थितः। **अर्थः** गोहिरण्यादिविषयं व्यवहारं **सत्यं** छलमपहाय तत्त्वतः **रूपं** व्यवहारस्वरूपम्।। ४५।।

(८) **गोविन्दराजः**। **सत्यमिति**। व्यवहारकर्मप्रवृत्तो राजा सत्यं द्रष्टाऽद्रष्टहेतुतया संपश्येत्। अर्थञ्च सारासारत्वेन आत्मानं च सदसत्कर्मणा, देशं च समनन्तरं राजान्तरं विहारं, कालं च जीवितसम्बन्धमतिक्रान्तबलं रूपं चेदं व्याधिजराभोज्यप्रायं लोभादि- नास्खलनार्थं संपश्येत्।। ४५।।

(९) **भारुचिः**। सत्यार्थयोः सारफल्गुतां पश्येदात्मानं साक्षिणं कृत्वा तथात्मनो दहति स्थाने स्वर्गादौ धर्मेणावस्थानम्? अवस्थानकालं च तस्य महान्तं अथवा कालं च वायुषः इहाल्परजसाऽभिभवादात्मनो रूपविपर्ययः। अनेकव्याधियोगाश्च, अथवा रूपं न नमन- स्कारं निरवद्यमप्रत्यनीकं निरतिशयसुखोपभोगं स्वर्गवासिनां अभिसमीक्ष्यार्थत्यागेन सत्यं परिगृह्णीयात्। स्वर्गप्राप्तिसाधनमथवा पाठान्तरमस्येदमन्यत् सत्यमर्थेषु व्यवहारं सम्पश्येत्। न छलमिति छलप्रतिषेधार्थोऽयमारम्भयत्नः। शेषमन्यद्यथोक्तम्।। ४५।।

**सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः।।**
**तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत्।। ४६।।**

(१) **मेधातिथिः**। **सन्तः** प्रतिषिद्धवर्जकाः, **धार्मिका** विहितानुष्ठायिनः। यद्यप्येक एव शब्द उभयमर्थं प्रतिपादयितुं शक्नोति तथापि भेदोपादानाद्विषयविभागे नैवं व्याख्यायते। **तैर्यदाचरितमनुपलभ्यमानश्रुतिस्मृतिवाक्यं तद्देशकुलजातीनां प्रकल्पयेदनुष्ठापयेत्। अविरुद्धं** श्रुतिस्मृतिभिरुपलभ्यमानाभिः। यदुक्तं "जातिजानपदान्धर्मान्" (४१) इत्यत्र

श्लोके देशकुलाद्याचारस्य प्रामाण्यं तस्यानेन विशेषः कथ्यते। आम्नायेनाविरोधेन तत्प्रमाणम्, न विरोधे तत्प्रमाणम्। तेन दृष्टार्थान्यपि ग्रामदेशराजकार्याणि शास्त्रविरुद्धान्यादरणीयानि, न विरुद्धानि। यथा क्वचिद्देशऋणिक आत्मानं विक्रय्य धनं दाप्यते। तच्च "कर्मणाऽपि समम्" इत्यनेन विरुद्धम्। अन्यच्च श्लोकेन दर्शितम्। अन्यस्य त्वाचारस्य शिष्टसम्बन्धितयैव प्रामाण्यमुक्तम्। "आचारश्चैव साधूनाम्" इति। न च तद्विरुद्धार्थसमाचरणेन साधुत्वमुपपद्यते। तस्माच्च नादृष्टाय तद्विषयोऽयमुपदेशः। अन्यस्त्वाह। देशान्तरे धार्मिकैः सद्भिर्द्विजैर्यदविरुद्धं श्रुत्या स्मृत्यन्तरेण वाऽऽचर्यते तद्देशान्तरेऽपि राजा प्रकल्पयेत्। यथोद्वृषभयज्ञादय उदीच्येषु प्रसिद्धास्ते प्राच्यैर्दाक्षिणात्यैः प्रतीच्यैश्चानुष्ठेयाः। कुतः आचाराद्धिस्मृतिरनुमातव्या। स्मृतेः श्रुतिः। सा च यद्येवमनुमीयते 'उदीच्यैरेतत्कर्तव्यमिति' तत्र तद्धितस्य बहुष्वर्थेषु स्मरणात्तत्र जातस्तत्र भवस्तत आगतस्तमभिप्रस्थितः शेष इति चैतस्य लक्षणविकारोभयरूपत्वादन्येष्वप्यर्थेषु प्रतिपदमनुपातेषु तद्धितस्मरणान्नास्त्युदीच्यो नाम य उदीच्य शब्देन निवर्त्येत। ततश्च पुरुषमात्रेणैतत्कर्तव्यमित्यापतति। देशसमाख्यायानियतनिमित्तत्वाभावेनानियामकत्वात्। अथैवं वाक्यमनुमीयते—'उदीच्यां जातेन तद्देशवासिना वा' तदपि व्यभिचारि। तत्र जातोऽपि नान्यत्र करोति, तन्निवास्यप्यन्यत्र जातो न करोत्येव। अथोदग्देशाभिजनस्तन्निवासी वेति—अनित्यत्वादभिजननिवासयोस्तदपि न युक्तमेव। न हि जातिगुणगोत्रार्णावाभिजननिवासौ नित्यौ। तस्मान्नित्यस्य न कस्यचिदनुष्ठातॄणामवच्छेदकस्यानुपपत्तेः सर्वविषया धर्माः। न देशधर्मा नाम केचन सन्ति। अनेनैव न्यायेन कुलधर्मा अपि। कथं 'तर्हि देशधर्माः कुलधर्मा' इति स्मृतिकारैर्भेदेन व्यपदिश्यन्ते। उक्तं दृष्टार्था नियता व्यवस्था। तत्र धर्मस्तस्य च नियम उपपद्यत इति उक्तम्। कुलं च गोत्रैकदेशः। यस्तु कृत्स्नगोत्रधर्मो—यथा 'न वासिष्ठा वैश्वामित्रैः सम्बन्धीयुरिति'—स नित्यत्वाद् गोत्रव्यपदेशस्य नित्य एवेति विरम्यते ॥ ४६ ॥

(२) **सर्वज्ञनारायणः।** सद्भिर्दोषरहितैर्देवादिभिः। तद्वस्तु प्रकल्पयेत् प्रकृष्टं व्यवहारेषु कल्पयेत्। यदि देशाद्यविरोधि विरोधे तु तद्देशादिधर्म एव तद्देशजानाम् एवं सामान्यतो राजधर्मा व्यवहाराऽनुगुणा उक्ताः ॥४६॥

(३) **कुल्लूकः।** विद्वद्भिर्धर्मप्रधानद्विजातिभिर्यदृश्यमानशास्त्रमनुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत् ॥४६॥

(४) **राघवानन्दः।** किंच **सद्भिरिति। आचरितं** शास्त्रदृष्टमप्यनुष्ठितम् **सद्भिरिति** द्विजातीनां विशेषणम्। शूद्रव्यावृत्त्यर्थम्। धार्मिकैः प्रतिषिद्धवर्जनपुरःसरं धर्मानुष्ठातृभिः तद्देशकुलजातीनामविरुद्धमेव प्रकल्पयेत् प्रमाणं कुर्यात् कुलधर्माश्चेत्यत्रोक्तत्वात् ॥४६॥

(५) **नन्दनः।** तदनुरूपनिर्णयोपायपरिग्रहार्थमशास्त्रीयमपि सद्भिराचरितं धर्ममनुपालयेदित्याह **सद्भिराचरितं यत्स्यादिति।** स्वधर्मनिरता अध्यात्मविदः सन्तो विरुद्धं विरुद्धं चेत्प्रकल्पयेदनुपालयेत् ॥४६॥

(६) **रामचन्द्रः।** अविरुद्धं दण्डं प्रकल्पयेत् ॥४६॥

(७) **मणिरामः।** सद्भिः विद्वद्भिः। प्राचरितं शास्त्राऽविरुद्धमनुष्ठितम्। तत् **देशमविरुद्धं** देशादविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। एतत्सकलव्यवहारसाधारणं परिभाषात्मकमुक्तम् ॥ ४६ ॥

(८) **गोविन्दराजः।** सद्भिरिति। एतच्च विरुद्धव्यवहारेषु वादिनं गृह्णीयादिह च सद्भिराचरितमित्युपादानादिदं सदाचारविषयं जातिजानपदाद्येतत् पुनः सदाचारव्यतिरिक्त-धर्मविषयम् ॥४६॥

(९) **भारुचिः।** सद्भिः प्रतिषिद्धवर्जकैः धार्मिकैश्च विहितार्थानुष्ठातृभिः अथवा धार्मिकैः सद्भिः सच्छब्दः सत्तार्थो न पुनरुक्तसामर्थ्यात् उभयविशेषणैः ब्राह्मणैः अथवा सद्भिरध्ययनविज्ञानवद्भिः धार्मिकैश्च शास्त्रार्थस्थैर्यैर्यदाचरितं स्यात् तद्देशकुलजातीनां वेदस्मृतिशास्त्राविरुद्धं प्रकल्पयेत्। तथा च स्मृत्यन्तरं शिष्टाचारश्च। शास्त्राविरुद्धं प्रमाणं न तु तद्विरोधि शुकसारिकाभक्षणादि एवं च यच्छिष्टैः कथञ्चित् कदाचिच्चाचरितं गृह्यमाणार्थतया सद्राज्ञा निपत्य अथवा जातिजानपदादिधर्माणाम् अविरोधार्थं आरम्भः। ते हि दृष्टार्था अपि सन्तः शास्त्राविरुद्धा एव राज्ञा कर्तव्याः। न तद्विरोधिनः। यतः जातिजानपदधर्मागश्लोकशेष एवायम्। एवं चास्यापौनरुक्त्यं विज्ञेयम्। सद्भिराचरितं यत्स्यादित्येतल्लोकार्थं देशान्तरे धार्मिकैः सद्भिर्यदाचर्यते अविरुध्यं श्रुत्या स्मृत्यन्तरेण वा तद्देशान्तरेऽपि राजा आचरेत् कारयेत्। तथा कुलैकदेशकालनियतं कर्णवेधादितदपि कृत्स्ने कुले प्रकल्पयेत्। एवं विज्ञातिनिमित्तौ यो विवाहकालेऽध्ययनं तदपि सर्वस्यां जातौ प्रकल्पयेत् राजावष्टम्भाच्चैषां धर्माणां प्रथनमवस्थितिः ॥ ४६ ॥

**अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः ॥**
**दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥**

(१) **मेधातिथिः।** यत्सर्वेषु व्यवहारपदेषु साधारणं तदुक्तम्। विशेषविवक्षाया-मिदमाह। सोपचयं कालान्तरे दास्यामीति यो धनमन्यस्माद् गृह्णाति **सोऽधमर्णः।** यस्तु सोपचयं प्रात्यादास्यामीति प्रयुङ्क्ते **स उत्तमर्णः।** सम्बन्धिशब्दावेतौ। अधमर्णस्यार्थः। अर्थो धनं प्रकरणाद्यदेवोत्तमर्णाय देयं तदेवोच्यते। तस्य सिद्धिरुत्तमर्णं प्रति **निर्णयः।** द्वितीयोऽर्थशब्दः प्रयोजनवचनः। अयं समुदायार्थः। उत्तमर्णेन यदा राजा **चोदितो** भवत्य-धमर्णेन यो गृहीतोऽर्थः स मे सिद्ध्यतु दापयतु भवान्—राजा त्वधमर्णात्तदा **दापयेद्धनिकस्या-र्थम्।** धनमस्यास्तीति धनिकः। उत्तमर्ण एव च प्रसिद्ध्या धनिक उच्यते। **दापयेदिति** सम्बन्धाच्चतुर्थी प्राप्ता। सा त्वपूर्णत्वात्संप्रदानभावस्य न कृता। यथा घ्नतः पृष्ठं ददाति, रजकस्य वस्त्रं ददातीति। न ह्यत्र मुख्यो ददात्यर्थः। इहाप्युभयोः सत्वस्य भावात्। उभयोः स्वत्त्वाभावादपरिपूर्णो ददातीत्यर्थः। किमुत्तमर्णवचनादेवासौ दापयितव्यः नेत्याह **विभावितमिति।** यदा निश्चितेन प्रमाणेन धारयतीति प्रतिपद्यते। अथवा **विभावितः** स्वयं प्रतिपन्नः। यतो विप्रतिपन्नस्य वक्ष्यति 'अपन्हवेधर्मस्येति'। कथं पुनः स्वयं प्रतिपन्नो विभावित इत्युच्यते नैष दोषः। विस्मरणे स्वहस्तलेख्यादिना स्वयं प्रतिपन्नश्च भवति। विभावितश्चाप्रतिपन्नश्च जानानोऽपि मिथ्याप्रतिपन्नः ॥४७॥

(२) **सर्वज्ञनारायणः।** ऋणदानमवतारयति **अधमर्णेति। अधमर्णेन** गृहीतोऽधमार्णार्थस्तस्योत्तमर्णसिद्धार्थंचोदितो राज्ञा अधमर्णं दापयेत्। **विभावितं** प्रमाणेन ।। ४७ ।।

(३) **कुल्लूकः।** एतत्सकलव्यवहारसाधारणं परिभाषात्मकमुक्तं संप्रति ऋणादानमधिकृत्याह **अधमर्णेति।** अधमणर्थिसिद्ध्यर्थं प्रयुक्तधनसिद्ध्यर्थं धनस्वामिना राजा बोधितो वक्ष्यमाणलेख्यादिप्रमाणप्रतिपादितं धनमुत्तमर्णस्या**धमर्णं प्रदापयेत्** अधमर्णादुत्तमर्णाय दापयेदित्यर्थः ।। ४७ ।।

(४) **राघवानन्दः।** संप्रति ऋणविषयकव्यवहारमाह **अधमर्णेति। अधमर्णार्थसिद्धयर्थं** अधमर्णादर्थस्य सिद्धिरुत्तमर्णेन प्राप्तिस्तदर्थं **चोदितः** प्रार्थितो नृपः। मयैतस्माद्धनं प्राप्यते **यथेति**। विभाषितं संभावितं साक्ष्यादिना धनिकस्योत्तमर्णस्य दापयेदित्यर्थः ।। ४७ ।।

(५) **नन्दनः।** इदानीमाद्यमृणादानं नामव्यवहारपदं तूच्यते। **अधमर्णेति।** ऋणग्राहकोऽधमर्णस्तेन गृहीतार्थस्य लाभार्थमुत्तमर्णऋणप्रयोक्ता ।। उत्तमर्णाधमर्णौ द्वौ प्रयोक्तग्राहकौ क्रमादित्यमरः। तेनोत्तमर्णेन चोदितो राजा धनिकस्योत्तमर्णस्यार्थमधमर्णेन दापयेत्। विभावितमुत्तमर्णेन लेख्यादिना साधितं वा तदर्थस्य विशेषणम् ।। ४७ ।।

(६) **रामचन्द्रः। उत्तमर्णे** धनिकेन **चोदितो** राजा **अधमर्ण**गृहीतस्य अर्थस्य सिद्ध्यर्थं धनिकस्यार्थं साक्ष्यलेख्यादिभिः स्थिरीकृतं दापयेत् ।। ४७ ।।

(७) **मणिरामः।** इदानीं च ऋणदानमधिकृत्याह **अधमर्णेति।** यस्मै कालांतरेण द्रव्यं दीयते **अधमर्णः**। येन दीयते स **उत्तमर्णः** अधमर्णार्थसिध्यर्थः प्रयुक्तधनप्राप्त्यर्थं नोदितः अयं मम धनं न ददातीति प्रेरितो राजा **विभावितं** प्रमाणेन तद्धनं **दापयेत्** ।। ४७ ।।

(८) **गोविन्दराजः।** एवं सकलव्यवहारसाधारणपरिभाषात्मकमुक्त्वाऽधुना ऋणदानाद्यधिकृत्याह **अधमर्णार्थसिद्धयर्थमिति।** दापयेद्धनिकस्यार्थमधमर्णविभावितम्। अधमर्णेन धनग्राहिणा गृहीतं तत्प्राप्त्यर्थं धनस्वामिना राज्ञा ज्ञापितः सन् वक्ष्यमाणलेख्यादिना प्रतिपादितं धनं धनस्वामिनोऽधमर्णं दापयेत् इत्युत्तरप्रपञ्चस्यैवायं सामान्यनिर्देशः ।। ४७ ।।

(९) **भारुचिः।** कृतपरिभाषं व्यवहारदर्शनमधुना प्रस्तूयते—अधमऋणे अधमर्णः कोऽसौ ग्रहीता कस्य हेतोः। येनासौ तदृणं सोपचयः प्रतिदेयः परिगृह्णात्यशक्यसंशोध्यं बहुक्लेशं च। दातातूत्तमर्णः। येनासौ सोपचयं प्रत्यादेयं ददाति। अतश्चोत्तमर्णे दीयमाने भवति एवं च सति कालेन द्विगुणीभूते अद्विगुणीभूते वा यदाधमर्णो याचमानस्तद्धनं न ददाति तदा तस्य सिद्धयर्थमुत्तमर्णचोदितो राजा धनिकस्यार्थं दापयेदधमर्णादधमर्णं वा सामान्योऽयं व्यवहारनिर्देशः ।। ४७ ।।

**यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः।**
**तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ।। ४८ ।।**

(१) **मेधातिथिः।** नेहाप्राप्तार्थादुत्तमर्णाद्राज्ञे भागं वक्ष्यत्यधमर्णाद्दण्डं तत्र स्वभागतृष्णया राजानमुपायान्तरेण धनमार्गणं धनिकानां कारयेयुरतस्तन्निवृत्यर्थमिदमुच्यते।

यैर्यैर्वक्ष्यमाणैरूपायैः स्वधनंपूर्वप्रयुक्तमुत्तमर्णं लभेत तैस्तैरधमर्णं दापयेत्। संगृह्य स्थिरीकृत्य अनेनैवोपायेनैतस्मादेतल्लभ्यत इत्येतन्निश्चित्येत्यर्थः। अथवाऽनुकूलमुपसांत्वनग्रहः उत्तमर्ण एव उत्तमर्णिकः उत्तमं च तदृणंचोत्तमर्णं तदस्यास्तीत्युत्तमर्णिक अत इनिठनावितिरूपम्। एवमितरावपि सर्वधनादिषु प्रक्षेप्तव्यावन्यत्र वीरपुरुषकोग्रामइतिवद्बहुव्रीहिणैव सामानाधिकरण्यस्य मत्वर्थे चोक्तार्थाविशेषेण समासः मत्वर्थीयश्च दुर्लभः। वृद्धिलाभार्थं प्रयोगविषयं धनमृणं द्वौ च तस्य सम्बन्धिनः प्रयोक्ता ग्रहीताच प्रयोजकस्य च तदुत्तमं भवति। स्वतन्त्रो धनदाने प्रत्यादानेनच। इतरस्य सोपचय दानादबह्वयामत्वाच्चाधमत्वं व्युत्पत्तिमात्रत्वे तद्रूढयैव त्वेतौ प्रयोक्तृग्रहीत्रोर्वाचकौ के पुनस्तत्रोपाया इत्येतत्प्रदर्शनार्थमुत्तरश्लोकः ॥ ४८॥

(२) **सर्वज्ञनारायणः**। स्वयमेवोत्तमर्णः शक्तो यथाकुर्यात्तथाह यैर्यैरिति संगृह्य-दापयेदुत्तमर्णः ॥ ४८॥

(३) **कुल्लूकः**। कथं दापयेदित्याह यैर्यैरिति। यैर्वक्ष्यमाणैरुपायैः संप्रयुक्तमर्थमुत्तमर्णोलिभते तैस्तैरूपायैर्वशीकृत्यतमर्थं दापयेत् ॥ ४८॥

(४) **राघवानन्दः**। तत्र यत्नमाधत्ते यैरिति। उत्तमर्णिकः उत्तमं देयत्वेन पूर्वं यदृणं तेन व्याहरतीति। गृहीतेन ऋणेनाधमर्णो निकृष्टो यस्तमधमर्णिकं धनं दापयेद्राजेति शेषः ॥ ४८॥

(५) **नन्दनः**। उत्तमर्णकइति स्वार्थेकः साधयेद्दापयेत् ॥ ४८॥

(६) **रामचन्द्रः**। तैस्तैरूपायैः अधमर्णिकं संगृह्य नियम्य दापयेदित्यर्थः॥ ४८॥

**धर्मेण व्यवहारेण छलेनाचरितेनच।**
**प्रयुक्तं साधयेदर्थं पञ्चमेन बलेनच ॥४९॥**

(१) **मेधातिथिः**। तत्र धर्मस्कन्धकरीत्या स्तोकं स्तोकं ग्रहणमिदमद्य इदंश्व इदं परश्वः यथा कुटुम्बसंवाहोऽस्मैवं वयमपि तव कुटुम्बभूताः संविभागयोग्या इत्यादिपठितंप्रयोगो धर्मः यस्तु निःश्वसव्यवहारेण दापयितव्यः। अन्यत्र कर्णोदकवद्धनंदत्वा कृषिवाणिज्यादिना व्यवहारयितव्यं तत्रोत्पन्नंधनं तस्माद् ग्रहीतव्यम्। यस्तु 'व्यवहारो' राजनिवेद्यस्तस्य सर्वोपायपरिक्षये योज्यत्वाच्छलग्रहणेन च गृहीतत्वात्। यस्तु साक्षान्न ददाति विद्यमानधनोऽपि स **छलेन** दापयितव्यः। केनचिदपदेशेन विवाहोत्सवादिना कटकाद्याभरणं गृहीत्वानदातव्यं—यावदनेन तद्धनं न दत्तम्। **आचरितम**भोजनगृहद्वारोपवेशनादि। **बलं** राजाधिकरणोपस्थानम्। तत्र राजा साम्नाऽप्रयच्छंतं निगृह्य च प्रपीड्य दापयतीति। नतु स्वगृहसंबंधिधनादि 'बलं', यतः "प्रकृतीनां राजा" इति पठ्यते अस्मिन्नेव प्रसङ्गे उशनसा। अन्ये तु राज्ञ एवायमुपदेश इति वर्तयन्ति राजधर्मप्रकरणात्। राजा ज्ञापित उपायैरेनं दापयेत्पराजितं स्वयं प्रतिपन्नं च। न तु सहसाऽवष्टभ्य सर्वस्वं धनिने प्रतिपादनीयः। यत उभयानुग्रहो राज्ञा कर्तव्यः सर्वस्वदाने चाधमर्णस्य कुटुंबोत्सादः स्यात्सोऽपि न युक्तः। उक्तं हि।

"नावसाद्य शनैर्दाप्यः काले काले यथोदयम् ।
ब्राह्मणस्तु विशेषेण धार्मिके सति राजनि " इति ॥

तस्मात् केचनवृद्धया संपादनीयः । कुटुम्बादधिकधनसंभवे सर्वं दापनीयः । सर्वासंभवे च 'कर्मणाऽपि समं कुर्यात्' इति । अन्यस्मिन्व्याख्याने छलाचारौ राजानमज्ञापयित्वा न कार्यौ ॥ ४९ ॥

(२) **सर्वज्ञनारायणः । धर्मेण** परस्वानादाननियमजनितपरलोकफलादिकथनेन यथाद्रिनियमनेनेतिकेचित् । **व्यवहारेण** राजसन्निधौ । **छलेन** व्याजबन्धकादिग्रहेण **आचरितेन** स्वयंप्रायोवेशेन । **बलेन** गृहपतिरोधादिना व्यस्त उक्ताः दानोपाया विशेषतया निर्दिश्यते । ॥ ४९ ॥

(३) **कुल्लूकः** । तानुपायानाह **धर्मेणत्यादि** । धर्मादिना प्रयुक्तमर्थं साधयेत्तत्र धर्मनाह बृहस्पतिः सुहृत्संबंधिसंदिष्टैः साम्ना चानुगमेन व । प्रायेण वा 'ऋणी दाप्यो धर्मएष उदाहृतः ॥ देये धनेऽधमर्णस्याविप्रतिपत्तौ व्यवहारेण । तथा च वक्ष्यति (८/५१) अर्थेपव्ययमानंत्विति । **मेधातिथिस्तु** निःस्वो यः स व्यवहरिण दापयितव्यः । अन्यत्कर्मोपकरणधनंदत्वा कृषिवाणिज्यादिना व्यवहारयितव्यः । तदुत्पन्नंधनं तस्मात्तगृह्णीयादिति त्रीण्याह बृहस्पतिः छद्मना याचितं चार्थमानीय ऋणिकाद्बली । अन्याहृतादिवाहृत्य दाप्यतेतत्र सोपधिः ॥ दारपुत्रपशून्हृत्वा कृत्वा द्वारोपवेशनम् ॥ यथार्थं दाप्यतेऽर्थं स्वतदाचरितमुच्यते ॥ बध्वा स्वगृहमानीय ताडनाद्यैःरूपम । 'ऋणिको दाप्यते यत्र बलात्कारः प्रकीर्तितः ॥ ४९ ॥

(४) **राघवानन्दः** । स्वयंवा यावत्तत्रोपायानाह **धर्मेणेति** । एतान्पञ्चलक्षयति बृहस्पतिः ॥ धर्मेणेति यथा ॥ सुहृत्संबन्धिसंदिष्टैः साम्ना वानुनयेन च प्रायेणवा ऋणी दाप्योधर्म एष तदादृतः इति ॥ व्यवहारणेति । यथायतोद्रव्यं विक्रीयऋणार्थं चैव गृह्यते ॥ तन्मूल्यमुत्तमर्णेन व्यवहारइति स्मृतः ॥ **छलेनेति** यथा ॥ छद्मना याचितं वार्थमानीय ऋणिकाद्धनी । अन्याहृतादिवाहृत्य दाप्यते यत्र सोपधिरिति । उपधिश्छलं । **आचरितेनेति** यथा दारपुत्रपशूनबध्वा कृत्वा द्वारोपसेवनम् । यदृणी दाप्यते ह्यर्थं तदाचरितमुच्यते ॥ **बलेनेति यथा** ॥ बध्वात्मगृहमानीय ताडनाद्यैरुपक्रमे । ऋणिकोदाप्यते यत्र बलात्कारः सकीर्तित इति बृहस्पत्युक्तधर्मादिना ॥ ४९ ॥

(५) **नन्दनः** । के ते पुनरुपायास्तानाह **धर्मेणेति** । धर्मेणाधमर्णाय धर्मप्रदर्शनेन । व्यवहारेण व्यवहारबलप्रदर्शनेन । छलेनोत्तमर्णकरिष्यमाणसहसा ह्यपन्यासादिना । **आचरितेन** साधनेन **प्रयुक्तम**धमर्णस्योत्तमर्णेन **प्रयुक्तमर्थं साधयेत्** । एषामुपायानां पूर्वपूर्वभावउत्तरो ग्राह्यः पाठक्रमात्समार्थ्याच्च ॥ ४९ ॥

(६) **रामचन्द्रः** । उपायान् आह **धर्मेणेति** । **धर्मेण** धर्मप्रीतियुक्तेन **वचसा** धर्मोपदेशेन **व्यवहारेण** साक्ष्यलेख्यादिना **छलेन** उत्सवादिव्याजेन भूषणादिग्रहणेन **आचरितेन** अभोजनेन च पुनः **पञ्चमेन बलेन** निगडादिबन्धेन प्रयुक्तं अर्थं दत्तं द्रव्यं साधयेत् ॥ ४९ ॥

(७) **मणिरामः।** व्यवहारसाधनोपायमाहाधर्मेणेत्यादि। प्रयुक्तमर्थधर्मादिना साधयेत्। धर्मेणचेन्नदाति तदाव्यवहारेण। व्यवहारेणापिचेन्नारेति तदाछलेनाप्यप्राप्यासौ प्राचरितेन द्वारे पुत्रपशून्हत्वा कृत्वा द्वारोपवेशनमिति। बृहस्पत्युक्तेन तस्याऽप्यभावे बलेन, ताडनादिनादापयेदित्यर्थः।। ४९।।

(८) **गोविन्दराजः।** कैः पुनस्तैरित्यत आह **धर्मेणेति** यदधमर्णस्य प्रयुक्तं धनं तद्धर्मेण 'प्रीत्या' व्यवहारेण वक्ष्यमाणेन छलेनोपाधिपूर्वकं प्रतिद्रव्यग्रहणेनाचरितेनाभोजनादिना **बलेन** गृहावरोधादिना पञ्चमेनोत्तमर्णं साधयेत्।। ४९।।

धर्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च।।

धर्मेण साम्ना अनुद्वेजयन् शनैरपियत् शपथेन वा सम्प्रतिपत्तौ तावदेवं प्रतिपत्तौ व्यवहारेण वक्ष्यति छलेन वा अनेकप्रकारेणोपायास्याचरितेन वा भोजनगृहद्वारोपवेशनादिना लोकसमाचरितेन बलेन वा स्वगृहबन्धनादिना मा भूदस्यार्थक्षयो राजसमावेशनेन।। ४९।।

**यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात्।**
**न स राज्ञाऽभियोक्तव्यः स्वकं संसाधयन्धनम्।। ५०।।**

(१) **मेधातिथिः।** उक्तस्यैवार्थस्य स्पष्टीकरणार्थः श्लोकः। न छलादिनोपायेन स्वेच्छयोत्तमर्णोऽधर्मणाद्धनं संसाधयन् राज्ञा किंचिद्वक्तव्यः—'मामविज्ञाप्य किमित्यस्मादाभरणादिस्वधनसंशुध्यर्थं व्याजेन छद्मना गृहीत्वा किं नास्मै।। ५०।।

(२) **सर्वज्ञनारायणः।** नाभियोक्तव्यस्त्वया बलकृतमिति। **स्वकमिति** धार्यमाणार्थस्य स्वीयत्वसिद्धावेवैतदिति तात्पर्यम्।। ५०।।

(३) **कुल्लूकः।** य उत्तमर्णः संप्रतिपन्नमर्थमधमर्णात् **वयं** बलादिना **साधयति** सस्वीयं धनं सम्यक्**साधयन्** अस्मास्वनिवेद्य किमिति बलादिकं कृतवानसीति **न राज्ञा** निषेद्धव्यः।। ५०।।

(४) **राघवानन्दः।** ननु स्वयं बलात्कारकरणे राजदण्डशंका स्यात्तत्राह **यइति। न।भियोक्तव्यः** एनं कदर्थीकृत्य किमति धनमस्माद्गृहीतमिति। तत्र हेतुः **स्वयं स्वंसाधयन्धनमिति**।। ५०।।

(५) **नन्दनः।** स्वयमेवस्यार्थसाधनमुत्तमर्णस्य शक्तौ सत्यां दोषावहमित्याह **यः स्वयंसाधयेदिति। अभियोक्तव्यो**दोषमारोपणीयः अत्र हेतुः **स्वकंसंसाधयन्धनमिति** संसाधयन्तीति हेत्वर्थे शतृप्रत्ययः।। ५०।।

(६) **रामचन्द्र।** **स** उत्तमर्णः **स्वकं धनं संसाधयन् राज्ञा नाभियोक्तव्यः** त्वया बलंकृतमिति नोपालम्भनीयः।। ५०।।

(७) **मणिरामः। नाभियोक्तव्यः** अस्मास्वऽनिवेद्यकिमिति बलादिकंकृतवानसीति न राज्ञा निषेद्धव्यः।। ५०।।

(८) **गोविन्दराजः। स्वयं य इति।** उत्तमर्णो व्यवहारमन्तरेण धर्मादिभिरुपायैर्वा नरैः स्वं राजनिरपेक्षमधमर्णात् धनं साधयेत्। स आत्मधनं साधयन् मदनपेक्षं बन्धनादि- कृतवानसीति एवं राजा न क्षेप्तव्यः ॥ ५० ॥

(९) **भारुचिः।** एवं च सत्यत्र स्वगृहसंरोधनादि च कुर्वन्नकार्यकारीति कृत्वा राज्ञा नाभियोक्तव्यः। उत्तमर्णप्रतिपन्नस्तावदेवं यथासम्भवमुपायैर्दाप्यः ॥ ५० ॥

**अर्थेऽपव्ययमानं तु करणेन विभावितम् ॥**
**दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥५१॥**

[ **यत्र तत्स्यात्कृतंयत्र करणं च न विद्यते ।**
**नैचोपलम्भपूर्वोक्तस्तत्र दैवी क्रिया भवेत् ॥ १ ॥** ] +

(१) **मेधातिथिः।** सत्यपि विभावके प्रमाणे यो न स्वयं प्रतिपद्यते न तस्य छला- द्युपायप्रयोगः कर्तव्यः। किंतर्हि राजैव तेन ज्ञापयितव्यः। तत्र राज्ञाऽऽकारितेऽर्थे ऋणेऽ- **पव्ययमानम**पह्नुवानं—नास्मै किंचन धारयामीति वदन्तं—**कारणेन** साक्षिलेख्यभुक्त्यात्मकेन **विभावितं** धारयामीति प्रतिपादितं दापयेदुत्तमर्णाय धनम्। **दण्डलेशं** च स्वल्पं दण्डं दण्ड- मात्रमित्यर्थः। अन्यत्र दशमं भागं वक्ष्यति। यस्तु तावद्दातुमशक्तःसोऽल्पमपि दशमा- द्भागाद्दण्डं दापयितव्यः। अथवा यः। प्रमादात्कथंचिद्विस्मृत्यापजानीते तस्यायं यथाशक्ति- दशमभागाल्पतो दण्डः। कारणं प्रमाणं त्रिविधम्। तदन्यैरिह संभवतीति परिगणितम्। तथा चाहु :—

**"यत्र न स्यात्कृतं पत्रं साक्षी चैव न विद्यते ।**
**न चोपलंभः पूर्वोक्तो दैवी तत्र क्रिया भवेत्" ॥५१॥**

(२) **सर्वज्ञनारायणः।** अर्थो विषये **अपव्ययमानं** संवृण्वानं निह्नुवानमित्यर्थः। पश्चाद्धनिकेन कारणेन विभावितमर्थंदापयेद्राजा दण्डलेशं च यावता पुनरपह्नवं न कुर्यात्। शक्तितोवित्तानुसारेण देये प्रतिज्ञाते प्रथमं विवादं कृत्वा पश्चाद्राजसभायां यद्यनुमन्यते तदा शते पञ्चभागान्दण्डयः, अर्थतंत्राप्यवह्नवं कृत्वा व्यवहारात् तं नयति तदा दशभागान् ॥ ५१ ॥

(३) **कुल्लूकः।** नाहमस्मै धारयामीति धनविषयेऽपन्हवानमधमर्णकरणेन लेख्यसाक्षि- दिव्यादिना प्रतिपादितमर्थमुत्तमर्णस्य **राजा प्रदापयेत्। दण्डलेशंच** अपन्हवे तु द्विगुणमिति वक्ष्यमाणदशमभागदण्डान्न्यूनमपि दण्डं पुरुषशक्त्या दापयेत् ॥ ५१ ॥

(४) **राघवानन्दः।** किंच **अर्थोपि। अपव्ययमानं** न धारयामीत्यपह्नुवानं। **करणेन** लेख्यादिना विभावितं निर्णीतं दापयेदर्थम् दण्दलेशंच अपह्नवे तु द्विगुणमिति वक्ष्यमाण- दशमभागाद्दण्डान्न्यूनम् ॥ ५१ ॥

(५) **नन्दनः।** उत्तमर्णेन दत्तेऽर्थे वादं कुर्वाणमधमर्णं। **करणेन** साधनेन लेखादिना विभावितं साधितं धनिकस्य कृत्स्नमर्थंराजा दापयेत्। दण्डलेशंच स्वस्मैशक्तितोदण्डदापनं

निर्धन–विषयंगुणवद्विषयं वा। करणादिसाधितार्थं दशमभागस्य दण्डत्वेन वक्ष्यमाणत्वात् ॥५१॥

(६) **रामचन्द्रः।** **अर्थे** द्रव्ये **अपव्ययमानं** निह्नवानम्। **तु** पुनः**करणेन** साक्ष्यादिना **पत्रेण वा विभावितं** प्रकटीकृतं अर्थं **धनिकस्य** राजा दापयेत् च पुनः शक्तितः शक्त्यनुसारेण अधमर्णस्य दण्डलेशः कार्यः ॥ ५१ ॥

(७) **मणिरामः। अपव्ययमानं** नाहमस्य धारयामीति धनविषये अपन्हववक्तारमधमर्णं। **करणेन** लेख्यसाक्ष्यादिव्यापिना **विभावितं** अयंधारयतीतिज्ञातं दण्डलेशं अपह्नवेद्विगुणं-मितिवक्ष्यमाणदशमांशमपि पुरुषशक्त्या **दापयेत्** समर्थेद्विगणमेवेत्यर्थः ॥ ५१ ॥

(८) **गोविन्दराजः। अर्थेविवदमानं तु करणेन विभावयेदिति।** नाहमास्मै धारयिष्यामीत्येवं धने विप्रतिपद्यमानं अधमर्णं करणेनालख्यसाक्षिशपथात्मकेन प्रतिपादितमुत्तमर्णस्य धनं दापयेत् ॥ ५१ ॥

(९) **भारुचिः।** यः पुनरितरः। तम्। करणप्रतिपादितस्य दशभागदण्डं वक्ष्यति। "ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपह्नवे तद्विगुणं तन्मनोरनुशासनं इयं तु निर्धनस्य दशभागं दातुमशक्तस्य गुणवतो वा काचिद्दण्डमात्रोच्यते व्यवस्थार्थम्। न तु निस्स्व इत्युत्सृ-ज्येत। कारणं च यः सन्दिग्धे वस्तुनि निर्णयसाधनं तत् पुनस्त्रिप्रकारम्। एवं चोशनाः पठति। "यत्र न स्यात् कृतं पत्रं न विद्यते। न चोपलम्भः पूर्वोक्तः तत्र दैवी क्रिया भवेत्" ॥ ५१ ॥

**अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ॥**
**अभियोक्तादिशेद्देश्यं कारणं वान्यदुद्दिशेत् ॥५२॥**

(१) **मेधातिथिः।** यदा राज्ञा प्राड्विपाकेन वा संसदि व्यवहाराधिकरणादिदेश उत्तमर्णाय धनमिति उक्तस्यापह्नवोपलापोधर्मेण भवति तदोमित्युक्तोधनस्य प्रयोक्तोत्तमर्णाय दिशेद्देशं साक्षिणं प्रमाणमेतंनिर्दिशेत् अन्यद्वा कारणं लेख्यादिदेशशब्देन लक्षणया धनप्रयोग-प्रदेशवर्तिनां साक्षिणामुपादानात्। कारणशब्दो सामान्यशब्दोऽपि गोबलीवर्दवत्साक्षि-व्यतिरिक्तं लेख्यादिकारणमाचष्टे। ततश्च कारणं वा समुद्दिशेदिति अस्याप्ययमेवार्थः। अथवाऽयमन्यः पाठः 'अभियुक्तो दिशेद्देशमिति'। अयं चार्थः यत्राधमर्णाः देहीत्युक्तः प्रतिजानीते नानेन धनं गृहीतं प्रतिदत्तं तु तत् इति 'यदसावभियोक्ताऽऽसीत्स एवाभियुक्तः संवृत्तः। स चाभियुक्तः संदिशेद्देशम्–'कस्मिन्देशे त्वया मे प्रतिदत्तम्' कालं च निर्दिशेत्। देशग्रहणस्य प्रदर्शनार्थत्वात्। कारणं वा समुद्दिशेत्। 'अस्ति भोः किं कारणं तव प्रतिपादने तत्समुद्दिश्य' इत्येवं ब्रूयात्। अथवा **दिशद्देशम्**–यत्तस्मिन्काले नाहं साक्ष्यादिप्रदर्शनं कारणं वेति। वाशद्वः चशद्वस्य स्थाने ॥ ५२ ॥

(२) **सर्वज्ञनारायणः।** अधर्मेणभ्य देहिधनमस्मा इति सभ्यैरुक्तस्यापह्नवे तेन क्रियमाणेऽपलापेइत्यर्थः। आदिशेत् ब्रूयात् **देशं** अत्रदेशे न त्वया गृहीतमिति। **देशमिति** कालादेर-प्युपलक्षणम्। देशेऽप्युक्ते विप्रतिपत्तौ कारणं प्रमाणं देशादन्यत् समुद्दिशेत् ब्रूयात् ॥ ५२ ॥

(३) **कुल्लूकः । उत्तमर्णस्य** धनं **देहीति** सभायां प्राड्विवाकेनोक्तस्याधमर्णस्य नास्मै धारयामीत्यपलापेसति अभियोक्ताऽर्थी देश्यं धनप्रयोगदेशवर्तिसाक्षिणं निर्दिशेत्। प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणऋणनिर्णयात्प्राक्साक्ष्युपन्यासः **अन्यद्वा** करणं पत्रादि-कथयेत् ।। ५२ ।।

(४) **राघवानन्दः ।** किंच **अपह्नवेति । संसदि** सभायां **उत्तमर्णेन** देहीत्युक्ते नोधार-यामीत्यधमर्णेन निह्नवीकृतेसतीत्यर्थः। **अभियोक्तोत्तमर्णः । देश्यं** धनप्रयोगदेशवर्तिनः **साक्षिणः । करणं** पत्रम् । **अन्यत्** मम धनेनेदं क्रीतं द्रव्यादि ।। ५२ ।।

(५) **नन्दनः ।** यदाधमर्णो युक्तार्थापह्नवं कुर्वीत तदोत्तमर्णेन कर्तव्यमाह **अपह्नवे-ऽधमर्णस्येति ।** ऋणरूपेण यन्मया तव दत्तं तन्मे देहीत्युक्तस्याधमर्णस्यापह्नवेऽर्थापह्नवे सत्यभियो**क्तोत्तमर्णो देशंदिशेत्** अस्मिन्देशेऽस्मिन्कालेऽनेन प्रकारेण मया दत्तमिति **देश-कालादिकं** ब्रूयात्। यदि तत्राप्यधमर्णोविपद्येत ततः करणलेखादिकं समुद्दिशेत् ।। ५२ ।।

(६) **रामचन्द्रः । संसदि** सभायां च **देहीत्युक्तस्य अपह्नवाङ्गीकृते** गोपिते सति **अभियोक्ता** उत्तमर्णः **देश्यं** साक्ष्यादिभ्य आदिशेत् । च पुनः अन्यत्करणं प्रमाणान्तरं उद्दि-शेद्दर्शयेत ।। ५२ ।।

(७) **मणिरामः ।** संसदि सभायामधमर्णस्यप्रपन्हवे नास्मै धारयामीति अपलापेसति अभियोक्ता उत्तमर्णः देश्यं धनदानदेशवार्त्तसाक्षिणं **दिशेत्** सभायामानयेत्। अन्य-द्वाकरणं पत्रलेखादिउद्दिशेत् कथयेत् ।। ५२ ।।

(८) **गोविन्दराजः । अपह्नव इति ।** अभियोक्ता दिशेद्देश्यं करणं वाऽन्यमुद्दिशेत। अधमर्णस्य देहीत्युक्तमर्णस्य धनमित्येवं सभायां प्राड्विवाकेनोक्तश्च न धारयामीत्यवेमपलापे सत्याक्षेपक्रोधग्रहणदेशं तत्रत्यसाक्ष्युपन्यासाद्यपह्नवत्करणं शंसेत् ।। ५२ ।।

(९) **भारुचिः ।** इदानीमर्थिप्रत्यर्थिनोर्व्यवहारसामान्ये जयपराजयकारणं अपदिश्यते गृहीतार्थापह्नवेऽधमर्णस्य (क १ त दा) देहीत्युक्तस्य प्रयोक्ता (प्राड्विवा) केन वा संसदि व्यवहारस्थानेन स्वैरकथासु अभिप्रयोक्ता, प्रयोक्तादिशेद्दानाधिकरणं देशम्। अत्र च देशग्रहणं सामर्थ्यात् साक्ष्युपलक्षणार्थम्। एवं चार्थग्र. . .ज्यमानार्थे द्रष्दृन् ब्रूयादिति यावत्। अतश्चैतदेवं, यस्मादाह—करणं वा समुद्दिशेत् पत्रसंज्ञव्यवहारस्थान एव। अतश्च गम्यते देशग्रहणं करणोपदेश. . . .गृहीतार्थप्रतिपादकमित्यस्याप्ययमेवार्थः पाठान्तरस्य। अपह्नवेऽधमर्णस्य व्याजेन देहीत्युक्तस्य संसदि प्रयोक्ता दत्तम्. . .इदानीमभियुक्तो दिशेद्देशम्। देशग्रहणं च निदर्शनात् कालार्थमपि द्रष्टव्यम्। तस्मिन् देशे काले त्वया मम प्रतिदत्तं धनमिति करणं. . .अग्रे प्रतिपादकं करणम् । भवतो धनप्रतिपादने अथवा अभियुक्तो दिशेद्दृश्यमतिदेश्यं देष्टव्यम्। यथा गृहीतं कथयेत्। अन्यदुभयत्र समानम् ।। ५२ ।।

**अदेशं यश्च दिशेत् निर्दिश्यापह्नुते च यः ॥**
**यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥५३॥**

(१) **मेधातिथिः**। उक्तमेवाधमर्णेऽपह्नुवाने धनिना राजा ज्ञापयितव्यः। ईदृशो च ज्ञापना कर्तव्या। 'अस्मिन्देशेऽस्मिन्काल इदं धनमियद्वैतेन मत्सकाशाद्गृहीतम्'। स च पृष्टो भावयति–'नैतस्मिन् देशेऽहमभवं योऽनेन च ग्रहणकाल उपदिष्टः' तदा देशो दिश्यते। अथवा देशसाक्षिणो व्याख्यातास्तान्साक्षिणो देशकालावसंभवतो निर्दिशति। निर्दिश्य देशादिकमपजानीते 'नैतन्मया' निर्दिष्टमिति **यश्चाधरोत्तरानर्थान्पौर**स्त्यानौपरिष्टांश्च **विगीतान्**विरुद्धानभिहितान्**नवबुध्यते**। यद्वा पूर्ववक्तयव्यं अपरस्माद्वक्ति यत्परतस्तत्पूर्वं क्रमभेदं च वचनगतमात्मनो नानुसंधत्ते। 'हीनः स इति निर्दिशेदिति' सर्वत्र क्रियानुषङ्गी भविष्यतीति ॥ ५३ ॥

(२) **सर्वज्ञनारायणः**। **अदेशं** यत्र ऋणिकगमनं संभाव्यते तथा एकान्तादि। तथा उक्त्वा देशादि पश्चान्न मयैतदुक्तमित्यपह्नुते तथा **अधरोत्तरान्** पूर्वोत्तरवाक्यानि स्वान्येव यानि तदर्थान् विपरीतान् विरुद्धान् **बुध्यते** ॥ ५३ ॥

(३) **कुल्लूकः**। अपदिश्येति असंभाव्यइति ब्रूहीत्यादि अदेश्यम्। यत्र देशेऽधमर्णस्य ऋणग्रहणकाले सर्वदावस्थानं न संभवतीति निर्दिश्य चादेशादिकं नैतन्मथा निर्दिष्टमित्य-पनयति यश्च पूर्वोक्तानर्थस्विर्थान्स्वोक्तान्विरुद्धान्वावगच्छति यश्च ममहस्तात्सुवर्णस्य पलमनेन गृहीतमिति निर्दिश्य मत्पुत्रहस्ताद्गृहीतमित्येवमादिना यः पुनरपसरति यश्च सम्यक्प्रतिज्ञातमर्थं कस्मात्वया रात्रावसाक्षिकं दत्तमित्येवमादिप्राड्विवाकेन पृष्टः सन्न समाधत्ते यश्च संभाषणानर्हनिर्जनादिदेशे साक्षिभिः सहान्योन्यं संभाषते यश्च भाषार्थस्थिरी-करणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्ननेच्छेत् यश्च निष्पतेत् उक्तांश्च व्यवहारा-न्पुराऽनाख्याय यथा स्थानात्स्थानांतरं गच्छेत् यश्च ब्रूहीत्युक्तो न किंचिद्ब्रवीति उक्तसाध्यं न प्रमाणेन प्रतिपादयति, पूर्वंसाधनमपरं साध्यं तद्योन जानाति, असाधनमेव साधनत्वेन निर्दिशति, असाध्यानेव नानेन शशशृंगधनुर्देवमित्यादिना व्यत्ययेत् निर्दिशति।

(४) **राघवानन्दः**। किंच अदेश्यादिषड्भिश्श्लोकैरधमोत्तमर्णयोः पराजयहेतूनाह। **अदेश्यं** उत्तमर्णादृणग्रहणकाले तद्देशावर्तिनमपि साक्षित्वेनोपदिशतिवदत्युत्तमर्णः। तथाः- **निर्दिश्य** देशादिस्वरूपं पुनर्मया नोक्तभित्यपलपति। अर्थानधरोत्तरान् किं तद्वस्त्विति पृष्टः पूर्वोत्तरविकलान् **विगीतान्** संख्यादिना स्वोक्तविरोधान्नावबुध्यते न जानाति **उत्तमर्ण** इति शेषः ॥ ५३ ॥

(५) **नन्दनः**। हीनलक्षणं पञ्चभिः श्लोकैराह **अदेयं यश्चेति**। **अदेयं** दानादान-योरयोग्यं देशकालादिकं निर्दिश्यापह्नुते नैवं मयोक्तमिति निर्दिष्टापह्नुते। **विगीताद्वि-**इतिपन्नान् स हीयत इति वक्ष्यमाणेन संबन्धः ॥ ५३ ॥

(६) **रामचन्द्रः**। पराजितस्य लक्षणमाह चतुर्भिः **अदेश्यमिति यः** अधमर्णः **अदेश्यं** असाक्षिकं **दिशति** कथयति। **च** पुनः **अदेश्यं** असाक्षिकं **निर्दिश्य** कथयित्वा **अपह्नुते** निह्नुते **च** पुनः **अधरोत्तरानर्थान्** पूर्वापरानर्थान् कार्याणि **विगीतान्** विरुद्धान् **नावबुध्यते** न जानाति ॥ ५३ ॥

(७) **मणिरामः**। यश्चअर्थीअदेश्यमित्यादि प्रकारेणअर्थसाधनं कर्तुर्नशक्नोतिस तस्मादर्थात् साध्यादर्थात् हीयते नतद्द्रव्य-श्लोके प्राप्नोतीतिचार्थेनान्वयः। श्लोकचतुष्टय-विवरणं यथा। अदेश्यं असाक्षिणंदिशति। ममसाक्षीनास्तीतिवदतिसः। यश्च निर्दिश्य। पह्नुते साक्ष्यादिकमस्तीति प्रथमत उक्तंमया नोक्तमिति पुनर्वदतिसोपि। **यश्च निर्दिश्य** अधरोत्तरानर्थान् विगीतान् विरुद्धान् नावबुध्यते। मयापूर्वकिमुक्तम् कथं किं वदामीत्यज्ञात्वैव। पूर्वोक्तविरुद्धंवदति सोऽपि॥ ५३ ॥

(८) **गोविन्दराजः**। अदेशं यश्च दिशति निर्दिश्यापह्नवीति चेति। अपदिश्येति। असंभाव्येति। ब्रूहीति। अभियोक्ता दिशेदित्युक्तं तत्र योऽर्थी तथाविधं देशमपह्नवादिकं निर्दिशति यत्र दानग्रहणे न संभाव्येते अधमर्णस्य वा तदानीं तत्रापस्थानं संभवतीति यश्चादे-शादिकं निर्दिश्य न तन्मया निर्दिष्टमित्येवं पश्चादपजानीते यो वा पूर्वं पश्चादुक्तानर्थान् परस्परविरुद्धान्नावगच्छति यश्चानेन मम हस्तात्सुवर्णं गृहीतमित्येवं निर्देष्टव्यं निर्दिश्य एतत्पत्रेण गृहीतमित्येवमादिना पुनरपसरति यो वा प्रतिज्ञाकालोपन्यस्तमर्थं कस्मात्पुनस्तथा रात्र्यादौ दानग्रहणं कृतमित्येवमादिरूपेण पूर्वपक्षविस्तारकाले प्राड्विवाकेन सम्यक् पृष्टः सन्नन्तर्धत्ते यश्च संभाषणानर्हे उपह्वरादौ देशे साक्षिभिः परस्परं भाषते यश्च साक्षिप्रश्नं क्रियमाणं नो गच्छति वा सभातः प्रतिवादिसंनिहित हठादुत्प्लुत्य गच्छति यथास्मिन्पूर्वपक्षे किं ब्रूहीत्युक्त उत्तरं न ब्रूयात यो वा प्रतिज्ञातं साक्षिभिःर्न विभावयेत् पूर्वं वा साक्षिगतं न जानीयात् स्वगतस्वयञ्चाधरोत्तराणि व्यक्तत्वात्स तस्माद्व्यवहाराद्धीयते ॥ ५३ ॥

(९) **भारुचिः**। अदेश्यं ग्रहीतुर्यश्च दिशति अदेश्यं निर्दिश्याहृते च यः देशं देश्यं वा। यश्चाधरोत्तरानर्थान् देशादन्यानपि कालद्रव्यरूपसंख्यान्विगीतान् पूर्वोत्तरविरुद्धान् नावबुद्धचते, यो देहीत्यनन्तरमिति निर्दिशेतिवक्ष्यत्यर्थिनमितरंमनितरंवा ॥ ५३ ॥

**अपदिश्यापदेश्यं च पुनर्यस्त्वपधावति।**
**सम्यक्प्रणिहितंचार्थं पृष्टः सन्नाभिनन्दति ॥५४॥**

(१) **मेधातिथिः**। **एवापदेशः**। तमपदिश्य कथयित्वा **पुनः** पश्चादपधावत्यपसरति–'नैतौ देशकालौ मम निश्चितौ'। यावत्सुदेशकालोऽवधारयति तावदयं मह्यमिति' पश्चाद्ब्रवीति। सोऽपि तस्मादर्थाद्धीयते।

**सम्यक् प्रणिहितं चार्थ**मनाकुलं निश्चितमुक्तं तदा पृच्छ्यते तदाऽनेनोक्तं तत्र किं ब्रवीषि केन वा प्रमाणेन स्वपक्षं साधयसीति पृष्टो न संधत्ते कथान्तरं प्रस्तौति–'विचारा-वसानेन किल मे पराजयो भवतीति कालमुपक्षिपामीति'–तस्यापि पराजय एव। अथवा-

ऽपदेशो व्याजस्तमपदिश्योपन्यस्य योऽपसरत्यधुना मे महती पीडा समुत्पन्ना न शक्नोमि प्रतिवक्तुमलीकादिना वा प्रस्थितः सोऽपि हीयते ।। ५४ ।।

(२) **सर्वज्ञनारायणः।** तथा बहुविधं **अपदिश्य** उक्ता पुनः स्वयमेवावधारणादय-मेवात्र हेतुर्ग्राह्यइति। प्रणिहितं विचारितम् ।। ५४ ।।

(४) **राघवानन्दः।** किंच **अपेति**। देश्य एवोपदेश्यस्तमपदिश्योक्त्वा **अपधावति** पलायते। पुनर्वदति मद्धस्तात्सुवर्णंगृहीतमित्युक्त्वा मत्पुत्रहस्ताद्गृहीतमितिवा सोऽपि तस्मा-दर्थात्प्रहीयतइत्यनुवादः। अपिच सम्यक्प्रणिहितं कस्मात्त्वयेदमपहसितमितिप्राड्विवाकेन **पृष्टः सन् नाभिनन्दति** न समाधत्ते प्रमाणोपन्यासपुरःसरम् ।। ५४ ।।

(५) **नन्दनः।** **अपदेश्यमपदिश्य** वक्तव्यमुक्त्वा तत्साधने यः **पुनरपधावति** अपसरति। पूर्वंस्वयमुपन्यस्तंसदस्यैः सम्यक्प्रणिहितमवधृतमर्थं तैः पृष्टः **सन्नाभिनन्दति** नसम्यकृतया-बुद्धमिति वदतिसोऽपि हीयत इति संबन्धः ।। ५४ ।।

(६) **रामचन्द्रः।** अपदिश्यापदेश्यं कार्याकार्यं न जानाति वाच्यावाच्यंवा न जानाति। **पुनः यः पुनः धावति** स्थानात्स्थानान्तरं गच्छति सम्य**क्प्रणिहितमर्थं** सम्यक्-प्रकारेणदत्तंद्रव्यं पृष्टः **सन्नाभिनंदति** न कथयति ।। ५४ ।।

(७) **मणिरामः।** यश्चअपदेश्यं-मम हस्तात्सुवर्णस्य पलमनेनगृहीतमिति निर्दिष्टम् **अपदेश्य** कथयित्वामत्पुत्रहस्ताद्गृहीतमित्यादिना पुनः अपधावति। अपसरतिसोपि। यश्च **सम्यक् प्रणिहितं** सम्यक् प्रतिज्ञातं अर्थं त्वयारात्रौकथमसाक्षिकं दत्तमिति प्राड्विवाकेन पृष्टः सन् न अभिनंदति न समाधत्तेसोपि ।। ५४ ।।

(९) **भारुचिः।** अपदिश्यापदेशं वा पुनर्यस्त्वपधावति। अन्यथा ब्रवीति। अनेन मम हिरण्यं गृहीतं इत्यपदिश्य पक्षान्तरे पुत्रं भृत्यं वा निर्दिशति। कस्मिंश्चित् काले देशे वा व्यवहारस्त्वया कृत इति। यदेवमादि पृच्छता राज्ञा प्राड्विवाकेन वा तत्सम्यक् पृष्टः नाभिनन्दति, माभूदिति विचारणया परमार्थदर्शनम् ।। ५४ ।।

**असंभाष्ये साक्षिभिश्च देशे संभाषते मिथः ।।**
**निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् ।। ५५ ।।**

(१) **मेधातिथिः।** असंभाषणार्हे **देशे** गह्वरादौ **साक्षिभिः** सह **संभाषत** एकाकी तद्भेदाशङ्कया **निरुच्यमानं** पृच्छ्यमानं निरूप्यमाणं वा **प्रश्नं** विचारवस्तु नेच्छति— किंचिद्राजकार्यमुद्दिश्य राजपुत्रामात्याद्यनुग्रहेण च काललाभं करोति। **यश्चापि निष्पतेत्।** वक्ष्यमाणमेव क्रियापदं 'स हीयत' इति। यदेवोक्तं 'पुनर्यस्त्वपधावतीति' स एवार्थः 'यश्चापि निष्पतेदिति'। पुनर्वचने प्रयोजकमुक्तम्। अत्यन्तपौनरुक्त्यं मा भूदिति कश्चिद्विशेष आश्रयितव्यः ।। ५५ ।।

(२) **सर्वज्ञनारायणः। असंभाष्ये** संभाषानर्हे देशे एकान्तादौ। स्वकीयं **प्रश्नं** परेण निरुच्यमानमाकलय्य नेच्छेत्तदनिच्छाविभावकं कोलाहलादिकुर्यात्। **निष्पतेत्** सभातः पलायेत ।। ५५ ।।

(४) **राघवानन्दः**। किंचान्यत्। **असंभाष्ये** संभाषानर्हे निर्जनादिदेशे **साक्षिभिः संभाषते**सोपि तस्मादर्थाद्धीनः। यश्चापि निरुच्यमानं प्राड्विवाकेन प्रश्नं नेच्छेदुत्तरंदातुम्। अथ च **निष्पतेत्** न युक्तं स्थातुमितिनिष्क्रामेत्सोऽपिहीनः। एतद्द्वयोः साधारणम् ॥ ५५ ॥

(५) **नन्दनः**। साक्षिभिरसंभाव्ये। मिथोदेशे रहस्य इति यावत्। निरुच्यमाननुसृत्य विकल्पेनोच्यमानम्। प्रश्नंपृष्टमर्थम्। नेच्छेन्नसंवदेत्। निष्पतेत्सदसोपसरेत्। सोपि हीयत इति संबन्धः ॥ ५५ ॥

(६) **रामचन्द्रः। असंभाष्ये देशे** अवाच्ये देशे साक्षिभिर्मिथोयः **संभाषते। च** पुनः **निरुच्यमानं** वाच्यमानं प्रश्नं**दा नेच्छेत्** न कथयति। **च** पुनः यः **निष्पतेत्** पलायते ॥ ५५ ॥

(७) **मणिरामः।** यश्च **असंभाष्ये देशे** एकांते साक्षिभिः सहमिथः **संभाषते** सोपि। यश्चव्यवहारस्थिरीकरणाय प्राड्विवाकेननिरुच्यमानप्रश्नं नेछेत् न शृणुयात् सोपि। यश्च **निष्पतेत्** विवादनिर्णयमकृत्वैव देशांतरं गछेत् सोपि ॥ ५५ ॥

(९) **भारुचिः**। असम्भाव्ये साक्षिभिश्च देशे सम्भाषते मिथः, निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत्। सभातोऽन्यत्रोपह्वरे एकाकी साक्षिभिः सह सम्भाषते मिथः असावपि साक्षिभेदाशङ्कया जीयते। साक्षिणश्च पृच्छ्यमानान्नेच्छति केनचिद् याजेन व्यवहारगतेनैव राजतन्त्रोऽनुग्रहप्रदर्शनेन वा साक्षिप्रश्नकाले कार्यान्तरव्यासङ्गेन केनचिद्व्यवहारस्थानान्निष्पत्तिः राजोपकारप्रदर्शनेन वेत्युक्तं तस्मादर्थात्स हीयत इत्येवं वक्ष्यति ॥ ५५ ॥

**ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ॥**
**न च पूर्वापरं विद्यात्तस्मादर्थात्स हीयते ॥५६॥**

(१) **मेधातिथिः**। उक्तार्थ एव श्लोकोऽयं श्लोकान्तरैर्दृश्यते। पुनर्वचने च प्रयोजनमुक्तम्—'बहुकृत्वोऽपि पथ्यं वेदितव्यमिति'। अक्षरार्थस्त्वर्थिना निःशेषिते पूर्वपक्षे प्रतिवादी 'ब्रूह्यस्मिन्वस्तुनीति' पृष्टो यदि न ब्रूयात्पुनः पुनः पृच्छ्यमानोऽपि। यो हि सम्यगुत्तराभावान्मिथ्योत्तरवादित्वादमुनैव मे पराजयो भवति तूष्णींभूतस्य तु मे संशय एव पराजये इत्यनया बुद्ध्या नोत्तरं ददाति। सोऽपि हीयते। वक्ष्यति चात्र कालावच्छेदम् "न चेत्त्रिपक्षात्प्रब्रूयादिति" (५८)। सद्यो ह्याक्रुष्टस्य पूर्वपक्षार्थानवबोधादुत्तराप्रतिपत्तेर्युक्तं कालहरणम्। अत्र च दिवसैः पञ्चभिर्दशभिर्द्वादशभिर्वेषदोषवदतस्त्रिपक्षसमाप्तिः न त्वियन्तं कालं तूष्णींभाव एव। यश्चातोऽधिकः कालः—'संस्थितोऽपि कश्चित्संवत्सरप्रतीक्षेताप्रतिभायामिति' (गौतम १३/२८)—न युक्तमादर्तुं यतोऽप्रतिभा यदि प्रतीक्षाकारणं सा चेत् संवत्सरादूर्ध्वं भवतीति किंमित्यकारणम्। न चैष नियमः केनचित्प्रकारेणावगम्यतेऽप्रतिभावतः संवत्सरेण प्रतिभा भवतीति। तस्मात्तावन्त्येवाहान्युपेक्षा युक्ता यावद्भिः पूर्वपक्षार्थावधारणं भवत्युत्तरं च प्रतिभाति। एतच्चामुकस्य मन्दधियोप्येतावन्मात्रैरहोभिर्भवतीति नाधिकं कालमुपेक्षणीयम्। पूर्वपाक्षिकस्य तु तदहरेव स्वार्थविनिवेशनं युक्तम्। यत इदमेष मे धारयतीदं वाऽनेन ममापकृतमिति निश्चितं तस्य भवति। स्वेच्छया ह्यसौ प्रवर्तते। केवलं तस्मै स्वपक्षमावेदयते किमित्यनिश्चितः स्वार्थो भवति-

उत्तरपाक्षिकस्त्वविदितसंबन्धस्तदानीमेव राजपुरुषैरानीयमानः कथमिव स्वपरपक्षौ निश्चिनुयात्। पक्षद्वयनिरूपणं हि तदस्य तदानीमेवापतति। नान्यथोत्तरपाक्षिको भवति। तस्मात्पूर्वपाक्षिकस्य साध्ये वस्तुनि तदहः पूर्वपक्षसमाप्तिर्द्विदिवसलाभो वा। उभावपि चैतौ पक्षौ स्मृत्यन्तरपरिगृहीतौ। तथा ह्याह–"सुनिश्चितबलाधानः पूर्वपक्षो भवेत्सदा। दशाहं द्वादशाहं वा स्वपक्षं परिशोधयेत्॥" इति। तथेदमपरम् (याज्ञ. व्य. ७) "ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्।" सा तु संवत्सरपरीक्षा सा मूलासंभवादप्रमाणम्। न हि व्यवहारस्मृतावष्टकादिवद्वेदमूलता शक्यते वक्तुम्–अकार्यरूपत्वादर्थस्य। प्रमाणान्तरविषयत्वे च तदसंभवः प्रतिपादितः। एषाऽपि पूर्वपक्षोपेक्षा न सर्वत्र। यत उक्तम् (याज्ञ. व्य. १५)।

**"साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्।**
**विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः॥" इति।**

साहसादौ हि चिरमुपेक्ष्यमाणेऽपरमाराध्नुयात्। अतः सद्यो विवादो विधीयते। न चात्रास्मृत्यादयोऽनुत्तरहेतवः संभवन्ति। साहसादिकारणं हि तदानीमेव राजानं वेदयेत्। तीव्रसंवेगता हि तत्र भवति। वस्त्राद्यपहारेण तदुपेक्षायां रागशङ्का भवति। साक्षिणस्तत्र यदृच्छया संनिहिता अपि भवन्ति। ते हि देशान्तरं गता नामजात्यादिभिर्न विज्ञायन्ते। ततः स्वाभाविकप्रमाणाभावः। किंच ऋणादानादिषु कदाचिदितरेतरं संदधते। न तत्र राज्ञो हस्तप्रक्षेपः। प्रायेण च संशुद्धौ नानुसृतिरुपयुज्यते तदा कियद्दत्तमिति। साहसकारी तु राज्ञाऽवश्यं निग्रहीतव्य इतरेण संधीयमानोऽपि। तस्मादृणादिषु कालहरणं साहसादिषु सद्य इति स्थितम्। तदुक्तम्–

**"गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि।**
**ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया॥"**

यदा संकुलः पूर्वपक्षोभवति तदा गहनत्वान्न शक्यते ग्रहीतुम्। अनाकुलो विलुप्तक्रमोऽपि गृहीतः प्रतिवचन काले महत्वान्न शक्यते सर्वेण स्मर्तुमिति स्मृत्यन्तरस्यार्थः।

**उक्तं न च विभावयेत्।** साध्यं वस्तु निर्दिश्य न साधयति साधनस्याभावात्, विपक्षे वा भावात्। **न च पूर्वापरं विद्यात्।** उक्तमेतत्। **तस्मादर्थाद्**व्यवहारवस्तुनः **स हीयते** पराजितो भवतीत्यर्थः॥ ५६॥

अपसाक्षित्वम्। एको लुब्धः स्वसाक्षी स्यादिति वक्ष्यति। अन्यः शूद्रः तस्य विधिप्रतिषेधात् पाक्षिकं साक्षित्वं गुणापेक्षया। अथवा चण्डालोऽन्त्यः तथा च वक्ष्यति–'स्त्रीणां साक्ष्यं स्त्रियः कुर्यु'रित्यशूद्रानभिधाया'न्त्यानामन्त्ययोनय' इति वर्णापशब्दमात्रं वा। विकलेन्द्रियः विसंज्ञात्वात् प्रतिषिद्धयते॥ ५६॥

(२) **सर्वज्ञनारायणः। न ब्रूयात्** चिन्तयन्नेव तिष्ठेत्। **उक्तं** स्वोक्तं **न विभावयेत** न व्याकुर्यात्। नच **पूर्वापरं** एतत्प्राग्वाच्यमेतत्पश्चादिति **जानीयात्। तस्मात** प्रक्रान्तादर्थात्॥ ५६॥

(४) **राघवानन्दः।** किंच। **ब्रूहीत्युक्तो न ब्रूयात्।** वदतोऽवश्यं पराजय इति तूष्णींतिष्ठेत्। **न विभावयेत्।** **पूर्वापरं** साध्यं **न विद्यात्** यथावस्तु न विजानीयात्। अर्थात् शशशृङ्गधनुर्भवतीतिसाध्यत्वेन निर्दिश्य **तस्मादर्थात्**व्यवहारवस्तुतो**हीयते** पराजितो भवतीति। एतदुत्तमर्णस्य ॥ ५६ ॥

(५) **नन्दनः। न विभावयेत्पूर्वापरं** न त्र विद्यात्। इदं **पूर्वमुक्त**मिति च **न विद्यात् हीयते** जीयते ॥ ५६ ॥

(६) **रामचन्द्रः।** त्वं **ब्रूहीत्युक्तः** सन्योन **ब्रूयात्।** च पुनः उक्तं स्ववचनं **नविभावयेत्।** च पुनः पूर्वापरं कार्यं योन विद्यात्सपुरुषस्तस्मादर्थाद्धीयते हीनो भवतीत्यर्थः ॥ ५६ ॥

(७) **मणिरामः।** उक्तं स्वोक्तं **न विभावयेत्** न प्रमाणेन प्रतिपादयेत् सोपि। यश्च **पूर्वापरं** पूर्वं साधनं अपरं साध्यमिति न विद्यात् न जानाति असाधनमेव साधनत्वेन निर्दिशति असाध्यमेव साध्यत्वेन निर्दिशति सोपि। तस्मादर्था**द्धीयत** इति सर्वत्रान्वेत्तीत्यर्थः ॥ ५६ ॥

(९) **भारुचिः।** ब्रूहीत्युक्तश्च न ब्रूयात् प्रतिपतनकाले पराभवा.....भावयेत् साक्षिभिः। अभावाद्वातेषां विवक्षा सम्यग्दर्शनाद्वा न च पूर्वाप(रतो? रं) विद्यात् साक्षितातम्। अन्यत्र व्यवहारगतमुक्तमेव तस्मादर्थात् स हीयते ज्ञातारः सन्ति....कारणैरेतैर्हीनन्तमिति निर्दिशेत्। सर्वथा साक्षिभ्योऽन्यैः प्रतिज्ञातार्थप्रतिपादकैः कारणै (रपि रवि) भाव्यमाने वस्तुनि साक्षिणः शरण....णैर्यथोक्तैरसत्प्रत्ययवचनैर्हीनमित्येव निर्दिशेत्। अर्थिनमितरं वा उभयतः सम्भवात् पराजयहेतूनाम् ॥ ५६ ॥

**ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ॥**
**धर्मस्थः कारणैरेतैर्हीनं तमिति निर्दिशेत् ॥ ५७ ॥**

(१) **मेधातिथिः। ज्ञातारः** साक्षिणः पुरुषा मम **सन्ती**त्युक्त्वा यदोच्यते कथ्यतामिति तदा तूष्णीक आस्ते–न तान्देशनामजातिर्भिविशेषणैः कथयति तदा **एतैः** प्रत्येकं पूर्वमुक्तै**कारणैरिह हीनोऽसौ** व्यवहाराद्भ्रष्ट इति। **धर्मस्थो** धर्माधिकरणस्थः प्राड्विवाको **निर्दिशेन्नि**श्चितं ब्रूयाज्जितोऽयमिति। यथैव विपक्षबाधकप्रमाणावृत्त्या पराजय एवं स्वपक्षसाधनाभावादपि। अभावनिश्चयश्च पुनः पुनरवसरेऽनुपन्यासात्कारणान्तरस्य चानुपन्यासेऽभावादिति। **ज्ञातार** इति तृन्नन्तमेव। तत्रेदमिति द्वितीयान्तं युज्यते। "खलर्थतृनामिति" (पा. सू. २/३/६९) षष्ठीनिषेधात्। **हीनं तमिति** द्वितीयान्तः पाठः। **इति** शब्दः प्रकारार्थो द्रष्टव्यः। एभिरुक्तैः प्रकारैरन्यैश्चैवंविधैर्हीनं तन्निर्दिशेत्। यदा तु वाक्यार्थपरामर्शः तदा हीनोऽसाविति पाठः। वाक्यार्थस्य कर्मत्वाद्द्वितीयाया अभावः। एते पराजयहेतवः। न त्वाकारेङ्गितादिवव्यभिचारिणः। यो हि पुनः पुनर्विचारावसरे न सन्निधीयते संनिहितो नोत्तरं प्रतिवक्ति तत्र निश्चितमिदं भवति नास्य जयहेतुरस्तीति। यदि च सर्वदैवानुत्तरवादिनं न पराजयेद्राजा ततो व्यवस्थाभङ्ग आपद्यते। पौर्वापर्यानवबोधस्त्विङ्गितादिवद्रष्टव्यः। **यः** सर्वकालं वाग्मी प्रगल्भः प्रतिपत्तिमांस्तस्येङ्गितादयोऽन्यथाभवतः पराजयहेतौ प्रमाणान्तरेणानिश्चितेऽपि लिङ्गदर्शनस्थानीया उपोद्वलका भवन्ति ॥ ५७ ॥

(२) **सर्वज्ञनारायणः।** एतैः कारणैः पूर्वोक्तैर्हीनं पराजितं **निर्दिशेत्** कथयेत् ।। ५७ ।।

(३) **कुल्लूकः।** **साक्षिणो मम** विद्यन्तइत्युक्त्वा तान्निर्दिशेत्युक्तो योन निर्दिशति तं पूर्वोक्तैरेभिः कारणैर्धर्मस्थः प्राड्विवाकः पराजितंकथयेत्। ज्ञातारः सन्तिमेत्युक्त्वा इति वा पाठः। अत्रछान्दसमिकारस्य पररूपत्वम् ।। ५७ ।।

(४) **राघवानन्दः।** किं च **साक्षिण** इति। **ज्ञातार** इति पाठान्तरम्। **साक्षिणः सन्ति मे ममाप्यन्य**साक्षिण इति। मयान गृहीतमित्यर्थे तर्हि दिशानयेत्युक्तोनानयति। मेत्युक्तेत्यार्षः। **धर्मस्थः** प्राड्विवाकः कारणैरुक्तैः **हीनं** पराजितं **निर्दिशेत्** जानीयात्। तमपीत्यपिशब्दादधर्मणमपि ।। ५७ ।।

(५) **नन्दनः।** अविद्यमानलेख्यादिसाधनेऽर्थे **ज्ञातारः** साक्षिणः सन्तीत्युक्त्व **तान्** ज्ञातॄन्। **दिश** दर्शयेति सभ्यैरुक्तोऽनेन साक्ष्यनुदेशाख्येन हेतुना **धर्मस्थो** धर्मासनस्थः। प्रत्यर्थिदत्तोत्तरस्याभियोगस्याप्रतिवचने ।। ५७ ।।

(६) **रामचन्द्रः। ज्ञातारः मे ज्ञातारः सन्ति इति उक्त्वा आदिश** कथय **धर्मस्थः** यः उक्तः सन् **नादिशेत्** नकथयेत् एतैः **कारणैस्**तमपि हीनंपराजितं निर्दिशेत्कथयेत् ।। ५७ ।।

(७) **मणिरामः। साक्षिण इति।** साक्षिणोऽत्र मम विद्यन्ते इत्युक्त्वा **ब्रूहि** तानित्युक्तो यस्मान्न ब्रूयात् तं पूर्वोक्तैरेभिः पराजयकारणैः धर्मनिर्णयप्रवृत्तः प्राड्विवाको जितोऽयमिति कथयेत् ।। ५७ ।।

(८) **गोविन्दराजः। अभियोक्ता** अर्थीसन् राजस्थानेनिवेद्य कथयित्वा पश्चाद्व्यवहार-दर्शनसमयेन **ब्रूयात्** सः गुरुव्यवहारे वध्यः लघुव्यवहारे दंडचश्च धर्मतः स्यात्। प्रत्यर्थी-पुनः चेत् यदि त्रिपक्षमध्ये न ब्रूयात् तदाधर्मत एव पराजितः स्यात् न तुछलेन ।। ५७ ।।

**अभियोक्ता न चेद्ब्रूयाद्वध्यो दण्डयश्च धर्मतः ।।**
**न चेत्त्रिपक्षात्प्रब्रूयाद्धर्मं प्रति पराजितः ।। ५८ ।।**

(१) **मेधातिथिः।** अभियोक्ताऽर्थी राजान्तिकं कश्चन गत्वा ब्रूयात्।
तदा निष्प्रयोजनाद्वन्ध्यो **दण्डयश्च।** दण्डबन्धने दण्डपरिमाणे च गुणवत्तां प्रत्यर्थिन आह्वानेन च हानिमपेक्ष्य कल्पनीयानि। अतस्तदहरेवार्थिना विवदितव्यम् प्रत्यर्थी तु ना **चेत्त्रिपक्षाद्ब्रूयादि**त्यर्थः तदा नासौ दण्डयो बन्धयितव्यो वा। किं तर्हीयता कालेनोत्तरे सत्यपराजित एव। **धर्मं प्रति।** धर्मत एवायं पराजयो न छलमित्यर्थः। **त्रिपक्षादिति** पात्रादिषु द्रष्टव्यस्तेनेकाराभावः। अर्थतत्त्वमस्य श्लोकस्यास्माभिः प्राङ्निरूपितम् ।। ५८ ।।

(२) **सर्वज्ञनारायणः।** नचेद्ब्रूयात् ज्ञातॄन् साक्षिणः ज्ञातृपदं प्रमाणपरम्। वध्य-स्ताडनादिना अभियुक्तेनाप्रमाणे वाच्ये विशेषमाह नचेदिति। त्रिपक्षादर्वाङ्नचेत्सा-क्षिणोब्रूयात्तदा **सः धर्मंप्रति** धर्मानपेक्ष्य **पराजितो भवत्यतो** वध्योदडचश्चेत्यर्थाज्जातम्।

(३) **कुल्लूकः।** योऽर्थीसन् राजस्थाने निवेद्य भाषायां न ब्रूयात्तदा विषयगौरवा-पेक्षया वध्योलघुनि विषये **दण्डयश्च धर्मतः** स्यात्प्रत्यर्थी पुनर्यदि पक्षत्रयमध्ये न ब्रूयात्तदा धर्मत एव पराजितः स्यात् न तु छलेन ।। ५८ ।।

(४) **राघवानन्दः।** **अभियोक्ता** अर्थीसन् राजस्थाने निवेद्य राजपुरुषमानीय व्यवहारास्पदं भाषांनब्रूयात्। वध्य इत्यादिविकल्पस्तु विषयगौरवाद्यपेक्षया। **त्रिपक्षात्पक्ष**त्रयमपि प्रत्यर्थी वा पुनर्न ब्रूयात् साक्षी वा न ब्रूयात् तदापराजित इति **सोपि दण्डार्हः** ॥ ५८ ॥

(५) **नन्दनः।** नन्दनः। अभियोक्तारं प्रति राज्ञः कर्त्तव्यमाह **अभियोक्ता न चेदिति।** प्रत्यर्थिदत्तोत्तरो**भियोक्ता** तत उत्तरं चेद्ब्रूयाद्वध्योर्हिस्यः। दण्ड्यो दण्डार्हः। **तदृणापेक्षया** विकल्पः। तत्र कालावधिरुत्तरार्द्धेनोक्तः। धर्मशब्दौ व्यवहारवचनौ ॥ ५८ ॥

(६) **रामचन्द्रः।** अभियोक्ता उत्तमर्णः न ब्रूयात् स धर्मतोवध्योदण्ड्यश्च। प्रत्यर्थी-चेद्धर्मं प्रति त्रिपक्षान्न ब्रूयात्सपराजितो ज्ञेयः ॥ ५८ ॥

(७) **मणिरामः।** अभियोक्ता **न चेद्ब्रूयात्**। न लेखयेद्व्यवहारम्। राज्ञः स्वकार्य-निवेदनान्तरमेव तत्रायं बन्धनार्हो दण्डार्हश्च स्यात्। गुणवद्व्यवहारवस्त्वपेक्षया चैतयो-र्नियोगविकल्पसमुच्चयाः प्रकल्प्याः। च शब्दाद्वधदण्डवाग्दण्डचोरपि यथोक्तसामर्थ्यादत्र-सम्भवो विज्ञेयो गुणानतिक्रमेण धर्मतः पराजितस्य सोपधत्वात् कारणान्तरतः येन सुविभा वितार्थेन ह्यर्थिना भवितव्यम्। अथ केनचित् प्रमाकरणान्तरेणायमकुटिलो निरुपधत्वा द्विज्ञायते। अतो नायं वधदण्डादिः पदार्थः स्यात्। तथा चोक्तम्-धर्मं प्रति पराजितस्य नान्यथा प्रत्यर्थिनः। इदानीमर्थिकालादन्यः प्रतिवचनकालो निर्दिश्यते। न चेत् त्रिपक्षात् प्रब्रूयात् प्रतिब्रूयादित्यर्थः। अतो बध्यो दण्ड्यश्च धर्मतः धर्मं प्रति पराजितः सन् नेतरथे-त्युक्तम् ॥ ५८ ॥

(८) **गोविन्दराजः। अभियोक्तेति।** योऽर्थी सद्य एव पूर्वपक्षं न ब्रूयात् तदा धर्मव्यतिक्रमतारतम्यापेक्षया वधार्हो दण्डनीयश्च स्यात्। आक्षिप्तः पुनः पक्षत्रये यदि न ब्रूयात् तदा धर्मविषये पराजितोऽन्याय्य-प्रवृत्तत्वेनाधार्मिकत्वात् ॥ ५८ ॥

**यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ॥**
**तौ नृपेणह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥५९॥**

(१) **मेधातिथिः।** येन पञ्चसहस्राणि दत्तानीति प्रमाणान्तरान्निश्चितं–लेख्यादौ तु करणे 'दश'समारोपितानि–प्रमाणान्तरं संवत्सराख्यमिति निश्चित्येदमपश्यत्केवलेन लेख्यप्रमाणेन सर्वत्र प्रवर्तमानः–छलव्यवहारीति द्विगुणं दण्ड्यः। यस्य तु विस्मृत्याऽप्य-न्यथा प्रवृत्तिराशङ्क्यते तस्य दशकं शतम्। एवमितरस्यापि। न तु सर्वापह्नवे दशभाग एकदेशापह्नवे द्विगुणमिति। किन्तु शाठ्यादन्यथा प्रतिपाद्यमानौ द्विगुणं दण्ड्यौ। विस्मृतिदारिद्रयाभ्यां दण्डमुत्तरम्। **यो यावन्तमर्थमपह्नुवीता**पजानीतेऽधमर्णः **मिथ्या यावति** विपरीतं धनं **वदेदु**त्तमर्णः–तावुत्तमर्णाधमर्णाव**धर्मज्ञौ। तद्द्विगुणं दमम्।** तदित्य-पह्नुवमानधनपरामर्शः। यावदपह्नुतं ततो द्विगुणं दमो दण्डः। **अधर्मज्ञ**ग्रहणाच्च लिङ्गा न्निश्चितछलविषयोऽयं दण्ड इत्युक्तम् ॥ ५९ ॥

(२) **सर्वज्ञनारायणः।** अत्यन्ताभिनिवेशादिप्रवृत्तौ दण्डमाह **यो यावदिति।** **निह्नुवीत प्रत्यर्थिशोधितं मयेत्यादि। मिथ्या वदेत्** नह्यधारयत इत्यर्थः ।। ५९ ।।

(३) **कुल्लूकः। यः** प्रत्यर्थी यत्परिमाणधनमपनयत्यर्थी वा यत्परिमाणधने **मिथ्या-वदति** तावधार्मिकावपह्नुतमिथ्योक्तधनाद्द्विगुणं **दण्डरूपं दापनीयौ।** अधर्मज्ञाविति वचना-त्ज्ञानपूर्वापह्नवमिथ्योक्तिविषयमिदम्। प्रमादादिनापलापमिथ्यानियोगापह्नवे द्विगुण-मिति शतदशमभागं वक्ष्यति ।। ५९ ।।

(४) **राघवानन्दः।** उत्तमर्णाधिमर्णयोर्दण्डप्रकारमाह **यइति। यः** प्रत्यर्थी **यावद्धनं निह्नुवीत अर्थीवा यावति** परिमाणे **मिथ्या भाषते** तद्द्विगुणं तौ दण्ड्यावित्यन्वयः। दमंधनदण्डम् ।। ५९ ।।

(५) **नन्दनः।** विवादिनोर्मिथ्यावचने दण्डमाह **यो यावन्निह्नुवीतेति।** यः प्रतिवादी यावद्यावन्तमेकदेशं कृत्स्नंवार्थमपह्नुवीत। **यो** वादी यावत्येकदेशे कृत्स्ने वार्थे **मिथ्यावदेत्त-**द्द्विगुणं तिरोहितार्था **द्विगुणं दण्डं दाप्यौ** दण्डत्वेन दाप्यौ। अपि शब्दात्तिरोहितमर्थं च ।। ५९ ।।

(६) **रामचन्द्रः। यः** अधमर्णः **यावन्निह्नुवीतार्थं** अर्थीवा **यावति मिथ्या** वदेत्ता-वद्धर्मज्ञौ नृपेण तस्मात्कारणात्तद्द्विगुणं दमंदाप्यौ दण्डनीयौ ।। ५९ ।।

(७) **मणिरामः।** नः प्रत्यर्थिनो वा अर्थी प्रत्यर्थी वा। तस्मादपह्नुतादभियोगाच्च मिथ्याभियोक्तारं निह्नवतं च सोपदेशं किञ्चित् प्रतिपाद्यमानं तद्द्विगुणं दापयेत् ।। ५९ ।।

(८) **गोविन्दराजः** य इति। यः प्रत्यर्थी यत्परिमाणं धनमपजानीते यत्परिमाणं वा धनमर्थी मिथ्या कथयति अधर्मप्रवृत्तौ तस्मादपह्नुतान्मिथ्योक्ताच्च धनात् द्विगुणं दण्डार्थं दापनीयः। अधर्मज्ञाविति वचनादिदमत्यन्ताभिनिवेशादिप्रवृत्तविषयम्। अभिनिवेशे त्वपह्नवे तद्द्विगुणमपि दशकं शतं वक्ष्यति ।। ५९ ।।

(९) **भारुचिः।** तथा च व्याख्यातम्। इदानीमर्थिप्रत्यर्थिनोर्वचनकालनियमार्थमिद-मारभ्यते प्रत्यर्थी। यावति यत्परिमाणंधत्ते। मिथ्यावदति अर्थी। तौअर्थिप्रत्यर्थिनौ ।। ५९ ।।

**अन्यानपिप्रकुर्वीत शुचीन्प्राज्ञानवस्थितान् ।।**
**सम्यगर्थंसमाहर्तॄनमात्यान् सुपरीक्षितान् ।।६०।।**

(१) **मेधातिथिः।** पृष्टोऽप्रयुक्तमात्मनः साधयितुमिच्छता। **साक्षिभिर्भाव्यो** विप्रतिपन्नः प्रतिपादयितव्यः। **त्र्यवरैः।** त्रय अवरे येषां तैस्त्र्यवरैः। अवरमपचया-शयमाह। यद्यत्यन्तं न्यूनास्तदा त्रयः स्युः। अन्यथा त्रिभ्य ऊर्ध्वम्। **नृपब्राह्मणसन्निधाविति।** 'ननु च तेषामेव यैर्न्यायः प्रारब्धस्तत्र तत्सन्निधान एव साक्षिप्रश्नः प्राप्तः। किमनेन नृपब्राह्मणसन्निधाविति।" नैवम्। प्रमाणपुरुषप्रेषणेनापि साक्षिप्रश्न उपपद्यत इति। साक्षात्प्रष्टव्य इति पुनर्वचनम् ।। ६० ।।

(२) **सर्वज्ञनारायणः**। पृष्टः प्राड्विवाकेन किंधारयसि नवेति। अपव्ययमानो-निह्नुवानः। कृतावस्थः कृतावस्थानः। त्रयोऽवरा अल्पीयांसोयेषांसाक्षिणांतैः॥ ६०॥

(३) **कुल्लूकः**। **धनार्थिनो**त्तमर्णेन राजपुरुषापकर्षं कृताव्हानः प्राङ्विवाकेन **पृष्टः** सन् यदा न धारयामीत्यपह्नुवानो भवति तदा नृपत्यधिकृत**ब्राह्मणसमक्षं त्र्यवरैः** साक्षिभिः त्रयोवरान्यूनायेषांतैरर्थिना भावनीयः॥ ६०॥

(४) **राघवानन्दः**। किंच **अपव्ययमानः** सन् पृष्टः प्राङ्विवाकेन **कृतावस्थः** राज पुरुषकृताव्हानः। **त्र्यवरैः** त्रयोऽवरान्यूनायेभ्यःसाक्षिभ्यः तैर्यथावत् तैर्वक्ष्यमाणविशेषण-विशिष्टैः साक्षिभिः **धनैषिणो**त्तमर्णेन भाव्यः ऋणवत्तया संभावनीयः **स ऋणं दाप्यः** इत्यध्याहार्यम्॥ ६०॥

(५) **नन्दनः**। वादिप्रतिज्ञातमर्थसभ्यैः **पृष्टस्तमर्थमपव्ययमानो**पह्नुवानः। **कृता वस्थो**यथा नापसरति तथा सभ्यैः **कृतावस्थानः** प्रतिवादी **धनैषिणा** वादिना त्र्यवरै-**साक्षिभिर्भा**वयितव्यः। प्रतिज्ञातार्थसाधनीयः॥ ६०॥

(६) **रामचन्द्रः**। **धनैषिणा** उत्तमर्णेन **पृष्टः**सन् **अपव्ययमानः** निह्नुवानः **कृतावस्थः** कृतपीडः **नृपब्राह्मणसन्निधौ** त्र्यवरैः साक्षिभिर्भवितव्यः॥ ६०॥

(७) **गोविन्दराजः**। **पृष्ट इति**। प्रत्यर्थी धनार्थिनोत्तमर्णेन कृतराजपुरुषकर्षणा-दिपरिभवः प्राङविवाकेन पृष्टो यदाऽवधारपुरुषकर्षणादिपरिभवः प्राङविवाकेन पृष्टो यदाऽवधारयामीत्येवमपह्नवानो भवति तदा राजाऽधिकृतब्राह्मणसमक्षं यद्यत्यन्तन्यूनैस्ततः त्रिभिः साक्षिभिः तत्र धनार्थिना भावनीयः॥ ६०॥

(८) **मणिरामः**। **धनैषिणा** उत्तमर्णेन **कृतावस्थः** राजपुरुषद्वाराकृताह्वानः प्राङविवाकेन पृष्टः सन् यदा प्रत्यर्थी न धारयामीत्यपव्ययमानः निह्नवंकरोति तदाः नृपब्राह्मणसन्निधौ राजाधिकृतब्राह्मणसमक्षं अपरैः त्रयादिभिः **साक्षिभिःभाव्यः** विचारणीयः॥ ६१॥

(९) **भारुचिः**। साक्ष्युपलक्षणार्थमिदं प्रकरणमधुनोच्यतेएकस्य साक्षित्वे प्रतिषेधात् द्वयोरपि साक्षित्वं त्रित्वापवादाद् भविष्यति। न केवलं त्रयाणाम्॥ ६०॥

**यादृशा धनिभिः कार्या व्यवहारेषु साक्षिणः॥**
**तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतं च तैः॥ ६१॥**

(१) **मेधातिथिः**। साक्षिलक्षणोपन्यासः श्लोकः। **यादृशाः साक्षिणो** यज्जातीया यद्गुणयुक्ताश्च **धनिभि**रुत्तमर्णै**र्व्यवहारेषु** धनप्रयोगादिषु कर्तव्यास्**तादृशान्**वक्ष्यमाणेन कथ-यिष्यामि। **यथा च ऋतं** सत्यं **वाच्यं** वक्तव्यं पृष्टैः सद्भिस्तैः—पूर्वाह्णे इत्यादि—तमपि प्रकारं वक्ष्यामीति॥ ६१॥

(२) **सर्वज्ञनारायणः।** यथा यादृक्शपथादिकृत्वा। **ऋतं** सत्यम् ॥ ६१ ॥

(३) **कुल्लूकः। धनिभिरु**त्तमर्णादिभिः ऋणादानादिव्यवहारेषु यथाविधाः साक्षिणः कर्तव्यास्तथाविधान्वदिष्यामि यथा च तैरपिसत्यं वक्तव्यं तमपि प्रकारं **वक्ष्यामि** ॥ ६१ ॥

(४) **राघवानन्दः।** साक्षिण इत्युक्तं तल्लक्षणमाह **यादृशा इति द्वाभ्याम्। व्यवहारे**ष्वृणादिषु **साक्षित्वेन कार्याः। ऋतं** सत्यं **वाच्यं** साक्षिभिर्यथेति **तं च संप्रवक्ष्यामी**त्यन्वयः ॥ ६१ ॥

(५) **नन्दनः। धनिभि**र्व्यवहारिभिः। **तैः** साक्षिभिः। **यथा** ऋतं वाच्यं तथा **च** वक्ष्यामीति ॥ ६१ ॥

(६) **रामचन्द्रः।** साक्षिस्वरूपमाह **तैः** साक्षिभिः यथा **ऋतं सत्यं वाच्यम्** ॥ ६१ ॥

(८) **गोविन्दराजः। या इति।** यथाविधाः साक्षिण ऋणादानादिव्यवहारेषु उत्तमर्णादिभिः कर्तव्याः तथाविधान्कथयिष्यामि यथा च तैः सत्यं कर्तव्यं तमपि प्रकारमभिधास्यामि ॥ ६१ ॥

(९) **भारुचिः।** धनव्यवहारे च साक्षिणं। लक्षणमुच्यमानमन्येष्वपि व्यवहारेषु कार्यसामान्यात् अविरोधाच्चेत्थं भूता एव प्रतीयेरन् ॥ ६१ ॥

**गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ॥**
**अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥ ६२ ॥**

(१) **मेधातिथिः।** कृतदारपरिग्रहा **गृहिणः।** गृहशब्दो दारेषु वर्तते। ते हि स्वकलत्रपरिभवभयान्न कूटमाचरन्ति। आत्मनि केचिन्निरपेक्षा अपि भवन्ति। अन्यदेशान्तरगमनेनात्मानं रक्षयिष्याम इहैव च क्वचिद्गुप्ता भविष्यामो धनं मित्रं वाऽर्जयाम इत्यनया बुद्ध्या, अनृतमपि वदन्ति। कुटुम्बिनस्तु स्वकुटुम्बभयात् 'क्व वाऽत्मानं न परिरक्षिष्याम' इति दूरं कृत्वा कुटुम्बस्य सापेक्षतया राजदण्डभयान्नान्यथा प्रवर्तन्ते। **पुत्रिण इति।** पुत्रस्नेहात्पुत्रिणः। अपुत्रदारश्च साक्षिप्रश्नकाले साध्वाचारोऽपि कदाचिन्न सन्निहितो भवति। स हि नैकस्मिन् देशे आस्थानवान् भवति। एवं **मौला अपि** व्याख्येयाः। मौला जानपदास्तद्देशाभिजनाः। ते हि स्वजनज्ञातिमध्ये पापभीरुतया न मिथ्या वदन्ति। 'मूलं' प्रतिष्ठा—सा येषामस्ति ते **मौलाः।** अर्थकथनमेतत्। तद्धितस्तु भवार्थ एव कर्तव्यः। यो हि यत्र भवः सोऽपि तस्यास्तीत्यविरुद्धम्। **क्षत्रविट्शूद्रयोनयः।** न ब्राह्मणः। सर्वदा ह्यस्याध्ययनाध्यापने विहिते, अन्वहं वाऽग्निहोत्रहोमः। तत्र दूरस्थे राजनि धर्मोपरोधोऽस्य माभूदित्यसौ न कर्तव्यतयोपादीयते। यदृच्छयाऽवगतार्थस्तु साक्ष्यन्तराभावे गरीयसि कार्ये मुख्यतमः स साक्षी। तथा च "ब्रूहीति ब्राह्मणं पृच्छेदिति" साक्षिप्रश्नो भविष्यति (८८)। योनिशब्दः प्रत्येकमभिसंबध्यते। क्षत्रं योनिरुत्पत्तिः कारणमस्यासौ 'क्षत्रयोनिः' क्षत्रियजातीय इत्यर्थः। क्षत्राद्वा योनिर्जन्मास्येति पञ्चमीति योगविभागात्समासोऽप्युक्तः। अर्थिना यदोक्तं भवन्त्येते मम साक्षिणः तदा साक्षिकर्मणि योग्या भवन्ति। ये तु स्वयमागत्य

साक्ष्यं ददति न ते साक्षिणः। **अनापदि**। 'आपत्' साक्ष्यन्तराभाव इति केचित्। तदयुक्तम्। विसंवादकत्वमसाक्षित्वे कारणम्। तत्संवादकान्तराभावे नापैति। न वयं ब्रूमः—प्रतिषिद्ध-साक्षिभावा विद्यामानानृताभिधानहेतवोऽर्थसंबन्ध्यादयो वाऽस्यामवस्थायां प्रतिप्रसूयन्ते —किं तर्हि येषां कदाचिदाहूयमानानां धर्मविरोधो भवति श्रोत्रियादीनां तेषामविद्यमानेष्व-न्येष्वनुभूतार्थानामिदं प्रत्यनुज्ञानं न पुनरनृतानाम्॥ ६२॥

(२) **सर्वज्ञनारायणः**। **मौलास्तद्ग्रामे** परंपरयानिवसन्तः। **अर्थ्युक्ताः** अर्थिनोक्ताः न स्वयमेव साक्ष्येऽहमिति वादिनः॥ ६२॥

(३) **कुल्लूकः**। कृतदारपरिग्रहाः पुत्रवन्तः तद्देशजाः क्षत्रियशूद्रवैश्यजातीयाः अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्या भवन्ति ते हि कृतपरिकरपुत्रभयातद्देशवासिनाविरोधाच्च नान्यथा वदन्ति ननु ये केचिदृणादानादिव्यवहारेषु साक्षिणः स्युः। आपदि तु वाग्दण्डपारुष्य-स्त्रीसंग्रहणादिषूक्तव्यतिरिक्ताः साक्षिणो भवन्ति॥ ६२॥

(४) **राघवानन्दः**। **मौलास्तद्देशजाः** **अर्थ्युक्ता** अर्थिना उभयेनोक्ताः अत्रार्थे यूयं साक्षिण इति तादृशाः साक्ष्यमर्हन्ति दातुमिति शेषः। आपत्कालो वक्ष्यमाणः॥ ६२॥

(५) **नन्दनः**। गृहिणो भार्यावन्तः। **मौलाः** कुलश्रेणीप्रधानभूताः। **अर्थ्युक्ता** अर्थिना कार्यकाले सर्वेषु वर्णेषु रक्षित्वेन भाविताः॥ ६२॥

(६) **रामचन्द्रः**। **गृहिण इति**। साक्षी श्रवणाद्दर्शनाद्भवति। ते साक्षिणः कीदृशाः **गृहिणः** गृहस्थाः **पुत्रिणः** **मौलाः** वंशपरंपरायाताः ग्रामनिवासिनः **क्षत्रविट्शूद्रयोनयः** **अर्थ्युक्ताः** अर्थिना उक्ताः **अनापदि साक्षित्वमर्हन्ति आपदि** कदाचित् प्रापयेत्॥ ६२॥

(७) **मणिरामः**। **मौलाः** तद्देशजाः। **अर्थ्युक्ताः** अर्थिना आनीताः न तु ये केचित् ऋणादिव्यवहारे साक्षिणः स्युः। **अनापदि**। एतदृशाः आपदितु उक्तव्यतिरिक्ता इत्यर्थः॥ ६२॥

(८) **गोविन्दराजः**। **गृहिण इति**। गृहस्थाः पुत्रवन्तः तद्देशाभिजनाः क्षत्रियवैश्य शूद्रजातीया अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्या भवन्ति। तेऽपि गृहादिपरिभवभयान्ना-न्यथा ब्रुवते। ननु ये केचिदृणादानादनपेक्षे व्यवहारे वाग्दण्डपारुष्यादौ पुनः साक्षेप उक्त-गृहादिव्यतिरिक्ता अपि भवन्ति॥ ६२॥

(९) **भारुचिः**। श्रोत्रियस्य साक्षित्वे प्रतिषेधात् ब्राह्मणस्याश्रोत्रियस्यास्ति साक्षि-त्वमिति गम्यते। अन्त्यजस्य प्रतिषेधाद्धि नोत्कृष्टानामपि शूद्राणां ग्रहणं प्रतीयते॥ ६२॥

**आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः॥**
**सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत्॥ ६३॥**

(१) **मेधातिथिः**। **आप्ता** अविसंवादका यथादृष्टार्थवादिनः येषां लोको विप्रल-म्भकत्वं न संभावयति—धर्मानुष्ठानपरा ये ख्याताः। **सर्वधर्मविद** श्रौतं स्मार्तमाचारनिरूढं च सर्वं धर्मम्—इह नरकः फलमिह स्वर्ग इत्येवं निरवशेषं—जानन्ति ते ह्यनृताभिधाने नरकं

पश्यन्तो बिभ्यति। **अलुब्धा** उदारसत्वा न स्वल्पं धनं बहु मन्यन्ते। एकैकस्य समस्तानि सर्वाणि विशेषणानि—साक्षिक्रियायां गुणभूतत्वाद्गुणे च साहित्यस्य विवक्षितत्वात्। **सर्वेषु वर्णेष्विति।** सर्वकार्येषु न जातिनियमोऽस्तीत्युक्तं भवति। यत्पुनर्जातिव्यवस्थावचनं तदुपरिष्टाद्वक्ष्यामः। तदेतदुक्तं भवति। सर्वैः कार्यिभिः सर्वे वर्णा यथासंभवं साक्षिणः कर्तव्याः। **कार्येषु** ऋणादानादिषु। यथोक्तलक्षणात् **विपरीतांस्तु वर्जयेत्।** यद्यपि विशिष्टेष्वभिहितेषु तद्विपरीतानां प्रसङ्ग एव नास्ति तथापि लौकिकोऽयं पर्युदासः। प्रायेण हि लौकिका अन्यं विधायान्यं तद्विपरीतं निषेधयन्ति। तथा च भवन्ति वक्तारः—'क्रिया हि द्रव्यं विनमयति नाद्रव्यमिति'। किंचाविसंवादकत्वमिह प्रधानं साक्षिलक्षणम् तच्च न विधिमुखेन शक्यावसानम्, किन्तु विसंवादकरणभावमुखेन। न ह्यविसंवादकत्वं प्रत्यक्ष-दृश्यम्। तद्धि यथार्थाभिधानम्। श्रोत्रग्राह्यो च वस्तुनि कुतः प्रत्यक्षा यथार्थनिश्चयः। प्रत्यक्षत्वे हि नैव साक्ष्यवगमोऽन्विष्यते। न च सर्वत्र परोक्षे वस्तुनि शब्दावगम्ये प्रमाणा-न्तरसंवादसंभवः। तस्माद्यानि भूयस्त्वेन मिथ्याभिधानकरणतया दृष्टानि तदभाव-निश्चयेनाविसंवादकत्वमनुमीयते। अतस्तत्प्रदर्शनार्थोऽयमुपक्रमो **विपरीतांस्तु वर्जये-दिति** ॥ ६३ ॥

(२) **सर्वज्ञनारायणः। आप्ताः** यथादृष्टवादितया गृहीतसंवादाः तथा **सर्वविदः अलुब्धाश्च** निश्चिताः आप्तत्वेऽपि कार्याः॥ ६३ ॥

(३) **कुल्लूकः।** क्षत्रविट्शूद्रयोनय इत्युक्तत्वात्ततो ब्राह्मणपरिग्रहार्थं सर्वेषु वर्णेष्वि-त्यभिधानं सर्ववर्णेषु मध्ये ये यथार्थावगतवादिनः सर्वधर्मज्ञालोभरहिताः ते साक्षिणः कर्त्तव्याः उक्तविपरीतांश्चवर्ज्जयेत्॥ ६३ ॥

(४) **राघवानन्दः।** किंच, **आप्ता** यथावगतवादिनः। **सर्वधर्मविदो** मन्वादिधर्म-शास्त्रविदः। **अलुब्धा** इति च्छेदः॥ ६३ ॥

(५) **नन्दनः। कार्याः** कार्येषु **आप्ता** धर्मनिश्चये प्रधानभूताः। **अलुब्धाः** राग-द्वेषरहिताः। **सर्वेषु धर्मेषु** विद्वांसः। सर्वेषु विद्यमानावर्णविशेषानपेक्षयेति यावत्॥ ६३ ॥

(६) **रामचन्द्रः। सर्वेषु वर्णेषु** चतुर्षु सर्वेषु कार्येषु **साक्षिणः। कार्याः** कीदृशाः ? **आप्ताः** गृहीतसंवादाः। पुनः कीदृशाः ? **सर्वधर्मविदः** अलुब्धाः। ब्राह्मणस्य ब्राह्मणाः क्षत्रियस्य क्षत्रियाः, एवमग्रे॥ ६३ ॥

(८) **गोविन्दराजः। आप्ता इति।** सर्ववर्णानां व्यवहारेष्वसंवादिनः सर्वधर्म शास्त्रज्ञा लोभरहिताः साक्षिणः कार्याः। एतद्विपरीतान् पुनर्वर्जयेदित्यर्थः। सिद्धस्य तु शब्दाभिधानं दण्डार्थम्॥ ६३ ॥

**नार्थसंबन्धिनो नाप्ता न सहाया न वैरिणः ॥**
**न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥ ६४ ॥**

(१) **मेधातिथिः।** तानीमानि संभाव्यमानमिथ्याभिधानकरणत्वेन पठचन्ते। तत्रा**र्थसम्बन्धिन** उत्तमर्णाधमर्णाद्याः। उत्तमर्णा ह्यधमर्णवचनेन पराजीयमानास्तदानी-

मेव रोषावेशवशतः स्तंभयन्ति धनं प्रत्यादातुमधमर्णम्। अतोऽसौ सन्निहितधनिकचित्त मनुवर्तमानः तदनुगुणं वक्तुं शक्नोति। तस्मादसौ न साक्षी। उत्तमर्णोऽपि निर्धनेऽधमर्णे-व्यवहारजयाच्च धनप्राप्तौ मह्यमयं प्रतिदास्यतीत्यनया बुद्ध्या कदाचित्तत्पक्षानुगुणं वक्तीति सोऽप्यसाक्षी। अथवाऽर्थः प्रयोजनं यस्य साक्षिणो विवादिभ्यां किंचित्प्रयोजनं साध्यं, तेन वा तयो; स उपकारगन्धान्न साक्षी। यो वा व्यवहारगतेनार्थेन समानफलः। इत्येवंप्रकारार्थ**सम्बन्धिनः**। **आप्ता** मित्रबान्धवतया कार्याभ्यन्तराः पितृव्यमातुलादयः। **सहायाः** प्रतिभूप्रभृतयः। **वैरिणः** प्रसिद्धाः। **दृष्टदोषा** अन्यत्र कृतकौटसाक्ष्याः। अन्यद्वा प्रतिषिद्धमाचरतिवन्तः। **व्याध्यार्ता** रोगपीडिताः। न पुनरीषद्रोगिण इत्यार्त्तग्रह-णम्। पीडितस्य हि क्रोधविस्मृत्यादयो मिथ्या वचने संभाव्यन्ते। **दूषिताः** पातकिनोऽ-भ्यस्तोपपातकाश्च। दृष्टदोषग्रहणं तु तेषामेव कृतनिग्रहाणां परिग्रहार्थम्। ते हि राजनि वृत्तदण्डा ग्राहितविनयत्वान्न संप्रति 'दूषिता' भवन्ति॥ ६४॥

(२) **सर्वज्ञनारायणः। अर्थसंबंधिन**स्तज्जयफलभागिनः। **आप्ताः** स्निग्धाः स्वस्य परस्य वा असाधारण्येन। **सहायाः** भृत्याः वक्तुः। **दृष्टदोषाः** दृष्टसाक्ष्यमिथ्याभिधानाः। **दूषिताः** अभिशस्ताः॥ ६४॥

(३) **कुल्लूकः**। ऋणाद्यर्थ**संबंन्धिनो**ऽधमर्णाद्याः **आप्ता** मित्राणि सहायास्तत्परि-चारकाः शत्रवः स्थानान्तरावगतकौटसाक्ष्याः रोगपीडिता महापातकादिदूषिताः **साक्षिणोन कर्तव्याः**। लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनांसंभवात्॥ ६४॥

(४) **राघवानन्दः**। विपरीतान्वर्जयेदित्युक्ततानाह **नेतिचतुर्भिः**। **अर्थसंबंधिनः** ऋणाद्यर्थसंबंधिनः। **आप्ताः** पुत्रादयः। **दृष्टदोषाः** कूटसाक्षिणः। **न व्याध्यार्ताः** कुष्ठा-द्याक्रान्ताः। **दूषिताः** महापातकादिना॥ ६४॥

(५) **नन्दनः। अर्थसंबन्धिनो** वादिप्रतिवादिनोरन्यतरेण कृतोपकाराः। **आप्ता** एकतरस्मिन्पक्षे स्निग्धाः। **सहायाः** सहचारिणः। **दृष्टदोषाः** पूर्वकौटसाक्ष्यादिकृत-दूषिताः। अभिशस्ताः॥ ६४॥

(६) **रामचन्द्रः**। निषिद्धानाह **नेति**। **अर्थिसंबधिनोन कार्याः**। **आप्ताः** शक्ता न। **अर्थिसंबंधिसहायाः** न। **वैरिणः** सहायानकार्याः। **दृष्टदोषाः** कुष्ठाद्यपस्मारसहितान कर्तव्याः। **व्याध्यार्ता न** कर्तव्याः। **दूषिताः** अभिशस्ता न **कार्याः**॥ ६४॥

(७) **मणिरामः**। **न दूषिताः** महापातकादिदूषिताः॥ ६४॥

आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः सर्वकर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत्। विपरीतांस्तु वर्जयेदित्यर्थसिद्धस्याप्यनुवादो वाक्यस्वाभाव्यादादरार्थः। सर्ववर्णग्रहणा-च्चात्र ब्राह्मणस्यापि साक्षित्वं प्रतीयते। श्रोत्रियस्य प्रतिषेधादितरस्य॥

(८) **गोविन्दराजः**। **नेति**। साक्षिणो भयलोभरागद्वेषस्मृतिभ्रंशादिनान्यायाभि-धानाशङ्कायां न कार्याः। ऋणाधमर्णसम्बन्धिमित्रवैरकृतकौटसाक्षिव्याधिमूर्च्छितमहा-व्याधिका दूषिता न कार्याः॥ ६४॥

(९) **भारुचिः।** अन्यस्मिन् व्यवहारे कूटसाक्षित्वेन तेहि स्मृतिपरिमाणादुभयत्र नस्युः। निमित्तेन च प्रतिषेधादनातुरो व्याधितोऽपि स्यात्। पातकोपपातकाभिशंसाद्दूषितोऽपि-न स्यात्॥ ६४॥

**न साक्षी नृपतिः कार्यो न कारुककुशीलवौ॥**
**न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः॥ ६५॥**

(१) **मेधातिथिः।** **कारुकाः** शिल्पोपजीविनः सूपकारायस्कारादयः। **कुशीलवाः** नटनर्तकगायनाद्याः। **श्रोत्रियो** वेदपाठकः। यस्त्वध्ययनतत्परः स इह गृह्यते। अथवा श्रोत्रियत्वं कर्मानुष्ठानोपलक्षणार्थम्। तेनानुष्ठानपरस्य तद्विरोधतया प्रतिषेधः। **लिङ्गस्थो ब्रह्मचारी।** परिव्राजकपाखण्डलिङ्गधारिणस्तु कुशास्त्रवर्तित्वादेवाप्राप्ताः। **सङ्गेभ्यो विनिर्गता** वेदसंन्यासिनो गृहस्थाः। 'सङ्गः' अभ्यासतो विषयोपभोगः; दृष्टार्थकर्मारम्भो वा॥ ६५॥

(२) **सर्वज्ञनारायणः।** न नृपतिः तस्य। बहुव्यासक्तत्वेनाऽस्मरणात्। एवं **कारुकः।** शिल्पी। **कुशीलवो** नटः। **श्रोत्रियो** वेदाध्ययनपरः। **लिङ्गस्थः** परिव्राजकादिः। **संगनिर्गतः** सर्वदैकान्तसेवनादिशीलः॥ ६५॥

(३) **कुल्लूकः।** प्रभुत्वात्साक्षिधर्मेण प्रष्टुमयोग्यत्वान्न राजा **साक्षी कार्यः।** **कारुः** सूपकारादिः **कुशीलवो**नटादिः तयोः स्वकर्मव्यग्रत्वात्। प्रायेण धनलोभत्त्वाच्चासाक्षित्वम्। श्रोत्रियोप्यध्ययनाग्निहोत्रादिकर्मव्यग्रतया न साक्षी। लिङ्गस्थो ब्रह्मचारी सङ्गनिर्गतः परिव्राजकः तयोरपिस्वकर्मव्यग्रत्वाद्ब्रह्मनिष्ठत्वाच्चासाक्षित्वम्। श्रोत्रियग्रहणादध्ययना-ग्निहोत्रादिव्यग्रेतरब्राह्मणस्यानिषेधः॥ ६५॥

(४) **राघवानन्दः।** एतेषट् न साक्षिणइत्याह **नेति।** **कारुकुशीलवावुक्तौ।** **राजादी** नांस्वस्वकर्मव्यग्रतया अस्थिरचित्तत्वात्। न श्रोत्रियः अध्यापनाध्ययनाग्निहोत्रव्यग्रत्वात्। **संगेभ्योविनिर्गतः** संन्यासीति केचित्। **कुटुम्बबहिष्कृतः** मण्डलाच्च बहिष्कृत इति। वा लिङ्गस्थपदेन संन्यासिनोग्रहणात्॥ ६५॥

(५) **नन्दनः।** राज्ञः साक्षित्वे शपथादिना लाघवं संभवेदिति राज्ञःप्रतिषेधः। **कारुः** कर्मकरोरजकादिः। **कुशीलवो**गायकः। परिकरभूतत्वात्तयोर्नृपसदस्याह्वाने पर-कार्यविरोधः स्यादिति प्रतिषेधः। श्रोत्रियादीनांत्रयाणामाह्वाने धर्मपीडास्यादिति प्रतिषेधः। न पुनरेषामसत्यवचनत्वात्। **लिङ्गस्थः** संन्यासी। **सङ्गेभ्योविनिर्गतो**विरक्तः॥ ६५॥

(६) **रामचन्द्रः।** **नृपतिः** राजा **साक्षी न कार्यः।** **कारुकः** कारकर्ता **कुशीलवौ** कुत्सितं शीलं यस्य स कुशीलः। **न लिङ्गस्थः सङ्गेभ्योविनिर्गतः** संन्यासी **न कार्यः**॥ ६५॥

(७) **मणिरामः।** **न कारुः** सूपकारादिः। **कुशीलवो**नटादिः **लिंगस्थोचारी।** ब्रह्मचारी **सङ्गेभ्योविनिर्गतः** संन्यासी॥ ६५॥

(८) **गोविन्दराजः। न साक्षीति।** राजानन्तत्वाद् व्यवहारदृष्टत्वाच्च शास्त्र-धर्मेण च प्रष्टुमशक्यत्वान्न साक्षी कार्यः। सूपकारनटादयश्च वेदसंन्यासिनो गृहस्था एते धर्मपरा न कार्याः नटादयश्च प्रायेणार्थपराः स्वकर्मग्रस्ताश्च व्यग्राश्च ते न कार्याः। श्रोत्रियब्रह्मचारितापसभिक्षवश्च लिङ्गस्थाः सङ्गवर्जिता न कार्याः । श्रोत्रियग्रहणाद-ध्ययनानुष्ठानरहितस्य ब्राह्मणस्य न निषेधः ।। ६५ ।।

(९) **भारुचिः।** नृपतेः साक्षित्वप्रतिषेधः सत्यविभावनेऽपि तस्य (च ? प) क्षपरि-ग्रहाशङ्कया अवचनेन च परिक्षयो जानपदानाम्। अथवा समानदेशस्य राज्ञः अवश्यत्वात् प्रतिषेधः। अथवा व्यवहारद्रष्टृ राज्ञः साक्षित्वमयुक्तम् कारका नित्यव्यापृताः। कुशीलवा नित्यप्रेषिताः सर्वजनपदसम्बन्धेन वा तेषामनृताशङ्कया तत्प्रत्यवायदर्शन. . .श्रोत्रियस्य धर्मोपरोधशङ्कया तदानयनपीडशङ्कया च एतेन लिङगस्थो व्याख्यातः। अथ तु सोपधः सुतरां तस्य प्रतिषेधो युक्तः। नृप. . .क्षत्रियत्वान्नयापराभिः ।। ६५ ।।

**नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।**
**न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ।। ६६ ।।**

(१) **मेधातिथिः।** **अध्यधीन**शब्दोऽत्यन्तपरतंत्रगर्भदासादौ रुढचा वर्तते। अन्ये तु तुल्यसंहितत्वादध्याधीन इति पठन्ति। 'अध्याधीनो' बन्धकीकृतः। **वक्तव्यो**ऽनुशास्यः शिष्यपुत्रादि; आचार्याधीनत्वात्। अथवा कुष्ठादिना कुत्सितकायः। **दस्युः** भृतिदासः वैतनिकः। 'स ह्युपादासयति' कर्माणीति नैरुक्ते निरुक्तः। तस्य च दिवसभृतत्वान्नात्य-न्तपारतन्त्र्यमस्तीति पृथगुपदेशः क्रियते। कर्मजीवनत्वापत्तौ तथा विधानां जीविकोच्छेदः लघुवृत्तित्वाच्च लोभादिसंभवेनाप्रत्ययितता?पि। चौरस्य तु शब्दान्तरोपादानान्न दस्यु-ग्रहणेन ग्रहणम्। कठिनहृदयो वा **दस्युः** क्रूरचेष्टः। **विकर्मकृ**च्छास्त्रविरुद्धं यः कर्म करोति। यथा ब्राह्मणः क्षत्रियवृत्तिं वैश्यो वेत्यादि। **वृद्धो** वयःपरिणामादसंस्मृतिः। **शिशुर्बा**लो-ऽप्राप्तव्यवहारः। **एकः।** त्र्यवरग्रहणेनैकस्याप्राप्तेः प्रतिषेधो द्वयोः कस्यांचिदवस्थाया-मभ्यनुज्ञानार्थः। यथा त्रिहस्ताचारोपपत्रे। 'यद्यपि तत्र तृतीयलेखको न भवति तथापि लेखनमात्रस्य व्यापारो न साक्षित्व इति' कस्यचिदियमाशङ्का स्यात्। **अन्त्यो** बर्बरचाण्डा-लादिः—स्ववर्गादन्यत्र। शूद्रयोनित्वेन प्राप्तस्य प्रतिषेधः। **विकलेन्द्रियो**ऽन्धबधिरादिः— शरीरपीडयोपलब्धिविकलत्वाच्च ।। ६६ ।।

(२) **सर्वज्ञनारायणः।** **अध्यधीनो**ऽन्यस्य गर्भदासः। **वक्तव्यो** दुराचारत्वादिना गर्हितः। **दस्युर्घा**तकः। **विकर्मकृत्** सूनादिः। **नैक इति।** अभावे द्वयोरपि ग्रहणम्। **अन्त्यो**ऽन्त्यजः।। ६६ ।।

(३) **कुल्लूकः।** **अध्यधीनो**त्यन्तपरतन्त्रो गर्भदासोन **वक्तव्यो** विहित कर्मत्यागा-ल्लोकविगर्हितः। **दस्युः** क्रूरकर्मा न चौरो नापि तस्करइति वक्ष्यमाणत्वात्। विकर्म-कृन्निषिद्धकर्मकारी एतेषांरागद्वेषादिसंभवात्। **न वृद्धः** प्रायेण स्मृतिभ्रंशसंभवात्। न बालोऽप्राप्त व्यवहारत्वात्। नैकोविनाशप्रवासशङ्कया तस्य त्र्यवरैरितिविधानात्।

अर्थप्रतिषेधसिद्धौ कस्याञ्चिदवस्थायां द्वयोरभ्यनुज्ञानार्थं निषेधवचनम्। **अन्त्यश्चां**-डालादिः धर्मानभिज्ञातत्वात्। **विकलेन्द्रियः** उपलब्धिवैकल्यान्नसाक्षीकार्यः।। ६६।।

(४) **राघवानन्दः।** एते सप्तदश न साक्षिणइत्याह **नेति द्वाभ्याम्। अध्यधीनः** अत्यन्तपरतन्त्रः। **गर्भदासो**विचित्तत्वात्। **वक्तव्ये** सर्वलोकविगर्हितः **वृद्धो**ऽत्यन्तवयसा। **अन्त्यश्चा**ण्डालादिः। **विकलेन्द्रियः** बाधिर्यादियुक्तः।। ६६ ।।

(५) **नन्दनः।** अध्यधीनोत्यन्तपरतन्त्रः **गर्भदास** इति केचित्। वक्तव्यो निन्द्यः। **दस्यु**र्हीनजातिः। अध्यधीनादीनामसाक्षित्वे कारणं सत्यवाचक नियमाभावः। पूर्वसाक्षिणां-त्र्यवरमुक्तं अत्रैकत्वं प्रतिषिद्धं तेनायमर्थो गम्यते त्र्यधिकत्वमुत्तमः पक्षः। **त्र्यवरत्व**मध्यमः। द्वित्वमधमः। नकदाचिदप्येकमिति।। ६६ ।।

(६) **रामचन्द्रः। अध्यधीनो न गर्भदासः अत्यन्ताधीनः वक्तव्यः** शिष्यपुत्रादिर्न-कार्याः। **दस्यु**र्घातकोवा**विकर्म**कृत्। नवृद्धः न भृतिदासः नान्त्यः अन्त्यः शूद्रचाण्डालः ।। ६६ ।।

(७) **मणिरामः। अध्यधीनः** अत्यंतपरतंत्रः गर्भदासः। **वक्तव्यः** लोकबहिष्कृतः। **दस्युः** क्रूरकर्मा **अत्यः** चांडालादिः ।। ६६ ।।

(८) **गोविन्दराजः। नाध्यधीन इति।** अध्यधीनो गर्भदासोऽत्यन्तपरत्वान्नकार्यः। न वक्तव्य सर्वकर्मदोषाद्गर्हणीयः यः कुत्सादितरत एव वचनादिदस्युर्भृतक सत्युपदास इति कर्माणीति नैरुक्तात्सोऽपि पारतन्त्र्यान्न कार्यः। तस्करस्य तथाऽभिधास्यमानत्वात्प्रति-षिद्धकर्मकृदनास्वासात् न वृद्धोऽतिक्रान्त व्यवहारकत्वात्। न शिशुः अव्यवहारकरत्वात्। एकोऽपि न नाश प्रवासाऽशङ्कया तस्य त्र्यवरैरिति निषेधसिद्धौ कस्याञ्चिदवस्थायां द्वयोरभ्यनुज्ञानार्थवचनम्। अन्त्यश्चाण्डालादिः धर्मानभिज्ञत्वात्। विकलेन्द्रिय उप लब्धिवैकल्यात्।। ६६ ।।

(९) **भारुचिः।** अध्यधीनो गर्भदासः। अत्यन्त·····पीसि वक्तव्योऽङ्गव्यसनः कुष्ठचादिश्च स च जात्यन्तरे दोषाशङ्कया। एवं कर्मविशेषेणेति वक्ष्यति। दस्युर्दास-उपसादयति कर्माणि क्षपयतीति···नदस्युस्तस्करः। न विकर्मकृत् अधार्मिकत्वात्। वृद्धशिश्वोरतीताप्राप्तव्यवहारत्वात् प्रतिषेधः एकस्यसाक्षित्वप्रतिषेध (स्त्य ? स्त्व) परै-रिति सिद्धा। यत ए······ एकस्यापि (विशेषेधात्? विप्रतिषेधात्? निषेधात्) पाक्षि(कम? कः) पूर्वश्लोकः। अयं पुनः प्रतिषिद्धप्रतिप्रसवार्थः एवं च सति यथा (स्त्रिया? स्त्या) दिनां सादृश्याभावेऽप्यसदृशा एव क्वचिद् भवन्ति। एवं बालादीनाम्।। ६६ ।।

**नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ।।**
**न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः ।। ६७ ।।**

(१) **मेधातिथिः। आर्तो** बन्धुधनादिनाशेन। **मत्तो** मद्यमदक्षीबः। अपस्मारगृहीत **उन्मत्तः** पिशाचकी। **क्षुत्तृष्णोपपीडितो** बुभुक्षापिपासाभ्यां व्यथितः। **श्रमः** कायचेष्टा-

धिक्येन दूराध्वगमनयुद्धादिनोत्पन्नस्तेनार्तः पीडितः। **कामः** स्त्रीसङ्गाभिलाषस्तेनाऽऽर्तः। विप्रलंभोऽत्यन्तसंयोगो द्वावपि तावत्प्रत्ययौ। चित्तोपप्लवात्तत्साधने च विप्रलंभाशङ्कया च। **क्रुद्धो**ऽन्यस्मिन्नपि बहुतरक्रोधः। स हि क्रोधेन व्याप्तचित्तत्वान्न यावदनुभवति नाप्यनुभूतं स्मरति। **तस्कर**श्चोरः। यद्यप्यसौ विकर्मकृत्तथाऽपि भेदोपादानाद्गोबलीवर्दन्यायो द्रष्टव्यः।। ६७ ।।

(२) **सर्वज्ञनारायणः**। नार्त इति। एतेचार्तत्वादयः साक्षिकरणकाले दोषाः। आर्तःशोकादिना। मत्तोमद्यादिना। उन्मत्तोवातादिना। तस्करः साक्ष्यकाले दृष्टपरार्थापहारः।। ६७ ।।

(३) **कुल्लूकः**। आर्तोबन्धुविनाशादिना मत्तोमद्यादिना उन्मत्तउत्क्षेपभूतावेशादिना क्षुधापिपासादिनापीडितः श्रमार्त्तोवर्त्मगमनादिना खिन्नः कामार्त्तउत्पन्नक्रोधः चौरश्च न साक्षी कार्य इति सर्वत्र संबध्यते। तत्रार्तादिर्बुद्धिवैकल्यात् चौरस्त्वधार्मिकत्वात् ।। ६७ ।।

(४) **राघवानन्दः**। आर्तोधनपुत्रादिनाशेन। मत्तोमद्यादिना। उन्मत्तोवातुलः। श्रमार्तोभारोद्वहनादिना। तस्करः चोरः। वृद्धादिक्रुद्धान्तानां प्रायेण स्मृतिलोपात् आर्ताद्यष्टसु स्मृतिलोपः प्रसिद्धः।। ६७ ।।

(५) **नन्दनः**। आर्त्तः पुत्रशोकादिपीडितः ।। ६७ ।।

(६) **रामचन्द्रः**। नउन्मत्तोन ग्रहाभिभूतः ।। ६७ ।।

(७) **मणिरामः**। **मत्तः** मद्यादिना **उन्मत्तः** भ्रांतावेशादिना।। ६७ ।।

(८) **गोविन्दराजः**। **नार्त इति**। **आर्तो** बन्धुविनाशादिना **मत्तो** मद्यादिना **उन्मत्तो** भूताद्याविष्टः क्षुधा पिपासया चाक्रान्तः **श्रान्तो**ऽध्वगमनादिखिन्नः कामाक्रान्त अत्यन्तक्रोधबुद्धिवैकल्यात् न कार्याश्चौरा अधार्मिकत्वात् ।। ६७ ।।

(९) **भारुचिः**। **आर्तः** उपबन्धुविनाशादिना। एवं चोक्तव्याध्यार्तादिन्योऽयं। मत्तोन्मत्तौ प्रसिद्धौ क्षुत्तृष्णोपपीडितश्च। **क्रुद्धः** क्रोधनत्वादप्रत्ययवृत्तिः। **तस्करः**। गोबलीवर्दन्यायेन विकर्मकृत्। उपदेशाद्विज्ञेयः।। ६७ ।।

**स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः।**
**शूद्राश्चसन्तः शूद्राणामन्त्यानामन्त्ययोनयः।। ६८ ।।**

(१) **मेधातिथिः**। यत्र पुमांसावर्थिप्रत्यर्थिनौ तत्र स्त्रीणां साक्ष्यं नास्ति यत्र तु स्त्रिया सह पुंसः कार्यं स्त्रीणामेव चेतरेतरं स्वल्पं तत्र भवन्त्येव स्त्रियः साक्षिण्यः न चार्यं नियमः स्त्रीणां स्त्रिय एव साक्ष्यं कुर्युर्न पुमांसः। केवलं पुंविषये व्यवहारे क्वचिदेव स्त्रीणां साक्ष्यं यतोऽस्थिरत्वादिति हेतुरूपात्तः। भवन्ति काश्चन स्त्रियो ब्रह्मवादिन्य इव सत्यवादिन्यः स्थिरबुद्धयश्च। **द्विजानां सदृशा द्विजाः**। यः प्रमाणतरो द्विजः स विसदृश शङ्कामानप्रमाणभावमपि दिशन्साक्ष्ये न श्रद्धेयवचनो भवति। यतस्तथाभूतेन प्रमाणभूत एव द्रष्टव्यः। स हि तस्य सदृशः। सदृशानां हि समानदेशस्थानमितरेतरकार्यज्ञत्वं च

संभाव्यते। इतरस्य तु तत्प्रदेश सन्निधिर्यत्नेन साध्यः। सदृशयोस्त्वौचित्यात्सिद्ध एव। वंशहीनस्य हीनगुणोऽपि सादृश्याद्ग्रहीतव्यः। न तूत्कृष्टगुणो न ग्रहीतव्यः। सादृश्यं जात्या शिल्पादिना वा गुणेन क्रियया वा श्रुताध्ययनादिकया समानशीलतया च। एतच्च नातिमहति कार्ये द्रष्टव्यम्। न हि हीनगुणेषु प्रत्ययितता निश्चीयते। **अन्त्यानां** चाण्डाल-श्वपचादीनां तादृशा **एवान्त्ययोनयः**। अन्ते भवा अन्त्या, सा योनिरुत्पत्तिकारणं येषामिति विग्रहः। प्रदर्शनं चैतत्। ये समाना जातिशिल्पशीलादिभिस्तेषामिहानुक्तानामपि वणिक्कारुकुशीलवादीनां—हेतोः स्वमानत्वात्॥ ६९॥

(२) **सर्वज्ञनारायणः**। एतद्दोषविरहे चाण्डालादयोपि ग्राह्या इत्येतदर्थं **स्त्रीणा**-मित्यादिप्रतिषेधः। **द्विजा** ब्रह्मक्षत्रविशो**न्योन्यं कुर्युः**। **सदृशा इति** नोत्तमा नात्यधमा-इत्यर्थः। **सन्तो**ऽसंभावित दोषाः॥ ६८॥

(३) **कुल्लूकः**। स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिण्यो भवन्ति। **द्विजानां** ब्राह्मणक्षत्रियविशां **सदृशाः** सजातीयाः **साक्षिणः स्युः**। एवं शूद्रा साधवः शूद्राणाम्। चाण्डालादीनां चाण्डालादयः **साक्षिणो** भवेयुः। एतच्च सजातीयसाक्ष्यभिधानमुक्त-लक्षणसजातीयसाक्षिसंभवेऽसंभवे विजातीया अपि साक्षिणो भवन्ति। अतएव **याज्ञवल्क्यः** (अस. ६९) 'यथा जातियथावर्णं सर्वे सर्वेषु वा स्मृताः'॥ ६८॥

(४) **राघवानन्दः**। उक्तेषु प्रतिप्रसवतया व्यवस्थितिमाह **स्त्रीणामिति**। **कुर्युः** दद्युः। वर्णव्यवस्थितिमाह **द्विजानामिति**। **सन्तो** द्विजशुश्रूषादिरताः॥ ६८॥

(५) **नन्दनः**। बहुशुचयोऽपि च **स्त्रिय इति**। स्त्रीणां साक्षित्वस्य वक्ष्यमाणस्यायम-पवादः। **सदृशाः** सजातीयाः॥ ६८॥

(६) **रामचन्द्रः**। उक्तानाह **स्त्रीणामिति**। **द्विजानां सदृशा** सवर्णाः द्विजाः। **अन्त्यानां** अन्त्ययोनयः॥ ६८॥

(७) **मणिरामः**। **स्त्रीणां** परस्परऋणादानादौ न तु स्त्रीपुरुषयोर्व्यवहारे॥ ६८॥

(८) **गोविन्दराजः**। **स्त्रीणामिति**। स्त्रीणां स्त्रियः साक्षिणो भवन्तीति अन्या-गोचररहस्यप्रायः स्त्रीकार्यविषयमिदम्। तत्र पुंसः साक्षित्वेको यस्मान्न गोचर इति नित्या-भिधानाशङ्का स्यात्। अन्यत्र ऋणादानादिव्यवहारे तासां पूर्वोक्ता एव साक्षिणो भवन्ती त्येव द्विजानामित्येवमादावपि द्रष्टव्यम्। द्विजानां ब्राह्मणादीनां समानजातिगुणा द्विजाः शूद्राणां साधवः शूद्राः चाण्डालादीनां तज्जातीया एव भवन्ति॥ ६८॥

(९) **भारुचिः**। अर्थव्यवहारेषु स्वस्थवृत्तयः आत्मनो जात्यादिसादृश्येन साक्षिणः स्युः। अर्थप्रयोक्तारो (अन्यो? अन्ये) वार्थसम्बन्धिनः। एवं च प्रदर्शनार्थत्वादस्य तापस-प्रव्रजितवणिक् (शीलव? कृषीवल) गोपालकादीनां सादृश्येन साक्षिणः स्युः। तथा च 'क्षत्रविट्शूद्र'क्षत्रविट्शूद्रयोनय' इति सामान्यनिर्देशोऽयं द्रष्टव्यः। अर्थव्यवहारे(ह्य?)
प्रव्रजितवणिक् (शीलव? कृषीवल) गोपालकादीनां सादृश्येन साक्षिणः स्युः। तथा 'क्षत्रविट्शूद्र'क्षत्रविट्शूद्रयोनय' इति सामान्यनिर्देशोऽयं द्रष्टव्यः। अर्थव्यवहारे(ह्य?)

"अनुभा(वि?वी) तु (यं: ? यः)कश्चित् कुर्यात् साक्ष्यं विवादिनाम् अन्तर्वेश्मन्यरण्ये वा शरीरस्यैव चात्यये", अतिपातिनिकार्ये (तु?ऽन्तु) (वे ? वें) श्मादिष्वसदृशोऽपि साक्ष्यं कुर्यात्। तथा च सति "स्त्रियोऽप्यसम्भवे कार्यं बालेन स्थविरेण वा। शिष्येण बन्धुना वापिदासेन भृतकेन वा" सादृश्यापवादार्थः ।। ६८ ।।

## अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम् ।
## अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ।।६९ ।।

(१) **मेधातिथिः।** **अन्तर्वेश्मनि** यत्कार्यमतर्कितोपनतं वाग्दण्डपारुष्यसंग्रहस्तेय-साहसादिरूपम्, अरण्ये वा तादृशमेव, शरीरे च पीड्यमाने तत्काले दस्युभिरन्यैर्वा यतः कुत-श्चिद्गृहीतं, यो वा धननिमित्तं प्रतिभूत्वेन स्थापितः न च साक्षिणो लभ्यन्ते न वा तावत्काल प्रतिपालयन्ति, रहसि चोक्तो वार्ऽर्थमाददते अप्रकाशम्—तादृशे विषये **यः कश्जिदनुभावी** स साक्षित्वेन ग्रहीतव्यः। **अनुभावी** साक्षाद्दृष्ट्वा। **यः कश्चिदिति** न जातिनियमः, सदृशं च तदा नास्तीत्याह। **अन्तर्वेश्मनीति** विरलजनोपलक्षणार्थम्। तेन शून्यदेवतायतनादी-न्यपि विरलजनानि गृह्यन्ते। तथा **चारण्य**ग्रहणमस्यैवार्थस्य प्रदर्शनार्थम्। अन्ये तु **शरीरस्यापि चात्यय** इत्यन्यथा व्याख्यानयन्ति। कार्यशरीरस्यातिपाते यः कश्चित्साक्षी। यत्कार्यमनुष्ठीयमानमतिपतत्युत्तरकालमशक्यानुष्ठानं तत्र साक्षिणां जातिलिङ्गवयः— सादृश्यसंबन्धाभावादि नियमोनास्ति। एतदेवोत्तरेण दर्शयति ।। ६९ ।।

(२) **सर्वज्ञनारायणः।** अनुभावी येन तत्कार्यं प्रसंगादप्यनुभूतम्। यः कश्चिद-धमोऽपि। अन्तर्वेश्मन्यरण्य इत्यसंभवत्पुरुषान्तरदेशोपलक्षणम्। **शरीरस्यात्यये** तत्सा-क्ष्यकरण तदैव यदि मृत्युस्तदापीत्यर्थः ।। ६९ ।।

(३) **कुल्लूकः। गृहाभ्यन्तरेऽरण्यादौ** वा चौरादिकृतोपद्रवे देहोपघाते वाऽऽतता-य्यादिकृते यः कश्चिदुपलभ्यते स वादिनोरेव साक्षी भवति नतु ऋणादानादिवदुक्तलक्ष-णोपेतः ।। ६९ ।।

(४) **राघवानन्दः।** विवादे सत्युक्तविधजनासंभवे नृमात्रं साक्षीत्याह **अनुभावीति। अन्वगन्वक्षं** तत्र **भावी** वर्तमानः। **शरीरस्यात्यये** मृतौ **साक्ष्यं कुर्यात्** दद्यात् ।। ६९ ।।

(५) **नन्दनः।** यथोक्तगुणसाक्ष्यभावे **यः कश्चिदनुभाविता**पिसाक्षीत्याह **अनु-भाव्यपीति। अनुभावी** अर्थानुसन्धायी। यः कश्चित्सजातीयोऽपि। **अन्याये** पीडायाम् ।। ६९ ।।

(६) **रामचन्द्रः। यः कश्चित्** अनुभावी प्रसङ्गादपि येन तत्कार्यमनुभूतम्। **शरीरस्यापि अत्यये** नाशे उपस्थिते तस्य ।। ६९ ।।

(७) **मणिरामः। अंतर्वेश्मादौ** अरण्ये वा चौराद्युपद्रवे **शरीरस्यापि चात्यये** शस्त्रकृतक्षते तत्र उक्तसाक्ष्यमानात्। **अनुभावी** वृत्तांतज्ञः यः कश्चित् स एव साक्ष्यं कुर्यात् ।। ६९ ।।

(८) **गोविन्दराजः। अनुभावीति।** येन गृहाभ्यन्तरे रत्नादिचौरकृतोपद्रवे शरीरोपघाते चाततताय्यादिभिः क्रियमाणे ऋणादानादिस्वस्थकार्यवशाच्चोक्तसाक्षिसम्पादनाय शक्ते यः कश्चिदुपलब्धवान् स वादिनां साक्षी भवति ।। ६९ ।।

**स्त्रियाप्यसंभवे कार्यं बालेन स्थविरेणवा ।**
**शिष्येण बन्धुना वापि दासेन भृतकेन वा ।। ७० ।।**

(१) **मेधातिथिः। स्त्रियेति** लिङ्गव्यत्यय उक्तः। **बालेन स्थविरेण वेति** वयोव्यत्ययः। **शिष्येणे**त्यादिना संवन्धिनः प्रतिप्रसवः। एतच्च प्रदर्शनमेवं विधानं नियमानांव्यभिचाराय। तेन जातिसादृश्येऽपि नाद्रियेते। सुहृद्वैरिदृष्टदोषादयस्तु नेष्यन्ते। येषां किञ्चिदसत्याभिधानकरणत्वं दृष्टं नापि व्यापकं ते न प्रतिप्रसूयन्ते। येषां तु बहुव्यापकं क्वचिदेव गुणातिशयं चेत व्यभिचरेत्ततः क्वचिदेव तत्साक्षिणः। उक्तं च "एकः सहस्राल्लभ्येत न सौहृदान्न शाठ्यवात्। नार्थसंबन्धतो वाऽपि पुरुषोऽनृतमाचरेदिति ।।" असंभवेऽन्येषां साक्षिणां स्त्रियाऽपि कार्यम्। किम्? साक्ष्यमिति पूर्वश्लोकादनुषज्यते। **शिष्येणेति** मौखश्रौतसंबन्धप्रदर्शनार्थमेतत्। **बन्धुनेति** अहार्योत्पत्तिकायादिसंबन्धप्रतिप्रसवः। सत्यपि संबन्धत्वे यो नातिप्रत्यासन्नः स गृह्यते। तेन भ्रातृव्यमातुलश्वशुर्यादयो न साक्षिणः। तथाविधे हि बन्धुशब्दो रूढः। **दासेनेति** स्वस्वामिसंबन्ध उपलक्ष्यते। न स्वाम्युपाध्यायो याजकश्च सर्वविधे विषये साक्षिणः। **दासो** गर्भदासः। **भृतको** वैतनिकः। ननु चासामर्थ्याद्बालादयः साक्षित्वे निरस्ताः। न ह्येते साक्ष्यमवधारयितुं शक्नुवन्ति बुद्धेरस्थैर्यात्परिपाकादिभिर्दोषैस्तदादिप्रतिप्रसूयमानसमञ्जसमिति, न ह्यापदि शक्तिरस्याविर्भवति। यो हि ब्रूयात् 'न वा नवौदनः पक्तव्यः—सत्याग्नौ तु पक्तव्य इति' तादृगेतत्स्यात्। नैष दोषः एवमर्थमेवोत्तरश्लोक आरक्ष्यते ।। ७० ।।

(२) **सर्वज्ञनारायणः।** अस्यप्रपञ्चः **स्त्रियापीति। दासो**ऽगर्भदासः। **भृतकः** भृत्या परिक्रीतः ।। ७० ।।

(३) **कुल्लूकः।** तदेवोदाहरणात्स्पष्टयति **स्त्रियापीति।** अन्तर्वेश्मादावुक्तसाक्ष्यभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्मकरा अपि **साक्षिणः स्युः** ।। ७० ।।

(४) **राघवानन्दः।** किंच, **स्त्रियेति।** स्त्र्यादिसप्तभिः **कार्यं देयं** साक्ष्यमिति शेषः ।। ७० ।।

(५) **नन्दनः। असंभवे** यथोक्तगुणसाक्ष्यलाभे **कार्यं** साक्ष्यमिति शेषः। पूर्वं प्रतिषिद्धानां शिष्यादीनां सह पाठादिहचायोग्यत्वमनुमीयते ।। ७० ।।

(७) **मणिरामः।** एतदेवोदाहरणेन स्पष्टयति। **स्त्रियापीति** ।। ७० ।।

**बालबृद्धातुरणां च साक्ष्येषु वदतांमृषा ॥**
**जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥ ७१ ॥**

(१) **मेधातिथिः**। अयमस्यार्थः। नेहात्यन्ताप्राप्तनिबद्धभ्रान्तबुद्धचो बालादयो गृह्यन्ते येनारभ्योऽर्थ उपदिष्टः स्यात्। किन्तु ये शक्नुवन्त्यवधारयितुं न चातिस्थिरचेतस्तेभ्यः अनुज्ञायन्ते। तेषां वचनमनुमानेन परीक्ष्यम्। यदि संबद्धं वदन्ति न चस्खलन्ति न शङ्कयमानदोषेण केनचित्संगतास्ततः प्रमाणम्। तदाह तेषां **मृषा वदतामस्थिरां वाचं जानीयात्**। एतदुक्तं भवति वाचोऽस्थैर्येण मृषात्वं निश्चिनुयात्। तत्र वाचोऽस्थैर्यं पदानामितरेतरमसंगतिः, अस्फुटापरिपूर्णाक्षरत्वं च। एतच्च बालादीनामवस्थोपलक्षणार्थम्। ये च वयसा व्याधिना वाऽप्यवस्थामियंतो गता यदन्यद्विवक्षन्तोऽन्यदुच्चारयन्ति तच्चाव्यक्तं न ते साक्षिणः। एतत्प्रत्यक्षवेद्यमसाक्षित्वकारणम्। अन्यत्तु रागद्वेषधनलोभादिसाधारणमनुमानतः परीक्ष्यम्। तच्चोक्तमेव। **उत्सिक्तचेतसः** प्रकृत्यैवोपप्लुता अधीरधियः॥ ७१॥

(२) **सर्वज्ञनारायणः**। बालादिषु कर्तव्यविशेषमाह **बालेति**। तत्र मिथ्याभिधानव्यभिचर्यस्थिरत्वादिकं वाचः प्रतिसन्धेयम्। तदभावे तद्वचनेनाप्यर्थनिश्चयः संभवतीत्यर्थः। **उत्सिक्तमनसा**मस्थिरचेतसाम्॥ ७१॥

(३) **कुल्लूकः**। नन्वस्थिरबुद्धित्वादिना स्त्रीबालादीनां कथमत्रापि साक्षित्वमित्यत्राह **बालवृद्धेति**। **बालवृद्धव्याधिता**नामुपप्लुतमनसा च मत्तोन्मत्तादीनां साक्ष्येऽनृत **वदता**मस्थिरावाग्भवति। अतस्तामनुमानेन **जानीयात्**। यथोक्तम् वाग्भिर्विभावयेल्लिङ्गैरिति॥ ७१॥

(४) **राघवानन्दः**। बालादिसाक्षिषु प्रमाणान्तरं सहायं विधत्ते **बालेति**। **जानीयाद**नुमानादिना। **उत्सिक्तमनसां** कामाद्युपप्लुतमनसाम्॥ ७१॥

(५) **नन्दनः**। आपद्विषयसाक्षिपरिग्रहे राज्ञः कर्तव्यमाह **बालवृद्धातुरणान्त्विति**। सत्यासत्यरूपां वाचं राजा चिन्हैर्जानीयान्नोक्तिमात्रेण **परिगृह्णीयात्**। संख्यानां च गुणानां च साम्ये द्विजोत्तमान्परिगृह्णीयात्॥ ७१॥

(६) **रामचन्द्रः**। **साक्ष्यं** मृषा वदतां **उत्सिक्तमनसां** चञ्चलचित्तानां **वाचमस्थिरां जानीयात्**। **बालः** अप्राप्तव्यवहारः। वृद्धः अशीतिवर्षः वृद्धग्रहणं वचनानिषिद्धानामन्येषामपि॥ ७१॥

(७) **मणिरामः**। **उत्सिक्तमनसां** उपप्लुतमनसां। अतस्तादृशस्थले अनुमाने न स्वबुद्धया निश्चयं कुर्यादित्यर्थः॥ ७१॥

(८) **गोविन्दराजः**। नन्वस्थिरबुद्धित्वादिकारणावगमे स्त्र्यादीनां साक्ष्यं निषिद्धमतोऽत्रापि कथं तद्वचनान्निश्चय इत्यत आह **बालवृद्धातुराणामिति**। बालवृद्धव्याधितानां अप्लुतमनसां च मत्तोन्मत्तादीनां अनृतं वदतां अस्थिरा वाग्भवति अतस्तान्साक्ष्ये अनुमानेन बाह्यैर्विभावयेल्लिङ्गैरिति जानीयात्॥ ७१॥

(९) **भारुचिः** । यत इदमनुमानं तद्विशुद्ध्यर्थमाह केन सत्यानृतवचनविभागार्थेनानुमानेन उक्तं च 'बाह्यैर्विभावयेल्लिङ्गैरि'त्यादि । 'यथा नयत्यसृक्पातै'रिति च । एवं चानुमानोपदेश इहायमर्थो भवति । यदि यथोक्तानां साक्षिणामसम्भवे साहसादिषु प्रतिषिद्धा अपि साक्षिणो भवन्त्यनुमानेन विशोध्यन्ते अप्रतिषिद्धाश्च कदाचित् ।। ७१ ।।

**साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च ।।**
**वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ।। ७२ ।।**

(१) **मेधातिथिः** । 'सहो' बलं, तदाश्रित्य यत्क्रियते तत्**साहसम्** राजवाल्लभ्येन महापक्षतया स्वशरीरबलेन बलवदाश्रयेण वा यदकार्यकरणं तत्साहसम् । यथा वस्त्रपाटनाग्निदाहकेशछेदादि । अन्यत्प्रसिद्धम् । अत्र साक्षिणो न परीक्ष्याः । 'गृहिणः पुत्रिण इत्येवमादिरूपपरीक्षाऽत्र प्रतिषिध्यते । या तु व्यभिचारहेतुतया शङ्क्यते रागद्वेषधनलोभादिरूपां सा कर्तव्यैव । दृष्टमूलत्वादस्याः स्मृतेरित्युक्तम् ।। ७२ ।।

(२) **सर्वज्ञनारायणः** । **न परीक्षेत** बालत्वादिना नत्यजेत् किंतु तत्र युक्तरीत्या स्थैर्यादिप्रतिसंधेयम् । ।। ७२ ।।

(३) **कुल्लूकः** । गृहदाहादिषु साहसेष्वाचार्यस्त्रीसंग्रहणे वाग्दण्डपारुष्ये चगृहिण इत्युक्त साक्षिपरीक्षा न कार्या । स्त्रियाप्यसंभवे कार्य'मित्यस्यैवायमुदाहरण प्रपञ्चः ।। ७२ ।।

(४) **राघवानन्दः** । साहसादिषु साक्षी न परीक्षणीय इत्याह **साहसेष्विति** । **साहसेषु** गृहदासादिषु । सहो बलं तेनायं भवतीति साहसः । **संग्रहणे** स्त्रीभोगादौ । **वाग्दण्डयोश्च पारुष्ये** वाक्पारुष्ये धिगाद्युक्तौ दण्डपारुष्ये ताडनादौ साक्ष्यन्तराभावान्न **परीक्षेत** गृहिणः पुत्रिण इत्यादिधर्मेण ।। ७२ ।।

(५) **नन्दनः** । **संग्रहणं** परदारपरिग्रहः ।। ७२ ।।

(६) **रामचन्द्रः** । **सर्वेषु** चतुर्विधेषु साहसेषु साक्षी कार्यः । चतुर्विधत्वमाह 'मनुष्यमारणं चौर्यं परदाराभिमर्शनम । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ।' ।। **च** पुनः **स्तेय**कर्मणि **संग्रहणेषु** रहसि क्रियमाणे संग्रामे धैर्यपारुष्यसाहसेषु साक्षिणः कार्याः, अत्र गुणरहिता साक्षिणो भवन्तीति भावः ।। ७२ ।।

(७) **मणिरामः** । **साहसेषु** गृहदाहादिषु । **संग्रहणे** आचार्यादिस्त्रीसंग्रहणे ।। ७२ ।।

(८) **गोविन्दराजः** । **साहसेष्विति** । वस्त्रपाटनाग्निदानादिसर्वेषुसाहसेषु चौर्यस्त्रीसंग्रहणवाग्दण्डपारुष्येषु च गृहस्थपुत्रधनादिना साक्षिणो न परीक्षेत । बालार्थसम्बन्धादीनां पुनरनुमानपरीक्षा न निषिध्यते । तथा सति नन्वनिश्चयभावः बालवृद्धातुराणाञ्चेत्यादेश्चोक्तत्वात् ।। ७२ ।।

(९) **भारुचिः** । वस्त्रपाटनोल्कादहनकोशच्छेदनादिष्वप्रत्ययकारी पुरुषः क्रोधचापलप्रभवेषु । स्तेयादीनि प्रसिद्धा(दि? नि) एवमादिषु न परीक्ष्येत साक्षिणम् । गृहिणः पुत्रिण इत्येवमादिना लक्षणेन अर्थसम्बन्धादिभिस्तु सामर्थ्यात्परीक्ष्या एव अनुमानेन च

प्रतिषिद्धा अपिसन्तः परीक्ष्या एव साक्षिणोऽनुमानतः। एवं चानुमानोपदेशोऽन्नार्थवान भवतीत्युक्तः। यत्र पुनः साक्षिणां समगुणानां विप्रतिपत्तिः ॥ ७२ ॥

**बहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः ॥**
**समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ ७३ ॥**

(१) **मेधातिथिः।** यत्र भूमिभागादौ विप्रतिपत्तिर्द्वाभ्यां च भोगसाधने साक्षिणो निर्दिष्टाः। ते च केचिदर्थिनो भोगमाहुरपरे प्रत्यर्थिनः। तत्र बहूनां वचनं ग्राह्यम्। समसङ्ख्येषु तु ये गुणैरुत्कृष्टा बहुगुणा इत्यर्थः। एकेन वा गुणेन दृष्टपुरुषार्थोपकारिणा सातिशयेन युक्ताः। गुणवतां समगुणानां भेदे जातिरादर्तव्या। सर्वसाम्ये शपथः। अन्यद्वा तत्समानम्। **बहुत्वं परिगृह्णीयात्।** बहूनां वचनं प्रमाणीकुर्यात्। द्वैधं परस्पर विरुद्धार्थाविधानम् ॥ ७३ ॥

(२) **सर्वज्ञनारायणः। बहुत्वमिति।** यद्यन्येऽन्यथा वदन्ति सद्विरोधेऽपि बहूनां वचो ग्राह्यमित्यर्थः। **द्विजोत्तमान्** ब्राह्मणान् ॥ ७३ ॥

(३) **कुल्लूकः।** साक्षिणां परस्परविरुद्धानां बहुभिर्यदुक्तं तदेव निर्णयार्थत्वेन राजा **गृह्णीयात्।** समेषु तु विरुद्धार्थाभिधायिषु गुणवतः प्रमाणीकुर्यात्। गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् **द्विजेषु ये उत्तमाः** क्रियावन्त इत्यर्थः। अत एव **बृहस्पतिः** गुणिद्वैधे क्रियायुक्ता इति ॥ ७३ ॥

(४) **राघवानन्दः।** यत्र परस्परं साक्षिणां विरुद्धभाषितया द्वैधं तत्र बहुभिरुक्तं तत्र बहुभिरुक्तं ग्राह्यमित्याह **बहुत्वमिति। समेतु गुणोत्कृष्टान्** गुणाधिकान्। **द्विजोत्तमान्** विशिष्टगुणवतो विप्रान् सम्यञ्चो बहवश्चेति न्यायात् ॥ ७३ ॥

(५) **नन्दनः।** अर्थसाक्षिद्वैधे बलाबलमाह **बहुत्वमिति।** विवादिनोः साक्षित्वे द्वैधे साक्षिणां बहुत्वं **परिगृह्णीयात्** समेषु समसंख्येषु साक्षिषु ॥ ७३ ॥

(६) **रामचन्द्रः। नराधिपः साक्षिद्वैधे** विविधे साक्षिबहुत्वं **परिगृह्णीयात्। समेषु** तुल्येषु **गुणोत्कृष्टान्** ॥ ७३ ॥

(७) **मणिरामः। साक्षिद्वैधे** उभयत्र साक्षिसत्वे बहुत्वं यस्य बहवः साक्षिणः सजयी ॥ ७३ ॥

(८) **गोविन्दराजः।** यत्रार्थिप्रत्यर्थिनः साक्षिणस्तत्र बहुत्वमिति। साक्षिणः सर्वेषु अधिगतानां परस्परविरुद्धभावे सति बहुभिः यदुक्तं तदेव निर्णयार्थत्वेन प्राड्विवाको गृह्णीयात्। समेषु तूभयोरुक्तवत्सु गुणवतः प्रमाणी कुर्यात्। गुणवतां विप्रतिपत्तावुभयत्र गुणवत्सुब्राह्मणान् प्रमाणी कुर्यात् ॥ ७३ ॥

(९) **भारुचिः।** समेषु तु गुणोत्कृष्टान् गुणसाम्य द्विजोत्तमान् तत् विधिप्रतिपत्तावेष्वेवं न्यायः। अनुमानं यथोक्तं क्वचिच्च शपथाद्यपि वक्ष्यति। 'असाक्षिकेषु त्वर्थेषु शपथे नापि लम्भयेदि'ति। अपि च जागर्ति भगवान् धर्मः स बाह्येऽपि सति केनचित्कार-

णेनात्मानं दर्शयति। द्विजोत्तमानिति चेदलिङ्गं ब्राह्मणानां साक्षित्वे, तथा चोक्तम्—'आप्ता सर्वेषु वर्णेष्वि'ति। न चैत(मु?दु)क्तवर्णानुवादार्थं सर्वग्रहणम् किं तर्हि ब्राह्मणवर्णावबोधार्थम् तथा च कृत्वैवमादीनि लिङ्गानि श्रोत्रियप्रतिषेधश्च ।। ७३ ।।

**समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ।।**
**तत्र सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यां न हीयते ।।७४ ।।**

(१) **मेधातिथिः**। ननु च "अनुभावी तु यः कश्चित्" इत्यनेनोक्तमेवैतत्कथं चान्यथासिद्धिराशङ्कते येनेदमुच्यते दर्शनश्रवणाभ्यां साक्ष्यसिद्धिरिति। अत्रोच्यते। साक्षी व्यवहरिष्यता कर्तव्यः त्वं मे साक्षी भविष्यसि इत्युक्तम्। तत्र एवन्नोक्तः स न प्राप्नोति। एवमर्थमिदमुच्यते। यस्तत्र संनिहितः कथंचिदनुभविता त्वं स्मर्त्तुमर्हस्यावयोरमुमर्थमित्येवमनुक्तेऽपि भवत्येव साक्षी—**समक्षदर्शनात्सा**क्षादनुभावाच्छ्**रवणाच्च**। समक्षशब्दानुषङ्गः कर्तव्यः। यत्कुतश्चिदेकेन श्रूयते ततोऽन्येन तत्परंपराश्रुतं तेन परंपराश्रावी न साक्षी। यथैतेनेदमकार्यं कृतमिदमस्मै वा धारयतीति लोकप्रसिद्ध्याऽगतम्, न तु प्रमाणतः। तत्र समक्षदर्शनं साक्षादनुभवनमर्थविषयमृणप्रयोगदण्डपारुष्यादिसाक्षाद् दृष्टं चक्षुर्व्यापारेण वाक्पारुष्यं तथेदमस्मान्मया गृहीतमित्येवमादिविषयं शब्दश्रवणम्। यद्यपि दृशिरुपलब्धिमात्रवचनः तथापि वृत्तानुरोधितया श्रोत्रज्ञानं श्रवणं भेदेनोपात्तम्। एतावच्चात्र विवक्षितम्। प्रमाणतो येनानुभूत स साक्षी। समक्षशब्दग्रहणं प्रमाणशास्त्रोपलक्षणार्थम्। तेनानुमानादि नाऽप्यनुभूतमनुभूतमेव। अत आप्तागमाच्छ्रुतमप्रत्यक्षमपि प्रमाणम्। उत्तरस्तु श्लोकार्धोऽनुवाद एव। सत्यवचनस्य विहितत्वात् असत्यवादिनो धर्मार्थहानेश्च प्रमाणान्तरावगतत्वात् ।। ७४ ।।

(२) **सर्वज्ञनारायणः**। **समक्षदर्शनात्** प्रत्यक्षतो दर्शनात्। **श्रवणा**दाप्तवचन संज्ञानात्। अर्थाहानिर्दण्डाभावात् ।। ७४ ।।

(३) **कुल्लूकः**। **गोविन्दराजस्तु** गुणवतां विप्रतिपत्तौ द्विजोत्तमान् ब्राह्मणान्प्रमाणी कुर्यादित्याह **समक्षेति** चक्षुर्ग्राह्ये साक्षा**द्दर्शनात्**। श्रोत्रग्राह्ये **श्रवणात्साक्ष्यंसिध्यति**। तत्र साक्षी सत्यं **वदन्धर्मार्थाभ्यां न मुच्यते**। सत्यवचनेन धर्मोपपत्तेर्दण्डाभावेऽर्थहान्यभावात् ।। ७४ ।।

(४) **राघवानन्दः**। **साक्ष्यं** हि यथा दृष्ट श्रुताभिधानमिति प्रकटयन्साक्षिपदस्य यौगिकत्वमाह **समक्षेति**। अक्षमत्रेन्द्रियमात्रंतेन। श्रुतदृष्टस्पृष्टेऽर्थे। **सत्यं** दृष्टादिप्रतिपादकं **ब्रुवन्** वधादि। **धर्मार्थाभ्यां धर्मतो न हीयते** स्वर्गतो न हीयते अर्थतो न हीयते **न श्रुतंदण्डं प्राप्नोति** श्रुतादिमत्त्वात् ।। ७४ ।।

(५) **नन्दनः**। साक्षिणां लक्षणं कर्तव्यं चाह **समक्षदर्शनादिति**। ।। ७४ ।।

(६) **रामचन्द्रः**। सार्धेनाह **तत्रेति**। तत्र सभायां **सत्यं ब्रुवन्** साक्षी **सधर्मार्थाभ्यां न** हीयते ।। ७४ ।।

(८) **गोविन्दराजः। समक्षदर्शनादिति।** चक्षुर्ग्राह्ये साक्षाद्दर्शनात् श्रोत्रग्राह्ये च साक्षात् साक्ष्यं सिद्धयति तत्र साक्षी सत्यमभिवदन्धर्मार्थाभ्यां नमुच्यते सत्यवचनधर्मोत्पादाद्दण्डाभावः ।। ७४ ।।

(९) **भारुचिः।** दर्शनश्रवणाभ्यां साक्षित्वसिद्धिः न तु निबन्धनतः। अतोऽन्तरेणापि निबन्धनं साक्षी स्यादेव। एतावांस्तु साक्षिणो नियमः। निबन्द्धे(ना? वि) पृष्टेन सता सत्यं वक्तव्यमिति येन ।। ७४ ।।

**साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ।।**
**अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ।।७५ ।।**

(१) **मेधातिथिः।** असत्याभिधाने साक्षिणां फलदर्शनार्थमिदम्। दृष्टश्रुतशब्दउपलब्धिपर्याय इत्युक्तम्। तस्मा**दन्य**दनुपलब्धम्। तच्चेद्ब्रवीति। **आर्याः** सभ्याः सम्यक्कारिणः। तेषां **संसदि** सभायाम् **अवाक्** अधोमुखः। **नरकं** याति यमयातनास्थानं गच्छति। **प्रेत्य** मृत्वा। **स्वर्गाच्च हीयते** भ्रश्यति। यदप्यनेन स्वर्गारोहणिकं कर्म कृतं तदपि कौटसाक्ष्यपापस्य गुरुत्वात्प्रतिबध्यते। न तु स्वर्गस्य कर्मणः पापेनान्येन नाशः। स्वफलविधित्वात् कर्मणामन्यत्र प्रायश्चित्तेभ्यः ।। ७५ ।।

(२) **सर्वज्ञनारायणः। विब्रुवन्** विशेषेण ब्रुवन्। नरकानुभवान्तेऽपि सुकृतनाशात् **स्वर्गाद्धीयते न स्वर्गं** प्राप्नोति ।। ७५ ।।

(३) **कुल्लूकः। साक्षी** दृष्टश्रुतादन्यादृशसाधुसभायां वदन्नधोमुखो **नरकं** गच्छति परलोके च कर्मान्तरजन्यस्वर्गरूपफलादानेन पापेन **हीयते**। ।। ७५ ।।

(४) **राघवानन्दः।** उक्तवैपरीत्ये दण्डमाह **साक्षीति। विब्रुवन्** सुवर्णे रूप्यमिति विरुद्धप्रकारकं वा ब्रुवन्। **आर्यसंसदि** विद्वद्ब्राह्मणसभायाम्। **अवाङ्मुखः सन्नरकमभ्येति।** न केवलमेवमपितु **हीयते स्वर्गाच्च** तज्जनकशुभादृष्टस्यनरकेण प्रत्यन्तरितत्वात् स्वर्गहेतुधर्मनाशाद्वा ।। ७५ ।।

(५) **नन्दनः।** तत्र दर्शनश्रवणयोर्विपर्यये दोषमाह **साक्षी दृष्टश्रुतादिति**स्वर्गात्पुण्यान्तरार्जितात् ।। ७५ ।।

(६) **रामचन्द्रः।** साक्षी आर्यसंसदि दृष्टश्रुतादन्यद्विब्रुवन् अन्यथा ब्रुवन् अर्वाक्शिरा **नरकं एवैतिप्रेत्य स्वर्गाच्च हीयते** ।। ७५ ।।

(७) **मणिरामः। अवाङ्नरकं** अधोमुखनरकं ।। ७५ ।।

(८) **गोविन्दराजः। साक्षीति।** साक्षीदृष्टश्रुतविपरीतं ब्राह्मणसभायां विरुद्धवदन्नधोमुखो नरकं व्रजति। परलोके धर्मान्तरजनकात् स्वर्गादिस्तत्पापप्रतिबन्धे सति प्रतिहीयते ।। ७५ ।।

(९) **भारुचिः।** न केवलमधर्मानुत्पत्त्या वा स्वर्गाद्धीयत इत्युक्तम्। अयं च पूर्वश्लोकशेष एवार्थवादस्तथा च सम्बन्धेन दर्शितः एवायमर्थः। यतश्च दर्शनश्रवणाभ्यां साक्षित्वेन निबन्धात् ।। ७५ ।।

**यत्रानिबद्धोऽपीक्षेत श्रृणुयाद्वाऽपि किंचन ।।**
**पृष्टस्तत्रापि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ।। ७६ ।।**

(१) **मेधातिथिः** । "ननु चोक्तं समक्षदर्शनादित्यत्र यथाकथंचिदनुभूतवतोऽनियुक्त-स्यापि साक्ष्यमस्तीति । तत्र किमनेन यत्रानिबद्धोऽपीति को वा विशेषः ?" उच्यते लेख्यारूढस्य व्यापारविशेषाद्युक्तं साक्षित्वं न पुनरनारूढस्य । आरोहणस्यानर्थक्यप्रसङ्गा-दुभयोः साक्षित्वे । अत एतामाशङ्कामपनेतुमिदमुच्यते । पूर्वस्तु श्लोको यत्रानुक्ताः साक्षिणः । अयं तु यत्र ससाक्षिकं लेख्यम् । **अनिबद्धो** लेख्यमनारूढोऽपीत्यर्थः । ईक्षण-श्रवणे व्याख्याते । शेषं सुबोधम् ।। ७६ ।।

(२) **सर्वज्ञनारायणः** । **अनिबद्धो**ऽनधिकृतः । प्रसंगात्तत्रागतः ।। ७६ ।।

(३) **कुल्लूकः** । त्वस्मिन्विषयेसाक्षी भवइत्येवमकृतोऽपि यत्किंचिदृणादानादि-पश्यति वाक्पारुष्यादिकं वाशृणोति तत्रापि साक्षी सपृष्टः सन्यथोपलब्धंकथयेत् । अयं त्वकृतसाक्षी सामान्येन मनुनोक्तः । अस्य ग्रामश्च प्राड्विवाकश्च राजाचेत्यादिना **नारदा-दिभिः** षाड्विध्यमुक्तम् ।। ७६ ।।

(४) **राघवानन्दः** । दर्शनश्रवणमात्रं न साक्षिता प्रयोजकं किंतु तद्विशेष इत्याह **यत्रेति** । निबद्धस्त्वमस्मिन्विषये अवधानं कुर्विति नियुक्तः तदभावेपि ब्रूयादेवेत्यन्वयः यथादृष्टं तमपि पृष्टः सन् ।। ७६ ।।

(५) **नन्दनः** । साक्षित्वेनानिमन्त्रितोऽपि यादृच्छिकसाक्ष्यमर्हतीत्याह **यत्रानिबद्धोऽ-पीति** । **यत्र** विवादपदे **अनिबद्धः** साक्षित्वेनानिमन्त्रितः यादृच्छिक इति यावत् ।। ७६ ।।

(६) **रामचन्द्रः** । **यत्र** साक्ष्ये **अनिबद्धः सन्** साक्षित्वेनानधिकृतः **स किंचन शृणुयात्** वीक्ष्येत वा **तत्रापि पृष्टः स तुतत्सत्यं यथाश्रुतं** यथा दृष्टं **ब्रूयात्** ।। ७६ ।।

(७) **मणिरामः** । **अनिबद्धः** अस्मिन्नर्थेत्वं साक्षीभवेत्येवमनुक्तोऽपि ।। ७६ ।।

(८) **गोविन्दराजः** । **यत्रेति** । त्वं मे साक्षी स्या इत्येवं निबद्धोऽपि यत्र किञ्चि-दृणादानादिपश्येद्वाक्पारुष्यादिश्रृणुयात्तत्रापि पृष्टः सन् साक्षी न ह्यर्थोपलब्धं कथयेत् ।। ७६ ।।

(९) **भारुचिः** । उपसंहारार्थः श्लोकः ।। ७६ ।।

**एकोऽलुब्धस्त्वसाक्षी स्याद्बह्वचः शुच्योऽपि न स्त्रियः ।।**
**स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येऽपि ये वृताः ।। ७७ ।।**

(१) **मेधातिथिः** । एकस्य पुनःप्रतिषेधो लोभादिरहितस्य प्रतिप्रसवार्थः । तेन सत्यवादितया निश्चित एकोऽपि साक्षी भवत्येव । स्त्रियस्तु न कथंचित्साक्ष्यमर्हन्त्यल्पा वा बह्व्यो वा । **शुच्योऽ**पीति गुणवत्योऽपीत्यर्थः । अत्र हेतुः । **स्त्रीबुद्धेरस्थिरत्वादिति** । प्रकृतिरेषा स्त्रीणां यद्बुद्धेश्चापलम् । यथाऽऽमयाविनो घृतादिनोत्पन्नेऽप्यग्नेः स्थैर्ये स्वल्पे-नापि प्रमादे पुनः सहजामयावितोनुवृत्तिः । अतोऽनया शङ्कया गुणवतीष्वपि तासु नाश्वासः ।

यत्तु "स्त्रियाऽप्यसंभवे कार्यम्" (श्लो. ७०) इति तद्यत्र तत्क्षणादेव पृच्छचन्ते। यत्रेयमाशङ्का न भवति केनचिदासां संचलितं मन इति। यत्र तु कालव्यवधानं तत्र जीयमानेन कदाचिदनुकूल्यन्ते इतिन क्वचित् साक्षिण्यः। **दोषैश्चान्येऽपि ये वृताः।** रोगादिभिर्दोषैर्ये स्त्रीभ्योऽन्येऽपि पुरुषा **वृता** आक्रान्ता भूयिष्ठदोषा इत्यर्थः। के पुनरमी दोषा नाम? उक्तं च। रागादयः शास्त्रप्रतिषिद्धाः शंक्यमानव्यभिचारहेतुभावाः। यद्यपि केवलेन स्वशब्देनैवोक्ता दोषाः तथाप्यनुक्तपरिग्रहार्थमिदमपुनरुक्तम्। सामान्यविशेषाभिधानं हि सर्वत्र ग्रन्थकारा अनुमन्यन्ते। अन्ये त्वकारप्रश्लेषेणालुब्धोऽप्येको न साक्षी किं पुनर्लुब्ध इत्येवमाचक्षते। तथा च द्वयोरभ्यनुज्ञानं भवति। शुच्य इतीकारो दुर्लभो "वोतो गुणवचनात् इति (प. सू. ४/१/४४) विधानात्। कृदिकारादिति (वा. ४/१/४५) केचित्समर्थयन्ते ॥ ७७ ॥

(२) **सर्वज्ञनारायणः।** एकोप्यलुब्धः पुमान्। शुच्योअलुब्धाअपि। दोषैश्चान्येपियेवृताः अर्थसंबन्धित्वादिभिस्तेपि नबहवः साक्षिणः। एकस्मिन्नलुब्धे विपरीतवादिनि सति ॥ ७७ ॥

(३) **कुल्लूकः।** एकोऽलुब्धइत्यत्राकारप्रश्लेषो द्रष्टव्यः। एकोऽपि **साक्षी लोभादिरहितः** स्यात्। अत एव **व्यासः** 'शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक्। प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः।' **मेधातिथिगोविन्दराजा**भ्यामेकोलुब्धस्त्वसाक्षीस्यादिति पठितं व्याख्यातं च। लोभात्मकः एकः **साक्षी न भवति** एवं चालुब्धो गुणवान्कस्यांचिदवस्थायामेकोऽपि भवतीति। स्त्रियः पुनरात्मशौचादियुक्ताबह्वचोऽप्यस्थिरबुद्धित्वादृणादानाद्यैर्पर्यालोचितव्यवहारे साक्षिण्येन भवन्ति अपर्यालोचिते तुस्तैयवाग्दण्डपारुष्यादौस्त्रियाप्यसंभवे कार्यमिति साक्षित्वमुक्तम्। अन्येऽपि ये स्तेयादिदोषैर्व्याप्तास्तेऽपि पर्यालोचितव्यवहारे साक्षिणोन स्युः ॥ ७७ ॥

(४) **राघवानन्दः।** बहुष्वपि लोभाद्यनभिभूतः एकः साक्षीत्याह **एक इति।** अलुब्ध इति च्छेदः। **शुच्योपि** अपरपुत्रलोभान्निवृत्ता अपि तत्र हेतुः **अस्थिरबुद्धि**रादीतिये दोषदुष्टाः पुमांसस्ते नादरणीया इत्याह **दोषैरिति।** अतएव **व्यासः** शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक्। प्रमाणमेकोऽपि भवेत्सदृशेषु शेषतः' इति। शुचिक्रियः अर्थादिव्यवहार शुचयः क्रियाः यस्यसः। धर्मज्ञपदेन यज्ञादिसत्क्रियस्योक्तेः अनुभूतवाक् त्वं अत्र साक्षीत्यादिकानुभूता वाग्येनसइतिव्यासोक्त्यर्थः। **गोविन्दराजस्तु** लोभाभिभूतो न साक्षीति लुब्धस्त्वसाक्षीति पाठं चक्रे ॥ ७७ ॥

(५) **नन्दनः।** पुनरपि साक्षिणां नियममाह **एकोबुध**स्त्विति। **येऽन्ये दोषै**र्वृतास्ते**ऽप्यसाक्षिण** इति वचनविपरिणामः ॥ ७७ ॥

(६) **रामचन्द्रः। अलुब्धःसाक्षी स्यात्।** शुच्योऽपि पावित्र्ययुक्ताः **स्त्रियः बह्व्यः** साक्ष्येन **कार्याः।** कस्मात्? स्त्रीबुद्धेरस्थिरत्वात्। च पुनः अन्येऽपि ये पुरुषादोषैर्वृतावेष्टिताः ॥ ७७ ॥

(७) **मणिरामः । अलुब्ध** इत्यकार प्रश्लेषोत्र बोद्धव्यः ॥ ७७ ॥

(८) **गोविन्दराजः । एको लुब्धस्त्वसाक्षीति ।** लोभवानेकः साक्षी न भवत्येवं चालुब्धोऽत्यन्तगुणवान् कस्यांञ्चिदवस्थायामेको भवति । स्त्रियश्च स्थिरचापल्यात् बह्व्योऽपि अर्थशौचयुक्ता अपि साक्षिण्यो न भवन्त्येव ऋणादानादौ स्वस्थे व्यवहारे आत्यन्तिकेतूक्तं स्त्रियोऽप्यसंभवे कार्यमित्येवमन्यतोऽपि ये यैः अशुच्यादिभिर्दोषैः प्राप्तास्तेपि स्वस्थव्यवहारे साक्षिणो न भवेयुः ॥ ७७ ॥

(९) **भारुचिः ।** एकस्य सत्यपि प्रतिषेधे गुणातिशयादलुब्धत्वानाञ्च ज्ञानार्थमिदम् । अपि वै अलुब्धः अपिरुभयत्रापि बोद्धव्यः । शुच्योऽपीत्ययमेव वाऽलुब्धोऽप्येको न साक्षीस्यात् । उत्तरविवक्षार्थश्चायमारम्भः । एवं स्त्रियो बह्व्यः शुच्योऽपि न स्युः यथेकोऽलुब्धोऽपितासां हि बुद्धेर्धर्मा. . .दमपि सम्बन्धः । व्याख्यानं शास्त्रविरोधान्नाति पेशलम् । यत एकस्य लोभात् प्रतिषेधाद्वैकयोरलुब्धयोरभ्यनुज्ञानार्थमिदम् । अन्यत्रापि च प्रतिषेधे . . .तुल्यत्वादेवं च सति बह्व्यः शुच्योऽप्यलुब्धा अपि प्रकरणात् स्त्रियो न स्युः । स्त्रीबुद्धेरस्थिरत्वादित्युक्तम् । दोषैरन्यैरपि ये वृताः पुरुषा अति. . .किं पुनरन्यत्र पुनर्वचन चास्य यदर्थं तदुक्तमेवात्र ॥ ७७ ॥

**स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ॥**
**अतो यदन्यद्विब्रूयूर्धर्मार्थं तदपार्थकम् ॥ ७८ ॥**

(१) मेधातिथिः । साक्षिणो यत् **स्वभावेन व्यावहारिकं** ब्रुवन्ति तद्ग्राह्यम् । यत्तु स्वभावाद्विचलिता धर्मबुद्धया धर्मार्थं **ब्रूयुस्तदपार्थक**मग्राह्यमित्यर्थः । यद्यथा दृष्टस्यार्थस्य वचनं तत् स्वभावतः । यत्त्वन्यथा—माभूदस्य तपस्विनो मद्वचनेन बाध इत्यनया बुद्धया—**तदपार्थकम् ।** यथाकेनचिदावेदितं भवति अनेनाहमाक्रुष्ट इति—तत्र परेणापह्नुतम्—साक्षिण आहुः सत्यमाक्रुष्टः नर्मणा, न तु रोषेणेति । तत्राक्रुष्ट इत्येतत्साक्षिणां वचो ग्राह्यम् । नर्मणेत्येतदुत्तरवादिनानुक्तत्वादपृष्टमुक्तमपि न ग्राह्यम् । **व्यावहारिकं** व्यवहारगतम् । अपगतयोजन**मपार्थकम्** । अन्ये व्याचक्षते । यदप्रागल्भ्यादिभिः स्खलितपदमुदाहरन्ति न तावता तदनादेयं किन्तु स्वभाव एषामुपलक्षितव्योऽनुमानेन—किममी अप्रागल्भ्यात्स्खलन्ति उतासत्याभिधायितयेति । तत्तु प्रागुक्तं न चाक्षरार्थ इत्युपेक्ष्यम् ॥ ७८ ॥

(२) **सर्वज्ञनारायणः । स्वभावेना**विचार्यैव द्राक् । **व्यावहारिकं** व्यवहारसंपादकम् । **यदन्यत्** पश्चादालोचनादिना **अपार्थकं** व्यर्थम् ॥ ७८ ॥

(३) **कुल्लूकः ।** यत्साक्षिणोभयादिव्यतिरेकेण **स्वभावाद्यद्ब्रूयुस्तद्**व्यवहारनिर्णयार्थं ग्राह्यं **यत्पुनः** स्वभाविकादन्यत्कुतोऽपि **कारणाद्वदन्ति** तद्धर्मविषये निष्प्रयोजनं **तन्न ग्राह्यम्** ॥ ७८ ॥

(४) **राघवानन्दः ।** एवं तर्हि स्त्रीणां वाक्यं सर्वत्राश्रद्धेयं तत्राह **स्वभावेनेति ।** अन्यथा भक्षणादिव्यवहारलोपापत्तिः । तत्रापि व्यावहारिकं न सदुपदेशादिविशिष्टमपि ब्रूयुः स्त्रीबुद्धिःप्रलयंकरीत्युक्तेः । अतोऽपार्थकं शास्त्रदृष्टचभावेनापगतोऽर्थो धर्मरूपोयस्मात्तदपार्थकमतोमिथ्यात्वादश्रद्धेयम् ।

(५) **नन्दनः। स्वभावेन** सत्येन। **व्यावहारिकं** व्यवहारोपयोगी। **धर्मार्थं** व्यवहारार्थम् ॥ ७८ ॥

(६) **रामचन्द्रः। स्वभावेनैव यत्** ब्रूयुः तत् **व्यावहारिकं** व्यवहारप्रवर्तकं **ग्राह्यम्**। अतः कारणात् **अन्यधर्मार्थं**विब्रूयुः तत् **अपार्थकं** व्यर्थं स्यात् ॥ ७८ ॥

(७) **मणिरामः। स्वभावेन** भयादिव्यतिरेकेण ॥ ७८ ॥

(८) **गोविन्दराजः। स्वभावेनेति।** असाक्षिणः स्वाभाविकं सत्यरूपं ब्रूयुः। तद्-व्यवहारनिर्णयार्थत्वाभाविकात्पुनः यदन्यकारणार्थं विरुद्धं युस्तन्निष्प्रयोजनमतश्च न ग्राह्यम् ॥ ७८ ॥

(९) **भारुचिः।** ...ग्रामिणामन्येषां चाप्रागल्भ्यादतिभावकम्पादयो जायन्ते तेषां व्यावहारिकं ब्रुवतां स्वभाव उपलक्षयितव्योऽनुमानतः पुरुषशीलतो वा किमेषाममी मिथ्यावचनकृताः कम्पादराः तां प्रागल्भ्यात् अनुचितमहाजनसमवायाद्वा येन ह्यनुमानागम्यं किञ्चिन्नास्ति एवं धृष्टप्रगल्भ्यानामपि स्वभावो वावधारणीयः ॥ ७८ ॥

**सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ॥**
**प्राड्विवाकोऽनुयुंजीत विधिनाऽनेन सान्त्वयन् ॥ ७९ ॥**

(१) **मेधातिथिः।** सभायामन्तः **सभान्तः।** शौण्डादित्वात्समासः (पा. २/१/४०)। व्यवहारदेशगता उभयोरर्थिप्रत्यर्थिनोः संनिधानेऽनुयोक्तव्या वक्ष्यमाणेन विधिना। **सांत्वयन्** अपरुषम्ब्रुवन्। पारुष्येण हि प्राड्विवाकाद्बिभ्यतोऽप्रकृतिस्था न सर्वं स्मरेयुः संस्कारभ्रंशहेतुत्वाद्भयस्य। प्राड्विबाको राज्ञा व्यवहारदर्शनाधिकृतो रूढचोच्यते। यद्यप्यवयवार्थो राजन्यपि संभवति—पृच्छति विविनक्तीति तथाऽपि भेदेन प्रयोगदर्शनम्—"अमात्यः प्राड्विवाको वा यः कुर्यात्कार्यमन्यथा" इति (९/२३४)। पृच्छतीति प्राट् "किब्वचिप्रच्छिश्रिद्रुश्रुप्रुवां दीर्घोऽसंप्रसारणं चेति" प्राट्। विशेषेण धर्मसंकटेषु विवेक्तीति विवाकः। "कृत्यल्युटो बहुलम्" इति (पा. सू. ३/३/११३)। कर्तरि घञ्। "चजोः कुघिण्यतोः" (पा. सू. ७/३/५२) इति कुत्वम्। प्राट् चासौ विवाकश्च प्राड्विवाकः ॥ ८९ ॥

(२) **सर्वज्ञनारायण।** सभामध्यं साक्षिणः संप्राप्तानर्थिप्रत्यर्थिसमक्षं राजाधिकृतो ब्राह्मणः प्रियोक्तिरचयन्वक्ष्यमाणप्रकारेण पृच्छेत् ॥ ७९ ॥

(४) **राघवानन्दः।** साक्षिणः कथं प्रष्टव्या इत्याकांक्षायामाहस**भान्तरिति। अनुयुञ्जीत** पृच्छेत्। **अनेन** वक्ष्यमाणेन **विधिना** धर्मोपदेशेन सान्त्वयन् ॥ ७९ ॥

(५) **नन्दनः।** अथसाक्षिप्रश्नविधिमाह **सभान्तः साक्षिण इति।** प्राङविवाको व्यवहारनिर्णायकः ॥ ७९ ॥

(६) **रामचन्द्रः।** अनेन विधिना सभान्तः सभामध्ये अर्थिप्रत्यर्थिसंनिधौ प्राप्तान्साक्षिणः **सान्त्वयन् प्राड्विवाकः** प्रकर्षेण विविनक्ति' विचारयति **सोनियुञ्जीत** आज्ञा-

पयेत्। तत्राह विवादानुगतं दृष्ट्वा समेभ्यस्तत्प्रयत्नः। विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः' ॥ ७९ ॥

(७) **मणिरामः। अनेन** वक्ष्यमाणेन ॥ ७९ ॥

(८) **गोविन्दराजः। सभान्तरिति।** सभामध्ये साक्षिणः संप्राप्तान् अर्थिप्रत्यर्थि समक्षं राजाऽधिकृतो ब्राह्मणः प्रियं कुर्वन्वक्ष्यमाणप्रकारेणपृच्छेत् ॥ ७९ ॥

(९) **भारुचिः।** अधुना साक्षिणां सत्यवचनार्थो योगोऽत ऊर्ध्वं वर्तिष्यते प्राड्विवाको ब्राह्मणो राजाधिकृतो विद्वान् न राजा सामर्थ्यात्। तथा च वक्ष्यति–"अमात्यः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथे"ति। क्विन्स्वचिप्रच्छयायतनुस्नुकरिब्रब्रूजीस्त्रीणां दीर्घोऽप्रसारणं चेत्यनेन पृच्छतीति प्रा(ट्?क्) सृष्ट्वा विशेषेण धर्मसङ्कटेषु विशिष्टं वा वक्ष्यति विवाकः प्राक् चासौ विवाकश्चेति प्राड्विवाकः पृच्छति चासौ विविनक्ति चेति यावत् एष प्राड्विाको धर्मज्ञो ब्राह्मणः साक्षिणोऽनुयुञ्जीत। विधिनानेन वक्ष्यमाणेन सान्त्वयन्न परुषम्। किं कारणं प्रकृतिस्थो यथा सत्यं ब्रूयात् साक्षी ॥ ७९ ॥

**यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिश्चेष्टितं मिथः॥**
**तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥ ८० ॥**

(१) **मेधातिथिः।** यज्जानीथ **अस्मिन्** व्यवहारवस्तुनि **अनयोर्मिथः** प्रत्यक्षं रहसि वा **चेष्टितं** वृत्तं **यत्सर्वं सत्येन** तथ्येन **ब्रूत** कथयत। **युष्माकं** ह्यत्र **साक्षिता** भवतामत्र प्रामाण्यम्। युष्मद्वचनाधीने सत्यानृते। इत्यनेन प्रोत्साह्यन्ते। साक्षिभूता अस्मिन् कार्य इति सामान्यनिर्देशेऽप्यखिलवस्तु श्रावणं सामर्थ्याद्द्रष्टव्यम्। न ह्यश्रुतविशेषा प्रश्नविषयं वेदितुमर्हन्तीति ॥ ८० ॥

(२) **सर्वज्ञनारायणः।** वेत्थ जानीथ ॥ ८० ॥

(३) **कुल्लूकः। यद्द्वयोर**र्थिप्रत्यर्थिनोरनयोः परस्परमस्मिन्कार्ये **चेष्टितं**जानीथ तत्सर्वंसत्येन कथय यतोयुष्माकमत्र साक्षित्वम् ॥ ८० ॥

(४) **राघवानन्दः।** तमेवविधिमाह **यदति। अनयोर**र्थिप्रत्यर्थिनोः। **वेत्थ-**वेत्थविजानीत। **अस्मिन्** व्यवहारे। **युष्माकं** यत्रार्थे तदर्थजातं सत्येन ब्रूतेत्यन्वयः ॥ ८० ॥

(५) **नन्दनः।** अनेन वक्ष्यमाणेन विधिमाह **यद्द्वयोरिति। वेत्थ**जानीथ। **मिथः** अन्योन्यम् ॥ ८० ॥

(७) **मणिरामः।** विधिरेवाह। **यद्द्वयोरिति** : **द्वयोः** अर्थिप्रत्यर्थिनोः ॥ ८० ॥

(८) **गोविन्दराजः।** यदिति। असम्यक् वस्तु ह्यनयोरर्थिप्रत्यर्थिनोर्यत्परस्परं वृत्तं जानीध्वे यत्सर्वं सत्येन कथय। तद्युष्माकमत्र साक्षात् द्रष्टव्यम् ॥ ८० ॥

(९) **भारुचिः।** एवं सत्यवचनार्थोऽयमधुनार्थवादः प्रक्रियते ॥ ८० ॥

**सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोत्यनिन्दितान् ॥**
**इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता ॥ ८१ ॥**

(१) **मेधातिथिः**। इतःप्रभृति सत्यवचनार्थः साक्षिणामनुयोगविधिः। **सत्यं** वदन् **लोकान्** स्वर्गादिलक्षणान**निन्दितान**गर्हितानभिप्रेतफलभोगहेतून् लभते **साक्षी**। जाति वचनो वालोकशब्दः। शुभे जन्मनि जात इत्यर्थः। अस्मिश्च जन्मनि **कीर्ति** ख्यातिम् **अनुत्तमां** यस्य अन्यदुत्तमं प्रकृष्टं नास्ति तां लभते। साधुवादो जनेनास्मै दीयते। यस्मादेषा च वाक् **सत्या** सरस्वती **ब्रह्मणा** प्रजापतिना **पूजिता** ॥ ८१ ॥

(२) **सर्वज्ञनारायणः**। **ब्रह्मपूजिता** ब्राह्मणाऽनुमोदिता ॥ ८१ ॥

(३) **कुल्लूकः**। साक्षी **साक्ष्ये** कर्मणि सत्यंवदन्सनुत्कृष्टान्ब्रह्मलोकादीन्प्राप्नोति पुष्कलानिहलोकेषु चात्युत्कृष्टांख्यातिंलभते यस्मादेषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता ॥ ८१ ॥

(४) **राघवानन्दः**। तत्रार्थवादमाह सत्यमिति। पुष्कलान् अप्रतिबद्धतया पूर्वादृष्टाकृष्टान् चानेनास्य किंचित्पुण्यं परार्थे क्लिश्यन्तीति वक्ष्यमाणत्वात्। **ब्रह्मपूजिता** ब्रह्मणा सत्येन विशिष्टा यतः ॥ ८१ ॥

(५) **नन्दनः**। एषा वागेतत्सत्यवचनम्। **ब्रह्मपूजिता** वेदप्रशस्ता ॥ ८१ ॥

(७) **मणिरामः**। **ब्रह्मपूजिता** चतुर्मुखपूजिता ॥ ८१ ॥

(८) **गोविन्दराजः**। **सत्यमिति**। साक्ष्यकर्मणि सत्यं कथयन् सर्वोत्कृष्टान् ब्रह्मलोकादीन् इहलोके चाप्युत्कृष्टां ख्यातिं प्राप्नोति। यस्मादेषा सत्यात्मिका वाक् प्रजापतिनापूजिता ॥ ८१ ॥

**साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ॥**
**विवशः शतमाजातीस्तस्मात्साक्ष्यं वदेदृतम् ॥८२॥**

**ब्राह्मणोवै मनुष्याणामादित्यस्तेजसांदिवि।**
**शिरोवा सर्वगात्राणांधर्मणांसत्यमुत्तमम् ॥ १ ॥***

**नास्ति सत्यात्परोधर्मोनानृतात्पातकंपरम्।**
**साक्षिधर्मे विशेषेण तस्मात्सत्यंविशिष्यते ॥ २ ॥***

**एकमेवाद्वितीयं तु प्रबुवन्नावबुध्यते सत्यंस्वर्गस्य सोपानंपारावारस्य नौरिव ॥ ३ ॥**

(१) **मेधातिथिः**। पूर्वेण दृष्टशुभफलप्रदर्शनेन सत्यवचने साक्षिणः प्रोत्साहिताः। अनेन विपरीताभिधाने दुःखोत्पत्तिदर्शनम्। सत्यवचनार्थमेवैतत्। साक्षिणः कर्म **साक्ष्यम्**। तत्रासत्यं ब्रुवाणो **वारुणैः** पाशै**र्बध्यते** पीड्यते। **भृशमत्यर्थम्**। **विवशः** परतन्त्रीकृतः सर्वचेष्टासु वाक्चक्षुर्गतास्वपि। **शतं** यावज्जन्मनि वारुणाः पाशा घोराः सर्परज्जवो जलोदराणि वा। एतद्दोषपरिहारार्थं सत्यं वदेदिति विधिः। **आजातीरिति** नायं मर्यादा-

भिविध्योराङ। तथा सति पञ्चमी स्यात्। तस्मादुपसर्गोऽयमनर्थकः, प्रलंब इतिवत्। द्वितीया चेयं आवृत्तिश्चात्र गम्यते। शतं जन्मान्यावर्तते उदरगृहीत। ।। ८२ ।।

(२) **सर्वज्ञनारायणः। शतं** शतसंख्याः। अज्ञातीरावृत्त्या जन्मानि ।। ८२ ।।

(३) **कुल्लूकः।** यस्मात्साक्षी मृषावाचं कथयन् वरुणसंबन्धिभिः पाशैः सर्परज्जुभिः जलोदरेण परतन्त्रिकृतः शतंजन्मानि यावदत्यर्थं पीड्यते तस्मात्साक्ष्ये सत्यंब्रूयात् ।। ८२ ।।

(४) **राघवानन्दः।** अन्यथावदनेन नरकप्राप्तिमाह **साक्ष्य इति। विवशः** परतन्त्रीकृतः। **शतमाजातीर्जन्मशतं** व्याप्य। **ऋतं** यथाश्रुतदृष्टम् ।। ८२ ।।

(५) **नन्दनः।** आप्रेत्य जायतइत्याजातिरितिजन्मकालोविवक्षितः। तेनात्यन्तसंयोगे द्वितीया ।। ८२ ।।

(६) **रामचन्द्रः। साक्ष्येऽनृतंवदन्विवशः** परवशःसन् शतमाजातीः शतजन्मानि **भृशं वारुणैः** पाशैर्बध्यते तस्मात्कारणात्साक्षी ऋतं ।। ८२ ।।

(७) **मणिरामः। शतंआजातीः** शतंजन्मानि यावत्। **अनृतं** मिथ्या ।। ८२ ।।

(८) **गोविन्दराजः। साक्षीति।** यस्मात्साक्ष्यकर्मणि साक्ष्यसत्यं कथयन् वरुणसम्बन्धिभिः पाशैः सर्परज्जुभिः परवशः सन् जन्मशतं बाध्यतेऽत्यर्थं तस्मात्साक्ष्ये सत्यमेव वदेत् ।। ८२ ।।

(९) **भारुचिः।** तथा प्रदर्शयति—साक्ष्य इति ।। ८२ ।।

**सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।।**
**तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ।।८३ ।।**

(१) **मेधातिथिः। पूयते** शुद्ध्यत्यन्यस्मादपि पापान्मुच्यत इति यावत्। शेषं गतार्थम् ।। ८३ ।।

(२) **सर्वज्ञनारायणः। पूयते** पूर्वकृतात्पापात् ।। ८३ ।।

(३) **कुल्लूकः।** यस्मात्सत्येन पूर्वार्जितादपि पापात्साक्षी मुच्यते धर्मश्चास्य सत्याभिधानेन वृद्धिमेति तस्मात्सर्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम् ।। ८३ ।।

(४) **राघवानन्दः।** लोकानाप्नोतीत्युक्तं तत्र हेतुः **सत्येनेति। पूयते** तत्प्राप्तिप्रतिबन्धकादधर्मान्मुच्यते। अतएवतद्धर्मोऽप्रतिबन्धतया स्वफलं जनयतीत्याह **वर्धत इति।** अतआह **सर्ववर्णेष्विति।** निमित्तार्था सप्तमी अवच्छेदार्था वा संकरः सर्ववर्णाविशिष्टैः **साक्षिभिरिति** ।। ८३ ।।

(७) **मणिरामः। पूयते** पवित्रो भवति ।। ८३ ।।

(८) **गोविन्दराजः। सत्येनेति।** यस्मात्सत्येनान्यस्मादपि पापकर्मणः साक्षी मुच्यते। धर्मश्चास्य सत्याभिधानेन वृद्धिमेति। तस्मात्सर्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम् ।। ८३ ।।

(९) **भारुचिः।** यस्मात्, **सत्येनेति** ।। ८३ ।।

**आत्मैव ह्यात्मनः साक्षी गतिरात्मा थाऽऽत्मनः ॥**
**माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥८४॥**

(१) **मेधातिथिः**। एष एवार्थो विस्पष्टीक्रियते उत्तरेण श्लोकेन ॥ ८४ ॥

(२) **सर्वज्ञनारायणः**। **आत्मा** परमात्मा आत्मनः शरीरस्य जीवस्य च। **साक्षी** चेष्टितसाक्षात्कारी। **गतिर्ज्ञा**नहेतुः। **माऽवमंस्थाः** आत्मना दृष्टस्य विपरीताभिधानात् ॥ ८४ ॥

(३) **कुल्लूकः**। यस्माच्छुभाशुभकर्मप्रतिष्ठा। **आत्मैवात्मनः** शरणं तस्मादेव् स्वमात्मानं नराणां मध्यमादुत्तमं साक्षिणं मृषाभिधाने नावज्ञासीः ॥ ८४ ॥

(४) **राघवानन्दः**। तन्मिथ्यात्वापरिज्ञानात्कथं प्रत्यवैति **साक्षी** तत्राह **आत्मेति**-त्रिभिः। आत्मा जीवः मिथ्योक्तं ममेत्यनुसंधत्तेऽवश्यम् गतिगमनसाधनं तत्पुण्यादिना तत्तल्लोकावाप्तेः। **माऽवमंस्थाः** आत्मानंकथं पश्यन्तीतिमावजानीहि। **उत्तमं** अत्यन्त-विजनेपि साक्षात् दृष्ट्त्वात् ॥ ८४ ॥

(५) **नन्दनः**। **आत्मा** परमात्मा। **आत्मनः** शरीरिणः। **आत्मानं**परमात्मानं। **नृणां** शरीरिणाम् ॥ ८४ ॥

(६) **रामचन्द्रः**। **आत्मनः** जीवस्य **आत्मैव** परमात्मैव **साक्षी**। तथा आत्मनः जीवस्य **गतिरात्मैव**। तस्मात् आत्मानं **माऽवमंस्थाः**। **नृणां** उत्तमं साक्षिणंज्ञेयः ॥ ८४ ॥

(७) **मणिरामः**। **मावमंस्थाः** मिथ्या कथनेन ॥ ८४ ॥

(८) **गोविन्दराजः**। **आत्मेति**। यस्मात् शुभाशुभकर्मप्रवृत्तस्यात्मनः चात्मैव साक्षी तथात्मैवात्मनः शरणं तस्मादेनं स्वमात्मानं नराणां मध्यादुत्तरं साक्षिणमसत्यभिधानेन मावज्ञासीः केन ममैतद् दृष्टमित्येवं बुद्धिं कृत्वा, यत आत्मा तवात्र सर्वसाक्ष्युत्तमः साक्षी विद्यते एकस्यैवात्मनः कर्मकर्तव्यापदेशोऽसत्यनिवृत्त्यर्थः ॥ ८४ ॥

(९) **भारुचिः**। येन आत्मैवेति ॥ ८४ ॥

**मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ॥**
**तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥ ८५ ॥**

(१) **मेधातिथिः**। न शब्दो व्यवहितः। पापकृतः कूटादिकारिण एवं जानते। **न कश्चिदस्मान्पश्यतीति**। इतिकारेण मन्यतेर्वाक्यार्थः कर्मेति प्रतिपाद्यते। न नः कश्चित्पश्यतीत्येष वाक्यार्थः। तांस्तु **देवा** वक्ष्यमाणाः पश्यन्ति। स्वस्य चान्तरात्मा। तदुक्तम् –"आत्मैव ह्यात्मनः साक्षी" इति। ननु कःपुनरयं पापचारी तस्य च कोऽन्यो द्रष्टा? यावताऽऽत्मैव कर्त्ता शुभाशुभानां न चान्तरपुरुषो द्रष्टेति। सत्यम्। तस्यैव देवतात्वमध्या-रोप्य भेदेन कर्मकर्तृव्यपदेशोऽनृतनिवृत्त्यर्थः। देवतारूपं त्वं जानीषे। तात्त्विकमात्मीय-मान्तरं रूपं शरीरम्, तथा बाह्यमनात्मीयमसारम्, एतदुपभोगार्थं मा दुष्कृतं कार्षीरिति

प्रोत्साह्यते। अतो 'माऽवमंस्थाः स्वमात्मानम्' माऽवज्ञासीः 'नृणां साक्षिणमुत्तमम्'। अन्यो हि साक्षी अस्मिन्नेव लोके, अयं तु मृतस्यापि। साक्ष्यं ददाति। तस्मादेतस्माद्भेतव्यम्। असत्यवादी कदाचिन्मन्यते—आत्मान्तरं प्रतिपन्नस्य किमेष मे द्रष्टाऽपि करिष्यतीति। तन्न। 'गतिरात्मा तथात्मनः'। आत्मानमन्तरेणान्या गतिर्नास्ति। न हि द्वावात्मानावेकस्य भवतः। अन्ये तु मन्यन्ते परमात्मा साक्षी संसार्यात्मानो नियोज्या इति भेदः॥ ८५॥

(२) **सर्वज्ञनारायणः**। **देवाः** इन्द्रियस्थाः सूर्योदयः। **आन्तरपुरुषः** परमात्मा॥ ८५॥

(३) **कुल्लूकः**। पापकारिण एवं मन्यन्ते अस्मानधर्मप्रवृत्तान्न **कश्चित्पश्यतीति** तान्पुनर्वक्ष्यमाणादेवाः **पश्यन्ति स्वस्यान्तरपुरुषः** पश्यति॥ ८५॥

(४) **राघवानन्दः**। **तान्पापकृतः**। **आन्तरपूरुषः** अन्तर्यामी॥ ८५॥

(६) **रामचन्द्रः**। **पापकृत** च नःअस्माकं **न कश्चित् पश्यति इति वै** मन्यन्ते॥ ८५॥

(७) **मणिरामः**। **देवाः** वक्ष्यमाणाः॥ ८५॥

(८) **गोविन्दराजः**। **मन्यन्तेऽमीति**। तांश्च देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरूषः। अस्मान्न कश्चित्पश्यतीत्येवं पापवृत्तावबुध्यन्ते न पुनर्वक्ष्यमाणा देवाः पश्यन्ति स्वश्चान्तरात्मा पश्यति॥ ८५॥

(९) **भारुचिः**। इह प्रकरणादनृताभिधायिनः पापकृत् उच्यते। सामर्थ्यात्तु सर्वस्य व्यतिक्रमकारिण इदं ग्रहणम्॥ ८५॥

**द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः॥**
**रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम्॥ ८६॥**

(१) **मेधातिथिः**। **हृदय**शब्देन हृदयायतनो लिङ्गपुरुष उच्यते। दिवादीनां द्रष्टृत्वे अचेतनेषु चैतन्यमारोप्यते। दर्शनान्तरे तु महाभूतानि देवतात्मतया चेतनान्येव। तथा च पृथिवी भारावतरणाय ब्रह्माणमुपागमदिति वर्ण्यते। सर्वगतत्वात्तेषां न किञ्चिदप्रत्ययमस्तीति सर्वशरीरिणां वृत्तं शीलं चात्मनः कायगतं शुभमशुभं च जानते॥ ८६॥

(२) **सर्वज्ञनारायणः**। **हृदयं** मनः॥ ८६॥

(३) **कुल्लूकः**। द्युलोकपृथिवी जलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसंध्याद्वयधर्माः सर्वशरीरिणां शुभाशुभकर्मज्ञाः। दिवादीनांचाधिष्ठातृदेवतास्ति सा च शरीरिण्यैकत्वावस्थापिता तत्सर्वजानातीति आगमप्रामाण्याद्वेदान्तदर्शनं तदङ्गीकृत्येदमुक्तम्॥ ८६॥

(४) **राघवानन्दः**। एतेपि द्वादशजानन्तीत्याह **द्यौरिति**। द्युभूम्यादीनामचेतनत्वेपि तदभिमानिव्यपदेशादिति न्यायेन तदभिमानासाक्षित्वात्। यतश्चित्तं हृदयं वृत्तं जातं पुण्यं पापं वा जानन्तीति **वृत्तज्ञा** एव देवाः। पश्यन्तीत्यनुषज्यते॥ ८६॥

(५) **नन्दनः**। के पुनस्ते देवास्तानाह **द्यौर्भूमिरापइति**। **हृदयं** हृदयस्थः परमात्मा॥ ८६॥

(६) **रामचन्द्रः। वृत्तज्ञाः** शुभाशुभज्ञाः ।। ८६ ।।

(७) **मणिरामः।** देवताह्। **द्यौरित्यादि। वृत्तज्ञाः।** देहिनां शुभाऽशुभधर्मज्ञाः। दिवादीनांचाऽधिष्ठानात् देवताऽस्ति सा च शरीरिण्ये कुत्रावस्थापि तत्सर्वं जानातीत्यभिप्रायेणेदमुक्तं ।। ८६ ।।

(८) **गोविन्दराजः। द्यौरिति।** द्युलोके पृथिव्युदकचन्द्रमादित्याग्निवायुरात्रिसंध्याधर्मणां इतिहासादिदृष्ट्या विग्रहवद्रूपसद्भावा एते हृदयायतनश्चात्मा यमश्च सर्वशरीरिणामाचरितं जानन्ति ।। ८६ ।।

(९) **भारुचिः।** देवास्त इत उच्यन्ते अन्तरपूरुषः स्वक्षेत्रोऽन्तर्यामी परमात्मा, एवं चानेन रहस्यपि पापं वर्तयेदन्योऽपि ।। ८६ ।।

**देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।।**
**उदङमुखान्प्राङमुखान्वा पूर्वाह्णे वै शुचिः शुचीन् ।। ८७ ।।**

(१) **मेधातिथिः। देवा** दुर्गामार्तण्डादयः प्रतिमाकल्पिताः। **शुचीन्** कृतस्नानाचमनादिविधीन्। **शुचिः** प्रष्टा स्वयमपि तथाविध एव स्यात्। **ऋतमिति** श्लोकपूरणार्थमेव। प्रसिद्धमन्यत् ।। ८७ ।।

(२) **सर्वज्ञनारायणः।** एतत्सर्वं श्रावयित्वाऽनन्तरं **साक्ष्यं पृच्छेत्। ऋतं** सत्यम् ।। ८७ ।।

(३) **कुल्लूकः।** प्रतिमा देवता। ब्राह्मणसन्निधाने शुचीन्द्विजातिप्रभृतीन् **प्राङमुखानुदङमुखान्वा** स्वयंप्रयतः प्राड्विवाकः **पूर्वाह्णे** काले याथातथ्यं **साक्ष्यं पृच्छेत्** ।। ८७ ।।

(४) **राघवानन्दः।** साक्षिणः कुत्र किंमुखान् कदाकीदृशान् कीदृशः पृच्छेदित्यपेक्षायामाह **देवेति।** देवादुर्गादिप्रतिमाः। शुचीननुष्ठितस्नानाचमनादीन्। स्वयं च तथा **शुचि ऋतं** श्लोकपूरणार्थम्। **साक्ष्यं** पृच्छेदित्यन्वयः ।। ८७ ।।

(५) **नन्दनः।** देवोदेवताप्रतिमा ।। ८७ ।।

(७) **मणिरामः। पृच्छेत्** प्राड्विवाकः ।। ८७ ।।

(८) **गोविन्दराजः। देवब्राह्मणसान्निध्य इति।** आलेख्यादिविन्यस्तोक्तदेवसन्निधाने ब्राह्मणानां समक्षं सभ्यानां यत्नकरणेन सत्यरूपतामापन्नं साक्ष्यं द्विजातीन् प्रयतानुत्तराभिमुखान् पूर्वाभिमुखान्वा प्रयतः सन् प्राड्विवाकः पूर्वाह्णकाले तु पृच्छेत् ।। ८७ ।।

(९) **भारुचिः।** यतश्चैतदेवम् अतस्तेषां नियम उच्यते ।। ८७ ।।

**ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तुपातकैः ।। ८८ ।।**

(१) **मेधातिथिः।** "क पुनरियं तृतीया **गोबीजाकाञ्चनैरिति।** यदितावत्पृच्छेदितिः क्रियासंबन्धात्करणमुच्यते, पदमुपपन्नम्। शब्दो हि तत्र करणम्, नार्थः"। नैष दोषः।

यथा गवादीनि प्रश्नकरणत्वं प्रतिपद्यन्ते तथा व्याख्येन्यम्। पातकैरित्युभयशेषो विज्ञेय्य **गोबीजकाञ्चनैः पातकैरिति।** तेनायमर्थो भवति। गोबीजकाञ्चनविषयैः पातकप्रदर्शनैः पृच्छेदिति। गां हृत्वा हत्वा वा यत्पातकं तद्भवति तव मिथ्या वदत इति प्रश्नवाक्यं पठितव्यम्। एवं वक्ष्यमाणैः पातकैः शूद्रं पृच्छेत्। पातकशब्दस्तु पातकप्रदर्शनार्थेष्वभिधानेषु एवं वक्ष्यमाणैः पातकैः शूद्रं पृच्छेत्। पातकशब्दस्तु प तकप्रदर्शनार्थेष्वभिधानेषु द्रष्टव्यो मुख्यानां प्रश्नकरणत्वाभावादित्युक्तम् ॥ ८८ ॥

(२) **सर्वज्ञनारायणः।** **गोबीजकाञ्चनै**रेतेषांतेहानिमिथ्योक्तािविति। एतैः **पातकैः**-कैर्वक्ष्यमाणैः ब्रह्मघ्नइत्यादिभिः। साक्षिणंप्रति कथितैः ॥ ८८ ॥

(३) **कुल्लूकः।** **ब्रूहीत्वेवंशब्दमुच्चार्य ब्राह्मणं पृच्छेत्। सत्यं ब्रूहीति** पार्थिवं-क्षत्रियं पृच्छेत्। **गोबीज**सुवर्णापिहारे यत्पापंतद्भवतोऽनृताभिधाने स्यादित्येवं वैश्यम्। **शूद्रं** पुनः सर्वैर्वक्ष्यमाणपापैः संबध्यसे यदि मृषावदसीति **पृच्छेत्।** ॥ ८८ ॥

(४) **राघवानन्दः।** तत्रैव व्यवस्थितप्रश्नप्रकारानाह। **ब्रूहीति** शब्दमुच्चार्य **ब्राह्मणं पृच्छेत्। सत्यमिति।** शब्दं **पार्थिवं** क्षत्रियम्। **वैश्यं गोबीजकाञ्चना**पह्लवेन यत्पापंतत्तव स्यादिति शपथेनेति। यत आह पातकैरिति। वक्ष्यमाणसर्वपातकयुक्तोसीति शपथेन **शूद्रम्** ॥ ८८ ॥

(५) **नन्दनः। पार्थिवं** क्षत्रियम्। **गोबीजकाञ्चनानि** स्पर्शयित्वेत्यर्थः। **सर्वैः** पातकैः। अनृतवादिनस्तव सर्वाणि पातकानि संभवन्तीत्युक्त्वेत्यर्थः ॥ ८८ ॥

(६) **रामचन्द्रः।** गोवधेन्यत्पापं बीजापहारेयत्पापं काञ्चनापहरेयत्पापं तद्वैश्यस्य ॥ ८८ ॥

(७) **मणिरामः। गोबीजकांचनैः** गोबीजसुवर्णाऽपहरणजनितं पापं मिथ्याभिधानेतवभविष्यतीत्येवं रूपेणवैश्यं **पृच्छेत्।** तथा **सर्वपातकैः शूद्रं पृच्छेत्** ॥ ८८ ॥

(८) **गोविन्दराजः। ब्रूहीति।** गोबीजकाञ्चनैर्वैश्यं शूद्रमेभिस्तु पातकैः। ब्रूहीत्येवं शब्दमुच्चार्य ब्राह्मणं पृच्छेत्। सत्यमित्येवमभिधाय क्षत्रियम्। गोबीजसुवर्णापिहारे यत्पातकं तवानृतवदने स्यादित्येवं वैश्यम्। शूद्रं वक्ष्यमाणैः पापप्रतिपादकैः शब्दैः पृच्छेत् ॥ ८८ ॥

(९) **भारुचिः।** यथा च ते प्रष्टव्यास्तथेदं ब्राह्मणादिजात्याश्रयनियमकारिशास्त्रम् उच्यते। पातकार्था अनुयोगाः पातकशब्देनोच्यन्ते मिथ्यावचनप्रतिषेधार्थाः। इदं चापरं ब्राह्मणस्य साक्षित्वेन निदर्शनम् ॥ ८८ ॥

**ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः ॥**
**मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥ ८९ ॥**

(१) **मेधातिथिः।** ब्राह्मणं हत्वा ये लोका नरकादिलक्षणाः प्राप्यन्ते तत्कारिभिस्ते तव भवन्ति मिथ्यावदतस्तस्मात्सत्यं ब्रूहीत्यनुयोगः। यश्च मित्रं द्रुह्यति ब्राह्मणादीन् दार-

सर्वस्वापहरणादिना नाशयति–यश्च कृतमुपकारं विस्मृत्य तमेवोपकर्तारमपकरोति–यत्तस्य **कृतघ्नस्य** परत्र दुःखं तदवाप्नोति ॥ ८९ ॥

(३) **कुल्लूकः**। ब्राह्मणहन्तुः स्त्रीघातिनोबालघातिनश्च ये नरकादिलोकाऋषिभिः स्मृताः ये च मित्रद्रोहादिकारिणः येचोपकर्त्तुरपकारिणस्ते तव मिथ्यावदतो भवेयुः ॥ ८९ ॥

(४) **राघवानन्दः**। पातकानांस्वरूपसत्त्वं नानानर्थावहमिति तत्फलपर्यवसायित्व-माह **ब्रह्मघ्नेति। ये स्मृताः** शास्त्रप्रमाणकालोका भोगभूमयः ते तव शूद्रस्य साक्ष्ये मिथ्यावदतः स्युरित्येवं श्रावयेत्। एवमुत्तरत्र सर्वमेव श्रावयेदितियावत् ॥ ८९ ॥

(५) **नन्दनः**। एतदेव विशदयति **ब्रह्मघ्न इति** ॥ ८९ ॥

(६) **रामचन्द्रः। ते लोकाः** तेमृषा ब्रुवतःस्युः भवेयुः ॥ ८९ ॥

(७) **मणिरामः**। साक्षिप्रश्नेमंत्रेत्यादिना **ब्रह्मघ्नइत्याह** ॥ ८९ ॥

(८) **गोविन्दराजः। ब्रह्मघ्नानां स्मृता लोका ये च स्त्रीबालघातिनामिति**। ब्राह्मण स्त्रीबालघातिनां ये नरकादिलोका ऋषिभिः स्मृता ये चात्राऽपकारिणां, ये च कृताऽपकारिणः ते तव च मिथ्यावदतो भवेयुः ॥ ८९ ॥

**जन्मप्रभृति यत्किंचित्पुण्यं भद्रत्वयाकृतम् ॥**
**तत्ते सर्वं शुनो गच्छेत् यदिब्रूयास्त्वमन्यथा ॥ ९० ॥**

(१) **मेधातिथिः**। शुनो गच्छेन्निष्फलं स्याद्भवत इत्यर्थः। अन्येषु दोषप्रदर्शनार्थं श्वगमनवचनं यथो कृछ्रेण महता सुवर्णाद्युत्तमद्रव्यमर्जयित्वा शुचिप्रवाहे त्यजेत्तादृक् सुकृतं भवति ॥ ९० ॥

(२) **सर्वज्ञनारायणः**। भद्रेति। शूद्रसम्बोधने ॥ ९० ॥

(३) **कुल्लूकः**। शुभाचारयंस्त्वया जन्मत आरभ्य किंचित्सुकृतं तत्सर्वं त्वदीयं कुक्कुरादिकं संक्रामति यदि त्वमसत्यं ब्रवीषि ॥ ९० ॥

(४) **राघवानन्दः**। शपथान्तरं तस्याह जन्मेति। भद्र हे मङ्गलाश्रय। शुनो गच्छेत् ते पुण्यफलस्य श्वाभोक्तेति ॥ ९० ॥

(५) **नन्दनः**। अन्यथाऽसत्यम् ॥ ९० ॥

**एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ॥**
**नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥ ९१ ॥**

(१) **मेधातिथिः। पुण्यपापयोरीक्षिता** द्रष्टा **मुनि**स्तूष्णींभूतः ॥ ९१ ॥ कः पुनरसौ **मुनिः**।

(२) **सर्वज्ञनारायणः। मुनिर्ज्ञान**वान्परमात्मा ॥ ९१ ॥

(३) **कुल्लूकः**। हे भद्र एकएवाहमस्मि जीवात्मक इति यदात्मानं **मन्यसे** मैवंमंस्थाः यस्मादेवं पापानां पुण्यानां च द्रष्टा मननान्**मुनिः** सर्वज्ञस्तवहृदये परमात्मा नित्यमवस्थितः।

तथा च श्रुतिः। द्वासुपर्णा सयुजा सखाया समानं वृक्षंपरिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ ९१ ॥

(४) **राघवानन्दः**। मिथ्यात्वसर्वदेवज्ञेयत्वमनुवदन् सत्यवादिनः सर्वतीर्थगमन-फलवदेनतन्निषेधरूपस्तुतिमाह **एकोहमितिद्वाभ्याम्**। मुनिर्मननादन्तर्यामी ईशः पुण्य-पापयोर्ज्ञातैषहृदिस्थत्वात् ॥ ९१ ॥

(५) **नन्दनः**। यस्त्वं **मन्यसे** तस्य ते पुण्यपापेक्षिता पुण्यपापयोर्द्रष्टा। तदानीं **मुनिर्मौनी** ॥ ९१ ॥

(६) **रामचन्द्रः**। हे कल्याण ते हृदये **पुण्यपापेक्षकः मुनिर्मननशीलः साक्षी स्थितः** ईश्वरः ॥ ९१ ॥

(७) **मणिरामः**। हे कल्याण मुनिः जीवात्मा ॥ ९१ ॥

(८) **गोविन्दराजः**। **एक इति**। हे भद्र एक एवाहं भवान् शरीरमात्रात्मकएव। अहमित्येवंरूपमात्मानं यस्त्वं बुध्यसे तन्मैवं मंस्थाः। यस्मादेष पुण्यपापानां द्रष्टा मुनि-स्वरूपतोऽत्यन्त शुद्धरूपस्तव हृदये नित्यमवस्थितः ॥ ९१ ॥

**यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ॥**
**तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥ ९२ ॥**

(१) **मेधातिथिः**। कः पुनरसौ मुनिभिर्भयातिशयप्रदर्शनार्थमाह यथैष सर्वप्राणिनां देहधनाद्युच्छेदकारीयातनाभिश्च निगृह्णीतेति श्रुतिपथमागतो भवतः सोऽयं तत हृदये वर्तते न विप्रकृष्टं स चापराधं मामेवं नयति मा चैवं मनसि कृथा एष आत्मा मदीयो मामुपेक्षिष्यत इति नह्येतस्य कश्चिदात्मीयस्तेन चेदविवादः स चेत्प्रसन्नः प्रत्ययिता किं गङ्गागमनेन स्नानार्थिनः पापशुद्धये किं कुरुक्षेत्रगमनेऽस्ति प्रयोजनं तत्फलं पापक्रमोपलक्षणार्थं ततः पुण्यमिहैवाविसंवादिनि परमात्मनि नहि पापकारिण आत्मा निर्विशङ्को भवति किं मेऽतः स्यादेतेनेति नास्तिकस्यापि किं कथिका भवत्येव गङ्गानदीपावयन्ती कुरुक्षेत्रं तु देश एव पावनः ॥ ९२ ॥

(२) **सर्वज्ञनारायणः**। हृदिस्थितः पुण्यपापेक्षणार्थम्। अविवादस्तद्दर्शनाविरुद्ध-वादः। कुरुत् कुरुक्षेत्रम्। तदविवादे च सर्वतीर्थफललाभ इत्यर्थः ॥ ९२ ॥

(३) **कुल्लूकः**। सर्वसंयमनाद् यमः परमात्मा वैवस्वत इति दण्डधारित्वात्। देव-नाद्देवः। यस्तवैष हृदि तिष्ठति तेन यथार्थकथ्यते यदि तवाविवादः यदा त्वन्मनोगतमसावन्य-ज्जानाति त्वं चान्यथा कथयसि तदान्तर्यामिना सह विप्रतिपत्तिः स्यात्। एवं चात्र सत्या-भिधानेनैव निःपापः कृतकृत्योऽसि पापनिर्हरणार्थं मा गङ्गां मा च कुरुक्षेत्रं यासीः। मनूक्त-मेवात्र गङ्गाकुरुक्षेत्रयोः साम्यं मत्स्यपुराणे व्यासेन स्फुटीकृतम् ॥ कुरुक्षेत्रसमा गंगा यत्र तत्रावगाहितेति। मेधातिथिगोविन्दराजौ तु विवस्वतः पुत्रोयो यमोदक्षिणदिक्पतिर्लोकतः कर्णगोचरीभूतत्वात्तवहृदये परिस्फुरति तेन सह यदि तवाधर्मकारित्वाद् विवादो नास्ति तदा मा गङ्गां मा कुरुक्षेत्रं यासीरिति व्याचक्षाते ॥ ९२ ॥

(४) **राघवानन्दः**। यमश्चासौ वैवस्वतश्च। तेन विज्ञातेनानेन विवादः संवादश्चेन्मा गमः गङ्गादिकं मा गच्छेत्यन्वयः। विसंवादश्चेत्पापभीरोर्गङ्गादिगमनं वृथेति स्तुतिनिन्दे ॥ ९२ ॥

(५) **नन्दनः**। पश्चात् किं करिष्यतीति चेत्तत्राह यमो वैवस्वत इति देवोयस्तवैष- हृदिस्थितः स वैवस्वतो यमो नान्यः। यमो भूत्वा त्वां घातयतीत्यभिप्रायः ॥ ९२ ॥

(६) **रामचन्द्रः**। वैवस्वतो यमो नियन्ता तेन यमेन सह अविवादः ते तव चेत्तर्हि गङ्गास्नानार्थं मा गमः कुरूत् कुरुक्षेत्रं मा गमः मा गच्छ। आत्मैव शुद्ध इत्यर्थः ॥ ९२ ॥

**नग्नो मुण्डः कपाली च भिक्षार्थी क्षुत्पिपासितः ।**
**अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥ ९३ ॥**

(१) **मेधातिथिः**। कपालं शरावादिपात्रैकदेशः सुबोधम् ॥ ९३ ॥

(२) **सर्वज्ञनारायणः**। कपालेन घटादिकर्परेण। एतावद्दुःखजनकं पापं भवेदि- त्यर्थः ॥ ९३ ॥

(३) **कुल्लूकः**। यः साक्ष्यमसत्यंवदेत्सनग्नः कृतमुण्डनपरिभावोऽन्धः कर्परेणोपल- क्षितः भिक्षार्थी शत्रुकुलं गच्छेत् ॥ ९३ ॥

(४) **राघवानन्दः**। अनृतवदने दृष्टरूपदण्डान्तरमाह नग्नइतित्रिभिः। मुण्डः कृतमुण्डनपरिभवः शत्रुगृहं भिक्षार्थी गच्छेदित्यन्वयः। यएवं दृश्यतेसोऽनृतवदनफल- भागित्युन्नेयः ॥ ९३ ॥

(५) **नन्दनः**। कपालं अलाबुपात्रम् ॥ ९३ ॥

(६) **रामचन्द्रः**। यः पुरुषः साक्ष्यमनृतंवदेद्वदति स एवं विधःस्यात् नग्नोमुण्डः कपालीति ॥ ९३ ॥

(७) **मणिरामः**। अनृतसाक्ष्यदोषानाह नग्न इत्यादिना। मिथ्या साक्ष्यदाता एतादृशोभवतीत्यर्थः ॥ ९३ ॥

(८) **गोविन्दराजः**। **नग्न इति। अन्धः शत्रुगृहं गच्छेदिति। य साक्ष्यमनृतं ब्रूयात्** स नग्नः कृतकेशमुण्डनः परिभवादन्धः क्षुत्तृष्णार्तः कर्परेण युक्तो भिक्षार्थं शत्रुगृहं गच्छेदिति साक्षिमात्रविषयत्वेनैतदुच्यते न शूद्रप्रश्नार्थमध्यपुरुषनिर्देशादेते शपथा बभूवुः ॥ ९३ ॥

**अवाकशिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।**
**यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्मनिश्चये ॥ ९४ ॥**

(१) **मेधातिथिः**। निमित्तं पृष्टो यो वितथमसत्यं वक्ति स तेन **किल्बिषेन** पापेन गृहीत ऊर्ध्वपादोऽधोमुखो महति गाढे तमसि नरकं यातनास्थानं तत्प्राप्नोतीत्यर्थः। अन्यस्मिंस्तमसि किंचिद्दृश्यते तत्र तु न किंचिदेवेत्यन्धग्रहणम् ॥ ९४ ॥

(२) **सर्वज्ञनारायणः**। अन्धे अन्धताहेतौ ॥ ९४ ॥

(३) **कुल्लूकः।** योधर्मनिश्चयनिमित्तं पृष्टः सन्नसत्यंब्रूयात्सपापवान्। अधोमुखोमहान्धकारं योनरकस्तं गच्छति ॥ ९४॥

(४) **राघवानन्दः।** किंचान्यत् अवागिति। सकिल्बिषी पापी अन्धेतमसि नरके अवाक्शिराउर्ध्वपादःसन्पतेदिति। विशिष्टधर्मनिश्चये कर्तव्ये अयमेव धर्मइति अविनयधर्मइतिवितथमधर्मंब्रूते इति। सोपि कूटसाक्षिवदधार्मिकः उक्तनरकपातीति शेषः॥ ९४॥

(५) **नन्दनः।** प्रश्नंपृष्टंसाक्ष्ये धर्मनिश्चये व्यवहारनिर्णये ॥ ९४॥

(८) **गोविन्दराजः। अवागिति।** यो धर्मनिश्चयनिमित्तं पृष्टः सन्असत्यं प्रश्नं ब्रूयात् स पापी अधोमुखोऽतिसान्द्रे तमसि नरके पतेत् ॥ ९४॥

**अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैः सह ॥**
**यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥ ९५ ॥**

(१) **मेधातिथिः। अर्थवैकल्यं** सत्यादपेतं **भाषते।** यथा कण्टका अशिता भक्षिता जनयन्ति न तादृशीं मत्स्याः प्रीतिं जनयन्ति। यदा धनलोभेन काचित्प्रीतिमात्रा भवति यथापि महद्दुःखं भवतीति सकण्टकमत्स्याशनोपमा ॥ ९५॥

(२) **सर्वज्ञनारायणः।** मत्स्यानिवाश्नाति कण्टकैरिति तत्र यथा आपाततः सुखं दुःखंतु महत्तथात्रेत्यर्थः। अर्थवैकल्यम् यथार्थंयथाभवति। अप्रत्यक्षमचक्षुर्विषयम् ॥ ९५॥

(३) **कुल्लूकः।** यः सभांप्राप्तस्तत्त्वार्थस्यायथार्थस्याभिप्रायमनुपलब्धमुत्कोचादिसुखलेशेन कथयति सनरो अन्ध इव सकण्टकान्मत्स्यान् भक्षयति सुखबुद्ध्या प्रवृत्तोदुःखमेव महल्लभते ॥ ९५॥

(४) **राघवानन्दः।** अन्धस्य कण्टकैर्विशिष्टं मत्स्यादनं दुःखं दूरदृष्टजमिति तद्विदः प्रसिद्धमयमपि तादृशदुःखभागित्युन्नेयः। कोयोयमेतादृशं भाषत इत्यन्वयः। अर्थवैकल्यं अर्थस्य विकलता शून्यत्वं यत्र तत्। अप्रत्यक्षं प्रत्यक्षेतरंवचः अनुपलब्धंवा ॥ ९५॥

(५) **नन्दनः।** सभागतेऽर्थे आत्मनोऽप्रत्यक्षं वैकल्यमर्थसद्भावंयो भाषते सनर इहजन्मन्यन्धोभूत्वा वृत्यभावात्कैवर्त्तादिवत्समुद्रादितीरवर्तिमत्स्योदरस्थैः कण्टकैः सहमत्स्यानश्नाति ॥ ९५॥

(६) **रामचन्द्रः।** यःसभांगतः सन्नर्थवैकल्यं अप्रत्यक्षंयथाभवति तथा अप्रत्यक्षं भाषते सनरः अन्ध इव कण्टकैः सह मत्स्यानिवाश्नाति ॥ ९५॥

(७) **मणिरामः।** अर्थवैकल्यं अयथार्थी अप्रत्यक्षं अदृष्टश्रुतं ॥ ९५॥

(८) **गोविन्दराजः। अन्ध इति।** यः सभां प्राप्तः तत्त्वस्य विप्रलब्धं मुखलेखभ्रान्त्या चादृष्टं भाषते सोन्ध इव सकण्टकान् मत्स्यान् भक्षयति सः। सुखहेतोर्वर्तमानो दुःखमेवातिशयं तदुपार्जयति ॥ ९५॥

**यस्य विद्वान् हि वदतः क्षेत्रज्ञो नातिशङ्कते ।**
**तस्मिन्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ।। ९६ ।।**

(१) **मेधातिथिः।** **यस्य वदतः** साक्षिणो **विद्वान्**सत्यानृते जानानः **क्षेत्रज्ञो**ऽन्तर्यामी पुरुषो **नातिशङ्कते** किमयं सत्यं वक्ष्यत्यनृतं वेत्येवं नाशङ्कते–निश्चितमेवैष सत्यं वक्तीति यस्यात्मा निर्विशङ्कः तस्मात्पुरुषा**न्नान्यं श्रेयांसं** श्रेष्ठं प्रशस्ततमं **पुरुषं देवा** जानते। कः पुनरयं वेदिता। कश्च ततोऽन्य आशङ्किता। एक एव ह्यात्मा स्वप्रयत्नद्वारेण वाचमीर-यन्वेदिता संपद्यते। स एव तद्धर्मेण किं कथं स्यादित्येवंरूपेणाशङ्काख्यानेन युज्यते। तत्र भेदानुपपत्तिः। सत्यमेतत्। काल्पनिकेन भेदेनैवमुक्तम्। यथा हन्त्यात्मानमात्मनेति ।। ९६ ।।

(२) **सर्वज्ञनारायणः।** क्षेत्रज्ञः परमात्मा विशङ्कते विपरीतंशङ्कते ।। ९६ ।।

(३) **कुल्लूकः।** यस्य वदतः सर्वज्ञोन्तर्यामि किमयं सत्यं वदत्युतानृतमिति नशङ्कत किन्तु सत्यमेवायंवदति निर्विशङ्कः संपद्यते तस्मादन्यं प्रशस्ततरं पुरुषदेवा न जानन्ति ।। ९६ ।।

(४) **राघवानन्दः।** आत्मनो[1] मिथ्यावादित्वेनाशङ्कितंस्तौति यस्येति। क्षेत्रज्ञः क्षेत्रभासकः साक्ष्यतएव विद्वान् यस्यमिथ्यावदतः पुंसो सत्यमेव वदति नाशङ्कते स्वयंवासत्येमेवोक्तमितिवा श्रेयांसंश्रेष्ठतरं भृगुर्हि प्रतिज्ञान्तरं प्रतिजानीते ।। ९६ ।।

(५) **नन्दनः।** वदतोयस्य वाक्यादिति शेषः। क्षेत्रज्ञः परमात्मा न तुष्यतीति ।। ९६ ।।

(६) **रामचन्द्रः।** यस्य वदतोविद्वान्नातिशङ्कते यस्य क्षेत्रज्ञोनातिशङ्कते ।। ९६ ।।

(७) **मणिरामः।** क्षेत्रज्ञः आत्मा नाभिशंकते अयं सत्यंवदति अथवा मिथ्येति न शकते ।। ९६ ।।

(८) **गोविन्दराजः। यस्येति।** यस्य वदतः शुभाशुभं सत्यं वदति उतानृतमित्येवं साशङ्को न भवत्यपि निश्चितमेवार्थं सत्यं वक्तीत्येवं निर्विशङ्कस्तस्मात्पुरुषादन्यं प्रशस्यतरं पुरुषं देवा न मन्यन्त इत्यर्थः ।। ९६ ।।

(९) **भारुचिः।** अष्टौ श्लोकाः शूद्रशपथानुयोगार्थाः एवमेभिरनेकैर्वाक्यार्थ-प्रकारैस्सत्यवचनार्थाः सम्पद्यन्ते.....नियोगः। यथा ब्राह्मणादिवर्णान् ।। ९६ ।।

---

(राघ० ४) चिह्नितपुस्तके ९६। ९७ श्लोकौव्युत्क्रमौस्तः।

१ आत्मानो...प्रतिजानीते=आत्मनोमिथ्यावादित्वेनाशङ्कितं स्तौतियस्येति। यस्यवदतः सर्वज्ञोऽन्तर्यामीकिमयंसत्यमाह उतानृतमिति न शङ्कते किंतुसत्यमेवायंवदतीति निर्विशङ्कः संपद्यते। तस्मात्पुरुषादन्यं प्रशस्ततरं पुरुषं देवान जानन्ति ।। (न, श)

**यावतो बान्धवान्यस्मिन्हन्ति साक्ष्येऽनृतं वदन् ।**
**तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥ ९७ ॥**

(१) **मेधातिथिः ।** द्रव्यविशेषानृताश्रयाः पापविशेषाः **कूटसाक्षिण** इत्येतत्प्रदर्शनार्थं प्रकरणमारभ्यते । तत्रायं श्लोकः संबोधनद्वारेणोपदिश्यमान आदरार्थः संपद्यते । यद्गुह्यं मिथ उपदिश्यते तद्यथाकथंचिद्भवतीत्यवधारितं ग्रहणं नातिगुरु इदं त्वतिमहाप्रयोजनमवसितैः श्रोतव्यमिति । **सौम्येति** चैकवचनमनेकशिष्यसन्निधाने भृगावेव विवक्षितम् । **यस्मिन् साक्ष्य** इति व्यधिकरणसप्तमी ।

[ **एवंसंबन्धनात्तस्मान्मुच्यते नियतावृतः ।**
**पशून्गोश्वपुरुषाणां हिरण्यं भूर्यथा क्रमम् ॥ १ ॥** ]

**यस्मिन्** द्रव्यभेदभिन्ने व्यवहारे यत्साक्ष्यं तत्र तन्निमित्तं यदनृतमित्येषा विषयसप्तमी । अपरा 'यस्य च भावेनेति' (पा. सू. २।३।३७) । अथवा द्रव्यभेदात्साक्ष्यभेदः, तत्र समानाधिकरण एव । **तावत** इति परिमाणे व्युत्पाद्यते । तत्र यत्प्रभूतनिमित्तमपि परिमाणं संभाव्यते इत्यतो विशिनष्टि **संख्ययेति अनुपूर्वश** इति सुखप्रतिपत्तयेऽनुपूर्वेण ह्यभिधीयमानं सुखेन प्रतीयते । आनुपूर्वी सङ्ख्यागताऽत्राभिप्रेता । तस्या एव वक्ष्यमाणत्वात् 'पञ्च पश्वित्यादि' ॥ ९७ ॥

(२) **सर्वज्ञनारायणः ।** बान्धवान् पूर्वपुरुषान् हन्ति नरकेपातयति । केचित्तु तावत्पुरुषहन्तृदोषो भवतीत्यस्यार्थ इत्याहुः ॥ ९७ ॥

(३) **कुल्लूकः ।** यस्मिन्पश्वादिनिर्मित्ते साक्ष्येऽनृतंवदन् यत्संख्याकान्पित्रादिबान्धवान्नरके योजयति तत्संख्याकान्क्रमेण परिगणनया मयोच्यमानान्साधोश्टणु अथवा यावतोबान्धवान्यस्मिन्हन्ति यावतांबान्धवानां स ननु फलं प्राप्नोति तावत्संख्याकान् श्टणु । पक्षद्वयेऽनृतनिन्दार्थमिदम् ॥ ९७ ॥

(४) **राघवानन्दः ।** शृण्वितियावत इति । यस्मिन्पश्वादिहरणनिमित्ते बान्धवान्पित्रादीन्हन्त्युत्तमलोकात्पातयतितिर्यग्योनिं प्रापयतिवा आत्मनोऽनाशोक्तेः तस्मिन्साक्ष्येकर्मणि तावतोबान्धवान् संख्यया संख्याविशिष्टत्वेन ॥ ९७ ॥

(५) **नन्दनः ।** यस्मिन्साक्ष्येऽनृतंवदन् यावतोबांधवान् इति । इति नरके योजयति । तावत्संख्यया तावत्संख्याकान् गणनया । मयोच्यमानान् हे सौम्य हे साधो शृणु ॥ ९७ ॥

(६) **रामचन्द्रः ।** कूटसाक्षिणामेतत्तामि. . .रवोपभोगस्य कालपरिमाणार्थमधुना सामर्थ्यात् न केवलं प्रकरणाच्छूद्राणामेव । अतश्च चित्तप्रणिधानार्थं सर्वेषामेवायं श्लोक आरब्धः । कथं नाम दत्तप्रणिधानास्साक्षिणः श्रुत्वैतन्मिथ्यावचनप्रत्यवायमतिमहान्त निर्वर्तेरन् मिथ्यावचनादिति ॥ ९७ ॥

(८) **गोविन्दराजः । यावन्त इति ।** यस्मिन्पश्वादिनिमित्ते साक्ष्येऽनृतं ब्रुवन् यत्संख्याकान् मित्रादिबान्धवान् नरकेण योजयति तस्मिन्साक्ष्ये तत्संख्याकान् क्रमेण संख्यया

मयोच्यमानान् शृणुत इत्यतश्च नरकपातनिमित्ताचरणस्तस्यापि नरकं भवति इत्युक्तं भवति, तत्र चानृतवादिबान्धवाः स्वार्जितकर्मचरान्नरकमुपयन्ति। अकृताभ्यागमकृत विप्रणाशचोद्यापत्तिर्यथा विषादिना क्वचित्किञ्चिद् व्यापादयति तत्र प्राक्जन्मार्जित-कर्मवशतोऽसौ तथा म्रियते यथा यमपि तं निमित्तभावमुपगच्छन् फले चात्र निरालम्बनार्थ-वादमात्रपर्यवसायिता युक्ता अप्रमादाभिधा इति ।। ९७ ।।

**पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।**
**शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।। ९८ ।।**

(१) **मेधातिथिः**। पशुनिमित्तमनृतन्। शाकपार्थिववत्समासः। पञ्चबान्धवांश्चानृतं हन्ति। ततश्च तेषां नरकपातनम्। मातापितरौ जायामिथुनं चापत्यमिति पञ्च। कथं पुनरन्यकृतेनैनसाऽन्यस्य फलम्। अन्यकृतेन पुण्यपापादिनाऽन्यस्य स्वर्गनरकादिप्राप्तिः संसर्गादिति ब्रूमः। तैरयं परित्यज्यत इत्युक्तं भवति। अथवा तैर्हतैर्यत्पापं तदस्य भवतीत्यघ्नन्नपि हन्तीत्युच्यते। अदृष्टकार्यतुल्यत्वात्। अर्थवादश्चायं न तत्कार्योपदेशः। तत्कार्योपदेशे हि हिंसाप्रायश्चित्ती स्यात्। कौटसाक्ष्यप्रायश्चित्तमेतद्भवति। उत्तरोत्तरसङ्ख्यादि वृद्धिः प्रायश्चित्तगौरवार्था न पुनर्विवक्षितैव। तेनोत्तरोत्तरस्य गरीयः प्रायश्चित्तमित्युक्तं भवति। अयं पुरुषः कस्य दास इत्येवं संशये यदनृतं **तत्पुरुषानृतम्**उच्यते ।। ९८ ।।

(२) **सर्वज्ञनारायणः**। पश्वनृते गवाद्यन्यपश्वर्थमनृते। सहस्रं पूर्वपूर्वपुरूषानेव ।। ९८ ।।

(३) **कुल्लूकः**। पशुविषयेऽनृते पञ्चबांधवान् नरके योजयति पञ्चानांबान्धवानां-हननफलं प्राप्नोति। एवंदशगोविषये शतमश्वविषये सहस्रं पुरुषविषये संख्यागौरवं चेदं-प्रायश्चित्तगौरवार्थम् ।। ९८ ।।

(४) **राघवानन्दः**। तदेवाह पञ्चेतित्रिभिः। पञ्चसङ्ख्याकान् पितॄन्। एव-मुत्तरत्र। हननं तिर्यग्योनित्वप्राप्तिः। पश्वनृते पश्वर्थमिथ्याभाषणे। एवं सत्यत्रपशुत्वेन गवादीनां प्राप्तत्वे पुनर्वचनं प्रायश्चित्तगौरवार्थम्। पुरुषानृते मनुष्यविषयानृते ।। ९८ ।।

(५) **नन्दनः**। पञ्चबान्धवानित्यनुवर्त्तते पशुरजादिः। पुरुषानृते अयंदासोऽदासो-वेत्येवमादिके हन्ति ।। ९८ ।।

(६) **रामचन्द्रः**। पश्वनृते पशोःसाक्ष्येऽनृतंवदति सपञ्चपूर्वपुरुषान्हन्ति घातयति। यद्वा नरके योजयति पातयति। हन्हिंसागत्योरित्यस्य धातोरूपम् गत्यर्थे हन्ति इति ज्ञेयम् गवानृते दशपुरुषान्हन्ति नरके पातयति। अश्वानृते शतंपुरुषान् हन्ति पातयति। सहस्र-पुरुषानृतेहन्ति ।। ९८ ।।

(७) **मणिरामः**। संख्यामाह। पंचेति ।। ९८ ।।

(८) **गोविन्दराजः**। **पञ्चेति**। पशुविषयेऽनृते पञ्चबान्धवान्नरकेण योजयति दश-गोविषये शतमश्वविषये सहस्रं पुरुषविषये ।। ९८ ।।

**हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।**
**सर्वं भूम्यनृते हन्ति माऽस्म भूम्यनृतं वदीः ।। ९९ ।।**

[पशुवत्क्षौद्रघृतयोर्यच्चान्यत्पशुसंभवम् ।। गोवत्सहिरण्येषु धान्यपुष्पफलेषु च ।।
अश्ववत्सर्वयानेषु खरोष्ट्रवतरादिषु ।। ]

(१) **मेधातिथिः ।** कथं पुनरजातानामसति संसर्गे परकीयेन संयोगो येनेदमुच्यते **हन्ति जातानजातांश्चेति** । उक्तमर्थवादोऽयमिति । सर्वं भूम्यनृतं वदन् । **माऽवदीः** भूमिसंबन्ध्यसत्यम् । **माऽवदीरि**त्यादरार्थमप्येतत् प्रत्यक्षं संबोधनम् । का पुनरियं भूमिर्नाम । यदेतत्पृथिवीगोलकं पर्वतावष्टंभनं सागरावधिप्रसिद्धम् । नन्वियत्याः कः स्वामी को वाऽपहर्ता । न हि सार्वभौमः कश्चिदस्ति । तथा च गाथा भूमेः—"न मां मर्त्यः कश्चन दातुमर्हति" । न कश्चित्सार्वभौमोऽस्तीत्यभिप्रायः । 'विश्वकर्मन् दासिथ भौवनमादिविश्व कर्मभौमनेति पितृव्यापदेशेन स्वनाम्ना च राज्ञामन्त्रणं श्रुतं मयाऽसौ रन्तुमिच्छतीति उप मैष्यति सलिलस्यमध्ये निमज्जेऽहं सलिलस्य मध्यमेवं संकल्पं वृथा संकल्पितवति त्वयि सलिले मज्जामि । सलिलमज्जनेन नैष्फल्यमत्र दानसंकल्पस्याह । यथा सलिले निक्षिप्तं निष्फलमेवमेतदपीति । मृषैष कश्यपाय संगरः । तवैष संगरः प्रतिश्रवः प्रतिज्ञानं कश्यपाय ददामिति मोघो वंध्योऽस्तु सर्वसाधारणाऽहम् । सर्वजनोपभोग्या । केवलं राजानो रक्षानिर्बंधमात्रभाज इत्यभिप्रायः । अत एतावत्या भूमेर्न दानापहारासंभव इति कुतो विवादः । सत्यम् । यथैवायं भूमिशब्दोऽत्र वर्तते एवं क्षेत्रग्रामस्थण्डिलादावपि । तत्र च संभवत्येव स्वाम्यम् । प्रत्यक्षस्यैव दानापहाराविति न किंचिदनुपपन्नम् । अपहारश्चास्या यादृशेन रूपेण अपहारः गृहादेर्न वीरुद्विच्छेदः । अतश्च यः परकीये क्षेत्रे चक्रम्येत मृदो वा कश्चिदादद्यान्नासौ भूम्यपहारी स्यात् । मीमांसकैरुक्तं "न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति ।" (मी. सू. ६।३।३) एकदेशवचनं च भूमिशब्दमधिकृत्य भगवान् कृष्णद्वैपायनो दानधर्मेषु पठितवान्—"परैरप्यनुमन्तव्यो दानधर्मो नृपैर्भुवि । अक्षयो हि निधिर्ब्राह्मो विहितोऽयं महीभृताम्" इति । कृत्स्नगोलकाभिप्रायमेव चादेयत्वं भूमेर्विश्वजिति मीमांसकैरुक्तं "न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति" (मी. सू. ६।३।३।) । सर्वान्पुरुषान्प्रतिचंक्रमणादियोग्यतयाऽविशिष्टा भूमिः स्वात्मीकर्तुमशक्या कथं दीयत इत्यर्थः । अस्मिंस्तु पक्षे ग्रामनगरादिविश्वजिति दातव्यम् । अन्ये तु पठन्ति 'अन्तरेण सदः पलीशालं च दक्षिणा नयन्तीति' भूमौ गुणविधेरस्या संभवात्क्षेत्रादेरप्यदानम् । **वदन्निति** चैकवचननिर्देशाच्छृणु सौम्येति साक्षिविषयमेवैतत्संबोधनम् न शिष्यविषयम् । 'शूद्रमेभिस्तु पातकैः इत्यत आरभ्य यावतो मध्यमपुरुषनिर्देशास्ते सर्वेषां पातकभूयस्त्वसमानाख्यातरूपाद्येक वाक्यत्वाच्छूद्रानुयोगार्थाः । 'अन्धः शत्रुगृहं गच्छेत्' इत्यत आरभ्य सर्वे साक्षिविषया अनुयोगाः । आख्यातवैरूप्येन प्रकरणस्य विच्छेदात् मध्यमपुरुषे समानार्थक्रमत्वात्कर्तव्ये गच्छेदिति प्रथमपुरुषनिर्देशः पूर्वाधिकारनिवृत्त्यर्थः ।। ९९ ।।

(२) **सर्वज्ञनारायणः ।** अजातान् पुत्रादीन् हंति नरके योजयति । सर्वं सर्वजीवनहननफलं प्राप्नोति ।

अजातान् पुत्रादीन् । अत्रापि सहस्रमित्यन्वयः । सर्वं सहस्रादप्यधिकम्
९ ॥

(३) **कुल्लूकः**। हिरण्यार्थेऽनृतंवदन् जातानजातांश्च पुत्रप्रभृतीन्नरके योजयति एषां
फलप्राप्नोति। भूमिविषये चानृतंवदन् सर्वप्राणिनांहननफलं प्राप्नोति तस्माद्भूमि
ऽनृतंमावदीरिति विशिष्याभिधानम् ॥ ९९ ॥

(४) **राघवानन्दः**। अजातानुत्तरकालीनान्। अर्थवादोयमिति मेधातिथिः। सर्व-
अपरिमितंदेयमितिवत्सहस्रादधिकउक्तसङ्ख्याया अन्तर्भावात्। एवं सर्वजातादीन्
९ ॥

(५) **नन्दनः**। सर्वजगत् ॥ ९९ ॥

(६) **रामचन्द्रः**। हिरण्यार्थे। अनृतंवदन् जातानजातांश्चहन्ति नरके योजयति।
मित्यनुवर्तते। न सहस्रजातान् सहस्रमुत्पद्यमानान्हन्ति ॥ ९९ ॥

(८) **गोविन्दराजः**। **हन्तीति**। हिरण्यविषयेऽनृतं वदन् जातान् पित्रादीन् अनु-
श्च पुत्रादीन् आत्मानृतत्वान्नरके योजयति। भूमिविषये चानृतं वदन् सर्वप्राणिजातं
योजयति, तस्माद्भूमिविषयेऽनृतं न वदेत् ॥ ९९ ॥

(९) **भारुचिः**। पूर्वापरान् यदयमाह। नन्वियंश्रुतिर्विरुध्यते। न मां मन्येः कश्चन
हंतीति। अतश्च स्वामित्वाभावः। तदभावाद्व्यवहाराभावः। ततश्च वादाभावे
तदोषाभावः साक्षिणामिति। तच्च न अर्थपरिज्ञानात् नहि कश्चित् समर्थः कृत्स्नान्
विजयस्याभावादित्येषोऽत्रार्थः, दानापहारमिथ्यावचनेषु गुणदोषप्रदर्शनशास्त्रारम्भ-
र्यात् तथा च व्यासादयः। 'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः। आच्छेत्ता
न्ता च तान्येव नरकं वसेदि'ति। भूमिच्छलार्थे त्वेवदानापहारादय इति केचित्।
तद्विचारणीयम् मीमांसादर्शनं तु ' न भूमिः स्यात् सर्वान् प्रत्यवशिष्टत्वादि'ति। सर्वान्
ार्थान् गुणविधीन् प्रत्यवशिष्टत्वाद्दक्षिणाद्रव्येषु हि गुणः श्रूयते। अन्तरेण सदः पत्नी
दक्षिणां नयन्तीति। स चायं गुणविधिरत्यन्ताशक्यः। पृथिव्यां ततोऽस्मादन्यत्रास्त्य-
दोषे स्यात्। एवं च तावद्विवादेऽनृतदोषः साक्षिणां सिद्धः सर्वस्य च कार्यस्य पृथिवी
त्वात्तदनृते सर्वं हन्तीत्युच्यते एवं च पुरुषाभिनयने स्मृतिः सादरं वारयति मास्म
नृतं वदीः ॥ ९९ ॥

**अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने।**
**अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥ १०० ॥**

**पशुवत्क्षौद्रघृतयोर्यानेषु च तथाश्ववत् ।**
**गोवद्रजतवस्त्रेषु धान्ये ब्राह्मणवद्विधिः ॥**

(१) **मेधातिथिः**। कूपतडागादिस्थे महति जले स्वल्पे वा **भूमिवद्**दोषः। **स्त्रीणां**
च मैथुनाख्ये—केनेयं स्त्री भुक्ता मैथुनधर्मेणेति। **अब्जेषु रत्नेषु** मणयो रत्नानि मुक्ताद्याः।

**अश्ममयेषु** वैडूर्यादिषु। रत्नेष्विति संबध्यते। द्विविधान्येव रत्नानि जलजान्यश्ममयानि च। अतो रत्नग्रहण एव कर्तव्ये विशेषणद्वयोपादानं श्लोकपूरणार्थम्। अद्भ्यो जाता- **न्यब्जानि।** अश्मनो विकारा **अश्ममयानि** ॥ १०० ॥

(२) **सर्वज्ञनारायणः।** भूमिवत् भूम्यनृतवद्दोषः। स्त्रीणां भोगेमैथुने मैथुनरूपस्त्री- संभोगविषयमिथ्योक्तौ अब्जेषु रत्नेषु मुक्तादिषु। अश्ममयेषुरत्नेषुमाणिक्यादिषु ॥ १०० ॥

(३) **कुल्लूकः।** वैदूर्य्यादिष्वनृतंवदतोभूमिवद्दोषमाह अप्स्विति। तडागकूपग्राह्यादेक- विषयेऽनृते स्त्रीणांच मैथुनाख्योपभोगविषये अब्जेषु च रत्नेषु च मुक्तादिषु पाषाणमयेषु वैडूर्या- दिष्वनृते भूमिवद्दोषमाहुः ॥ १०० ॥

(४) **राघवानन्दः।** भोगे मैथुनधर्मेण। निजस्त्रियः न जाने इति ब्रूते जानन्नपि ॥ १०० ॥

(५) **नन्दनः।** उक्तार्थं वस्त्वन्तरेष्वतिदिशति अप्सु अब्धिविषये ऽनृते। मैथुने भोगे मिथुनभोगविषयेऽनृते। अब्जानि शङ्खमुक्तादिकम् ॥ १०० ॥

(६) **रामचन्द्रः।** अप्सु जलस्यानृते भूमिवत् भूमेर्यत्पापमुक्तं तज्जलानृत इत्यर्थः। च पुनः स्त्रीणांभोगे निथ्योक्तौ भूमिवत्पातकम्। च पुनः अब्जेषु मौक्तिकादिषु भूमिवत्। च पुनः सर्वेष्वश्ममयेषु माणिक्यादिषु अनृतेभूमिवत् ॥ १०० ॥

(७) **मणिरामः।** मैथुने भोगे मैथुनाख्योपभोगविषये अब्जे रत्ने मुक्ताफलादौ। पाषाणमये वैडूर्यादौ भूमिविषयाऽनृतवत् फलमित्यर्थः ॥ १०० ॥

(८) **गोविन्दराजः। अप्स्विति।** उदकविषयेऽनृते स्त्रीणां भोगेषु विषये अब्जेषु पद्मरागादिषु पाषाणमयेषु च सर्ववैडूर्यादिषु अनृते भूमिवद् दोषमाहुः सर्वं हन्तीति ॥ १०० ॥

**एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे।**
**यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद ॥ १०१ ॥**

(१) **मेधातिथिः।** ऊहापोहौ वर्जयित्वा यथादृष्टं यथाश्रुतं चादृष्टं तत्त्वेन ब्रूहि ॥ १०१ ॥

(२) **सर्वज्ञनारायणः।** अञ्जसाशीघ्रम् ॥ १०१ ॥

(३) **कुल्लूकः।** एतानसत्यभाषणदोषानधिगम्य दृष्टश्रुतानतिक्रमेण सर्वमेवाञ्जसा तत्त्वतोब्रूहि ॥ १०१ ॥

(४) **राघवानन्दः।** साक्षिवाचनमुपसंहरति एतानिति। ब्रह्मघ्नानित्यादिवदित्य- न्तान् शूद्रायैव श्रावणीयं संदेशन्यायात् शूद्रवदाचरेदिति गोरक्षकादिषु शूद्रधर्मातिदेशाञ्च। ॥ १०१ ॥

(६) **रामचन्द्रः।** अञ्जसा शीघ्रंवदेति ॥ १०१ ॥

(७) **मणिरामः।** अंजसा तत्त्वतः ॥ १०१ ॥

(८) **गोविन्दराजः। एतानिति।** एतान्सर्वाननृतभाषणे दोषान् ज्ञात्वा दृष्टश्रुतानतिक्रमेण सर्वमेतत्तत्वतो ब्रूहि ।। १०१ ।।

(९) **भारुचिः।** अमी पंच श्लोकाः सर्वसाक्षिसाधारणाः। अनृतवचनप्रतिषेधविद्वेषणार्था अर्थवादाः। न फलविषयः। आकृताभ्यागमकृतविप्राणां नाशदोषप्रसंगात् एवं च प्रतिपुरुषं शास्त्राधिकारो हीयेत। आनर्थं चास्यस्यात्। येन स्वकृतकर्मफलयोगशास्त्रस्यार्थवत्वं। अतः शास्त्रविरोधान्न्यायविरोधाच्च प्रतिषेधार्थवादाएवैते विज्ञेयाः ।। १०१ ।।

**गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान्।**
**प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ।। १०२ ।।**

[**येऽप्यतीताः स्वधर्मेभ्यः परपिण्डोपजीविनः।**+
**द्विजत्वमभिकांक्षन्तितांश्च शूद्रानिवाचरेत् ।। १ ।।** ]

(१) **मेधातिथिः। कारवः** शिल्पिनस्तक्षायस्कारसूपकारादयः। **कुशीलवा** नर्तकगायनाद्याः। **प्रेष्या** जीविकार्थं परस्याज्ञाकारा दासा इति प्रसिद्धाः। **वार्धुषिका** वृद्ध्युपजीविनः। एते ब्राह्मणा अपि सन्तः प्रकरणात्साक्ष्ये शपथे च **शूद्रवद्**द्रष्टव्या न क्रियांतरे। यथा शूद्रो न दानपुण्यादिना पृच्छ्यते साक्ष्ये शपथे चाग्निहरणादिना शोध्यते तद्वदेषोऽपि शपथो यद्यपि पूर्वत्रापकृतः तथाप्युत्तरत्रानन्तर्याद्दोषवत्वात्प्रयतत्वात् प्रयतत्वेऽप्यानन्तर्यस्य संबन्धहेतुत्वाद्वक्ष्यमाणस्यापि प्रत्यासत्त्या पूर्ववद्द्वयोःसन्निपातात् शपथेऽपि तुल्यम् ।। १०२ ।।

(२) **सर्वज्ञनारायणः।** गोरक्षकान् पशुपालनेन जीवतः। कारून् सूपकारादिवृत्तीन् कुशीलवान् नटवृत्या प्रेष्यान् ब्राह्मणस्यादास्येऽपि स्वतःप्रतिपन्नदास्यान्। वार्द्धुषिकान् वृद्धिजीविनः। शूद्रवत् सर्वपातकैः पृच्छेदिति ।। १०२ ।।

(३) **कुल्लूकः।** गोरक्षणजीविनोवाणिज्यजीविनः सूपकारादिकारुकर्मजीविनः दासकर्मजीविनः नटकर्मनृत्यगीतादिजीविनः प्रतिषिद्धजीविनोब्राह्मणान् प्रकृतसाक्ष्यदर्शने शूद्रवत्पृच्छेत् ।। १०२ ।।

(४) **राघवानन्दः।** वाक्यप्रकरणपठितं* पश्वनृतइत्याद्यधर्मज्ञातंद्विजानामपि भवत्येव। सर्वपातकादियुक्तं निकृष्टद्विजेऽपि वाचयेदित्याह गोरक्षेति ।। १०२ ।।

(५) **नन्दनः।** गोरक्षकान्विप्रान् शूद्रवदाचरेत्सर्वैः पातकैर्ब्रूहीति ब्रूयादित्यर्थः ।। १०२ ।।

(६) **रामचन्द्रः।** ब्राह्मणान्प्रत्याह गोरक्षकानिति। पाशुपाल्यादिवृत्तिजीविनोविप्रान्साक्ष्ये शूद्रवत्पातकैः पृच्छेत् ।। १०२ ।।

(७) **मणिरामः।** वार्द्धुषिकान् प्रतिषिद्धजीविनः। गोरक्षकादीन् ब्राह्मणानपि शूद्रवत्साक्ष्यं पृछेदित्यर्थः ।। १०२ ।।

---

+ (ड)। (ट) चिह्नतपुस्तकेतु येऽप्यपेताः स्वकर्मभ्यः परकर्मोपजीविनः ।। द्विजाधर्मंविजानन्तस्तांश्च शूद्रवदाचरेदितिपाठः।

* पठितं=प्रमितं (राघ० ४)

(८) **गोविन्दराजः। गोरक्षकानिति।** गोरक्षकवाणिज्यसूपकारादिकारुकर्मदास्य प्रतिषिद्धजीविनो ब्राह्मणान् साक्षिप्रश्ने शूद्रवत् पृच्छेत् ॥ १०२ ॥

(९) **भारुचिः।** प्रकरणाद् ब्राह्मणशपथानुयोगापवादः। 'शूद्रमेभिस्तु पातकै'रिति वचनाद् एषां गोरक्षकादीनां ब्राह्मणानामेव सतां शूद्रशपथानुयोगः। एवं च नान्यत्र प्रयोज शूद्रवदाचरणम् इतरथा प्रकरणमुपरुद्धयेत ॥ १०२ ॥

**तद्वदन्धर्मतोऽर्थेषु जानन्नप्यन्यथानरः।**
**न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्तिताम् ॥ १०३ ॥**

(१) **मेधातिथिः।** तदन्यथाऽपि जानन्नन्यथा **वदन्नस्वर्गाद्भ्रश्यति।** कूटमपि वदन् दुष्यतीत्यर्थः। किं सर्वदैव ? नेत्याह। **धर्मतोऽर्थेषु। धर्मेण** दयादिना निमित्तेनार्थे व्यवहारेषु। धर्मस्य च निमित्तत्वमनन्तरश्लोके दर्शयिष्यति। एतच्च न स्वमनीषि कयोच्यते किं तर्ह्येतां **दैवीं वाचं** वदन्ति—अस्मत्पूर्वेऽपि स्मर्तारः। का पुनर्दैवी वाक्। यस्मिन्निमित्तेऽनृतं वदितव्यमित्येषा देवानां संबन्धिनी वाक् तां मन्वादयः श्रुत्वा **वदन्ती** विशेषेऽनृतप्रशंसा। अन्यैस्तु पूर्वविधिशेषतयास्य श्लोकस्य व्याख्यानं। तदेवं गोरक्षकादि ष्वनुयोगवाक्येषु ब्राह्मणेषु भवितव्यम्। अन्यथा ब्राह्मणेषु सत्यं ब्रूहीति यथा ब्राह्मणा एव कथं शूद्रवदनुयोज्या इति तद्विद्वानपि न दुष्यतीति यतो मन्वादय एवंविधां वाचं वदन्ति यथैव शूद्रवदाचरणीया इति। न च धर्माधर्मयोः प्रमाणम्। नैव सत्यं वदितव्यम्। तत्र यत्र विहितं तत्र स एव धर्मो यत्र वाऽनृतं तत्रानृताभिधानमेव धर्म इति ॥ १०३ ॥

(२) **सर्वज्ञनारायणः।** तत्साक्ष्यं धर्मार्थधर्मार्थं जानन्नप्यन्यथावदन् स्वर्गान्नच्यव यतस्तत्रानृतापि वाग्दैव्येवेति वदन्ति ॥ १०३ ॥

(३) **कुल्लूकः।** तदेतत्साक्ष्यमन्यथापि जानन्ननृता धर्मेण दयादिना व्यवहारेष्वन्यथा वदन्स्वर्गलोकान्नभ्रश्यति यस्मात्तदेवंविधनिमित्तविशेषणामनृताभिधानमदेवसंबन्धिनीवाचंमन्व दयोवदन्ति ॥ १०३ ॥

(४) **राघवानन्दः।** क्वचित्कस्य प्रतिप्रसवमाह तद्वदन्निति द्वाभ्याम्। तत् साक्ष्य विषयभूतंसत्यं जानन्नप्यन्यथावदन्स्वर्गाच्च्यवते यतोऽन्यामपि तांवाचं दैवींवदन्त्येन नुद्धरिष्यामीतिविजिगीषाहेतुत्वात्। धर्मतोदयादिना। अर्थेषु व्यवहारेषु ॥ १०३ ॥

(५) **नन्दनः।** अर्थेषु वानुवर्णवधपर्यन्तेषु। अन्यथा जानन्नप्यन्यथा वदन्नृत ध तांहेतोर्वदन्स्वर्गान्नच्यवते। कृतस्ताधर्मानुसारिणीवाचं दैवीमन्यावदन्ति यतस्तस्माद्धर्म विरुद्धचेदसत्यमपि साक्षिभिर्वक्तव्यं न धर्मविरुद्धमन्यामपि ॥ १०३ ॥

(६) **रामचन्द्रः।** तद्वदन्निति साधनाह। तत्साक्ष्यं धर्मतोऽर्थेषु वर्णिरक्षायन्यत धर्मार्थेषु जानन्नप्यन्यथावदन्नरः स्वर्गान्नच्यवते ॥ १०३ ॥

(७) **मणिरामः**। कुत्रचिन्मिथ्या साक्ष्येपि दोषाभावमाह। तद्वदनित्यादिना धर्मतःदयादिना अन्यथा वदन्नपिनस्वर्गाच्च्यवतेतां दयादिनाऽन्यथावाचं। दैवीं देवसंबंधिनीम् ।। १०३ ।।

(८) **गोविन्दराजः**। **तद्वदन्निति**। तदेतत्साक्ष्यमन्यथा जानन्नपि मनुष्यो धर्मेण दयया हेतुभूतयोपाधिरहितो व्यवहारेष्वन्यथा ब्रुवन् न स्वर्गात् लोकात् भ्रश्यति यस्मादे-तन्निमित्तविशेषाणां अनृताभिधानं एतां दैवसम्बन्धिनीं वाचं मन्वादयो वदन्ति। अन्ये तु प्राड्विवाकविषयामिदं व्याचक्षते प्राड्विवाको गोरक्षकादिषु ब्राह्मणेषु सच्छूद्रप्रश्नं कुर्वन्न धर्महानिं प्राप्नोति ।। १०३ ।।

(९) **भारुचिः**। प्राड्विवाकस्तच्छूद्रानुयोगवचनमन्यथा गोरक्षकादिषु ब्राह्मणेषु वदन् धर्मतोऽर्थेषु व्यवहारेषु ये साक्षिणः तेषु जानन्नपि यथावर्णमनुयोगः नाधर्मेण युज्यते। येन देवीं शास्त्रवतीं वाचं वदन्ति तां स्मृत्वा मन्वादयः विप्राञ्छूद्रवदाचरेदित्यस्यानन्तरविधेः स्तुत्यर्थवादः ।। १०३ ।।

**शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौभवेद्वधः।**
**तत्र वक्तव्यमनृतं तद्धिसत्याद्विशिष्यते ।। १०४ ।।**

(१) **मेधातिथिः**। तत्र नानृतं वदेदिति यः प्रतिषेधस्तस्याशूद्रादिविषयताऽनेनोच्यते, न पुनरनृतवदनं विधीयते। तथा सति प्रतिषेधेनैकवाक्यता बाध्येत। का पुनरत्र निमित्त-श्रुतिः **तत्रैति**। तस्य वधविशेषणत्वान्न वधः। तस्यासतोनिमित्तत्वानुपपत्तेः। अतश्च कृते वधे पश्चात्तद्विषयमतद्विषयं वाऽनृतं वक्तव्यमित्यर्थ आपतति। तत्त्वनिष्टम्। ननु च **यत्रेति** व्यवहारवस्तु निर्दिश्यते पुन**स्तत्रेति** तदेव प्रतिनिर्दिश्यते। ततश्च यस्मिन् व्यवहारे पराजिताः सन्तो वधार्हा भवंति तस्य नानुपपन्नो निमित्तभावः। अत्र वदन्ति न चात्र वधार्हेष्वनृतमिष्यते। यतोऽनिष्टं पापीयसो जीवनमिति। यस्त्ववधार्हानवकाशान्न पुरदास्या दिस्खलितादनुहतदंडताख्यापनाय वा जनैः स्वल्पापराधात् न घातयित्वोपपत्तिराजसत्वात् क्रोधस्य दण्डस्य चाशास्त्रीयत्वादस्थितपरिमाणतया निश्चयाभावो न तस्यापि निमित्तत्वो-पपत्तिः। अतः प्रतिषेधशेषतैव न्याय्या। गौतमीये त्वनृतविध्याशङ्काऽपि नास्ति। "नानृतवदने दोषो जीवनं चेत्तदधीनम्" इत्येवमादिप्रतिषेधे सत्यानृतयोः कामचारप्रसङ्गे सत्यवचनेन निमित्तभावः प्रतिपद्यमानो 'न हिंस्यात्सर्वभूतानीति' प्रतिषेधव्यतिक्रमतया चानृतं प्रतिपद्यत इति युक्तत्वेनेदं कृतम्। न चेदसौ पृष्ट आचष्टे न पुनर्हन्ति, अघ्नंश्च कथंहिंसारोषेणानुषज्यते। अथ सत्यपि स्वातन्त्र्ये तद्वचनेन राज्ञा हन्यमानत्वात्तद्धेतुभावापत्त्या-प्रयोजककर्तृत्वमिति चेत् न। सर्वो हेतुः प्रयोजकः—धनेन कुलं, विद्यया यश इति, भवति विद्या यशसो हेतुर्न प्रयोक्त्री। न चान्य एवायं लौकिकफलोत्पत्तियोग्यता हेतुलक्षणे हेतु-भावः, अपि तु द्रव्यगुणाः। यत्रापि क्रिया श्रूयते 'अग्निना पाक इति' साऽपि स्वरूपेण सिद्ध-रूपाभिधानात्कृदन्तैर्भावस्य। अन्यश्चायं शास्त्रीयः कर्तृव्यापारस्य प्रयोजको हेतुर्न तु तत्प्रयोजकत्वमेवमित्यर्थम्। यदि तावत्प्रेषणाध्येषणे आज्ञाप्रार्थनारूपे प्रयोजकत्वं साधयेते

व्रीहीनातप इत्यादावचेतनेषु णिजुत्पत्तिर्दुर्लभा। ननु च परिहृतमेतद्व्याख्यातृभिः मुख्योपचरितक्रिय इति चेतनावद्वस्तूपचारे 'भिक्षा वासयति' 'कारीषोऽध्यापयतीति'। न ह्यत्र चैतन्यकृत उपकारः अपि तु निश्चितत्वात्तदन्यस्य प्रोजकस्य। अध्ययनं ह्याचार्यकरणविधिप्रयुक्तं कुर्वाणस्य माणवकस्य शीतादिलक्षणं प्रतिबन्धकमनुवदति। कारीषे प्रयोजकत्वाध्यारोपः। प्रेरकत्वाद्धि प्रयोजकमुच्यते। तच्चाचैतन्यस्य वायुजलादेरग्निकाष्ठादौ सुतरां दृश्यते। तदा विधिप्रयोजकस्तुतिप्रयोक्तृभिः प्रेषणाद्यभावाद्गौणार्थाः शब्दाः स्युः। अथैतस्थमर्थाचरणं प्रयोजकत्वं तच्च प्रयोजकस्य व्यापारानुगुणं प्रेषणादिव्यतिरिक्तक्रियान्तरावरणं संविधानाख्यम्। संविदधान एव हि कारयतीत्युच्यते। यथा बुभुक्षमाणस्य कश्चित्पात्रमाहरत्यन्यो भक्तमुपनयति। कस्यचिद्वधप्रवृत्तस्य कश्चिदायुधमर्पयत्यन्यो वध्यदोषाविष्करणेन मन्युमुपदीपयति। एवंलक्षणः प्रेषित्रादिरूपरहितः सव्यापारः प्रयोज्यफलसिद्धावानुकूल्यं प्रतिपद्यमानस्तत्सामर्थाचरणपक्षे प्रयोजकः। अस्मिन् पक्षे कारीषोपाध्यायौ तुल्यौ प्राप्नुतः। अत्रापि यमन्तरेण क्रियाया अनिवृत्तिर्यस्य च कारकविशेषसंज्ञा न प्रवर्तेत स मुख्यः प्रयोजकः कर्त्ता। अध्यापयितारं चान्तरेण कारीषो न शक्नोत्यध्ययनहेतुभावं प्रतिपत्तुम्। आचार्यस्तु तमन्तरेणापि शक्त एवेति गौणः कारीषः। यत्र च करणादिभावो निश्चितो हेतुमत्प्रत्ययदर्शनात्तत्रापि गौणार्थतैव यथा कश्चित्स्वल्पेनापि प्रयोजनेन दूरं ग्रामं पुनः पुनर्गतवन्तं दृष्ट्वा ब्रवीति 'अश्वो गमयति देवदत्तम्' इति। यत्रतु-नकस्यचिदासत्तिविप्रकर्षावन्तरङ्गबहिरङ्गभावो वा गम्यते तत्र यावन्तस्तदानुकूल्यं प्रतिपद्यन्ते सर्वे ते प्रयोजकाः। ननु च कारकसंज्ञायामन्तरङ्गयोगो नास्तीति को विशेषः कारीषोपाध्याययोः। स्वप्रक्रियैव सा तत्र भवताम्। न वस्त्वाश्रया। वस्त्वाश्रयौ न विधिप्रतिषेधौ इदमपि तत्र पठ्यते—विवक्षातः कारकाणि भवन्तीति। एवं च सति यत्रकर्तुरेव कर्तृत्वं कश्चिद्विवक्षेत्तत्र कर्तृप्रत्ययविधिप्रतिषेधावपि स्याताम्। यथा पातकपरिगणनायामनु-पठति। "क्रयविक्रयी संस्कर्ता चोपहर्ता चेति"। तस्मादन्वाख्यानसिद्ध्यर्था तावकी सा व्यवस्था न वस्त्वधिष्ठानमर्थमवस्कन्दति। अत एव व्याख्यातृभिरुक्तं—समर्थाचरणं चेद्धेतुः हेतुमान्-प्रसङ्गः। ततश्च योऽपि कस्मैचिद्भोजनं ददाति स चौदरिकतयाऽतिसौहित्येन व्यापद्येत प्राप्तं तत्र दातुर्वधकर्तृत्वमिति। न च तत्प्रयुक्तं भवति। क्रियान्तरेण ह्यसौनिश्चितो भोजनाख्यप्रयोजको न वधो न वेर्ष्यादि कथंचिन्निमित्तं भवति। भवतु वा तन्निमित्तम्' प्रयोजकत्वाभावात्तु कर्तृत्वं नास्तीति ब्रूमः। यस्य तु भूमिसुवर्णापहारादिनाऽपराध्येत् स च तदपहारमन्युना कथंचिन्म्रियेत किं तत्रापहर्तुरपहारदोष एवेति वधेऽपि निमित्तिभाव इति चिन्त्यम्।

किमत्र चिन्त्यते? सव्यभिचारावगम्यत्वाद्धेतुहेतुमद्भावस्य न खड्गप्रहारभोजनविच्छेदादेरिव भूम्यादिहरणस्य नियतनिमित्तत्वोपपत्तिः। कोऽयं नियमोऽभिप्रेतः? यदि ह वा केचिन्म्रियन्ते केचिन्नेत्यनियतो नियमो भवति। पुरुषस्वभावभेदात् तदेवौषधं श्लेष्मिकाय हितं विपरीतमन्यस्येति। सर्वेषामेव च भावनादेशकालस्वभावभेदसहकारिसापेक्षः शक्त्यन्तरप्रादुर्भावः। तदेव लक्षणं पुरुषवित्तसंततिसापेक्षपिपासाहेतुप्राण्यन्तरसापेक्षं

तद्विच्छेदहेतुरिति। एवमत्यन्तामर्षिणो । किं तत्र शक्यो निमित्तभावोऽपह्नोतुम् ? पेशल-मानसस्य तूपेक्षैव तत्र। ये पुनर्मन्युपरीता अनशनश्वभ्रपतनविषभक्षणादिनोऽपराद्धार-मुद्दिश्य म्रियेरंस्तत्राप्येष एव न्यायः। ननु चान्यस्यैव प्रसिद्धहेतुभावस्य विषभक्षणनि-मित्तस्य तत्र दर्शनान्न भूम्यादिहरणस्यापराधो हन्तृत्वमाप्नुयात्। तेनोपजनितमन्युर्मरणहेतौ प्रवर्तत इति पारंपर्यतो निमित्तत्वमिति चेत्। एवं सति सभ्योपदेशेनापि केचिदुद्विजमाना आत्मानं व्यापादयन्ति' ततश्च तत्रोपदेष्टारो हन्तारः स्युः। तथा मत्सरिणः परद्रव्येष्वीर्ष्यया शुष्यन्ता धनिषु दोषमाददीरन्। तथाऽन्ये मूढमनसः प्रियान्पुत्रान्स्वामिनश्चानुम्रियन्ते, तत्र प्रियादीनां हन्तृतापत्तिः। अपरे च रूपवत्स्त्रीदर्शनेन परिफल्गुमनसोऽसूयन्ते भज्यमान-हृदयाश्च विवेकशून्यात्मानस्तत्र शीलवत्यः स्त्रियो दुष्येयुः। तदेवेदमापतितं मृतस्य ब्रह्म-हत्येति। सत्यमेवं यदि विधिप्रतिषेधविशेषो न स्यात्। विहितो हितोपदेशः प्रतिषिद्धं स्वहरणादि। तथा चाहुः—"उपकारप्रवृत्तानां कथंचिच्चेद्विपर्ययः। न तत्र दोषः केषांचि-दभेषजामौषधी यथा।" अत्र न केवलं वैद्यादेरातुरोपकारार्थिनः प्रयुक्तौषधस्य कथंचि-द्विपरीततयोपपत्तावदोषः—किंतर्ह्यन्यस्यापि गवादेर्महति पङ्के निमग्नस्योद्धर्तुंभुजाकर्षणाय यथाश्रमेण यदि व्यापत्तिर्न तत्रोद्धर्त्ता दुष्येदिति कथितं भवति। एवं सर्वत्र। योऽपि कस्मि-श्चित्स्वव्यापारानुष्ठानवति धनरूपातिशयसंपद्वति दृश्यमाने दन्दह्यते न तं प्रति कस्य-चिच्छास्त्रार्थातिक्रमः। निश्चितो हि निमित्तभावः प्रतिषेधस्य विषयो भवितुमर्हति। न च प्राण्यन्तराश्रयिषु चैतसिकेषु धर्मेषु प्रतिक्षणमन्यथाभवत्सु स्वभावविशेषावसायः। न हि शक्यमवसादितुमयमस्या रूपसंपदा व्यापद्यत इति। न च निश्चिते प्रतिषेधविषये संभवत्य-निश्चितविषयता न्याय्या। यत्र तर्हि कथंचिद्वर्णविपर्ययशरीरशोषणादिना कुतार्किकपरीता स्यादपि निमित्तावगतिस्तत्र किं भ्रंशयितुं शीलं संयुज्यतां कामिना, भवतु वा पुरुषघातिनीति। नैतदेवम्। न हीदृशो भवन्त्यपि निमित्तता प्रतिषेधस्य विषयः, विध्यन्तरविरोधात्। अस्ति ह्यत्र व्यभिचारप्रतिषेधविधिः न वाऽपि विध्यन्तरेणानवष्टब्धे विषये कृतावकाशा विषय-विरोधिवध्यन्त विषयमास्कंदितुमर्हन्ति। येऽतिमन्यन्ते रागलक्षणां प्रवृत्तिं शीलसंरक्षणो-पदेशो निषेधति न शास्त्रलक्षणां तेन महानुभावतया मास्य तपस्विनो जीवितमुच्छेत्सीदिति प्राणोज्जिहीर्षया मुमूर्षुणा संप्रयुज्यते नासौ व्यभिचारप्रतिषेधमतिक्रामेत्। यत्तु विध्यन्तर-विषये न विध्यन्तरं प्रवर्तत इति नैवायं विध्यन्तरस्य विषयो रागलक्षणत्वात्। ननु च प्रवृत्ता-वपि नैव शास्त्रमस्ति नियोगविधाविव व्यभिचारानुज्ञानस्मृत्यभावात्। अथाप्रवृत्तौ कामयेत मारणमिति प्रतिषेधभयात्प्रवर्तते सोऽपि प्रतिषेधो रागलक्षणामेव हिंसां प्रतिषेधयति। न चासौ रागतो न प्रवर्ततेऽपितु प्रतिषेधभयात्। या तु परोपकारतः प्रवृत्तिः साऽपि प्रतिषेध विषयपरिहारेण। योऽपि किंचिद्याचेदयमहमात्मानं हन्मीति हन्यान्न प्रयच्छतो घातत व्यवहारोच्छेदप्रसङ्गात्॥ १०४॥

(२) **सर्वज्ञनारायणः**। यत्रान्यथा वाच्यंतदाह **शूद्रेति**। ऋतोक्तौ। ब्राह्मणस्य। वधाभावेप्युग्रदण्डादधार्मिकाद्राज्ञोवधः संभवत्येव तत्र च प्रमादस्खलितादिकृतदोषविषयम् बुद्धिपूर्वसाहसादौतु दृष्टे वधसंभवेपि सत्यंवाच्यम्। तथा च **गौतमः** नानृतवचने दोषो-

**जीवनंचेत्तदधीनं न तु पापीयसोजीवनमिति** ।।' एवं चात्र विषये राज्ञा साक्षिव्यतिरिक्त-प्रमाणेनैव तत्त्वमन्वेष्यम् ।। १०४ ।।

(३) **कुल्लूकः** । क्वपुनस्तदसत्यं वक्तव्यमित्यतआह **शूद्रेति** । यस्मिन्व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्रियब्राह्मणानांवधः संपद्यते तत्रासत्यंवक्तव्यंयस्माद्यस्मिन्विषयेऽनृतप्राणरक्षणेन सत्याद्विशिष्यते एतच्च प्रमादस्खलिता धर्मविषयत्वे नत्वत्यन्ताधार्मिकस धिकारस्तेनादिविषये। तथा गौतमः। 'नानृतवदने दोषोयज्जीवनंचेत्तदधीनं न तु पापीयसोजीवनमिति।' न च। न जातुब्राह्मणंहन्यात्सर्वपापेष्वपि स्थितमिति मनुनैव वक्ष्यमाणत्वात् न ब्राह्मणवधप्रसक्तिरिति वाच्यम् उग्रदण्डत्वाद्राज्ञः कथंचित्संभवात्। अत्र वचने शूद्रादिक्रमेणाभिधानंवधस्यामङ्गलत्वात् ।। १०४ ।।

(४) **राघवानन्दः** । स वाक्कुत्रवाच्येत्यत आह यत्र ऋतोक्तौ सत्योक्तौ **शूद्रविद्** क्षत्रियाणांवधो भवेत्तत्र वक्तव्यमनृतं। **तत्र** हेतुः तद्धीति। **तदनृतं**। सत्येनधर्ममात्रमत्रतु विप्रादिरक्षा दृष्टार्थाऽहिंसाऽदृष्टार्थेति तद्द्वयमतोविशेष इति भावः। **शूद्रेति**क्रमवैपरीत्यं कूष्माण्डैरित्यापि प्रायश्चित्तचतुष्टयस्य सूचनार्थं अन्यथा तदसंभवात् ।। १०४ ।।

(५) **नन्दनः** । अथ साक्षिणांक्वचित्सत्यवचनेऽपवादमाह **शूद्रविडिति** । **उक्ते** ऋत इति पदच्छेदः सन्धिकार्यमार्षम्। उक्त्वार्त्तमिति वा पाठः। **तत्र** समानकर्तृत्वमार्षम् ।। १०४ ।।

(६) **रामचन्द्रः** । यत्रसाक्ष्ये ऋतोक्तौ प्राणिनां मनुष्याणांवधो भवेत्। तत्र योगीश्वरः प्राणिनां हि वधोयत्र तत्र साक्ष्यनृतंवदेत् ।। १०४ ।।

(७) **मणिरामः** । तत् मिथ्या ।। १०४ ।।

(८) **गोविन्दराजः** । क्व पुनस्तदनृतं वक्तव्यमित्यत आह **शूद्रविट्क्षत्रविप्राणां यत्र चैव भवेद्वध इति** । यत्र तत्प्राणसंरक्षणेनेदं चात्यन्तधार्मिकप्रमादस्खलितपुरुषविषयं न त्वत्यन्ताधार्मिकविषयं, तथा च गोतमो नानृतवचने दोषो जीवनं चेत्तदधीनं न तु पायीयसो जीवनमित्यादिविषये प्रमाणान्तरेण राजा निर्णयं कुर्यात् न साक्षिभिः न प्रमाणान्तरान्न चैवानुमानादिनाऽत्यन्तं साक्षिपरीक्षां कुर्यात्। न जातु ब्राह्मणं हन्यादिति वचनात् कथं ब्राह्मणस्य वध आपतेदित्याशङ्कनीयं कृतदण्डत्वाद्राज्ञः कथं संभवाद् व्यवहारोऽन्यत्रापि चैवंविधे विषयेऽनृतस्येष्यमाणत्वात् वधस्यामङ्गलत्वाच्छूद्रादिक्रमेण निर्देशः ।। १०४ ।।

(९) **भारुचिः** । सत्यवचनापवादोऽयम्। कारणतः आदरार्थं वेति। शूद्रादीनां प्रातिलोम्येन ग्रहणमनृताभ्यनुज्ञानार्थम्। अ......निवृत्त्यर्थात्तु युक्तारम्भमिदम्। तैः एवं तर्हि सत्यप्रतिषेध एवात्र वक्तव्यम्। नानृताभ्यनुज्ञेति। न त्वेवमर्यानृताभ्यनुज्ञाकृत् भवति। न च ......वक्तव्यतास्येति। ननु च पुरुषार्थ कारित्वात् शास्त्रस्य प्रत्यवायात् उपदेशो न न्याय्य इति पुरुषार्थकारित्वादेवास्यायमुपदेशो युक्तः। भू.....पुरुषानुग्रह-धर्मोपेक्षया च। तथा च सति धार्मिकपुरुषविषयमिदमनृताभ्यनुज्ञानमुपदेशसामर्थ्याद्विज्ञायते। तथा च स्मृत्यन्तरम्—नानृतवचने जीवे दोषो जीवनंचेत्तदधीनं न तु पापीयसो जीवनमिति। ।। १०४ ।।

**वाग्दैवत्यैश्च चरुभिर्यजेरंस्तेसरस्वतीम् ।**
**अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ।। १०५ ।।**

(१) **मेधातिथिः ।** वाक् चासौ देवता च सा वाग्देवता । तदर्थं च चरवो **वाग्दैवत्याः ।** तण्डुला नातिपक्वाश्चरवः । तै **यंजेरन्निति**बहुवचननिर्देशात् **चरुभिरिति** बहुवचनम् । पुनरेकैकशो बहवश्चरवो नापि संहतानां व्रात्यस्तोमवद्यागो 'देवश्चेद्वर्षेद्बहवो ब्राह्मणा यजेरन्निति तद्बहुवचनम्, नतु कपिंजलैश्च त्रिभिर्यजेरन्निितिवत् । तदेतद्ब्राह्मणाद्यनुग्रहार्थमनृतमुक्तं भवति । **अनृतमेवैनः** पापमसत्याभिधानलक्षणा क्रिया । यथा धर्मक्रियावत् एवं समानाधिकरणे षष्ठी । येषां तु क्रियाजन्यौ धर्माधर्मौन क्रियैव—तन्मतेऽनृतस्य यदेन इति वैय्यधिकरण्येऽनृतनिमित्तत्त्वादेनोऽनृतम्, उपचारतः समानाधिकरणे एव । तस्य **निष्कृतिः** शोधनं पावनं प्रायश्चित्तमिति यावत् **परा** प्रकृष्टा । ननु च कुतोऽत्र पापम्—यावताऽस्मिन्निमित्तेनानृतवचने दोष इत्युक्तम् । केचिदाहुः "निवृत्तिस्तु महाफलेति" । अस्माच्छास्त्रात्तु यावज्जीवमनृतं मया न वक्तव्यमिति येन संकल्पितं तस्य मिथ्यासंकल्पदोषो मा भूदिति प्रायश्चित्तमुच्यते । गेहदाहवधप्रतिषेधेऽपि नैमित्तिकं विधानम् । एनसो निष्कृतिमित्यर्थवादः । कथं तर्हि **वाग्दैवत्यैः सरस्वतीं यजेरन् ।** यदि वाग्देवता सरस्वती कथमिज्यते । अथ वाक्सरस्वत्योरेकत्वेनैवं देवताभावे शब्दावगम्यरूपत्वाद्देवताया भिन्नौ चैतौ । वाक्सरस्वतीशब्दौ । यथाऽग्नये जुहोतीति चोदितेन ज्वलनाय कृशानवे वा स्वाहेति हूयते, वायवे निरूप्य जुहुयाद्वायुर्वै प्राण इत्युक्तेऽपि न प्राणायेति हूयते । सत्यम् । वागेव देवता । सामानाधिकरण्याद्देवतार्थे तद्धितः । न सरस्वतीमिति द्वितीयानिर्देश्या देवता । कर्मणि हि द्वितीया । संप्रदानंच देवता न कर्म । कथं तर्हि सरस्वतीपदान्वयः । अर्थवादोऽयम् । अग्नये जुहोत्यग्निर्वै सर्वा देवता इति । वागेव सरस्वती—तयेष्टया साऽपीष्टा भवति । यागेन देवताऽवगम्यते । कथम् । अग्निर्यष्टव्यः प्रजापतिर्यष्टव्यस्तथाग्निं यजति यदग्निं यजतीत्यादि केचिदाहुः । देवताः स्वतस्तत्र तत्र पूज्यते । दैवतपूजावचनोऽत्र यजिः । पूजा च पूज्यमानकर्मिका । तत्र युक्ता द्वितीया । तथा च देवता पूजनीयेत्यादि स्मर्यते । एतच्च न युक्तम् । अस्मिन् हि पक्षे देवतात्वमन्यतोमृग्यम् । तत्र यागसंप्रदानं देवतेति स्मरणविरोधः । एषा च स्मृतिर्बलीयसी । निरपेक्षत्वात् । पूर्वा देवता उद्देश्या ध्येया च । यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेदिति तत्क्रियाकर्मत्वात्कर्मण्येषा द्वितीया ।। १०५ ।।

(२) **सर्वज्ञनारायणः ।** संभूयानेकैः साक्षिभिर्मिथ्याभिधानेपि स्वस्वाग्निषु प्रत्येकमेकैकएवचरुः पृथक्पृथङ्निर्वाप्यः । यदुक्तंयाज्ञवल्क्येन ।। तत्पावनाय निर्वाप्यश्चरुः सारस्वत इति ।। अत्रच सरस्वत्येव देवता वाक्पदं तदुपलक्षकम् ।। १०५ ।।

(३) **कुल्लूकः ।** ते साक्षिणोऽनृताभिधायिनोवाग्देवताकैश्चरुभिः सरस्वतींयजेरन् तस्यानृताभिधानजनितपापस्य प्रकृष्टांशुद्धिकुर्वाणाः । साक्षिबहुत्वापेक्षंचेदम् । नत्वेकस्यैव साक्षिणः कपिञ्जलन्यायेनचरुत्रयम् । यद्यपि वाग्देवताके चरौ वाक्शब्देनैव देवतात्वंन

सरस्वतीशब्देन विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायात्तथापि वाग्वैसरस्वतीति श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः। अत्र प्रकरणे चेदंप्रायश्चित्ताभिधानं लाघवार्थम्। तत्र क्रियमाणे शूद्रविट्क्षत्रियब्राह्मणवधविषयानृतवादिनइत्यपि वक्तव्यंस्यात् ॥ १०५ ॥

(४) **राघवानन्दः।** अनृतवदनस्याकर्तव्यत्वंद्रढयन्नेवंविधेपि प्रायश्चित्तमाह वागिति द्वाभ्याम्। चतुर्भिश्चरुभिः चत्वारः शूद्रादयः ते साक्षिणः अनृतस्यैनसः। अनृतजन्यस्य पापस्य निष्कृतिं शुद्धिं कुर्वाणाः सरस्वतींयजेरन्नित्यन्वयः ॥ १०५ ॥

(५) **नन्दनः।** एवमप्यसत्यवचने प्रायश्चित्तंश्लोकद्वयेनाह वाग्दैवत्यैश्चेति। धर्महेतोरनृतवादिनः साक्षिणोनिष्कृतिंप्रायश्चित्तम् ॥ १०५ ॥

(६) **रामचन्द्रः।** वाग्दैवत्यैः सारस्वतैर्मन्त्रैः। एनसः पापस्य ॥ १०५ ॥

(७) **मणिरामः।** अतश्च महाप्रत्यवायपरिहारार्थं यो...आश्रितो नृपवत्तेनव्यतिक्रमः तस्य प्रायश्चित्तार्थमिदमारभ्यते–सरस्वतीं यजेरन्नहं रुद्रेभिर्वसुभिश्चरामीत्यनेन ष्टर्चेन सूक्तेन त्रिरभ्यासश्चरोः। अनाश्रितबहुत्वविशेषाच्चेतनायाः यथा वसन्ताय कपिञ्जलानालभेतेति ॥ १०५ ॥

(८) **गोविन्दराजः। वाग्दैवतैरिति।** वाग्वै सरस्वतीति श्रुतेर्वाक् सरस्वत्योरैक्याद्वाग्देवताकैश्चरुभिः सरस्वतीं ते साक्षिणोऽनृताभिधायिनस्तस्यासत्यस्य यत्पापं तस्य प्रकृष्टसंसिद्धिंकुर्वाणा यजेरन्। अत्रैके साक्षिणः अपि कपिञ्जलवच्चरुत्रयं आहुस्तदसद्देवश्चेद्वर्षे वहवो ब्राह्मणा यजेरन्निति। इत्येतत्प्रायश्चित्तं कर्तृबहुत्वापेक्षया चरुभिरिति बहुवचनात्यस्तोमवदेषां संपाद्य यागाश्चोत्पादिताः। अत्र प्रायश्चित्तस्यप्रकरणोत्कर्षो लाघवात्तत्र हि क्रियमाणे विट्क्षत्रियविषयानृताभिधाने वृद्ध एतत्कर्तव्यं स्यात् ॥ १०५ ॥

(९) **भारुचिः।** दयादिनामिथ्यासाक्ष्ये प्रायश्चित्तमाहावाग्देवेति। वाग्देवत्यैकैश्चरुभिः सरवस्तीं यजेदित्यर्थः ॥ १०५ ॥

**कूष्माण्डैर्वाऽपि जुहुयाद्घृतमग्नौ यथाविधि।**
**उदित्यृचा वा वारुण्या त्र्यृचेनाब्दैवतेन वा ॥ १०६ ॥**

(१) **मेधातिथिः। कूष्माण्डा** नाम मन्त्रा यजुर्वेदे पठ्यन्ते। **तैर्घृतमग्नौ जुहुयात्** जुहोतिश्च देवतामुद्दिश्य द्रव्यस्य त्यागः। आधारविशेषणे तत्रेहाग्नावित्यधिकरणनिर्देशान्मांत्रवर्णिकी देवता वेदितव्या। येषु च मन्त्रेषु देवताविशेषलिङ्गं न दृश्यते–यथा 'देवकृतस्यैनसोवयजनासि' इत्यादिषु–तत्र प्रजातिर्देवतेति याज्ञिकाः। अथवा यस्यान्यत्र देवता दृष्टं सह संबन्धियावत्। तथा च निरुक्तकाराः 'अपि वा सा कामदेवता स्यादिति'। यद्यपि याऽन्यस्य हविषो देवता साऽन्यस्य न कदाचित् तथाऽपि यजति श्रूयते द्रव्यं मन्त्राश्च तेऽसत्यां देवतायां जुहोतीति रूपं तदुत्तरेण जुहुयादिति व्याख्येयम्। तच्चायुक्तम्। तथाधारयेदिति वक्तव्यं स्यात्। वयं तु ब्रूमो 'देवकृतस्यैनसोवयजनमसि' इत्यत्र कर्मैवावयज

मेवावयाजनिमत्युच्यते। अतस्तद्देवता। सर्वत्र च मन्त्राभिधेयं वस्त्वस्त्विति न देवतायां मन्त्रवर्णाभावः। **उदित्यृचा वा वारुण्येति।** उदुत्तमं वरुणपाशमस्मत् इति (ऋग्वेद १।२४।२५) **एषा ऋक् वरुणदेवता उदिति** प्रतीकेन लक्ष्यते। वारुणीग्रहणं चान्यस्या 'उत्वा मदं स्तोमा' '(ऋग्वेद ८।६४।१) इत्युच्छब्दप्रतीकाया निवृत्त्यर्थम्। **त्र्यृचेनाब्दैवतेन चेति।** देवतैवदैवतमं' आपो दैवतम् अस्य त्र्यृचस्य तेन–'आपो हिष्ठा' इत्यादिना (ऋग्वेद १०।९।१) अतश्चैकैकया एकैकाहुतिः प्रत्येकशब्दवत्' समस्तेन च समुदायाहुतिरेकेति। घृतमग्नाविति सर्वत्रानुषङ्गः। **यथाविधि।** यादृशः शिष्टसमाचार इत्यर्थः। तेन च हविषः सत्वादप्राप्ता-वाशब्दाद्वैकल्पिकाः सर्व एव ॥ १०६ ॥

(२) **सर्वज्ञनारायणः।** उदित्यृचा उदुत्तमंवरुणेत्यृचा जुहुयात् घृतमेव पापोत्कर्षा-पेक्षया सहस्रादप्यधिकं होतव्यम्। अल्पेतु सहस्रम्। तृचेनापोहिष्ठीयेन। गुणजात्याद्यु-त्कर्षापेक्षया च प्रायश्चित्तचतुष्कव्यवस्था। अत्रचाग्नाविति वचनात्पूर्वोक्तोवाग्दैवत्यश्च रुर्वैतानिकेष्वेवेति गम्यते ॥ १०६ ॥

(३) **कुल्लूकः।** कूष्माण्डमंत्रायजुर्वेदिकायद्देवादेवहेडनमित्येवमादयः तैर्मंत्रदेवता-यैघृतमग्नौ जुहुयात्। यथाविधि परिस्तरणादित्वात्स्वधर्मेण स्वगृह्योक्तेन। उदुत्तमं-वरुणपाशमित्येतया वरुणदेवताकयाआपोहिष्ठाइति तृचेन वाद्वेवताकेन जुहुयात्। घृतमग्ना-विति सर्वत्रानुषङ्गः ॥ १०६ ॥

(४) **राघवानन्दः।** कूष्माण्डमन्त्रायाजुर्वेदिकाः। यद्देवादेवहेडनं देवासश्च क्रमावय आदित्यास्तस्मान्मामुञ्चतर्तस्यर्तेनमामितस्वाहा आदित्येभ्यइदं नममेत्युद्देश त्यागेन मन्त्रान्तः पाती। एवमुत्तरत्रापिज्ञेयम्। प्रयोगश्च महार्णवोक्तः। यथाविधि पर्युक्षणादिहोमधर्मेण स्वगृह्योक्तेन। तदित्यृचा गायत्र्या तदादिकेत्युक्तत्वात्। उदुत्तमंवरुणपाशमित्येतया वारुण्या। अब्दैवतेन आपोहिष्ठेत्यनेन। अत्र यदि शूद्रः साक्ष्यंवक्ति सोपि ब्राह्मणद्वारा होमंकारयेत्। तदुक्तं याज्ञवल्क्येन। वर्णिनांहिवधोयत्रतत्र साक्ष्यनृतंवदेत्। तत्पावनाय निर्वाप्यश्चरुःसारस्वतोद्विजैरिति। अत्र द्विजैरिति निर्देशाद्गुणमुख्यसाधारणं अन्यथा शूद्रो-मिथ्यावदन्नेवंविषये न प्रत्यवेयात्। द्विजैरिति स्वरसात्तान्प्रत्येव नियमः शूद्रस्यतु दानादि ॥ १०६ ॥

(५) **नन्दनः।** उदित्यृचाउदुत्तमंवरुणेत्यृचेन। आपोहिष्ठेत्यादिना द्विजानामिदं प्रायश्चित्तं। शूद्रस्य तु स्मृत्यन्तरे प्रोक्तं शूद्रस्य द्वादशकस्य ग्रासदानम् ॥ १०६ ॥

(६) **रामचन्द्रः।** कूष्माण्डैः मन्त्रैः यद्देवादेवहेळनमित्यादिमन्त्रैः। वारुण्यात्त्रृचा तृचेनाब्दैवतेनवा आपोहिष्ठेति तिसृभिः ॥ १०६ ॥

(७) **मणिरामः।** प्रायश्चित्तोत्तरमाह। कूष्मांडैरिति। कूष्मांडैः यद्देवादेवहेलनमि त्यादियजुर्वेदोक्तैर्मंत्रैः। उदित्ऋचावारुणा उदुत्तमंवरुणपाशमित्येतया। अद्वैतमतेनऋचेन्तः आपोहिष्ठा इत्यादिना घृतमग्नाविति सर्वत्रानुषंगः ॥ १०६ ॥

(८) **गोविन्दराजः। कूष्माण्डैरिति।** यद्देवा देवहेडनमित्येभिर्मन्त्रदेवताकैर्घृतमग्नौ परिस्तरणादिहोमविधिना जुहुयात्। उदुत्तमं वरुणदेवताकया ऋचा आपो हिष्ठेत्यनेनाब्देवताकेन जुहुयात् ॥ १०६ ॥

(९) **भारुचिः।** अग्निग्रहणं जुहोति सिद्धमप्यग्निविशेषार्थं विज्ञेयम् इदं च पूर्वपूर्वप्रायश्चित्तवैकल्पिकम् ॥ १०६ ॥

**त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः।**
**तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वतः ॥ १०७ ॥**

(१) **मेधातिथिः।** पञ्चदशाहोरात्राणि पक्षः। त्रयाणां पक्षाणां समाहारः **त्रिपक्षम्।** 'अकारान्तोत्तरपदो द्विगुः' इति (वार्त्तिक २।४।१७) स्त्रीत्वे प्राप्ते पात्रादिदर्शनात्प्रतिषेधः। यद्येव त्रिपक्षीति न प्राप्नोति। छान्दसस्तत्र लिङ्गव्यत्ययः। ल्यब्लोपे कर्मणि पञ्चमी। त्रीन्पक्षान्यावदतीत्य यः साक्ष्यं न ददाति। **अगदो**ऽपीडितशरीरस्त**दृणं प्राप्नुया**दित्यर्थः। **दशबन्धं** च। दशमं च भागं दण्डनीयस्तस्मादृणात्। **ऋणादिषु** इत्यादिग्रहणेन सर्वव्यवहारोपक्रमः। द्वितीयमृणग्रहणमुपलक्षणार्थम्। यस्मिन्व्यवहारे साक्ष्यमियन्तं कालं न भवति पराजीयमानस्य साक्षिणो बोढारइत्युक्तं भवति। **गदो** रोगः तत्समानप्रत्युत्थानहेतूपलक्षणार्थम्। तेनात्र कुटुम्बोपद्रवधनिकोपरोधाद्यपि परीक्ष्यम्। **बन्ध**शब्दः सङ्ख्यादिपरो दण्डविषये दशमांशवचनः। **नर**ग्रहणं **सर्वतो**ग्रहणं च श्लोकपूरणार्थम्। अन्ये त्वाहुस्त**दृणं प्राप्नुया**दित्यस्यायमर्थः—ऋणापहरणलक्षणेन पापेन युज्येत। राज्ञे वा जीयमानस्य यो दण्डस्ततो दशमंशं दद्यादिति दण्डितः पुनः दंड्यते ॥ १०७ ॥

(२) **सर्वज्ञनारायणः।** त्रिपक्षात् त्रिपक्षपर्यन्तं साक्ष्यमवदन्धनिकाय तद्धनंदद्यात्। तथा दशबन्धं तद्धनदशमभागं राज्ञेदण्डम्। बध्यत इति बन्धः दशानां भागानां संबन्धीबन्धः भागस्तद्देशोदशबन्धः। सर्वतः सर्वस्माद्विवादविषयधनात्। इदं च स्मरणार्थं त्रिपक्षदानम्। यदितु व्याध्याद्यभिभवात्तावतापि न स्मर्तुयोग्यस्तदा न दोषइत्येतदर्थमगद इति ॥ १०७ ॥

(३) **कुल्लूकः।** अव्याधितः साक्षी ऋणादानादिव्यवहारे त्रिपक्षपर्यंतंयदि साक्ष्यंन वदेत्तदा तद्विवादास्पदं सर्वमृणमुत्तमर्णस्य दद्यात्तस्य च सर्वस्य ऋणस्यदशमभागंराज्ञो दण्डंदद्यात् ॥ १०७ ॥

(४) **राघवानन्दः।** साक्ष्यदानावधिंकुर्वन् तदुत्तरे दण्डमाह त्रिपक्षादिति। तथा भूत्वायदि त्रिपक्षपर्यन्तं साक्ष्यंन ब्रूयात् तस्मात्साक्षिणः सर्वमृणंप्राप्नुयात् प्रापयेदुत्तमर्णम्। दशबन्धं दशमंभागं आत्मानंप्रत्यपि नृपः। सर्वतः सर्वेभ्यो ब्राह्मणादिभ्यः ॥ १०७ ॥

(५) **नन्दनः।** प्राप्नुयात् दण्डत्वेन राज्ञे देयात्। न केवलमेतावदेव किन्तु सर्वतः सर्वद्रव्येषु विवादविषयादन्यत्र द्रव्यान्तरेष्वपि दशबन्धंदशभागं दण्डंप्राप्नुयादित्यर्थः ॥ १०७ ॥

(६) **रामचन्द्रः**। साक्षी नरः ऋणादिषु साक्ष्यंजानन् ब्रुवन् न वदति तदा राज्ञा धनिनेसर्वं सवृद्धिकमृणं दाप्यः। च पुनः दशबन्धं सर्वतः सर्वस्माद्विवादविषयाद्धनाद्दशमं-भागंच दाप्यः ॥ १०७ ॥

(७) **मणिरामः**। अगदः नरः अरोगः साक्षी। तदृणं विवादास्पदंसर्वं ऋणं अधमर्णः उत्तमर्णायदद्यात्। दशवधं च सर्वतः सर्वद्रव्यस्य दशमांशं राज्ञेदंडं च दद्यात्। रोगी चतत्साक्षीतदारोगान्मुक्तो भवति तदा साक्ष्यं दातव्यंतत्पर्यंतं विवादमेवेति विवाद-मेवतिष्ठतीत्यर्थः ॥ १०७ ॥

(८) **गोविन्दराजः**। **त्रिपक्षानिति**। अव्याधितः साक्षी ऋणादानादिव्यवहारेषु पक्षत्रयं यावत् यदि साक्ष्यं न दद्यात् तदा तद्विवादास्पदीभूतसर्वऋणमप्युत्तमर्णस्य दद्यात्। तस्माच्च ऋणात्सर्वस्माद् दशमं भागं राज्ञो दण्डं दद्यात् ॥ १०७ ॥

(९) **भारुचिः**। उत्तरे च यावतो द्रव्यस्याभियोगः तद्दशभागं साक्षिणं दापयेत् येना-रोगः सन् त्रिपक्षादपि साक्षी नान्यतरं ब्रवीति। दण्डयित्वापि तं साक्षिणंव्यवहारदर्शन मनुतिष्ठेत्। एवमपरिसमाप्तत्वादस्येति। ऋणव्यवहारादन्यत्र साक्षिकार्यद्रव्यापेक्षया दण्डयितव्यः ॥ १०७ ॥

**यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।**
**रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥ १०८ ॥**

(१) **मेधातिथिः**। **सप्ताहादिति** पञ्चमीदर्शनादर्वागित्यध्याह्रियते। सप्तानां दिवसानामन्यतमस्मिन्नहनि यस्य साक्षिणा रोगादि दृश्यते स मृषावादी दैवेन विभावितः पूर्वोक्तेन विधिना दापयितव्यः। **रोगो**ऽत्यन्तपीडाकरः, **अग्निर्**गोवाहनदहनः, पुत्रदारादि-प्रत्यासन्न**ज्ञातिमरणं**, तस्य कूटसाक्षित्वे लिङ्गम् ॥ १०८ ॥

(२) **सर्वज्ञनारायणः**। उत्कटदिव्ये फलावधिरयम्। क्षुद्रेषु त्वर्वाक्चतुर्दशादित्यादि स्मृत्यन्तरोक्तः। **एतच्च** तत्प्रागनुपजातनिमित्तकृतंग्राह्यम्। अग्निर्गृहादिदाहः ॥ १०८ ॥

(३) **कुल्लूकः**। यस्य साक्षिणउक्तसाक्ष्यस्य सप्ताहमध्ये व्याध्यग्निदाहसन्निहित-पुत्रादिज्ञातिमरणानामन्यतमंभवति दैवसूचितमिथ्याभिदोषत्वादृणमुत्तमर्णस्य दण्डंच राज्ञा दाप्यः ॥ १०८ ॥

(४) **राघवानन्दः**। उक्तसाक्षिणांदृष्टरोगादिलिङ्गेन वैतथ्ये निश्चिते दण्डचतामाह यस्येति। ससाक्षी उत्तमर्णस्यऋणंदशमं दशमभागंदण्डरूपंराज्ञादाप्यइति ॥ १०८ ॥

(५) **नन्दनः**। कूटसाक्षिपरिज्ञानोपायमाह यस्यदृश्येतेति। अग्निः. गृहादिष्वग्नि-दाहः। रोगादिर्यस्य सप्ताहान्तर्दृश्यते सऋणंदाप्यः ॥ १०८ ॥

(६) **रामचन्द्रः**। उक्तवाक्यस्य साक्षिणः रोगः अग्निः ज्ञातिमरणंवादृश्यते तदा राज्ञा धनिने ऋणं धनं दाप्यः। चपुनः राज्ञा दमंचदाप्यः ॥ १०८ ॥

(७) **मणिरामः**। यस्यसाक्षिणः उक्तवाक्यस्य साक्ष्यस्य। सप्ताहात् सप्ताहमध्ये रोगादिदृश्यते। मिथ्यावादे दोषात्। उत्तमर्णस्येदं ऋणंदाप्यः। दमं दंडं च ॥ १०८॥

(८) **गोविन्दराजः। यस्येति**। यस्य साक्षिण उक्तसाक्ष्यस्य सप्ताहस्य मध्यान्निमित्तान्तरं विनापि व्याध्यग्निबन्धुदाहमरणानामन्यतममुत्पद्यते सदैव प्रतिपादितमिथ्याभावात्तादृश दण्डं दाप्यः ऋणञ्च ॥ १०८॥

(९) **भारुचिः**। अर्वाक् सप्ताहात् साक्षिकुटुम्बरोगादिदर्शनेन मिथ्यावचनः साक्षादेव प्रतिपादितो दण्डयितव्यः। यावन्तं तदनृते दापितोवा दण्डितश्च ऋणव्यवहारार्थं त्वन्यत्र ॥ १०८॥

**असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः।**
**अविन्दंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत् ॥ १०९॥**

(१) **मेधातिथिः**। अविद्यमानाः साक्षिणो येष्वर्थेषु व्यवहारेषु तेऽ**साक्षिकाः**। तेषु सत्यमजानानो राजा**तत्त्वतो** लौकिकेनानुमानेनापीत्यर्थः। तत्र **शपथेना**पि वक्ष्यमाणेन दैवेनानुमानेन **लम्भयेत्** जानीयात्। लभिः प्राप्तिवचनोऽपि सामर्थ्याज्जानात्यर्थः। न ह्यन्यः सत्यस्य 'लाभः'। 'न विन्दन्' इति पाठेऽप्येवमेव व्याख्येयम्। 'असाक्षिकेषु शपथेन लम्भयेत्' इत्येतावद्विध्युद्देशवाक्यावासानात् श्लोकपूरणार्थं**मिथः**—परस्परम् ॥ १०९॥

(२) **सर्वज्ञनारायणः**। शपथेनात्मशिरःस्पर्शादिनापि तत्त्वं लम्भयेत् प्रापयेत् वादिनम् ॥ १०९॥

(३) **कुल्लूकः**। अविद्यमानसाक्षिकेषु व्यवहारेषु परस्परंविवदमानयोस्तत्त्वतश्छलादिव्यतिरेकेण सत्यमलभमानः प्राड्विवाकोवक्ष्यमाणेन शपथेन सत्यमुन्नयेत् ॥ १०९॥

(४) **राघवानन्दः**। असाक्षिकेकथं निश्चयस्तत्राह असाक्षिकेत्विति। अविन्दन्सत्यासत्यतामलभमानः शपथेनापि लम्भयेदुत्तरयेत् ॥ १०९॥

(५) **नन्दनः**। शपथविमुखः कृतशपथश्च रोगाद्यभिभूतौ पराजिताविति। शपथेनापि विप्रतिपन्नार्थनिर्णयोपायः। शपथोनामयदीदंमयोक्तमेतदन्यथा चेत्पातकीस्यामित्यादिवचनंयदुक्तमृषिणा अद्यापुनीयदियातुधान 'इति' ॥ १०९॥

(६) **रामचन्द्रः**। सत्यं सत्त्वतः अविदन् अजानन् राजा शपथेन लम्भयेत् प्रापयेत् ॥ १०९॥

(७) **मणिरामः**। साक्ष्यभावेविवादनिर्णयप्रकारमाह। असाक्षिकेष्विति ॥ १०९॥

(८) **गोविन्दराजः। असाक्षिकेष्विति**। अविद्यमानसाक्षिके परस्परं विवदमानयोः वादिनोस्तत्त्वेन सत्यमलभमानः प्राड्विवाकः शपथेन वक्ष्यमाणेन सत्यमुद्धरेत् ॥ १०९॥

(९) **भारुचिः**। सत्यप्रशंसार्थं पुराकल्पार्थवाद उदाह्रियते। विहितानुष्ठान प्ररोचनयः ॥ १०९॥

**महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ।**
**वसिष्ठश्चापि शपथं शेपे पैजवनेनृपे ॥ ११० ॥**

(१) **मेधातिथिः।** अर्थवादोऽयं पूर्वोक्तस्य शपथविधेः। **महर्षिभिः** सप्तर्षिप्रभृतिभिः **कार्यार्थं** संदिग्धकार्यनिर्णयार्थं **शपथाः कृताः**। अस्मिन्नर्थे च भगवतः कृष्णद्वैपायनस्याख्यानमुदाहर्तव्यम्। पुष्करेषु तेष्वपहारितेष्वितरेतरं सप्तर्षयः शेपिरे 'यस्ते हरति पुष्करं स इमां पापकृतो गतिं गच्छेत्' इत्यादि। **देवै**रिन्द्रप्रभृतिभिः। इन्द्रो ह्यहिल्यां प्रत्यभिशप्तः शापभयाद्बहुविधं शपथं चकार। **वसिष्ठश्चेति** पृथङ्निर्देशः प्राधान्यख्यापनार्थः। शपथं कृतवानित्यर्थः। उपपदादेव विशेषावगतेः शपतिः **करोत्यर्थ**मात्रे वर्तते। यथा 'यज्ञं यजत' इति 'स्वपोषं पुष्ट' इति तथा 'शपथं शेप' इति ज्ञेयम्। 'शप उपलंभने' इति लिटि प्रथमपुरुषात्मनेपदैकवचने शेपे इति रूपम्। पैजवनो राजा बभूव। तस्मिन्काले विश्वामित्रेणाकृष्टो मण्डलमध्यगतः कामक्रोधाभ्यां संक्षुब्धाचरणोऽघासुरो यातुधानोऽस्मीति शपथं गृहीतवान्। विश्वामित्रेणोक्तस्तस्य राज्ञः समक्षमनेनैव तत्पुत्रशतमशितमेष हि रक्ष इति। ततः स उवाच। अद्यैव म्रियै यदि रक्षः स्यामित्यात्मन्यनिष्टाशंसनमत्र शपथः। पुत्रदारादिशिरःस्पर्शने एतदनिष्टाशंसनं शपथो मन्तव्यः॥ ११० ॥

(२) **सर्वज्ञनारायणः।** महर्षिभिर्देवैश्च विशस्तैन्यादौ शपथाःकृताः। **कार्यार्थः** कार्यनिर्णयार्थम्। अनेन पुत्रशतं भक्षितमिति विश्वामित्रेणोक्ते सुदासः पैजवनस्याग्रे वसिष्ठः शपथं चक्रे अद्यापुनीययदियातुधानो अस्मीत्यादिभिर्ऋग्भिः॥ ११० ॥

(३) **कुल्लूकः।** सप्तर्षिभिर्देवैश्च इन्द्रादिभिः संदिग्धकार्यनिर्णयार्थं शपथाः कृताः वसिष्ठोप्यनेन पुत्रशतंभक्षितमिति विश्वामित्रेणाकृष्टः स्वपरिशुद्धये पिजवनापत्ये सुदासि राजनि शपथंचकार। अनेकार्थत्वाद्धातूनांशपिरपि करोत्यर्थः॥ ११० ॥

(४) **राघवानन्दः।** शपथे सदाचारंप्रमाणयति महर्षिभिश्चेति। हेपैजवनअनेन पुत्रशतंते भक्षितमित्यभिशस्तोविश्वामित्रेण वसिष्ठः। पैजवने पिजवनस्यापत्ये सुदासि। शपथं शेपे चकार॥ ११० ॥

(५) **नन्दनः।** कार्यार्थंसंदिग्धस्यनिर्णयार्थंकृतवान्। नृपेसन्निधौ॥ ११० ॥

(६) **रामचन्द्रः।** पैजवनेनृपे पिजवनाऽपत्ये सुदासनाम्नि। शपथंशेपे कृतवान्। धातूनामनेकार्थत्वात् शपिरपिकरोत्यर्थः॥ ११० ॥ ॥ १११ ॥

(८) **गोविन्दराजः।** **महर्षिभिरिति।** महर्षिभिरगस्त्यादिभिर्विशस्तैन्याद्देवैश्चन्द्रादिभिः संदिग्धकार्यनिर्णयार्थं शपथाः कृताः। वसिष्ठोऽपि अनेन पुत्रशतं भक्षितमित्येवं विश्वामित्राकृष्टः पिजवनापत्ये सुदासे राजनि परिशुद्ध्यर्थं शपथं चकार। न वृथा शपथं चकार॥ ११० ॥

(९) **भारुचिः।** अप्यन्ये महर्षयः तथा च व्यासो 'यस्ते हरति पुष्कर'मिति शपथाख्यानकं प्रोवाच एवं च सत्यधर्मपरिहारापेक्षया॥ ११० ॥

**न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।**
**वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥ १११ ॥**

(१) **मेधातिथिः ।** मिथ्याशपथे फलाख्यानमेतत् । वृथाऽन्यथाऽसत्यमिति यावत् । तत्रापह्नियमाणसुवर्णादिद्रव्यजात्यपेक्षोऽनृतशपथदोषोऽन्यथाशपथे स्वल्पे । गरीयसि तु कार्ये गौरवादधिकतरो दोषोऽस्त्येव । प्रेत्य नाशो नरकम्, इह महदयशः । प्रमाणान्तरैस्तु ज्ञाते राजदण्डः ॥ १११ ॥

(२) **सर्वज्ञनारायणः ।** वृथा मिथ्या ॥ १११ ॥

(३) **कुल्लूकः ।** स्वल्पेपि कार्ये न वृथा शपथंपण्डितः कुर्यात् । वृथाशपथंकुर्वन्परलोके-इहलोके नरकप्राप्त्याऽकीर्तिप्राप्त्याच नाशंप्राप्नोति ॥ १११ ॥

(४) **राघवानन्दः ।** अल्पकार्ये तंनिषेधति नेति । सत्येनापि शपेद्यस्तु देवाग्निगुरु-सन्निधौ । तस्य वैवस्वतोराजाधर्मस्यार्थंनिकृन्ततीति । निंदाश्रवणात् शपथंनकुर्यादित्यर्थः । मिथ्याशपथकारिणोरोगादिदर्शनादैहिकानर्थः पापादामुष्मिकइत्याह प्रेत्येति ॥ १११ ॥

(५) **नन्दनः ।** शपथकारिणंप्रत्याह नवृथाशपथमिति । वृथाशपथंमिथ्याशपथम् । महत्स्वर्थेषु दोषातिशयः सूचितः । स्वल्पेप्यर्थइति शपथस्य क्वचित् ॥ १११ ॥

(६) **रामचन्द्रः ।** बुधः पण्डितः ॥ १११ ॥

(७) **मणिरामः ।**

(८) **गोविन्दराजः । नेति ।** स्वल्पेऽपि कार्ये विद्वान् मिथ्याशपथं न कुर्यात् । मिथ्या-शपथं कुर्वन् इहलोकपरलोकयोरकीर्तिः, नरकावाप्त्या च नश्यति ॥ १११ ॥

(९) **भारुचिः ।** इयं च मिथ्याशपथनिन्दाप्रत्यवायदर्शनेन प्रतिषिद्धवर्जनार्थापि सती सत्यशपथ प्रशंसनार्था सम्पद्यत इत्यर्थः शास्त्रसामर्थ्यापेक्षया । एवमुभयं निथ्यावचनेषु साक्षिषु प्रकल्प्यम् । असाक्षिकेषु तावद् व्यवहारेष्वेवमनुमानसाक्षिनिमित्तोनिर्णयः ॥ १११ ॥

**कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।**
**ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥११२ ॥**

(१) **मेधातिथिः ।** कामः प्रीतिविशेषो विशिष्टेन्द्रियस्पर्शजन्यः, स यासु भवति पुरुषस्य ताः कामिन्यो भार्यावेश्यादयः । तत्र यः शपथः । कामसिद्धयर्थो यथा 'नाहमन्यां कामये प्राणेश्वरी मे त्व'मित्याद्यः । यस्तु 'संप्रयुज्यस्व मया' 'इदं त्वया देयं' 'दास्य' इति–तत्र भवत्येव दोषः । **शपथे**–विषयसप्तमी चेयं न निमित्तसप्तमी । तेन यस्यामेवैकाकिन्यां यथाप्यते तत्रोक्तरूपशपथे न दोषः निमित्तसप्तम्यां तु निमित्ते परद्रव्यापहारे दोषः स्यात् । अतश्च 'कामाद्दशगुणं पूर्वम्' (८।१२१) इत्यादिकं दण्डविधानं न युज्यते । तथापि निमित्तानन्तरकृते विवादेऽस्त्येव वृथाशपथदोषः । एवं सर्वत्र । **विवाहेषु ।** न त्वयाऽन्या वोढव्या न वाऽन्यो वोढव्य इति अन्यस्यापि सुहृदादेर्विवाहार्थमेवंविधमनृतमदोषः ।

न पुनर्जात्यपह्नवादौ। **गवां भक्ष्ये।** गवां यवससिद्धार्थं मयाऽपहर्तव्यं–न मयाऽपहृतं परस्य चातत्संबन्धिभिरभियुक्तस्य वृथासाक्ष्ये शपमानस्य न दोषः। एव**मिन्धने। ब्राह्मणानाम-भ्युपपत्ति**रनुग्रहः। सर्ववर्णानुग्रहेऽनुज्ञातमेव। किमिह पुनर्वचनेन। केचिदाहुः–शपथो ब्राह्मणेऽनुज्ञायते, शूद्रादिषु त्वनृतमेव। एतच्च '**तद्धि**सत्याद्विशिष्यते' इति (८।१०४) वचनान्नैतदनृतम्। अतो न भवति प्रतिषेधो ह्यसौ। वृथाशपथस्य पूर्वेण प्रतिषिद्धस्य प्रति-प्रसवशास्त्रमेतत्। तस्मात्सर्ववर्णानुग्रहे शपमानस्य न दोषः किमर्थं तर्हीदमुच्यते। तत्र वधात्परित्राणमुक्तं सर्ववर्णविषयम्। **अभ्युपपत्तिस्तु** ब्राह्मणस्यैव। सा हि धनलाभादिना संभवति। सर्वतश्च परसंबन्धिनीषु क्रियास्वेवंविधासु शपथाऽभ्यनुज्ञानमुपायान्तरेण तत्सिद्धा-संभव एव द्रष्टव्यम्॥ ११२॥

(३) **कुल्लूकः।** वृथाशपथप्रतिप्रसवार्थमाह कामिनीष्विति। बहुभार्यस्य नान्या-महंकामये त्वमेव मत्प्रेयसीत्येवंविशिष्टः सुरतलाभार्थंकामिनीविषये विवाहविषये च मयान्या न वोढव्येत्यादौ। गवार्थंघासाद्युपहारे च। अग्नौ होमार्थमिन्धनाद्युपहारे। ब्राह्मणरक्षार्थ-मङ्गीकृतधनादौ वृथा शपथे पापं न भवति॥ ११२॥

(४) **राघवानन्दः।** किंच कामिनीष्विति। कामिनीषु सुरतलाभार्थं त्वत्सदृशी मम प्रेयसी नास्तीति बहुभार्यस्य तथा विवाहार्थं त्वामृते नान्या वोढव्येति अधिकरणसप्तम्यौ। अग्न्यर्थमिन्धने। ब्राह्मणाभ्युपपत्तौ ब्राह्मणार्थमङ्गीकृतधनादौ पातकं निकृन्ततीत्यादिदोषो-नास्तीत्याशयः॥ ११२॥

(५) **नन्दनः।** प्रतिप्रसवमाह कामिनीष्विति। ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षणे-पातकम्॥ ११२॥

(६) **रामचन्द्रः।** कामिन्यादिषु शपथे कृते पातकंनास्ति। कामिनीषु त्वंमे प्रियेति तथा विवाहेषु। गवांभक्ष्ये गोग्रासार्थे। तथा इन्धने होमार्थं। च पुनः ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षार्थं शपथेपातकंनास्ति॥ ११२॥

(७) **मणिरामः।** कार्यार्थं। संदिग्धकार्यनिर्णयार्थं महर्षिभिः सप्तर्षिभिः। देवैः इंद्रादिभिः मिथ्याशपथे दोषभावस्थलान्याह। कामिनीष्विति। कामिनीषु नान्याहंकामये त्वमेव मत्प्रेयसीत्येवं विशिष्टः सुरतलाभार्थं। विवाहे अन्या न वोढव्येत्यादौ। गवांभक्ष्ये घासाद्यपहारे इंधने होमार्थमिंधनोपहारे। ब्राह्मणाभ्युपत्तौ ब्राह्मणरक्षार्थं अंगीकृतधनादौ मिथ्याशपथे दोषो न भवतीत्यर्थः॥ ११२॥

(८) **गोविन्दराजः। कामिनीष्विति।** बहुभार्यस्य नान्यामहं कामये त्वं मे प्राणे-श्वरीवित्येवं विधिविषये न च त्वयान्या वोढव्या इत्येवंविधे गवार्थं घासापहारे वा संभवा-दुपायान्तर एवं शास्त्रितान्गिहोमार्थं चर्वपहारे ब्राह्मणरक्षायां च धनदानादिविषयायां मिथ्या-शपथे पातकं न भवति॥ ११२॥

(९) **भारुचिः।** कामिन्या कामतन्त्राभियोगे यः प्रतिज्ञातार्थसम्पादनार्थं मिथ्याशपथः क्रियते तत्र नास्ति पातकधर्म इत्यर्थः। एवं विवाहे कृताकृतसन्देहे अभियोगे वास्य कर्माङ्ग-भूतानां च गवां भक्तस्य हरणाभियोगेन गोमात्रस्य व्यवहारः।

**सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।**
**गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ११३ ॥**

(१) **मेधातिथिः ।** ननु च यद्यहमेवं कुर्यां तदिदमनिष्टमाप्नुयामिति संकीर्तनक्रिया-शपथास्तत्रयः शाप्यते स एवं वाच्यते सत्येनशपेस **शापयेदि**त्युच्यते । 'सत्येन शपे' सत्यादि-निबन्धनोऽयं 'धर्मो वा मे निष्फलः स्यादिति' । एवं चायुधानामपि करणत्वं वाहनानां च । एतैरात्मानं शपेत्–'एतानि निष्फलानि स्युरिति' । **गोबीजकाञ्चनानि** वैश्यो हस्तेन स्पर्श-यित्वाऽभिशपेदेतानि वा मे निष्फलानि पूर्ववत् । **शूद्रं सर्वैस्तु पातकैः ।** वक्ष्यमाणानि पात-कानि मे स्युरिति शूद्रो वाच्यते ।। ११३ ।।

(२) **सर्वज्ञनारायणः ।** सत्येन सत्यंत्वया हतंभवति मिथ्योक्ताविति । वाहनायुधैः एतानि त्वया हतानि स्युरिति । एतच्च लघुकार्ये ।। ११३ ।।

(३) **कुल्लूकः ।** ब्राह्मणंसत्यशब्दोच्चारणेन शापयेत् । क्षत्रियंवाहनायुधंमम निष्फलं-स्यादित्येवम् । वैश्यंगोबीजकाञ्चनानि च ममनिष्फलानि स्युः । शूद्रंच सर्वाणि मे पातकानि स्युरित्येवंशापयेत् ।। ११३ ।।

(४) **राघवानन्दः ।** शपथेनापि लम्भयेदित्युक्तस्य शपथस्य चातुर्वर्ण्ये व्यवस्थितिमाह सत्येनेति । सत्यशब्दोच्चारणं शापयेत् । शपथंकारयेदिति यत्सत्यंते तन्निष्फलंभवेदितिवा । एवंवाहनादिषु साक्षिवाचनेन स्पर्शस्योक्तत्वात् । ब्रह्मघ्न इत्यादिवाक्योक्तैःपातकैरेतानि पातकानि ते स्युरितिशूद्रं शापयेदित्यनुषज्यते ।। ११३ ।।

(५) **नन्दनः ।** अथकेन पुनः प्रकारेण वर्णानांशपथः कारयितव्यइत्याह सत्येनशाप-येदिति । शापयेच्छपथंकारयेद्राजा ।। ११३ ।।

(७) **मणिरामः ।** सत्येन सत्यं मे गच्छत्विति शब्दोच्चारणेन । एवमग्रेपि । वाहनं आयुधं वाममनिष्फलं भवत्विति क्षत्रियं । गोवीजकाञ्चानानि मम निष्फलानिस्युरिति वैश्यं । सर्वाणि मे पातकानि स्युरिति शूद्रं ।। ११३ ।।

(८) **गोविन्दराजः । सत्येनेति ।** ब्राह्मणं वादिनं सत्यशब्दोच्चारणेन शापयेत् । क्षत्रियञ्च वाहनायुधं निष्फलं स्यादित्येवम् । वैश्यञ्च गोबीजकाञ्चनादीनि ते निष्फलानि स्युरित्येवम् । शूद्रं सर्वाणि ते पातकानि स्यु'रित्येवं शापयेत् ।। ११३ ।।

(९) **भारुचिः ।** सत्यशपथक्रियामिदानीं निर्दिश्यते वर्णविशेषसन्नियोगेन शपथाः स्वरूपतः । असाक्षिके तत्त्वाभिगमार्थं ब्राह्मणादीन् वर्णान् अभियुक्तान् यथापदेशं शपथैरेभिः शापयेत् ।। ११३ ।।

**अग्निं वाऽऽहारयेदेनमप्सु चैनं निमज्जयेत् ।**
**पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् ॥ ११४ ॥**

(१) **मेधातिथिः ।** अग्निमाहारयेदेनं हस्तेनाश्वत्थपर्णव्यवहितेन तयोः प्रदेशान्तरं

सप्तपदसंहितमित्यादिस्मृत्यन्तरान्निपुणतोऽन्वेष्यम् । पारंपर्यप्रसिद्धेश्चैतदेवोच्यते । **अप्सु** जले **निमज्जयेत्** प्राड्विवाक इत्यर्थः। **पुत्रदारशिरांसि स्पर्शयेत्।** पुत्रस्य दारस्य शिरः स्पर्शयेत्–हस्तेन, शपथाधिकाराद्वाचाऽपि, शपथस्यैवंरूपत्वादित्युक्तम्। **पृथगे**कैकस्य।। ११४ ।।

(२) **सर्वज्ञनारायणः।** गुरुण्याह अग्निवेति ।। ११४ ।।

(३) **कुल्लूकः।** कार्यगौरवलाघवापेक्षया अग्निमिति । अग्निसन्निभंपञ्चाशत्पलिक-मष्टाङ्गुलमयः पिण्डं हस्तद्वयविन्यस्य सप्ताश्वत्थपत्रं शूद्रादिकै सप्तपदानि पितामहाद्युक्त-विधानादाहारयेत्। जलौकादिरहितजले चैनंनिमज्जयेत्। अशेषेपि कर्त्तव्यता स्मृत्यन्तरे ज्ञेया। पुत्राणांदाराणां च पृथक्शिरस्येनं स्पर्शयेत् ।। ११४ ।।

(४) **राघवानन्दः।** शपथेन द्रव्यालाभे परीक्षणमेवोचितमित्याह अग्निमिति। अग्निसन्निभमयः पिण्डं पञ्चाशत्पलपरिमितमष्टाङ्गुलम्। एनं अधर्मर्णत्वेन संभाव्यमानम्। स्पर्शयेत् तेषांशिरसि हस्तंदापयेत्। पृथगितिपदं व्यवहारस्य गुरुलघुतया विकल्पसूचनार्थम् ।। ११४ ।।

(५) **नन्दनः।** शूद्रसच्छूद्रमसच्छूद्रंप्रत्याह अग्निवाहारयेदिति। अग्निवर्णप्रतप्तमयः-पिण्डम्। वृत्तापेक्षयाविकल्पः ।। ११४ ।।

(७) **मणिरामः।** अग्नि अग्निसन्निभं पंचाशत्पलिकमष्टांगुलमयः पिंडं अप्सुजलौ कादिरहितजले ।। ११४ ।।

(८) **गोविन्दराजः।** कार्यगुरुत्वापेक्षया च **अग्निमिति।** अग्निवर्णसुवर्णपिण्डं शूद्रमश्वत्थपत्रावृतहस्तं याज्ञवल्क्याद्युक्त्येतिकर्तव्यतया सप्तपदानि भावयेत् । अप्सु वा गृहीत्वान्तर्जलं विशेदित्येवमादितदेनद्युक्त्येतिकर्तव्यतयैव निमज्जयेदथवा पुत्राणां दाराणाञ्च एतस्य शल्य इत्येवं पृथगेकैकस्य शिरांसि स्पर्शयेत् ।। ११४ ।।

(९) **भारुचिः।** शूद्रस्य वृत्तापेक्षयाऽन्यादयोऽपि कल्प्येरन्, शपथैरेवं तत्राग्नि-हरणे सप्तपदान्यश्वत्थपनैरियद्भिव्यवधान् (रि. ? मि) ति त्वि.......श्रुत्यन्तरा-पेक्षयैतत् स्यात्। इह वचनं तं गुणविधेः स्मृतिपारम्पर्याविच्छेदात् तथाप्सु निमज्जने कालः ।। ११४ ।।

**यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।**
**न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ।। ११५ ।।**

(१) **मेधातिथिः।** तप्तायसपिण्डोऽनवद्य गृहीतो न दहति। **आपश्च** नोर्ध्वं प्लावयन्ति, सत्य**शपथे**। केशादौ **न चार्तिमृच्छति** पीडां न प्राप्नोति। रोगोऽग्निरित्यन्यत्रोक्तम्। **स** शुद्धः **शुचि**र्निर्दोषः। **क्षिप्रम्**–चतुर्दश वाऽह्नान्यवधिः स्मृत्यन्तरात् ।। ११५ ।।

(२) **सर्वज्ञनारायणः।** नचार्तिपुत्रादिशिरः स्पर्शक्रते ।। ११५ ।।

(३) **कुल्लूकः**। यंप्रदीप्तोऽग्निर्न दहति आपश्च यंनोर्ध्वंनयन्ति न चार्त्तिमेव महतीं-प्राप्नोति सशपथे विशुद्धोज्ञेयः ।। ११५ ।।

(४) **राघवानन्दः**। शपथस्य परीक्षणमाह यमिति। यमुक्तशपथकर्तारम्। इद्धः उत्तेजितः। आर्त्ति रोगधनक्षयपुत्रमरणादिकाम्। क्षिप्रंत्रिपक्षाभ्यन्तरे ।। ११५ ।।

(५) **नन्दनः**। तत्र शुद्धस्य लक्षणमाह यमिद्धोनदहतीति। आर्त्तिशरीरपुत्रदारादि-पीडाम्। क्षिप्रंसप्ताहात्। शपथेऽग्निहरणादिके ।। ११५ ।।

(६) **रामचन्द्रः**। यंपुरुषं इद्धोग्निः स्पर्शनान्न दहति सशुचिर्ज्ञेयः। यः शपथेक्षिप्रमार्ति न ऋच्छति न गच्छति सशुचिर्ज्ञेयः ।। ११५ ।।

(७) **मणिरामः**। इद्धः प्रदीप्तः ।। ११५ ।।

(८) **गोविन्दराजः**। **यमिति**। दीप्तोऽग्निर्यं न दहति आपश्चनो प्लावयन्ति न च समनन्तरमेव निर्निमित्तां मूर्च्छावस्थां प्राप्नोति स शपथेषु वृद्धो ज्ञेयः ।। ११५ ।।

(९) **भारुचिः**। दहनोन्मज्जनाभ्यामार्तिः पृथगुपदेशसामर्थ्यात् अन्या रोगाद्या-भिघातलक्षणा। सा चोक्ता पुरस्ताद् ।। ११५ ।।

**वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा।**
**नाग्निर्ददाह रोमापि सत्येन जगतः स्पृशः ।। ११६ ।।**

(१) **मेधातिथिः**। कथं पुनरग्निर्न धक्ष्यति, आपो नोन्मज्जयिष्यन्ति। न हि महा-भूतानि विपरियन्ति स्वभावतो चैतन्यादिति–पर्यनुयोगमाशङ्क्यार्थवादेनोक्तमर्थं दृढीकरोति। यद्यप्ययमन्वयव्यतिरेकसमधिगम्योऽर्थः प्रत्यक्षवेद्यो वा तथापि धूर्तकल्पितेन्द्रजालवद् भ्रान्ति-वदत्र मुखबिभीषिकासञ्जनमात्रफलं शपथं मन्यमानो वैदिकं निदर्शनमुपन्यस्यति। भवन्ति प्रतिपत्तारोऽर्थागमेन पूर्ववृत्तदर्शनाद्दृढतां प्रतिपद्यन्ते। वत्सो नाम काण्व ऋषिरभवत्। स च कनीयसा वैमात्रेयेण भ्रात्राऽ**भिशस्त** आक्रुष्टः–न 'त्वमसि ब्राह्मणः शूद्रापुत्र' इति। स तं प्रत्युवाच–'सत्येनाग्निं प्रविशामि यदि न ब्राह्मण' इति। तस्येदमुक्तवतः प्रविष्टस्य **नाग्निः-ददाह रोमापि**। कथम्? **सत्येन** हेतुना। कथमग्निः सत्यं जानातीति चेदत आह **जगतः स्पृशः**। गूढात्मा परकीयकृताकृतज्ञः 'स्पृश' उच्यते। स च चारः प्रणिधिरिति च प्रसिद्धिः अग्निर्हि भगवान्सर्वभूतान्तरचारी कृताकृतानां वेदिता। तथा च छान्दोग्ये ताण्डके प्रयोगो-देवासुरसेनयोरभ्यन्तरे गौतममाश्रयन्ति गौतममिन्द्रं द्रढयेत्तत्र चाह "इह नो भवान्स्पृशश्चर-त्विषेत्यादि"। अर्थवाचिनिदर्शनेऽपि पञ्चविंशब्राह्मणमुदाहार्यम्–'वत्सश्च ह वै मेधातिथिश्च काश्यपावास्ताम्। तं वत्सं मेधातिथिराक्रोशत् अब्राह्मणोऽसि इत्यादि तस्य हालमेववौषधम्' इति। ननु च चौरा अपि न दह्यन्ते। साधवोऽपि दह्यमाना दृश्यन्ते। तत्कथं शपथे आश्वासः। उच्यते। न दृश्येन व्यभिचारेण व्यवस्थेयमपनेतुं शक्यते। कादाचित्कत्वा-द्व्यभिचारस्य। प्रत्यक्षादिष्वपि प्रमाणेषु दृश्यत एव तादृशो व्यभिचारः। न च तानि न प्रमाणम्। अथ व्यभिचारवन्ति नैव प्रत्यक्षादिशब्दवाच्यानि–यद्व्यभिचरति न तत्

प्रत्यक्षं, यत्प्रत्यक्षं न तद्व्यभिचरतीति वचनात्। इहापि शक्यते तद्वक्तुं–यद्व्यभिचरतिनासौ शपथो यः शपथः स न व्यभिचरतीति। कः पुनः शपथः। यः समस्तेतिकर्तव्यतामात्राद्यपग्रहेण निरूपितकुहकः स्तंभनाभावः। विपरीतोऽशपथः। न तादृशस्य व्यभिचारोऽस्ति। अथापि तत्रापि प्राक्कृतस्य कर्मणः फलविपाको भवति, निमित्तत्वात्। कृतापराधोऽपि। पूर्वकृतेन गरीयसा शुभेन मुच्यते। अकृतापराधो जन्मान्तरदोषेण निगृह्यते। विचित्रा हि कर्मणां फलपाकाभिव्यक्तिहेतवः, सहस्रादेको मिथ्या गृह्यते, उत्सर्गतस्त्वमिथ्यात्वम्। पुत्रेष्टि, कार्यादिष्वप्येतत्समानम्। तस्मात्साक्षिवच्छपथेऽपि प्रत्येतव्यम्। तेऽपि हि कदाचिन्मिथ्यावदन्ति। न भयप्रदर्शनमात्रमेतत्। रूढया शपथा उक्ताः सत्यं प्रतिष्ठत इति ॥ ११६ ॥

परकृतिरियमधिकृतविध्यर्थवादार्था वत्सस्य ह्यभिशस्तस्येति लिङ्गादभिशस्तस्यायं शपथ इति केचित्। एवं च शूद्रशपथो यन्नस्यात् किं तर्हि अस्माल्लिङ्गात् ब्राह्मणस्यैवायं यः स्यात्। न चैतदिष्टम्। तेन यथा ब्राह्मणविषयः श्रुतः शूद्रस्यैव (ति? मति) शास्त्रसामर्थ्यात्। एवमभिशंसने श्रुतोऽन्यत्रापि जगतः स्पर्शो निश्चर इत्यर्थः। इह नोभावात् 'स्पशश्चरोऽस्ती'ति श्रुतेः ॥ ११६ ॥

साध्यमेतत् किं व्यवधानकालयोरल्पमहत्त्वाभ्यामेतौ भवत उत दैवकृताविति। असमानं चैतत्, येन साम्येऽपि व्यवधानकालयोरेतौ दृश्यते तस्मान्नेमौ तद्वैषम्यकृतौ विज्ञेयौ। यतश्च जिह्वया तप्तायः पिण्डाभिस्पर्शनेनोभयं दृष्टम् अतो नैतयोर्वचनक्रिययोस्त्रासनमात्रमेव प्रयोजनम्। कथं नामायमभीतः प्रपद्येति। यच्च पुनरिदमुच्यते। यदि च किल त्रासनार्थं वादो भवति ततो नाग्निर्ददाह रोमापीति रोमादहनवचनमात्रार्थवद् भवति। इतरथा ह्यग्निहरणविधौ कल्प्यमाने हस्ततलयोर्लोमाभावाल्लोमादहनवचनमनर्थकं स्यात्। अपि चेक्षिते त्वग्निहरणे यथाकथञ्चिदग्निसम्बन्धस्तु यत इति। अत्र रोमशब्दोऽयं न स्वार्थवाची। गुणतो लोकपदत्वार्थः यथोक्तसामर्थ्यात्। अतः साक्षिमिथ्यावचनवन्मिथ्याशपथवच्चाग्निहरणोदकनिमज्जने अपि तद्वदेव विज्ञेये इति ॥ ११६ ॥

(२) **सर्वज्ञनारायणः।** "यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगाग्निर्ज्ञातिमरणमि"ति। ननु च साक्ष्यनृतविभावनार्था सोक्ता, समानकारणत्वात्तु मिथ्या शपथभावनार्थापि सैवेह स्यात्। अन्यस्यां आर्तेरिहानिर्देशात् सैव गम्यते अत्र कश्चिदाह–'इद्धो नामाग्निर्नैव धक्ष्यति न चोन्मज्जयिष्यन्त्याप' इति। दृष्टविरुद्धमेतत् न हि महाभूतस्य चैतन्यात् स्वभावव्यतिकरो निमित्तमन्तरेणोपलभ्यते। मन्त्रौषधाभ्यां तु भवति। तदिह समानम् अत्र हि सत्यशपथप्रयोगोपहृतयोरग्न्यम्भसोरयं निमित्ततः स्वभावव्यतिकरः स्यात्। सदेव तत्त्वाच्च तयोर्विशेषतोऽस्मिन् काले निमित्तः स्यादयं व्यतिकरो यतस्तदचैतन्यमकारणम्। यच्च व्यवधानकालयोरल्पमहत्त्वाभ्यामेतौ भवतः, उत दैवकृताविति, असमानं चैतत्। येन साम्येऽपि व्यवधानकालयोरेतौ दृश्यते जयस्तद्विपर्यये च पराजय इति ॥ ११६ ॥

वत्सस्य ऋषेः। शूद्रोसीति वैमात्रेयेणभ्रात्राभिशस्तस्याग्निप्रविष्टस्यस्पशश्चरः ॥ ११६ ॥

(३) **कुल्लूकः।** अत्र प्रकृतमर्थवादमाह वत्सस्येति यस्मात्पूर्वकाले वत्सनाम्नऋषेर्न त्वंब्राह्मणः शूद्रापत्योऽसीत्येवंकनीयसा वैमात्रेयेणाभिक्रुष्टस्य नैतदेवमिति सयथार्थमग्निं प्रविष्टस्याग्निः सर्वस्य जगतः शुभाशुभकर्तव्ये चारभूतः सत्येनाहेतुना रोमैकमपि वह्निर्न दग्धवान्।। ११६ ।।

(४) **राघवानन्दः।** तत्र हेतुतया सदाचारमाह वत्सस्येति। हि यस्मात्पुरा वत्सनामऋषेर्नब्राह्मणस्त्वंशूद्रापत्योसीतिकनीयसा वैमात्रेयेनाक्रुष्टस्याग्निंप्रविष्टस्यापिनाग्निर्ददाहेति तस्मात्सत्यंशुचि न दहत्यग्निः अथयदितस्याकर्ताभवतिसनदह्यतेऽथ मुच्यतइत्यादिश्रुतेः। जगतः सर्वस्य कृतस्यशुभाशुभकर्तव्यस्यस्पशश्चारभूतइति। लेख्यसाक्षिणोरभावेशपथः। यथाह याज्ञवल्क्यः। तुलाग्न्यापोविषंकोशोदिव्यानीह विशुद्धये। महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि। दिव्यग्राहिणि शीर्षकस्थे विद्यमानेऽभियोक्तरि। रुच्या वान्यतरंकुर्यादपरोवर्तयेच्छिरः। अपरोवादी वर्तयेच्छिरः शारीरमर्थदण्डंवाअङ्गीकुर्यात्। विनापिशीर्षकंकुर्याद्राजद्रोहे च पातके। राजभिःशङ्कितानां च निर्दिष्टानांच दस्युभिः। आत्मशुद्धिपराश्च दिव्यंदेयशिरोविनेति पातके ब्रह्मवधाद्यभिशस्ते। इत्यधिकारिनिर्णयः।। सचैलंस्नानमाहूय सूर्योदयउपोषितं। कारयेत्सर्वदिव्यानि देवब्राह्मणसन्निधौ। इति कर्तव्यता। तुलास्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्। अग्निर्जलंवा शूद्रस्य यवाःसप्तविषस्यवा। इत्यधिकारिव्यवस्थितिः। नासहस्राद्धरेदग्निं नविषं नतुलां तथा। सहस्रपणान्न्यूने विवादे-नृपार्थेष्वभिशापेषु वहेयुः शुचयः सदा। इत्यधिकारिनिर्णयः। तुलाधारणविद्वद्भिरभियुक्त-स्तुलाश्रितः। प्रतिमानसमीभूतोलेखां कृत्वाऽवतारितः। इति तुलामानम्। त्वं तुले सत्य-नामासि पुरा देवैर्विनिर्मिता। तत्सत्यं वद कल्याणि संशयान्मां विमोचय। यद्यस्मि पाप-कृन्मातस्ततोमां त्वमधोनय। शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत्। एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश। सहितोलोकपालैश्च वस्वादित्यमरुगद्णैः। धर्मोजयति नाधर्मः सत्यं जयति नानृतम्। क्षमा जयति न क्रोधोविष्णुर्जयति नासुराः। तुलितोयदि गच्छेत्सशुद्धः स्यान्नतुसंशयः। समोवा हीयमानोवा अविशुद्धोभवेन्नरः। यद्यधोयात्यशुद्धः स्यात्तुलाभङ्गे च सर्वदा। नविशीर्येति शिक्यंचेदूर्ध्वं याति विशुद्ध्यति। इति तुलापरीक्षणम्। करौ सुमृदितव्रीहेर्लक्षयित्वा ततोन्यसेत्। सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत्। त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत्पुण्यपापेभ्योब्रूहि सत्यं कवे मम। इत्यग्न्यभि-मन्त्रणम्। तस्येत्युक्तवतोलोहं पञ्चाशत्पणिकं समम्। अग्निवर्णं न्यसेत्पिण्डं हस्तयोरु-भयोरपि। सतमादाय सप्तैव मण्डलानि शनैर्व्रजेत्। षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम्। त्यक्ताग्निमृदितव्रीहिरदग्धः शुद्धिमाप्नुयात्। अन्तरा पतिते पिण्डे संदेहे वा पुनर्हरेत्। इत्यग्निपरीक्षणम्। सत्येन माभिरक्षत्वं वरुणेत्यभिशाप्यकम्। कं जलमित्यर्थः। नाभि-दघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्। समकालमिषुं क्षिप्तमानीयान्योजवी नरः। गते तस्मिन्निमग्नाङ्ग पश्येच्छुद्धिमवाप्नुयात्। इति जलपरीक्षणम्। इषुक्षेपसमकालं योगतः सचेदागत्य पश्येदित्यन्वयः। त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः। त्रायस्वास्मादभी-शापात्सत्येन भव मेऽमृतम्। एवमुक्ता विषं शार्ङ्गं भक्षयेद्धिमशैलजम्। यस्य वेगैर्विना

जीर्येच्छुभंतस्य विनिर्दिशेत्। इति विषपरीक्षा। वेगैर्मूर्च्छाद्युपद्रवैः। देवानुग्रात्समभ्यर्च्यत-त्स्नानोदकमाहरेत्। संश्राव्य पावयेत्तस्माज्जलात् प्रसृतित्रयम्। अर्वाक्चतुर्दशादह्नोयस्य नोराजदैविकम्। व्यसनं जायते घोरं सशुद्धः स्यान्नसंशयः। महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते। नास्तिकव्रात्यदासेषु कोशपानं विगर्हितम्। इति कोशपरीक्षा। तत्र। पूर्वाह्णेग्निपरीक्षा स्यादपराह्णे घटोभवेत्। मध्याह्नेतुजलं देयं धर्मत्त्वमभीप्सता। दिवसस्यतु पूर्वाह्णे कोशशुद्धिर्विधीयते। रात्रौतु पश्चिमे यामे विषं देयं सुशीतलमितिपितामहोक्तेः परीक्षाकालः। घटस्तुला।। ११६ ।।

(५) **नन्दनः।** अत्र परकृतिरूपमर्थवादमाह वत्सस्यहीति। वत्सोनामकश्चिदृषिः जगत्ः स्पृशः जगतश्चारः शुभानुसंधायीति यावत्। तथा चाग्निप्रमन्त्रवर्णः इहतोभगवान्जगतश्चारोस्त्विति। एवंवदता ब्राह्मणादीनामप्यग्निकरणादिकंसूचितम्।। ११६ ।।

(६) **रामचन्द्रः।** पुरा यवीयसा भ्रात्रा वत्सस्यऋषेः अभिशस्तस्य शूद्रइति निन्दितस्य सः अग्निः रोमापि न ददाह।। ११६ ।।

(७) **मणिरामः।** वत्सस्य वत्सनाम्नोऋषेः अभिशस्तस्य न त्वं ब्राह्मणः शूद्रपुत्रोसीति यवीयसा कनीयसा भ्रात्रेण वैमात्रेण अभिक्रुष्टस्य। जगतः स्पृशः शुभाशुभे चारभूतः एतादृशःअग्निः।। ११६ ।।

(८) **गोविन्दराजः।** अतः पुराकृतार्थवादमाह **वत्सस्येति।** यस्मात्पूर्वस्मिन्काले च समाप्ते ऋषे ब्राह्मणोऽसि शूद्रापुत्र इत्येवं वैमात्रेयेण कनीयसा भ्रात्राक्रुष्टस्य नैतदेवमिति शपथार्थं अग्निप्रविष्टस्य अग्निः सर्वस्य जगतः सदसत्कर्तव्येषु चारभूतः सत्येन हेतुभूतेन लोममात्रमपि न दग्धवान्।। ११६ ।।

**यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत्।**
**तत्तत्कार्यं निवर्त्तेत कृतं चाप्यकृतं भवेत्।। ११७ ।।**

(१) **मेधातिथिः। यस्मिन्व्यवहारे** कूटसाक्षिभिर्व्यवहारः कृतः स्यात्स निवर्तयितव्यः। **कृतं चाप्यकृतं भवेत्।** गृहीतधनोऽप्युत्तमर्णः प्रतिपादयितव्यः, इतरोदण्डोगृहीतोऽपि त्याज्यः। वाङ्मात्रेण जितस्त्वमसीति निश्चिते कार्यं निवर्तते इत्युच्यते। दण्डपर्यन्तं कृतमपीति विशेषः। वीप्सा श्लोकपूरणायाम्।। ११७ ।।

(२) **सर्वज्ञनारायणः।** तत्कार्यं निवर्तेत पुनर्विचार्य कृतंचापि दण्डाद्यकृतंभवेत्प्रत्यर्पणीयमित्यर्थः।। ११७ ।।

(३) **कुल्लूकः।** यस्मिन्यस्मिन्व्यवहारे साक्षिभिरनृतमुक्तमिति निश्चितंभवेत्तत्कार्यमसमाप्तंप्राड्विवाकः पुनरपि निवर्तयेत् यदपि च दण्डसमाप्तिपर्यंततांनीतंतदपि पुनः परीक्षेत।। ११७ ।।

(४) **राघवानन्दः।** कौटसाक्ष्यकृतमप्यकृतमित्याह यस्मिन्निति। निवर्तेतेत्यस्य विवरणं कृतमित्यादि ।। ११७।।

(५) **नन्दनः।** कूटसाक्षिभिर्निर्णीतोप्यर्थोनिवर्त्तेत इत्याह यस्मिन्यस्मिन्निति ।। ११७ ।।

(६) **रामचन्द्रः।** यस्मिन्विवादे कौटसाक्ष्यं कपटेन साक्ष्यं भवेत् ।। ११७ ।।

(७) **मणिरामः।** कौटसाक्ष्यं कृतं भवेत्। अनेन मिथ्यासाक्ष्यं दत्तमिति निश्चितं भवेत्। तत्कार्यं पुनर्विचारणीयमित्यर्थः ।। ११७ ।।

(८) **गोविन्दराजः। यस्मिन्निति।** यस्मिन्यस्मिन्व्यवहारे साक्षिभिरनृतमुक्तं स्यात् तत्तत्कार्यमप्यकृतमेव प्राड्विवाको निवर्तयेत्। यद्यपि कृतं दण्डपर्यन्तं तदपि पुनः परीक्षेत ।। ११७ ।।

(९) **भारुचिः।** अर्धसमाप्ते निवर्तनं दण्डा(न्तेऽपि) कृते अकृतं भवेत्, एवं च सति पुनस्तत्परीक्ष्यं निवृत्तिवचनात् ।। ११७ ।।

**लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च।**
**अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ।। ११८ ।।**

(१) **मेधातिथिः।** कौटसाक्ष्यं लोभादिनिमित्तम्। विषयकथनं दण्डविशेषभावार्थम्। **वितथमसत्यम्।** सर्वत्र पञ्चमी हेत्वर्थे ।। ११८ ।।

(२) **सर्वज्ञनारायणः।** लोभोऽर्थलिप्सा। मोहोविपरीतज्ञानम्। कामः स्त्रीरागः। अज्ञानं तद्विषयस्फुटज्ञानाभावः। बालभावः साक्ष्ययोग्यवयोवस्थाभावः। वितथं मिथ्या-साक्ष्यमुच्यते लोकैः ।। ११८ ।।

(३) **कुल्लूकः।** वक्ष्यमाणविशेषार्थंलोभादीन्पृथक् निर्दिशति लोभेन विपरीतज्ञानेन भयेन स्नेहेन कामेन क्रोधेनाज्ञानेनानवधानेन साक्ष्यमसत्यमुच्यते ।। ११८ ।।

(४) **राघवानन्दः।** कृतमप्यकृतमिति कस्मादिति तत्र हेतून्प्रदर्शयन्तत्साक्ष्यभावमाह लोभादिति। मोहाद्वैचित्त्यात् सच त्रिविधोरोगादिकृतो धत्तूरादिकृतः प्रमादकृतश्च। भयाद्दस्युवृत्तिभ्यः। कामात्तदीयस्त्रपादिषुभोग्यज्ञानादज्ञानाददृष्टश्रुतं जानामीत्यभिधाना-द्बालभावादधर्माज्ञानात् ।। ११८ ।।

(५) **नन्दनः।** कौटसाक्ष्ये कारणानि दण्डतारतम्यार्थमाह लोभान्मोहादिति। बाल-भावः ऊनषोडशवयस्कत्वम् ।। ११८ ।।

(६) **रामचन्द्रः।** कामात्। स्त्रीरागात् स्फुटज्ञानाभावात् कृतं साक्ष्यं वितथं व्यर्थं उच्यते ।। ११८ ।।

(७) **मणिरामः।** वक्ष्यमाणदंडविशेषार्थं लोभादीन्पृथक् निर्दिशति। लोभादिति ।। ११८ ।।

(८) **गोविन्दराजः। लोभादिति।** लोभविपरीतज्ञानभयमैत्री कामक्रोधादज्ञान-मौर्ख्यैः बालभावात्साक्ष्यमसत्यमुच्यते इति दण्डवैचित्र्यार्थोऽयमुपन्यासः ।। ११८ ।।

(९) **भारुचिः।** तच्च पुनः अनृतवचने कारणनिर्देशोऽयं दण्डविशेषार्थः ।। ११८ ।।

**एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् ।**
**तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥ ११९ ॥**

(१) **मेधातिथिः** । लोभाद्यो वितथं वक्ति स सहस्रं दण्डनीय इत्येवं कर्तव्या ॥ ११९ ॥

(२) **सर्वज्ञनारायणः** । अन्यतमस्थाने अन्यतमनिमित्तंप्राप्य ॥ ११९ ॥

(३) **कुल्लूकः** । एषांलोभादीनांमध्यादन्यतमस्मिन्निमित्ते सति योमिथ्यासाक्ष्यं कथयेत्तस्यदण्डविशेषाणि क्रमशोवदिष्यामि ॥ ११९ ॥

(४) **राघवानन्दः** । अत्रार्थे किं स्यात्तत्राह एषामिति । लोभादीनांमध्येऽन्यतमनिमित्ते स्थाने युक्तान्दण्डविशेषान्वक्ष्यामीत्यन्वयः ॥ ११९ ॥

(५) **नन्दनः** । स्थाने करणे ॥ ११९ ॥

(६) **रामचन्द्रः** । एषां लोभादीनां अन्येषांवा ॥ ११९ ॥

(८) **गोविन्दराजः** । **एषामिति** । एषां लोभादीनामन्यतमस्मिन् निमित्ते सति योऽसत्यं साक्ष्यं ब्रूयात्तस्य दण्डविशेषान् क्रमेण वक्ष्यामि ॥ ११९ ॥

**लोभात्सहस्रंदण्डचस्तु मोहात्पूर्वंतु साहसम् ।**
**भयाद् द्वौमध्यमौदण्डौमैत्रात्पूर्वं चतुर्गुणम् ॥ १२० ॥**

(१) **मेधातिथिः** । **मोहात्** । स्वभावतो यथार्थवादी यथादृष्टार्थवादी च केनचिच्चित्तसंक्षोभहेतुना प्रश्नकाले व्यारूढः सम्यक् प्रश्नार्थमनवधार्यास्मृतत्वाद्वाऽन्यथा ब्रूयात्स **मोहादि**त्युच्यते । **भयं** त्रासः । यदि मदीयेन सत्यवचनेनायं जीयेत तत्रायं कदाचित् ज्ञातिधनादिबाधया मां व्यापादयेदित्याशङ्का । **सहस्रमिति** संख्येयविशेषावगतिर्वाक्यान्तरात्पणानामिति । **पूर्वं तु साहसं** प्रथमं 'पणानां द्वे शते सार्धे' (श्लो. १३८) इत्यादौ । **द्वौ मध्यमौ** साहसाविति विपरिणामः । **पूर्वं चतुर्गुणं** सहस्रमेवेत्यर्थः । वृत्तानुरोधेन विचित्रया शब्दवृत्त्या स एवार्थः कथ्यते ॥ १२० ॥

(२) **सर्वज्ञनारायणः** । सहस्रपणाः । पूर्वं प्रथमं साहसम् । द्वौमध्यमौ मध्यमसाहसंद्विगुणम् ॥ १२० ॥

(३) **कुल्लूकः** । लोभेन मिथ्याभिधाने सति वक्ष्यमाणपणानांसहस्रंदण्डचः । मोहेन प्रथमं साहसंवक्ष्यमाणंभयेन च वक्ष्यमाणौ मध्यमसाहसौ मैत्रात्प्रथमसाहसं चतुर्गुणम् ॥ १२० ॥

(४) **राघवानन्दः** । तानेवाह द्वाभ्यांलोभादिति । सहस्रं पणानामितिशेषः । पूर्वं प्रथमपरिभाषितं सपञ्चाशच्छतद्वयम् । मध्यमोमध्यमः शतानि पञ्च तेन सहस्रम् । पूर्वंचतुर्गुणं सहस्रद्वयम् ॥ १२० ॥

(५) **नन्दनः** । लोभात्कौटसाक्ष्ये कृते ताम्रकार्षापणानांसहस्रं दण्डचः । पूर्वसाहसं अध्यर्द्धशतद्वयं मध्यमौ मध्यमसाहस्रौ पञ्चशतानिमध्यमः साहस्रः तौद्वौसहस्रत्रयम् ॥ १२० ॥

(६) **रामचन्द्रः**। द्वाभ्यामाह **लोभादिति**। लोभादन्यथाकारी पुरुषः **सहस्रं** सहस्रपणान् दण्ड्यः। तु पुनः मोहात् अन्यथाकारी पूर्वसाहसं पञ्चाशदधिकशतद्वयपणपरिमाणं पूर्वसाहससंज्ञं दण्ड्यः। मैत्र्यात् पूर्वं प्रथमसाहसं चतुर्गुणम्। तत्राह याज्ञवल्क्यः।। साशीतिः पणसाहस्रोदण्डउत्तमसाहसः। तदर्धंमध्यमः प्रोक्तस्तदर्धमधमःस्मृतः।
पणानांसहस्रं तत्परिमाणमस्येति पणसाहस्रः अशीत्या सहवर्तत इति साशीतिः अशीत्यधिकपणसहस्रपरिमितदण्डो यः स उत्तमसाहससंज्ञो वेदितव्यः।। १२०।।

(७) **मणिरामः**। सहस्रं पणानांपूर्वं तु पूर्वं तु साहसं प्रथमसाहसं वक्ष्यमाणं पणसार्द्धशतद्वयमितं। मध्यमौ मध्यमसाहसौ वक्ष्यमाणौ पूर्वं चतुर्गुणं प्रथमसाहसं चतुर्गुणम्।। १२०।।

(८) **गोविन्दराजः**। **लोभादिति**। लोभेनानृताभिधाने सति पणानां वक्ष्यमाणानां सहस्रं दण्ड्यः। मोहेन प्रथमसाहसं वक्ष्यमाणम्। भयेन वक्ष्यमाणसाहसौ द्वौ। मैत्र्यात्प्रथमसाहसं चतुर्गुणम्।। १२०।।

**कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।**
**अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु।। १२१।।**

(१) **मेधातिथिः**। मन्मथः **कामः**। यत्र स्त्रियो विवदन्ते तत्संबन्ध्यन्यतरां कामयमानोऽनृतं वदति अर्धतृतीयानि सहस्राणि दण्ड्यते। **क्रोधात्त्रिगुणं परं** प्रथमसाहसस्य प्रकृतत्वात्ततः परो मध्यः। सर्वान्ते लोकविज्ञानादिति वा उत्तम एव 'परः'। द्वेषः 'क्रोधः'। **अज्ञानादिति** यो विपरीतं प्रथमं ब्रूयाद्भ्रान्त्या, नतु प्रश्नकाले। **द्वे शते** दमः। प्रदर्शनमेव विपरीतं नाभिधानम्। **बालिश्यं** बालभावः अप्राप्तव्यवहारता। ईषदपक्रान्तबालभावस्याप्राप्तबुद्धिस्थैर्यस्यायं बालिश्यदण्डोऽन्यस्य त्वसाक्षितैव।। १२१।।

(२) **सर्वज्ञनारायणः**। पूर्वं प्रथमसाहसं दशगुणम्। परमुत्तमसाहसं। द्वेशते पणानाम्।। १२१।।

(३) **कुल्लूकः**। स्त्रीसंभोगरूपकामानुरोधेन मिथ्यावदन्प्रथमसाहसंदशगुणं दण्ड्यः। क्रोधेन तु परंमध्यमसाहसंत्रिगुणवक्ष्यमाणम्। अज्ञानत्वाद्द्वेशते। बालिश्यादनवधानात्पणशतमेवदण्ड्य इति सर्वत्रानुषङ्गः।। १२१।।

(४) **राघवानन्दः**। कामेतिदशगुणं पूर्वं प्रथमसाहसं ततः पञ्चशताधिकसहस्रद्वयम्। त्रिगुणं परमुत्तमसाहसं तेन न सहस्रत्रयम्।। १२१।।

(५) **नन्दनः**। बालिश्याद्बाल्यात्।। १२१।।

(६) **रामचन्द्रः**। कामात् कामतः अन्यथाकारी पूर्वसाहसं पञ्चाशदधिकशतद्वयपणपरिमितं दशगुणं दण्ड्यः। क्रोधात्तु त्रिगुणं उत्तमसाहसं त्रिगुणं दण्ड्यः।। १२१।।

(७) **मणिरामः**। पूर्वं प्रथमसाहसं दशगुणं परं मध्यमसाहसं त्रिगुणं द्वेशतेपणशतद्वयं बालिश्यात् अनवधानात् शतं पणाः।। १२१।।

(८) **गोविन्दराजः। कामादिति।** कामेनानृतं वदन् प्रथमसाहसं दशगुणं दण्ड्यः। क्रोधे- नोत्तमसाहसं वक्ष्यमाणं त्रिगुणम्। अज्ञानेन द्वे शते पणे संपूर्णे मौरर्व्येण शतमेव च ॥ १२१ ॥

**एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः।**
**धर्मस्याऽव्यभिचारार्थमधर्मनियमाय च ॥ १२२ ॥**

(१) **मेधातिथिः।** उभयप्रयोजनो दण्ड इति दर्शयत्यवश्यानुष्ठेयत्वाय। शास्त्राचार- निरूढा व्यवस्था 'धर्मः', तस्य 'अव्यभिचारो'ऽनिवृत्तिरुच्यते ॥ १२२ ॥

(२) **सर्वज्ञनारायणः।** अव्यभिचारार्थं सर्वथानिश्चयार्थम् ॥ १२२ ॥

(३) **कुल्लूकः।** सत्यरूपधर्मस्यापरिलोपार्थमसत्यरूपाधर्मस्य च वारणार्थमेता- न्कौटसाक्ष्यविषये पूर्वैर्मुनिभिरुक्तान्दण्डान्मन्वादयआहुः। एतच्च सकृत्कौटसाक्ष्ये ॥ १२२ ॥

(४) **राघवानन्दः।** अत्रार्थे मुन्यन्तरवाक्यं प्रमाणयति एतानिति। मुनिभिः प्रोक्ता- न्मन्वादयआहुः। तत्किमर्थं तत्राह धर्मस्येति। दण्डे कृते कोपि न स्वधर्माव्यभिचरेदित्याह। अव्यभिचारार्थमिति। अधर्मान्नियमनं निवृत्तिस्तस्मैच ॥ १२२ ॥

(५) **नन्दनः।** धर्मस्य सत्यस्य। अधर्मनिधनायासत्यस्य निवृत्तये ॥ १२२ ॥

(६) **रामचन्द्रः।** धर्मस्याव्यभिचारार्थं यथा धर्मस्य व्यभिचारः धर्मव्यतिक्रमः न भवेच्च पुनः अधर्मनियमाय पापापनुत्यर्थम् ॥ १२२ ॥

(७) **मणिरामः।** अव्यभिचारार्थं अनाशार्थं नियमाय नाशाय ॥ १२२ ॥

(८) **गोविन्दराजः। एतानिति।** शास्त्रव्यवस्थाया अपरिलोपार्थमव्यवस्थाया- श्चोत्पत्तिवारणार्थं एतान् कूटसाक्षिविषये चिरन्तनैर्विद्वद्भिः प्रोक्तान् दण्डान् मन्वादयः प्राहुः। एतच्च सकृदधिकरणे ॥ १२२ ॥

(९) **भारुचिः।** त्रयः श्लोकाः दण्डप्रकृत्यर्थाः। साक्षिणां मिथ्यावचनेषु सहस्रं शत- मिति च यदुक्तमत्र तत्रा...विकृतस्य वा। एवं प्रथममध्यमोत्तमसाहसग्रहणेषु विशेषतः सर्वं वक्ष्यति ॥ १२२ ॥

**कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः।**
**प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥ १२३ ॥**

(१) **मेधातिथिः।** सकृदपराद्धानां पूर्वो दण्डः। अभ्यासात्प्रवर्तमानानां **दण्डयित्वा प्रवासनं** राष्ट्रान्निष्कासनं मरणं वाऽर्थशास्त्रे प्रयोगदर्शनात्तद्रूपत्वाच्च दण्डविधेः। **ब्राह्मणं तु विवासयेत्।** वाससोऽपहरणं विवासनं गृहभंगो वा। विवासं करोति तत्करोतीति णिचि णाविष्टवदिति टिलोपे रूपम्। **त्रीन्वर्णानिति** क्षत्रादयस्त्रयः, ब्राह्मणस्य दण्डान्तरविधानात् ॥ १२३ ॥

(२) **सर्वज्ञनारायणः।** प्रवासयेत् स्वदेशात्। विवासयेत् प्रवासयेदेव न दण्डयेत्। गोविन्दराजस्तुदण्डयित्वा नग्नीकुर्यादित्यस्यार्थमाह ॥ १२३ ॥

(३) **कुल्लूकः।** भूयोभूयः कौटसाक्ष्यकरणेतु कौटसाक्ष्यमिति क्षत्रियादीन् त्रीन्वर्णा-न्कौटसाक्ष्यात्पूर्वोक्तेन दण्डयित्वा धार्मिकोराजा स्वराष्ट्राद्विवासयेत् ब्राह्मणन्तुधनदण्डव्यति-रेकेण स्वराष्ट्रान्निःसारयेत्। न जातु ब्राह्मणंहन्यात्सर्वपापेष्ववस्थितम्। राष्ट्रादेनंबहिः कुर्यात्समग्रधनमक्षतमिति ॥ धनसहितनिर्वासनस्याभिधास्यमानत्वात्। गोविन्दराजस्तु ब्राह्मणंपुनः पूर्वदण्डेन दण्डयित्वानग्नंकुर्यादितिव्याचष्टे। मेधातिथिस्तु ब्राह्मणस्य विवास-स्त्ववंवासोपहरणंगृहभङ्गोवेत्याचष्टे ॥ १२३ ॥

(४) **राघवानन्दः।** दण्डोत्तरकालीनंकृत्यमाह कौटेति। विवासयेत् दण्डंविना वासयेत् स्वराज्यादन्यत्र। तथाच वक्ष्यति। न जातु ब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितम्। राष्ट्रादेनंबहिः कुर्यात् समग्रधनमक्षतमिति। गोविन्दराजस्तु दण्डंकृत्वा नग्नंकुर्यात्। मेधातिथिस्तु वस्त्रशून्यंगृहमिति। विवासनपदस्यान्यत्र वसतौ भूरिप्रयोगात्अनयोर्व्याख्या-नमसाध्विति। कौटसाक्ष्याभ्यासपरंवक्ष्यन्निति केचित् ॥ १२३ ॥

(५) **नन्दनः।** ब्राह्मणंदण्डयित्वा विवासयेत्। प्रवासनंप्रमापणम्। विवासनन्तु-देशान्तरप्रापणम्। कुर्वाणानित्यनेनबहुशः कौटसाक्ष्यकरणंसूचितम् ॥ १२३ ॥

(६) **रामचन्द्रः।** कौटेन कपटेन। ब्राह्मणं तुविवासयेत् ॥ १२३ ॥

(७) **मणिरामः।** प्रवासयेत् देशान्निष्काशयेत् विवासयेत् अदंडयित्वा निःसारयेत्। अग्रेतथैववक्ष्यमाणत्वात् ॥ १२३ ॥

(८) **गोविन्दराजः। कूटसाक्ष्यमिति।** क्षत्रियादीन् त्रीन्वर्णान् कृतकूटसाक्ष्यान् पूर्वोक्तेन दण्डेन दण्डयित्वा धर्मप्रधानो राजा राष्ट्रान्निर्वासयेत्। ब्राह्मणं पुनर्दण्डयित्वा नग्नीकुर्यात् ॥ १२३ ॥

(९) **भारुचिः।** ...अभ्यसतां तु कौटसाक्ष्यं त्रयाणां वर्णानां दण्डश्चायं यथाशास्त्रं प्रवासनं च मारणं शास्त्रान्तरे परिभाषितत्वादिह च तद भासान्नियसिनमेव...दण्डितमेव निवासयेदिति गृहभङ्गेन चायोजयेदित्यर्थं पूर्वस्मिंश्चार्थे प्रवासनशब्दस्य निर्वासनं ब्राह्मण-स्यैव। कामापराध उपस्थमात्रे दण्डं पातयेत् न व्यतिरिक्तेऽन्यस्मिन्नङ्गे ताडनादिकुर्यात्। अन्नदोषे चोदरदण्डसदारप्रतिषेध आक्रोशापराधे च जिह्वाश्रयं। ताडने च हस्ताश्रयम्। पादापराधे च पादगतम्। चक्षुरपराधे च। एवं नासिकायां कर्णे चाधनापहारे च धनाश्रयम्। शरीरगते च पातनम् स्वशरीरगतं वैनयिकं कुर्यात् तस्यास्त्वन्यद्वक्ष्यति। येन येन यथा गेहे-नेति। ध(नं ? न) हरणं चात्र निक्षेपादिविषयं द्रष्टव्यम्। यतो न पौनरुक्त्यं चोदरदण्डेन दड्येष्वपि च न दण्डमूलहरं पातयेत् ॥ १२३ ॥

**दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत्।**
**त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥ १२४ ॥**

(१) **मेधातिथिः। स्थान**शब्दो विषयपर्यायः। एतैः प्रदेशैः पीडयितव्यः प्रत्यपराधम्। शब्देन ब्राह्मणस्य धनदण्डविधानादक्षतत्वोपदेशः शरीरपीडापरिहारार्थः कल्पते—सत्यपि

धनस्य दशसङ्क्रान्तर्भावे। वयं तु ब्रूमः-'समग्रधनमक्षत' मित्यत्र धनपीडाऽपि निषिद्धैव ब्राह्मणस्य। तस्माद्यः सकृत्कथंचिदपराद्धः श्रुतशीलाभिजनयुक्तस्य धनदण्डोऽपि नास्ति। तथा च गौतमस्तादृशमेव ब्राह्मणमधिकृत्य 'द्वौ लोके धृतव्रतौ' इत्युपक्रम्य 'षड्भिः परिहार्यश्चेत्यादि' (अ. ८ सू. १-१३) ।। १२४ ।।

(२) **सर्वज्ञनारायणः।** स्थानानि विषयान् ।। १२४ ।।

(३) **कुल्लूकः।** हैरण्यगर्भीमनुर्दशदण्डस्थानान्युक्तवान् यानि क्षत्रियादिवर्णत्रयविषये भवन्ति। ब्राह्मणः पुनर्महत्यपराधेऽक्षतशरीरोदेशान्निः सार्यते ।। १२४ ।।

(४) **राघवानन्दः।** धनदण्डप्रसंगेन दण्डान्तरंससंख्यंवक्ष्यन्ब्राह्मणस्य तद्भावमाह दशेति। अक्षतोहीनोधनाद्यैः ।। १२४ ।।

(५) **नन्दनः।** व्रजेद्विवसेत् ।। १२४ ।।

(६) **रामचन्द्रः।** दण्डस्य अङ्गच्छेदरूपस्य दशस्थानानिस्युः अक्षतः अव्रणः ब्राह्मणो व्रजेत् गच्छेत् ।। १२४ ।।

(७) **मणिरामः।** तदेवस्पष्टयति दशेति। स्वायंभुवोमनुः दंडस्यदशस्थानानियानि अब्रवीत्। तानित्रिषुवर्णेषुस्युः ब्राह्मणः पुनः महत्यपराधेपिअक्षतः धनसहितः देशान्निः सार्य इत्यर्थः ।। १२४ ।।

(८) **गोविन्दराजः। दशेति।** हैरण्यगर्भो मनुर्दशदण्डस्याश्रयानुक्तवान्। ये क्षत्रियादिवर्णत्रयविषये भवन्ति ब्राह्मणं पुनर्महत्यपि अपराधे अक्षतशरीरं देशान्निर्वासयेत् ।। १२४ ।।

(९) **भारुचिः।** शरीरस्थानादि दश दण्डस्य ।। १२४ ।।

## उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
## चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ।। १२५ ।।

(१) **मेधातिथिः। उपस्थं** प्रजनधर्मः स्त्रीपुंसयोः। उद्देशमात्रमिदं विनियोगस्तूत्तरत्र भविष्यति। यत्र च दण्डविशेषो नाम्नातस्तत्र यो येनैवाङ्गेनापराद्धः स तत्रैव पीडयितव्यः। तत्रागम्यागमनउपस्थनिग्रहः। चौर्ये **उदरत** आहारनिवृत्त्यादिना। वाग्दण्डपारुष्ये **जिह्वाहस्तयोः**। पादवलेन व्यक्तिक्रमन्पादयोः। विवृत्य विश्रब्धं राजदारान्वीक्षमाणश्**चक्षुषोः**। अनुलेपनगन्धमाजिघ्रन्नासिकायाम्। रहसि राजानं मन्त्रयमाणं कुड्यपटान्तरित उपशृण्वन् **कर्णयोः। धने** प्रसिद्धो दण्डः। **देहे** मारणं महापातकिनः ।। १२५ ।।

(२) **सर्वज्ञनारायणः।** उपस्थादीनांछेदनादिदण्डविषयत्वम्। धनस्यतु ग्रहंदण्डः। देहःकृत्स्नस्ताडनवधादिदण्डविषयः ।। १२५ ।।

(३) **कुल्लूकः।** लिङ्गादीन्येतानि दशदण्डस्थानानि अतस्तत्तदङ्गेनापराधे सत्यपराधलाघवगौरवापेक्षया तत्तदङ्गताडनवेदनादि कर्तव्यम्। अल्पापराधे यथाश्रुतंधनदण्डः। देहदण्डोमारणंमहापातकादौ ।। १२४ ।।

(४) **राघवानन्दः।** तानेव दण्डानाह उपस्थमिति। एषांविच्छित्तिःकार्येत्यर्थः। धनंचग्राह्यम् ।। १२५ ।।

(५) **नन्दनः।** तान्येवदशस्थानान्याह उपस्थमुदरमिति। पञ्चमंस्थानमितिशेषः ।। १२५ ।।

(६) **रामचन्द्रः।** दशस्थानान्याह उपस्थेति ।। १२५ ।।

(७) **मणिरामः।** दंडस्य दशस्थानान्याह। उपस्थमित्यादि। यदंगेनापराधः तदंगस्य-प्रतिषेधगौरवापेक्षयाताडनछेदनादि कर्तव्यंअल्पापराधे पूर्वोक्तधनदण्डः कार्यः ।। १२५ ।।

(८) **गोविन्दराजः। उपस्थमिति।** लिङ्गादेतानि दण्डस्थानानि ततस्तदङ्गापराधे अपराध भूयिष्ठापेक्षया तत्तदङ्गापराधताऽनादिकर्तव्यम्। अल्पापराधे तु धनदण्ड इति ।। १२५ ।।

(९) **भारुचिः।** तानि पुनः विशिष्टजातिपरिमाणस्य द्रव्यस्य संज्ञार्थं उपदेशो दण्ड-विशेषार्थः ।। १२५ ।।

**अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।**
**सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ।। १२६ ।।**

(१) **मेधातिथिः।** उक्तानुक्तदण्ड्येष्वपराधेषु मातृकाश्लोकोऽयम्। एतदर्थानुसारेण सर्वत्र दण्डक्लृप्तिः कर्तव्या। तत्र पौनःपुन्येन प्रवृत्तिर**नुबन्धः।** प्रवृत्तिकरणं वा, अनुबध्यते प्रयुज्यते येन तस्मिन्कर्मणि। तं **परिज्ञाय।** किमयमात्मकुटुम्बक्षुदवसायेन धर्मतंत्रप्रसङ्गेन वा—अथ मद्यद्यूतादिशौण्डतया—तथा प्रमादाद्बुद्धिपूर्वं वा परप्रयुक्तस्वेच्छया वेत्यादिर**नुबन्धः। देशो** ग्रामारण्यगृहजलजन्मप्रसवभूम्यादिः। **कालो** नक्तं दिवादिः। सुभिक्षदुर्भिक्षबाल्य-यौवनादि वा। **सारः** शक्त्यशक्ती आढ्यत्वदारिद्र्ये। **अपराधो**ऽष्टादशानां पदानामन्यतमः। एतत्सर्वं पौर्वापर्येण निरूप्य तथा **दण्डं पातये**त्कुर्याद्यथा स्थितिः सांसारिकी न भ्रश्यतीति ।। १२६ ।।

(२) **सर्वज्ञनारायणः।** अनुबन्धंपुनःपुनःकरणम्। देशंग्रामवनादि। कालं रात्र्यादि। सारं चित्तस्यगुरुताम्। अपराधं न्यूनाधिकम् ।। १२६ ।।

(३) **कुल्लूकः।** पुनः पुनरिच्छातोऽपराधकरणमपेक्ष्य ग्रामारण्यादिचापराधिस्थानं-रात्र्यादिकंवाऽपराधस्यापेक्ष्य सारंचापराधकारिणोधनशरीरादिसामर्थ्यमपराधं च गुरुलघु-भावेन चालोक्य दण्डनीयेषु दण्डंकुर्यात्। एतच्चाभिहिताभिधास्यमानदण्डशेषभूतम् ।। १२६ ।।

(४) **राघवानन्दः।** दण्ड्येषु राज्ञातावद्यत्नवता भाव्यमित्याह अनुबन्धमिति। अनुबन्धंसकृदसकृदाद्यपराधकारणम्। सारापराधौ अपराधकारिणोधनदेहादिसामर्थ्यं सारं अपराधंच लघुगुरुतया विज्ञाय। आलोच्येतिक्वचित्पाठः विचार्येति ।। १२६ ।।

(५) **नन्दनः।** दण्डविधाने राज्ञा बोद्धव्यमाह अपराधमिति। सारासारदण्डस्य बलाबलम् ।। १२६ ।।

(६) **रामचन्द्रः ।** अनुबंध पुनः पुनरिच्छातोऽपराधकारणं ।। १२६ ।। १२७ ।। १२८ ।।

(८) **गोविन्दराजः । अनुबन्धमिति ।** पुनः पुनरिच्छातोऽपराधकारणमवलोक्य ग्रामारण्यादि चापराधस्थानं, दिवारात्र्यादिकं चापराधकालं सम्यगवेक्ष्य सारं चापराधिनो-धनशरीरादि सामर्थ्यमपराधं च गुरुलघुभावेनालोक्य दण्डनीयेषु दण्डं कुर्यात् इतीदमुक्तानु-क्तदण्डशेषभूतम् ।। १२६ ।।

(९) **भारुचिः ।** किं तर्हि– अनुबन्धं परिज्ञायेति । केचिदत्र व्यतिक्रमानुष्ठानस्य पौनःपुन्यं क्रियानुष्ठानाभ्यासलक्षणमाह । वयं पुनरनुबन्धमपराधकारणमाचक्ष्महे । अनुबध्यते अनेनेति अनुबन्धो लोभादिपदार्थः । किं तदपराधश्चौर्यादिः । तं परिज्ञाय । किमयं चौर्यादिरपराधोऽस्य कामात् उतक्रोधात् । अथ लोभान्मोहाद्वा । अथात्मकुटुम्ब-स्थित्यै धर्मतन्त्रानुग्रहायवेत्येवम् । अस्य चापराधहेतोरनुबन्धस्य विज्ञाने प्रयोजनम् । तद्भे-दाद्दण्डविशेषो यथा स्यादिति । देशकालौ च तत्त्वतः परिज्ञायेति वर्तते । तत्र गृहरथ्या-खलक्षेत्रस्वविषयादिनिर्देशः अपराधेऽपेक्षितव्यः । क्वायमपराधः । तथा कालः सुभिक्षदुर्भिक्षाकुलानाकुलवयोऽवस्थादिः । सारं चापराधस्य द्रव्याभिजनादिः । तद्विपर्ययं चासारं, निदर्शनार्थत्वासारग्रहणस्यापराधं चावेक्ष्य गुरुबन्धुत्वेन ज्ञानाज्ञानकृतं वस्त्र-हिरण्यादिकृतं वा दण्डं दण्डयेषु ।

**अधर्मदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ।**
**अस्वर्ग्यं च परत्रापि तस्मात्तत्परिवर्जयेत् ।। १२७ ।।**

(१) **मेधातिथिः ।** अधर्मप्रधानदण्ड**मधर्मदण्डनम् ।** पूर्वोक्तमनपेक्ष्येदं शास्त्रपाठ-मात्रेण राजेच्छया रागद्वेषादिभिर्वा । तद्यशोनाशकं कीर्तेश्च विच्छेदकम् । स्वदेशे गुण-ख्याति**र्यशः** देशान्तरे **कीर्तिः ।** जीवतो वा पूर्वकालिकं **यशः** उत्तरकालिकी **कीर्तिः ।** निर्दोष-गुणवतीकीर्तियशसी । अन्यो वा भेद उन्नेयोऽर्थवादत्वात् । **अस्वर्ग्यं** स्वर्गप्राप्तौ कर्मान्तर-जन्यायां प्रतिबन्धकम् । **परत्रापीति** श्लोकपूरणार्थम्, स्वर्गस्यामुष्मिकत्त्वात्- ।। १२७ ।।

(२) **सर्वज्ञनारायणः ।** यशोबहुभिःपरैर्गुणानांज्ञातम् । कीर्तिस्तत्कथनम् ।। १२७ ।।

(३) **कुल्लूकः ।** जीवतः ख्यातिर्यशः मृतस्य ख्यातिः कीर्तिः । यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिहलोके यशोनाशनंमृतस्य च कीर्तिनाशनंपरलोके च धर्मान्तरार्जितस्वर्गप्रतिबन्धकं तस्मात्तत्परित्यजेत् ।। १२७ ।।

(४) **राघवानन्दः ।** वैपरीत्ये । दोषमाह अधर्मेतिद्वाभ्याम् । अधर्मेणदण्डनेऽयशो-जीवति मृतेऽकीर्तिरित्यनयोःकथंचिद्भेद इति केचित् । यशोज्ञातिप्रशंसाकीर्तिर्जनप्रशं-सेतिनृसिंहतापनीयभाष्ये अस्वर्ग्यमधर्मदण्डनेन पापोत्पत्तेः ।। १२७ ।।

(५) **नन्दनः ।** अदण्ड्यदण्डनमिति गुणवत्ताप्रसिद्धिर्यशः तत्कथनंकीर्तिः ।। १२७ ।।

(६) **रामचन्द्रः ।** लोकेअधर्मदण्डिनं जीवतः यशोघ्नं मृतस्यकीर्तिनाशनम् तत् अधर्मदंडनं परिवर्जयेत् ।। १२७ ।।

(८) **गोविन्दराजः। अधर्मदण्डनमिति।** यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिह लोके यशसो जीवनख्यातेर्नाशिमनृतस्य च परलोके समनन्तरनरकपातात्कर्मान्तरार्जितस्वर्गप्रति-बन्धकं तस्मात्तत्परिहरेत् ।। १२७ ।।

**अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।।**
**अयशो महदाप्नोति नरकं चैव गच्छति ।। १२८ ।।**

(१) **मेधातिथिः।** पूर्वश्लोकोऽनुबन्धादिनिरूपणविधिशेषः। अनेन त्वनपराधानां दण्डनं प्रतिषिध्यते सापराधानां विधीयते। वृत्त्यर्थतां दण्डस्य मन्यमानोऽनुग्रहेणाहासी-दिति (अयशः) ।। १२८ ।।

(२) **सर्वज्ञनारायणः।** अयशोयशोनाशनम् ।। १२८ ।।

(३) **कुल्लूकः।** राजा दण्डानर्हान्धनलोभादिनादण्डयन् दण्डार्हांश्चानुरोधादिनोत्सृजन् महतीमख्यातिंप्राप्नोति नरकंचव्रजति ।। १२८ ।।

(४) **राघवानन्दः।** अस्वर्ग्यमित्येन स्वर्गायोग्यत्वमुक्तं न केवलमेतत्प्रत्युत नरकंचैवेतीत्याह अदण्ड्यानिति ।। १२८ ।।

(५) **नन्दनः।** दण्ड्यादण्डनेऽपि राज्ञांदोषमाह अदण्ड्यानिति ।। १२८ ।।

(८) **गोविन्दराजः। अदण्ड्यानिति।** राजा दण्डानर्हान् दण्डयन् दण्डार्हांश्चोत्सृज्य महदयशः प्राप्नोति नरकं च गच्छति ।। १२८ ।।

**वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनंतरम् ।।**
**तृतीयं धनदण्डं तु वधदण्डमतःपरम् ।। १२९ ।।**

(१) **मेधातिथिः।** यो गुणवानीषत्प्रथममेवापराद्धः स वाचा निर्भर्त्स्यते 'न साधु कृतवानसि मा पुनरेवं कार्षीरिति'। तथा विनीयमाने यदि न निवर्तते 'कोऽत्रदोष' इति वा प्रतिजानीयात्तदा धिग्धिगादिशब्दैः परुषवचनैः कुत्सार्थैः क्षिप्यते। ततोऽप्यनिवर्तमानो यथाशास्त्रं धनेन दण्डनीयः। तदप्यगणयन्नैश्वर्यादिना हंतव्यः। वधदण्डश्च ताडनाङ्गच्छेद-नादि, न मरणमेव ।। १२९ ।। यत आह

(२) **सर्वज्ञनारायणः।** वाग्दण्डं ताडयतैनमित्युक्तं। प्रथमं कूटसाक्ष्यादौप्रथमप्रवृत्तौ। धिग्दण्डं धिग्त्वामिति तदनन्तरं द्वितीये। तृतीये तृतीयवारकरणे। अतः परं चतुर्थवारापराधे वधदण्डमङ्गच्छेदम् ।। १२९ ।।

(३) **कुल्लूकः।** न साधुकृतवानसि मैवंभूयः कार्षीः इत्येवंवाङ्निर्भर्त्सनंप्रथमापराधे-गुणवतः कुर्यात् तथापि यदि नोपशाम्यति तदा धिक्जाल्ममजीवनिस्ते पापस्य भूयादित्येव-मादितस्य कार्यम्। तदापि यद्यसन्मार्गन्न निवर्त्तते तदा धनदण्डमस्य तृतीयं कुर्यात्। एवमपि चेन्नावतिष्ठते तदातः परंवधदण्डंताडनाद्यङ्गच्छेदरूपंतस्य कुर्यान्न मारणम् ।। १२९ ।।

(४) **राघवानन्दः।** दण्डत्वेन देहपदं वाग्दण्डंउपलक्षयतीतिकृत्वाह **वाग्दण्डमिति।** गुणवतोहि वाग्दण्डः सचैवं नसाधुकृतंत्वयेत्यादिः प्रथमापराधे। तथापि न शाम्यतीति चेत् धिग्जन्मा त्वमिति द्वितीयः। वधदण्डंकर्णच्छेदादि प्रत्येकं कुर्यात्॥ १२९॥

(५) **नन्दनः।** दण्डनक्रममाह वाग्दण्डमिति। वाग्दण्डंपरुषभाषणम्। धिग्दण्डः सदोमध्याद्वाचानिर्भर्त्स्य निष्कासनम्। धनदण्डः स्वर्णादानम्। वधदण्डः शरीरपीडनम्। कुतएतदुत्तरश्लोकानुगुण्यात्। एते दण्डाः क्रमादल्पतरेऽल्पे महति महत्तरे वापि प्रयोज्या अपराधे॥ १२९॥

(६) **रामचन्द्रः।** वाग्दण्डंप्रथमं कुर्यात्। धिग्दडं धिक्तामित्येवंरूपं तदनन्तरम्। तृतीयं धनदण्डम्। वधदण्डं अङ्गच्छेदरूपम्॥ १२९॥

(७) **मणिरामः।** दंडक्रममाह वाग्दंडमिति। मैवं पुनःकार्षीदिति वाग्दण्डं। धिक्-जन्म माजीव इत्यादि धिग्दंडं॥ १२९॥

(८) **गोविन्दराजः। वाग्दण्डमिति।** न साधु कृतवानसि नैवं भूयः कार्षीः इत्येवं वाऽग्निर्भर्त्सनं कर्मभिरधर्मापराधे गुणवतः कुर्यादिति। यदि तु तथा नोपशाम्यति तदा-धिञ्जाल्म, त्वामभिभवति स्तेयं भूयादित्येवमादितस्य कार्यं ततोऽपि यदि तन्मार्गान्न निवर्तते तदा धनदण्डं तृतीयं तस्य कुर्यात्। एवमपि चेन्नावतिष्ठते, अतः परं वधताडनाङ्गच्छेदादि-रूपं तस्य कुर्यात्॥ १२९॥

(९) **भारुचिः।** अपराधापेक्षयैषां दण्डप्रक्लृप्तिः क्रमेणस्यात् **विधिश्चात्र** ताडने न तु मारणे सामर्थ्यात्॥ १२९॥

**वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात्।**
**तदैषु सर्वमप्येतत्प्रयुञ्जीत चतुष्टयम्॥ १३०॥**

(१) **मेधातिथिः।** मारणं चेद्वधः किं तदन्यद्यन्न शक्यते—कथं चैनं पापं निगृह्णीते-त्यादिपरुषवाक्यपूर्वे दुर्विनीतेषु धनदण्डवधौ समुच्चेतव्यौ। कृतेऽपि शरीरदण्डे यदि नाव-तिष्ठते ततो न कृतनिग्रह इत्युत्सृजेदपि तु स वधदण्डः कर्तव्यः। धनवधदण्डयोश्च पुनः-प्रवृत्त्यर्थोऽयमारम्भः। वाग्दण्डे तु मृदुत्वात्कः पृच्छति। धनेन निगृहीतस्य पुनर्वधो दृष्टो-"ऽङ्गुलिग्रन्थिभेदस्येति" (९।२७७)॥ १३०॥

(२) **सर्वज्ञनारायणः।** सर्वमेवैतद्दशविधंदण्डंप्रागुक्तं वाग्दण्डादित्रयंच॥ १३०॥

(३) **कुल्लूकः।** यतोवक्ष्यति वधेनापि यदा त्वेतानिति। व्यस्तेनाङ्गच्छेदेनापि दण्डचान्वशे कर्तुंन शक्नुयात्तदैतेषु सर्ववाग्दण्डादिचतुष्टयंकुर्यात्॥ १३०॥

(४) **राघवानन्दः।** उक्तदण्डेन यदा न शाम्यन्ति तदा वाग्दण्डादिचतुष्टयंसंप्रयोक्त-व्यमित्याह वधेनेति। एतान् पापिनः। चतुष्टयमिति उपस्थादीनांवधदण्डत्वेन संग्रहात्॥ १३०॥

(५) **नन्दनः।** वधेन शरीरपीडनेन॥ १३०॥

(६) **रामचन्द्रः।** तत् तस्मात्कारणात् एषुचतुर्विधेषुदण्डयेषुएतत्सर्वं चतुष्टयं प्रयुञ्जीत ।। १३० ।।

(७) **मणिरामः।** एतान् दंड्यान् ।। १३० ।।

(८) **गोविन्दराजः। वधेनेति।** यदा पुनस्ताञ्नाङ्गच्छेदनादिनापि एतान्वशीकर्तुं न शक्नुयात्तदैष्वपराधिषु एतद्धिग्दण्डादि चतुष्टयमपि सर्वं कुर्यात् ।। १३० ।।

(९) **भारुचिः।** तथा च दर्शयति अविनेयत्वादेतेषाम्। कृतेऽपि शरीरे दण्डे यदि नोपतिष्ठेतापराधात् ततोऽस्य वाग्दण्डादि चतुष्टयं समस्तं क्रियते। न पुनरपराधी कृत-निग्रह इत्युत्सृज्येत् व्यवस्थार्थं लोकस्य इतरथा मत्स्यन्यायः स्यात्। धनदण्डार्थश्चायं पुनरा-रम्भः। वाग्दण्डधिग्दण्डौ तु मृदुत्वात्का प्रयच्छतीति ।। १३० ।।

**लोकसंख्या संज्ञाः प्रथिता भुवि।**
**ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ।।१३१ ।।**

(१) **मेधातिथिः। ताम्रा**दीनां लिक्षादयः **संज्ञा भुवि** प्रसिद्धाः। "किं शास्त्रपरि-भाषया। तत्र वृद्धव्यवहारो गवादिशब्दवत्" इत्यत आह **लोकसंव्यवहारार्थम्।** अर्थशब्दो विषयवचनः। तेन व्यवहारप्रसिद्धिराश्रिता भवति। "ततश्च गवादिशब्दतुल्यतया व्यव-हारात् प्रसिद्धः-किं शास्त्रोपदेशेन"। उच्यते। नियमार्थं उपदेशः। अन्येषामपि परिमेया-नामयस्कांस्यसुवर्णादीनामेताः संज्ञाः सन्ति, तन्निवृत्त्यर्थः। क्वचिद्देशे परिमाणे भेदोऽप्यस्ति, तन्निवृत्त्यर्थश्च। क्वचित् संबन्धतया नियम्यते। तथा च क्वचिदष्टाचत्वारिंशता माषबन्धं क्वचिच्चतुःषष्ट्या व्यवहारात् शास्त्रोपदेशेन शतेन। तदेतत्सर्वं नियम्यते। अथ चैवं संबन्धः क्रियते-**याः संज्ञा भुवि प्रथितास्ता लोकसंव्यवहारार्थं वक्ष्यामि।** सर्वस्य लोकस्याभिरेव संव्यवहारो यथा स्याद्दण्डादिनियोगस्याप्यन्यथा प्रसिद्धिः ।। १३१ ।।

(२) **सर्वज्ञनारायणः।** संव्यवहारार्थं दृष्टादृष्टव्यवहारसिद्ध्यर्थम् ।। १३१ ।।

(३) **कुल्लूकः।** ताम्ररूप्यसुवर्णानां याः पणादिसंज्ञाः क्रयविक्रयादिलोकव्यवहारार्थ-पृथिव्यां प्रसिद्धास्ताःदण्डाद्युपयोगार्थंसाकल्येन कथयिष्यामि ।। १३१ ।।

(४) **राघवानन्दः।** धनदण्डस्य ताम्रपणसुवर्णादिभेदेन नानात्वात्तद्दण्डप्रसंगेन तत्प-रिमाणं प्रतिजानीते लोकेति। संज्ञाधर्मशास्त्रपरिभाषाः ।। १३१ ।।

(५) **नन्दनः** चतुष्टयंवाग्दण्डादिकं वक्ष्यमाणेषु धनदण्डादिकेष्वियत्तानियामिका-मानसंज्ञा प्रस्तूयते लोकसंव्यवहारार्थमिति। संव्यवहारः क्रयविक्रयादिः ।। १३१ ।।

(६) **रामचन्द्रः।** ताम्ररूप्यसुवर्णानांपरिमाणमाह लोकेति। याः संज्ञाः प्रथिताः प्रसिद्धास्ताः संज्ञाः प्रवक्ष्यामि ।। १३१ ।।

(८) **गोविन्दराजः। लोकसंव्यवहारार्थमिति।** ताम्ररूप्यसुवर्णानां पणादिसंज्ञा क्रयविक्रयलोकव्यवहारार्थं पृथिव्यां विशेषेणाभिधास्याम्युपयोगार्थं दण्डादेः ।। १३१ ।।

**जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।**
**प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ १३२ ॥**

(१) **मेधातिथिः।** इमं श्लोकं केचिन्नाधीयते त्रसरेणौ विप्रतिपत्त्यभावात्। गवाक्षकुचिकाविवरप्रविष्टे सूर्ये यो रेणुर्दृश्यते स त्रसरेणुः। अन्तरशब्दो विवरपर्यायः। **प्रथमं तत्प्रमाणानामिति** ॥ १३२ ॥

(२) **सर्वज्ञनारायणः।** भानौरश्मौ। रजोऽदन्तेपुंसि। प्रमाणानां परिमाणानांमध्ये ॥ १३२ ॥

(३) **कुल्लूकः।** गवाक्षविवरप्रविष्टसूर्यरश्मिषु यत्सूक्ष्मंरजोदृश्यते तदृश्यमानपरिमाणानांप्रथमं त्रसरेणुंवदन्ति ॥ १३२ ॥

(४) **राघवानन्दः।** ताआह जालेतिषड्भिः। जालं गवाक्षं तदन्तरगे भानौ सूर्यकरे यत्सूर्यमरीचिस्थंसूक्ष्मंदृश्यते तत्प्रमाणानां परिमाणपरिच्छेद्यानांमध्ये प्रथमं यद्रजोधूलिः त्रसरेणुं त्रसरेणुसंज्ञकम् ॥ १३२ ॥

(५) **नन्दनः।** भानौ रविकिरणे ॥ १३२ ॥

(६) **रामचन्द्रः।** जालान्तरजः प्रमाणानां परिमाणानां प्रथमं त्रसरेणुं प्रचक्षते ॥ १३२ ॥

(७) **मणिरामः।** जालांतरगतेभानौ गवाक्षविवरप्रविष्टसूर्यरश्मिषु ॥ १३२ ॥

(८) **गोविन्दराजः। जालान्तरगत इति। त्रसरेणव इति। सर्षपा इति। पलमिति त इति। धरणानीति।** गवाक्षादिप्रविष्टाभिरादित्यरश्मिषु यद्रजो दृश्यते तत् त्रसरेणुः। तेऽष्टौ लिक्षैका प्रमाणेन विज्ञेया ताःलिक्षास्तिस्रो राजसर्षपः। ते त्रयः गौरसर्षपः। ते षट् यवो मध्यमः न स्थूलो नापि सूक्ष्मः त्रिभिर्यवैः कृष्णलम्। पञ्चभिः कृष्णलैः भाषः। षोडश माषाः सुवर्णः। चत्वारः सुवर्णाः पलम्। दशपणाधरणम्, कृष्णलद्वयं तुलया धृतं रूप्यमाषको बोधव्यः। षोडशरूप्यमयमाषकाः रूप्यं धरणं पुराणं वोच्यते। राजतो रूप्यसम्बन्धी कर्षप्रमाणः ताम्रमयः कार्षापणः इति विज्ञेयः दशरूप्यधरणानि रूप्यशतमानो बोद्धव्यः चतुर्भिः सुवर्णैर्निष्कः प्रमाणेन विज्ञेयः ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३७ ॥

**सरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।**
**ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥ १३३ ॥**

(१) **मेधातिथिः।** तत्रोपचितपरिमाणाः। न पुनरयं **लिक्षा**शब्दः स्वेदजक्षुद्रजन्तुवचनः। **तास्तिस्रो लिक्षा** एको राजसर्षपाख्यपरिमाणपदार्थः। एवं योजनीयम्। ततश्च ये व्यभिचारयन्ति न यथोक्तपरिमाणा यवादयोऽर्था इति ते निरस्ता भवन्ति। नहि यवादीनामर्थानां परिमाणम्। "कथं तर्हि यथोक्तपरिमाणार्थः"। यथा चोपक्रान्तसंज्ञाः प्रवक्ष्यामि परिमाणमिति। त्रसरेणुश्चार्थो नियतपरिमाणस्तेनैतत्सर्वं निश्चेयम्। शक्नुवन्ति च

निपुणास्त्रसरेणून् संहन्तुमिति नानारभ्यार्थोपदेशः। एतत्स्वर्णकाराभिमानसंख्यास्मृतिरूपं निर्बाधं भवति। तत एव वस्तु निपुणतोऽशेषतोऽवधारयितव्यम् ।। १३३ ।।

(२) **सर्वज्ञनारायणः।** लीक्षा यूकाडिम्बं। राजसर्षपोराजिका ।। १३३ ।।

(३) **कुल्लूकः।** अष्टौ त्रसरेणवोलिक्षैकापरिमाणेन ज्ञेया तास्तिस्रोलिक्षाराजसर्षपोज्ञेयः ते राजसर्षपास्त्रयोगौरसर्षपोज्ञेयः ।। १३३ ।।

(४) **राघवानन्दः।** लिक्षेतिसंज्ञान्तरमेवमुत्तरत्र। ताः लिक्षास्तिस्रः राजसर्षपः। तेत्रयोगौरसर्षपइत्यन्वयः ।। १३३ ।।

(६) **रामचन्द्रः।** अष्टौत्रसरेणवएकालिक्षा तास्तिस्रः लिक्षाराजसर्षपः। ते त्रयोराजसर्षपाएकोगौरसर्षपः ।। १३३ ।।

(७) **मणिरामः।** ताः लिक्षाः राजसर्षपाः ।। १३३ ।।

(९) **भारुचिः।** सर्वसंज्ञार्थाल्लोकः तत्र य एतेषु संछन्नेषु कुटीमठेषु आदित्या.. तद्गताः...णवस्त्रसरेणवः ।। १३३ ।।

**सर्षपाः षट् यवो मध्यस्त्रियवंत्वेककृष्णलम्।**
**पञ्चकृष्णलिको माषस्ते सुवर्णस्तु षोडश ।। १३४ ।।**

(१) **मेधातिथिः।** "मध्यशब्दो भ्रान्तिहेतुः। परिमाणपरत्वे नात्यन्तमपचितो नातिस्थूलः सर्षपपरिमाण इति मध्यग्रहणमर्थवत्। संज्ञापरत्वे तु न किंचिन्मध्यशब्देन, यवशब्दसंज्ञात्वात्"। तदसत्। नायं संदर्भो येन प्रत्यवयवं प्रयोजनमुच्यते। पद्यग्रन्थोऽयम्। तत्र गतार्थमपि वृत्तानुरोधात्किंचिदुच्यते। अस्ति चास्यान्वयः। अनन्विताभिधानं हि वाक्यार्थविरोधान्न प्रमाणम्। न चावगताभिधानमपि। परिमाणभेदांस्त्रसरेणुशतमानादीनाद्यन्तानपेक्ष्य मध्यपठितत्वान्**मध्यो** यवाख्यः परिमाणविशेषः। पञ्चकृष्णला अस्मिन्सन्ति **पञ्चकृष्णलिकः।** "अत इन ठनौ" इनि ठन् कर्त्तव्यः। 'पञ्चकृष्णलक' इति पाठे कबन्तो बहुव्रीहिः। ते कृष्णलाः षोडश एकः **सुवर्णः** ।। १३४ ।।

(२) **सर्वज्ञनारायणः।** मध्योयवोनातिसूक्ष्मोनातिमहान्वा ।। १३४ ।।

(३) **कुल्लूकः।** गौरसर्षपाः षट् मध्योन स्थूलोनापि सूक्ष्मोयवोभवति त्रिभिर्यवैः कृष्णलंरक्तिकेति प्रसिद्धं पञ्चभिः कृष्णलैर्माषः षोडशमाषाः सुवर्णः स्यात्। पुल्लिङ्गश्चायंपरिमाणवचनः ।। १३४ ।।

(४) **राघवानन्दः।** यवोमध्यः स्थूलसूक्ष्मभिन्नः। त्रयोयवापरिच्छेदकायस्य तदेक कृष्णलं। ते षोडश माषाः सुवर्णइत्यन्वयः ।। १३४ ।।

(५) **नन्दनः।** संव्यवहारेषु सूक्ष्मोमध्यमस्थूल इति त्रिविधोयवउक्तः अंशद्वयभयवस्य लक्षणमुक्तंसर्षपाषडयवोमध्य इति ।। १३४ ।।

(६) **रामचन्द्रः**। षट् सर्षपाः मध्योयवः नस्थूलोनसूक्ष्मः। त्रियवंत्रयोयवाः एक कृष्णलम् पञ्चकृष्णलकोमाषः। ते माषाः षोडशएकः सुवर्णः ॥ १३४॥

(७) **मणिरामः**। सर्षपाः गौरसर्षपाः षट्यवोमध्यः नस्थूलोनातिसूक्ष्मः एतादृशोयवः। कृष्णलं रक्तिकेतिप्रसिद्धं। ते माषाः षोडशसुवर्णः॥ १३४॥

**पलं सुवर्णाश्चत्वारः पलानि धरणं दश।**
**द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः॥ १३५॥**

(१) **मेधातिथिः**। **पल**मिति संज्ञानिर्देशः। **सुवर्ण**मिति संज्ञी। **चत्वार** इति विशेषणम्। **धरण**मिति संज्ञा। **दश पलानी**ति संज्ञी। **द्वे कृष्णले** इति संज्ञा। **रूप्यमाषक** इति समुदायसंज्ञां मन्यन्ते। "ननु रूप्यविषयमाषकनिर्देशे द्वे कृष्णले प्रतिपत्तव्ये इति प्रतिजानीते। ततश्चानिश्चयः।" **समधृते**। तुलासूत्रके उन्मानादिहीने यदि धार्येते। प्रयोजनं मध्यशब्दवत्, यतोऽसमयाद्धार्यमाणतया परिमाणानिश्चयः॥ १३५॥

(२) **सर्वज्ञनारायणः**। पलानि दश सुवर्णस्य धरणम्॥ १३५॥

(३) **कुल्लूकः**। चत्वारः सुवर्णाः पलंस्यात् दशपलानि धरणं कृष्णलद्वयंसमंकृत्वा तुलया धृतंरूप्यमाषकोबोद्धव्यः॥ १३५॥

(४) **राघवानन्दः**। सुवर्णाश्चत्वारः पलंस्यात्। पलानि दश धरणं धरणसंज्ञक परिमाणान्तरम् रूप्यमाषमानमाह द्वेइति। समधृते समंकृत्वा तुलयाऽवधृते॥ १३५॥

(५) **नन्दनः**। उत्तरार्द्धेन रूप्यमानमुच्यते। समधृते सहोन्मिते॥ १३५॥

(६) **रामचन्द्रः**। चत्वारः सुवर्णाः पलम् दश पलानि धरणसंज्ञं भवति। रूप्यपरिमाणमाह। द्वेकृष्णले रूप्यमाषकः॥ १३५॥

(७) **मणिरामः**। दशपलानिधरणं समधृते तुलातोलितः तथा च रक्तिकाद्वयस्य रूप्यमाष इति संज्ञेत्यर्थः॥ १३५॥

**ते षोडश स्याद्धरणं पुराणश्चैव राजतः।**
**कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः॥ १३६॥**

(१) **मेधातिथिः**। **षोडश**रूप्यमाषका रूप्यस्य धरणं भवति। **पुराण** इति संज्ञान्तरम्। **कार्षापणः** पण इति च द्वे संज्ञे ताम्रकर्षस्य। कर्षाख्यश्च शब्दो लोकत एव प्रसिद्धार्थं इह गृह्यते व्यभिचारदर्शनासत्त्वेन न कृष्णलादिवत्परिभाष्यते॥ १३६॥

(२) **सर्वज्ञनारायणः**। राजतोरजतसंबन्धी। पुराणोधरणंचेतिमाषाः षोडश। कार्षिकः कर्षः ताम्रिकः ताम्रः। कार्षापणःपणश्चोच्यते। अत्रचानुक्ते सुवर्णमनाग्रहणात् कर्षः पलचतुर्थभागः पञ्चकृष्णलकः षोडशमाषात्मकोग्राह्यः॥ १३६॥

(३) **कुल्लूकः**। ते षोडशरूप्यमाषकारौप्यधरणंपुराणश्च राजतोरजतसंबन्धी स्यात्।

कार्षिकः ताम्रमयः कार्षापणः पणइति विज्ञेयः। कार्षिकश्च शास्त्रीयपलचतुर्थभागोबोद्धव्यः। अतएव पलंकर्षचतुष्टयमित्याभिधानिकाः ।। १३६ ।।

(४) **राघवानन्दः।** राजतोरजतसंबन्धी। ते रूप्यमाषकाः षोडश धरणंस्यात् राजतं धरणमस्यैव संज्ञान्तरं पुराणइति। पणमानमाह कार्षइति। कार्षिकः कर्षप्रमाणः स एव पणइति पणएव कार्षापणः। ताम्रिकः ताम्रमयश्चेत्कार्षिके ताम्रिके पणइत्यभिधानात् ।। १३६ ।।

(५) **नन्दनः।** ते रूप्यमाषकाः षोडशराजतंधरणम्। पुराणमनादिसिद्धं। उत्तरार्द्धेन ताम्रिकमानंसूच्यते माषषोडशकस्य कर्षइति संज्ञा लोकप्रसिद्धा कर्षेणमितः कार्षिकः ताम्रस्य विकारस्ताम्रिकःकर्षमिति । ताम्रीकृतःपणोत्रव्यवहारेकार्षापणसंज्ञोज्ञेयः नतुलोकप्रसिद्धोरूप्यादिमान इत्यर्थः ।। १३६ ।।

(६) **रामचन्द्रः।** तेषोडशमाषाः रजतः धरणं भवति। राजतः पुराणेतिसंज्ञो भवति। कर्षःस्याद्दशमाषिकइति निघण्टुः। पलचतुर्थांशकः कषकयोन्मानितः कार्षिकः ताम्रस्य विकारः ताम्रिकः कर्षसंमितताम्रविकारः ढब्बूकस्यार्धः ।। १३६ ।।

(७) **मणिरामः।** तेषोडश रूप्यमाषकाः षोडशधरणं पुराणश्चराजतः। तथा व द्वात्रिंशद्रक्तिका परिमितस्य रौप्यधरणं रौप्यपुराणश्चेति संज्ञाद्वयंज्ञेयं। कार्षिकः ताम्रमयः कार्षापणः पण इति ज्ञेयः। कार्षिकः पलचतुर्थांशः तत्परिमितताम्रघटितस्पटे ब्रूक सदृशस्यपण इति संज्ञा। कार्षापण इति च संज्ञाज्ञेयेत्यर्थः ।। १३६ ।।

**धरणानि दश ज्ञेयः शतमानस्तु राजतः।**
**चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ।। १३७ ।।**

(१) **मेधातिथिः।** **शतमान** इति संज्ञा दशानां धरणानाम्। **रजत**शब्देन सुवर्णमप्युच्यते। तेन रूप्यसुवर्णयोरियं संज्ञा। सुवर्णस्य मानं तु शास्त्रान्तरात्परिमातव्यम्। तथा च विशेषयिष्यति **शतमानं तु राजतमिति** ।। १३७ ।।

(२) **सर्वज्ञनारायणः।** राजतः शतमानोदशभिर्धरणैः। चतुर्भिःसुवर्णैर्निष्कः। सुवर्णस्यैव स्थूलयवैः कृष्णलपरिकल्पनायांव्यवहारिकनिष्कस्य षोडशांशः कृष्णलोभवतीति दानप्रकरणादौ व्यावहारिकी विशिष्टसंज्ञानिष्कस्य ।। १३७ ।।

(३) **कुल्लूकः।** दशरूप्यधरणानि रौप्यशतमानोज्ञातव्यः। चतुर्भिः सुवर्णैर्निष्कः प्रमाणेन बोद्धव्यः ।। १३७ ।।

(४) **राघवानन्दः।** किंचान्यत् धरणेति। धरणानि रौप्याणि दशशतमानइति मानान्तरम्। चतुःसौवर्णिकंचतुर्भिः सुवर्णैः परिमितः निष्कः पलंसुवर्णाश्चत्वारइति याज्ञवल्क्योक्तेः ।। १३७ ।।

(६) **रामचन्द्रः।** पणसंज्ञाः शतं भवन्ति राजतः रूप्यस्य दश धरणानि शतमानोज्ञेयः ।। १३७ ।।

(७) **मणिरामः**। दशरौप्यधरणानिरौप्य शतमानोज्ञेयः। चतुःसौवर्णिकः पल प्रमाणः निष्कोज्ञेयः पलंसुवर्णाश्चत्वार इत्युक्तेः ।। १३७ ।।

**पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।**
**मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ।।१३८ ।।**

(१) **मेधातिथिः। मध्यम उत्तम** इत्यत्र साहसपदानुषङ्गः कर्त्तव्यः। मध्यमोत्त-मशब्दावत्र केवलावपि शास्त्रान्तरदृष्टौ–'आभ्यां दण्ड उत्तम' इति। तत्र शास्त्रसिद्धचा साहचर्यात्साहसं प्रतीयते। अवयवाः स्पष्टाः ।। १३८ ।।

(२) **सर्वज्ञनारायणः**। पणानां ताम्रकर्षाणां। प्रथमसाहसइत्यस्य दण्डादिप्रकरणेषु संज्ञा। मध्यमः पञ्चपञ्चशतानि। सहस्रं पणानाम्। ऋणेदेयेप्रतिज्ञातइति श्लोकमत्र केचित्पठन्ति ।। १३८ ।।

(३) **कुल्लूकः**। पञ्चाशदधिके द्वे पणशते प्रथमसाहसोमन्वादिभिः स्मृतः। पण-पञ्चशतानि मध्यमः साहसोज्ञेयः। पणसहस्रन्तूत्तमसाहसोज्ञेयः ।। १३८ ।।

(४) **राघवानन्दः**। मोहात्पूर्वंतुसाहसमित्यत्र प्रथमसाहसादिपरिमाणयुक्तंतत्पारि-भाषिकमितिज्ञापयति पणानामिति। पञ्चाशदुत्तरशतद्वयाभ्यां प्रथमः। मध्यमः साहसः पणानांपञ्च शतानीतिशेषः। एतन्माषकादिपरिमाणंलोकाप्रसिद्धमपि शास्त्रीयत्वेन विधेयमिति ।। १३८ ।।

(५) **नन्दनः**। कार्षापणानामयंसंज्ञाविशेषमाह पणानामिति। कार्षापणानांसार्द्धेव-ऽर्धशतसहिते पञ्चाशत्साहितइतियावत्। पञ्चशतानीतिवचनविपरिणामः ।। १३८ ।।

(६) **रामचन्द्रः**। पञ्चाशदधिकशतद्वयपरिमितःप्रथमसाहसः। मध्यमसाहसः पञ्चशतपरिमितः। सहस्रंचोत्तमः उत्तमसाहसोविज्ञेयः ।। १३८ ।।

(७) **मणिरामः**। द्वेशतेसार्द्धे पंचाशदधिके द्वेशते पंच पंचशतानि ।। १३८ ।।

(८) **गोविन्दराजः। पणानामिति**। सार्द्धे द्वे शते पणानां प्रथमः साहसो मन्वादिभिः मृतः, पञ्चपणशतानि मध्यमो विज्ञेयः, सहस्रं त्वेवं चोत्तमः ततः सहस्र एव ।। १३८ ।।

**ऋणं देये प्रतिज्ञाते पञ्चकं शतमर्हति।**
**अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ।। १३९ ।।**

(१) **मेधातिथिः**। यो राजसभायामानीतो धर्मेण ऋणं देयतया प्रतिजानीते सत्यमस्मै धारयामि स **पञ्चकं शतमर्हति** दण्डमिति शेषः। अनेन संकल्पितेन विंशतितमो भागो दण्डचते–'किमिति मत्सकाशमुत्तमर्णः प्रेषितो बहिरेव कस्मान्न परितोषित' इत्यतोऽनेन शास्त्र-व्यतिक्रमेण दण्डमर्हति। यस्तु व्यतिक्रमान्तरं करोत्यपह्नुते–'नाहमस्मै धारयामीति'–स तैः प्रतिपादितस्तद्**द्विगुणम्**। तस्मात्पञ्चकाद्द्विगुणं दशकं शतमित्यर्थः। **तन्मनोः** प्रजा-पतेर**नुशासनं** सृष्टिकालप्रभृति व्यवस्था नीतिरिति यावत्। अन्ये तु तच्छब्देन देयमेव

प्रत्यवमृशन्ति । यावत्तस्मै देयं तद्‌द्विगुणम्। तेन यावदृणमित्यनेनैकवाक्यं भवति। अन्यथा वाक्यभेदः। विषयविशेषानिर्देशादेकविषयत्वे विकल्पः प्राप्नोति। स च न युक्तो द्विगुणस्यात्यन्तबहुत्वात्। असत्यपि निर्देशे तस्य विषयो दर्शनं तस्य प्रत्यासन्नेषु-पञ्चकमित्यर्थस्तस्यैवानुप्रत्यवमर्शो युक्तः।। १३९ ।।

(३) **कुल्लूकः।** मयोत्तमर्णस्य धनंदेयमिति सभायामधमर्णेनोक्ते सत्यधमर्णः पण-शतात्पञ्चपणाइत्येवदण्डमर्हति। यदा तु सभायामपि न किंचिदस्मै धारयामीत्येवमपलपति तदा पणशताद्दशपणाइत्येवं दण्डमर्हतीत्येवंमनुस्मृतौ दण्डप्रकारः।। १३९ ।।

(४) **राघवानन्दः।** प्रासंगिकमुक्ता प्रकृतंदण्डमाह ऋणइति। अधमर्णोत्तमर्णं प्रति देयमिति सभायांप्रतिज्ञातेयदि न ददाति तदा पणानां तच्छतंप्रतिपणंपञ्चकंदण्डमर्हतीत्यर्थः। धारयामीत्यपह्नवे तद्विगुणंदशपणम्। एवंसहस्रादिष्वपिज्ञेयम् ।। १३९ ।।

(५) **नन्दनः।** इदानीमृणमप्रयच्छतोऽधमर्णस्य दण्डमाह ऋणेदेयइति। उत्तमर्णा-भियोगानन्तरमधमर्णेन देये प्रतिज्ञाते। देयत्वेन संप्रतिपन्ने ऋणेसोधमर्णः पञ्चकंशतमर्हति। यस्माच्छतादेयत्वेन राज्ञे पञ्चकंदीयतइति तत्पञ्चकंशततस्मिन्वृद्ध्यादीयते। संप्रति-पन्नादृणाद्विंशतिभागदण्डइत्यर्थः। अपह्नवे ऋणस्यासंप्रतिपत्तौ तत्पञ्चकज्ञाते ऋणदश-भागदण्डचइति ।। १३९ ।।

(६) **रामचन्द्रः।** ऋणे देये पञ्चशतग्रहीतुमर्हति। अधमर्णेनापह्नवे कृते गोपिते तत्पञ्चशताद्विगुणंग्रहीतुमर्हति ।। १३९ ।।

(७) **मणिरामः।** ऋणेदेये प्रतिज्ञाते उत्तमर्णस्य धनं मयादेयमितिसभायामधमर्णे-नोक्ते। पंचकं शतमर्हति शतपरिमित द्रव्यात् पंचपलाः द्विशतात् दशपला एवं दंडमिति। नास्मै धारयामीत्यपह्नवेत द्विगुणं शताद्दशपला इत्येवं रूपं ।। १३९ ।।

(८) **गोविन्दराजः। ऋण इति।** देयं मयोत्तमर्णस्य ऋणमित्येवं अधमर्णेन सभाया-मुक्ते सत्यसौ अधमर्णः पणशतात्पञ्चपणा इत्येवं दण्डमर्हति। न किञ्चिदस्मै धारयामीत्येव-मपह्नुते सति दशकशतं दण्डमर्हति। एतन्मनुस्मृतं दण्डनम् ।। १३९ ।।

**वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम्।**
**अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ।। १४० ।।**

(१) **मेधातिथिः। अशीतीति** विधेयनिर्देशः। **वसिष्ठविहितामित्या**दिरर्थवादः। वसिष्ठो भगवान् त्रिकालज्ञो लोभादिदोषरहित इति तां वृद्धिं गृहीतवानत एषा प्रशस्ता। धनं तया वृद्धिमुपैति। न च लोभदोषोऽस्ति। **सृजे**त्प्रयुञ्जीत यदा धनं तदाऽधमर्णस्य तां वृद्धिं धनप्रयोगकाले निर्दिशेत्। सर्वद्रव्येषु वस्त्रधान्यहिरण्यादिष्वेतदेव वृद्धिपरिमाणम्। संख्येयपरमेयादिषु 'रसस्याष्टगुणा वृद्धिः' इत्यादिषु द्वैगुण्यापवाद इति वक्ष्यामः।। १४० ।।

(२) **सर्वज्ञनारायणः। अशीतिभाग इति।** वसिष्ठविहता वृद्धिः पणशतात्पञ्चका-किण्यः। एतच्च सबन्धके स्मृत्यन्तरदर्शनात् अनेनत्वेवाधाविति बन्धकावताराच्च ।। १४० ।।

(३) **कुल्लूकः।** वसिष्ठेनोक्तां वृद्धिं धर्म्यत्वाद्धनवृद्धिकरींवृद्धिजीवी गृह्णीयात्। तामेव दर्शयति **शते** प्रयुक्तेऽ**शीतिभागं** प्रतिमासं **वृद्धिं गृह्णीयात्**। ॥ १४० ॥

(४) **राघवानन्दः।** ऋणप्रसंगेन तल्लभ्य परिमाणमाह वसिष्ठेतित्रिभिः। **सृजेत्** गृह्णीयात्। अधमर्णोत्रा दद्यात्। शत इति पणसुवर्णवस्त्रादिसाधारणधान्यादेर्वक्ष्यमाण-त्वात्। वसिष्ठेत्यर्थवादोवृद्धेर्दोषापनुत्याइतिमेधातिथिः ॥ १४० ॥

(५) **नन्दनः। सृजेत्**कुर्यात्। वसिष्ठविहितादिभिरुत्तरार्धेनोच्यते ॥ १४० ॥

(६) **रामचन्द्रः। वार्धुषिकः** उत्तमर्णः **शते** शतसङ्खचे द्रव्ये **मासात् अशीतिभागं** अशीतितमभागं **गृह्णीयात्** ॥ १४० ॥

(७) **मणिरामः।** सृजेत् गृह्णीयात् वसिष्ठविहितां वृद्धिमेववक्ति अशीति। अशी-भागः सपादमुद्रात्मकः। इदं सवंधके अशीतिभागोवृद्धिः स्यान्मासि मासि सवंधक इति याज्ञवल्क्योक्तेः ॥ १४० ॥

(८) **गोविन्दराजः। वसिष्ठविहितामिति।** वसिष्ठोक्तां वृद्धिं धर्मत्वाद् धनवृद्धिकरीं वृद्धिजीव्युत्पादयेत्। साकल्यत आह अशीतिभागमिति। शते प्रयुक्ते मासाद् गतात्तस्माच्छता-दशीतिभागं वृद्ध्यर्थं गृह्णीयात् ॥ १४० ॥

**द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन्।**
**द्विकं शतं वा हि गृह्णानो न भवत्यर्थकिल्बिषी ॥ १४१ ॥**

(१) **मेधातिथिः।** द्वौ वृद्धिरस्मिन् शते दीयते तद् **द्विकं शतम्।** द्विशता पूर्वयाऽ-जीवतो बहुकुटुम्बस्यायं द्विकशतविधिः। मासमनुवर्तते। **सतामि**त्यादिरत्रायमर्थवादः **सतां धर्ममिति।** एषाऽपि वृद्धिः साधूनां धर्मः। नैतया साधुत्वं हीयते। नात्यन्तमर्थपर उच्यते तद्दर्शयति **न भवत्यर्थकिल्बिषी।** अन्यायेन परस्वग्रहणात्पापमर्थकिल्बिषं तदस्यास्तीत्यर्थ**किल्बिषी** ॥ १४१ ॥

(२) **सर्वज्ञनारायणः।** अबन्धेकत्वाह द्विकमिति। पणानांशतात्पणद्वयमित्येत-द्ब्राह्मणात्। अर्थकिल्बिषी परस्वग्रहणदोषवान् ॥ १४१ ॥

(३) **कुल्लूकः।** साधूनामयंधर्मइति मन्यमानः पणशते प्रयुक्ते पणद्वयंवा प्रतिमासं-गृह्णीयात् यस्माद्विकंशतंहिगृह्णानोवृद्धिधनग्रहणे किल्बिषी न भवति ॥ १४१ ॥

(४) **राघवानन्दः।** सबन्धकेशतंप्रत्यशीतिभागमेवाबन्धके द्विकमेव नाधिकमित्याह द्विकमिति। कार्यवशादपिनभवत्यर्थकिल्बिषीयुक्तत्वात् ॥ १४१ ॥

(५) **नन्दनः।** संबन्धकविषयमेतदुक्तंपक्षद्वयंब्राह्मणविषयंनान्यवर्णविषयमिति सूचय-न्नाह द्विकमिति। द्विकादिषु पूर्ववत्कन्प्रत्ययः ॥ १४१ ॥

(७) **मणिरामः।** अवंधकेत्वाहाद्विकमिति। द्विकं शतं शतपरिमिते मासिकं मुद्राद्वयं ग्राह्यमित्यर्थः ॥ १४१ ॥

(८) **गोविन्दराजः।** **द्विकमिति।** पणशताद्वा मासेन द्वौ पणौ पूर्ववृद्धया च जीवन् साधूनामर्थधर्मः नाधर्म इति। मंन्यमानो गृह्णीयात्। यस्मात् द्विकं शतं गृह्णन् परस्वादान-पापयुक्तो न भवति ॥ १४१ ॥

**द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम्।**
**मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ १४२ ॥**

(१) **मेधातिथिः।** ब्राह्मणादिवर्णक्रमेण चतुर्णां वर्णानां सकाशाद् द्विकादयश्चत्वारः कल्पा यथासङ्ख्यं न ग्राह्यतयाऽनुज्ञायन्ते। **समम्।** न पादेन वार्ध्येन वाऽधिकम्। तदाधिकोऽपि सपादद्विकं सार्द्धद्विकमिति द्विकादिव्यपदेशस्यानिवृत्तेराशंङ्कानिवारणार्थं **सम**-ग्रहणम्। यथा मात्रान्यत्वेऽपि संज्ञान्तरव्यपदेशं निवर्तयति। इदमपि पूर्वेणाजीवतः कल्पान्तरम्। यस्य वाऽल्पं धनं महते धर्माय गृहीतारश्च नातिधार्मिकास्तत्रायं विधिः। 'येऽसाधुभ्योऽर्थमादायेति' न्यायेन।

**सममिति** पाठान्तरम्। संवत्सरं यावदेषा वृद्धिर्न परतोऽपि महत्त्वाद् द्वैगुण्यं स्यात् ॥ १४२ ॥

(२) **सर्वज्ञनारायणः।** एतदेवानूद्य क्षत्रादिष्वाह द्विकमिति। समं तन्न्यूनमधिकंवा ॥ १४२ ॥

(३) **कुल्लूकः।** ब्राह्मणादिवर्णानांक्रमेण द्विकंत्रिकंचतुष्कंपञ्चकंशतसममितो-नाधिकंमासस्य संबन्धिनींवृद्धिंगृह्णीयात्। नन्वशीतिभागोलधुद्विकशतग्रहणंगुरु कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्पेताम् अत्र मेधातिथिगोविन्दराजौ तु पूर्ववृद्धयानिर्वाहासंभवे द्विकशतपरिग्रह इति व्याचक्षाते। इदन्तुवदामः सबन्धकेष्वशीतिभागग्रहणं बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः। तदाह याज्ञवल्क्यः। अशीतिभागोवृद्धिः स्यान्मासिमासिसबन्धके। वर्णक्रमाच्छतंद्वित्रिचतुः पञ्चकमन्यथा। वेदान्तोद्गीतमहसोमुनेर्व्याख्यानमाद्रिये। तद्विरुद्धंस्वबुद्धयाच निबद्धमधुनातनैः ॥ १४२ ॥

(४) **राघवानन्दः।** निर्बन्धकेतु चतुर्णां व्यवस्थितिमाह द्विकमिति। अशीतिभागो-वृद्धिः स्वान्मासिमासि सबन्धके। वर्णक्रमाच्छतंद्वित्रिचतुष्पञ्चकमन्यथा। अन्यथा अबन्धक-इति याज्ञवल्क्योक्तेः। अतोद्विकादिकमशक्तपरमिति व्याख्यानंत्वश्रद्धेयमिति ॥ १४२ ॥

(५) **नन्दनः।** ब्राह्मणानांद्विकम्। क्षत्रियाणांत्रिकम्। वैश्यानांचतुष्कम्। शूद्राणांपञ्चकं शूद्रात्पञ्चकंमासस्य गृह्णीयादित्यर्थः ॥ १४२ ॥

(६) **रामचन्द्रः।** ब्राह्मणेऽधमर्णे द्विकं शतं गृह्णीयात्। क्षत्रिये त्रिशतं। वैश्ये चतुष्कं। शूद्रेपञ्चकं। मासि मासीतिसर्वत्रसंबध्यते। समं नन्यूनाधिकं। वर्णानामनु-पूर्वशः क्रमेण ॥ १४२ ॥

(७) **मणिरामः।** वर्णक्रमेण वृद्धिग्रहणमाह **द्विकं त्रिकमिति।** शतपरिमितंचेद्दाति-तदा ब्राह्मणात् मुद्राद्वयं क्षत्रियात् त्रयं वैश्याच्चतुष्टयं शूद्रात्पंचकं समं नातोधिकं मासि-मासिग्राह्यमित्यर्थः ॥ १४२ ॥

(८) **गोविन्दराजः। द्विकमिति।** ब्राह्मणादिवर्णानां क्रमेण द्विकत्रिकचतुष्कपञ्च-शतं सममन्यूनाधिकं मासस्य संबन्धिवृद्धिं गृह्णीयात् ।। १४२ ।।

**न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् ।**
**न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ।। १४३ ।।**

(१) **मेधातिथिः।** बहुधा प्रयोगो गृहीत्वाधिमन्यथा च आधिरपि द्विविधो—गोप्यो भोग्यश्च। भोग्योऽपि द्विविधः—समयादुह्यमानभोगः स्वरूपतो वा। आधिर्दोग्ध्री गौः पिहितसुवर्णादि। तत्र भोग्यमाधिमधिकृत्येदमुच्यते **न त्वेवाधौ सोपकार इति।** विविधः सोपकारः—क्षीरिणो गौः क्षेत्रारामादि च। तस्मिन् भुज्यमाने। कुसीदे भवा **कौसीदी** अनन्तरोक्ता वृद्धिस्तां **नाप्नुयात्।** आधिं तु भुञ्जानो नान्यां वृद्धिं लभेत। गोप्येऽप्याधौ **कालसंरोधाच्चिरमवस्थानाद्** द्विगुणीभूतेऽप्यमोक्षमाणे **न निसर्गोऽस्ति न विक्रयः।** अन्यत्र च विधिनार्पणं **निसर्गः।** अन्यत्र संक्रामितं द्विगुणीभूतमपि पुनर्वर्धत एव। तथा च पठिष्यति 'सकृदाहृतेति'। **विक्रयः** प्रसिद्धः। सोऽपि न कर्तव्यः। "किं तर्ह्यस्यामवस्थायां कर्तव्यम्"। तावदाधिं भुञ्जीत यावद्द्विगुणं धनं प्रविष्टं ततो मोच्य आधिः। तदुत्पन्ने प्रविष्टे द्विगुणे धने भोग्यस्तावदेव, अभोग्यस्त**दनन्तरम्।** भोग्यस्त्वाधिः शांतलाभस्तिष्ठत्येव यावदाधाता नागतः। यस्तु कथंचिद्धनिको दरिद्रतामुपगतस्तावन्मात्रशेषधनः स कञ्चित्कालं प्रतीक्ष्य राजनि निवेद्य विक्रीणीत बन्धम्—ततो विक्रयादुत्पन्नं द्विगुणमात्मनो धनं गृहीत्वा शेषं मध्यस्थहस्तेऽऋणिकसात्कुर्यात्। ननु च "आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्षयेत्" इति पठ्यते (याज्ञ. २।५८)। एतदुत्तरत्र व्याख्यास्यामः। प्रणश्यत्वान्न पूर्वस्वामिनः स्वाम्यहानिः प्रयोक्तुश्च स्वत्वापत्तिः। यदि च निसर्गविक्रयौ न स्तः कीदृशमस्य स्वाम्यमुच्यते? तस्मात्प्रतिषेधसामर्थ्येन प्रणाशवचनं प्रतिषिद्धभोगस्य भोगानुज्ञानार्थं व्याख्यायते। वस्त्रादिविषयं वा। तस्य हि भुज्यमानस्य प्रणाश एव। न क्षेत्रादेरिव तिष्ठतः स्वरूपात्प्रपच्यवमानस्य भोग्यता संभवति। तेनैतत्स्मृतिव्यवस्थायां व्याख्येयम्। गौणौ चात्र प्रणाशनिसर्गौ। विक्रयप्रतिषेधस्तु मुख्य एव। न ह्यसौ गौणतया प्रतिपत्तुं शक्यते। एतदेव प्रस्तुत्य "न स्यातां विक्रयाधीने" इति स्मृत्यन्तरे पठितम्। अत इह **निसर्गो**ऽन्यत्राधानम् विक्रयसाहचर्यात्। सदृशौ हि तौ केनचिदंशेन ।। १४३ ।।

(२) **सर्वज्ञनारायणः।** सोपकारे गोप्यादिनापि प्रसंगादुपकारसिद्धौ वृद्धिर्नग्राह्या। कौसीदीं कुसीदवृत्तिसंबन्धिनीम्। कालसंरोधात् कालातिक्रमेपि द्वैगुण्योर्ध्वं आधेर्बन्धकद्रव्यस्य ननिसर्गोदानमस्ति नच विक्रयोस्ति किंतु प्रतिरोधादिना धनस्यैव ग्रहणम् ।। १४३ ।।

(३) **कुल्लूकः।** भूमिगोधनादौ भोगार्थेबन्धके दत्ते धनप्रयोगभवामनन्तरोक्तां-वृद्धिमुत्तमर्णोन लभते कालसंरोधाच्चिरकालावस्थानात् द्विगुणीभूतमूलधनप्रवेशेऽपि न निसर्गोऽन्यस्मैदानंनवान्यतो विक्रयः। मेधातिथिगोविन्दराजौ तु आधेश्चिरकालावस्थानेऽपि न निसर्गोनान्यत्र बन्धके नार्पणमिति व्याचक्षाते। अत्र तु सर्वदेशीयशिष्टाचारविरोधः बन्धकोकृतभूम्यादेरन्यत्राधीकरणसमाचारात् ।। १४३ ।।

(४) **राघवानन्दः।** सबन्धकेऽशीतिभागइत्युक्तं तत्र द्रव्यविशेषे तदभावमाह नेति। आधौ गोभूमिदासादौ सोपकारि भोगार्थंदत्ते तत्र भोगएव वृद्धिः। कौसिदीलभ्यइतिप्रसिद्धां-नाप्नुयादित्यन्वयः। तत्रैव बन्धकस्य विशेषमाह नेति। कालसंरोधात् चिरकालावस्थानात् द्विगुणीभूतमूलप्रवेशेवा। त्रिसर्गोत्र स्वच्छन्देनान्यस्मै दानम्। नापि विक्रयः। तथाच याज्ञ-वल्क्यः। आधिःप्रणश्येद्विगुणे धने यदि न मोच्यते। काले कालकृतोनश्येत्फलभोग्योन नश्यति। एतावताकालेन ननीयतेचेत्तदैवतदितिकालकृतस्य वचनादेव सर्वस्वत्वहानिरि-त्यर्थः। फलभोग्यउक्ताधिरूपः।। १४३।।

(५) **नन्दनः।** अथाधिविषये वृद्धिप्रकारमाह नत्विति। ऋणप्रदानार्थमधमर्णा-दुत्तमर्णेन गृहीते बन्धआधिः तस्मिन्सोपकारे सत्ये च धेन्वनडुहादिरूपतया भोगक्षेमे सत्यपि योभोगानुज्ञापरस्परमाधिराहितः यस्य चाननुज्ञातभोगमन्तरेण वैगुण्यप्रसङ्गः तस्मिन्नाधौ भुक्तेसत्यपीत्यर्थः। कौशिदीऋणसंबन्धिनीसंरोधात्। सकालःसमाप्तइत्यधमर्णायदद्यात् किन्तु यावदृणलाभंभुञ्जीत। नचलब्धमृणमिति। विक्रीणीयादिति।। १४३।।

(६) **रामचन्द्रः।** ननुतर्के। वा पक्षान्तरे सोपकारे आधौ बन्धके कौसीदींवृद्धिमा-प्नुयात् गृह्णीयात् विश्वासार्थंयआधीयतइतिआधिरितियावत् आधेः कालसंरोधात् कालाति-क्रमात् ननिसर्गोस्ति। न दानं। न विक्रयः। तथायोगीश्वरः। आधिःप्रणश्येद्विगुणोधने-यदिनमोच्यते। कालेकालकृतोनश्येत्फलभोग्योन नश्यति। क्षेत्रारामादि फलभोग्यादि कदाचिदपि न नश्यति।। १४३।।

(७) **मणिरामः।** आधौ वंधके सोपकारे भोगार्थं दत्ते भोगवंधके इति यावत्। कौषिकीः धन प्रयोगभवां आधेः भोगवंधकस्य कालसंवोधात् चिरकाल्यवस्थानात् विसर्गः स्वद्रव्य ग्रहणार्थमन्यत्ररक्षणं विक्रयश्च न भवतीत्यर्थः।। १४३।।

(८) **गोविन्दराजः। नत्विति।** भोजनार्थबन्धे दत्ते धनप्रयोगाभवानन्तरोक्ता या वृद्धिस्तामुत्तमर्णो न लभते। न च वृद्धिदत्तस्य बन्धस्य द्विगुणीभूत धनकालादूर्ध्वं अव्यवस्था-नादन्यत्र बन्ध वेतनत्वेनार्थमस्ति नापि विक्रयोपि द्विगुणीभूतधनकालादूर्ध्वं समीक्षणादाधि-र्भुज्यत एव अन्यथा धनप्राप्त्यभावात्।। १४३।।

## न भोक्तव्या बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।
## मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत्।। १४४।।

(१) **मेधातिथिः।** "ननु च प्रागप्येतदुक्तं 'न त्वेवाधाविति (१४३)"। सत्यम्। यत्र यावत्येव वृद्धिस्तावानेव भोगः स पूर्वस्य विषयः। यत्र तु महती वृद्धिः स्वल्पोपभोगश्चे-द्बलादिना भुञ्जानस्य सर्वेण सर्ववृद्धिहानिः। यत्र क्षेत्रगवादिर्बन्धस्तद्भोगश्च न वृद्धि-सम्मितः स चोपचितामपि वृद्धिं न ददाति, न च बन्धनं द्विगुणं, तत्र कयाचिदतिमत्यात्यन्त-मुक्तैव वृद्धिर्निश्चेतव्या। यदि तु वस्त्रादि भुज्यमानं नश्येत्तत्र **मूल्येन तोषयेदेनम्** आधातारम्। इतरोऽपि वृद्धिं लभते। **अतोऽन्यथाऽददन्मूल्यमाधिस्तेनो भवेत्।** यज्जातीयमाधिंभुक्तवां-स्तदपहारे यो दण्डः स एव दाप्यः। **स्तेनश्चौरः।** अन्ये व्याचक्षते। बलाद्भुक्ते वृद्धिहानिः।

भुञ्जीत तन्मूल्यत एव वा । यदृणिकस्य मूल्यं मूल्यहिरण्यम् । यत्र भुञ्जान उच्यते 'मा मे बन्धं विनीनशो मा भुङ्क्ष्व कतिपयैरहोभिर्मोक्षयामि' तथाऽप्युच्यमानो भुङ्क्त एवेति सोऽस्य विषयः ।। १४४ ।।

(२) **सर्वज्ञनारायणः ।** शयनादिषु भुज्यमानेष्वप्यविनाशिषु बन्धकदात्रा यदि भोग-निषेधः कृतस्तदा नतद्भोक्तव्यं भोगे वृद्धित्यागः । यदातु वृद्धिरतिभूयसी तदा वृद्धि-गृह्णीयात् । किंतु मूल्येन तोषयेत् । यावता तावद्भोगसिद्धिस्तद्देयम् ।। १४४ ।।

(३) **कुल्लूकः ।** गोप्याधिविषयंवचनमिदंवस्त्रालङ्कारादिर्गोप्याधिर्बलान्न भोक्तव्यः भुञ्जानोवृद्धिमुत्सृजेत्प्राङ्मूल्येनात्वैनंतोषयेत् । यद्वा भोगेनासारतामाधौ नीते सारावस्था-धिमूल्यदानेन स्वामिनंतोषयेत् अन्यथा बन्धकचौरः स्यात् ।। १४४ ।।

(४) **राघवानन्दः ।** वस्त्रालंकारादेराधौ विशेषमाह (नभोक्तव्यइति) नभोक्त-व्यस्त्वयाधिरितिनिषेधे कृते बलाद्भुञ्जानःउत्सृजेन्न गृह्णीयात् । प्रत्युत मूल्येन भोगे-नासारतांगते तन्मूल्येन एनं पूर्वस्वामिनम् । अन्यथा तन्मूल्यस्यादाने आधिस्तेनः उत्तम-र्णोपि गोप्यबन्धविषयः ।। १४४ ।।

(५) **नन्दनः ।** भुञ्जानएनमधमर्णमूल्येन भुक्तेन फलेन तोषयेत् भुक्तंफलमधमर्णाय दद्यादित्यर्थः । अन्यथा यदि न तोषयेदाधिः स्तेनोभवेत् आधिश्चोरः स्यात् ।। १४४ ।।

(६) **रामचन्द्रः ।** बलादाधिर्न भोक्तव्यः । भुञ्जानःसन्वृद्धिमुत्सृजेत् । भोगेनाधौ नष्टे व्यवहाराक्षमेएनंमूल्येन तोषयेत् । अन्यथा आधिस्तेनः चौरः भवेत् ।। १४४ ।।

(७) **मणिरामः ।** गोप्पाधिविषयमाह **न भोक्तव्येति ।** आधिः वस्त्रालंकारादिर्गोप्याधिः । मूल्येनतोषयेत् चरिधानेन मूलन्यूनतायां पूर्वमूल्येनाऽधमर्णं तोषयेत् ।। १४४ ।।

(८) **गोविन्दराजः । न भोक्तव्य इति ।** मा भुङ्क्ष्वेति स्वामिवचनमवगणयन् यद्बलाद्धनं न भुञ्जीत तथा भुञ्जानो वृद्धिं नाप्नुयात् यदि भोजेन बन्धः क्षयं यातस्तदा अक्षत-बन्धसम्बन्धिमूल्येन बन्धस्वामिनं तोषयेदन्यथा बन्धचौरः स्यात् ।। १४४ ।।

**आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।**
**अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ।। १४५ ।।**

(१) **मेधातिथिः ।** आधिमोक्षणकालो द्विगुणीभूतं धनं तस्यातिक्रमस्तस्मिन्नपि काले-ऽमोक्षः उपनिधिरपि यावता कालेन नास्यावसरोभवति मदीयमेवैतद् भोक्ताहमिति स प्रत्याहारकालः ततोऽधिकःकालः **कालात्ययः । तं नार्हतः** स न कर्तव्य इत्यर्थः । हेतुमाह । **अवहार्यौभवेतां ताविति ।** तौ हि दीर्घकालमवस्थितावप्रत्याह्रीयमाणौ **अवहार्याविति** स्थितम् । तस्माद्द्विगुणीभूतधनेऽधिमोक्षणे प्रयतितव्यम् । सुहृदुपदेशोऽयं न त्वेवाध्युप-निध्योर्भूयसाऽपि कालेनापहारः । यतो वक्ष्यति–"आधिसीमाबालधनमिति" (१४९) । अतस्तस्यैवायमनुवादः । अन्ये त्वाधिविषयमुपदेशमिच्छन्ति । यो द्वेषेण द्विगुणीभूते धने कालं क्षपयति, तत्त्रिलाभं धनं नाधिकं वर्द्धते, न चास्याधुनाऽन्यत्राधानविक्रयौ स्तः, इह वृद्धिमयं

मालभतामित्यनेन मात्सर्येण—तत्रेदमुच्यते **अवहार्यौ भवेतां ताविति।** अनया बुद्ध्याऽमोक्षयतः स्वाम्यमस्य निवर्तते। यस्तु कथंचिदसति धने न मोक्षयति तस्य निसर्गविक्रयौ न स्त इति। अथवाऽपरोऽर्थो मुखेनोपेक्षयति—परहस्तगतया शङ्कयोच्यते **अवहार्यौ भवेतामिति** ।। १४५ ।।

(२) **सर्वज्ञनारायणः।** आधिग्रहणान्तरमल्पमूल्यापत्तौ तत्पूरकतया यत्नेनसह स्थाप्यते सउपनिधिः। कालात्ययं कालातिक्रमं नाशम्। अवहार्यौ स्वामिना आनेतव्यौ ।। १४५ ।।

(३) **कुल्लूकः।** आधिर्बन्धकः उपनिधीयतइत्युपनिधिः प्रीत्याभोगार्थमर्पितं द्रव्यं नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवात्रोपनिधिशब्देन गृह्येते। एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्यौ समर्पणीयावित्यर्थः ।। १४५ ।।

(४) **राघवानन्दः।** आधिप्रसंगेन उपनिधेः कालात्ययेऽपि दानविक्रयौ नस्तइत्याह आधिरिति। आधिः बन्धकत्वेन दत्तः उपनिधिः प्रीत्या भोगार्थमुपनीय मानोहारकुण्डलपात्रादिः कालेन चिरकालेनापि अत्ययं विनाशं धनिकान्नार्हतः किंच। अवहार्यौ समर्पणीयौ। स्वामिप्रार्थनेसति सुदीर्घकालेपि उपनिधिरिवाधिरपि न नश्यतीति वार्थः। नत्वेवाधावित्यत्रात्याया भावस्योक्तत्वात् ।। १४५ ।।

(५) **नन्दनः।** आधिःप्रसिद्धः स्वामिनास्वीकर्त्रपेक्षामात्रेण भोगमनुज्ञाय निहितोर्थः उपनिधिः। तौ परिभाषिते काले प्राप्तव्यौ न कालात्ययमर्हतः। कालोतीतश्चेत्तावपहार्य्यौ अपहारार्हौ। दीर्घकालावस्थानात्परिग्रहीत्रा भुञ्जानेन ममेदमित्यपहर्त्तुंसुशकावित्यर्थः ।। १४५ ।।

(६) **रामचन्द्रः।** आधिश्च उपनिधिश्च उभौ कालात्ययं चिरंकालं न नाशनं अर्हतः। तौ आध्युपनिधी दीर्घकालस्थितौ अवहार्यौ प्रयत्नेन नेतव्यौ भवेताम्। असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते। तं जानीयादुपनिधिंनिक्षेपं गणितं विदुः ।। १४५ ।।

(७) **मणिरामः।** आधिः बंधकः उपनिधिः प्रीत्याभोगार्थं यत् दत्तं द्रव्यं। एतौद्वौ दीर्घकालावस्थितावपि न कालात्ययं अर्हतः। यदैवस्वामिना प्रार्थितौ न दैवतस्य अवहार्यौ समर्पणीयावित्यर्थः ।। १४५ ।।

(८) **गोविन्दराजः। आधिरिति।** बन्धः प्रीतिभोग्यश्च पदार्थ एतौ द्वौ कालातिक्रमणं नार्हतोऽपि तु प्राप्ते काले स्वामिना प्रत्याहरणीयौ यस्मात्तस्मात्तौ दीर्घकालमन्यहस्तावस्थितौ आधित्वोपनिधित्वात्साक्ष्याद्यभाषेन हारयितुं शक्याविति सुहृदुपदेशरूपतयैवेदं न कदाचिदपि ह्रियते आधिःसीमेत्यपहारस्य वक्ष्यमाणत्वात् ।। १४५ ।।

**संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन।**
**धेनुरुष्ट्रोवहन्नश्वोयश्च दम्यः प्रयुज्यते ।। १४६ ।।**

(१) **मेधातिथिः।** प्रीतिरेव **संप्रीतिः**। तया हेतुभूतयोपभुज्यन्ते धेन्वादयस्ते **न नश्यन्ति।** पूर्वस्वामिसंबन्धहान्या भोक्तुः स्वत्वापत्ति'र्नाशः' स बान्धवादीनांप्रीत्या भुज्यमानानां **न भवति।** "ननु च सर्वस्यैवोपनिधेर्भोगेनापहारोनास्ति। वक्ष्यति 'निक्षेपोपनिधिश्च य' इति (१४९) को विशेषो धेन्वादीनाम्"। उच्यते। यत्र दशवर्षो भोगो न च स्वरूपनाशस्तत्र 'यत्किंचिदिति' (१४७) सामान्यवचनेन प्राप्तेऽपहारे उपनिधेः प्रतिषेधेः। धेन्वादीनां तूपनिधित्वमेव नास्त्यतः प्रतिषेधस्य नायं विषय इति स्यादाशङ्काधाननिमित्तो हि धेनुशब्दो यदि परसंवत्सरे धेनुः स्यात् परत उपसर्या यदि गर्भमादध्याद्धेनुत्वमापद्येत तदा जनयेदाशङ्कामस्यैवेयं न देवदत्तस्य। यतः प्रष्ठौह्ही न भोग्या प्रीतिसंभोग्यश्चोपनिधिः। येन स्वकैर्भोग्यं परिपाल्य पुनर्भुज्यमानं दृष्टम्। न पुनरुपनिधेरेतद्रूपम्। भोग्यो ह्युपनिधिः। असद्भावाद्भोगस्य च कीदृशगुणमुपनिधित्वम्। उपनिधेश्चासौ प्रतिषेधः। तस्मादुपनिधिरूपातिक्रमादसति तस्मिन्प्रतिषेधे यत्नान्तरमुक्तम्। उष्ट्रादीनामपि दशवर्षाणिभुज्यमानानामवस्थान्तरापत्तिः। अतस्तत्रापि नोपनिधित्वम्। **वहन्निति** केचिदश्वविशेषणं मन्यन्ते। वृषस्य नायं विधिः। अपरे तु गर्दभाश्वतरार्थं मन्यन्ते। **दम्यो** बलीवर्दः। **प्रयुज्यते** वहनार्थं यो दीयते। अन्ये तु पुनः प्रतिषेधं विकल्पार्थं मन्यन्ते। एतद्व्यतिरेकेणान्यस्योपनिधेरस्ति कादाचित्कोऽपहारः। तेन यद्वस्त्रादि प्रीत्या भुज्यते तच्च परिक्षीणं तत्रास्त्येवापहारः। न हि प्रीत्या गृहीते वस्त्रे परिक्षीणे स्वामिनोपेक्ष्यते पुनरवसरोऽस्ति देहि मे वस्त्रं विनाशितं त्वया तत्समेन मूल्येन संसाधयति ॥ १४६ ॥

(२) **सर्वज्ञनारायणः।** एते दशवर्षोर्ध्वमपि न नश्यन्ति। धेनुर्दुह्यमाना गौः। वहन्नश्वोनत्ववहन्। दम्योदमनीयोबलीवर्दोयः स्वयंदान्तः कृत्वाप्रयुज्यते हले ॥ १४६ ॥

(३) **कुल्लूकः।** यत्किंचिद्दशवर्षाणीत्यनन्तरंभोगेन स्वत्वहानिंवक्ष्यति तदपवादार्थमिदम्। दुह्यमानागौरुष्ट्रोश्वश्चवहन् दमनार्थं च प्रयुक्तोबलीवर्दादिः एते प्रीत्याऽन्ये नतु भुज्यमानाः कदाचिदपि स्वामिनोन नश्यन्ति प्रदर्शनार्थमिदंप्रीत्योपभुज्यमानंन नश्यतीति विवक्षितं सामान्योपक्रममंचेदंविशेषाभिधानमिति नपुंसकलिङ्गता ॥ १४६ ॥

(४) **राघवानन्दः।** यत्किंचिद्दशवर्षाणीतिभोगेनवक्ष्यमाणस्वत्वहानेर्बाधकमाह संप्रीत्येति। न नश्यन्ति स्वामिनः सत्त्वे दशवर्षाभ्यन्तरेकृतेपि निषेधे भुञ्जानस्यापि स्वत्वंन जायतेऽतःस्वामिप्रार्थनायांदातव्याधेन्वादयश्चत्वारः। चन्द्रे कलङ्कसुजने दरिद्रतेतिवन्नन‌श्यन्तीत्यन्वयः। दुग्धार्थंधेनुर्वाहनार्थमुष्ट्रोश्वश्च दमनार्थमन्यद्बलीवर्दादि ॥ १४६ ॥

(५) **नन्दनः।** या धेनुर्दुह्यमाना गौर्वहन्नुष्ट्रोश्वोदम्योबलीवर्दः प्रयुज्यते तानिसर्वाण्याहितानि उपहितानि वा समवृत्त्या भुज्यमानानि चिरकालावस्थानेऽपि नश्यन्ति परिग्रहीत्रा ममेदमिति नापहर्त्तुंशक्यानीत्यर्थः ॥ १४६ ॥

(६) **रामचन्द्रः।** संप्रीत्या अनुज्ञया धेन्वादीनि भुज्यमानानि कदाचन ॥ १४६ ॥

(७) **मणिरामः।** दम्यः अन्नदमनार्थं प्रयुज्यमानो वलीवर्द्दः। प्रदर्शनार्थमिदमुक्तं तेन प्रीत्योप भुंजानं किमपिननश्यतीति ज्ञेयं ॥ १४६ ॥

(८) **गोविन्दराजः।** **संप्रीत्येति।** दोग्ध्री गौरुष्ट्रो वहंश्चाश्व एते प्रीत्या अन्योन्यं

भुज्यमाना न कदाचिदपि स्वामिनोऽपहार्यन्ते। अश्वादिदमनार्थं दमनस्य दीयते संप्रीत्या भुज्यमानानीति सामान्योपक्रमविशेषाभिधानम् ॥ १४६ ॥

**यत्किंचिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।**
**भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥ १४७ ॥**

(१) **मेधातिथिः**। कस्य तर्हि तत्संभवतीत्येवमर्थमुत्तरश्लोकः **यत्किंचिद्भुज्यमानमिति** व्यवहितेन संबन्धः। **धनीति** सन्निधानात्सामान्यनिर्देशेऽपि भुज्यमानधनोपेक्षणं प्रतीयते। **यत्किंचिदिति** दासीदासारभाण्डादि सर्वं ग्राहयति। न हि तल्लोकेऽत्यन्तं धनमिति प्रसिद्धं गोभूहिरण्याद्येव महार्घं धनमिति प्रसिद्धतरम्। तेनायमत्र वाक्यार्थः। **यत्किंचिद्**द्रव्यं परेण **भुज्यमानं धनी** धनस्वामी **दशवर्षाणि** यावत्**प्रेक्षते**–न किंचिद्वक्ति, न राजनि व्यवहरति, न कुलसमक्षं भोक्तारं वदति 'मदीयमेतत्किमिति त्वया स्वयं भुज्यत' इति– **स** दशभ्यो वर्षेभ्य उत्तरकालं न **तल्लब्धुं** स्वीकर्तु**मर्हति**। निवर्ततेऽस्य स्वमिति यावत्। प्रेक्षणेन ज्ञेयतामात्रमुच्यते न प्रत्यक्षतैव। **संनिधाविति** वक्ष्यामः। **परैः**–न ज्ञातिसंबन्धिभिः। तथा च स्मृत्यन्तरं– 'ज्ञातिसंबन्धिभिर्विना' इति। "संबन्धिबान्धवैश्चैव भुक्तं यज्जातिभिस्तथा। न तद्भोगो निवर्तेत भोगमन्यत्र कल्पयेत् ॥" तदयुक्तम्। अव्यवस्थैवं सति स्यात्। के ज्ञातयः के वा संबन्धिन इति संबन्धमात्रग्रहणे न किंचिद्व्यावर्त्यम्। तस्माद्येनान्यदायं भुज्यते स एवं भवति। किन्तु तथा सति परशब्दोनुवादमात्रमनर्थः, कस्यापि न परव्यपदेशः। स निरस्यते। यथा भार्यापती पितापुत्राविति। तत्र ह्यात्मन्यपि व्यपदेशोऽस्ति "अर्द्धो ह वा एष आत्मनो यज्जाया"–"आत्मा वै पुत्र नामासि" इति। तेन दम्पत्योः पितृपुत्रयोर्न भोगाभोगौ कारणम्। तेषामपि विभक्तधनानां भोगकाले प्राप्तेऽभोगो बाधक एव। भार्याया अपि स्त्रीधने भर्तृसकाशाद्गृहीते बन्धेन पत्युर्भोगे नासिद्धिः। सा ह्यत्यन्तपरवती। नोभयोर्विभागोऽस्ति। स्त्रीधनमपि तेनैव तस्याः परिपालनीयम्। 'राजा स्त्रीश्रोत्रियद्रव्यादन्यत्र' इति च पठ्यते। एवमनेन स्वामिन उपेक्षमाणस्य स्वाम्यहानिरुक्ता ॥ १४७ ॥

(२) **सर्वज्ञनारायणः**। द्रव्यान्तरेष्वाह यत्किंचिदिति ॥ १४७ ॥

(३) **कुल्लूकः**। यत्किंचिद्धनजातंसमक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दशवर्षाणि भुज्यमानंस्वामी प्रेक्षतेमाभुङ्क्ष्वेत्यादिप्रतिषेधोक्तिन रचयति नासौ तल्लब्धुंयोग्यो भवति तस्य तत्र स्वाम्यंनिवर्तत इति भावः ॥ १४७ ॥

(४) **राघवानन्दः**। भूम्यतिरिक्तंयत्किंचित्कालनियमार्थंदशवर्षाणि भुज्यमानंकदापि माभुंक्ष्वेति ननिषिद्धं सधनी स्वामी नाप्नुयादित्यन्वयः। अयमर्थः। प्रतिषेधभुक्त्योः समानत्वेपि स्वत्वानुपादकत्वम्। अनागमंतु योभुङ्क्ते बहून्यब्दशतान्यपि। चोरदण्डेन तंपापंदण्डयेत्पृथिवीपतिरिति वचनात्। आगमेन प्रमाणेन भोगोयाति विशुद्धतामितिकात्यायनोक्तेश्च प्रतिग्रहादिविनास्वत्वं नास्त्येव किंतु पूर्वभुक्तभूम्यादिफलं बहुमूल्यमपिपूर्वस्वामिना न प्राप्यते भूम्यादि प्राप्यते। एवंच वक्ष्यमाणंभग्नंतदेयवहारेणेति यभग्नंनष्टंतद्धनं किन्तु तदुत्पन्नंबहुसस्यादि नष्टमित्यर्थः ॥ १४७ ॥

(५) **नन्दनः** । आहितमुपहितमितियावत् । किंचिद्वस्तुदशवर्षाणिपरैर्गृहीतृभि-र्भुज्यमानंतूष्णीमासीनोधनी आधातोपानिधाता वा यः प्रेक्षते न तल्लब्धुमर्हति ।। १४७ ।।

(७) **मणिरामः** । तूष्णीं प्रेक्ष्यते माभुङ्क्ष्वेति निषेधं न करोति पश्यति च ना सौ तल्लब्धुं योग्यो भवति । तत्र स्वाम्यं निवर्तत इतिभावः ।। १४७ ।।

(८) **गोविन्दराजः** । **यदिति** । यत्किञ्चिद्धनजातं समक्षमेवान्यैर्दशवर्षाणि भुज्यमानं धनस्वामी तूष्णीं प्रतीक्षते किमेतन्मा मैवं भुङ्क्ष्वेति न प्रतिबध्नाति नासौ तत्पुनर्न्यायेन स्वीकर्तुमर्हति ।। १४७ ।।

**अजडश्चेदपोगण्डो विषये चास्य भुज्यते ।**
**भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ।। १४८ ।।**

(१) **मेधातिथिः** । न स तल्लब्धुमर्हतीत्यस्य शेषः । **अजडश्चेदपोगण्ड** इति । **जडः** अप्रतिपत्तिमान् । **पोगण्डो** बालः । प्राक्षोडशाद्बालः पोगण्ड इत्युच्यते । एतच्च स्वधन-संरक्षणासामर्थ्यकारणानामन्येषामप्युपलक्षणार्थम् । मद्यद्यूतविषक्तता दीर्घरोगगृहीतता तपःस्वाध्यायैकपरत्वं व्यवहारेष्वनैपुण्यं वागिन्द्रियाभावो बाधिर्यम् । यस्यैतेऽसामर्थ्यहेतवः सन्ति न तदीये धने भोक्तुर्बहुतरेणापि कालेन स्वत्वमापद्यते । **विषये चास्य भुज्यते** । **अस्येति** धनिनः प्रत्यवमर्शः । **विषयः** कश्मीराणां कश्मीरः, पञ्चालानां च पञ्चालः । यदि भोक्ता च स्वामी चैकस्मिन्नेव देशे वसेत्तथापि शक्तिविहीनस्यायं व्यवहारः । अत्रापि व्याख्याने प्रपञ्च एवायम् । अजडापोगण्डग्रहणस्य प्रदर्शनार्थतया व्याख्यातत्वात् । तेन यस्य जानतो यदुपेक्षाकारणं न संभाव्यते तदीयं धनं दशवर्षाणि भुञ्जानो भोक्तैवार्हति—तस्य तत्स्वमित्य-वगन्तव्यम् । ननु च न भोगात्स्वत्वं युक्तम् । स्वत्वे सति भोगो युक्तः । भोगाद्धि स्वत्वे-ऽव्यवस्था स्यात् । यश्चायमवधिर्दशवर्षाणीति स स्मृत्यन्तरेण न सर्वस्मिन्धन इष्यते । किं तर्हि ? "पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी" इति (याज्ञ. व्य. २४) । अन्ये तु विंशति-वार्षिकेणापि भोगेन स्वाम्यमनुमन्यन्ते । एवं ह्याहुः "अनागमं च यो भुङ्क्ते बहून्यब्दशता-न्यपि ।" (नारद ८७।७०) तथा

**"संभोगो यत्र दृश्येत न दृश्येतागमः क्वचित् ।**
**आगमः कारणं तत्र न संभोग इति स्थितिः ।।"** (नारद ८४)

त्रिपुरुषभुक्तिवादिनस्तावदेवं पठन्ति (नारदीये १।९१)

"यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ।।" अस्यायमर्थः । आगमो दानादिः । असति तस्मिन्यद्भुक्तं पितृपितामहप्रपितामहैस्तच्च-तुर्थस्य सिध्यति, न तु विंशत्या वर्षैः । तत्रान्यत्रोक्तम् । "आदौ तु कारणं दानं मध्ये भुक्ति-स्तुसागमा । अन्ते तु भुक्तिरेवैका प्रमाणं स्थावरे भवेत् ।।" तृतीयस्य भोगात्सिद्धिर्न प्रथम-द्वितीययोः पितृपितामहयोः । अस्यापि न विंशतिवर्षैर्भोगः प्रमाणम् । अन्ये त्वागमरहितस्य वार्षशतिकस्यापि भोगस्याप्रामाण्यमनुमन्यन्ते । तथा चाहुः

**"अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।**
**चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ।।"**

**"भोगं केवलतो यस्तु कीर्तयेन्नागमं क्वचित् ।**
**आगमः कारणं तत्र न संभोग इति स्थितिः ।।"** (नारद ८७, ८६, ८४)

या तु बहून्यब्दशतानीति तदाहर्तृविषयमात्मीयमेव भोगं चिरकालत्वे हेतुमाह। तस्य पितृपितामहभोगेन विना न सिद्ध्यतीत्यर्थः। "कथं पुनरेकस्यानेकाब्दशतो भोगः पुरुषस्य"। नैष दोषः। चिरकालप्रतिपादनपरा बहुत्ववचनाः शतं सहस्रमित्यादयः शब्दाः। यथा "शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय" इति। एतदुक्तं भवति। विंशतिवार्षिकाद्भोगादधिकादपि न प्रथमभोक्तुर्भोगात्स्वत्वसिद्धिः। अर्थात् पुत्रस्यापि न सिद्ध्यतीति यथाश्रुतमेव। न हि बहुष्वब्दशतेष्वागमस्मरणं संभवति। ततश्च चिरन्तनदेवायतनब्राह्मणमठग्रामा राजभिरपह्रियेरन्। लेख्यशासनमपि राजाधिकृतलेखकलिखितमिति चिरन्तनेषु नैव प्रत्यभिज्ञायेत। कूटशासनमपि संभाव्येत। तस्माच्चिरन्तनो भोगः स्वत्वस्य दानाद्यागमसंभावनाया ज्ञापको हेतुर्न तु कारकः। अत एव भुक्तिः प्रमाणमध्ये पठिता ।। "लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्" इति (नारद ६९)। न तु स्वत्वकारणमध्ये "सप्तवित्तागमा इति" (मनु. १०।११५) "श्रुतशौर्यतपः कन्या" इत्यादौ च। अथवा यत्र बलादिभोगकारणं संभाव्यते तद्विषयमेतत् 'अनागममित्यादि' अत्रैव प्रकरणे पठितम् (नारद ८७)

**"अन्वाहितं हृतं न्यस्तं बलावष्टाब्धयाचितम् ।**
**अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ।।"** इति। (नारद ९२)

ननु च 'आधिः सीमा' इत्यनेनैवायमर्थः सिद्धः।"

"उक्तस्य कालस्य त्रिपुरुषं यावद्भुङ्क्ते स एवार्थः।
अयं तु तत उत्तरकालमपि निवृत्त्यर्थमारभते। तथा च बहून्यब्दशतानीत्यत्र वचनम्। 'अन्वाहितं' यत्प्रकटमन्यथा प्रदर्श्यान्तर्हितमन्यदवस्थाप्यते। 'हृतं' रात्रौ सन्धिभेदच्छलादिना। 'बालावष्टब्धं' प्रसह्येति शेषः। शिष्टं प्रसिद्धम्। "यदि त्रिपुरुषा भुक्तिः प्रमाणं कस्तर्हि 'पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी' इत्यस्यार्थः ?" ।। १४८ ।।

(७) **मणिरामः।** जडः बुद्धिरहितः पोगंडः षोडशवर्षात् किंचित् न्यूनः एतादृशोयो न भवति तस्य दर्शनविषये चेत्तद्धनमन्येन भुज्यते तदा व्यवहारेण स्वामिनस्तत् द्रव्यंभग्नंस्वाम्यरहितं जातं भोक्ता च तदुक्तं अर्हति प्राप्नोतीत्यर्थः ।। १४८ ।।

(८) **गोविन्दराजः। अजडइति।** निधानस्वामी यदि बुद्धिविकलो न भवतिबालो वा, अस्य च तस्मिन्नेव देशे व्यपस्थितस्यान्येन तदीयं भुज्यते तद्धनं व्यवहारेण भग्नं स्वामिनस्तत्र विवादो न भवति। यतो भोक्तैव तद्धनमर्हति। व्यवहारेण भग्नमिति वचनाद्धर्मेण तत्स्वामिन एव सर्वदा स्वमेवं चायं पूर्वशेषश्लोकः ।। १४८ ।।

"**विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु।
विशेषतः स्थावरणां यन्न भुक्तं न तत्स्थिरम्।।**" इति। (नारद ७७)

विशेषग्रहणं गवाश्वादावभुज्यमानेऽपि नासिद्धिर्यतस्ते नावश्यंभोग्याः। तथाहि भवेद्-गौर्गर्भं न गृह्णादि कीदृशोऽस्या अतो भोगः। भूमिस्तु सर्वदा फलदेति भोगलाभमन्तरेण न बन्धत्वसिद्धिः।

तत्रापि कथंचिदुपेक्ष्यमाणस्य तु यच्छतः प्रथमभोगकाल एव यदि द्वितीयेनाऽऽधिग्राहकेण संनिकर्षादिना स्वीकृतः स्यादितरेण वाद्यप्रमाणवता देशविप्रकर्षात्कार्यव्यासङ्गाद्वा न स्वीकृतस्तदा विचार्यते नेयता तदसिद्धिः। यदा तु गृहीताधिरेव समनन्तरं राज्ञा प्रव्राजितो महान्तं व्याधिमा···· ··न वाऽस्यान्योऽर्थरक्षाद्यधिकृतः कश्चिदस्ति स चिरेणाप्यागतः सिद्धावपि निरुपधिप्रमाणकाले लभत एव स्वीकृतमप्यन्येन।

अन्ये तु भ्रातॄणां न्यूनाधिकविभक्तानां पुनर्विभागः समीकरणार्थं उक्तः। स विंशति-वर्षेभ्य ऊर्ध्वं नास्तीत्येवमर्थमिदमाहुः। एतावन्मात्रफलत्वे तत्रैवाभिधानमुचितम्। सामान्या-भिधानं तु प्रकरणोत्कर्षेणान्यविषयतामपि ज्ञापयति।

अपरे तु–"खिलीभूता भूमिर्येन क्षेत्रीकृता तत्र भूमिस्थानोपभोग उक्तः। स चेदेतावन्ति वर्षाणि निगृहीतस्तथा सूत्रक्षेत्रयन्त्रैश्च स्वामी भूमित्वेन स च विषय" इत्येवमाहुः।

इह भवन्तस्त्वाहुर्यौ समानदेशौ समानसामर्थ्यौ समानस्वभावौ समानधनौ तुल्यप्रयो-योजनावपरस्परसम्बन्धिनौ तयोरन्यतरस्येतरेण भुज्यमानमियन्तमवधिं समक्षमुपेक्षमाण-स्यास्य नैव स्थावरेषु स्वाम्यम्। किन्तु त्रिपुरुषभुक्तिविरोधात् सर्वेण सर्वम्। विरुद्धे ह्येते स्मृती। ते न किमपि कल्पनमर्हतः येनास्ति च स्वाम्यं नास्ति चेत् किंचिद्युज्यते तत एव व्यवस्था युक्ता।

यद्यपि स्वत्वागमकारणानि बहूनि सन्ति दानविक्रयबन्धकारणादीनि तथाऽप्यनुप-लभ्यमानकारणविशेषे विंशतिवार्षिकभोगेऽनन्तरादर्शितविषये बन्धरूपताऽभ्युपगन्तुं युक्ता। चञ्चलं भोग्यं च स्वत्वम्। वत्स्वपचये तत्प्रत्याहर्तुं लभ्यते। ततश्च त्रिपुरुषा भुक्तिः सर्वस्य स्वत्वमापादयति। दानविक्रयसंभावना च यावत्येव सा वार्षिकी भविष्यति। विंशति-वार्षिके भोगे न किंचिदनुपपन्ना।

यत्रोभावप्यागममन्तरेण भोगमात्रबलात्प्रवृत्तौ तत्र पूर्वो भोगश्चिरन्तनोऽपि विंशतिवर्ष-भोग्येन सांप्रतिकेन निरुपाधिना बाध्यते। दण्डपूर्विकयाऽत्रागत इयत्कालो भोगः त्रिपुरुषा-गताया भुक्तेर्बाधक इत्युक्तं भवति।

**भग्नं तद्व्यवहारेणेति।** व्यवहारग्रहणं धर्मनिवृत्त्यर्थम्। तेन यदि कथंचिज्जानीते तदा जीयेत। तदापि त्वनेनोपनिधिभोगज्ञापने प्रमाणं नास्ति, तेन व्यवहरतो जीयन्ते तद्धर्मो नास्ति। तादृशेन भोगेनापि हृत इति तिष्ठत्वेतत्।। १४८।।

(२) **सर्वज्ञनारायणः।** अत्रैव विशेषमाह अजडइति। अजडोविकलेन्द्रियः। अपौगण्डोबालः। विषयेतस्य पुनः पुनर्ज्ञानिविषये। भग्नं विनष्टं पूर्वस्वामिनः। अन्यथातु दशवर्षोर्ध्वमपिन नश्यतीत्यर्थः। व्यवहारेणेति वचनाद्धर्मतः पूर्वस्वामिन एवेति केचित् ॥ १४८ ॥

(३) **कुल्लूकः।** जडो बुद्धिविकलः। न्यूनषोडशवर्षः पोगण्डः। तथा च नारदः बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः ॥ स धनस्वामी यदि जडः पौगण्डश्च न भवति तदीयदर्शनविषये चतद्धनं भुज्यते तदा स्वामिनोव्यवहारेण नष्टं ततो भोक्तुरेव तद्धनं भवति ॥ १४८ ॥

(४) **राघवानन्दः।** जडादेस्तदपि सस्यादिकं न नश्यतीत्याह अजडइति। जडोबुद्धिविकलस्तेन बालोपि गृहीतः सच बालआषोडशाद्वर्षात्पौगण्डश्चापि शब्दितइतिनारदोक्तलक्षणभिन्नोऽपौगण्डः। धनी प्रेक्षतइत्यन्वयः। अस्येदृशधनस्वामिनोविषये दर्शनविषये। भग्नं तद्व्यवहारेण धनस्वामिनो व्यवहारेण प्रनष्टम्। तथाह याज्ञवल्क्यः॥ पश्यतोऽब्रुवतोभूमेर्हानिर्विंशतिवार्षिकी॥ परेण भुज्यमानायाधनस्य दशवार्षिकीति ॥ १४८ ॥

(५) **नन्दनः।** उक्तेर्थे विशेषमाह अजडश्चेदिति। आधातोपनीताऽजडः समर्थः। अपौगण्डोऽबालश्चेत्। अस्यायातुरुपनिधातुर्विषये निवारणयोग्ये देशे यद्भुज्यते तद्भुज्यमानं व्यवहारेण भग्नंपराजितं स्यात्। तस्माद्भोक्ता तद्धनमर्हति न तु स्वामी एतदुक्तंभवति। अजडादिना सन्निधौ भोगात्सत्त्वहानिर्भवति नतु जडादीनामिति ॥ १४८ ॥

(६) **रामचन्द्रः।** अजडः स्पष्टवाक् बुद्धिविकलोनचेत् अपोगण्डः अपगतः पौगण्डोयस्यसः अपोगण्डः। पौगण्डः दशमावधि। अस्यपूर्वस्वामिनः विषयेसमीपे भुज्यते तद्वस्तु व्यवहारेण भग्नं नष्टं भोक्तातद्धनमर्हति ॥ १४८ ॥

(७) **मणिरामः।** जडः बुद्धिरहितः पौगंडः षोडशवर्षात् किंचित् न्यूनः एतादृशोयो न भवति तस्य दर्शनविषये चेत्तद्धनमन्येन भुज्यते तदा व्यवहारेण स्वामिनस्तत् द्रव्यंभग्नंस्वाम्यरहितं जातं भोक्ता च तदुक्तं अर्हति प्राप्नोतीत्यर्थः ॥ १४८ ॥

(८) **गोविन्दराजः। अजड इति।** निधानस्वामी यदि बुद्धिविकलो न भवति बालो वा, अस्य च तस्मिन्नेव देशे व्यवस्थितस्यान्येन तदीयं भुज्यते तद्धनं व्यवहारेण भग्नं स्वामिनस्तत्र विवादो न भवति। यतो भोक्तैव तद्धनमर्हति। व्यवहारेण भग्नमिति वचनाद्धर्मेण तत्स्वामिन एव सर्वदा स्वमेवं चायं पूर्वशेषश्लोकः ॥ १४८ ॥

**आधिः सीमाबालधनं निक्षेपोपनिधिः स्त्रियः।**
**राजस्वं श्रोत्रियस्वं च न भोगेन प्रणश्यति ॥ १४९ ॥**

**यद्विनागममत्यन्तं भुक्तपूर्वैस्त्रिभिर्भवेत् ॥**
**न तच्छक्यमपाहर्तुं क्रमाधिपुरुषागतम् ॥ १ ॥**

(१) **मेधातिथिः**। आधीयत **इत्याधिर्बन्धकद्रव्यंगोभूहिरण्याद्युच्यते**। यच्चोत्तमर्णाद्धनमादीयते। **उपनिधिः** शास्त्रान्तरेणान्तर्हितो न्यास उक्तः। यदप्रदर्शितरूपं सचिह्नवस्त्रादिना पिहितं निक्षिप्यते। प्रीतिभोग्यं तु युक्तमुपनिधिशब्दवाच्यम्। तस्य निक्षेपग्रहणेनैव गृहीतत्वात्।

**सीमा** मर्यादा ग्रामादीनाम्। बहुधा सारण्याद्वा तत्रापेक्षा संभवति। गृहादीनां तु प्राकारपरिखादिरूपा द्वित्रिहस्तपरिमाणरूपाः द्वयोःसाधारणो याऽन्यतरे कथंचिदुपजीर्यमाणस्वल्पत्वाद्भोगश्च कश्चित्कियन्त कालमुपेक्ष्येतापि। तत्रापि दानादिस्वत्वापगमहेतुं संभावयतः। अतस्तत्पुत्राः पौत्रा वा गूढचिह्नादिना प्रज्ञापितसीमत्वादाच्छिन्दन्त्ययेव।

**बालधनं** दृष्टान्तार्थं पोगण्डशब्दस्य दर्शितत्वादित्युक्तम्।

**स्त्रियो** दास्यः भार्या वा। नेतरस्याधनस्यापहार उक्तो 'धनस्य दशवार्षिकीं' इति। "ननु च नेह धनमस्ति, यत्किंचिदिति वस्तुमात्रनिर्देशोऽयम्"।

नैवम्। धनीति सम्बन्धेन धनविषतैव यत्किंचिदिति सामान्यशब्दस्य प्रतीयते। एवमाह स्त्रियो न धनमिति। इत्थं विनियोज्ये द्रव्ये धनशब्दो वर्तते। अथास्मादेव स्त्रीधनात्स्वत्वमात्रोपलक्षणम्। धनोपमानेन पुमांसोऽपि भोगेन दासाः स्वीक्रियन्त एव।

**राजस्वम्**। देशेश्वरा राजानस्तेषां धनम्। ते हि महाधनत्वादुच्चत्वान्वयं धनामनन्विच्छन्तो विरुतभेदादिभिर्निधनीक्रियन्ते।

तदूनापेक्षया **श्रोत्रियद्रव्यं** श्रोत्रियधनाभियुक्तिः ॥ १४९ ॥

(२) **सर्वज्ञनारायणः**। सीमा चिन्हनिर्णीता। बालधनमिति पूर्वश्लोकव्यतिरेकः। स्त्रियोऽन्यपरिणीतादास्यश्च। आध्यादिकमबालधनमपि न नश्यतीत्येतदर्थंबालधनोक्तिः। प्रणश्यति भोक्तुः स्वं भवति ॥ १४९ ॥

(३) **कुल्लूकः**। बन्धोग्रामादिमर्यादा बालधनंनिक्षेपः वासनस्थमनाख्याय समुद्रंयन्निधीयत इति नारदोक्तउपनिधिलक्षणः। दास्यादिस्त्रियोराजश्रोत्रियधनानि उक्तेन दशवर्षभोगेन न स्वामिनो नश्यन्ति न भोक्तुः स्वत्वं भजंते ॥ १४९ ॥

(४) **राघवानन्दः**। उक्तार्थे प्रतिप्रसवमाह आधिरिति। आधिर्बन्धकत्वेन स्थापितः। आधिवन्निक्षेपादिर्ननश्यतित्यन्वयः। आधेरवहार्यस्योक्तत्वात्। सीमा चतुर्विधावक्ष्यमाणा। बालधनं राजरक्षितातिरिक्तम्। निक्षेपः प्रसिद्धः। उपनिधिरत्र समुद्रं यन्निधीयते तत्। स्त्रियोदास्यादयः। राजस्वं करशुल्कादि। श्रोत्रियस्वं धनभूम्यादिमात्रम्। एषूत्पन्नं वृद्धिसस्यापत्याद्यपि न नंक्ष्यतीतिभावः ॥ १४९ ॥

(५) **नन्दनः**। अस्यापवादमाह आधिस्सीमेति। सीमाक्षेत्रादिः। बालोऽसमर्थः। निक्षेपोत्क्रणार्थं परत्र निहितोर्थः। स्त्रियोदास्योन भोगेन प्रणश्यति भोगेनभोक्तृत्वंनभवतीत्यर्थः। आध्युपनिद्ध्योः स्वामिना प्राप्तव्यकालात्प्राचीनभोगविषयोऽयमपवादो-

ग्राह्यः । अन्यथा ।। अधिश्चोपनिधिश्चोभौ न कालात्ययमर्हत ।। इत्येन विरोधप्रसङ्गः स्यादिति ।। १४९ ।।

(६) **रामचन्द्रः ।** स्त्रियः दास्यः ।। १४९ ।।

(८) **गोविन्दराजः । आधिरिति ।** बन्धः क्षेत्रग्रामादिमर्यादा बालधनं निक्षेपः । प्रीतिभोग्यं दास्यो राजश्रोत्रिय धनादि उक्तेन दशवर्षभोग्येन स्वामिनो नापहारयितुं चास्य दशवर्ष भोग्यद्रव्यापवादत्वाद् बन्धादीनां चाल्पकालभोग्यत्वेन नेहाननुप्रवेशाशङ्कास्थानं प्रीत्या भुज्यमानानीति पृथग्वचनम् ।। १४९ ।।

(९) **भारुचिः ।** सीमा ग्राममर्यादा राजोपद्रवादौ कृतमुद्रानिधानं निक्षेपः । भोगार्थमर्पित-धनं उपनिधिः । स्त्रियः दास्यादिः । न भोगेन उक्तदशवर्षभोगेन ।। १४९ ।।

**यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।**
**तेनार्धवृद्धिर्भोक्तव्या तस्य भोगस्य निष्कृतिः ।। १५० ।।**

(१) **मेधातिथिः ।** न भोक्तव्यं बलादाधिं भुञ्जानो वृद्धिमत्सृजेदिति सर्वस्यहि ग्रहणमुच्यते । तत्र निषिद्धे भोगे बलादाधिं भुञ्जानो सर्वां हारयत्येव वृद्धिम् । अननुज्ञाते प्रतिषेधनम् । रहस्युपभुज्यमानभोगे न चाधिर्नश्यति तत्र रूप्यसुवर्णालङ्कारादावर्द्धवृद्धि-त्यागोऽनेन श्लोकेनोच्यते ।

यत्तु नवं महार्धमलङ्करणवस्त्रादि परिधीयमानं नाशितं तत्र न केवलं वृद्धिहानिः, यावद्धनं नष्टं तत्परिपीडच मूलतः प्रविशतीति महत्तरैर्व्याख्यातम् । यज्वना तु व्याख्यातम् –यत्र स्वामी व्यवहरति अध्यधीनश्च, तत्राध्यधीनेन बन्धो दत्तः, स्वामिना च दृष्टः, तत्र धारणकेन कस्मिंश्चिदवसरेऽध्यधीनः पृष्टः 'प्रयोजनं ममानेन बन्धेनास्ति' तत्रोपनिधि-न्यायेन तेनानुज्ञातः कालान्तरे भुञ्जानं यदि स्वामी पश्यंस्तदनुज्ञातं बन्धं क्षपितवान्–सतीदृशे विषयेऽर्द्धवृद्धित्यागः ।

तदयुक्तम् । यतस्तुल्यो व्यवहारः परस्परापेक्षः स्वामिभृत्ययोः । तत्र तत्रान्यतरे-णानुज्ञाते नायमननुज्ञातेः प्रयुज्यतेऽधर्मतः । स्वामिशब्दस्यार्थे स्वत्वमीदृशि विषये भवति । अन्यथा बन्धं यो ददाति सोऽवश्यं स्वाम्येन युक्तः ।

"अध्यधीनस्तु न स्वामी ।"

यद्येवं चौरस्तर्हि । तस्मात्स्वामित्वाध्यारोपः । उपयोगे वाऽध्यधीने स्वाम्यनुज्ञाव्यव-हारालेब्रह्मदत्तवत् । अतः पूर्व एवार्थः ।

**स्वामिग्रहणं** पादपूरणार्थम् ।

**भुङ्क्तेऽविचक्षणं** इत्यकारः संहितया प्रश्लिष्टनिर्दिष्टो वेदितव्यः । यस्य ह्यस्ति बुद्धिः वृद्धिर्ममास्त्येवाधिको लाभो वस्तुभोग इति' सोऽ**विचक्षक्षणः** । न हि लोकशास्त्रनियोजनीया 'स्थितिः यदुभौ लाभश्च भोगश्च वृद्धिः स्यात् तेन सा वृद्धिर्भोक्तव्या ।

**निष्कृतिः** परशुद्धिविनिमय इति यावत् ।

अन्ये तु द्विगुणीभूतेऽप्यमोक्ष्यमाणे प्रतिषेधमिममिच्छन्ति– तस्य हि स्वल्पोऽपराध इति वदन्तः ।

प्रथमं तावदादावेव तैर्याज्ञवल्क्यवचनस्य विषयो देयः 'आधिः प्रणश्येदिति' (व्या. ५८) ।। १५० ।।

(२) **सर्वज्ञनारायणः** । अननुज्ञातं अनुज्ञांविना नतु बलात् । एतच्च वृद्धेरल्पत्वे बहुत्वे तद्भोगोचितमूल्यदानं प्रतिषिद्धाधिभोगे प्रागुक्तम् ।। १५० ।।

(३) **कुल्लूकः** । योवृद्ध्यादत्तंबन्धस्वाम्यनुज्ञाव्यतिरेकेण मूर्खोनिह्नवेन भुङ्क्तेन तस्य भोगस्य संशुद्ध्यर्थमर्धवृद्धिर्मोक्तव्या बलभोगे नतु भोक्तव्ये बलादधिभुञ्जाने सति सर्ववद्धित्यागएवोक्ताः ।। १५० ।।

(४) **राघवानन्दः** । अननुमत्याऽऽधिनिह्नवेन भुक्तवतोऽर्धवृद्धित्यागप्रायश्चित्तमाह यइति । तेनाविचक्षणेन नभोक्तव्योबलादाधिरत्यत्र निषेधमतिक्रम्य बलाद्भोजने सर्वा-वृद्धिस्त्याज्या अनिह्नवेअननुमत्याऽर्धमिति भेदः ।। १५० ।।

(५) **नन्दनः** । अविचक्षणः वृद्धिहानिमजानन् ।। १५० ।।

(६) **रामचन्द्रः** । अननुज्ञातः स्वाम्याज्ञां विना अविचक्षणः मूर्खः ।। १५० ।।

(८) **गोविन्दराजः** । **य इति** । यो वृद्धिदत्तं धनं भोगेनाविनश्यरूपं स्वामिनाऽननु-ज्ञातो मूर्खो रहसि भुङ्क्ते बलभोगेन भोक्तव्यो बलावधिपरत्युक्तान्तेन तस्य शुद्ध्यर्थमर्ध-वृद्धिस्तक्तव्या ।। १५० ।।

**कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता ।।**
**धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ।।१५१ ।।**

(१) **मेधातिथिः** । लाभार्थो धनप्रयोगः **कुसीदम्** । तत्र **वृद्धिः** । अथवा प्रयुज्यमानं प्रयोक्तृसंबन्धिधनमेव **कुसीदम्** । यदीयं स्वल्पं दत्त्वाऽधिकं ग्रहीष्यामीति धनं दीयते **तत्कुसीदम्** । तत्र **वृद्धिः** । सा द्विगुणत्वं नातिक्रामति । तावदुत्तमर्णेन वृद्ध्यर्थे धनं दत्तवता-ऽधमर्णाद् ग्रहीतव्यं यावन्मूलधनं द्विगुणं प्रविष्टम् ।

"ननु वृद्धेर्द्वैगुण्यं श्रूयते । मूलेन सह त्रिगुणं प्राप्नोति" ।

नैवम् । 'गुणो'ऽवयव उच्यते । स तावदवयविनमपेक्षते । प्रकृतं च धनम् । अतः प्रयोगविगयस्य धनस्यानेन प्रकारेण द्वैगुण्यमुक्तं भवति । तथा च स्मृत्यन्तरं 'चिरस्थाने द्वैगुण्यं प्रयोगस्य' (गौतम १२।३१)–"मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने" इति (याज्ञ. व्य. ६४) ।

वृद्धिश्चानेकरूपा। कार्षापणेषु प्रयुक्तेषु कार्षापण एव वर्द्धते। क्वचित्सन्ततिः—

'स्त्रीपशूनां वेति' संततिः। क्वचिदाधिभोगः, गोभूम्यादेः।

तत्रेदं द्वैगुण्यं सरूपवृद्धिविषयं केचिदाहुः। तत्र हि मुख्यं वृद्धेर्द्वैगुण्यं प्रतीयते। संततौ न विज्ञायते किं सङ्ख्यायाऽस्या द्वैगुण्यमुत परिमाणेनोत मानतो वेयम् अतो वेत्याद्यनिश्चयः। पशूनां मूल्याद्धि महार्धत्वं हस्त्यश्वादिषु क्रयविक्रयादौ दृश्यत एव। महाप्रमाणा हि महार्घा भवन्ति।

"ननु च संततौ सारूप्यमस्त्येव। गोः संततिर्गौरेव। तत्र भेदोपन्यासो न युक्तो वृद्धिः सरूपा संततिश्चेति।"

उच्यते। नैकजातीयत्वमात्रेण सारूप्यं भवति, किन्तु वयःपरिमाणादिसाम्येन। अतो युक्तो भेदोपन्यासः। भोगलाभेऽपि कुतो द्वैगुण्यप्रतीतिः। उपकारकाणि जनयितुं गावः प्रयुज्यन्ते। गोभूम्यादि पयोयवसादयो यथासंभवं भुज्यन्ते। तत्र कीदृशं द्वैगुण्यम्। समाचारश्च कचिद्दृश्यते। वर्षशतानि भूमिरामूलहिरण्यादानाद्भुज्यते। पठति च याज्ञवल्क्यः "आधिश्च भुज्यते तावद्यावत्तन्न प्रदीयते" (व्या. ९०) इति।

अत्रोच्यते। वृद्धिमात्रे श्रूयमाणे द्वैगुण्यं कथं विशेषेऽवस्थाप्यते। न हि श्रुत्या सामान्यप्रतिपत्तिर्भवन्ती विना प्रमाणेन विशेषेऽवस्थातुमर्हति। यत्तु संततावनुपपन्नं द्वैगुण्यमित्यवगमे यत्नः क्रियताम्। मूलर्धेण परिनिश्चितवता वृद्धिस्तत्सामान्या एव तज्जातानां भवति। भूमिभोगेऽपि यवसगोधूमादौ तत्पच्यमानस्यार्धेतः शक्यत एव समत्वं निश्चेतुम्। उपकारवचनोऽपि गुणशब्दोऽस्ति। "क एवं सति समगुणो भवति क उपकारको भवतीति कथं गम्यते।" अनेन यावन्मूल्यं गोधान्यविनिमयादुत्पद्यते तावदेव चेत्तत उत्पन्ना वृद्धिस्तदा भवति समगुणत्वम्—परिमाणादिसाम्याभावेऽपि। यस्तु क्वचित्समाचारः—भवतैव परिहृतः क्वचिद्ग्रहणं प्रयुञ्जानेन। समाचारभ्रंशसंभवे स्मृतयो नियामिका अर्थवत्यः।

"आधिस्तु भज्यते तावद्यावत्तन्न प्रदीयते" इत्यत्र यावद्दानात्तद्द्विगुणमप्रविष्टम् इत्यपि शक्यते नेतुम्। स्मृत्यन्तरैकवाक्यत्वाच्चैतदेव युक्तमध्यवसातुम्। उपपादितं चैतन्निपुणतोऽन्यत्र।

**सकृदाहिता।** सकृदित्यनेन व्यवस्थापितोऽङ्गीकृतः पुनःपुनःप्रयोग इति यावत्। 'आधानं' स्थापनमुच्यते। वचनव्यवस्थया च निरूपणं स्थापनमेव। पुनःप्रयोगश्च द्विगुणीभूते धने आदीयमाने भवति। यदा द्विगुणो हि वृद्धार्थं उत्तमर्णोऽधमर्णश्च तदीयेन धनेन महत्कार्यं करिष्यन् करणपरिवृत्तिं करोतीति या प्राक्तनी वृद्धिरियं वाऽद्यप्रभृति वर्धत इति तदा द्विगुणभूतमपि पुनर्वर्धत एव। पुरुषान्तरसंचारेण वा। यदि द्विगुणीभूतं धनिकस्योपयुज्यते तदाऽधमर्ण उच्यमानोऽन्यपुरुषं ददतमर्पयति 'एष त इयद्भिरहोभिर्दास्यतीति' तत्र स्वहस्तं दीयमानं पुनर्वर्द्धते। न चायं दानं प्रति प्रतिभूः किन्तु निक्षेप्ता दातैव। एतत्तु ऋजुना पुरुषान्तरमसंक्रान्तमिति व्याख्यातम्।

अथवा प्रागपि द्वैगुण्याद्यदा बन्धमन्यस्मै प्रत्यर्पयति–दीनारेषु सलाभेषु द्वित्वे–तस्य बन्धस्य मोक्ष एव धर्म्यः। बन्धस्य प्रागवृद्धौ स्थितायां तस्मादह्नः प्रभृति पुनर्द्वैगुण्यमाप्नोति। यदा तदीयं बन्धकं तदनुज्ञयोत्तमर्णेनान्यत्राधाय स्वधनं गृह्यते तदा वर्धत एष पुरुषान्तर-संचारः।

उभयत्र द्विगणीभूते प्रयोक्ताऽधमर्णकेन येनकेन प्रकारेणान्यस्माद्ग्रहणमनुज्ञाप्यते।

यदि वाऽस्मादन्यद्गृह्यते ग्रहीता देशान्तरं गमिष्यन् कार्यान्तरेण चान्यत्र संचारयति।

ऋजुस्तु तस्मादेवाधमर्णादनवीकृते प्रयोगे द्विगुणाधिकां वृद्धिं नेच्छति। अत आह 'पुरुषान्तरमसंक्रान्ते पुनःक्रियाप्रयोजनं च वक्ष्यामः'।

ये तु व्याचक्षते–"या वृद्धिरुपचिता सांवत्सरी युगपत्सर्वैवानीयते तत्रायं विधिः। या पुनः प्राप्तदानाऽपि सर्वा न दीयते तत्र द्विगुणादधिकग्रहणमपि" तेषां न 'न'शब्दो यथार्थो नापि 'आहित' इति। सांवत्सरी तावदुपचिता ग्राह्या द्वितीयसंवत्सरे पुनरानयनमस्त्येवेति न क्वचिद्द्वैगुण्यनियमः स्यात्।

अथ–"यो द्विगुणीभूतं सलाभं धनमानयति तत्राधिकनिषेधोऽस्तु। प्राग्द्वैगुण्याद् वृद्धि-मात्रदानसमर्थो वृद्धिं ददाति। मूलं तस्यापरिमितग्रहणमिति"।

एतदपि न किंचित्। यः संवहति तस्यानुग्रहो न्याय्यो नाधिकग्रहणम्। यस्तु राज्ञा द्विगुणीभूतमपि कथंचिद्दाप्यते तस्याधिकमोक्ष इत्येतदन्याय्यम्। न चाहितेत्यस्य शब्द-स्यायमर्थः।

अथ 'आहृतेति' पाठान्तरम्–तथापि सकृच्छब्दो न निश्चितार्थो न्यायस्तु परित्यक्तः स्वकृतश्च पाठः स्यान्न मानवी स्मृतिरित्युक्तैव व्यवस्था न्याय्या।

धान्यादिषु **पञ्चतां** पञ्चगुणतां नात्येति।

स्मृत्यन्तरे धान्ये चतुर्गुणोक्ता "हिरण्यवस्त्रधान्यानां वृद्धिर्द्वित्रिचतुर्गुणा" इति (नारद, याज्ञ. व्य. ३९)। तत्र व्यवस्था–यदि दरिद्रभूतः प्रयोक्ता ग्रहीता च महाधनसंपन्नस्तेन धान्येन महान्तमर्थं कृतवांस्तदा पञ्चगुणाऽन्यथा चतुर्गुणा।

**'सदं'** फलं वार्क्षम्, धान्यस्य पृथगुपादानात्।

**लव** उदीच्यूर्णाविषयः प्रसिद्धः।

**वाह्यो** गर्दभोष्ट्रबलीवर्दादिः॥ १५१॥

रिक्ता अकृतसंज्ञका सानसिद्धयति। बहुकृद्धित्वादित्यर्थः अकृतवृद्धावपि विशेषमाहा कुसीदपथमिति। कुत्सितात् शूद्रात् प्रसरतिअयंपंथा इति कुत्सितपथः। शूद्रविषयोक्तं पंचकशतं द्विजातेरकिंप्रर्हति गृण्हाति तं कुसीदपथं मन्वादयः आहुः। इयं चा कृता वृद्धिर्या-

चनादूर्ध्वं स्थापनविषया। यथाहकात्यायतः। प्रीतिदत्तं न वर्द्धेतयावन्नप्रतियाचितं। याच्य मानं न दत्तं चे द्वर्द्धते पंचकं शतमिति ।। १५१ ।।

तेन धान्येन महान्तमर्थंकृतवांस्तदा पञ्चगुणान्यथा चतुर्गुणा सा च फलंवार्षं धान्यस्य पृथगुपादानात्। मालवकउदीच्येषर्णाविषयः प्रसिद्धः। वाह्योगर्द्दभोष्ट्रबलीवर्दादिः।। १५१।।

(२) **सर्वज्ञनारायणः**। कुसीदवृद्धिः कुसीदपदं वाणिज्यवृद्धिव्यवच्छेदार्थम्। सकृदाहिता मूल्यग्रहणकालग्राह्या वृद्धिः। यातु प्रत्यहप्रतिमासग्राह्या वृद्धिः सा वृद्धिर्ग्रणानन्तरं- पुनःपुनराधीयतइति न सकृदाहिता। तथा यत्र सवृद्धिकमेव मूलधनं मूलतया स्थाप्यते सोप्येवमित्येतदुभयंद्वैगुण्यमित्येव। धान्यइति एषु पञ्चगुणपर्यन्तं याति ननु ततोधिकम्। सदे सस्ये नालिकेरादौ। लवः शराद्यस्त्रं ऊर्णेति केचित्। वाह्ये वाहनीये वृषादौ। एतत्त्वया भोक्तव्यं भोगनिमित्तंचैतावदेतावता कालेन वर्धतइति प्रयुक्ते। अशोतिभागवृद्धितोपि यदि सौहार्दादिना न्यूनापि वृद्धिः स्थापिता सा ।। १५१ ।।

(३) **कुल्लूकः**। वृद्धयाधनप्रयोगः कुसीदं तत्र या वृद्धिः सकृद्गृहीता सा द्वैगुण्यंनातिक्रमति मूलवृद्धिर्द्विगुणैव भवति प्रतिदिनप्रतिमासादिग्राह्येति तात्पर्यम्। धान्ये पुनर्वृद्धयादिः प्रयुक्ते। सदे वृक्षफलेलूयतइति लवः ऊर्णालोम तस्मिन्वाहनीयेचबलीवर्दादौप्रयुक्तेचिरेणापिकालेनमूलधान्यादिनासहपञ्चगुणतांनातिक्रामेदिति ।। १५१ ।।

(४) **राघवानन्दः**। कौसिदींवृद्धिमित्युक्तं सा मूलेनसह द्वैगुण्यं नात्येतीत्याह कुसीदेतिद्वाभ्याम्। कुसीदवृद्धिः कुसीदंलक्ष्यमुच्यतइति। सकृदाहृता प्रतिमासमग्राह्या सती सकृदेकदा मूल्येनसह गृह्यमाणा द्वैगुण्यं नात्येतीत्यन्वयः। ततोधिकेसत्यपि मूलेन सह द्विगुणादूर्ध्वं न प्राप्यतइति। प्रतिमासग्रहणंतु वर्णक्रमेण द्विकादिकमेवेतिभावः। धान्यादिचतुर्षु विशेषमाह धान्य इति। सदे वृक्षफले। लवे छेदनयोग्ये ऊर्णादिलोम्नि वाह्ये वहनीये उक्षादौ बहुकालेपि मूल्यधान्यादिना सह पञ्चगुणतांनातिवर्तते ।। १५१ ।।

(५) **नन्दनः**। द्रव्यविशेषे वृद्धिनियममाह कुसीदवृद्धिरिति वृद्धिकालमहत्वेऽपि द्वैगुण्यंमूल्यद्वैगुण्यंनात्येतिकुसीदं द्वैगुण्यात्परंवृद्धया न वर्धते धान्येमाषमुद्गादौ सदेतद्व्यतिरिक्ते कृषिफले इक्ष्वादौ यवव्रीहिशाल्यादौ तथाचोक्तं। व्रीहिशाल्यादिकंधान्यंश्रूयते च लवन्तुतदिति। लवंक्षुमादिकमितिकेचित्। वाह्ये बलीवर्दादौ। पञ्चतांपाञ्चगुण्यं पारिशेष्यादितरेषुद्वैगुण्यमवगन्तव्यम्। सकृदाहृतेति विशेषणाद्विरोधनद्वैगुण्यात्ययानुज्ञा गम्यते ।। १५१ ।।

(६) **रामचन्द्रः**। कुसीदवृद्धिः द्विगुणा न अत्येति नातिक्रामति। कुसीदंवृद्धिजीविका द्रव्यंतुद्विगुणंस्मृतमितिवाक्यात्। सकृत् आहृतामूलग्रहणकाले गृह्याधान्ये पञ्चतां नातितिक्रामति। शदोवृक्षमूलफलादि पञ्चतां पञ्चगुणतां नातिक्रामति नातिक्रामेत्। लवे चामरादौ पञ्चतां नातिक्रामति। बाह्ये वाहनीये बलीवर्दादौ पञ्चतां नातिक्रामति। योगी।। वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणाःस्मृताः ।। १५१ ।।

वृद्ध्याधनप्रयोगः कुसीद । तत्रया वृद्धिः सकृदाहृताएकदागृहीता सा द्वैगुण्यं नाभ्येति नातिक्रामति । तथा च प्रतिदिनं प्रतिमासादि यथांगीकृता तथैव ग्राह्या यदि कदाचित्प्रातिबंधादधमर्णनिकटे एवस्थिता तदासमूलाद्विगुणा भवति नाधिकेतितात्पर्यं । धान्यादौ पुनः पंचता पंचगुणता नातिक्रामति पंचगुणतोऽधिका वृद्धिर्न भवति । सदे वृक्षफले भवे भूयत इति भवः ऊर्णालोम तस्मिन् । वाह्ये वलीवर्दादौ ।। १५१ ।।

वृद्धिद्वैगुण्यं नात्येति कालमहत्त्वेऽपि सति सकृदाहिता, पुरुषान्तरसङ्क्रान्ता सङ्क्रमिते तु धने प्रयोक्तान्यत्र पुनर्वर्धत एव गृहीतदोषादप्रतिपादनेन पूर्वं प्रयोक्तुर्धनस्य हिरण्ये (तः ? ता) वदेवं धान्ये तु फलकालेशदकाले प्रतिवर्षं भागशोवर्धमानं, तत्प्रयुक्तं धान्यं नातिक्रमति पञ्चताम् । हिरण्यवद्वैगुण्ये प्राप्त इदं तत्प्रतिषेधार्थं पञ्चगुणत्वमारभ्यते एवं शदे पञ्चतां परिवर्तमानो नातिक्रामति एवं लवे प्रयुक्ते व्याध्यूर्णाजानां लवकाले भागशो वर्धते । तत्प्रयुक्तं वाह्ये तु बलीवर्दा दावे तु एष एव न्यायः ।।१५१ ।।

(८) **गोविन्दराजः । कुसीद वृद्धिरिति ।** या वृद्ध्यर्थप्रयुक्त धनसबन्धिनी वृद्धिरतिभूयस्यकाले गते सकृद धमर्णादानीता शनैः शनैः मासं प्रत्यक्षं वाऽसौ द्वैगुण्यं नातिक्रामति मूलद्विगुणैव भवति न ततोऽधिका लभ्यते धान्ये पुनर्वृद्धिप्रयुक्ते सहे वा वृक्षफले लवे वा ऊर्णमये वाहनीये च बलीपर्दादौ प्रयुक्ते भूयस्यपि कालगते सकृदधमर्णादाहृता सती मूलधान्यादिना सह पञ्चगुणतां नातिक्रामति ।। १५१ ।।

## कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति ।।
## कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ।। १५२ ।।

(१) **मेधातिथिः ।** अनुसरन्त्यनुधावन्त्यनुवर्तन्ते सर्व एवार्था एतमित्य**नुसारः** शास्त्रोदितः समाचारः । स च विविधोऽशीतिभागादिः पञ्चकशतपर्यन्तः । तस्माद**धिका** वृद्धिः **कृता** यावत्तथाऽधमर्णेनोत्तमर्णस्य **न सिध्यति** । कुतः? **व्यतिरिक्ता**—यतः शास्त्रबाह्येत्यर्थः ।

अर्थवादान्तरमाह । **कुसीदपथमाहुस्तमिति** । कुपुरुषा यत्र सीदन्ति तत् कुसीदम् । धर्मेण तद्धर्माणो लक्ष्यन्ते । कुसीदीनामयं पन्था मार्गो व्यवहारो न साधूनामिति निन्दा । यस्या-धर्मेण तद्धर्माणो लक्ष्यन्ते । कुसीदीनामयं **पन्था** मार्गो व्यवहारो न साधूनामिति निन्दा । यस्यावश्यमधिका कर्तव्या—महद्धि कार्यमयं मदीयेन धनेन साधयतीति बुद्ध्या—तदा वर्णविभागमनपेक्ष्य **पञ्चकं शतं** ग्रहीतु**मर्हति** लिप्सेत्—तदर्थमिदमुच्यते ।

पाठान्तरं 'कृता तु सारादधिकेति' । यस्याकिंचनस्य सतः स्वल्पा कृता तेनैव धनेनान्यथा वा महार्थतां प्राप्तस्तस्य यां पुरुषसारादधिका क्रियमाणा **न सिध्यति** । यः परं पञ्चकशतमर्हति ।। १५२ ।।

(२) **सर्वज्ञनारायणः ।** कृतादनुसारात् दननुसरात् अधिका शास्त्रीयत्वेपि न सिध्यति । एवमशीतिभागाधिकवृद्धिनियमेनऋणंगृह्यतेतदाशीतिभागादेः शास्त्रीया । आर्ततया

तदधिकं शताद्यत्पञ्चकग्रहणं शूद्रउक्तं तच्चतुर्षु वर्णेषु ग्राह्यम्। नतु ततोव्यतिरिक्ता विशेषेणातिरिक्ता कृतत्वमात्रेण सिध्यति। एतच्च कुसीदपथंवृद्धिजोविवर्त्माहुरत्रैव वृद्धिकृतोदोषइत्यर्थः ।। १५२ ।।

(३) **कुल्लूकः**। कृतानुसारादितिकृतायावृद्धिर्द्विकंत्रिकमिति शास्त्रेण वर्णक्रमेणोक्ता तस्याः शास्त्रानुसारादधिका व्यतिरिक्ता कृता अतोन्या वृद्धिरकृतेत्यर्थः। किंतु कृताऽपि वृद्धिः वर्णक्रमेण द्विकत्रिकशतादिरूपैर्या मासे ग्राह्या। तथा च विष्णुः वृद्धिंदद्युरकृताऽपि वत्सरातिक्रमेयथाभिहिता वर्णक्रमेण द्विकत्रिकादिनेत्यर्थः। किंत्वकृतवृद्धावपि विशेषान्तरमाह कुत्सितात्प्रसरत्ययंपन्थाइति कुसीदपथः अयमधमर्णोयच्छूद्रविषयोक्तंपञ्चकंशतंद्विजातेरपि गृह्णातीत्येवंकुत्सितः पन्थाः पूर्वोक्ताद्धर्म्यवृद्धिकरादपकृष्टइत्येवंमन्वादयआहुः। इयंचाकृता दृद्धिरुद्धारविषये याचनादूर्ध्वंबोद्धव्या। तदाह कात्यायनः।। प्रीतिदत्तं न वर्धेत या वन्न प्रतियाचितम्। याच्यमानं न दत्तं चेद्वर्धते पञ्चकं शतम् ।। १५२ ।।

(४) **राघवानन्दः**। किंच वृध्येतमपि कृतानुसारादिति। अधिकाऽधिकत्वेन व्यतिरिक्ता या सा नसिध्यतीत्यन्वयः। मयैतद्देयमित्येवस्वीकृतंसिध्यतीत्यर्थः। अथवा अधिका बलात्कारेण द्विकादेकाधिक्त्वेन कृतापि अतएव शास्त्रप्रतिपाद्यत्वेन व्यतिरिक्ता शास्त्रतोन सिध्यति। शूद्रे पञ्चगुणं यल्लभ्यमुक्तं तत्सर्वेषामधिकसंख्याव्यवच्छेदार्थमित्याह कुसीदपथमिति। कुत्सितात् शूद्रादधमर्णात् सीदति प्रसरत्ययं पन्था इति तम्। अतीवनिकृष्टोहितांवृद्धिं ददातीति। शतपणंप्रति पञ्चपणान् दद्यादित्यर्थः। अकृतापि वृद्धिरस्ति। तथाचविष्णुः। वृद्धिंदद्युरकृतामपि। वर्णानुक्रमेणोद्धारविषयेयं याचनादूर्ध्वम्। तथाच कात्यायनः। प्रीतिदत्तं न वर्धेत यावन्नप्रतियाचितम्। याच्यमानं न दत्तंचेद्वर्धतेपञ्चकंशतमिति। प्रीतिदत्तं परितोषार्थं दत्तं न वर्धते लभ्यंनयावदपियाचितम्। नदत्तंचेच्छतंप्रति पञ्चकंवर्धतइति कात्यायनवचनार्थः।। १५२ ।।

(५) **नन्दनः**। लोकेन कृतानुसारात्। परिमाणादधिका शास्त्रोक्तादधिका च कुसीदवृद्धिरुभयानुमतेत्येतावता न सिध्यति तथाहि यत्पञ्चकः शतमर्हति तदेव कुसीदमर्हतीति तथाहुराचार्याः। अनधिकं अत्रापि पूर्ववत्कन्प्रत्ययः ।। १५२ ।।

(६) **रामचन्द्रः**। अनुसारात् कृतवृद्धयनुसारात् कृतावृद्धिः अधिका व्यतिरिक्ता पञ्चकोत्तरशतातिरिक्ता न सिध्यति ।। १५२ ।।

(८) **गोविन्दराजः। कृतानुसारादिति।** गृहीतृणतमर्थिताविशेषमुत्तमर्णेन विज्ञाय उक्तवृद्धिरधिका वृद्धिः कृता सतीयतः शास्त्रबाह्या सा च नो सिद्धयति। प्रतिषिद्धवृद्धिमार्गः किलैनं शिष्टाः प्राहुः। यदि परं शूद्रविषये यदुक्तं पञ्चकं शतं तदसावुत्तमर्णो द्विजातेरादातुमर्हति। शूद्रविट्क्षत्रियद्विजातेरप्यादातुमर्हति ।। १५२ ।।

**नातिसांवत्सरीं वृद्धिं न चादृष्टां विनिर्हरेत् ।।**
**चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ।। १५३ ।।**

(१) **मेधातिथिः।** संवत्सरे भवा सांवत्सरी। ताम् अतिक्रान्ता **अतिसांवत्सरी।** भवप्रत्ययार्थः सामर्थ्यादिन्तर्भूतः। अथवा संवत्सरमतिक्रान्ता अतिसंवत्सरेति प्राप्ते वृद्धीकारौ छन्दस्तुल्यत्वात्कर्तव्यौ।

येषां वृद्धिरनन्तप्रक्रान्तं पञ्चकं शतं सर्ववर्णविषया सा संवत्सरं यावद्ग्रहीतव्या, नातीते संवत्सरे। अथवा यावत्संवत्सरम् संवत्सरो वर्षः। तावदवृद्धिर्न ग्रहणीया। अधमर्णेनापि संवत्सरादूर्ध्वं न विलंबितव्यम्।

**निर्विहरेत्** विनिष्कृष्य स्वधनादारभ्योपनयेदित्यर्थः।

अर्वागपि संवत्सराद्या दीयते माऽप्यतिक्रान्तसंवत्सरैव। अथवा मासामारभ्य संवत्सरस्य यावद्वृद्धिः परिमाणतो निरूपितव्या—मासेन यद्वर्द्धते संवत्सरेण वेत्येवं प्रयोगः कर्तव्यः। न तु संवत्सरद्वयस्य लाभार्थी कदाचिच्चिरकालं ग्राहयति—किं मे कतिपयमासिकेन लाभेन यदि द्वे वर्षे ततोऽधिकं वा गृह्णासि तद्ग्रहणे एषा वेयता कालेन वृद्धिस्तत्रार्वाचीनमपि ददद्धमर्णे द्विसांवत्सरीं यथा कालकृतां तदा दाप्येत। "एकां वृद्धिमनादेयां न दद्यान्नापि दापयेत्" इति। यथा मासिकी वृद्धिः प्रथमे मासि द्वितीय एवाह्नि शोधयन्दाप्यते तथा यदैवमभ्युपैति संवत्सरेण यद्वर्धत इति तदा तथैव दाप्यते न तु तदधिककालकृता।

**न चादृष्टां विनिर्हरेत्।** शास्त्रे या न दृष्टा दशैकादशिकाद्या पञ्चकादधिका न तां गृह्णीयात्। 'व्यतिरिक्ता न सिध्यति' (१५२) इत्यस्यैवायमनुवाद इति केचित्। इदं तु युक्तम्—**अदृष्टाम**नुपचितामित्यर्थः। यावद्बहुभिर्मासैर्न संहतीभूता तावन्न ग्राह्या दिवसद्विर्मासवृद्धिः।

"ननु च 'मासस्य वृद्धिं गृह्णीयात्' (१४२) इत्युक्तम्।"

परिमाणं मासिकम्। तद्वृद्धेर्न तु ग्रहणम्।

**चक्रवृद्धिः कालवृद्धिः कारिका कायिका च या** तामपि न **विनिर्हरे**दित्यनुषङ्गः—नैवादद्यादिति। यद्यप्यधमर्णस्य प्रतिषेधस्तथापि सामर्थ्यादुत्तमर्णस्यैव द्रष्टव्यः। अधमर्णो ह्यार्तः किं न करोति। अथवा 'विनिर्हारो' ग्रहणमेव। तेनोत्तमर्णस्यैव शाब्दः प्रतिषेधः।

"ननु च द्विकादिवृद्धिविधानाच्चक्रवृद्ध्यादीनां प्राप्तिरेव नास्ति—किं प्रतिषेधानुषङ्गेण?"

उच्यते। अप्राप्तः प्रतिषेधः पाक्षिकीं वृद्धिमनुमापयति। यथाऽऽधाने न ब्रह्मसामाभिगायेदित्यविहितं सामगानं प्रतिषेधेनास्तीति ज्ञापयति। तेनैता अपि प्रतिषेधद्वारेणाभ्यनुज्ञायन्ते। केषांचिदूनव्यवहारिणां चक्रवृद्धपादयोऽपि भवन्ति। तेन स्थलपथवारिपथिका वाणिजो यथोक्तम् (या. व्या. ३८)।

> **"कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।**
> **दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु॥"** इति।

कान्तारगादीनामेव स्वकृता सर्वजातिविषया साधारणी वृद्धिर्न त्वन्येषाम्।

तत्र चक्रवृद्धिः स्मृत्यन्तरे पठिता–'वृद्धेर्वृद्धिश्चक्रवृद्धिः' (नारदीये १।१०४)। अन्ये तु चक्रवद्यानं गन्त्यादि–तद्वृद्धिश्चक्रवृद्धिः। तेषां यस्मिन्नहनि चक्रं वर्तते तत्रैव वृद्धिः। यदा तु नदीसंतारे दुर्दिनादिना अप्रयाणं तदा नास्ति वृद्धिः। एवमन्येषामपि बलीवर्दादिवाह्यप्रयोक्तृणामीदृशी वृद्धिश्चक्रवृद्धिरुच्यते।

**कालवृद्धिः** "प्रतिमासं तु कालिका" (नारदीये १।१०३)। मासग्रहणमुपलक्षणार्थम्। याऽनुपचिता वृद्धिर्दिवसे दिवसे गृह्यते मासि मासि वा यस्याः कालो न प्रतीक्ष्यते अथ चैतस्मिन्काले यदि न ददासि तदा द्विगुणीभवति धनमित्येकरूपा कालवृद्धिः।

**कारिता।** इत्थंकृतां यावतीं वा परस्परोपकारापेक्षयोत्तमर्णाधमर्णौ कुरुतः। एषाऽपि दिग्भागवणिजामेव। अन्येषां तु "व्यतिरिक्ता न सिध्यति" इत्युक्तम्। "पञ्चकं शतमर्हतीति"।

अथवा हिरण्ये प्रयुक्ते वासांसि वृद्धया गृह्यन्ते, तत्राधिलक्षणं द्रव्यं, सा 'कारिता' यथा भोगलाभे न्यासरूपविषये च स्यात्।

**कायिका** कायकर्मणा संशोध्या। कायजीविका च–येषां क्रमेण काचैवाधिकादीनाम् (?) ।। १५३ ।।

यदि वृद्धिमहत्त्वात् संवत्सर एवं तद्धनं द्विगुणीभव(न्ति? ति)। अन्यथा तु परस्तादपि संवत्सरस्य गृह्णीयात् यावत्तद्वैगुण्यम्। तथा च गौतमः–चिरस्थाने द्वैगुण्यं प्रयोगस्येति। अन्ये तु लब्धिमपि वृद्धिमशीति पञ्चाशद्भागलक्षणां नातिसंवत्सरीं मन्यन्ते धर्मा ' ' तन्याः न चादृष्टाः शास्त्रैः। स्वयंकल्पितां द्विकादिवृद्धिभ्योऽन्यं हरेत्। अथवा अदृष्टाम् अनुपचितामित्यर्थः। प्रतिमासं न गृह्णीयात् प्रतिमासोऽवजातस्तु तावद् गृह्णीयात् यावद्वैगुण्यं ' ' ' ' परस्परोपकारापेक्षया स्वयंकृता वृद्धिकल्पा अभ्यनुज्ञायते चक्रवद्यानसंयुक्ता वृद्धिश्चक्रवृद्धिः। अथवा चक्रवदावर्तते प्रतिमासं या कालवृद्धिः ' ' ' ' तस्मात् कालाभ्यैतद्धनं वर्धते। न सम्प्रत्येव, एतच्च प्रीत्या कल्प्यते स्वयमनुग्राह्यतया परस्य अथवास्मिन्काले अप्रयच्छतस्तस्तथै ' ' ' कारिताऽतःस्वयमेव प्रयोक्त्रा कालदेशकाल कार्यावस्थापेक्षया, इयं चाभिहितापवादकृतानुसारादधिकेति कायिका कायिकाकर्म संशोध्याः।। १५३ ।।

(२) **सर्वज्ञनारायणः।** अथ व्यवहारसिद्धा अप्यधर्महेतुतयाऽकर्तव्यावृद्धीराह नातिसंवत्सरीमिति। अतिसांवत्सरीं संवत्सरमात्रेणातिक्रान्तामतिशयितांद्विगुणतांगताम्। तथा नादृष्टां सांहत्येन दर्शनायोग्यां प्रत्यहग्राह्यां विनिर्हरेत् गृह्णीयात्। तथा चक्रवृद्धिः वृद्धेरपिवृद्धिस्तां न गृह्णीयात्। कालवृद्धिः प्रतिमासं प्रदेया। कारिता द्विगुणादूर्ध्वं वृद्धिरशास्त्रीयत्वेपि तदूर्ध्वमपि मूल्यंवर्धत इति ऋणिकेनार्थितया कृता। कायिका यावन्न मूलमर्प्यते तावत्कायेन कलार्थे कार्यमिति। केचित्तु प्रथामान्तत्वादस्य पूर्वेणानन्वयात्कर्तव्यमित्यस्यार्धस्यार्थइत्याहुः। तत्तुच्छम्। यच्छद्वेनयेति पूर्वप्रक्रान्तप्रक्रियानुकर्षार्थेनत्वपास्तम् ।। १५३ ।।

(३) **कुल्लूकः।** ममैकस्मिन्मासि मासद्वये मासत्रये वागते तस्य वृद्धिंविगणय्येकदा दातव्येत्येवंविधनियमपूर्वकवृद्धिग्रहणमुत्तमर्णः संवत्सरपर्यन्तं कुर्यात्। नातिक्रान्ते संवत्सरे नियमस्य वृद्धिं गृह्णीयात् नच शास्त्राददृष्टामुक्ताधर्म्यद्विकत्रिकशताद्यधिकांगृह्णीयात्। अधर्मत्वबोधनार्थोनिषेधः चक्रवृद्ध्यादिचतुष्टयींचाशास्त्रीयांन गृह्णीयात्। तासांस्वरूपमाह बृहस्पतिः।। कायिका कायसंयुक्ता मासग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता। तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता कलावृद्धिस्तु द्विगुणाधिकग्रहणेन कायिका-चातिवाहदोहादिनाकारिता ऋणिकेन याऽनापत्कालएवोत्तमर्णपीडयाकृता। चतस्त्रोपि-वृद्धीरशास्त्रीया न गृह्णीयात्। तथा च बृहस्पतिः।। भागो यद्द्विगुणादूर्ध्वं चक्रवृद्धिश्च गृह्यते। पूर्णे च सोदयंपश्चाद्वार्धुष्यंतद्विगर्हितम्। कात्यायनः। ऋणिकेन कृता वृद्धिरधिका संप्रकल्पिता। आपत्कालकृता नित्यंदातव्या कारिता तथा। अन्यथा कारिता वृद्धिर्न दातव्या कथंचन।। १५३।।

(४) **राघवानन्दः।** किंच त्वयैकस्मिन्मासि एवंदेयं द्वितीये तृतीये च तस्य वृद्धिं विगणय्य एकदा दातव्येत्येवविधनियमपूर्वकमुत्तमर्णः संवत्सरपर्यन्तं गृह्णीयात् अतीते संवत्सरे यां संगृह्णीयात्साऽतिसंवत्सरी ताम्। तथा अदृष्टां शास्त्रतः पञ्चकाद्यतिरिक्ताम् चक्रवृद्ध्यादिचतुष्टयमपि न ग्राह्यमित्याह नहरेत् नगृह्णीयात्। बृहस्पतिस्तांलक्षयतिस्म।। कायिका कायसंयुक्तामासग्राह्याचकालिका।। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिनाकृतेति। चक्रवृद्धिः स्वरूपेवैव गर्हिता। कालवृद्धिस्तु द्विगुणाधिका संवत्सरान्ते द्विकादिकामित्युक्तेः नातिसंवत्सरीमितिग्रहणेनाऽशास्त्रीया। कायिकाच वाहदोहादिना। कारिकातु काले-उत्तमर्णेन पीडया कृता अशास्त्रीयाएताअपि न ग्राह्याइत्यध्याहारः। तथाच बृहस्पतिः।। भागोयद्द्विगुणादूर्ध्वंचक्रवृद्धिश्चगृह्यते। पूर्णेच सोदयंपश्चाद्वार्धुष्यंतद्विगार्हितमिति। पूर्णे ऋणतुल्ये सति सोदयं ततोधिकलभ्यंगृह्यतेयत्तद्विगार्हितमित्यन्वयः। कात्यायनोपि।। धनिकेनतु या वृद्धिरधिकामं प्रकल्पिता। आपत्काले कृता नित्यं दातव्या कारितातु सा।। अन्यथा कारिता वृद्धिर्न दातव्या कथंचन। अधिकामंस्वेच्छया। अन्यथा अनापत्काले।। १५३।।

(५) **नन्दनः।** संवत्सरादूर्ध्वभवांवृद्धिं लोकशास्त्रयोर्दृष्टंचक्रवृद्ध्यादयोवृद्धयस्ताश्च न हरेन्न गृह्णीत। चक्रवृद्ध्यादयोबहस्पतिना व्याख्याताः।। कायिका कर्मसंशोद्ध्या मास-ग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिका ऋणिना कृतेति।। १५३।।

(६) **रामचन्द्रः।** अतिसांवत्सरीं वृद्धिंन हरेत् न गृह्णीयात् च पुनः अभीष्टांवृद्धिं न हरेत् न गृह्णीयात् च पुनः या वृद्धेरपि वृद्धिः चक्रवृद्धिः प्रतिमासं देया। कारिता द्विगुणेन मूल्यमिति कारिता च पुनः कायिका कायमूल्यमिति योगीश्वरः।। वृद्धिवृद्धिश्चक्रवृद्धिः प्रतिमासंतु कालिका। इच्छाकृता कारितास्यात्कायिका कायकर्मणि इति।। १५३।।

(८) **गोविन्दराजः। नातिसंवत्सरीमिति।** यदि द्वयोर्वा त्रयाणां वर्षाणां रूपकान् न गृह्णाति ततो ददाति। यातु संवत्सरमतिक्रान्ता वृद्धिस्तां न गृह्णीयात्। अदृष्टां चानु-पचितामसंहतीमूलामेकद्विपञ्चाहादिजा तां न गृह्णीयात्। चक्रवत् गन्त्यादियानप्रयोगे

सति या वृद्धिः सा चक्रवृद्धिः। सा पूर्वोक्तवृद्धेरतिधकाऽपि स्यादित्येवं नानुज्ञाता सा चार्यस्याभिमता प्रथमानिर्देशान्न विनिहरेदित्येतत्संबन्धाभावाच्चक्रवृद्धिसमारूढ इति च वक्ष्यमाणत्वादत एव चेह वृद्धेर्वृद्धिश्चक्रवृद्धिरित्येवमादिका चक्रवृद्धिशब्देनोच्यते। अपितु ग्रन्याश्रिते वा कालिका प्रतिमासं तु कालिकेति स्मरणान्मासि ग्राह्या। कारितेच्छा कृता परस्परापेक्षया वणिक् प्रभृतीनां स्यादन्येषां पुनः कृतानुसारादधिकेत्युक्तम्। कायिका कायकर्मसंख्यावाच्या स्यात्॥ १५३॥

**ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम्॥**
**स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत्॥ १५४॥**

(१) **मेधातिथिः।** वृद्धिद्विगुणीभूत**मृणं** धनपरिक्षयाद्**दातुमशक्तो यः स पुनः क्रियां** कारयितव्यः। **करणं** लेख्यसाक्ष्यादि परिवर्तयितव्यः। **वृद्धिं** तु दद्यात् **निर्जितां**—यावती गणनया भवतीत्यर्थः। द्विगुणादधिकं न ग्राह्यमिति यदुक्तं तस्यायमपवादः। जयो ह्ययं प्रयोग इति।

"कुतः पुनः द्वैगुण्यापवादार्थता"।

यावता नेह किंचिदीदृशं वचनमस्ति वृद्धिसहितं धनं वर्द्धते मूलधनं वा। केवलं पुनःक्रिया श्रूयते। सा च **करणं परिवर्तयेदिति** व्याख्यान्तरेण व्याख्याता।

"यदि न वर्धते किमर्थं तर्हि करणपरिवर्तनम्?"

उच्यते। शान्तलाभे धनेऽदीयमाने आलस्यादिसंभावना साक्षिणश्च दार्ध्ये गच्छति काले विस्मरेयुः। यथोक्तम्—

**"यत्र कार्ये भवेद्येन कृतोपेक्षा दशाब्दिकी।**
**विवादस्तत्र नैव स्यात्साहसेषु विशेषतः॥"**

तथा "दशवर्षोपेक्षितमृणमसाध्यमिति"। तथा च पूर्वे स्म व्याचक्षते।

अयं च राज्ञ उपदेशः पीडितस्यानुग्रहः। यदि च द्विगुणस्य नवीकरणेन पुनः प्रयोगो वृद्धिसहितस्य पुनर्वृद्धिर्महानयं पीडितस्यानुग्रहः (?)। अर्थं सर्वं तदानीमवष्टभ्य न दाप्यत एषोऽनुग्रहो निर्धनस्य। ईदृशोऽनुग्रहो दैवेनैव कृतः। तथा च सर्वस्मृतिष्वस्यामवस्थायां विहितम्—

**"अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्।**
**प्रेक्ष्य शक्तिमृणं दाप्यः काले देशे यथोदयम्"॥**

यद्यधमर्णो दैवदोषान्निर्धनीभूतस्तदा न दुर्गावरोधादिना राज्ञा पीडयितव्यः। किं तर्हि कर्तव्यम्? यदाऽस्य कथंचिद्धनं भवेत्तदा यथासंभवं शनैः शनैर्दापयितव्यः। 'प्रेक्ष्य शक्तिं' धनवत्तां ज्ञात्वेत्यर्थः। 'दाप्यः' उचितस्य। वक्ष्यति 'कर्मणाऽपि समं कुर्यात्' इति (१७७)।

तस्मात् करणपरिवृत्तौ यदेवोक्तमस्माभिस्तदेव प्रयोजनम् ।। १५४ ।।

नातिसांवत्संरी मम एकस्मिन्मासि मासचयादौ चागते वृद्धिमेकीकृत्य एकदा दातव्य-मिति नियमपूर्वकं ग्रहणं वर्षपर्यंतं कुर्यात् । संवत्सरेऽतीते नियमस्य वृद्धिं न गृह्णीयात् । अदृष्टां शास्त्रोक्त द्विकशतादधिकां न च गृह्णीयात् । चक्रादिवृद्धिं चतुष्टयीं च न गृह्णीयात् । चक्रादिस्वरूपमाह बृहस्पतिः । कायिका कायसंयुक्ता? मासग्राह्या च कालिका वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृतेति-न करण-पत्रं परिवर्त्तयेत् । पूर्वं दूरीकृत्य पुनः पत्रांतरं लिखेदित्यर्थः ।। १५४ ।।

मूलहिरण्यस्य पुनः क्रिया न वृद्धेः । कथं यो हि गृहीता मूलवृद्धिं च दातुमशक्तः कारणं साक्ष्यादि परिवर्तयितुमिच्छेत् स पूर्वजनितां वृद्धिं दत्वा मूलमात्रस्य कारणं परिवर्तयेत् । न तत्र वृद्धिमारोपयेत् । यच्च दद्यात्तद्वृद्धितः शाधयेत् । न तु मूलतः । अयं च राज्ञ उपदेशः । पीडितस्य वृद्ध्या राज्ञैवाकारयितव्यम् ।। १५४ ।।

(२) **सर्वज्ञनारायणः** । ऋणं समूलां वृद्धिम् । पुनःक्रियां कलां दत्वा मूलस्य पुनर्वृद्धि-नियमम् । निर्जितां तावत्कालेन संचिताम् । करणं यत्र साक्ष्यादिव्यवस्थां परिवर्तयेत् पुनःकुर्यात् ।। १५४ ।।

(३) **कुल्लूकः** । योऽधमर्णो धनदानासामर्थ्यात्पुनर्लेख्यादिक्रियां कर्तुमिच्छेत्स निर्ज्जितामुत्तमर्णः सत्यतया आत्मसात्कृतां वृद्धिं कृत्वा करणं लेख्यं पुनः कुर्यात् ।। १५४ ।।

(४) **राघवानन्दः** । ऋणादृतेजीवितुमसमर्थः पूर्वोत्तमर्णादृणान्तरंलिप्सुरेवंकुर्यादि-त्याह ऋणमिति । पुनःक्रियां ऋणान्तरम् निर्जितां मासिमासि लभ्यत्वेनानीतामुत्तमर्ण-प्राप्यां तां संपूर्णां दत्वा करणं क्रियते लिख्यते ऋणमत्रेति पत्रान्तरं कुर्यादित्यर्थः ।। १५४ ।।

(५) **नन्दनः** । पुनःक्रियां ऋणस्य पुनः स्वीकरणक्रियां । निर्जितामुत्तमर्णेन निर्जिता-मधमर्णेनतदानींदातव्यमितियावत् । करणंमूल्यमात्रस्य ऋणस्यस्वीकरणं । परिवर्तयेत् अस्यां करणपरिवृत्तौ यावतीसंभवेद्वृद्धिस्तावतींदातुमर्हति ।। १५४ ।।

(६) **रामचन्द्रः** । सः निर्जितां तत्कालसञ्चितां कृतांवृद्धिं दत्वा यदन्यत् करणं यत्रसाधनं परिवर्जयेत् । अन्यत्कारयेदित्यर्थः ।। १५४ ।।

(८) **गोविन्दराजः** । **ऋणमिति** । योऽधमर्णो धनदानाऽसामर्थ्यात् आनीतं स्यादिति क्रियां कर्तुमिच्छेत् आनीतां वृद्धिं दत्वा करणं लेख्यादि पुनःकुर्यात् ।। १५४ ।।

**अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् ।**
**यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति ।। १५५ ।।**

(१) **मेधातिथिः** । **अदर्शयित्वा हिरण्यम्**, अदत्वा निर्धनत्वाद् वृद्धिहिरण्यं तत्रैव पुनःकरणं **परिवर्तयेत्** । साक्षिसमक्षमेवं ब्रूयात् 'एतावन्मूलमस्मै धारयामि एतावती च

वृद्धिरिति' तत्रैवारोपयेत् यावत्संवत्सरात् वृद्धिरिति तावद्व्याचक्षते। पुनः करणे वृद्धि-सहितमूलीभूते लघीयसी वृद्धिः कर्तव्या। यावत्या वृद्धचा नातिपीडचते। या प्रागासीत्ततो यज्वासहायनारदानां तु मते काकिणीमात्रमपि शक्तः करणपरिवृत्तिकाले दापयितव्यः। येन साक्षिणो न श्रवणमात्रे साक्षित्वं–ददाति तत्समक्षमधमर्णः। अर्थसंबन्धोऽपि प्रत्यक्षी-भवति। यतः श्रवणाश्रवणे च कृता भविष्यन्ति, ततश्चित्तं तिष्ठति, धने दशवर्षोपेक्षितमित्यादि व्यनश्वरो भविष्यति (?) ।। १५५ ।।

(२) **सर्वज्ञनारायणः**। एतत्स्फोरयति अदर्शयित्वेति। मूलभूतं हिरण्यं धनिके अदर्शयित्वा अदत्वा क्रियां परिवर्तयेत् तदाच यावती संभवेत्तावता कालेन वृद्धिं तामेव दातुमर्हति नतु मूलस्य पुनःस्थापनार्थमधिकं तेन देयमित्यर्थः ।। १५५ ।।

(३) **कुल्लूकः**। यदि दैवगत्या वृद्धिहिरण्यमपि समये दातुं न शक्नोति तदा तद्गृही-त्वैव तत्रैव पुनः क्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत्। यत्प्रमाणं चक्रवृद्धिधनं तदानीं संभवति तद्दातुमर्हति ।। १५५ ।।

(४) **राघवानन्दः**। उत्तमर्णप्रत्युक्तलभ्यानासमर्थस्य लभ्यं पूर्वपत्रोपरि वर्धये-दित्याह अदर्शयित्वेति। अदर्शयित्वा आदौ लेख्यमदत्वाछेदनादिभयात्। तत्रैव लेख्ये हिरण्यं वृद्धिधनं दत्तावशिष्टं परिवर्तयेत्समारोपयेत्। अतएवाह यावतीत्यादि ।। १५५ ।।

(५) **नन्दनः**। वृद्धेर्वृद्धिरितिनवक्तव्यमित्यर्थः ।। १५५ ।।

(६) **रामचन्द्रः**। तत्रैव हिरण्यमदर्शयित्वा अदत्वा परिवर्तयेत्। तत्क्रियामितिशेषः। यावती वृद्धिः संभवेत्तावतींवृद्धिं अधमर्णः दातुमर्हति ।। १५५ ।।

(७) **मणिरामः**। क्रियां कलांतरमदत्त्वैव पुनः पत्रादिलेखनक्रियां निर्जितां वृद्धिं कृत्वा कलांतरमपि मूलधने वर्द्धयित्वा। यदि दैवगत्या वृद्धिहिरण्यमपि समये दातुं न शक्नोति तदा। तत्रैव पुनः हिरण्यं वृद्धिसहितं परिवर्तयेत् पत्रे लिखेत्। ततो दान समये यावती वृद्धिः संभवति तावतीं दातुमर्हति ।। १५५ ।।

(८) **गोविन्दराजः। अदर्शयित्वेति**। दौर्गत्याद् वृद्धिहिरण्यमप्यदत्वा तत्रैव पुनः क्रियमाणे लेख्यादौ तदारोपयेत्। यत्परिमाणं किं वृद्धिधनं तदानीं संभवति तद्धातुमर्हति अवशिष्टं करणमारोपयेत् ।। १५५ ।।

(९) **भारुचिः**। अशक्तस्य काकिणीमपि दातुं सहवृद्धचा पुनःक्रिया ।।

**चक्रवृद्धिं समारूढो देशकालव्यवस्थितः।**
**अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात् ।। १५६ ।।**

(१) **मेधातिथिः**। 'वाराणसीं यास्यामि तदीयं पुण्यं मे भाण्डं च हेतुः, एषा च ते वृद्धिरिति।' तत्र यदि कान्तारनदीसंतरणं राष्ट्रोपप्लवादिना तं देशं न गतस्ततोऽ ग्दिेशा

त्कियता लाभेन प्रवृत्त्यावृत्तस्तदा यथानिरूपिता वृद्धिर्न दाप्यते। यतस्तं देशं यावद्वहतां या वृद्धिरप्राप्तानां सा कथं स्यात्? दीर्घमध्वानं वहतां युग्यानां महान्क्लेशः स्वामिनश्च तावन्तं कालं कृतैव वृद्धिर्युग्योपकारः। शीघ्रं तु प्रतिनिवृत्तानां स्वामिनः पुनरन्यत्रोपकारणं संपद्यत एव। एष एवातिक्रमः।

एवं कालातिक्रमः—'मासं मे वहन्तु बलीवर्दा इयती तव वृद्धिरिति'। तत्र यदि पक्षात्प्रत्येति तत्र **चक्रवृद्धि**मधमर्णः **समारूढः** प्रतिपन्नोऽङ्गीकृतवानिति यावत्। तस्यां वृद्धौ **देशकालौ** व्यवस्थितौ। यत्तया पूर्वोक्तेन प्रकारेण देशविशेषं कालविशेषं वा न, निर्विशेषणमेव, कृतवान् स एवंविधोऽधमर्णस्तौ **देशकालौ अतिक्रामन् नाप्नुयात्तत्फलम्** वृद्धचाख्यं नाप्नुयान्न भजेत न दद्यादित्यर्थः॥ १५६॥

किं तत्र नैवास्ति वृद्धिरथवा पञ्चकं शतम्? तेनेत्याह

(२) **सर्वज्ञनारायणः।** यदि चक्रवृद्धिः कार्या तदा मयात्र देशेऽत्रकाले शोधनीयेति यत्र व्यवस्था कृता स यदि ततोन्यत्रान्यदा च याचते तदा चक्रवृद्धिर्न लभ्यते अपितु अशीतिभागादिर्धर्म्यैवेत्यर्थः। तत्फलं चक्रवृद्धिलाभम्॥ १५६॥

(३) **कुल्लूकः।** चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभररूपा वृद्धिरभिमता। चक्रवृद्धिमाश्रितउत्तमर्णोदेशकालव्यस्थितः यदि वाराणसीपर्यन्तंलवणादिशकटेन वहामि तदा ममेदयद्धनं दातव्यमिति वेतनरूपदेशव्यवस्थितिः। यदि मासं यावद्वहामि तदा मासंयद्धनं दातव्यमितिकालव्यवस्थितिः। एवमभ्युपगतदेशकालनियमस्थौ देशकालौ दैवादपूरयन्शकटादिना वहँल्लाभरूपफलंसकलंनप्राप्नोत्यपि तु॥ १५६॥

(४) **राघवानन्दः।** वृद्धिप्रसंगेन देशकालमर्यादया नियमिता या श्रुतिः तदपूरणेन सर्वां नाप्नोतीत्याह चक्रवृद्धिमिति। चक्रवृद्धियुक्कटेन वहनीयत्वात्कायिकावृद्धिसदृशत्वाच्च चक्रपदं बलीवर्दादिरुपलक्षणम्। देशकालव्यवस्थित इति वाराणसीपर्यन्तंतवैतत्पूगादि शकटेन वहामि यदि तदा ममैतद्धनंश्रुतिरूपं देयमिति देशव्यवस्थितिः यदि मासं प्रापयामि तदा ममैतद्धनं दातव्यं इति। कालव्यवस्थितिरेवंसमयारूढो वाहको देशकालावतिक्रामन्नपूरयन् तत्फलं संपूर्णां श्रुतिं नाप्नोति किंतु तन्निपुणैर्व्यवस्थितामेव प्राप्नोतीति भावः॥ १५६॥

(६) **रामचन्द्रः।** देशकालव्यवस्थितः अस्मिन् देशे अस्मिन्कालेस्थितः सन् चक्रवृद्धिं समारूढः दातुमुद्यतः अधमर्णः देशकालौ अतिक्रमन् तंकालंतंदेशंअतिक्रामन् ग्रहीतुंनायाति मर्यादानन्तरं धनं धनिकः आप्नुयात्॥ १५६॥

(७) **मणिरामः।** चक्रवृद्धिं बृहस्पत्युक्ता वृद्धेर्वृद्धिरूपां। समारूढः आश्रितः। देशकालव्यवस्थितः यदि अमुक देशपर्यंतं अन्नादिकं शकटेन वहामि तदा ममेदं धनं दातव्यमिति वेतनरूपदेशव्यवस्थितिः। यदि मासपर्यंतं वहामि तदा मम एतावद्धनं दातव्यमिति कालव्यविस्थतिः। एवं उपगतदेशकालः नियमस्थोदेशकालौ अतिक्रमन् दैवात् अपरिपूरयन्। तत्फलं शकटादि वहन् वेतनरूपं सकलंनाप्नुयात्॥ १५६॥

(८) **गोविन्दराजः। चक्रवृद्धिमिति।** भाटकपूर्वकं गन्त्र्यादिदानेन गन्त्र्यादिवृद्धिमाश्रित्य उत्तमर्णो देशकालव्यवस्थितस्य गतदेशकालविशेषस्तौ देशकालौ देयादेयपरिपूरयंस्तद्गन्त्री वहनलाभं न प्राप्नोति ।। १५६ ।।

(९) **भारुचिः।** उत्तमर्णोऽधमर्णाद् देशकालातिक्रमेण स्वदोषादेव ।।

**समुद्रयानकुशला देशकालार्थदर्शिनः ।।**
**स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमं प्रति ।। १५७ ।।**

(१) **मेधातिथिः। समुद्रयान**ग्रहणं यात्रोपलक्षणार्थम्। स्थलपथिका वारिपथिकाश्च वणिजो **यां वृद्धिं स्थापयन्ति सा तत्राधिगमं प्रति** निश्चयं प्रति। सैव निश्चेतव्येत्यर्थः।

**देशकालार्थदर्शिनः**—अस्मिन्प्रदेश इयानर्थलाभोऽस्मिन्नियानिति ये पश्यन्ति जानते—न तु समद्रयान एव च ये कुशलाः कर्णधारादयः ।।

अन्ये पूर्वश्लोकमेवं व्याचक्षते यदृच्छाध्याहारेण—अधमर्णेन या देशं कालं चाश्रिता तां च प्राप्य तद्देशोदितं फलं लाभाख्यं तस्माद्देशाद्यदि नाप्नुयात्तदा कीदृशी तत्र वृद्धिरित्याकांक्षायामुत्तरश्लोकः। चक्रवृद्धिग्रहणं कारिताया अपि प्रदर्शनार्थम्।

लोभातिशयभाजां वणिजां क्षयव्ययादिसंविधिज्ञाः परस्परस्य यां वृद्धिं स्थापयेयुस्तां राजा प्रमाणीकुर्यात्।

**तत्राधिगमं प्रतीति। प्रतिः** कर्मप्रवचनीयोऽधिगमस्य लक्षणत्वाल्लक्षणेत्थंभूताख्याने तद्युक्ते च द्वितीया ।। १५७ ।।

(२) **सर्वज्ञनारायणः।** समुद्रेति। दुर्गदेशः कालश्चाल्पोर्थस्तल्लक्ष्योबहुरिति जानन्तः समुद्रयानकुशलाःवर्त्मनोदुर्गत्वेन मूलनाशस्यापि संभवात् यामिति बहुलामपि वृद्धिंकुर्वन्ति साधिगमंप्रति अधिगमंलाभंप्रति ऋणिकेन वाणिज्यफले प्राप्तएव देया नान्यथा। अत्रावधिकवृद्धिग्रहणं समुद्रादौ प्रायिकीं विपत्तिमनुसंधायेत्यतः समुद्रयायिनां दैवाल्लाभाभावे वृद्धेरप्यदानमित्यर्थः। समुद्रेतिचैवविधाकारादेरप्युपलक्षणम् ।। १५७ ।।

(३) **कुल्लूकः।** स्थलपथजलपथयाने निपुणाइयद्देशपर्यन्तमियत्कालपर्यन्तमूह्यमाने सत्यतावाँल्लाभोगृहीतुंयुक्त इत्येवंदेशलाभधनज्ञा वणिजादयो यांवृद्धिं तथा विषये चावस्थापयन्ति सैव तत्र व्यवस्था तत्राधिगमंधनप्राप्तिं प्रति प्रमाणम् ।। १५७ ।।

(४) **राघवानन्दः।** संप्रति वणिग्व्यवस्थितिमङ्गीकुर्वन्धर्मव्यवस्थितिमाह समुद्रेति। समुद्रयानकुशलाः स्थलपथजलपथगमननिपुणाः। एतावत्पर्यन्तमेतन्नयने एतावान् लाभोलब्धव्य इत्येवं वृद्धिं स्थापयन्ति सैव तत्र व्यवस्था प्रमाणं अधिगमं धनप्राप्तिप्रति ।। १५७ ।।

(५) **नन्दनः।** देशकालव्यवस्थितः अस्मिन्देशेऽस्मिन्काले ऋणंगृहीष्यामीति कृतव्यवस्थश्च वृद्धिसमारूढः समातत्र स्थितोत्तमर्णस्तद्देशकालावतिक्रमंतत्फलंताश्च

अभियुक्तपुरुषविशेषकल्पिता वृद्धिः क्वचिद्युक्तेत्याह समुद्रेति। स्थापयन्ति तत्र देशकाले। अधिगमंस्वीकारंप्रतिसावृद्धिस्यात्तैरेवोक्तांवृद्धिं गृह्णीयादित्यर्थः ।। १५७ ।।

(६) **रामचन्द्रः।** सावृधिं तत्र अधिगमं लाभं ।। १५७ ।।

(७) **मणिरामः।** तर्हि किं प्राप्नोतीत्यत्राह समुद्र इति ।। १५७ ।।

(८) **गोविन्दराजः। समुद्रयानकुशला इति।** वार्यध्वयानकुशला अस्मिन्देशे काले-ऽस्मिन्नर्थे हिरण्यादिकं उह्यमाने अयं लाभ इत्येवमादि वेदिनो वणिक् प्रभृतयो यां वृद्धिं तथाविधविषये निरूपयन्ति सा तत्र निश्चयार्थविज्ञेया ।। १५७ ।।

(९) **भारुचिः।** इदानीं कारिकावृद्धिविषयोऽयमपर उच्यतेतत्रन्या वणिजो (यं? यां) वृद्धिं स्थापयेयुः सा प्रतीयेते ये हि तत्र क्षयव्ययाध्वलाभद्रव्यसा (रा? र)ज्ञाः ऋणसम्बन्धे-नायमपरः प्रति- भवो धर्मः शिष्यते ।। १५७ ।।

## यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।।
## अदर्शयन्स तं तस्य यतेत स्वधनादृणम् ।। १५८ ।।

(१) **मेधातिथिः।** ऋणप्रयोगे द्विविधो विश्रम्भः—प्रतिभूराधिर्वा। तत्र प्रतिभूपक्ष इदमुच्यते। त्रिविधश्च प्रतिभूः—दर्शने प्रत्यये दाने च। तत्र दर्शनप्रतिभुवमधिकृत्येदमाह। यस्य दर्शनाय प्रतिभूस्तिष्ठेदमुष्मिन्प्रदेशे मयैष तव दर्शनीयः—स तथाऽकुर्वन्स्वधनात्तस्य-ऋणं **यतेत** प्रयत्नं कुर्याद्दातुमिति शेषः। दद्यादिति यावत्। ऋणग्रहणं व्यवहारवस्तुमात्रो-पलक्षणार्थम्। तेन यावन्तोऽर्थविषया व्यवहारेऽनक्राम्यन्ते तत्तद्वस्तु दद्यात् दर्शनेनान्य-तरेणाभियुक्तः। वाक्पारुष्यसंग्रहणादौ पणपरिभाषा कर्तव्या यदि न दर्शितं चेत्तन्मया दात-व्यम्। अकृतायां तु परिभाषायां राजदण्डमेव दाप्यः। शरीरे तु निग्रहान्तं विक्रयणं सुवर्णम् ।। १५८ ।।

(२) **सर्वज्ञनारायणः।** दर्शनायादीयमाने ऋणिकं दर्शयिष्यामीति। एतच्चोपलक्षणम्। अयमेतादृशोधनी पुत्री आप्तश्चेत्यादिष्वर्थेषु मद्वचसा प्रत्ययः क्रियतामित्येवंप्रत्ययप्रतिभूरपि प्रत्ययविपर्यये प्रयच्छेदित्यपि द्रष्टव्यम्। दर्शनप्रत्ययेच प्रतिभूत्वनिमित्तं यद्देयं तत्प्रतिभूरेव दद्यात् नतु तद्रिक्थग्राहिणोपि पुत्रादयः ।। १५८ ।।

(३) **कुल्लूकः।** योमनुष्योयस्य दर्शनाय प्रतिभूस्तिष्ठेत् धनदानकाले ममायमध-मर्णोदर्शनीयइति सतंतस्मिन्कालउत्तमर्णस्यादर्शयन् तद्धनंदातुंयतेत ।। १५८ ।।

(४) **राघवानन्दः।** किंच लग्नकस्याधमर्णाद्यदर्शने स्वधनादृणादानमाह यइति। यः प्रतिभूर्लग्नकः यस्याधमर्णादेर्दर्शनायातिष्ठदिमंतुभ्यंदर्शयामीति सयदि तं नदर्शयेत्तदा स्वकीयधनात् ऋणादि दद्यादित्यर्थः ।। १५८ ।।

(५) **नन्दनः।** अथप्रतिभूकृत्यमृणप्रसंगादाह योयस्येति। योयस्याधमर्णस्य समान-वर्णस्तमधमर्णंतस्योत्तमर्णस्य ।। १५८ ।।

(६) **रामचन्द्रः ।** प्रतिभूस्वरूपमाह य इति । यो मानवः यस्य प्रतिभूर्दर्शनायतिष्ठति सःप्रतिभूः तंअधमर्णमदर्शयन्अप्रत्यक्षीकुर्वंस्तस्याधमर्णस्य ऋणं स्वधनात्प्रयच्छेत् ।। १५८ ।।

(७) **मणिरामः ।** प्रतिभूः अस्मै धनंदेयमयंमयादर्शनीय इति नियमकर्ता दर्शन प्रतिभूः । तं अधमर्णं तस्य उत्तमर्णस्य सः प्रतिभूः ।। १५८ ।।

(८) **गोविन्दराजः । य इति :** अदर्शयन्मतं तस्य यतेत स्वधनादृणम् । प्रतिभूः दान-काले मया अयं दर्शनीय इत्येवं धनं प्रयोगकालेऽन्यदा च यो यस्याधमर्णस्योत्तमर्णप्रतिभूत्वेन तिष्ठेत् । स तमधमर्णं तस्मिन्काले उत्तमर्णस्यादर्शयन् स्वधनादृणदानं यतेत ।। १५८ ।।

(९) **भारुचिः ।** निगदव्याख्यात एवायं श्लोकः । इदानीमस्य दर्शनप्रतिभुवोऽ-धमर्णमुत्तमर्णस्यादर्शयन् स्वधनादृणदानप्राप्तौ सत्यामृतस्य रिक्थाभाज ऋणं प्रतिकुर्यात ।। १५८ ।।

**प्रातिभाव्यं वृथा दानमाक्षिकं सौरिकं च यत् ।।**
**दण्डशुल्कावशेषं च न पुत्रो दातुमर्हति ।। १५९ ।।**

(१) **मेधातिथिः ।** प्रतिभुवः कर्म प्रातिभाव्यं प्रतिभुवा यत्कर्तव्यं परर्णसंशोधनादि तत्प्रातिभाव्यम् ।

अर्हत्ता योग्यता । साऽनेन प्रतिषिध्यते । तस्यां च प्रतिषिद्धायामधिकारप्रतिषेधः । अनधिकृतश्च न ददातीत्येवं न दातव्यमित्युक्तं भवति । सर्वत्रार्हतौ क्रियापदे व्याख्याते प्रष्टव्ये ।

"कथं पुनः पुत्रस्य प्रातिभाव्यादिप्राप्तिस्तर्हि । तदृणस्य पित्राऽगृहीतत्वात् ।"

नैष दोषः । यद्येन दातव्यतयाऽङ्गीकृतं तद्गृहीततुल्यफलत्वाद्गृहीतमेव । तन्नि-श्चितस्वरूपत्वमापन्ना अतः प्रतिषिध्यन्ते ।

**वृथादानं** परिहासादिनिमित्तं प्रतिश्रवणम्–'कुरु कार्यमिदं परिनिष्पन्ने इदं दास्यामीति' निष्पादिते कार्ये पित्राऽदत्ते प्रतिश्रुते कथंचित्पुत्रो न दाप्यते । एवं पारितोषकादिबंदिपरि-हासादि विषयम् । यं चाहममुष्माद्वणिज एतस्ये द्रापय इति–तत्र तु मनुष्ये प्रेषिते कथंचिद्दा-तुमघटितेऽसंनिधानाद्वणिजोऽन्यतोऽपि कारणाद्वृत्तान्तरे पितरि मृते पुत्रो न दाप्यते ।

अक्षनिमित्त**माक्षिकम्**–सभिकाय यद्धार्यतेऽन्यतो वा यत्प्रयोजनं तद्गृहीतमिति शक्यते ज्ञातुम् । तस्य प्रतिषेधः । यः परित्यक्तबान्धवोऽक्षमालास्वेव शय्यासनविहारी प्रसिद्धः क्रीडनकस्तदृणमाक्षिकमिति शक्यते निश्चेतुम् ।

सुरापाननिमित्तं **सौरिकम्** । सुराग्रहणं मद्योपलक्षणार्थम् । तेन यः पानशौण्डोऽत्य-न्तमद्यपस्तदृणप्रतिषेधः ।

**दण्डशुल्कयोरवशेषः।** यत्र पित्रा दण्डांशः शुल्कांशश्च कश्चिद्दत्तः परिपूर्णौ दण्डशुल्कौ न दत्तौ तादृशस्य प्रतिषेधः। यत्किंचित्पित्रा दत्तं स तद्दाप्यते। स्मृत्यन्तरेऽप्यविशेषणोक्तं "प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डा न पुत्रानध्याभवेयुः" इति (गौतम १२।४१)। तत्र विकल्पः। महत्यपराधे महति च धने पैत्रिकेऽवशेषस्य प्रतिषेधः। शुल्केऽप्येवम्। स्वल्पे तु सर्वस्य ॥ १५९ ॥

(२) **सर्वज्ञनारायणः।** वृथादानं चारणादिषु। आक्षिकं द्यूतहारितम्। सौरिकं तत्पीतसुरामूल्यम्। दण्डावशिष्टं परिणीतकन्यादिनिमित्तदत्तशुल्कावशिष्टं च दण्डशुल्कावशिष्टम्। अवशेषमित्युपलक्षणम्। सर्वमप्यदत्तमदेयमेव ॥ १५९ ॥

(३) **कुल्लूकः।** प्रतिभूत्वेन यद्देयंधनंतत्प्रतिभाव्यं वृथादानं परिहासनिमित्तं पण्डादिभ्यो देयत्वेन पित्रांगीकृतं द्यूतनिमित्तं सुरानिमित्तं च दण्डं यद्देयंदण्डं शुल्कंघट्टादिदेयंतदवशेषंच पितृसंबन्धिनं पितरि मृते पुत्रोदातुंनार्हति ॥ १५९ ॥

(४) **राघवानन्दः।** पितृप्रतिश्रुतादि पुत्रैर्देयमिति सिद्धवत्कृत्य तददेयं संकलयति प्रातिभाव्यमिति। प्रतिभुवा लग्नकेन पित्रा यद्दर्शनादि प्रतिश्रुतंतत्प्रतिभाव्यं वृथादानं परिहासादिना मागधादिभ्यः प्रतिश्रुतं आक्षिकं द्यूतनिमित्तं सौरिकं सुरानिमित्तं दण्डशुल्कावशेषं राजदण्डपण्यस्त्रीघट्टादिस्वीकृतशेषं च नपुत्रोदातुमर्हतीत्यन्वयः। प्रतिभाव्यमिममधमर्णंदर्शयामीतिप्रतिश्रुतस्यदर्शनप्रतिभुवः पितुरदर्शनेन पुत्रस्तंनदर्शयेत् ॥ १५९ ॥

(५) **नन्दनः।** तदभावे पुत्रेण देयमिति प्राप्तस्यापवादमाह प्रतिभाव्यमिति। वृथादानंधर्मरहितंगायकादिभ्योदेयम्। आक्षिकंद्यूतनिमित्तम्। सौरिकंसुरासंबन्धि ॥ १५९ ॥

(६) **रामचन्द्रः।** यत्प्रातिभाव्यं दर्शनप्रातिभाव्यंतत्। वृथादानं धूर्तबन्दिमल्लादिभ्योयत्प्रतिज्ञातंतत्वृथादानम्। च पुनः आक्षिकं अक्षसंबन्धकृतंद्यूतकृतं सौरिकं यत्सुरासंबन्धकृतंतत्। च पुनः दण्डशुल्कावशषं पुत्रोदातुंनार्हति। योगीश्वरः॥ सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्। वृथादानंतथैवेह पुत्रोदद्यान्न पैतृकम्। पितृकृतमृणंपुत्रोनदद्यादित्यर्थः ॥ १५९ ॥

(७) **मणिरामः।** एतेषु पुत्रस्यासम्बन्धः शास्त्रसामर्थ्याद्विज्ञेयः। शुल्कावशेषमिति वचनात्। कृत्स्ने शुल्केऽस्ति पुत्रस्य सम्बन्धः। दण्डावशेषस्याप्येनं विधिमिच्छन्ति केचित्। प्रातिभाव्यसम्बन्धेन च समानिविधिद्व (त्वा?न्द्वा) द्वाथादानादिषु पित्र्येषु न पुत्राः सम्बद्धचन्ते ॥ १५९ ॥

(८) **गोविन्दराजः। प्रातिभाव्यमिति।** प्रतिभुवा यद्देयं वृथा दानं पारितोषिकादि यत्पित्रा देयत्वेनाङ्गीकृतं द्यूतसमाह्वयाभ्यां यज्जितं पित्रा सुरापानादि यद्वजिनः सुरामूल्यं दण्डशेषं शुल्कशेषं च यत्पितृसम्बन्धि पितरि मृते पुत्रो दातुं नार्हति ॥ १५९ ॥

**दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः ।**
**दानप्रतिभुवि प्रेते दायादानपि दापयेत् ।। १६० ।।**

(१) **मेधातिथिः**। पूर्वश्लोके योविधिर्मया चोदितः उक्तः—यथा पुत्राणां न भवति पैत्रिकं प्रातिभाव्यं—**तद्दर्शनप्रातिभाव्ये**।

"यद्येवं प्रत्ययप्रतिभुवः पुत्रा दाप्यन्ताम्"—अत आह **दानप्रतिभुवि प्रेते दायादाः** पुत्रा दाप्यन्ते, नान्यस्मिन्।

"यद्येवं प्रथमोऽर्द्धश्लोकोऽनर्थकः। दानप्रतिभुवः पुत्राणां साधन उक्ते सामर्थ्यादन्यस्य प्रतिभुवो नास्ति पुत्राणां संबन्ध इति गम्यते। अथ विस्पष्टार्थमुच्यते—प्रत्ययग्रहणमपि कर्तव्यम्। इतरथाप्रतिषेधे दर्शनग्रहणाद्विधौ च दानग्रहणादुभयपरिभ्रष्टस्य किंविधिरुत-प्रतिषेध इति संशयः स्यात्"।

नास्ति संशयः। स्मृत्यन्तरे स्पष्टमुक्तत्वात् (या. व्य. ५४)।

"दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा। न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः ।।" इति। इहापि **दानप्रतिभुवी**त्यस्य विधित्वादन्यत्राप्राप्तिः। दर्शनग्रहणमुपलक्षणार्थम्। अनुवादे चोपलक्षणत्वमदोषः। किंप्रयोजनमिति चेद्विचित्रा श्लोकानां कृतिर्मानवी।। ।। १६० ।।

(२) **सर्वज्ञनारायणः**। दर्शनेति प्रत्ययस्याप्युपलक्षणम्। दानप्रतिभूरेतेनादत्ते दास्यामीति नियम्यभूतः। दायादानृक्थग्राहिणो नतु पुत्रानेव ।। १६० ।।

(३) **कुल्लूकः**। सुरानिमित्तं च यद्देयंदण्डंप्रातिभाव्यंन पुत्रोदातुमर्हतीति योयंपूर्वोपदेशः सदर्शनप्रतिभुवः पितुर्दयोज्ञेयः दानप्रतिभुवि तु पितरि मृते पुत्रमृणंदापयेत् ।। १६० ।।

(४) **राघवानन्दः**। प्रातिभाव्यं पुत्रोन दातुमर्हत्युक्तो दानप्रतिभुवि तूत्तमर्णस्य देयमिति प्रतिश्रुत्य मृतेपितरिपुत्रोपिदद्यादित्याह दायादानिति दापयेद्राजेतिशेषः। तथाह याज्ञवल्क्यः।। दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोपि वा। नतत्पुत्राऋणं दद्युर्दद्युर्दानायय: स्थितइति। प्रात्ययिको यथा प्रत्ययोविश्वासः अस्मत्प्रत्ययेनास्मै धनं प्रयच्छतु भवान् नायं त्वां वञ्चयिष्यति यतोऽमुकस्य पुत्रोयमिति प्रत्ययार्थं भवतीति दानप्रतिभूर्यथा यद्ययं न ददाति तदाहमेव दास्यामीति ।। १६० ।।

(५) **नन्दनः**। पूर्वचोदितः पुत्रेण देयमिति पूर्वश्लोकउक्तः ।। १६० ।।

(६) **रामचन्द्रः**। दर्शनप्रातिभाव्ये दर्शयितुंप्रतिभुवि अहंदर्शयिष्यामीत्युक्तो पूर्व-नोदितोविधिःस्यात्। दानप्रतिभुवि मयाधनंदेयमित्युक्तेसतिप्रेतेमृते सति दयादान् पुत्रानपि दाययेत् पुत्रेभ्यः दापयेदित्यर्थः ।। १६० ।।

(७) **मणिरामः**। प्रतिभूत्वेन यद्देयं धनं तत्प्रतिभाव्यं परिहासनिमित्तं पंडादिभ्यो

देयत्वेन पित्रांगीकृतं वृथादानं। आक्षिकं द्यूतनिमित्तं। सौरिकं सुरानिमित्तं। शुल्कं घटादि-देयं एतेषांशे अयंचेन्नददाति तदामयाधनं देयमितिदानप्रतिभूः। सचेन्मृतस्तदातत्पुत्रादि-भ्योधनं दापयेत्॥ १६०॥

(८) **गोविन्दराजः। दर्शनप्रातिभाव्य इति।** यो यं प्रतिभाव्यं न पुत्रो दातुमर्हतीति पूर्वोक्तविधिः स दर्शनप्रतिभूकर्मणि पितृकृते विज्ञेयो दानार्थं पुनः यः प्रतिभूः स्थितः तस्मिन्मृते रिक्थभाजोऽपि दापयेत् किमुत पुत्रान्॥ १६०॥

(९) **भारुचिः।** इदानीं द्विप्रकारस्य प्रतिभुवो न पुत्रो दातुमर्हतीत्येतस्मिन् प्राप्त इदमा वक्ष्यते। एवं च सति दानप्रतिभुवः पुत्रस्यास्ति सम्बन्धः॥ १६०॥

**अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्।**
**पश्चात् प्रतिभुवि प्रेते परोप्सेत्केन हेतुना॥ १६१॥**

(१) **मेधातिथिः।** अनेन श्लोकेन संदिहानः प्रश्नं कृत्वोत्तरेण निश्चाययति। संदेह-हेतुः पदद्वये**नादातरि विज्ञातप्रकृताविति**। सप्तम्यन्तानि समानाधिकारणानि पदानि व्याख्यायन्ते। **अदातरि-प्रतिभुवि-विज्ञातप्रकृतौ।** ऋणमुत्तमर्ण **केन हेतुना परीप्सेत** लब्धुमिच्छेत्—किं केवलेनैवात्मव्यापारेण उत प्रतिभुवः पुत्रमपि व्यापारयति।

"कुतः संदेहः? उक्तम् 'प्रेते दानप्रतिभुवि' इति ततोऽन्यस्मिन् मृते कस्तत्पुत्राणां संबन्धः?"

यतस्तु खलु **विज्ञातप्रकृति**र्विज्ञातकारणः प्रतिभूत्वेन धनं गृहीत्वा स्थित इत्येतन्निश्चित-मतो भवति बुद्धिरस्ति तत्पुत्राणां संबन्धो यतस्तेन ऋणसंशुद्ध्यर्थमस्य निसृष्टमिति।

**पुनः** शब्दः पूर्वस्माद्विशेषमाह। यदि दानप्रतिभुवः पुत्राः संबध्यन्ते यस्तर्ह्यदाता तस्मि-न्मृते। **दातोत्तमर्णः। पश्चात्तत** उत्तरकालमित्यर्थः।

शेषं व्याख्यातम्।

**परीप्सा** प्राप्तीच्छा॥ १६१॥

(२) **सर्वज्ञनारायणः।** उक्तमुपपादयति अदातरीति। प्रतिभुव्यदातरि दानार्थमभूते विज्ञातप्रकृतौ प्रथममेव दर्शनादिनियमकरणेन निश्चितादातृस्वभावे प्रेते ऋणं दातोत्तमर्णः केन हेतुना तत्पुत्रादावर्थमीप्सेत यत एव दानार्थं नासौ प्रतिभूः कृतः पित्राच देयत्वेनाङ्गी-कृतमेव दायादेन देयमतोन्यथा न देयमित्यर्थः॥ १६१॥

(३) **कुल्लूकः।** अदातरि दानप्रतिभुवोन्यस्मिन्दर्शनप्रतिभुविप्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्यकारणमूलशोधनोचितधनग्रहणं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केन-हेतुना धनं प्राप्तुमिच्छेत्॥ १६१॥

(४) **राघवानन्दः।** तर्हि दानप्रतिभूवद्दर्शनादि प्रतिभुवोपि पुत्रस्तद्द्यादित्याशङ्क्याह

अदातरीति। दानप्रतिभुवोऽन्यस्मिन्दर्शनप्रतिभुवि प्रत्ययप्रतिभुवि वा पुनर्नष्टेमृते विज्ञात-प्रकृतौ विज्ञाता प्रकृतिः प्रतिश्रुतप्रातिभाव्यकारणमपि दर्शयामीत्यादियस्य तस्मिन्मृते दातोत्तमर्णः परीप्सेत्केन हेतुना प्राप्तुमिच्छेत्। दर्शनादिप्रतिभुवो मृतत्वाददानप्रतिभूपुत्रे वचनाभावात्। विज्ञातप्रकृतेरिति क्वचित्पाठस्तदा दर्शयामीत्यादिप्रतिभूत्वेन विज्ञातः प्रकृतिः पिता येन तस्मात्तत्पुत्रात्केन हेतुनाप्राप्नुयादित्यन्वयः। समासःसएव ॥ १६१ ॥

(५) **नन्दनः।** पुनरिति वाक्योपन्यासे अधमर्णे ऋणदातरि सति विज्ञातप्रकृतौ दातोत्तमर्णः केन हेतुना धनंपरीप्सेत्कस्माद्धनंलभेतेति महर्षिप्रश्नसद्भावेनस्वयमुपन्यासोयं हे महर्षयः एवंपृच्छतिचेदित्यर्थः॥ १६१ ॥

(६) **रामचन्द्रः।** तत्र प्रश्नमाह अदातरीति। दाता उत्तमर्णः दर्शनप्रत्ययप्रतिभुवि दानपतिभूव्यतिरिक्तेप्रेतेसति पुनः अदातृत्वेनविज्ञातात् नियतत्वेन पश्चात्प्रकृतरूपात् अधमर्णात् ऋणंकेनहेतुना परीप्सेत् इच्छेत् ॥ १६१ ॥

(७) **मणिरामः।** अत्राऽर्थे प्रश्नमाह। अदातरीति अदातरि प्रतिभुवि दर्शन प्रति-भुवि प्रत्ययप्रतिभुवि च विज्ञात प्रकृतौ ऋणादिज्ञात्रे। प्रेते मृतेसति। दाता उत्तमर्णः। पश्चा-त्पुनः केनहेतुना ऋणं परीक्षेत प्राप्तुमिछेतेति प्रश्नार्थः॥ १६१ ॥

(८) **गोविन्दराजः। अदातरीति।** तद्ग्रहणपूर्वकत्वेऽयं प्रतिभूः स्थित इत्येवं विज्ञातप्रातिभाव्यकरणे पुनर्दर्शनत्वप्रत्ययप्रतिभुवि प्रेते सत्यनन्तरं धनप्रयोक्ता केन हेतुना प्रतिभूपुत्राद्धनं प्राप्तुमिच्छेत् किं तस्य प्राप्तिहेतुर्विद्यते उत नेति यतोऽसौ दानप्रतिभूपुत्रो न भवत्यत प्राप्त्याशङ्का विद्यते। यतस्तु धनग्रहणे पूर्वकं तत्पितादर्शनप्रतिभूर्वा स्थितोऽस्ति तत्पुत्रात्प्राप्त्याशङ्का॥ १६१ ॥

(९) **भारुचिः।** समानविभक्तीनि पदान्यकथिततया व्याख्येयानि। अदातरि प्रति-भुवि प्रेते विज्ञातप्रकृतौ विज्ञातं कारणं लग्नकत्वे यस्य सोऽयं विज्ञातप्रकृतिः। किं पुनस्त-त्सम्बन्धकार्पणम्। एवं च धनावष्टम्भेनायमस्याधमर्णस्य यस्मान्न किं भूतः तत इत्थं भूतेऽ-स्मिन् प्रतिभुवि प्रेते पश्चाद्दाता प्रयुक्तमृणं परीप्सेत्। केन हेतुना सन्दिह्य पृच्छति कथं च सन्दिह्यते यतस्कारणमुच्यते—येन तावद्दानप्रतिभुवः पुत्रस्यास्ति सम्बन्ध इत्युक्तम्। न दर्शनप्रतिभुवः। अतः सत्यपितरीत्थं सम्बन्धे शास्त्रसामर्थ्यान्न युक्तो दापयितुम्। यतश्च गृहीतधनो······तमस्मिन् प्रेते दर्शनलग्नकपुत्रोऽपि सन्दापयितुमिति॥ १६१ ॥

**निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः।**
**स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः॥ १६२ ॥**

(१) **मेधातिथिः। निरादिष्टं** निसृष्टं स्वधनादर्पितं—भव लग्नक इदं ते धनं मत्तस्त्वया संशोधनीयं यद्यहं न दद्याम्।

**अलंधनः** पर्याप्तधनः। यावद्धनमुत्तमर्णाय दातव्यं तावत्परिपूर्णं प्रसृष्टम्। स्वल्पे तु निसृष्टे बहूनि संशोध्ये न दापयितव्यः।

पूर्वस्य प्रश्नस्योत्तरमिदम् ।

यद्यपि दानप्रतिभूरद्य निरादिष्टस्तत्पुत्रो दाप्यते स्वधनादेव। तद्द्यान्निरादिष्टपुत्र इति द्रष्टव्यं तस्यैव प्रकृतत्वात् । साक्षात्प्रतिभुवस्तु प्रतिभूत्वादेव प्राप्तिरिति ।

**इति स्थितिः ।** एषा शास्त्रमर्यादा विचारादेव ।

अलंघन इति सिद्धे **यन्निरादिष्टोऽलंधन** इति चैवमभिधानं तत्पद्यग्रन्थानुरोधेन ।। १६२ ।।

(२) **सर्वज्ञनारायणः ।** तत्किमेवंसर्वत्रेत्याह निरादिष्टेति । [दर्शनप्रत्ययप्रातिभाव्य-कालएव संप्रत्ययार्थं यदि प्रतिभूर्द्धारिणिकेन निरादिष्टधनोदत्तधनःस्यात् । तच्च दत्तं तस्मै धनं धार्यमाणशोधनायालंपर्याप्तं यस्य सोऽलंघनः । तदा निरादिष्टोदत्तधनः स तस्मिन्द्रव्ये व्ययितेऽपि स्वधनादेवाकृष्यदद्यात् । तथाच तद्दायादेरपि तद्देयमेवेत्यर्थः । अलंधनमिति सर्वदानमपेक्ष्य अल्पेषु स्थापिते तावदेव शोधनीयं न सर्वधनंदेयम् ।। १६२ ।।

(३) **कुल्लूकः ।** प्रतिभुवोमृतत्वात्तत्पुत्रस्य नादानप्रतिभूत्वेनादातृत्वादित्याशङ्कयाह निरादिष्टेति । असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निरादिष्टधनोधमर्णेन निसृष्टधनो यावता धनेनासौ प्रतिभूस्तच्छोधनपर्याप्तधनस्तदात्मधनादेव तद्धनं निरादिष्टोत्रनिरादिष्ट-धनपुत्रोलक्षणयोच्यते ऋणमुत्तमर्णाय दद्यादिति शास्त्रसंप्रदायः ।। १६२ ।।

(४) **राघवानन्दः ।** अधमर्णादवाप्तधनस्य पितुर्मरणेपि पुत्रः समर्थश्चेत्तदृणं दद्या-दित्याह निरादिष्टेति । अधमर्णेन निरादिष्टं समर्पितं मरणादिकाले किंचिद्धनंयस्मै स निरा-दिष्टधनः दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा अलंधनश्च पर्याप्तधनः यावति धने ऋणपरिशोधनं-स्यात्तावद्धनः स्वधनादृणंदद्यादिति । निरादिष्टधनइति प्रतिभूपुत्रोलक्षणया । इति स्थितिः शास्त्रमर्यादा नतु बलात्कारः । अलंघन इति विशेषणात्परीप्सेत्केनहेतुनेतिन्याया-भावस्योक्तत्वात् च विज्ञातप्रकृतित्वेन धनलाभस्य सूचितत्वाच्चप्रकरणाद्दायादानपि दापयेत् इत्यत्र दानप्रतिभूदायादस्यैववाग्रहणम् ।। १६२ ।।

(५) **नन्दनः ।** अत्रोत्तरत्वेनेदमाह निरादिष्टधन इति । निरादिष्टधनः पुत्रः परत्र वा संक्रामितधनः प्रतिभूर्मरणेन तिरोधानेन वाऽलक्षितो यदि स्यात्स निरादिष्टः । प्रति-भूर्धनग्राह्यो पुत्रावरोवा स्वधनादेव तदृणमुत्तमर्णाय दद्यात् ।। १६२ ।।

(६) **रामचन्द्रः ।** तत्रोत्तरमाह निरादिष्टेति । प्रतिभूर्निरादिष्टधनः अधमर्णेनदत्त-धनश्चेत्तर्हि अलंधनः उत्तमर्णाय दातुं गृहीतसंपूर्णधनस्यसनस्यात्सप्रतिभूःस्वधनाद्देयंतदृणं-दद्यात् ।। १६२ ।।

(७) **मणिरामः ।** एतदुत्तरमाह **निरादिष्ट इति ।** असौ प्रतिभूःदर्शनप्रतिभः प्रत्यय-प्रतिभूर्वा । चेत् यदि । निरादिष्टधनः अधमर्णेन प्राप्तधनः । धनंगृहीत्वा प्रतिभूर्जात इत्यर्थः । अलंधनः ऋणशोधन पर्याप्तधनः स्यात् । तदा स्वधनात् निरादिष्टः

प्रतिभूपुत्रः। ऋणं उत्तमर्णाय दद्यात्। यदि तु धनमगृहीत्वैव प्रतिभूर्जातस्तदा ऋणं न दद्यात्। इतिस्थितिः शास्त्रसंप्रदाय इत्यर्थः॥ १६२॥

(८) **गोविन्दराजः।** एवं संदेहमुपन्यस्येदमाह **निरादिष्टधन इति।** असौ दर्शन-प्रतिभूः प्रत्ययप्रतिभूर्वा यदि निसृष्टधनो भवति। भवप्रतिभूरिदं ते विश्वासार्थं धनमित्येवं प्राप्तधनश्च यावत्यसौ प्रतिभूः स्थितः तावत्प्रमाणं तस्य हस्ते दत्तं तदा स्वधनादेव तद्धनं निरादिष्टपुत्रः प्रकृतं उत्तमर्णाय दद्यादिति शास्त्रमर्यादा॥ १६२॥

(९) **भारुचिः।** एवमुभयथादर्शनात् सन्देहे सतीदमाह–निरादिष्टधनोऽर्पितधनः न वाङ्मात्रेण अलंधनं च स्यात् पर्याप्तिधनः यावता सम्बध्यते लग्नकत्वेन। अथवा निरादिष्टधनो वाङ्मात्रे·····यदि पश्चादलंधनःस्वयमर्पितधनः पर्याप्तिधनश्च भवति, तत्रैतस्माद्धेतोः स्वधनादेव तद्दातुमर्हत्यधमर्णलग्नकपुत्र उत्तमर्णायेति। अयं च दानग्रहणविधिः यदि कारणेन॥ १६२॥

**मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा॥**
**असंबद्धकृतश्चैव व्यवहारो न सिध्यति॥ १६३॥**

(१) **मेधातिथिः।** कार्यपर्यायो **व्यवहार**शब्दः। यत्किंचिद्दानाधानविक्रयादिकार्ये लेख्यादि च प्रमाणम्। एतैः कृतं **तन्न सिध्यति** कृतमप्यकृतं भवति।

**मत्तोन्मत्तौ** विख्यातौ। **आर्त्तो** धनबन्धुनाशादिपीडितः प्रत्युपस्थितभयश्च। यौगिक-त्वान्मत्तादिशब्दानां यावन्मदादियक्तास्तावत्प्रमाणाभावबोधकोऽयं प्रतिषेधः। प्रदर्शनार्थे चैतदप्रकृतिस्थत्वमात्रस्य। यथोक्तम्–'कुर्यादप्रकृतिं गतः। तदा प्रकृतमस्याहुरस्वतन्त्रं सहेतुता' इति। अप्रकृतिस्थश्चोच्यते अपप्लुतबुद्धिः स्वकार्यविवेचने असमर्थः। उक्तं च

**"कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः।**
**रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः॥"**

इति। (नारद १/४१)। कामादीनां द्वन्द्वं कृत्वा पीडितशब्देन तैः पीडिता इति साधनं-कृतेति तृतीयासमासः। तेन पीडितस्य प्रतिषेधः। स चायं संप्रति मन्मथाधिष्ठितः स्त्री-परिरम्भणादिपरीप्समानो भवति। 'अभियुक्ता' द्यूतादिक्रियान्तरे दत्तावधानाः। एते हि तत्र संसृजन्तः स्वामिनोऽपि स्व इत्यस्य प्रातिभाव्यादिक्रियानिश्चयस्यानवधानान्न प्रमाणम्। यतः क्रियान्तरावहिततया परेण पृच्छयमाना इदमस्मै दीयतामङ्गीकृतं वा प्रातिभाव्यमियति वस्तुनीदृशेऽनेन च प्रकारेणोच्यत इत्येवमादि निपुणतो नावधारयन्ति–प्रकृतिक्रियाविघ्नो वा माभूदस्मिन्निहस्थ इत्यभिप्रायमभ्युपगच्छन्ति–गच्छ त्वं यद्ब्रवीषि तत्सर्वमनुष्ठीयत इति पारतन्त्र्यं वाऽङ्गीकुर्वन्ति। तदुक्तम्–'अस्वतन्त्रे सहेतुत' इति। येन हेतुनाऽस्वतन्त्रो-ऽप्रमाणं सोऽस्य स्वतन्त्रस्यापि हेतुर्विद्यते। यथाऽस्वतन्त्रः स्वमपि न विनियुङक्ते एवमयमपि कामादिवशीकृतोऽर्थविवेकं कार्याणां च गुणदोषौ क्रियमाणावनधिगच्छन्नस्वतन्त्रेण तुल्यो

भवति। 'आर्तो' व्याख्यातः। अभियुक्तार्तशब्दौ च धर्मिवचनौ लक्षणया धर्मपरौ विज्ञयौ —अभियोगोऽभियुक्त आतुर इति। व्यसनानि कामक्रोधसमुत्थितानि मृगयादीनि। अभियुक्तव्यसन्यपि काञ्चित्क्रियां तात्पर्येण कुर्वन्नुच्यते। अव्यसन्यप्रवृत्तोऽपि तद्ध्यानरतः। अथवा कामक्रोधशब्दौ कामिनि क्रोधवति वर्तेते। अत्र च पक्षे भयव्यसनशब्दौ कृतद्वन्द्वौ तृतीयान्तौ पीडितशब्देन संबध्येते। अन्ये तु स्वतन्त्रा एव। 'रागद्वेषाभ्यां परीता' व्याप्ताः। रागः क्वचिदात्मीयेष्वभिषङ्ग आत्मीयतया परिगृहीतस्य कस्यचित्संबन्धिनोऽपि ध्यायतो वाऽभिप्रेतसिद्धौ मनसः परितोषो रागः। तद्विपरीतो द्वेषविषयः। परिपन्थिन्यनात्मीयतया परिगृहीते तदस्वास्थ्यतद्विपर्ययात्परितुष्टिवृत्तिरित्येवमादिरूपौ रागद्वेषौ। सर्वथाऽस्य भावबुद्धिश्चलिता क्षणमपि विवक्षिते कार्ये नावतिष्ठते। अन्यद्वदन्नन्यदाचरति। एवं रूपोऽप्रकृतिस्थः। अन्यथा सर्व एव पुरुषाः कामादियुक्ताः जराजीर्णाक्षिशिरोरोगार्त्तिमन्तोऽप्रकृतिस्थाः स्युः। न चैवम्।

**अध्यधीनो** गर्भदासः पुत्रशिष्यौ भार्या च। यदापि रूढया गर्भदास एवाध्यधीनस्तथाऽप्यस्वतन्त्रोपलक्षणार्थत्वात्सर्व एव ते गृह्यन्ते। स्वधनदानादि स्वामिनमननुज्ञाप्य यत्कुर्वन्ति तत्सिध्यति। तथा च नारदः (१/३३)—

> **"यद्बालः कुरुते कार्यमस्वतन्त्रकृतं च यत्। अकृतं तदिति प्राहुः"।**
> **"अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता।**
> **अस्वतन्त्राः स्त्रियः पुत्रा दासाद्याश्च परिग्रहाः।।**
> **"स्वतन्त्रस्तु गृही यस्य तस्य तत्स्यात्क्रमागतम्।।"**इति

"ननु यदि न स्वातन्त्र्यं स्त्रीणामुच्यते पुंसश्च स्वातन्त्र्यमेतदनुपपन्नम्। यतः साधारणं धनम्। कथमेकाकी मनुष्यो भार्ययाऽननुज्ञातो दानविक्रयादिभ्यः प्रभवेत्"।

अत्रोक्तम्— "स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि" इति। तथा 'कुले ज्येष्ठ' इत्युपक्रम्य 'तत्कृतं तत्कार्यजातं नास्वतंत्रकृत'मिति च। धनसाधारण्ये हि पुरुषोऽपि स्त्रीवदस्वतन्त्रः। यच्छब्दे स्वाम्यं पारतन्त्र्यं चेति तद्विरुद्धमिव स्वामित्वस्येत्येताश्च व्यवस्थेति योज्यं भवति। पारतन्त्र्यं परविधेयता तदिच्छानुवर्तित्वम्। यदि च परतन्त्रः परेच्छामन्तरेण विनियोक्तुं न लभते कीदृशमस्य स्वाम्यम्। अथ दानाधानविक्रये यत्र प्रकृतत्वादनीशाः। स्वशरीरे परिभोगादौ यावदिच्छं स्वधनं विनियोज्यते, परतन्त्रमहाधनानां शास्त्रनिगृहीतात्मनां द्विजानां नात्मोपभोगो भवेत्। बालस्य स्वाम्यपारतन्त्रे उपपन्ने। यदा प्राप्तव्यवहारस्तदा ईशिष्यते। एवं पुत्रादावपि। स्त्रियास्तु न कदाचिदपारतंत्र्यम्।

> **"बालया वा युवत्या वा वृद्धया वाऽपि योषिता।**
> **न स्वातन्त्र्येण कर्तव्यं कार्यं किंचिदिति स्थितिः।।"** ( मनु. ५/१४७)

स्वाम्यपारतंत्र्ये स्त्रीणामसमावेश उच्यते। न पारतंत्र्यवचनेन स्त्रीणां स्वधनविनियोगनिषेधः क्रियते। किंतर्ह्यस्थाने दानाधानविक्रयादि वार्यते। 'परतन्त्राः'—ताः स्थाने

निरूपणीयेन हिताहितं स्वयं विवेक्तुमलम्–एष पात्रमर्हति भूमिहिरण्यादिप्रतिग्रहम्, अनेन कन्यासंबन्धं कुर्यात्, इदं द्रव्यमस्मात् क्रेतुं विक्रेतुं वाऽर्हतीत्येवमादि तया ज्ञातव्यम्। अतो लेख्यादिकाले भर्त्राद्यनुमतिरुपयुज्यते। केवलया कृते कार्ये नाहं किंचिज्जानामि त्वया विप्रलब्धाऽस्मीति वचनस्यावसरत्वात्। भर्त्राद्यनुमतौ तु किं वक्ष्यति। तदुक्तम्—

**"एतान्यपि प्रमाणानि भर्ता यद्यनुमन्यते।**
**पुत्रः पत्युरभावे वा राजाऽधिपतिपुत्रयोः॥"**

अस्वातन्त्र्यमपि नियमितम्–**"अनुशिष्टा विसर्गे च विक्रये विस्वरा मता।"** अपि बुद्धिपूर्वे बालशिक्षिते स्वामिना पत्न्यादयो नियोज्या अनबन्धादिना-नतु स्वाम्यविसर्गेऽपि। **"सा सद्यः संनिरोद्धव्या त्यजेद्वा कुलसंनिधौ"** (मनु. ९/८३) इति स्त्रीणामेव न पुंसः पारतन्त्र्यम्। पतितस्याप्या प्रायश्चित्तसमाप्तेः प्रतीक्षणोपदेशः। अतो न विक्रयोऽपि दासादीनां गरीयस्यामापदि कुत्रचिदस्ति। तेषु स्वामिन इत्येतदपेक्ष्य भार्याशिष्यदासीनां यथास्त्रं पारतन्त्र्यम्। धनसाधारण्यात्तु न भर्तुरनुज्ञां विना भार्याया यागादौ क्वचिदधिकार इति स्थितम्। "यच्चेदम्–**"पुत्राणां भर्तरि प्रेते वशे तिष्ठेत्तु सा तथा।"**

"जीवतोरस्वतन्त्रः स्याज्जरयाऽपि समन्वितः।" "तयोरपि पिता श्रेयानभावे जननी मता" इति। –अनेन पुत्राणां पारतंत्र्यम्। ननु चान्योन्यव्याहतमिति।" नास्ति व्याघातः। अनधिकारिणि पुत्रे बाले मातृपरतन्त्रता। मातुस्तु पुत्रे पारतन्त्र्यं मातृधनरक्षणं चोरादिदोषेभ्यः। पुत्रस्यापि यत्पितरि पारतन्त्र्यंतदपृथक्कृतस्य तद्गृहे निवसतः। यदा तु पितृविभक्तो धनं स्वयमर्जितवांस्तदा "ऊर्ध्वं तु षोडशाद्वर्षात्पुत्रं मित्रवदाचरेत्" इति स्वातन्त्र्यमेव। **बालो**ऽप्राप्तव्यवहारः षोडशवर्षात्प्राक्। **स्थविरो** लुप्तस्मृतिः जराभिभूतोऽतीतव्यवहारः। यद्यप्ययं कस्यांचिद्वेलायां प्रकृतिस्थोऽपि भवति तथापि न प्रमाणमप्रत्ययात्। यस्य तु भर्तुः स्त्री जानाना कार्यप्रबन्धेन वर्तते तयाऽनुज्ञातमेतद्भवति। **असंबद्धकृतः।** परार्थमनियुक्तो यो व्यवहारयति– न भ्राता न पिता'देवदत्ताय शतं धारयती'त्येवमादि वक्तुं न लभ्यते। ये तु भ्रातरः समानकार्याः सर्वे च तुल्यव्यवहारिण स्तेषामन्यतरेणापि गोपश्वादिविक्रयो गृहादिबन्धनप्रयोगादि च क्रियमाणं सिध्यति। संबन्धित्वात्। **व्यवहारशब्दः** सर्वव्यवहारग्रहणार्थः। प्रकरणादृणव्यवहार एव स्यात्॥ १६३॥

(२) **सर्वज्ञनारायणः।** आर्त्तः शोकादिना। अधीनोभृत्यः। अधिपदमीश्वरेवर्तते। बालेन षोडशवर्षेण। स्थविरेण लुप्तस्मृत्यादिना। कृतइत्यनुषङ्गः। असंबद्धेन स्वाम्यप्रहितेन परेण। व्यवहारऋणादानादिः। नसिध्यति न लभ्योधनिकस्य॥ १६३॥

(३) **कुल्लूकः।** मद्यादिना मत्तः उन्मत्तोव्याध्यादिपीडितोपहतास्वतंत्रबालवृद्धै रस्वतन्त्रत्वेन पितृभ्रातृनियुक्तादिव्यतिरेकेण कृतऋणादानव्यवहारोन सिध्यति॥ १६३॥-

(४) **राघवानन्दः।** कृतोपि व्यवहारः क्वचिदसिद्ध इत्याह मत्त इति। मत्तो मद्यादिना उन्मत्तोऽवातादिना आर्त्तोऽरोगादिना आध्यधीनः कामादिपीडितः अध्यधीनः सेव-

को वा स्थविरोऽत्यन्तवृद्धस्तैःकृतः। असंबद्धकृतः असंबद्धेन पित्राऽद्यविनियुक्तेन कृतश्च व्यवहारः ऋणादिविषयकः। मत्तादिभिःसंबन्धिभिः कृतोन सिध्यतीतिवार्थः ॥ १६३ ॥

(५) **नन्दनः**। क्वचित्कृतस्य निवर्तनीयत्वंत्रिभिः श्लोकैराह मत्तेति। आर्त्तो-ऽप्रतिक्रियपीडायुक्तः। असंबद्धोगृहक्षेत्रादिरहितः। आगन्तुकस्तेनकृतसंबन्धः। ऋणदान-क्रयविक्रयादिकंसंव्यवहारो व्यवहारः। आर्त्तादिभिः सहकृतोसंबन्धकृतश्च व्यवहारोन सिध्यतीति वर्तते ॥ १६३ ॥

(६) **रामचन्द्रः**। अध्यधीनैः नित्यपराधीनैः। असंबद्धः स्वाम्यरहितः। एतैर्म-त्तादिभिः कृतोव्यवहारोन सिध्यति ॥ १६३ ॥

(७) **मणिरामः**। अध्यधीनः पराधीनः ॥ १६३ ॥

(८) **गोविन्दराजः**। मत्तोन्मत्तार्तान्यधीनैरिति। क्षीवोन्मत्तव्याध्याद्युपहतचित्त-गर्भदासबालाऽतिवृद्धैः असम्बद्धेन पितृभ्रातृनियुक्तादिव्यतिरेकेण यो व्यवहारः ऋणदानादि कृतः न सिद्धचति ॥ १६३ ॥

(९) **भारुचिः**। अन्यच्च सर्वव्यवहारा एव मत्तादिभिः कृता न सिद्धचन्ति न केवलं प्रकराणादृणव्यवहारः। अमत्तादिभिरपि प्रयुज्यमानाः सर्वव्यवहारेषु ॥ १६३ ॥

**सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ॥**
**बहिश्चेद्भाष्यते धर्मान्नियताद् व्यावहारिकात् ॥ १६४ ॥**

(१) **मेधातिथिः**। कस्यचिदनुष्ठेयस्यार्थस्य प्रतिपादकः शब्दो **भाषा** सामान्येन भवति। योऽर्थस्तया प्रतिपाद्यते सोऽनुष्ठेयः। किं सर्वापि भाषा न सत्या? नेत्याह **बहिश्चेद्धर्मात्**–धर्मबाह्यं यदुच्यते शास्त्राचारविरुद्धम्–पञ्चकादधिका वृद्धिः, भार्यापत्य-विक्रयादिः, अन्वयिनः सर्वस्वदानमित्यवमादि। पत्रलिखिता**यद्यपि स्यात्प्रतिष्ठिता** प्रतिभुवां वा दत्ता तथापि न सिध्यति। **व्यावहारिको धर्म** आचारनिरूढः। **नियतो** नादिर्नेदानींतनः। पूर्वशेषं चैतत्। अस्वतन्त्राप्रकृतिस्थैः कृतं दानाद्यनिश्चितमिति न प्रमाणम् ॥ १६४ ॥

(२) **सर्वज्ञनारायणः**। भाषा परिभाषा कलादिनियमस्य लेखादौ निरूढा नसत्या-भवतिव्यर्थाभवति यद्यपि साक्ष्यादिमत्तया प्रतिष्ठिता दृढा स्यात्तथापि। यदि धर्माद्बहि र्भाष्यते तच्च। नियताद्वयावहारिकात् देशादिव्यवहारसिद्धादाचारात् ॥ १६४ ॥

(३) **कुल्लूकः**। इदंमयानुष्ठेयमित्यवमादिकाभाषालेख्यादिना स्थिरीकृतापि यदि शास्त्रीयधर्मात्पारम्पर्यात्सद्व्यवहाराच्च बहिर्भाष्यते सा सत्या न भवति तदर्थोनानष्ठयः ॥ १६४ ॥

(४) **राघवानन्दः**। भाषामात्रंनवस्तुसाधकमित्याह सत्यति। इदंमयानुष्ठेयमित्यवं-स्थिरीकृतापिभाषा शास्त्रनियमात्पारंपर्यात्सत्यव्यवहाराद्वा बहिर्भूता स्वतन्त्रा तदाऽसिद्धै

वेतिपद्यस्यार्थः। तथाच ।। प्रत्यर्थिनोऽग्रतोलेख्यं यथा चोदितमर्थिना। समामासतदर्थाहो नामजात्यादिचिन्हितमिति ।। भाषारूपमेतद्बहिर्भूतोऽशास्त्रीयः। तत्र लेख्यप्रकारे याज्ञवल्क्यः ।। यःकश्चिदर्थोनिर्णीतः स्वरुच्या तु परस्परम्। लेख्यंतु साक्षिमत्कार्ये तस्मिन्धनिकपूर्वकम् ।। समामासतदर्धाहर्नामजातिस्वगोत्रकैः। सब्रह्मचारिकात्मीयपितृनामादिचिन्हितम्। समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयत्। मतं मेऽमकपुत्रस्य यदत्रोपरिलेखितम् ।। साक्षिणश्चस्वहस्तेन पितृनामादिपूर्वकम्। अत्राहममुकः साक्षी लिखेयरिति ते समाः ।। ते सङ्ख्यातोगणतश्च समाः कार्याइत्यर्थः ।। अलिपिज्ञऋणी यः स्यालेखयत्स्वमतं तुसः। साक्षीचेत्साक्षिणान्येन सर्वसाक्षिसमीपगः ।। साक्ष्यप्यलिपिज्ञश्चेत्सोपि सर्वसाक्षिसमीपगः सन्स्वनाम लेखयदित्यर्थः ।। उभयानुमतेनैतन्मया ह्यमकसूनुना। लिखितंह्यमुकेनति लेखकोन्ते ततोलिखेत् ।। विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।। तत्प्रमाणं स्मृतं सर्वं बलोपधिकृताहते ।। ऋणं लेख्यगतं देयं पुरुषैस्त्रिभिरेवच ।। त्रिभिरित्यनेन प्रपौत्रादीनां न दानार्हत्वम् ।। आधिस्तु भुज्यते तावत्यावत्तन्नप्रदीयते ।। नप्रदीयतेबन्धकधनमित्यनेन बन्धकभूम्यादीनां प्रपौत्रोदेरपि ग्राह्यतेत्यर्थः ।। देशान्तरस्थ दुर्लेख्यनष्टेम्लिष्टेत्दृतेतथा। भिन्ने दग्धे तथा च्छिन्ने लेख्यमन्यत्त कारयेत् ।। दुर्लेख्य उक्तवैपरीत्येम्लिष्ठेऽक्षरशोलप्ते भिन्न द्वधीभूते छिन्नेऽवयवशइति भदः। किंच ।। संदिग्धे लेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः। युक्तिप्राप्तिक्रियाचिन्हसंबन्धागमहेतुभिः। युक्तिरित्यादेरयमर्थः। धनवतोस्मादयं ग्रहीतुं योग्यः निर्धनत्वादिति युक्तिः। प्राप्तिरेतावत् त्वत्तःप्राप्तम् क्रिया मद्धनेन वाटीयंक्रीता मद्धनेन मठोयंदत्त इति। चिन्हं मद्धनन दुहितृविवाहः कारितः। आगमोमयास्मात् तद्धनं प्रगृहीतं दत्तंच। तुभ्यमित्यतैर्हेतुभिःर्लेख्यपशुद्धिःस्यादित्यन्वयः। किंच ।। लेख्यस्यपृष्टेऽभिलिखद्दत्वादत्वर्णिकोधनं। धनी वोपगतंदद्यात् स्वहस्तपरिचिन्हितम् ।। दत्वर्णं पाटयल्लेख्यं शुद्ध्यै वान्यत्त कारयेत्। साक्षिमच्चभवेद्यद्वा तद्दातव्यंससाक्षिकमिति याज्ञवल्कीयवचनजातम् ।। १६४ ।।

(५) **नन्दनः।** परस्परकृतसमयो भाषा प्रतिष्ठिता साक्ष्यलेख्यादिरूपा यदिस्याद्धर्माद्धर्मशास्त्रभावात्। व्यावहारिकाल्लोकव्यवहारभवाच्च। नियमात्समयात् बहिर्भाष्यतेचेत्सत्यानुचिता कार्यनिष्पादनीसा न भवति। तस्य सत्यत्वनिवर्तनीयमित्यर्थः ।। १६४ ।।

(६) **रामचन्द्रः।** भाषा परिभाषा सत्या न भवति यद्यपि प्रतिष्ठितास्यात् यलेखानिश्चिता लेख्यसाक्ष्यादिनास्यात् नियताव्यवहारिकात् चेत् धर्मादपेतातद्बहिः भाष्यते।

(७) **मणिरामः।** प्रतिष्ठितापि लेख्यादिनास्थिरीकृतापि। चेत् नियतात् पारंपर्यागतात् व्यावहारिकात् सद्व्यवहारात्। धर्मात् शास्त्रात् वहिर्भाष्यते। तदा साभाषा सत्यान भवति ।। १६४ ।।

(८) **गोविन्दराजः।** । **भाषा न सत्या भवतीति।** मया इदं तवानुष्ठेयमित्यादिकापरिभाषा लेख्याद्युपनिबन्धने यद्यपि स्थिरीकृता भवति तथापि यद्यनादिपारंपर्याऽऽयाता लोक-

शास्त्रव्यवहारवर्तिनो धर्माद् बहिर्भासते। तद्विरुद्धा निरूप्यते तदा सत्या न भवति न तदीयार्थाऽनुष्ठेयम् ।। १६४ ।।

(९) **भारुचिः।** धर्मविरुद्धश्च व्यवहारोऽपत्यभार्याविक्रयादिः न सिद्धयति। तावा. . . सौ स्कन्धवारयति वृद्धिः सा प्रयोगकाले द्विगुणीभूतापि पुनर्वर्धत एव प्रतिमासम् एवं ग्रामपुञ्ज-ग्रहणादिवृद्धयोऽपि प्रतिषिद्धा बोद्धव्याः ।। १६४ ।।

**योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।।**
**यत्र वाऽप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ।। १६५ ।।**

(१) **मेधातिथिः। योगः** छद्म। तेन यदा 'धमनं' बन्धकार्पणं कृतमिति। एतच्च ज्ञायते असत्यकार्येण कृतम्। **तद्राजा विनिवर्तयेत्।** कश्चिद्धनिकेनोपरुध्यमान आह 'न मे किंचिदस्तीति'—'ननु क्षेत्रं स्थण्डिलं वासोऽस्ति तदर्पये'त्यनया शङ्कया सुहृत्स्वजनाय कस्मैचिदसावाधानीकरोति। तत आह—'तदन्यस्य मया बन्धकीकृतमिति'। एतच्च ज्ञायते। सत्यपि प्रकाशलेख्ये तस्य आधातृतायोगात् यदि हि परमार्थतथाऽऽधित्वेन कृतं कथमाधातैव भुङ्क्त इति। एवंविधं योगाधमनमप्रमाणीकृत्य धनिने क्षेत्रादि दापयितव्योऽधमर्णः। यस्य चान्येनागमेन स्वाम्यं धनदानकाल आगमान्तरेण करणं करोति तदपि 'योगाधमनम्'। तत्राधमर्णो यस्य वानेनागमेन स्वाम्यं कल्पितः सत्यमागमं कारयितव्यः।

एवं विक्रयादि। योऽल्पेन मूल्येन महार्धमर्थं विक्रीणीते यो वा नैव मूल्यं क्रेतुरादत्ते यच्चाह 'विक्रीतं मया तवेदमिति'—स उत्तरकालं 'न विक्रीतं ममेदमिति' न लभते वक्तुम्। न चायं विक्रयानुशयो दशाहात्परेणापि निवर्तयेदिति, योवाऽऽमेन क्राययति। पूर्वोक्ते निमित्ते सति निमित्तान्तरे वा सति विक्रीणीते न च रूपकादिभिः क्रयोपहर्तव्यवहारे न दृश्यते न च रूपकादिसंचयशील इत्यादिना योगविक्रयाधिगमः।

**योगदानप्रतिग्रहम्।** यद्यपि दानप्रतिग्रहक्रिययोरन्यतरोपादानेनैवेतराक्षेपः—अन्यथा-स्वरूपासिद्धेः—तथापि क्रियाद्वयोपादानं वृत्तपूरणार्थम्। अथवैकक्रियोपादाने तत्कारिण एव दण्डः स्यात् न द्वितीयस्य, सत्यपि तत्साधनत्वे शब्देनानुपादानात्। अतो दातुः प्रति-ग्रहीतुर्द्वयोर्दण्डार्थं भेदेनोपादानम्।

"तथा सति योगाधमनविक्रीतमित्यत्रापि क्रयादिद्वितीयक्रियोपादानं कर्तव्यम्।"

न कर्तव्यम्। स्मृत्यन्तराद्वा सामान्यशास्त्राद्वाऽनुपादाने दण्डः स्यात्। यदुभयस्वामि-कमन्यतरः प्रतिग्रहीत्रा सह संविदं कृत्वा दापयते एवमादि **योगदानप्रतिग्रहम्।** दानं च प्रतिग्रहश्चेति विगृह्य द्वन्द्वैकव्यवहारः।

**यत्र वाऽप्युपधिं पश्येदिति। उपधिः** छद्म। अनेनैव अन्यत्राप्येताभ्यः क्रियाभ्यः उपधि-र्निवर्त्यः। यथा कश्चिद्धनिनोक्तः—'यावदियद्भिरहोभिर्दातव्यमिति प्रतिभुवं न स्थापयसि तावत्त्वा न त्यक्ष्यामीति' तस्मिंस्तूष्णींभूते कश्चिदुत्तमर्णेन सह संविदं करोति 'मामस्य प्रति-भुवं गृहाण यावदेनमुपपीडयामि बह्वनेन ममापकृतं अहमस्य पीडार्थं एव प्रतिभूर्न मया

किंचिद्दातव्यमिति' तत्रोत्तमर्णः प्रकाशमाह 'यद्यन्यस्ते प्रतिभूर्नास्ति कर्मादिकं च न प्रार्थयसे, नूनं जिहीर्षितं ते धनम्—स पीडितः प्रत्याह 'नैतेन सह ममेदृशो व्यवहारः प्रवृत्तपूर्व इति'' प्रतिभूः पुनराह 'भवानि तवाहं प्रतिभूः' सोऽनिच्छन्पीडोपरोधादाह 'यथेच्छसि तथा कुरु —नास्य पूर्वक्रियास्वन्तर्भावः।

एवं कृषिवाणिज्यशिल्पादिक्रियाः एतद्व्यतिरेकिण्यः प्रतिदर्शनीयाः। उदाहरणमात्रं दानाधमनविक्रयाः।

तदेतद्योगकृतं कार्यं यावत्किंचन तत्सर्वं राजा **निवर्तयेत्**—राजा कृतमप्यकृतमादिशेत् —न प्रमाणीकुर्यात्—कर्तारं कारयितारं च दण्डयेत् ।। १६५ ।।

(२) **सर्वज्ञनारायणः।** योगः छद्म तेन कृतं आधमनमाधिस्थापनं तथा छद्मकृता-विक्रयदानप्रतिग्रहाः। अन्यत्र वा यत्रर्णग्रहणक्रयोपनिध्यादावप्युपधि छलं पश्येत्तत्र कृतं लेख्यादिकमपि निवर्तयेत् ।। १६५ ।।

(३) **कुल्लूकः।** योगशब्दश्छलवाची छलेन ये बन्धकविक्रयदानप्रतिग्रहाः क्रियन्ते न तत्त्वोऽन्यत्रापि निक्षेपादौ यत्र छद्म जानीयात् वस्तुतो निक्षेपादि न कृतं तत्सर्वंनिवर्तेत। ।। १६५ ।।

(४) **राघवानन्दः।** छलादिविषयेऽप्यसिद्धिमाह योगेति। योगशब्दोयमत्र छल-पर्यायोऽधमनोवञ्चकस्तेन वन्धकादिचतुष्टयंकृतंनिवर्तयत्। अत्रनिक्षेपादावुपधि छद्म वा पश्येज्जानीयात्तदपि निवर्तयेत्। यद्वा साध्यव्यापकत्वेसति साधनाव्यापकत्वमुपाधिः यथा ममेदं हिरण्यं हिरण्यत्वात् मद्धस्तगतहिरण्यवदिति तत्रत्वक्रीतत्वाद्युपाधिरूपं पश्ये त्तदपि निवर्तयन्मिथ्येति कृत्वा ।। १६५ ।।

(५) **नन्दनः।** आधमनविक्रयादिप्रयोजनेभ्यो लोकसिद्धेभ्यः प्रयोजनान्तरसंबन्धो-ोगस्तदभिसबन्धिकृतमाधनंयोगाधमनंयथा ज्ञातिभीतस्य गृहक्षेत्रादिकाधमनं एवंयोग-विक्रयंयोगदानंयोगप्रतिग्रहंयत्र पश्येदुपहितंचविनिवर्तयेद्राजा ।। १६५ ।।

(६) **रामचन्द्रः।** यःपुरुषः गाधंपरछलकारणं पश्येत् अनविक्रीतं अधिस्थानं योग-दानप्रतिग्रहं योगः उपधिः दानं प्रतिग्रहः तं यत्रयोगेयत्रदानं यत्र प्रतिग्रहे उपधिंपश्येत् यत्र कार्ये उपाधिकं परं पश्येत्तत्कार्यं विनिवर्तयत् ।। १६५ ।।

(७) **मणिरामः।** छलेन कृतं सर्वं निवर्तत इत्यर्थः ।। १६५ ।।

(८) **गोविन्दराजः। योगाधमनविक्रीतमिति।** उपाधिना ये बन्धविक्रयदानप्रति-गृह्यः क्रियन्ते न ग्रहणादि तान् राजा विनिवर्तयेत् कृतानकृतान्कुर्यात्। तथाऽन्यत्रापि निक्षेपादौ यत्र छद्मार्थं करणं जानीयान्न वस्तुतो निक्षेपादि कृतं तत्सर्वं विनिवर्तयेत् ।। १६५ ।।

(९) **भारुचिः।** ऋणसम्बन्धादिदमपरं तद्गतमेवोच्यते—योगाधमनं नाम लोकयात्रायां यन्न स्फुटमुच्यते। त्वं तावदनेन कार्यं कुरु अहं पुनरनेन कार्यं करिष्यामीति। विक्रियोऽप्ये-वंलक्षणयोगदानं च यद्यात्रोत्सवव्यपदेशेन सोपधं दीयतेऽधमर्णादिभिः उत्तमर्णप्रभृतीनाम-

मुमूषश्चानपत्यो ज्ञातिभ्यो बिभ्यन्नैराश्याद्दासि। एवमादिना योगेन दानं दानेन प्रतिग्रह-योर्विशेषः। दानं मैत्र्यादिप्रतिग्रहो धर्मेण चाप्युपधि पश्येद्दानग्रहगतमन्यगतं वा तत्सर्वं विनिवर्तयेत्। राजा व्यवहारान् पश्यन् अन्यत्र वा ऋण सम्बन्धाच्चेदमन्यमपरं तद्गतमेवोच्यते॥ १६५॥

**ग्रहीता यदि नष्टः स्यात्कुटुम्बार्थे कृतो व्ययः।**
**दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः॥ १६६॥**

(१) **मेधातिथिः**। उक्तम्–येन गृहीतमृणं तेन प्रतिदातव्यम्–तदभावे पुत्रपौत्रैः–तदभावे तदृक्थहारिणा। न तद्व्यतिरेकेणान्यस्य दानं प्राप्तमिष्यते। अत्र क्वचिद्विषये तदर्थमिदमुच्यते। येन गृहीतं धनं स **चेन्नष्टो** मृतो देशान्तरं गतो वा–**कुटुम्बे च कृतो व्ययः–दातव्यं बान्धवैस्तद्** भ्रातृतत्पुत्रपितृव्यादिभिः–**प्रविभक्तै**र्विभक्तधनैरपि–**स्वतः** स्वधना-दित्यर्थः। यावद्भ्रातरः सह वसन्ति तेषां यदृणमुपजातं तद्गृहमध्यादेव दीयते। तच्छि-ष्टेऽस्य विभागः। यथोक्तम्–

**"पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।**
**मात्रा वा यत्कुटुम्बार्थं दद्युस्तत्सर्वमृक्थतः॥"** इति।

अविभक्तानामन्यतमेन यत्कुटम्बार्थमृणं कृतं तद्भ्रातृपितृव्यतत्पुत्रादयः सर्वे दद्युर्न त्वकुटुम्बार्थमित्यर्थः। अविभक्तग्रहणात्तेषामेव तथाविधमृणं संभवेत् प्रायः। न हि प्रवि-भक्ताः परकीयकुटम्बभरणार्थमृणं गृह्णन्तो दृश्यन्ते–अतः **प्रविभक्तैरपीत्याह।**

अपिशब्दादविभक्तैश्च। यदि कश्चिद्भ्रातॄणां विभक्तानां स्वकुटुम्बभरणमकृत्वा प्रवसेदितरश्च महासत्त्वतया तदीयं कुटुंबं बिभृयात्–तत्र विभक्तेनापि भ्रात्रा पितृव्येण वा यदृणं कृतं तदितरो दद्यादेव देशान्तरागतः॥ १६६॥

(२) **सर्वज्ञनारायणः**। विभक्तेनाविभक्तेन वा भ्रात्रादिना कुटुम्बार्थे यः कृतो व्ययः स तत्र मृते तिष्ठद्भिर्दायादैर्देयइत्यर्थः। स्वतो धनात् मृतसंबन्धिनः स्वीयाद्वा॥ १६६॥

(३) **कुल्लूकः**। ऋणग्रहीता यदि मृतः स्यात्तेन पूर्वविभक्ताविभक्तसर्वभ्रातृ-कुटुम्बसंवर्द्धनार्थं तदृणव्ययः कृतस्तदा तदृणं विभक्तैरविभक्तैश्च स्वधनाद्दातव्यम्॥ १६६॥

(४) **राघवानन्दः**। यदि ग्रहीता ऋणादेर्मृतस्तदा कागतिस्तत्राह ग्रहीतेति। ग्रहीता धमर्णो ज्येष्ठभ्रात्रादिः। कुटुम्बार्थेकृतोव्ययस्तदृणंव्ययितम्। तदा स्वतः स्वकीयाद्धस्तात्। नष्टपदं प्रव्रज्याद्युपलक्षणम्॥ "पितरि प्रोषिते प्रेते व्यसनादियुतेपि वा। पुत्रपौत्रैर्ऋणंदेयं-निन्ह्वे साक्षिभाषित"मितियाज्ञवल्क्योक्तेः। पितृपदं ज्येष्ठाद्युपलक्षणम्। बान्धवैः पुत्राद्यैः॥ १६६॥

(५) **नन्दनः**। ऋणस्य ग्रहीता नष्टो मृतस्तिरोहितोयदि स्यात् कुटुम्बे च ऋणस्य तस्य व्ययस्तेन कृतोयदि स्यात् बान्धवैर्भ्रातृभिर्यैस्तदृणमविभक्तैर्भुक्तंपश्चात्प्रविभक्तैरपितैः स्वीकार्यादर्थात्तदृणमुत्तमर्णाय दातव्यं स्यात्॥ १६६॥

(६) **रामचन्द्रः**। यदि ग्रहीता स्वामी नष्टःस्यात् च पुनः कुटुम्बार्थे कृतो व्ययः तत्-ऋणं बान्धवैःदातव्यम् विभक्तैः बान्धवैः स्वस्वधनान्न दातव्यम् ।। १६६ ।।

प्रति....एव श्लोकः....

(७) **मणिरामः**। योगशब्दः छलवाची। अपिशब्दाद्विभक्तैरपि स्वतः स्वधनाद्दातव्यं ।। १६६ ।।

(८) **गोविन्दराजः**। **ग्रहीतेति**। अविभक्तो विभक्तो वा भ्रात्रादिसाधारणकुटम्बव्ययार्थं विभक्तभ्रातृकुटम्बव्ययार्थं च ऋणं गृहीत्वा कुटम्बव्ययकृत् मृतो बाधितो वा तदा तदृणं अविभक्तैर्विभक्तैर्वा ऋक्थिभिः स्वधनाद्दातव्यम् ।। १६६ ।।

**कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।।**
**स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ।। १६७ ।।**

(१) **मेधातिथिः**। तिष्ठन्तु तावद्भ्रात्रादयः। **कुटुम्बार्थेऽध्यधीनोऽपि** गृहभृत्योऽपि **व्यवहारं** गोपश्वादिविक्रयं क्षेत्रस्थण्डिलादिप्रयोगं कर्षणाय ऋणं व्यवहारं वा **यमाचरेत्**–**स्वदेशे विदेशे वा** सन्निहितस्य प्रोषितस्य वा–**तं ज्यायान्** गृहस्वामी **न विचालयेत्** अविचार्यैव साधु कृतमित्यनुमन्येत।

अन्ये तु पूर्वशेषोऽयमर्थवादो न विधिरित्याहुः। तदयुक्तम्। न ह्यर्थवादतावीजं किंचिदस्ति विभज्यमानं साकांक्षं यत्तच्छब्दाभिसम्बद्धम्।

अथ–'मत्तोन्मत्तार्त्ताध्यधीनैः' (१६३) इत्यस्वातन्त्र्यादध्यधीनस्य न तत्कृतप्रमाणमिति।

अकुटुम्बार्थे संनिहिते च स्वामिनि न युक्तं कल्पयितुम्। अन्यथा कुटुम्बावसादः स्यात्। अतस्तद्भरणात्मके व्यापारे प्रमाणीभवति दैवादध्यधीनः ।। १६७ ।।

(२) **सर्वज्ञनारायणः**। अध्यधीनो भृत्यः। विदेशे स्वपरोक्षे। ज्यायानधिकृतः ।। १६७ ।।

(३) **कुल्लूकः**। तद्देशस्थे देशान्तरस्थे वा स्वामिनि स्वामिसंबन्धिकुटुम्बव्ययनिमित्तं-दासोपि यदृणादानादि कुर्यात्स्वामी तत्तथाप्यनुमन्येत ।। १६७ ।।

(४) **राघवानन्दः**। एवं कुटुम्बपोषणाय कनिष्ठादिगृहीतमपि ज्यायसा देयमित्याह कुटुम्बेति। अध्यधीनः कनिष्ठादिः नविचालयेत्। न ददामीति न ब्रूयात् ।। १६७ ।।

(५) **नन्दनः**। यस्य व्यवहारमाणादिप्रयोगो ज्यायान्स्वतंत्रो गृही न विचारयेत्। ।। १६७ ।।

(६) **रामचन्द्रः**। अध्यधीनः गर्भदासः कुटुम्बार्थे यं व्यवहारं ऋणं आचरेत् करोति स्वदेशे वा तं ऋणं ज्यायान् ज्येष्ठः न विचारयेत् अन्यथा न कुर्यात् ।। १६७ ।।

(७) **मणिरामः**। कुटुंबार्थे स्वामि कुटुंबार्थे। अध्यधीनोपि दासोपिज्यायान् स्वामी ।। १६७ ।।

(८) **गोविन्दराजः**। **कुटुम्बार्थ इति**। कुटुम्बार्थे धनिनोऽपि व्यवहारं समाचरन् स्वदेश विदेशे वा गतं सन्तं आगच्छन्तं प्रतीक्षयेत् ।। १६७ ।।

(९) **भारुचिः।** कुटुम्बस्थित्यैव स्वाम्यसन्निधाने, अध्यधीनस्वामी गृहस्थः न विचारयेत् मम परोक्षे- ऽप्येतत् अध्यधीनं त्वया कर्म कस्मात् कृतमिति न विचारयेत्। एवमविचार्य तद्धनं प्रतिकुर्यात्। अथवा पूर्वश्लोकशेषार्थोऽयं वर्णनीयः। कथं कृत्वा कुटुम्बार्थेऽध्यधीनकृतो व्यवहारे न च सिद्धयतीत्युक्तम्। अथ त्वसम्बन्धकृतो व्यवहारो न सिद्धयतीत्येतस्माच्छक्यते कथञ्चिदध्यधीनस्य ज्यायसि परोक्षे गृहार्थे स्वातन्त्र्यं कल्पयितुम्। ततस्सार्थ एवायं श्लोको यथैनमवोचाम सामर्थ कुटुम्बार्थं पुनरध्यधीनस्य धनं प्रयोक्ता ॥ १६७ ॥

**बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।**
**सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ १६८ ॥**

(१) **मेधातिथिः।** यथा न बालास्वतन्त्राप्रकृतिस्थोपधिकृतं प्रमाणं तद्वद्बलकृतमपि। **सर्वान्बलकृतानर्थान्निवर्त्यानित्येव** विधिः। **भुक्तं दत्तं लेखितमित्युदाहरणमात्रम्।**

तत्र **बलाद्दत्तं** यदनुपयुज्यमानं क्षेत्रारामादिवाहनाय दीयते—वृद्धिकामो वा यद्धनं बलादारोपयति—भारवाहनमनिच्छताम्—गृहेषु मूल्यार्पणं पण्यमश्नुते।

**लेखितं** पत्रकरणम्।

**सर्वानित्यन्या**न्यप्येवंविधानर्थान्कार्याणीत्यर्थः।

**योगाधमनमित्यत्र** निपुणं दर्शितमत्रापि श्लोके समस्य योगबलशक्ये प्रक्षेप्तुं पृथक् श्लोकद्वयकरणम्। विचित्रा श्लोकस्य कृतिर्मनोः। मत्तोन्मत्तार्ताध्यधीनैर्बालवृद्धैर्वा बलात्कृतः असंबद्धेन योगाच्च कृतो व्यवहारो न सिध्यति—इति न सिद्ध्यत्येव, न मानवद्भवति ॥ १६८ ॥

(२) **सर्वज्ञनारायणः।** बलात् बन्धनताडनादिना तद्भयेन वा। सर्वान् क्रयादीन्। अकृतान्निवर्तनीयान् ॥ १६८ ॥

(३) **कुल्लूकः।** बलाद्दत्तमप्रतिग्राह्यादि बलाद्भुक्तंभूम्यादि बलाल्लेखितंचक्रवृद्धिपत्रादि प्रदर्शनंचैतत्सर्वान्बलकृतान्व्यवहारान्निवर्तनीयान्मनुराह ॥ १६८ ॥

(४) **राघवानन्दः।** किंच बलादिति। बलादावश्यकर्तव्यतातिरेकात् दत्तं व्ययितं अप्रतिग्राह्यादि राजादिसहायाद्वा दत्तं दापितम्। भुक्तं निषिध्यमानं भूम्यादि। लेखितं चक्रवृद्ध्यादिपत्रम् सर्वान्। क्रयविक्रयादीन् अकृतान् मनुरब्रवीदित्यन्वयः। मत्ताद्यतिरिक्तविषयम् तदसिद्धस्योक्तत्वात् ॥ १६८ ॥

(५) **नन्दनः।** प्रमाणादिकं कुर्यादेव बलकृतं सर्वं निवर्तनीयमित्याह बलाद्दत्तमिति। तदप्यकृतंमनुरब्रवीत्। सर्वानुक्तव्यतिरिक्तान्योऽर्थश्चास्मिन्प्रकरणे साक्षिप्रतिभुवोः परार्थेक्लेशउक्तः। दण्डदशबन्धादिनाराज्ञोवृद्धिश्चोक्ता ॥ १६८ ॥

(७) **मणिरामः।** अकृतान् व्यर्थान् ॥ १६८ ॥

(८) **गोविन्दराजः। बलादिति।** बलाद्दत्तं कुत्सितकन्यादि, बलाद्भुक्तं क्षेत्रादि बलाच्च लेखितं पत्रादीत्येवमादीन् सर्वान् बलकृतानर्थान्निवर्तनीयान्मनुराह ॥ १६८ ॥

(९) **भारुचिः।** बलात्तावद्दत्तं वृद्धिकामेन धनं क्षेत्राद्याधिभोगकामेन च तन्निवर्त्यं राज्ञाबलाञ्च भुक्तमाधिद्रव्यं प्रतिबद्धेन सता तदाधिभोगान्वेषणेन निवर्त्यम्। अथवाना-धिद्रव्यं विग्रहादिबलाद्भुक्तं दशवर्षभो (गो? गे) नैतदपहरिष्यामीत्यनया बुद्धया बलाद्यच्चापि लेखितं पत्रे सर्वाश्चैवंप्रकारानन्यानप्यर्थान् साक्षित्वप्रतिभूकुलग्रहणकालावधि द्वैगुण्यकरणा-न्निवर्त्यान् मनुराह ।। १६८ ।।

**त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम् ।**
**चत्वारस्तूपचीयन्ते विप्र आढयो वणिङ्‌ नृपः ।। १६९ ।।**

(१) **मेधातिथिः।** परेणार्थ्यमाने साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणं च कर्तव्यं कुला-दिभिर्न स्वयमुपेत्य हठात्। अतः स्वयं कुर्वन्तो न प्रमाणीभवन्ति। अथवा परस्यार्थं कुर्वन्तः क्लेशमाप्नुवन्ति, न ह्येषां स्वार्थगन्धोऽस्त्यतो बलान्न कारयितव्याः। परेण वाऽर्थ्यमाना विप्रादय **उपचीयन्ते।** अतो न हठादनिच्छन्विप्रः प्रतिग्राहयितव्यः। अथवा परसंबन्धिनोऽ-र्थयोपचयो विप्रस्य—अतः स्वार्था प्रवृत्तिर्न परार्थैव—तेन विप्रेण न बलात्तदनादाने प्रवर्तनीयम्। हृतबलसाध्यं दानमिति लोकप्रवादो न दापयन्तं निषेधति। तदिच्छन्तं दापयेत्। याच्ञ्या तु बलम्। 'एव**माढ्यः** कुसीदवृत्तिर्धनवानिव न प्रयोजनीयः किमिति कुसीदं व्यवहारेऽन्यस्मै ददाति न मह्यमिति'। अथवा तेन बलवताऽन्यस्मिन्ननिच्छति व्ययं कुर्वति धनमारोपयित-व्यम्। यतः परेणार्थ्यमान उपचीयते न बलात्प्रयुञ्जानः—शास्त्रनिषेधात्। एवं **वणि-क्कु**सीदीव धनवृद्धिकाम एव व्यवहारयति। **वणिक्** पण्यजीवी। **नृपो** राजाऽपि प्रयुक्त-राजदण्डमाददान उपचीयते—न तु बलादिप्रोत्साहनेन व्यवहारयन्। तदुक्तं 'नोत्साह-येत्स्वयं' कार्यम्" इति। विप्रादीनां विधिरनुवादो राज्ञो दृष्टन्तार्थः। अथवा सर्वस्यो-दाहरणप्रपञ्चः। तथाऽग्रेतनोऽपि ।। १६९ ।।

(२) **सर्वज्ञनारायणः।** कुलमविभक्ता ज्ञातयो मृतस्य ज्ञातेरस्वस्याप्यृणं शोधयन्तः। अतः साक्षित्वप्रतिभूत्वानङ्गीकारेण कुलत्वंच विभागे निवर्तनीयमित्यर्थः। व्यवहारेण तद्दर्शनेन। चत्वारः उपचीयन्ते परधनंलभन्ते विप्रः प्राड्विवाकः राज्ञःसकाशाद्धनप्राप्त्या। आढ्योधनिकोवृद्ध्या जीवनेन। वणिक् वाणिज्येन। नृपोराजा दण्डादिप्राप्त्या ।। १६९ ।।

(३) **कुल्लूकः।** साक्षिणः प्रतिभूः कुलंच धर्मार्थव्यवहारद्रष्टा त्रयएते परार्थंक्लेश-मनुभवन्ति तस्मात्त्वनेन साक्ष्यं प्रातिभाव्यंव्यवहारईक्षणंच नाङ्गीकारयितव्याः चत्वारः पुनः ब्राह्मणोत्तमर्णवणिग्राजानः पदार्थंदानफलोपादानऋणद्रव्यार्पणविक्रयव्यवहारेक्षणरूपं-कुर्वाणाधनोपचयंप्राप्नुवन्ति। तस्माद्विप्रोदातारमाढ्योऽधमर्णंवणिक्क्रेतारंराजा व्यवहर्तारं-बलेन न प्रवर्तयेत्। पूर्वश्लोकाभिहितबलनिषेधस्यैवायंप्रपञ्चः ।। १६९ ।।

(४) **राघवानन्दः।** बान्धवानपि दापयेदिति प्रसंगेन सप्तानां परतः यथासंभवं-क्लेशवृद्धीराह त्रयइति। तत्र साक्षिप्रतिभूकुलानि क्लेशभाञ्जि। तत्र साक्षिणां सत्योक्तौ न किंचित् अनृतोक्तौ कुलनाशाद्युक्तम्। प्रतिभुवः प्रातिभाव्यदर्शनादौ नकिंचित्

तददर्शनादौ स्वधनव्ययः* एवं कुलस्य कुपुत्रेण नाशः तस्मात् परतःक्लेशभाजस्तेन बलान्नप्रवर्तनीया इति भावः। प्रतिभूपदं निक्षेपधाद्युपलक्षकम् सोऽपि परार्थ एव क्लिश्यति निक्षेपधारणेन किंचित् तन्नाशे चाप्रतिष्ठा तद्दानमिति। परेभ्योविप्रादीनांचतुर्णां प्रतिग्रहाणां दानानर्धविक्रियकरादिग्रहैरुपचय इति। तस्मात् विप्रेण दाता आढ्येनाधमर्णः वणिजा क्रेता नृपेण कार्यार्थी च न बलात्प्रेरणीय इति भावः ॥ १६९ ॥

---

* व्ययः=व्ययः उक्तः (राघ० २)

(५) **नन्दनः**। तत्र बलात्कारमाशङ्क्य परिहरति त्रय इति। कुलशब्देन कुलीनोऽभिप्रेतः तस्योपन्यासोदृष्टान्तार्थः। यथा कुलीनः परार्थे यतमानः क्लिश्यति एवं साक्षिप्रतिभुवाविति तस्मान्नात्र बलात्कारः कर्तव्य इत्यभिप्रायः। चत्वारः परार्थउपचीयन्ते वर्द्धन्ते। विप्रस्योपचयः परार्थएव न स्वार्थो देवपितृशेषत्वात्। आढ्योवार्द्धुषिकस्तस्योपचयः परार्थोनात्मार्थः। प्रजावृद्ध्यर्थत्वात्। यथा विप्रादयः प्रजार्थमुपचीयन्त एवं नृपोऽपि परार्थमुपचीयते तस्मादेतदर्थात्प्राप्तंनबलादित्यभिप्रायः ॥ १६९ ॥

(६) **रामचन्द्रः**। कुलं अविभक्ताज्ञातयः। चत्वारः उपनीयन्ते जीवन्ति। विप्रः प्राड्विवाकः। श्लाध्यः दानादिव्यवहारेण। नृपः राजा विवदमानामितियोगीश्वरः ॥ १६९ ॥

(७) **मणिरामः**। यतः एतेः त्रयः क्लेशं प्राप्नुवंति अतः साक्ष्यं प्रातिभाव्यं व्यवहारदर्शनं च नांगीकर्तव्यं। चत्वारोविप्रादयः क्रमेणाप्रतिग्रह ऋणार्पणविक्रय व्यवहारदर्शनं कुर्वाणाः उपचीयंते। तस्मादेतत्सर्वं बलान्न प्रवर्तयेत् इति तात्पर्यं ॥ १६९ ॥

(८) **गोविन्दराजः। त्रय इति**। साक्षिणः प्रतिभुवो धर्मदृष्टारो त्रयः क्लिश्यन्ते क्लेशमतुभवन्त्येते। न हठादेते साक्ष्यादिकारयितव्याः। चत्वारः पुनः ब्राह्मणोत्तमर्ण वणिग्राजानः परार्थदानफलोत्पादनोद्यमे धनार्ऽपण विक्रय व्यवहारेण उपकुर्वाणा धनोपचयं प्राप्नुवन्ति। तस्मान्नैव हठादनाग्रहण क्रयव्यवहारकरणेषु दात्रधमर्णके व्यवहारे प्रवर्तनीयाः ॥ १६९ ॥

(९) **भारुचिः**। यस्मात् परस्यार्थं कुर्वन्ति दृष्टानि साक्षिप्रतिभूकुलानि अतो नानिच्छतस्तानि कारयेत्, साक्ष्यादीनि चत्वारस्तूपचीयन्ते, विप्रादयः परार्थमेव कुर्वन्तः। विप्रस्तावन्नादित्सन्तं दापयेत् दातारमाढ्यं विध्यर्थं जिघृक्षन्तं न ग्राहयेत्। वणिक् च नाचिकीर्षन्तं कारयेत् लाभार्थी, एवं नृपो विना व्यवजिहीर्षन्तं व्यवहारयेत्। एवं च सत्ययं श्लोकः अर्थस्यबलात्कृतस्य पदार्थस्य निवृत्तिप्रदर्शनार्थो न ज्ञेयः। यतच्श्चैतदेवम् अतो बलवानपि सन् राजा व्यवहारादन्यत्र च ॥ १६९ ॥

**अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः ॥**
**न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत् ॥ १७० ॥**

(१) **मेधातिथिः**। करदण्डशुल्कादि शास्त्रविहितं वर्जयित्वाऽन्यात्पौरधनमनादेय

राज्ञः क्षीणकोशस्यापि। यत्तु शास्त्रन्यायागतं रक्षानिर्वेशधनं **तत्सूक्ष्मं** कार्षापणमात्रमपि **न त्यजेत्**। तदुक्तं "वल्मीकपथवद्राजा कोशवृद्धिं तु कारयेत्" इति ।। १७० ।।

(२) **सर्वज्ञनारायणः।** अतो यत्कर्तव्यंनृपेण तदाह अनादेयमिति। यतोधर्मतोपि परवित्तग्रहणे नोपचीयते नृपस्तस्मादनादेयमशास्त्रीयं नाददीत ।। १७० ।।

(३) **कुल्लूकः।** क्षीणधनोपि राजा नाग्राह्यमर्थंगृह्णीयात् समृद्धोपि स्वल्पमपि ग्राह्यंधनंन त्यजेत् ।। १७० ।।

(४) **राघवानन्दः।** प्रजास्नेहेन राजाकरादि नव्यापादयेदितिसार्थवादमाह अनादेय-मितिचतुर्भिः। अनादेयमन्यायोपात्तं नाददीतैव। आदेयं न्यायोपात्तं सूक्ष्मं रजोमात्रं नोत्सृ-जेत् न त्यजेत्। परिक्षीणो धनादिभिः तैः समृद्धोवा ।। १७० ।।

(५) **नन्दनः।** एवंबलात्कृतंसर्वंराज्ञानिवर्तनीयमित्युक्तं अधना स्वयमपि राज्ञा बलात्कारोनकार्यइत्याह अनादेयमिति: परिक्षीणोप्यसमृद्धोपि अनादेयमदण्डचस्यार्थ-सूक्ष्ममपि बलान्नाददीत। समृद्धोपि दण्डचस्यार्थंसूक्ष्ममपि बलान्नोत्सृजेत् ।। १७० ।।

(६) **रामचन्द्रः।** द्वाभ्यामाह अनादेयमिति। परिक्षीणोपि पार्थिवः अनादेयम ग्राह्यद्रव्यं नाददीत न गृह्नीयात्। च पुनः समृद्धोपि राजा सूक्ष्ममपिअर्थं अदेयम् अर्थं नोत्सृजत् ।। १७० ।।

(८) **गोविन्दराजः। अनादेयमिति।** क्षीणकोशोऽपि राजा अग्राह्यं न गृह्णीयात्। समृद्धोपि स्वल्पमपि ग्राह्यमर्थं न परित्यजत् ।। १७० ।।

**अनादेयस्य चादानादादेयस्य च वर्जनात् ।।**
**दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ।। १७१ ।।**

(१) **मेधातिथिः।** अनादानार्हमनादेयम्। अर्हे कृत्यस्तच्च दर्शितम्। **दौर्बल्यं ख्याप्यते** प्रकृतिभिः–'अस्मान्दण्डयति स्तेनाटविकसामन्तादीन्न शक्तो विजेतुमिति'। परे-स्वशक्ति प्रथयन्ति राष्ट्रीयाः। अतस्मतैरभिषेण्यमानो विरक्तप्रकृतिरिह नश्यति। आदा-नात् **इह**–**प्रेत्य च** धर्मदण्डनात् ।। १७१ ।।

(२) **सर्वज्ञनारायणः।** अनादेयादानाद्दरिद्रोयमिति लोकेऽख्यातिरधर्मश्चदौर्बल्य-हेतुर्जायतेऽतःप्रेत्येहच नाशः। एवमादेयवर्जनादशक्तोयमित्यपकीर्तिःप्रजानामधर्मचरणे-नाऽधर्मश्च ।। १७१ ।।

(३) **कुल्लूकः।** यस्मात् अनादेयस्येति। अग्राह्यग्रहणाच्छास्त्रीयग्राह्यपरित्यागात्तु-राज्ञः पौरैरसामर्थ्यं ख्याप्यते ततश्च स प्रेत्याधर्मेण नरकादिभोगादिहाकीर्त्या विनश्यति ।। १७१ ।।

(४) **राघवानन्दः।** ततःकिंतत्राह अनादेयस्येति। ज्ञानतोवर्जनात्स्वधनस्य दौर्बल्यं ख्याप्यते गृह्यते। अयमर्थः। नीतिशास्त्रानभिज्ञोयंयतोअनादेयमादत्तेऽपरिपूर्णधनोयमित्या

क्रमणीयः यतआदेयमपि नादत्ते आदातुमसमर्थोवेति । अनादेयस्यादानात्प्रेत्य नश्यति ।। १७१ ।।

(५) **नन्दनः** । उक्तार्थाननुष्ठाने च दोषमाह अनादेयस्येति ।। १७१ ।।

(६) **रामचन्द्रः** । अनादेयस्य अग्राह्यस्य आदानात्स्वीकारात् आदेयस्य स्वकरणीयस्य चवर्जनात् परित्यागात् तस्य राज्ञोदौर्बल्यंख्याप्यते । सराजा प्रेत्यइहलोके नश्यति ।। १७१ ।।

(७) **मणिरामः** । अग्राह्यग्रहणात् शास्त्रीयग्राह्यपरित्यागाच्च राज्ञः पौरैरसामर्थ्यं ख्याप्यते परलोके नरकप्राप्तिश्चेत्यर्थः ।। १७१ ।।

(८) **गोविन्दराजः** । **अनादेयस्येति** । अग्राह्यग्रहणात् ग्राह्यपरित्यागाच्चाशक्तानसद्‌दण्डे योजयति । शक्तानां पुनः प्रकृतमप्युपेक्षते भीरुतयेत्येवं पौरैर्दौबल्यं राज्ञः प्रकाश्यते स चादेयादाने अस्वधर्मोत्पाद प्रकृतिकोपाभ्यामादेयवर्जनेन च क्षीणकोशतया राज्यविनाशादिहलोकपरलोकयोर्विनश्यति ।। १७१ ।।

(९) **भारुचिः** । अत्र चादेयापरिवर्जननियमः शास्त्रसामथ्यात् अतो वर्ज. . . . ।। १७१ ।।

## स्वादानाद्वर्णसंसर्गात्त्वबलानां च रक्षणात् ।।
## बलं संजायते राज्ञः स प्रेत्येह च वर्धते ।। १७२ ।।

(१) **मेधातिथिः** । स्वस्य न्यायप्राप्तस्यादानम् । शोभनं वाऽऽदानम् । भव्यमेव शोभनम् । वर्णयोरेव संसर्गः समानजातीयैर्**वर्णसंसर्गः** । द्विष्ठत्वात्संसर्गस्य च संबन्धिनोरश्रुतत्वाद्वर्णानां प्रस्तुतत्वात्तत्रैवापेक्षा युक्ता । यस्तु वर्णानामवान्तरप्रभवैः संसर्गो नासौ वर्णानामेव संबन्धितया व्यपदेष्टुं शक्यते ।

कश्चित्तु नकारं पठति–'वर्णासंसर्गादिति' । सर्वथा वर्णसंकरप्रतिषेधानुवादोऽयम् । दुर्बलानां बलवद्भिर्द्वेषिभिरभिभूयमानानां तेभ्यस्त्राणाद्धेतोः ।

**राज्ञो बलं संजायते** । सम्यग्व्यवहारदर्शनं कर्तव्यमधर्मदण्डनं च न कर्तव्यमित्येतद्विशेषाः पठिष्यन्ते श्लोकानामर्थवादाः ।। १७२ ।।

(२) **सर्वज्ञनारायणः** । आदानादुचितदण्दादिग्रहणाद्धनबलम् । वर्णानामसंकरेण संसर्गात् संसर्जनात् दुर्लभरक्षणाच्च धर्मबलम् ।। १७२ ।।

(३) **कुल्लूकः** । न्याय्यधनग्रहणाद्वर्णानांसजातीयैः शास्त्रीयपरिणयनादिसंबन्धात् यद्वा वर्णसंसर्गाद्वर्णसंकरादित्य चापि रक्षणादिति योजनीयंप्रजानांदुर्बलानांबलवद्भ्योपिरक्षणात्सामर्थ्यमुपजायते नृपस्य ततश्चासाविहलोकपरलोकयोच्च वर्धते ।। १७२ ।।

(४) **राघवानन्दः** । किंचआदानादिति । आदानात्धर्मसंसर्गादिति हेतुमद्भावे पञ्चम्यौ । न्यायोपात्तधनादिना धर्मवृद्धिःप्रेत्य वृद्धिः । इहापि वृद्धिःकीर्तिधनाभ्यां वर्णसंसर्गादितिक्वचित्पाठस्तदाऽऽदानादिह वृद्धिर्वर्णसंसर्गाच्छास्त्रीयपरिपालनेन प्रेत्य वृद्धिः । रक्षणाद्बलं चतुरङ्गबलवान्हि रक्षितुंसमर्थोजायते ज्ञायतेवा ।। १७२ ।।

(५) **नन्दनः**। उक्तार्थानुष्ठाने फलमाह स्वादानादिति। स्वादानात्स्वस्य प्राप्त-द्रव्यस्यादानाद्ग्रहणात्। वर्णसंश्लेषात्वर्णैः सह प्रीत्येति यावत् ।। १७२ ।।

(६) **रामचन्द्रः**। स्वंद्रव्यंतस्य आदानात् उपहितदण्डादिग्रहणात्। वर्णससंर्गात्सां-कर्यराहित्यात् ।। १७२ ।।

(७) **मणिरामः**। आदानात् न्यायेनाऽर्थग्रहणात् ।। १७२ ।।

(८) **गोविन्दराजः । स्वादानादिति। बलवान्ख्याप्यते राजा स प्रेत्येह च वर्धते।** न्याय्यधनग्रहणाद्वर्णानां समानजातीयैर्वर्णैः स्त्रीषु च सम्बन्धाद्दुर्बलानाञ्च बलवद्भ्यो रक्षणाद्बलवानिति राजा लोके कथ्यते। अतश्चासाविह (पर) लोकयोर्वर्धते ।। १७२ ।।

(९) **भारुचिः**। यथाशास्त्रं पुनरस्य वर्तमानस्य व्यवहारेभ्योऽन्यतश्च पौरजान-पदेभ्यः.....स्तद्रव्यादानाद् दुर्बलानां च बलवद्भ्यो रक्षणात् वर्णानामसर्गः परस्परेणा सङ्करः प्रजासु भवति। ततश्च राजा प्रेत्येह वर्धते इति अधिकृतविधिस्तुतिमात्रमिदं यस्माच्चैतदेव ।। १७२ ।।

**तस्माद्यम इव स्वामी स्वं हित्वा प्रियाप्रिये ।।**
**वर्तेत याम्यया वृत्त्या जितक्रोधो जितेन्द्रियः ।। १७३ ।।**

(१) **मेधातिथिः**। तथा चैतदेव प्रपञ्चयति। अयं सेवक आत्मीयोऽतः **प्रियः**, अयं च केवलं राष्ट्रवासी यस्यैव राष्ट्रं तमेवोपतिष्ठतेऽतोऽ**प्रियः**। तद् **हित्वा** तद्विदित्वा **यमव**-त्प्रजासु तुल्यः परिपालने व्यवहारे च स्यात्। ईदृशी हि यमस्य वृत्तिर्दृष्टा। यस्येत्यणो बाधकं तत्रौपसंख्यानिकं यकारमिच्छन्ति। कः पुनर्यमतुल्यतां भजति। **जितक्रोधो जिते-न्द्रियः**। रागद्वेषौ जयेत्–प्रत्यासङ्गाख्यानेन ।। १७३ ।।

(२) **सर्वज्ञनारायणः**। प्रियाप्रिये मित्रत्वशत्रुत्वे। याम्यया वृत्त्या कर्मानुरूप-सुखदुःखदाने। जितेन्द्रियो जितस्वेन्द्रियजकामलोभः ।। १७३ ।।

(३) **कुल्लूकः**। यतएवं तस्माद्यमेति। तस्माद्यम इव राजा वशीकृतक्रोधो जितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य यमस्य चेष्टया सर्वत्र साम्यरूपया वर्तेत ।। १७३ ।।

(४) **राघवानन्दः**। उपसंहरति तस्मादिति। स्वामी राजा यमो हि यथाऽदृष्टानु-रूपेण दण्डानुग्रहौ करोति न प्रत्यवैत्येवं राजाऽपि स्वारसिकक्रोधादिविवर्जितो दृष्टापराधा-नुसारेण वर्तेतेत्यर्थः ।। १७३ ।।

(६) **रामचन्द्रः**। तस्मात्कारणात् स्वामी राजा प्रियाप्रिये स्वयं हित्वा याम्यया वृत्त्या सकललोकसमदृष्ट्या मित्रामित्रेति हित्वा वर्तेत। यथा यमः वर्तते ।। १७३ ।।

(७) **मणिरामः**। याम्यया वृत्या सर्वत्र साम्यरूपया ।। १७३ ।।

(८) **गोविन्दराजः**। यतः **तस्मादिति**। तस्माद्यम इव राजा वशीकृतक्रोधेन्द्रिय आत्मनश्च प्रियाऽप्रिये परिहृत्य यमसम्बन्धिन्या चेष्टया रिपुमित्रसाम्यत्वेन वर्तते (वर्तेत) ।। १७३ ।।

(९) **भारुचिः।** समः प्रजासु स्यादित्यस्य राज्ञोऽयमुपदेशार्थः। तथा च वैषम्यहेतुवृ-त्याख्यानमाह जित- क्रोधो जितेन्द्रियः इति ।। १७३ ।।

**यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ।।**
**अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ।। १७४ ।।**

(१) **मेधातिथिः। अधर्मेण यः कार्याणि** कुरुते स मोहादेवेह व्यामूढो धर्मं जह्यात्। तस्येदमधर्मजं फलम्—विरक्तप्रकृतितया **वशे कुर्वन्ति शत्रवः।** विरक्ता हि प्रकृतयः क्रुद्ध-लुब्धभीतावमानिताः परैरुपजप्येरंस्ततश्च बहुकृत्वो वशे कुर्वन्ति दण्डयन्ति बन्धन्ति घ्नन्ति राष्ट्रमपहरन्ति चेत्येष वशीकारः ।। १७४ ।।

(२) **सर्वज्ञनारायणः।** मोहाद्धर्मोनास्तीति भ्रमात् ।। १७४ ।।

(३) **कुल्लूकः।** यः पुनर्नृपतिर्लोभादिव्यवहारादधर्मेण व्यवहारदर्शनादीनि **कार्याणि** कुरुते तं दुष्टचित्तं प्रकृतिपौरविरागात्क्षिप्रमेव शत्रवो निगृह्णन्ति ।। १७४ ।।

(४) **राघवानन्दः।** उक्तार्थवैपरीत्ये दण्डमाह यस्त्विति। अधर्मेण अयथाशास्त्रेण तत्र हेतुर्मोहात्कार्याणि दण्डशुल्कादीनि। सामन्तार्थैर्दत्तहस्ताः शत्रवस्तं वशे कुर्वन्तीति शत्रुभयादप्यकार्यान्निर्वर्तितव्यमितिभावः ।। १७४ ।।

(५) **नन्दनः।** अधर्मेणासमवृत्या ।। १७४ ।।

(६) **रामचन्द्र।** यो महीपतिः मोहात् धर्मोस्तीति भ्रमात् अधर्मेण कार्याणि कुर्यात् शत्रवः तं राजानं अचिराद्वशे कुर्वन्ति ।। १७४ ।।

(७) **मणिरामः।** वशे कुर्वन्ति। पौराणां वैराग्येण ।। १७४ ।।

(८) **गोविन्दराजः। य इति।** यः पुनर्नृपो लोभादिव्यामूढतयाऽधर्मेण व्यवहार-दर्शनादीनि कार्याणि कुरुते, तमधर्मप्रकृतित्वात् क्षिप्रमेव शत्रवश्चासादयन्ति ।। १७४ ।।

(९) **भारुचिः।** अपरक्तः प्रकृतिं बहुकृत्यवन्तं वृद्धपर्युपासनादिभिः पुनराहितविज्ञानी विनयी सन् राजा ।। १७४ ।।

**कामक्रोधौ तु संयम्य योऽर्थान्धर्मेण पश्यति ।।**
**प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ।। १७५ ।।**

(१) **मेधातिथिः। सिंधवो** नद्यो यथा **समुद्रमा**श्रयन्त्याश्रिताश्चानुरागिण्यस्तन्मय्यो वसन्ति न ततो निवर्तन्ते एवं कामक्रोधजयाद्राजानं प्रजाः समयोगक्षेमास्तन्मय्यः संपद्यन्ते ।। १७५ ।।

(२) **सर्वज्ञनारायणः।** अर्थमर्थसाधनं व्यवहारादि ।। १७५ ।।

(३) **कुल्लूकः।** यो राजा रागद्वेषौ विहाय धर्मेण कार्याणि निरूपयति तं राजानं-

प्रजाभजन्ते समुद्रमिव नद्यः नद्यो यथा समुद्रान्ननिवर्तन्ते तेनैवैकतांयांति प्रजा अपि तस्मा-न्नृपादनुवर्तिन्यस्तदेकताना भवन्तीति साम्यम् ।। १७४ ।।

(४) **राघवानन्दः।** जितक्रोधइत्याद्युक्तं तत्र दृष्टान्तमाह कामेति। कामक्रोधौ रागद्वेषौ संयम्य विहाय अर्थान् प्रजापालनादीन् धर्मेण यथाशास्त्रं पश्यति यस्तम्। सिन्धवः-स्यन्दनात् नद्यःगाम्भीर्याचलमर्यादत्वबोधरत्नाकरत्वदुरवग्राह्यत्वादयो राज्ञः समुद्रमित्यनेन सूचिता इति ।। १७५ ।।

(५) **नन्दनः।** अनुवर्त्तन्ते न भिद्यन्ते ।। १७५ ।।

(६) **रामचन्द्रः।** यो राजा धर्मेण अर्थान् व्यवहारान्पश्यति ।। १७५ ।।

(७) **मणिरामः।** सिंधवः नद्यः ।। १७५ ।।

(८) **गोविन्दराजः। कामक्रोधाविति।** यश्च द्वेषपरित्यागेन राजा धर्मेण कार्याणि निवारयति तं नद्य इव समुद्रं प्रजाः संभजन्ते तन्मनसश्च भवन्ति ।। १७५ ।।

(९) **भारुचिः।** अजितकामक्रोधश्च पुनः पार्थिवः यथाह सिन्धवोऽगम्यं समुद्रं गत्वा न निवर्तन्ते किन्तर्हितन्मय्यो भवन्ति। एवमित्थंभूतस्य राज्ञो नापराध्यन्ते प्रकृतयोऽमात्यादयः। किन्तर्हि तन्मप्यो भवन्तीत्ययमुपमार्थः ।। १७५ ।।

**यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।।**
**स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ।। १७६ ।।**

(१) **मेधातिथिः। छन्द** इच्छा। तेन राजानमज्ञापयित्वा यदा प्रागुक्तैश्चतुर्भिरुपायैः स्वेच्छया धनमार्गेण प्रवृत्तं तथाभूतं वा राजपुरुषैराह्वानेनाहृतरप्रदेशेऽनुरुध्येदं हि धनमिति स च पृष्टो धारयामीति यत्प्रतिपद्यते स राज्ञा चतुर्थं भागं दण्डापयितव्यः। यावत्तस्मै धार-यति तस्य। तत्र सर्वमृणं शतं चेद्धारयति पञ्चविंशतिर्दण्डनीयः शतं तस्य दाप्यः। न त्वियं भ्रान्तिः कर्त्तव्या—शतं राज्ञः पञ्चविंशतिः शिष्टं धनिकस्य। धनिको हि तथा दण्डितः स्यान्नर्णिकः ।। १७६ ।।

(२) **सर्वज्ञनारायणः।** साधयन्तं स्वच्छन्देन स्वेच्छयाऽप्रतिरोधादिना राज्ञि वेदयेत् ज्ञापयेत्। ऋणचतुर्थभागं दण्ड्यो धनिकाय धनं दाप्यः ।। १७६ ।।

(३) **कुल्लूकः।** योऽधमर्णो राजवल्लभोहमिति गर्वादुत्तमर्णं स्वेच्छया धनं साधयन्तं-नृपे निवेदयेत्सराज्ञा ऋणचतुर्थभागं दण्ड्यः तस्य तद्धनं दापनीयम् ।। १७६ ।।

(४) **राघवानन्दः।** प्रकृतमाह यइति। योऽधमर्णः छन्देन इच्छया तस्मात्स्वधनं साधयन्तं राजवल्लभोहमितिगर्वान्नृपे निवेदयेत् स राज्ञा चतुर्थांशं दण्ड्यः। धनिकस्यापि तद्धनं दापनीयम् प्रयुक्तंसाधयेदर्थमित्यत्रोक्तोभियोगाभावाद्दण्ड इह तुदण्डइति न पौनरुक्तयम् ।। १७६ ।।

(५) **नन्दनः**। प्रासङ्गिकं बलात्कारवर्जनं परिसमाप्य प्रकृतमेव ऋणदापनमुपक्रम्याह य:साधयन्तमिति। राजन्यनिवेद्य छन्देन स्वेच्छया। स्वमर्थं संरोधनादिना साधयन्तं धनिक-मुत्तमर्णमधमर्णो नृपे निवेदयेत्। असावयमेवं मांबाधतइति सराज्ञा ऋणचतुर्भागं तस्मैदण्डनं-दाप्यः। तस्योत्तमर्णस्य तद्धनमृणं च दाप्यः।। १७६ ।।

(६) **रामचन्द्रः**। यः अधमर्णः छन्देन स्वेच्छया साधयन्तं धनिकमत्तमर्णं नृपे वेदयेत् सः राज्ञा ऋणचतुर्भागं दण्डं तस्य उत्तमर्णस्य तद्धनं च दाप्यः।। १७६ ।।

(७) **मणिरामः**। अधमर्णः राजवल्लभोहमिति गर्वात्। धनिकं उत्तमर्णं। छंदेन धनं साधयंतं नृपे निवेदयेत् सः अधमर्णः राज्ञा ऋणचतुर्थभागो दंड्यः ऋणं चोत्तमर्णाय स्वेच्छया। दाप्यः।। १७६ ।।

(८) **गोविन्दराजः**। **य इति**। स राज्ञऋर्णचतुर्भागं दण्डार्थं तस्य तद्धनम्। योऽधमर्णो राजवल्लभाभिमानी सामादिना साधयन्तमुत्तमर्णं नृपे निवेदयेत्, स राज्ञा ऋणचतुर्भागं दण्डार्थं तस्य तद्धनं दापनीयः।। १७६ ।।

(९) **भारुचिः**। राजवाल्लभ्यादविभ्यद्यो राजपुरुषस्तस्मै धनिकमावेदयेत् तस्य यथोपदेशं दण्डनं धनदानं च राजा कुर्यात्। अपरः पाठः—

**योऽसाध्यं मन्यमानस्तु वेदयेद्धनिकं नरः।**
**स राजर्णचतुर्भागं दाप्यस्तस्य च तद्धनम्।।**

अत्रापि स एवार्थः। ईषदन्यथा/भिन्नः अशक्तस्य धनदान एतद्धनदानायेदमुपायान्तरमभिधीयते धनाभावतो वैकल्पिकः।। १७६ ।।

## कर्मणाऽपि समं कुर्याद्धनिकायाधमर्णिकः।।
## समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः।। १७७ ।।

(१) **मेधातिथिः**। निर्धनोऽधमर्णो निर्धनत्वान्न मुच्यते किन्तर्हि कर्म कारयितव्यः, प्रेष्यत्वं व्रजेत्—यावता धनेन तत्कर्म कर्मकरः करोति तत्तस्य प्रविष्टं संसद्यपि कर्तव्यम्। कर्म कुर्वतश्च सलाभधने प्रविष्टं तत्स्यान्मोक्षः। **समं कुर्यात्**—उत्तमर्णेन। अथ शुद्धे धने नोत्तमाधमव्यवहार —एकोऽधमर्णोऽपर उत्तमर्ण इति। एतच्च कार्यते **समः**—समानजातीयः— **अवकृष्टजातिः**—हीनजातीयः। **श्रेयांस्तूत्तमजातीयो** गणाधिको वा—**शनैः** क्रमेण यथोत्पादं दद्यात्। नारदे पठ्यते—'ब्राह्मणस्तु परिक्षीणो शनैर्दद्याद्यथादशमिति'। अतो राज्ञा धनिक-धनसंशुद्ध्यर्थं परिक्षीणो ब्राह्मणो न पीडयितव्यः, उत्तमर्णश्च रक्षणीयः।। १७७ ।।

(३) **कुल्लूकः**। समानजातिरपकृष्टजातिश्चाधमर्णो धनाभावे सति स्वजात्यनुरूप-कर्मकरणेनापि समं कुर्यात् निवृत्तोत्तमर्णाधमर्णव्यपदेशतया धनिकसममात्मानं कुर्यात्। समजातिरत्र ब्राह्मणेतरः कर्मणाक्षत्रविट्शूद्रान्समानजातीयान्हीनांस्तु दापयेदिति कात्यायनेन विशेषितत्वात्। श्रेयान्पुनरुत्कृष्टजातिर्न कर्म कारयितव्यः किन्तु शनैः यथासंभवं तद्धनं तद्यात्।। १७७ ।।

(४) **राघवानन्दः**। यद्यधमर्णो दातुमसमर्थस्तत्र कागतिस्तत्राह कर्मणा यः समः। उत्तमर्णतुल्यजातिः ततोऽपकृष्टजातिर्वाऽधमर्णिकः कर्मणास्वजात्यनुरूपेण वेतनकृत्यादिना सममृणशोधनं कुर्यात् श्रेयांस्तु विपश्चित् शनैर्दद्यात् एवं।। हीनजातिं परिक्षीणमृणार्थंकर्म कारयेत्।। ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयमिति याज्ञवल्क्योक्तेः।। शनैः शनैर्धनमेव दद्यात् नतु कर्मणा लौकिकेन समं कुर्यात् विप्रस्य लौकिककर्मकरणे दण्डस्य वक्ष्यमाणत्वात्। आर्त्विज्यादौ तु नदोषः हीनजातिमित्यनेन क्षत्रियोवैश्यस्य शनैर्दद्यात् नतुकर्मकुर्यात् इत्येवमुत्तरत्र ब्राह्मणपदं राजसेवकगुणवत्त्वाद्युपलक्षकं तेऽपि दद्युस्तेन न प्रकृतविरोधः।। १७७।।

(५) **नन्दनः**। ऋणप्रदानाशक्तस्याधमर्णस्य जातितारतम्यवशेन ऋणापाकरणमाह कर्मणापीति। समः समानजातिरपकृष्टजातिश्चाधमर्णिको धनिकायोत्तमर्णाय कर्मणापि समंकुर्यात् ऋणसमं भृतिकर्म कुर्यादित्यर्थः। श्रेयानुत्कृष्टजातिस्तदृणंशनैर्दद्यात्।। १७७।।

(६) **रामचन्द्रः**। अधमर्णः कर्मणापि धनिकाय समं अनृणं कुर्यात् समः अन्योन्यसमः अवकृष्टजातिः हीनजातिश्च श्रेयांस्तु श्रेष्ठः तद्धनं शनैर्दद्यात्।। १७७।।

(७) **मणिरामः**। समः एकजातिः। अवकृष्टजातिश्च अधमर्णः धनाभावे सति कर्मकरणेनापि ऋणं समंकुर्यात्। श्रेयान् उत्तमर्णादुत्कृजातिस्तु अधमर्णः राज्ञौ शनैः यथा संभवंदद्यात्। न तु कर्म कुर्यादित्यर्थः। इदं ब्राह्मणेतरविषयं। ब्राह्मणस्य कर्मकरणाभावात्।। १७७।।

(८) **गोविन्दराजः**। **कर्मणेति**। समहीनजातिश्चाधमर्णो धनाऽभावे सति स्वजात्यनुरूपकर्म कारयितव्योऽपि तु शनैः तद्धनं यथासंभवं दद्यात्।। १७७।।

(९) **भारुचिः**। श्रेयसो मान्यत्वात् सोढव्यमेव। तस्याप्रदानात् अक्षान्त्या तु न कदाचिदप्यसौ समहीनवत् कर्म कारयितव्यः। ऋणापादानार्थः श्लोकः।। १७७।।

**अनेन विधिना राजा मिथो विवदतां नृणाम्।।**
**साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत्।। १७८।।**

(१) **मेधातिथिः**। **अनेनेति** पूर्वोक्तप्रकारप्रत्यवमर्शः। **विधिना** प्रकारेण। **साक्षिप्रत्ययसिद्धानि**। सिद्धशब्दः प्रत्येकमभिसंबध्यते। साक्षिभिः सिद्धानि निर्णीतानि। 'प्रत्ययः' अनुमानं दैवी वा क्रिया। **कार्याणि**। न केवल**मृणादान**मन्यदपि। **समतां नयेत्**। अर्थिप्रत्यर्थिविप्रत्तिमपाकुर्यादैक्यमन्यत उत्पादयेत्।

उपसंहृतमृणादानम्। समाप्तो व्यवहारः। सर्वत्र जयपराजयप्रकारणामेवंरूपत्वात्। न हि साक्ष्यादिभ्य ऋते किंचिदुत्तरेषु विवादेषु प्रतिपत्तिनिरासनिमित्तम्। केवलं दंडविशेषस्तत्स्वरूपं च वक्तव्यमित्युत्तरः प्रपञ्चः। कीदृशोऽस्वामिविक्रयः कीदृशोऽनुशय इति स्वरूपं व्यवस्थाप्यते।। १७८।।

(२) **सर्वज्ञनारायणः**। साक्षिभिः प्रत्ययैः शपथैश्च सिद्धानि। समतां अविवादम्।। १७८।।

(३) **कुल्लूकः**। अनेन प्रोक्तप्रकारेण परस्परं विवदमानामामर्थिप्रत्यर्थिनां साक्ष्यादि-प्रमाणेन निर्णीतार्थानि कार्याणि विप्रतिपत्तिखण्डनेन राजा समीकुर्यात् ॥ १७८ ॥

(४) **राघवानन्दः**। एतद्विवादादावतिदिशति अनेनेति। साक्षिप्रत्यसिद्धानि साक्षी प्रत्ययश्च लेख्यपूर्वकप्रतिग्रहक्रयादिश्च ताभ्यां सिद्धानि निर्णीतानि समतामविवादं उक्त-प्रकारेण ऋणादिशोधनं वा ॥ १७८ ॥

(५) **नन्दनः**। ऋणप्रदानोपसंहारमाह अनेनेति। अनेनोक्तेन प्रत्ययशपथहेतुभिर्वा कार्याणि व्यवहारान्समतान्नयेद्विप्रतिपत्तिरहिताम् ॥ १७८ ॥

(६) **रामचन्द्रः**। साक्षिप्रत्ययः शपथः सिद्धानि कार्याणि समतां व्यवहारराहित्यं नयेत्, प्रापयेत् ॥ १७८ ॥

(७) **मणिरामः**। समतां नयेत् विप्रतिपत्तिखंडनेन शुद्धं कुर्यात् ॥ १७८ ॥

(८) **गोविन्दराजः**। **अनेनेति**। परस्परं विवदमानयोरर्थिप्रत्ययिनोरनेनोक्तप्रकारेण राजा साक्षिनिर्णीतानि अनुमानशपथादिप्रत्ययनिर्णीतानि कार्याण्यर्थि-प्रत्यर्थिविप्रतिपत्ति रोधेन समीकुर्यात् ॥ १७८ ॥

(९) **भारुचिः**। अनेन विधिना राजा मिथो विवदतां नृणाम्। साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत्। प्रत्ययसिद्धानि हेतुसिद्धानीत्यर्थः ऋणव्यवहारोपसंहारार्थः श्लोकः ॥ १७८ ॥

**कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ॥**
**महापक्षे धनिन्यायनिक्षेपं निक्षिपेद् बुधः ॥ १७९ ॥**

(१) **मेधातिथिः**। प्रख्याताभिजनः **कुलजः**। यस्य पितृपितामहा विद्वांसो धार्मिका महापरिग्रहाः स्वकुलांशनिगृहीता (श्चभवेयुः) । स हि स्वल्पामपि गर्हणां सोढुमसमर्थः। नितरां च निन्दन्ति जनाः। वृत्तशीलमाचारो जनावादभीरुत्वं स्वाभाविकम्। **संपन्नः** तद्युक्तः। **धर्मज्ञस्तु** स्मृतिपुराणेतिहासाभ्याससंजाततदर्थावबोधः। **सत्यवादी** बहुकृत्वः कार्येषु संभाव्यमानो वृत्ताभिधानः। **महापक्षः** सुहृत्स्वजनराजामात्याद्यनुगृहीतमहिमत्त्वेन दुष्टराजाधिकारिणां गम्यो न भवति। **धनी** स्वधनरक्षार्थमदृष्टभयाच्च न परद्रव्यापहरणे वर्तते–'अस्ति मे पर्याप्तं धनं किं परकीयेन, कथंचिज्ज्ञाते दण्डयः स्यामिति'। **आर्यो** धर्मा-नुष्ठायी ऋजुप्रकृतिर्वा।

**निक्षेपम्**। निक्षिप्यमाणं सुवर्णादिद्रव्यं कर्मसाधनेन घञोच्यते। **निक्षिपेद्**रक्षार्थं स्थापयेद्**बुधः**। एवं निक्षिपन्प्राज्ञो भवति। अन्यथा मूर्खः संपद्यते।

सुहृद्भूत्वोपदिशति दृष्टम्। नायमदृष्टार्थोऽष्टकादिवदुपदेशः। ईदृशि पुरुषे निक्षि-प्तस्य न विप्रलयो भवति–एवंविधेन निक्षिप्तमनेनेति शङ्का न भवति। यस्तु नग्नकित-वपानशौण्डादिः स केनचिदाकृष्टोऽपि हस्ते मतिपत्नाऽस्य निक्षिप्तं मया चेति न शङ्कास्पदम्–सुवर्णादिर्महतो धनस्य निक्षेपधारक इति। काकणो मात्रिकेभियुज्यमाने भवत्येव ॥ १७९ ॥

(२) **सर्वज्ञनारायणः**। ऋणादानम् निक्षेपमुपक्रमते कुलजइति। वृत्तमाचारः। महापक्षे बहुबन्धौ। आर्ये उत्तमदेशः ॥ १७९ ॥

* (१७९) वृत्तसंपन्ने = वित्तसं ० (च) = वृत्ति ० (ख)

(३) **कुल्लूकः**। सत्कुलप्रसूते सदाचारवति धर्मवेदिनि सत्याभिधायिनि बहुपुत्रादि-परिजने ऋजुप्रकृतौ मनुष्ये व्यभिचाराभावान्निक्षेपं स्थापयेत् ॥ १७९ ॥

(४) **राघवानन्दः**। निक्षेप इत्युक्तं तद्विषयकमाह अष्टादशभिः तत्रादौ तदुचित-स्थलमाह कुलज इति वृत्तसंपन्ने वृत्तं स्वाध्यायाचारादि तद्युक्ते महापक्षे पुत्रपौत्राद्युपेते आर्ये स्वच्छप्रकृतौ धनिनि स्थाप्यधनादधिकधनवति ॥ १७९ ॥

(६) **रामचन्द्रः**। कुलजे महापक्षे मातृपितृभ्यां शुद्धपक्षे एतादृशे निक्षेपं बुधोनिक्षिपेत् स्थापयेत् ॥ १७९ ॥

(७) **मणिरामः**। महापक्षे बहुपुत्रादिपरिजनो। आर्ये ऋजुगतौ एतादृशे मनुष्ये निक्षेपं स्थापयेत् ॥ १७९ ॥

(८) **गोविन्दराजः**। **कुलज इति**। महाजने आचारवर्तिनि धर्मज्ञे सत्यवादिनि बहुसुहृत्सुजनके धनवति ऋजुप्रकृतौ मनुष्ये व्यभिचाराऽभावान्निक्षेपं छादयेत् (–स्थापयेत्) इति सुहृदुपदेशोयं दृष्टार्थः ॥ १७९ ॥

(९) **भारुचिः**। निक्षेपविध्यर्थमिदमधुनोच्यते निक्षेपलक्षणविध्यर्थः श्लोकः। कुलजे प्रकृष्टाभिजने वृत्तसम्पन्ने आचारवति प्रकरणादर्थव्यवहारे इतरत्र वा। एवं चार्थव्यवहारे शुचिर्भवति यदि धर्मज्ञतया सत्यवादी भवति तथा च सति वृत्तविशेषणमिदं विज्ञेयम् ॥ १७९ ॥

एवंवृत्तो यदि भवति ततोऽयं निक्षेपयोग्यः सम्पद्यते। महापक्षश्चागम्यश्चादविकादीनां भवति। स्वपक्षरागभयाच्च न विकारं याति। एवं च धनित्वोपदेशो व्याख्येयः। आर्यश्चैवं-वृत्तश्शूद्रोऽपि विज्ञेयः। अविक्रियात्मकत्वादिति अन्ये तु द्विजातिमाचक्षते तस्य चादृष्टार्थं ग्रहणमाहुरिति ॥ १७९ ॥

**यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ॥**
**स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥ १८० ॥**

(१) **मेधातिथिः**। **यथेति**–यादृशेन प्रकारेण समुद्रममुद्रं ससाक्षिकमसाक्षिकमित्येव-मादि–**स तथैवेति**। **सोऽर्थो** निक्षिप्तस्तथैव **ग्रहीतव्यः**। **यथा दायो** दीयते निक्षिप्यते तथा गृह्यते। यत्रैतन्निश्चितं भवति सर्वकालमेवास्य हस्ते सोऽमुद्रयित्वा स्थापयति–तत्र विप्रति-पत्तावमुद्रिते लब्धे धारणको यदि ब्रवीति 'नैष मुद्रयति निक्षिप्य मे बलाद् गच्छति' तत्रैवं शङ्कास्पदं जायते। प्रमाणान्तरात्प्रायशो मुद्रणम्। अन्यदा तु मुद्रानाशे कियदपहारित-मिति परिमाणविशेषज्ञानाय प्रमाणान्तरं व्यापारणीयम् राज्ञा। अपह्नवादेव सामान्य-दण्डेन दण्डनीयः। निक्षेपदण्डस्तु द्रव्यपरिमाणे निश्चिते द्वितीयः।

"ननु च सर्वापह्नव एव विभावितो जित एव युक्तः ॥"

सत्यम्। यत्राविनाभावसिद्धम्। यथा मुषिते ग्रामे देवदत्तोऽभियुज्यते 'त्वयाऽन्यैश्चोरैः सहामुष्मिन्नहनि स ग्रामो हृत' इति—स आह 'नैव तस्मिन्नहनि तं ग्राममहमगमम्'—तत्र साक्षिभिरुक्तं 'दृष्टं तस्मिन्नहनि तत्र यन्मुष्टं तत्तु न दृष्टम्'—तत्र देवदत्तेन मोषोऽप्यपह्नुतस्तदहर्ग्रामसन्निधानसिद्धेः। स्फुटे च कारणान्तरे सन्निधावनुपलभ्यमाने सन्निधानादेशदेशाच्चौरत्वमपि युक्तमनुमातुम्। इह तु प्रमादनष्टानां नराणां मुद्रितनिक्षिप्तमुद्रितमेव नीयते।

**यथा दायस्तथा ग्रहः।** को मेऽभियोगावसर इत्यनया बुद्धचा संभवत्यपह्नवः। न हि शक्नोत्यनुमातुम्। यदापि कथंचिदनुमापयेत्परिमाणं तु न विना प्रमाणान्तरं निक्षिप्तवचनादेव सिध्यतीति युक्तो दिव्यादिना निश्चयः। सर्वथा य एकदेशान्तरेण न संभवति तत्रैवैकदेशपराजित इति निश्चयः।। १८०।।

(२) **सर्वज्ञनारायणः।** यथानिक्षिपेत् मुद्रितममुद्रितं ससाक्षिकमसाक्षिकमित्यादि। यथादाय इति पुनरस्यार्थस्य। कथनं लोकसिद्धिहे तुतया।। १८०।।

(३) **कुल्लूकः।** यो मनुष्यो येन प्रकारेण मुद्रारहितं समुद्रंवा ससाक्षिकमसाक्षिकं वायमर्थंसुवर्णादि यस्य हस्ते निक्षिपेत्सोऽर्थस्तेन निक्षेप्ता तथैव ग्राह्योयस्मात् येन प्रकारेण समर्पणंतेनैव प्रकारेण ग्रहणंन्याय्यं समुद्रस्थापितसुवर्णादिर्निक्षेप्ता स्वयमेव मुद्रां भित्वा यदा वदति ममेदं तुलयित्वा समर्पयेत्यभिधानं दण्डाद्यर्थम्।। १८०।।

(४) **राघवानन्दः।** तद्ग्रहणोपायमाह यइति। यो निक्षेप्ता यथायेन प्रकारेण मुद्रयः संख्ययावायमर्थंसुवर्णादिस्वरूपं यस्यहस्ते तत्र हेतुः यथादायः यथासमर्पणं तथाग्रहस्तथैव ग्रहणम्।। १८०।।

(५) **नन्दनः।** यथारूपोयोऽर्थः सतथारूपस्य हस्तात्तेन ग्राह्यः तथा हि यथा दाया स्थितस्तथा ग्राह्यः यथा दानं तथा ग्रहणं निक्षिप्तं द्रव्यं अविकृतं दद्यादित्यर्थः।। १८०।।

(६) **रामचन्द्रः।** यथा दायः अंशः तथा ग्रहः गृहीतुं योग्यो ग्रहः निक्षेपः।। १८०।।

यथा निक्षिपेत् येन प्रकारेण मुद्रारहितं समुद्रं वा। यमर्थं सुवर्णा दि ससाक्षिकं।। १८०।।

**य इति।** यो मनुष्यो येन प्रकारेण समुद्रं वा ससाक्षिकमसाक्षिकं वा यदर्थं सुवर्णादिकं यस्य हस्ते निक्षिपेत् सोऽर्थस्तेन निक्षेप्त्रा तेनैव प्रकारेण गृहीतव्यः यस्माद्येनैव प्रकारेण समर्पणं तेनैव ग्रहणं न्याय्यम् एवं अन्यथाकरणे दण्डचः।। १८०।।

यस्मादुभयथा निक्षेपो दृष्टः समुद्रो विमुद्रश्च। असाक्षि (ष्ट ? त) स्सुसाक्षितश्च। सं(ख्य ? ख्या) तोऽसंख्यातश्च तस्मादिदमुच्यते—यथा दायस्तथा ग्रहः (म ? मा) नवग्रहाणाच्चेह विज्ञायते। पूर्वश्लोके आर्यग्रहणं सर्ववर्णार्थम्। न तु द्विजातिविषयः। एवं च सति दानप्रतिदानयोस्तुल्यक्रिययोर्निक्षेपधारकस्याभियोगेन जायते।। १८०।।

**यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति ॥**
**स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥ १८१ ॥**

**साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ॥**
**अपदेशैश्च संन्यस्य हिरण्यं तस्य तत्त्वतः ॥ १८२ ॥**

(१) **मेधातिथिः**। व्यत्यस्तक्रमोऽयं श्लोकः समाम्नाये पठ्यते। प्रथममस्यार्धश्लोकं पठित्वा **साक्ष्यभाव** इति पठितव्यं, ततः **स याच्य** इति। एवं पाठो युक्तः। तथा ह्यर्थसङ्गतिर्भवति।

साक्ष्यभावाद्दिव्येषु प्राप्तेषु वचनमिदम्। यथा चर्णादानादिषु साक्ष्यभावसमनन्तरमेव दिव्यानि दीयन्ते न तद्वदत्र। किं तर्हि चरैरस्य वृत्तमनुचारयेत्। तत्र यदि निपुणतश्चार्यमाणो न क्वचिद्वृत्ते स्खलति तदा न शपथैरर्दनीयः। अथाप्यत्र प्रमाद्यति तदा निक्षेपहरणसंभावनाऽपि युक्तैव। तदाऽयं दिव्यैः परिशोधनीयः। न पुनरेकनिक्षेपहरणेनापरनिक्षेपहरणं सिध्यति। कदाचिद्गरीयसा प्रयोजनेनैकमपहृत्य कृतप्रयोजन उत्पन्नानुशयो वाऽन्यस्य समर्पयति। अतोयं श्लोकसंघातो झटिति निक्षेपधारणकस्य शपथनिवृत्त्यर्थे न पुनः प्रमाणोपन्यासः। न च प्राड्विवाकनिक्षेपहरणे राजदण्डवदनिश्चितापरनिक्षेपहरणेऽपि प्रथमाभियोक्तुर्दापयितुं युक्तः। अनिश्चिते हि हरणे दाप्येत यदि शास्त्रेण तदा निर्णयार्थं व्यवहारशास्त्रं स्यात्। ततश्च हेतुभिर्निर्णयः कर्तव्य इति विकल्पितः। तस्मान्न शास्त्रीयोऽयमर्थो न च लौकिकी व्यवस्थेति। **साक्ष्यभाव** इत्याद्युक्तेन प्रकारेणान्यपरतया नेया।

पदार्थयोजनामिदानीमनुसरामः। **स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसंनिधौ**। येन निक्षेप्त्रा रहसि स्थापितम्। साक्षिष्वसत्सु तस्य याचमानस्य धारणको यद्यपह्नुते 'न त्वया किंचिन्निक्षिप्तमिति' ततो निक्षेप्त्रा राजा ज्ञापितो न निक्षेपधारिण आकारं दर्शयेत्। किं तर्हि कुर्यात्। **प्रणिधिभिश्चारैर्हिरण्यमात्मीयं** सुवर्णं रूप्यं वाऽन्यस्य **संन्यस्य** निक्षिप्य याचितव्योऽर्थनीयः द्वितीयं निक्षेपं प्राड्विवाकेन। प्राड्विवाकग्रहणं निर्णयाधिकृतपुरुषोपलक्षणार्थम्।

किं साक्षादेव याचितव्यो नेत्याह—प्रणिधीनां मुखेन। यैरेव न्यस्तं **वयोरूपसमन्वितैः**। वयसा समन्विता येन बाला न भवन्ति—तेषां हि परैः प्रेरितानां मद्वञ्चनार्थो न्यास इति संभाव्यते। परिणतवयोभ्यस्तु नाशङ्का भवति। एवं रूपसमन्वयो व्याख्येयः। रूपमेव कस्यचित्तादृशं भवति यस्य दर्शनादेव चापलं प्रतिभाति। तथा च रूपमेतद् व्याचष्टे "भगवन्वीतरागताम्" इति। तेनैतदुक्तं भवति—तादृशाः प्रणिधयः कर्तव्या येषां मद्वञ्चनार्थोऽयमुपक्रम इति नाशङ्कते धारणकः।

**अपदेशैः** सव्याजैर्निक्षेपकारणैः राज्ञोपद्रवग्रामगमनादिभिः—'अनेन हेतुना त्वयि संप्रति निक्षिपामी'त्यनृतसंभवात्कारणकथन**मपदेशः**।

एतच्च सर्वं प्राङ् निक्षेप्तुरसंनिधौ कर्तव्यम् ।। १८१–१८२ ।।

प्राड्विवाकेन ममेदं निक्षेपं न ददातीति निक्षेपज्ञापितेन ।। १८१ ।।

साक्ष्यभाव इत्युपरिष्टाद्वक्ष्यति तेनास्य सामर्थ्यासम्बन्धो द्रष्टव्यः। साक्ष्यभावे यो निक्षेपं याच्यमानो न प्रयच्छति ततो निक्षेप्ता प्राड्विवाकविज्ञापित...मं कुर्यात्। पूर्वं निक्षिप्तस्य परिमाणवयोरूपसादश्येन कैश्चिदपदेशैः केनचिद्धिरण्यादि तस्मिन्नेव निक्षेपः पूर्वनिक्षेपधारणं निक्षिपेत्, ततः कस्मिंश्चित् काले गते पूर्वनिक्षेप...रसन्निधौ प्राड्विवाकेनाद्वितीयेन निक्षेप्ता निक्षेपं याचयेत् ।। १८१–१८२ ।।

(२) **सर्वज्ञनारायणः**। न प्रयच्छति प्रथमं लोभात्। निक्षेप्तुरसन्निधौ याच्यः ।। १८१ ।।

(३) **कुल्लूकः**। यः पुरुषो देहि मे निक्षिप्तं हिरण्यादि द्रव्यमित्येवं निक्षेप्त्रा प्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापितेन प्राड्विवाकेन तस्य निक्षेप्तुरसन्निधौ याचनीयः ।। १८१ ।।

(४) **राघवानन्दः**। तस्योद्धरणप्रकारमाह यो निक्षेपमिति। स निक्षेपधारी प्राड्विवाकेन राजस्थापितेन पुंसा याच्योऽस्मै तद्देहीति। असंनिधौ स्थलान्तरे ।। १८१ ।।

(५) **नन्दनः**। असाक्षिकेषु निक्षेपेषु निक्षेपहारित्वेन शङ्किते प्रयोक्तव्यविधिश्लोकद्वयेनाह यो निक्षेपमिति। प्रश्नं विविच्य ब्रुवतीति प्राड्विवाकः प्रधानसभ्यः ।। १८१ ।।

(६) **रामचन्द्रः**। स प्राड्विवाकेन निक्षेप्तुरसंनिधौ तंनिक्षेपं वाच्यः कथनीयः ।। १८१ ।।

(८) **गोविन्दराजः**। **यो निक्षेपमिति**। स इति। तेषातिति। साक्ष्यभाव इति। देहि मे निक्षिप्तं हिरण्यादि इत्येवं यः प्रार्थ्यमानः साक्ष्यभावान्निक्षेप्तुर्न ददाति तस्य निक्षेप्त्रर्थितेन प्राड्विवाकेन तस्मिन्निक्षेप्तर्यसंनिहिते कश्चिच्चारपुरुषैः रुचिरप्रायैः सौम्याकृतिभिर्नृपोपद्रवव्याजाऽभिधायिभिः हिरण्यं तत्त्वेन यथा तस्य शङ्का नोत्पद्यते तथा निक्षेपयित्वा, ततोऽसौ कालान्तरे प्राड्विवाकेन पूर्वनिक्षेप्तुरसंनिधौ तेन तत्त्वारनिक्षेप्तृ हिरण्यं तैरेव पुरुषैर्देह्यस्मा निक्षेपहिरण्यमित्येवं याचितव्यः। स च निक्षेपधारी यथान्यस्तं समुद्रममुद्रं वा यथाकृतञ्च कटसूत्राद्याकारेण यदि तथैव प्रतिपाद्यते समस्तैर्गृहीतं तदिति तदा यत्परैर्निक्षेप्तृभिः प्राड्विवाकवेदिभिः अस्य हस्ते अस्माकं विद्यत इत्याक्षिप्यते तत्तत्र किञ्चिद्विज्ञेयम्। यदि पुनस्तेषां चारपुरुषाणां तत्क्षिप्तं हिरण्यं यथान्यस्तं न दद्यात्तदा द्वावपि निक्षेपौ ज्ञापकचारसम्बन्धिनाववष्टभ्य दापनीयः स्यादित्येवंरूपो धर्मनिश्चयः। इत्येवमेतद् श्लोकचतुष्टयम् ।। १८१ ।। १८२ ।। १८३ ।। १८४ ।।

(२) **सर्वज्ञनारायणः।** निक्षेपविषयवद् दृष्टप्रमाणाभावात्कृत्स्नस्य निक्षेपानभ्युपगमादाह साक्ष्यभावइति। प्रणिधिभिश्चरैः स्वीयैः वयसा वृद्धत्वादिना रूपेण च पालित्यादिना प्रामाणिकत्वोचितेनान्वितैः। प्राड्विवाकस्तस्य निक्षेपानभ्युपगमेतु निक्षेपान्तरं निदध्यात्। अपदेशैर्नास्य धनस्य रक्षकोस्माकं विद्यत इत्यादि व्याजोक्तिभिः। तत्त्वतो यथा निक्षेपः संपद्यते तथेत्यर्थः॥ १८२॥

(३) **कुल्लूकः।** किंकृत्वा किंयाचनीय इत्याह साक्ष्येति। प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैश्चारपुरुषैरतिक्रान्तबल्यैः सौम्यादिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यानि तत्त्वेन तत्र निक्षेपयत्वा तैरेव चारपुरुषैः सनिक्षेपधारी प्राडिववाकेन चारपुरुषनिक्षिप्तसुवर्णं याच्यः॥ १८२॥

(४) **राघवानन्दः।** प्राड्विवाकस्यापि प्रार्थनयाऽलब्धेऽप्युपायान्तरमाह साक्ष्यभाव इति द्वाभ्याम्। प्रणिधिभिश्चरैःवयोरूपसमन्वितैः अतिक्रान्तशैशवसौम्याकृतिनिक्षेपधारिसमानवयःप्रभृतिभिः तेषु हि सत्यादिवशादतिगोप्यमपि प्रकाश्यत इति। अपदेशैः राजा मां हनिष्यति दण्डयिष्यतीत्यादिराजोपद्रवव्याजाभिधायिभिः। तत्त्वतो वस्तुतो हिरण्यं सन्यस्य निक्षेपयित्वा॥ १८२॥

(५) **नन्दनः।** वयोरूपसमन्वितैः पूर्वनिक्षेप्तुर्वयोरूपसदृशैः प्रणिधिभिः करणैस्तत्कालोचितसंबन्धो वयोरूपसादृश्योपहेत्वन्तरेण निक्षेपप्रतिपादनशङ्कापरिहारार्थः। अपदेशोनिक्षेपनिधानार्थानुज्ञानार्थः। हिरण्यग्रहणं पूर्वानिक्षिप्तसजातीयद्रव्योपलक्षचार्थम्॥१८२॥

(६) **रामचन्द्रः।** साक्ष्यभावे प्रणिधिभिः चारैः अपदेशैः व्याजैः संन्यस्य निक्षिप्य तत्त्वतः॥ १८२॥

(७) **मणिरामः।** किं कृत्वा किं याचनीय इत्याह सात्येति॥ प्रणिधिभिः चारैः वयोरूप समन्वितैः अति क्रांतवाल्यैः शुभदर्शनैःअपदेशैः नृपोपद्रवादिव्याजैः। प्रथमनिक्षेपे साक्ष्यभावे सति चारादिभिरसाक्षिकमन्यद्धिरण्यं राजोपद्रवादिमिषेण तत्वतः स्थापयित्वा याच्यः॥ १८२॥

(९) **भारुचिः।** पूर्वोणास्य सम्बन्धः। तथा चोक्तं–'यो निक्षेपं याच्यमान' इत्येवमादिः॥ १८२॥

**स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्॥**
**न तत्र विद्यते किंचिद्यत्परैरभियुज्यते॥ १८३॥**

(१) **मेधातिथिः। स यदि।** निक्षेपधारी यदि **प्रतिपद्येत**–वाढमस्ति गृहाणेत्यंगीकृत्य दद्यात्। **यथान्यस्तं** तथा कृतं समुद्रं अमुद्रं–**यथाकृतं** वस्त्रादि संवर्तितममुद्रितमन्यद्वा अलंकाराद्यनुपभुक्तं परिमलशून्यं गृहमुद्रया स्वचिह्नेन स्थापितम्–तादृशमेव चेद्दद्यान्न **तत्र विद्यते** किंचिदसत्यं **यत्परैः** पूर्ववेदिकैरभियुज्येत–एतेनास्माकीनः साक्ष्यभावान्निक्षेपोऽपह्नूयत इति। **यथान्यस्तं यथाकृतमिति** गूढागूढचिह्नकृतेन भेदः। अथवा ग्रहीतृनिक्षेप्तृव्यापारभेदेन भेदः। **यथाकृतं** यथागृहीतम्–निर्विकल्पमविलम्बं च गृहीतं तथैव प्रतिदातव्यं प्रतिदाने यत्र कालग्रहणं न क्रियत इत्यर्थः॥ १८३॥

(२) **सर्वज्ञनारायणः।** यदि त्वया ततोपहृतं तद्गतमेव धनं त्वयास्माभिश्च ग्राह्यमित्युक्तः सयदि प्रतिपद्येत संमतःस्यात्। यथा मुद्रादिना न्यस्तं तथाकृतं कण्टकादि। निक्षेप्त्रोक्तं न तत्र विद्यत इति यदि तस्मिन्प्रत्यर्पितेपि परो ममैतन्न्यूनमित्यभियुङ्क्ते तदभियोगादिकं तत्र न विद्यते तावतैवतच्छोधनमुक्तं मुद्रादेर्भावात्। नतु दण्डो नास्ति सापराधत्वात्। ।। १८३ ।।

(३) **कुल्लूकः।** स निक्षेपधारी यथान्यस्तं समुद्रं वा यथाकृतं कटकमुकुटाद्याकारेण रचितं यदि तथैव प्रतिपद्येत सत्यमस्ति गृह्यतामिति तदा परेण पूर्वनिक्षेप्त्रा प्राड्विवाकवेदिना यन्निक्षिप्तमित्यभियुज्यते तत्र न किंचिदस्तीति ज्ञातव्यम्।। १८३ ।।

(४) **राघवानन्दः।** पश्चात्स याच्यमानः निक्षेपधारी यथान्यस्तं समुद्रमसमुद्रं वा यथाकृतं यथाकारं कटकादिरूपं तद्भिन्नंवा प्रतिपद्यते दातुं मन्यते यदि तदा परैः पूर्वनिक्षेप्तृभिः तदभियुज्यते तत्र भवतीतिज्ञातव्यम्।। १८३ ।।

(५) **नन्दनः।** सनिक्षेपहारित्वेन शङ्कितः। परैः पूर्वनिक्षेप्तृभिः ।। १८३ ।।

(६) **रामचन्द्रः।** सपुरुषः यत्र स्थापितः यदि प्रतिपद्येत अङ्गीकुर्यात् यथान्यस्तं तथा कृतंतत्रकिंचिन्नविद्यतेयत् अन्यैर्निक्षिपेत् परैरभियुज्यते आरोप्यते ।। १८३ ।।

(७) **मणिरामः।** प्रतिपद्येत सत्यंमन्निकटे वर्तते। गृह्यतामिति दद्यात्। तदापरैः न अभियुज्यतेपरेण पूर्वनिक्षेप्ता न विवादयोग्यो भवति तत्र न किंचिदस्तीति ज्ञातव्यं ।। १८३ ।।

(९) **भारुचिः।** यदि तं द्वितीयं निक्षेपं यथा ... किञ्चिदस्ति (यः ? यत्) परैरभियुज्यते ।। उभौनिगृह्य दाप्यः स्यादिति धर्मस्य धारणा। अथ प्राड्विवाककविज्ञातं पश्चान्नियो. . .त्तं दद्यात्। तत उभयं निगृह्य पूर्वं द्वितीयं च दाप्यः ।। १८३ ।।

**तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।।**
**स निगृह्योभयं दाप्य इति धर्मस्य धारणा ।। १८४ ।।**

(१) **मेधातिथिः।** तेषां प्राड्विवाकप्रयुक्तनिक्षेप्तॄणां यदि द्रव्यं निक्षिप्तं **न दद्यात्।** **यथाविधीति** **यथाकृत**पदेन व्याख्यातम्। **स** धारणकोऽवष्टभ्य राजपुरुषैरु**भयमर्थि**नो राजनिक्षेपं च दाप्यः। **इति धर्मस्य धारणा** व्यवस्था। तात्पर्यमत्र व्याख्यातम् ।। १८४ ।।

(२) **सर्वज्ञनारायणः।** तेषां प्रणिधीनां अर्थनानन्तरं यदि न दद्यात्तद्धिरण्यं तदोभयंनिक्षेपद्वयं संनिगृह्य गृहीत्वा दाप्यो दण्डमित्यर्थः। यदितु प्रणिधिदत्तं प्रत्यर्पयेत्तदा निश्चयानुत्पत्तेर्दिव्या क्रियेत्यर्थात्सिद्धम् ।। १८४ ।।

(३) **कुल्लूकः।** तेषां चारपुरुषाणां यन्निक्षिप्तं हरिण्यं यथान्यस्तं यदि तन्नदद्यात्तदा द्वावपि निक्षेपौ ज्ञापकचारसंबधिनौसंपीडय दापनीयः स्यादित्येवंरूपो धर्मस्य धारणा निश्चयः। योनिक्षेपमित्यादिश्लोकचतुष्टयस्य चेदृशएव पाठक्रमोमेधातिथिभोजदेवादिभिर्निश्चितः

गोविन्दराजेन तु साक्ष्यभावे प्रणिधिभिरिति श्लोकोऽन्तएव पठितः तदा च नार्थसङ्गतिः न वा वृद्धाम्नायादरः ।। १८४ ।।

(४) **राघवानन्दः**। अपदेशैःस्थापितस्यापह्नवे दण्डमाह तेषामिति। तेषां प्रणिधीनां यथाविधि यथास्वरूपं यथास्थापितं चनदद्यात्तदोभौनिक्षेपौ निक्षेपधारी दाप्यः ।। १८४ ।।

(६) **रामचन्द्रः**। तेषां निक्षेप्तृणां यद्धिरण्यं तद्यथाविधि न दद्यात्तदा उभौ निक्षेप्तृनिक्षेप्तारौ निगह्य दाप्य इति धर्मस्य धारणा मर्यादा ।। १८४ ।।

(७) **मणिरामः**। तेषां चारपुरुषाणां निक्षिप्तं यदि न ददाति तदा उभौ निक्षेपौ निगृह्य पीडयित्वा दाप्यः ।। १८४ ।।

**निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे ।।**
**नश्यतो विनिपाते तावनिपाते त्वनाशिनौ ।। १८५ ।।**

(१) **मेधातिथिः**। उत्पत्यनन्तर उच्यते निक्षेप्तुःपुत्रो भ्राता भार्या वा यस्य निक्षेप्तुर्द्रव्ये स्वाम्यमस्ति—भार्यायास्तावत्स्वाम्यं युक्तमेव—पुत्रस्यापि पैतामहे भ्रातुशुल्कैकधनस्य। तत्र तेषां कश्चिद्याचते क्षेप्तर्यसंनिहिते 'देहि नोऽस्माकीनमेतदिति'। तत्र कश्चिदनया बुद्धया दद्यात् 'साधारणमेतदेकेन निक्षिप्तमपरेण नीतिमिति को दोष इति'। अत उच्यते **न देयौ निक्षेपोपनिधी प्रत्यनन्तरे**।

अत्रैवार्थवादं हेतुसरूपमाह। **नश्यतो विनिपाते तौ। विनिपातो**ऽन्यथात्वं—प्रत्यनन्तरस्य देशान्तरे गमनादि—तस्मिन् सति तौ ह्रीयेते। यदि तेन नीत्वा निक्षेप्तुर्न दत्तं तदा तेन पर्यनुयुक्तस्य धारणकस्य किमुत्तरम्? 'त्वदीयेन भ्रात्रैतद्धनं साधारणस्वामिना नीतमिति' नैतदुत्तरम्। "यथा दायस्तथा ग्रह" इत्युक्तम्—येनैव निक्षिप्तं स्वामिनाऽस्वामिना वा तस्मा एव देयम्—तस्यैवायं प्रपञ्चः।

यदि तु प्रत्यनन्तरो विक्रियां न गच्छेत्तदा तद्दानेऽपि न दोषः। तदाह **अनिपाते त्वनाशिनौ**। तत्र ह्यस्तुत्तरं माऽनशत्तस्मादर्पयामि।

प्रत्यनन्तरेण नीते विनिपाते च तस्य निक्षेप्त्रे याचमानाय स्वधनं दातव्यमिति श्लोकार्थः ।। १८५ ।।

(२) **सर्वज्ञनारायणः**। उपनिधिर्भाण्डादिस्थःसमुद्रः। निक्षिप्तो निक्षेपस्त्वमुद्रः। उपनिधिपदं चायाचिताद्युपलक्षणम्। प्रत्यनन्तरे देशान्तरादिगते निक्षेप्तरि तत्पुत्रादौ। नश्यतः पुनर्देयौ भवतः। विनिपाते तस्य पुत्रादेर्मरणादिना निक्षेप्तुर्निक्षिप्तधनाप्राप्तौ। अनिपाते तत्प्राप्तौ अनाशिनौ प्रत्यर्पणीयौकेवलंत्वत्पुत्रे दत्तमिति विभाव्यमेव ।। १८५ ।।

(३) **कुल्लूकः**। निक्षिप्यत इति निक्षेपः मुद्राङ्कितमगणितंवा यन्निधीयते स उपनिधिः ब्राह्मणपरिव्राजकवदुपदेशभेदः तौ निक्षेपोपनिधी निक्षेप्तर्युपनिधातरि जीवति प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरे तद्धनाधिकारिणि कदाचिन्न निक्षेपधारिणा देयौ यतस्तस्य पुत्रादेरपि

यदि न निवर्तेत–'महाधनोऽसावभूवन्न चान्येन समं प्रयुज्यते'–प्रमाणान्तरं निश्चयाय विचारणीयम्, विषाग्न्यादिभिः शपथैर्नार्दनीयः। घटकोशसत्यतण्डुलास्तु न विरुध्यन्ते। न हि ते अति क्लेशकराः। साक्ष्यभाव इत्यत्र द्वितीयो न्यासः। यश्च तयोन्यासिः स इहापि द्रष्टव्यः ॥ १८६ ॥

(२) **सर्वज्ञनारायणः**। मृते तु दातर्याह स्वयमिति। असाक्षिकं निक्षेपं पुत्रादिभिरज्ञातं यःस्वयं पुत्रादौ दद्यान्नासौ राज्ञा पुत्रादिना वा न्यूनत्वादिशङ्कयाऽभियोज्यः। न्यूनत्वादिनिश्चये त्वभियोज्य एव ॥ १८६ ॥

(३) **कुल्लूकः**। निक्षेप्तुर्मृतस्य निक्षेपधारी तद्धनाधिकारिणि पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति स राज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति नाक्षेप्तव्यः ॥ १८६ ॥

(४) **राघवानन्दः**। अतएवाह स्वयमिति। स्वयमेव दद्याच्चेत्ततोऽन्यदस्तीति नाभियोक्तव्यः बन्धुभिश्च ॥ १८६ ॥

(५) **नन्दनः**। नाभियोक्तव्यः निक्षिप्तद्रव्यपरिमाणं न प्रष्टव्यम् ॥ १८६ ॥

(६) **रामचन्द्रः**। राज्ञा स न नियोक्तव्यः अधिकं नारोपणीयः। निक्षेप्तुः स्वबन्धुभिः नाभियोक्तव्यः ॥ १८६ ॥

(७) **मणिरामः**। मृतस्य निक्षेप्तु ॥ १८६ ॥ १८७ ॥

(८) **गोविन्दराजः**। **स्वयमिति**। निक्षेप्तुः मृतस्य योऽज्ञातं निक्षिप्तं स्वयमेव तद्धनार्हे पुत्रादौ दद्यात्, न राज्ञा निक्षेप्तुः पुत्रादिभिर्बंधुभिः (न) नियोक्तव्यः ॥ १८६ ॥

(९) **भारुचिः**। अविदितनिक्षेपे स्वयं प्रयच्छतो नास्याभियोगः। अथ तुद्भावकः कश्चिदत्रार्थं दर्शयेदधिकं ततः।

**अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम् ॥**
**विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत् ॥ १८७ ॥**

(२) **सर्वज्ञनारायणः**। यदाच निक्षेपस्तत्र संभावितो नच स्वयं तेन दत्तस्तदाह अच्छलेनेति। तदीयप्रतिपन्नद्रव्यादेश्छद्मादिना ग्रहणेन तदुद्धारार्थं न यतितव्यम्। प्रीतिपूर्वकं मत्यादिकरणपूर्वकं अन्विच्छेदनुसंदध्यात्। तथा तस्य वृत्तं चेष्टितं निक्षेपहरणानुरूपं अतिव्ययाद्यपि तद्ग्रहणनियतं विचार्य तमेव साम्ना याचेत। दण्डादिना तु साधने कथंचिन्मिथ्याभियोगे दण्डापातः ॥ १८७ ॥

(३) **कुल्लूकः**। यदि कथंचिद्भ्रान्तिः स्यात्तदा अच्छलेनैवेति। तत्रस्थे धनान्तर सद्भावलक्षणे वा छलादिपरिहारेणैव प्रीतिपूर्वकंनिश्चिनुयात् न तु झटिति दिव्यादिदानेन तस्यनिक्षेपधारिणः शीलमवेक्ष्य धार्मिकोयमिति ज्ञात्वा सामप्रयोगेण निश्चिनुयात् ॥ १८७ ॥

(४) **राघवानन्दः**। निक्षेप्तुर्निक्षेपग्रहणे नियममाह अच्छलेनेति। अच्छलेन ऋजु-मार्गेण तमर्थं स्थापितमर्थम् साम्ना स्वयमेव राजतः परिसाधने ग्रहणे अन्यथाधारिणःस्वतो लाभाद्यभावात्कोपि निक्षेपधारी न स्यादिति भावः ।। १८७ ।।

(५) **नन्दनः**। निक्षेपप्रत्यादानविधिमाह अच्छलेनेति तमर्थनिक्षेपं प्रीतिपूर्वकंसौमनस्य-पूर्वकम्। तस्य निक्षेपहर्तुः वृत्तं शुभमशुभंवेति विचार्य साम्ना प्रियभाषणेन ।। १८७ ।।

(६) **रामचन्द्रः** तमर्थं प्रीतिपूर्वकमच्छलेनान्विच्छेत्। तस्य वृत्तं अतिव्ययादिकं विचार्य साम्नैव ।। १८७ ।।

(८) **गोविन्दराजः** अथस्य तस्योपरि किञ्चिद्भ्रान्तिःस्यात्तदा **अच्छलेनेति** ः विचार्य तस्य वा देयं साम्नैव परितोषयन्। तद्वस्तु धनान्तरसद्भावलक्षणवाक्छलादिपरि-हारेणैव प्रीतिपूर्वेण वक्रगतिदिव्यादिदानेन निश्चिनुयात् तस्य वा निक्षेपधारिणः शील-मवेक्ष्य धार्मिकोऽयमिति ज्ञात्वा सामादिप्रयोगेणैव प्रतिनिश्चिनुयात् तद्दण्डादिना दिव्यैर्वा ।। १८७ ।।

(९) **भारुचिः**। अविदितं स्वयं प्रयच्छतो यदि तद्गतः कश्चित् कर्णेजपासंशयः स्यात् ततः अच्छलेनैव तस्य वृत्तिं विचार्य तदधिगमो विज्ञेयः निक्षेपधारिणा परिज्ञायते तदीयं रूपतः परिव्यंद्र माणतश्च समुद्र एव निक्षेपो धारयितव्यः। न च समुद्रो निक्षेपः प्रत्यर्पित इत्येतावता निक्षेपधा(दि ? रिण) मुच्यते यदि तस्मान्न किञ्चित् संहरति प्रमुद्राकरणेना स्नाविणादिना वान्योपायेन अपरे(वा ? ऽपि) वर्णयन्ति। समुद्रधानारूढानां निक्षेपधा (रि ? री)यान व्यापत्तौ सति यदि किञ्चिदात्मीयं न संहरत्यर्थं ततो नाभियोज्यो भवति निक्षेप्तुः। एतदुक्तं भवति—परित्यज्यात्मीयं निक्षेपरक्षणे यत्नःकराणीय (मि ? इ)ति ।। १८७ ।।

**निक्षेपेष्वेषु सर्वेषु विधिः स्यात्परिसाधने ।।**
**समुद्रे नाप्नुयात्किंचिद्यदि तस्मान्न संहरेत् ।। १८८ ।।**

(१) **मेधातिथिः**। **निक्षेपेषू**पचयमानेष्वनन्तरोक्तो **विधिः** 'साक्ष्यभाव' इत्यादिः परिसाधनार्थो विज्ञेयः। **समुद्रे** निक्षेपेऽन्यदप्यस्मिन्भांडे द्रव्यमभून्नाशितं कृमिभिरित्यादिकं पर्यनुयोगं नाप्नुयान्निक्षेपधारी तत्र धारणकस्य। एवं मूषकादिनाशे द्रष्टव्यम्। यदि दारु-मये भाण्डे वस्त्रादि स्थापितं तीक्ष्णदशनैर्मूषकैर्दारु भित्वा भक्ष्येत न निक्षेपधारिणो दोषः। तत्रापि वासनपरिवेष्टितः स्थूलपोट्टलको मुद्रितो यदि निक्षिप्येत यत्तदीये दारुभाण्डे नैव माति तदा बहिर्मूषकादिभक्षितेऽपि हि न दोषः। यदि चैतन्निक्षेप्तुर्ज्ञानं भवति धारकेण परिभाषितं न मम भाण्डमन्यदस्ति, चरित्रज्ञो वाऽस्य निक्षेप्ता कदाचित्प्रत्यासन्नो भवति ।। १८८ ।।

(२) **सर्वज्ञनारायणः**। निक्षेपेषु निक्षिप्तेषु याचितान्वाहितनिक्षेपादिषु। समुद्रे मुद्रासहिते प्रत्यर्पिते नाप्नुयात् किंचिदपहरणशङ्कादि। तथा अमुद्रेपि यदि तस्मात्किंचित्

नसंहरेत् नसंगृह्णीयात् ग्रहणव्यभिचारिभाण्डफलत्वादि न कुर्यात् ।। १८८ ।।

(३) **कुल्लूकः।** सर्वेषु निक्षेपेष्वपक्रियमाणेष्वेषसाक्ष्यभावेत्यादि पूर्वोक्तविधि-निर्णयसिद्धौ स्यात्। मुद्रितादौ पुनस्तस्य निक्षेपधारी यदि प्रतिमुद्रादिना न किमप्यपहरेत्तदा तस्मिन्नपि तेन किंदूषणं प्राप्नुयात् ।। १८८ ।।

(४) **राघवानन्दः।** उपसंहारव्याजेनावशिष्टं ज्ञापयति निक्षेपेति। विधिः सामाद्य-व्याजरूपः। समुद्रेप्रतिमुद्रादिधारी ततः स्थापितधनात्किंचिन्नाहरेत्तदा नदोषमवाप्नुया-दितिभावः ।। १८८ ।।

(५) **नन्दनः।** सर्वेषु नीचादिविषयेष्वपि एषः पूर्वोक्तः ।। १८८ ।।

(६) **रामचन्द्रः।** एषु सर्वेषु निक्षेपेषु समुद्रे मुद्रासहिते किंचिन् अपहारणशङ्कादि नाप्नुयात् ।। १८८ ।।

(७) **मणिरामः।** समुद्रे निक्षेपे। यदि मुद्रा न नश्यति तदा संदेहेपि निक्षेप्ता नान्य-त्किंचित्प्राप्नुयात्। मुद्रानाशेतुयद्वदति तद्दापनीयमित्यर्थः ।। १८८ ।।

(८) **गोविन्दराजः। निक्षेपेष्विति।** सर्वेषु निक्षेपेषु प्रत्यायने साक्ष्यभाव इत्यादि-विधिः स्यात् मुद्रिते पुनः प्रत्यर्थिते निक्षेपधारी न किञ्चिद्दोषजातं प्राप्नुयाद्यदि तस्मादधः श्रवणप्रतिमुद्रादिना न किञ्चिदपहरेत् ।। १८८ ।।

**चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा ।।**
**न दद्याद्यदि तस्मात्स न संहरति किंचन ।।१८९।।**

(१) **मेधातिथिः। चौरास्तु** वेदिता अवेदिता वा सुरङ्गभिदादिना यदि मुष्णीयुः कृतरक्षासंविधाने धारणिके स्वामिन एव नाशः। **जलेनोढमुदकेन** देशान्तरं नीतम् ।। १८९ ।।

(२) **सर्वज्ञनारायणः।** चोरैरित्यादिराजदैवोपघातोपलक्षणम्। किंचन अल्पमपि-यद्यसौ नसंहरति नगृह्णाति। एतेनाल्पस्यापिहरणे निक्षेपो दैवादिनृष्टोपि देयइत्युक्तम्। अतच यथाशक्तिरक्षणे क्रियमाणे दोषाभावउक्तो नत्वक्रियमाणेपीत्यर्थसिद्धत्वान्नोक्तम् ।। १८९ ।।

(३) **कुल्लूकः।** चौरैर्मुषितं उदकेनदेशान्तरंप्रापितं अग्निना वा दग्धं निक्षेपंनिक्षेप-धारी न दद्यात्। यदि स्वयं तस्मान्नकिंचिदप्यपहरति ।। १८९ ।।

(४) **राघवानन्दः।** एवं चौरैरिति जलेनोढम् जलौघादिना स्थानान्तरंप्रापितम्। सनिक्षेपधारी नदद्यादेव ।। १८९ ।।

(६) **रामचन्द्रः।** चोरैः हृतं जलेन ऊढं प्रवाहितं देशान्तरं प्रापितं अग्निना दग्धं नदद्यात् यदि तस्माद् द्रव्यात् किंचिन्न संहरति न गृह्णाति। गृह्णाति चेत्तर्हि दद्यात् ।। १८९ ।।

(७) **मणिरामः।** जलेनोढं उदकेन देशांतरं प्रापितं ।। १८९ ।।

(८) **गोविन्दराजः। चौरैरिति।** चौरैर्मुषितं उदकेन देशान्तरं प्रापितं अग्निना च दग्धं निक्षेपधारी न दद्यात्। यदि तत्त्वतो निक्षेपात्किञ्चिन्नापहरति ॥ १८९ ॥

(९) **भारुचिः।** चोरादिभ्योऽपि नाशेऽयमेव समुद्र(या ? यान) विधिर्वर्णयितव्यः। एवं च सति चोरादिविधिर्दैवसमुदयानविधिर्व्याख्यात इति। यतः पूर्व एव श्लोकार्थो ज्यायान्॥ १८९ ॥

## निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च ॥
## सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥ १९० ॥

(१) **मेधातिथिः।** हरति यो निक्षिप्तमसाक्षिकं योऽप्यपनीय नीत्वा वा याचते **तमन्विच्छेत्।** 'अन्वेषणा' तत्त्वपरिज्ञाने यत्नः सर्वप्रमाणव्यापारेण। **उपायाः** प्रमाणानि सामादयो वा। तेन चलितवृत्तस्याप्रतिपाद्यमानस्य ताडनबन्धनाद्यपि महति धने चौरवत्त-त्त्वप्रतिपत्त्यर्थे प्रयोज्यम्। न तत्त्वानिश्चये निग्रहः। **वैदिक**ग्रहणं स्तुत्यर्थम्॥ १९० ॥

(२) **सर्वज्ञनारायणः।** अनिक्षेप्तारमनिक्षिप्य याचमानम्। उपायैश्चरादिभिः। अन्विच्छेत् जिज्ञासेत्। वैदिकैः वेदोक्तैरग्न्यादिभिः। श्रुतौहि सोनृतेनात्मानमबुद्ध्वा यस्तप्तं परशुं गृह्णाति स दह्यतइत्यादावग्नीनां तत्वप्राप्त्युपायता गम्यते॥ १९० ॥

(३) **कुल्लूकः।** निक्षेपस्यापह्नोतारमनिक्षिप्य याचितारं सर्वैः सामादिभिःउपायै-र्वैदिकैश्च शपथैरग्निहरणादिभिर्नृपो निरूपयेत्॥ १९० ॥

(४) **राघवानन्दः।** किंच असाक्षिके निक्षेपे तयोरपि शपथपर्यन्तं व्यापारमाह निक्षेपस्येति। अनिक्षेप्तारमनिक्षिप्यैव निक्षेप्तास्मितियोब्रूयात्तम्। सर्वैः सामभेददानदण्डैः। तत्र साम तस्मिन् तत्स्त्रीपुत्रादिषुवा धर्मोपदेशपुरःसरं स्तुत्युक्तिः। भेदः त्वय्येवास्य निक्षेपो निक्षिप्तोस्तीति अन्यैरपि ज्ञायते कथं न दीयते दानं तदर्धं दातव्यमित्यादि। स्यादिति यद्य-प्येवंसंभाषणीयं। दण्डः एतद्धनं चेन्नदीयते तदातवच्छेदं विधास्यामि। शपथैरुक्तरूपैश्चा-न्विच्छेदित्यन्वयः॥ १९० ॥

(५) **नन्दनः।** अनिक्षेप्तारं अनिक्षिप्तयाचितारम्। सर्वैरुक्तादन्यैः॥ १९० ॥

(६) **रामचन्द्रः।** उपायैः सर्वैः अन्विच्छेत् परीप्सेत्॥ १९० ॥

(७) **मणिरामः।** अनिक्षेप्तारं अनिक्षिप्य याचितारं॥ १९० ॥

(८) **गोविन्दराजः। निक्षेपस्येति।** निक्षेपस्यापहर्तारं मुनिभिस्तत्त्वदर्शिभिः सर्वै-रुपायैः सामादिभिर्वैदिकैश्च शपथैरग्निहरणादिभिः राजा निश्चिनुयात्। अनिक्षेप्तारमिति ब्रुवन् नियोक्तुरपि इति ज्ञापयति॥ १९० ॥

(९) **भारुचिः।** यस्त्वपदेशाद्विना निक्षिप्तं याच्यमानो निक्षेप्त्रे न दद्यात्। असाक्षिके निक्षेप एतदुच्यते। निक्षेप्ता वा गृहीत्वा पुनर्याचिते अदत्वा वा स राज्ञा प्राड्विवाकेन वा

सामादिभिः सर्वोपायैरन्वेष्यः। तदसम्भवे तु शपथैश्चैव वैदिकैः अग्निहराणादिभिः। च शब्दाल्लौकिका अपि कोशपानादयोऽत्रानुरुध्यन्ते। कार्यासामान्याच्च निक्षेपविधेरन्यत्राप्येषामप्रतिषेधः ॥ १९० ॥

**यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ॥**
**तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ १९१ ॥**

(१) **मेधातिथिः।** निक्षिप्तमपह्नुवानस्य अनिक्षिप्तं याचमानस्य च दण्डोऽयम्। यावति धने मिथ्या प्रवर्तते तावद्दण्ड्यते ॥ १९१ ॥

(२) **सर्वज्ञनारायणः।** चौरवच्छास्यौ साङ्गच्छेदादिना रत्नाद्यपहारे अल्पे तु दाप्यौ चेति ॥ १९१ ॥

(३) **कुल्लूकः।** निक्षिप्तधनं यो न समर्पयति यश्चानिक्षिप्तं प्रार्थयति तौ द्वौ सुवर्ण मुक्तादौ महति विषये चौरवद्दण्ड्यौ। स्वल्पविषये ताम्रादौ तत्समं दण्डनीयौ ॥ १९१ ॥

(४) **राघवानन्दः।** मिथ्यात्वेनिर्णीते तयोदर्ण्डमाह इति। विप्रादन्यौ चेच्चोरवत्कायेन दण्डोपि, विप्रौ चेद्दाप्यावेव तत्समं यावति निक्षेपधने विवादस्तत्तुल्यम् ॥ १९१ ॥

(५) **नन्दनः।** दाप्यौ दण्ड्यौ ॥ १९१ ॥

(६) **रामचन्द्रः।** यो निक्षेपं न अर्पयति न ददाति यश्चानिक्षिप्य याचते तौ चौरवच्छास्यौ तत्समं दाप्यौ दण्डनीयौ ॥ १९१ ॥

(७) **मणिरामः।** दमं दण्डं ॥ १९१ ॥ १९२ ॥

(८) **गोविन्दराजः। निक्षेपमिति।** यो निक्षेपं न त्यजति यश्चानिक्षिप्यैवार्थयते तौ द्वौ महत्यपराधे कृतापराधे चौरवदुत्तमसाहसादिकं दण्ड्यौ। स्वल्पे वा तस्य निक्षेपस्य समं दण्ड्यौ ॥ १९१ ॥

**निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम् ॥**
**तथोपनिधिहर्त्तारमविशेषेण पार्थिवः ॥ १९२ ॥**

(१) **मेधातिथिः।** चोरवच्छिष्टिः पूर्वेणोक्ता। तया च शरीरनिग्रहस्तत्समधनं वैकल्पिके। जातिभेदेन ब्राह्मणादन्यत्र प्रदेश उक्तः। अनेन निवर्त्यते पुनर्विधानेन चोरवच्छिष्टिः। वाग्दण्डधिग्दण्डादिरूपैव समुच्चीयते धनदण्डेन नाङ्गच्छेदादिरूपा। न च ब्राह्मणस्यापि वैकल्पिके पूर्वेण शरीरदण्डे प्राप्ते तन्निवृत्त्यर्थं पुनर्वचनं युक्तम्, सामान्येन ब्राह्मणस्य शरीरदण्डप्रतिषेधात् "न जातु ब्राह्मणं हन्यात्" इति (३८१)।

**उपनिधिः।** प्रीत्या यद्भुज्यते। **अविशेषेण**—द्रव्यं जातिं च नापेक्षेत।

अन्यैस्तूपनिधिः परिभाषितः। स तत्रैव नेह। परिभाषाया अकरणाल्लौकिकार्थ एव

ग्रहीतुं न्याय्यः। वक्ष्यति च "प्रीत्योपनिहितस्य च" इति (१९६) ।। १९२ ।।

(२) **सर्वज्ञनारायणः।** अत्रच वर्णविशेषेण दण्डविशेषशङ्कां निवारयति निक्षेप-स्येति। उपनिधिपदं पूर्ववदुपलक्षणम्। अविशेषेण वर्णाविशेषेण ।। १९२ ।।

(३) **कुल्लूकः।** निक्षेपापहारिणंनिक्षिप्तसमधनंदण्डयेत्। समशिष्टत्वादनिक्षिप्य याचितारमपि। नच पुनरुक्तिः महत्यपराधे ब्राह्मणेतरस्य चौरवदिति पूर्वश्लोकेन शारीरदण्डस्यापि प्राप्तौ तन्निवृत्त्यर्थमिदम्। दापयेदिति धनदण्डनियमात्। नचानेन पूर्वश्लोकवैयर्थ्यम्। अस्य प्रथमापराधविषयत्वापूर्वोक्तं चाभ्यासे चौरोक्तमहासाहसादि-धनदण्डावरोधकत्वात्। उपनिधिर्मुद्रादिचिन्हितनिहितधनम्। तस्यापहर्त्तारं कथितविशेषणं राजा दण्डयेत् ।। १९२ ।।

(४) **राघवानन्दः।** निक्षेपहर्तुर्दण्डं दृष्टान्तीकृत्योपनिधिहर्तुस्तमाह निक्षेपस्येति। तत्समं निक्षेपधनसमम् ।। १९२ ।।

(५) **नन्दनः।** अविशेषेण वर्णविभागेन ।। १९२ ।।

(६) **रामचन्द्रः।** तथा उपनिधिहर्तारं उपनिधिपदेन अन्वाहितयाचिते विवक्षिते ।। १९२ ।।

(८) **गोविन्दराजः। निक्षेपस्येति।** निक्षेपापहारिणं तत्समं दण्डयेदिति पूर्वसिद्धस्य पुनर्वचनं प्रथमाऽपराधे महत्यपि पुनश्चौरवदित्येवमर्थम्। ये तु ब्राह्मणस्याङ्गविच्छेदादि चौरदण्डनिवृत्त्यर्थं इदं पुनर्वचनमित्यादि तदसत्। न जातु ब्राह्मणं हन्यादित्यादेर्वक्ष्यमाणत्वा-त्तथा प्रीतिभोग्यद्रव्यापहारिणमविशेषेण जातिमात्रविशेषेण तत्सर्वमेव दापयेत् ।। १९२ ।।

(९) **भारुचिः।** धनदापनस्य– तथोपनिधिहर्तारमविशेषेण पार्थिवः। औपरिष्ट-श्लोकार्थस्योपनिध्यर्थ आरम्भः। चेरवच्छिष्टिरधिकारादुपनिधावपि स्यात्। ब्राह्मणवर्जम्। यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते। तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम्। पूर्वव्यतिक्रमकारिणो दण्ड्यार्थोऽयमारम्भः विकल्पेन तथा ब्राह्मणं तु ।। १९२ ।।

**उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः।**
**ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ।। १९३ ।।**

(१) **मेधातिथिः। उपधा** व्याजः छद्मेत्यनर्थान्तरम्। ताश्चानेकविधाः। द्रव्य-परिवर्तः–कुङ्कुमं दर्शयित्वा कुसुंभादिदानं–तुलादिमानापचय इत्याद्याः। तत्र चान्यं विधिं वक्ष्यति "नान्यदन्येन संसृष्टम्" इत्यादि (२०३)। इह तु त्रिासनं राजत उपकारदर्शनं कन्यानुरागकथनमित्येवमाद्या गृह्यन्ते। चौरास्त्वां मुष्णन्ति यद्यहं त्वां न रक्षामि–राजा तवात्यन्तं कुपितो मया तु बहु समाहितं–राजतस्ते नगराधिकारं दापयामि मुख्यं वोपकारं करोमि–पुष्पमित्रदुहिता त्वय्यत्यन्तमनुरागिणी मद्धस्त इदमुपायनं प्रेषितवती–इत्येवमाद्यनृत-मुक्त्वाऽऽत्मीयमुपायनमासज्य बहु प्रतिनयन्ति–तत्समक्षं च राजनि तत्समं वा कार्यान्तर-

मुपांशु निवेद्य कथयन्ति—त्वदीयं कार्यमुपक्रान्तम्—इत्येवमाद्याभिरुपधाभिः परद्रव्यं च भुञ्जते। तेषामयं राजमार्गे **प्रकाशं विविधः** कुठारशूलरोपणहस्तिपादमर्दनाद्यनेकोपायसाधनो **वध** उच्यते।

अन्ये तु प्रकरणान्निक्षेपविषयमेवेदमाहुः। नन्व हि प्रतिपद्यान्यस्य मया निहितं स न न सन्निहितः श्वःपरश्व आगच्छतीत्यसमर्पयन्हरतीति ॥ १९३ ॥

(२) **सर्वज्ञनारायणः।** अतिप्रसिद्धनिक्षेपाच्छलेनापहारमाह उपधाभिरिति। न निक्षिप्तत्यादिच्छलोक्तया निक्षेपादिपरद्रव्यंयोहरेत्। प्रकाशं लोकसाक्षिकं विविधैश्छेदा-दिभिःसर्वैरेव। एतच्च भूयःकरणे ॥ १९३ ॥

(३) **कुल्लूकः।** राजा त्वयि रुष्टस्तस्मात्त्वां रक्षामि मम धनं देहि। धनधान्यादि-लोभोपकरणं वाऽनृतमभिधाय छद्मभिर्यः परद्रव्यंगृह्णाति स छद्मधनसहायैस्सहितो बहुजन-समक्षं करचरणशिरच्छेदादिभिर्नानाप्रकारैर्वधोपायैः राजा हन्तव्यः ॥ १९३ ॥

(४) **राघवानन्दः।** प्रासंगिकं परद्रव्याभिलाषितया मिथ्याभिलापिणां दण्डमाह उपधाभिरिति। उपधाहि राजा त्वयि रुष्टस्तस्मात् त्वां रक्षिष्यामि मह्यमर्थं देहि धनकन्या-दिलाभार्थमभिधानमुपधातैःयःपरद्रव्यं हरेत्सः ससहायः सत्यं अयं करोति मिथ्याभिधानेन साहाय्यंगतेन सह प्रकाशं बहुजनसमक्षंविविधैः शिरश्छेदादिनानाप्रकारैः ॥ १९३ ॥

(५) **नन्दनः।** उपधाभिः पञ्चविधाभिः ॥ १९३ ॥

(६) **रामचन्द्रः।** यःकश्चिन्नरः परद्रव्यं उपधाभिः उपायैर्व्याजैर्हरेत् ॥ १९३ ॥

(७) **मणिरामः।** राजा त्वयि क्रुद्धः तस्मात्त्वा रक्षामि मह्यंधन देहीत्याद्युपधाभिः ॥ १९३ ॥

(८) **गोविन्दराजः। उपाधिभिस्तु यत्किञ्चिद्वदति।** यो नरः परद्रव्यं हरेत्ससहायः कर-चरणच्छेदादिभिः नानाप्रकारैः वधोपायैः शकलं कृत्वा राजमार्गादौ राजा हन्तव्यः ॥ १९३ ॥

(९) **भारुचिः।** पविसामनेनाशादानेन स्वकन्यागं....न्यायेनागामिकालोपकारा-प्रदर्शनेनेत्येवमादिभिरुपाधिभिः परद्रव्यापहारी ससहायो विविधैर्वधैः प्रकाशमनुशासनीयः येन कष्टतर....धरपूर्वं द्रव्यापहारेणेति ॥ १९३ ॥

**निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ ॥**
**तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हति ॥ १९४ ॥**

(१) **मेधातिथिः।** य इति निक्षिप्यमाणद्रव्यजातिनिर्देशः। **यावानिति** परिमाणस्य। य आह—सुवर्णमेतस्य हस्ते मया निक्षिप्तं कांस्यं ददाति—शतं न स्यापितमयं ददाति—स पृच्छ्यते—किं रहस्युत कस्यचित्समक्षमिति। स चेदाह **कुलसंनिधौ**। **कुलं** साक्षिणः। तत्र ते पृष्टा यदाहुस्तदेव सत्यम्। **विब्रुवन्विरुद्धं** ब्रुवाणो दण्ड्यते। तत्रापि यदि ब्रूयात्साक्षि-समक्षं कथं तैर्विनाऽन्यत्स्थापितमिति—अस्त्यत्र प्रमाणान्तरव्यापारणावसरः।

अयमपि श्लोको नाधिकविध्यर्थः ॥ १९४ ॥

(२) **सर्वज्ञनारायणः**। सकृत्करणे तूक्तम्। निक्षेपो निक्षेपादिः। कुलस्य ज्ञात्यादेः। यः सुवर्णादिः। विब्रुवन् मह्यमस्य रक्षणभागो देय इति वदन् ॥ १९४ ॥

(३) **कुल्लूकः**। यः सुवर्णादिर्यावत्परिमितो येन साक्षिसमक्षंनिक्षेपः कृतस्तत्र परिमाणादिविप्रतिपत्तौ साक्षिवचनात्तावानेव विज्ञातव्यः। विप्रतिपत्तिं कुर्वन्नप्येतदुक्तानुसारेण दण्डं दाप्यः ॥ १९४ ॥

(४) **राघवानन्दः**। प्रकृतमनुवर्तयन् तत्र विशेषमाह निक्षेप इति। य इति स्वरूपतः यावानिति सङ्ख्यातः कुलसंनिधौ स्थापनकाले यावन्तः साक्ष्यादयस्तावतां संनिधौविज्ञेय इति शेषः। तथाकोऽपि साक्षिभिः स्वयंसङ्ख्याया विब्रुवन् विप्रतिपद्यमानोनिक्षेप्ता दण्डमर्हतीत्यन्वयः ॥ १९४ ॥

(५) **नन्दनः**। कृतः निक्षिप्तः। यावान् यत्परिमाणः। कुलसंनिधौ कुलीनाभिज्ञाने ब्रुवन् अयथावदन् ॥ १९४ ॥

(६) **रामचन्द्रः**। विब्रुवन् अन्यथाब्रुवन् स दण्डं अर्हति ॥ १९४ ॥

(७) **मणिरामः**। कुलसंनिधौ साक्षिसंनिधौ। तावानेव साक्षिकथितमेव विब्रुवन् विप्रतिपत्तिं कुर्वन्। ॥ १९४ ॥

(८) **गोविन्दराजः**। **निक्षेप इति :** यज्जातीयं द्रव्यं द्रव्यपरिमाणञ्च यत्साक्षिसमक्षं निक्षिप्तं द्रव्यं तत्परिमाणमेव साक्षिप्रत्ययेन बोद्धव्यं न प्रमाणान्तरेण तत्र परीक्षा कार्या। तत्र न निक्षेप्ता वितथं ब्रुवन् त्रिगुणकं दण्डमर्हति ॥ १९४ ॥

(९) **भारुचिः**। समाक्षिके सति निक्षेपे साक्षिणः. . . .प्रमाणं स्यादर्थसंख्यापरिमाणे ॥ १९४ ॥

**मिथो दायः कृतो येन गृहीतो मिथ एव वा ॥**
**मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥१९५ ॥**

(१) **मेधातिथिः**। सा यथा निक्षेपादिस्थानेन (१८०) निक्षेप्तविधिरयमुक्तः। अन्येषु कार्येष्वनेन प्रतिपाद्यते। ऋणादानोपनिधिविक्रयाद्यपि येन यादृशेन प्रकारेण कृतं तादृशेनैव प्रत्यर्पणीयम्। रहसि कृतस्य राजकुलेऽधमार्गणादिना प्रकाशनं न कर्तव्यम्। तेन स्वहस्तलेख्येन ऋणं गृहीते न राजकुलेऽसौ दाप्यते। उत्तमर्णधनं क्षपणीयम्।

अनेनैव निक्षेपेऽपि सिद्धे तत्र पुनर्वचनं नित्यार्थम्। तेन निक्षेपादन्यत्र रहसि कृतस्यापि विप्रतिपत्त्याशङ्कया प्रकाशे प्रतिदानं कदाचिदस्ति। अथवेहाप्रकाशकृतस्य प्रकाशीकरणं निषिध्यते। तत्र स्वल्पार्थः समुद्रोऽसमुद्र इत्यादि तेनापौनरुक्त्यम्।

**मिथः**शब्दो रहसि विज्ञेयः। अथवा परस्परं **मिथः**। सर्वं कार्यं द्वाभ्यां साध्यं दानादि परस्परमेव क्रियत इति। पुनर्वचनं तृतीयप्रतिषेधार्थम्।

**दाय**शब्दः सामान्यशब्दो निक्षेपादन्यानपि विक्रयादीनाह ।। १९५ ।।

(२) **सर्वज्ञनारायणः।** कुलासंनिधावसाक्षिकमाह मिथइति। मिथ एकान्ते। दायो निक्षेपदानम्। मिथोगृहीतो गृहीत्वापि न ज्ञापितोग्रहीत्रा मिथएव न साक्ष्यादिसंनिधौ। एतेन ग्रहणे साक्ष्यभावे प्रत्यर्पणेपि साक्षिणो नानुसंधेया इत्युक्तम्। यथादायस्तथेतितु ससाक्षिके ससाक्षिकएवेति ।। १९५ ।।

(३) **कुल्लूकः।** रहसि येन निक्षेपोर्पितोनिक्षेपधारिणा च रहस्येवगृहीतः सनिक्षेपो रहस्येव प्रत्यर्पणीयः न प्रत्यर्पणे साक्ष्यपेक्षा यस्माद्येनैव प्रकारेण दानं तेनैव प्रकारेण प्रत्यर्पणंदातव्यमिति श्रवणान्निक्षेपधारिणोयं नियमविधिः। योयथा निक्षिपेद्धस्त इति तु निक्षेप्तुर्नियमार्थं ग्रहीतव्य इति श्रवणात् अतो न पौनरुक्त्यम् ।। १९५ ।।

(४) **राघवानन्दः।** निक्षेपधारिणोनियममाह मिथइति। मिथःअन्योन्यंनिक्षेपधारिणा रहसि निक्षेपः कृतश्चेद्रहस्येव याचितव्योवायथा दायः स्थापनं तथाग्रहस्तेनैव प्रकारेणादानम् न तत्र साक्ष्यपेक्षेतिभावः ।। १९५ ।।

(५) **नन्दनः।** दायसमर्पणंमिथः रहसि असाक्षिकमितियावत् ।। १९५ ।।

(६) **रामचन्द्रः।** तथा ग्रहः गृह्णातीतिग्रहः मिथएव ग्रहः ग्रहीतव्यः येन पुंसा मिथः एकांते दायः निक्षेपदानंकृतः यथा दायः तथा ग्रहः ग्रहणीयः ।। १९५ ।।

(७) **मणिरामः।** मिथः परस्परं रहिसिकृतः दायः निक्षेपादिःमिथएव रहस्येव ।। १९५ ।।

(८) **गोविन्दराजः। मिथ इति।** परस्परं रहसि येन निक्षेपोकृतो निक्षेपितः निक्षेपधारिणाऽपि रहस्येव गृहीतः स निक्षेपो रहस्येव प्रत्यर्पणीयः। न प्रत्यर्थेन साक्ष्याद्यपेक्षं(क्ष्यं) यस्माद्येन प्रकारेण दानं तेनैव प्रत्यर्पणमितीव निक्षेपधारिनियमार्थं प्रदातव्य इति यो यथा निक्षिपेद्वस्तु इतीदं निक्षेप्तृनियमार्थं गृहीतव्यश्रवणाधिक्ये सति यदस्य श्लोकप्रतिविधिविषयत्वं व्याख्यातं, सामान्यविषयं तावत् व्याख्यानं वा केषाञ्चित्तच्छिष्टैः परीक्ष्यम्। ।। १९५ ।।

(९) **भारुचिः।**. . . यन्तु पूर्वश्लोके निक्षेपप्रकरणोक्तत्तादर्थं एव। अयं पुनरुपनिध्यर्थत्वात् पुनरुक्तस्तेनैव विज्ञेयः। सामान्यविशेषप्रकारेण वानयोः श्लोकयोरपुनरुक्तता वर्णयित(व्यः? व्या) ।। १९५ ।।

## निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।।
## राजा विनिर्णयं कुर्यादक्षिण्वन्न्यासधारिणम् ।। १९६ ।।

(१) **मेधातिथिः।** प्रकरणोपसंहारोऽनेन क्रियते। **प्रीत्योपनिहितस्य।** स्नेहेन किंचित्कालं भोगार्थं दत्तस्य **न्यासो** निक्षेपः। तस्य धारणको यथा न पीड्यते तथा निर्णयः कर्तव्य इति। **अक्षिण्वन्नपीडयन्।**

द्वित्राः श्लोका निक्षेपप्रकरणे विध्यर्थाः। सर्वमन्यदन्यतः सिद्धं सौहार्देनोक्तम् ॥ १९६ ॥

(२) **सर्वज्ञनारायणः।** निक्षिप्तस्येति याचिताद्युपलक्षणम्। प्रीत्योपनिहितस्य यावदस्मदागमनं तावत्त्वया क्षीराद्यस्या गृह्यतामिति गवादेर्बन्धुत्वेन रक्षणार्थं स्थापितस्य। अक्षिण्वन् प्रथमत एव दण्डेनाहिंसन् निक्षेपः॥ १९६ ॥

(३) **कुल्लूकः।** राज्ञा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रादियुतस्य वोपनिधिरूपस्य तथा प्रीत्या कतिचित्कालं भोगार्थमर्पितस्यानेनोक्तप्रकारेण न्यस्तधनधारिणमपीडयन्निर्णयं-कुर्यात्॥ १९६ ॥

(४) **राघवानन्दः।** नृपतेर्नियममाह निक्षिप्तस्येति। प्रीत्योपनिहृतस्य प्रीत्यर्थं कंचित्कालं दत्तस्य अक्षिण्वन्नपीडयन् न्यासधारिणं साक्षी नैवंविध इति भावः। इति निक्षेप-प्रकरणम्॥ १९६ ॥

(५) **नन्दनः।** उपसंहरति निक्षिप्तस्येति। विनिर्णयंप्रतिदानम् विवादपदंसमाप्तम् ॥ १९६ ॥

(६) **रामचन्द्रः।** प्रीत्या निक्षिप्तस्य च पुनः उपनिहितस्य राजा विनिर्णयं कुर्या न्यासधारिणं अक्षिण्वन् अपीडयन्॥ १९६ ॥

(७) **मणिरामः।** अक्षिण्वन् अपीडयन्॥ १९६ ॥

(८) **गोविन्दराजः। निक्षिप्तस्येति।** निक्षेपधार(रि)णमपीडयन् निक्षिप्तस्य द्रव्यस्य प्रीत्या च साम्प्रतिकोपभोगार्थं अर्पितस्यानेन प्रकारेण निर्णयं कुर्यात्॥ १९६ ॥

(९) **भारुचिः।** समुद्रो विमुद्रो वा निक्षेपः विमुद्र एव तु प्रीतिविमुक्तभोग उपनिधिः। तयोरन्वेषणविधिरयं विज्ञेयः॥ १९६ ॥

**विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः॥**
**न तं नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम्॥ १९७॥**

(१) **मेधातिथिः।** अस्वामिविक्रयाख्यविवादपदमिदमनुक्रान्तम्।

**परस्य** यद्द्रव्यादि **स्वं** तच्चेद**स्वामी** तत्पुत्रादिरन्यो वा **विक्रीणीते** स्वामिनाऽननुज्ञातस्तं **स्तेनं** चौरं विद्यात्। यद्यपि यस्तस्मात् क्रीणाति स तमस्तेनं मन्यते।

**न तं नयेत साक्ष्यं तु।** तं पुरुषं न नयेत न प्रापयेत् साक्ष्यं न कारयेत्साक्षिकरणे न नियो-क्तव्य इत्यर्थः। यथा चौरस्तादृश एवासौ। स्तेनत्वाच्च न साक्षित्वम्। न साक्षित्व एव प्रतिषेधः। किं तर्हि? सर्वासु साधुजनसाध्यासु क्रियासु। परस्वमननुज्ञातेन विक्रीतं क्रेतुर्न स्वं भवतीति सिद्धे साक्षिकर्मनिषेधद्वारेण प्रतिषेधो वैचित्र्यार्थः॥ १९७॥

(२) **सर्वज्ञनारायणः।** अस्वामिविक्रयमाह विक्रीणीत इति। न तं साक्ष्यन्तं नयेत् साक्षिसमीपं नयेत् तद्वचनाद्विनैव निर्धारणासंभवे। एतेन महापराधत्वमस्य कथयति। ॥ १९७ ॥

(३) **कुल्लूकः।** अस्वामी यः स्वामिना चाननुगतः परकीयं द्रव्यं विक्रीणीते वस्तुतश्चौरमचौरमात्मानं मन्यमानं तं साक्षित्वं न कारयेन्नकुत्रचिदपि प्रमाणीकुर्यादित्यर्थः। ॥ १९७ ॥

(४) **राघवानन्दः।** दण्डार्थमनुवदति विक्रीणीत इति। अस्वामी स्वाम्यसंमतश्च वस्तुतःस्तेनं तं साक्ष्यं साक्ष्युक्तिविषयं ननयेत्। तदर्थे साक्ष्यनादर इति भावः ॥ १९७ ॥

(५) **नन्दनः।** अस्वामिविक्रयमाह विक्रीणीते परस्येति। स्वाम्यसंमतः स्वामिना अननुज्ञातः। तंसाक्ष्यंन नयेत् ससाक्षित्वयोग्यो न भवेत्। एवं निन्द्योऽसावस्वामिविक्रयी तस्मादस्वामिविक्रयं न कुर्यादिति ॥ १९७ ॥

(६) **रामचन्द्रः।** यःअस्वामी परस्य स्वं द्रव्यं स्वाम्यसंमतः तं साक्ष्यं न नयेत्। अस्तेनमानिनं स्तेनं ज्ञेयम् ॥ १९७ ॥

(७) **मणिरामः।** तं अस्वाभिविक्रयिणं साक्ष्यं न कारयेत् कुत्रचिदपि तन्न प्रमाणीकुर्यादित्यर्थः ॥ १९७ ॥

(८) **गोविन्दराजः। विक्रीणीतेति।** योऽस्वामी स्वामिनाऽननुज्ञातः परकीयं द्रव्यं विक्रीणीते तमचौरमात्मानं श्रुतचौरं प्राड्विवाकः साक्षिकं न कारयेदिति साक्षिकर्मनिषेधद्वारेण तस्यापकारित्वप्रतिपादनं क्रियाऽन्तरेष्वप्ययोग्यत्वप्रतिपादनार्थम् ॥ १९७ ॥

(९) **भारुचिः।** अनादिविक्रय इदानीमुच्यते, न तन्नयेत साक्ष्यमित्यस्य प्रदर्शनार्थत्वात् सर्वाप्रामाण्यादेव तन्निवर्तयति ॥ १९७ ॥

## अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम्।
## निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥ १९८ ॥

(१) **मेधातिथिः।** पूर्वेण साधुजनकर्तृकासु क्रियासु साक्ष्यादिष्वपि अस्वामिविक्रयकारिणामनर्हतोक्ता। अनेन षट्शतो दण्ड उच्यते। षट्कार्षापणशतानि **अवहार्यो** दापयितव्यो दण्ड्य इति यावत्। **सान्वयः। अन्वयो**ऽनुगमनसंबन्धः—स यस्यास्ति पुत्रभ्रात्रादिः स्वामिनोऽनुगतः **सान्वयः।** स ह्यननुज्ञातोऽपि विक्रीणानो न स्फुटचोरो यतस्तस्येयं बुद्धिर्मदीयमेवैतद्यत्पितुरिति—तं प्रतीयमपि संभावना भवति तस्यैव विक्रीय मूल्यं ददाति। यस्त्वत्यन्तासंबन्धः स **निरन्वयः। चौरकिल्बिषं** निग्रहं निःसंशयं प्राप्तः। **अनपसरः।** यदि तद्गृहं तस्य नापसृतं भवति तदाऽ**नपसरश्चौ**रवद् दण्ड्यः। यदि तु तद्गृहादेव केनचिद्दत्तं विक्रीतं वा तस्य तेन वाऽज्ञत्वात् तत्प्रतिगृहीतं प्रकाशक्रयेण वा विक्रीतं तदा न चौरवद्दण्ड्यः। **षट्शतमेव** दाप्यः।

**अथवा** अन्वयो विक्रीणाति तस्य विक्रेयद्रव्यस्यान्यतः क्रयः **अपसरः** क्रयादन्यः प्रतिग्रहादिरागमः। एतदुक्तं भवति। यदि तेन तन्न कुतश्चन क्रीतं नापि प्रतिग्रहादिना लब्धं तदा चौरः ॥ १९८ ॥

(२) **सर्वज्ञनारायणः**। अवहार्यो दण्ड्यः। सान्वयस्तद्द्रव्ययोग्यसंबन्धाभासवान् तथा तस्मिन्न जीवति विभक्ततद्भ्रात्रादिः। निरन्वयोत्यन्तोदासीनः संबन्धाभासेनापिरहितः। तथा सान्वयोप्यनवसरोऽकालेऽदेशेच विक्रयंकुर्वन् चौरकिल्बिषं चौरापराधं प्राप्तः स्यात् ।। १९८ ।।

(३) **कुल्लूकः**। एष परस्वविक्रयी यदि स्वामिनो भ्रात्रादिरूपत्वेन सान्वयः संबन्धी भवति तदा षट्पणशतान्यवहार्योदण्डनीयः यदि पुनः स्वामिनः संबन्धी न भवतिअनपसरश्च स्यात्। अपसरत्यनेनास्मात्सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः स यस्य स्वामिसंबधि-पुत्रादेः सकाशान्नास्ति तदा चौरसंबन्धिपापं प्राप्नोति तद्वद्दण्डनीय इत्यर्थः ।। १९८ ।।

(४) **राघवानन्दः**। न केवलमेवदण्डमप्याह् अवेति। एष परस्वापहारी अवहार्यो-दण्डनीयः। सान्वयः स्वामिनोभ्रात्रादिरूपेणसंबन्धी तदा षट्शतम्। निरन्वयश्चेच्चोरकि-ल्बिषं सहस्रं दण्ड्य इत्यन्वयः। अनपसर इति विशेषणम् अपसरत्यनेन स्वामिनो धनमित्यपसर : प्रतिग्रहक्रयपिण्डादिः स यस्य संबन्धी नास्ति सोऽनपसरः ।। १९८ ।।

(५) **नन्दनः**। अस्वामिविक्रयी सान्वयः ससहायः पणानां षट्शतमपहार्यः। किल्बिषंदण्डम्। नावसरः अनुग्रहावसररहितः। निर्दयमेव चोरवद् दण्ड्य इति यावत् ।। १९८ ।।

(६) **रामचन्द्रः**। एषः सान्वयः विभक्तभ्रात्रादिसंबन्धवान् अवहार्यः दण्ड्यः निरन्वयः अविभक्तभ्रात्रादिसंबन्धवान् अनवसरः चौरकिल्विषं प्राप्तः स्यात् ।। १९८ ।।

(७) **मणिरामः**। एषः परिस्वविक्रयी सान्वयः स्वामिसंबंधी भवति तदा षट्शतं षट्पणशतानि अवहार्यः दंडनीयः। यदि पुनः निरन्वयः संबंधी नभवति अपसरश्च नस्यात् अपसरति अस्मात्सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः स यस्य स्वामिसंबंधिपुत्रादेः सकाशान्नास्ति। तदाचौरकिल्विषं प्राप्तोतीत्यर्थः ।। १९८ ।।

(९) **भारुचिः**। अवहार्यो दण्ड्यः सान्वयः सनिस्सरः षट्छतं दमं निरन्वयस्तदनपसरः प्राप्तः स्याच्चौरकिल्विषम् इत्यनेन अपराधमहत्त्वाद्दण्डमहत्त्वं दर्शयति पूर्वस्मात् अन्यस्त्वाह– अपसरः क्रयादन्यो धनागमः ।। १९८ ।।

(८) **गोविन्दराजः। अपहार्य इति।** एष च परस्वविक्रयी यदि स्वामिना पुत्रादि-रुपत्वेनाऽनुगतो भवति षट्पणशतानि दण्डार्थमानयितव्यः। यदि पुनः स्वामिनो नानुमतो भवति अविद्यमानापसरश्च यदि स्वामिसम्बन्धपुत्रादेः सकाशात्कार्यादिना तद्द्रव्यं तस्य न संश्रितं भवति तदा चौरसम्बन्धिपापं प्राप्नोति। पापसहचरापदेशे-ऽपिदण्डातिदेशः ।। १९८ ।।

**अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।।**
**अकृतः स तु विज्ञेयो व्यवहारे यथा स्थितिः ।। १९९ ।।**

[अनेन विधिना शास्ता कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वन्तु चौरवद्दण्डमर्हति ।। १ ।।]‡

(१) **मेधातिथिः ।** न केवलमस्वामिसकाशाद्यत्क्रीतं तन्न सिध्यति, किं तर्हि, प्रतिगृहीतमपि । प्रतिग्रहेण प्रीत्या वा दानं **दायः** सोऽपि न सिध्यति । "विक्रीणीते परस्य" इत्यनेन (१९७) विक्रेतुः प्रतिग्रहीतुश्चास्वाम्यमुच्यते । "स्वामी रिक्थक्रये"त्यादिना (गौतम १०/३९) स्वाम्याशङ्कायां प्राप्तोऽयं प्रतिषेधः । **व्यवहार** एषा **स्थिति**र्नातिक्रमणीया ।। १९९ ।।

---

(१९९) दायोविक्रयएववा = क्रयोविक्रयएव । (ज, झ. ञ, ढ)

‡ (क, ख, ग, च, ण, ज, झ. ञ, ट, ठ, ड, र, ल)

(२) **सर्वज्ञनारायणः ।** क्रयोपि स्वाम्यसंमत्या स्वाम्यर्थं कृतो निवर्त्यः । एवं विक्रयोप्यकृतो न स्वत्वनाशकः । यथाव्यवहारे स्थितिः सेयमुक्तेति शेषः ।। १९९ ।।

[**सर्वज्ञनारायणः ।** एषच सर्वोऽज्ञानकृतविषयोऽज्ञाने त्वन्यथेत्याह अनेन विधिनेति ।।१ ।।]

(३) **कुल्लूकः ।** अस्वामिना यत्कृतं यद्दत्तं विक्रीतं वा तदकृतमेव बोद्धव्यम् । व्यवहारे यथामर्यादा तथाकृतं न भवतीत्यर्थः ।। १९९ ।।

(४) **राघवानन्दः ।** क्रयाद्यसिद्धिमप्याह अस्वामिनेति । स्वत्वरहितेन द्रव्येण अन्यायोपात्तेन परद्रव्येणवा यः क्रयःकृतः सोप्यस्वामिना कृतः स्यादेव । तथावस्तुतोऽस्वाम्यास्पदीभूतस्य विक्रय इत्यप्यविरोधः । व्यवहारे यथा मर्यादा तथाकृतं न भवतीत्यर्थः ।। १९९ ।।

(५) **नन्दनः ।** क्रयविक्रयग्रहणंदानादिनामप्युपलक्षणार्थम् ।। १९९ ।।

[**नन्दनः ।** एतदेवविशदयति अनेनविधिनेति । अनेनविधिना षट्शतेन दण्डेन ।। १ ।।]

(६) **रामचन्द्रः ।** सः अकृतः विज्ञेयः व्यवहारे यथास्थितिः ।। १९९ ।।

(७) **मणिरामः ।** अनेनेति । अनेन विधिनाऽस्वामिविक्रयं कुर्वन्नाज्ञानेन विज्ञानपूर्वकं वा शास्ता चौरवद्वधमर्हति ।। १ ।।]

(८) **गोविन्दराजः । अस्वामिनेति ।** अस्वामिना अदत्तं विक्रीतं वा तदकृतमेव बोद्धव्यमित्येवंविधा व्यवहारमर्यादा ।। १९९ ।।

(९) **भारुचिः ।** एवं च सति क्रयविक्रयावस्वामिकृतौ निपत्यावेव । तथा च स्वाम्येन धनभाक् स्यात् । न तु क्रेता विक्रेता वा धने स्वामी परितोषणीयः ।। १९९ ।।

**संभोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।।
आगमः कारणं तत्र न संभोग इति स्थितिः ।। २०० ।।**

(१) **मेधातिथिः ।** यस्मिन्वस्तुनि गोवस्तुहिरण्यक्षेत्रादावन्यस्य **भोगो** दृश्यते अन्यस्य

च रिक्थप्रतिग्रहादिरागमः स्वाम्यापादकस्तत्रागमो बलवान्न **भोगः। भोग एव संभोगः। कारणं** स्वाम्ये। **तत्रेति स्थितिः।** एवमनादिव्यवस्था न भोगमात्रेण स्वत्वम्। यादृशेन च स्वत्वं तत्पुरस्ताद्व्याख्यातम् "यत्किंचिद्दशवर्षाणि" (१४७) इति वानेन विरोधस्तत्रैव परिहृतः॥ २००॥

(२) **सर्वज्ञनारायणः।** एकस्य भोगो दृश्यते आगमश्च लेख्यादिर्न दृश्यते, इतरस्यच आगमो दृश्यते। तत्र यस्यागमस्तस्यैव न भोगिन इत्याह संभोग इति॥ २००॥

(३) **कुल्लूकः।** यस्मिन्वस्तुनि संभोगो विद्यते क्रयादिरूपस्त्वागमो नास्ति तत्र प्रथम-पुरुषगोचर आगम एव प्रमाणं न संभोग इति शास्त्रमर्यादा॥ २००॥

(४) **राघवानन्दः।** आधिःसीमेत्यादिना पूर्वोक्ताध्यादिनामष्टानां भोगेन न स्वत्व-मित्युक्तं तर्हि केन स्यादित्याशङ्कायामाह संभोग इति। आगमः प्रतिग्रहक्रयादिः कारण-तदृते दशवर्षोत्तरंभोगमात्रात्स्वत्वासिद्धेः भुक्त्यसत्वे आगमोन प्रमाणं किंतूभयम्। तथा-ह्याज्ञवल्क्यः "आगमोऽभ्यधिकोभुक्तेर्विना पूर्वक्रमागतात्। आगमो बलवान्नैव भुक्तिस्तो-कापि यत्र नो॥ "इतिपूर्वक्रमात् पित्रादित्रयभोगात्। अतएव नारदः"॥ आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमोभोगः प्रामाण्यं नाधिगच्छती"ति आगमेन प्रतिग्रहादि-नास्तोकेऽपीति रहसि प्रतिग्रहे कृते साक्षिरहिते। प्रतिग्रहीतरि मृते त्वमृतेवा स्तोकभोग-रहितं न पुत्रादयः प्राप्नुवन्तीत्यर्थः॥ २००॥

(५) **नन्दनः।** नास्तिकविप्रतिपत्तौ बलाबलमाह संभोगोयत्रेति। यत्र अस्वामिना विक्रीतेर्थे एकस्य संभोगोदृश्यते तत्रागमः कारणंप्रमाणं न संभोगः अस्वामिविक्रयसाधर्म्यात्॥ २००॥

(६) **रामचन्द्रः।** यत्र संभोगोदृश्यते आगमः साक्ष्यलेख्यप्राप्तिर्नदृश्येत॥ २००॥

(७) **मणिरामः।** यत्र यस्मिन् वस्तुनि संभोगो दृश्यते आगमः कथमनेन प्राप्तमित्या-गमनकारणं न दृश्यते। तत्र आगमः कारणं प्रमाणं न भोग इत्यर्थः॥ २००॥

(८) **गोविन्दराजः। संभोग इति।** यस्मिन्वस्तुनि भोगो दृश्यते आगमः पुनः क्रियादिः न क्वचिदस्ति तत्रागमः कारणं न संभोगोऽतश्च शुद्धागमस्य दशवर्षभोगेनाऽपि कार्यसिद्धिः॥ २००॥

(९) **भारुचिः।** एवं नागमात् अशुद्धद्रव्यस्य दशवर्षभोगेनापि स्वामिनः स्वत्वं॥ २००॥

## विक्रयाद्यो धनं किंचिद् गृह्णीयात्कुलसन्निधौ॥
## क्रयेण स विशुद्धं हि न्यायतो लभते धनम्॥ २०१॥

(१) **मेधातिथिः।** यादृशेन क्रयेण स्वाम्यं भवति तं दर्शयति। विक्रीणतेऽस्मि-न्व्यवहारिण इति 'विक्रयः' आपणभूमिस्ततो यो गृह्णीयाद्धनं गवादि क्रीयमाणं द्रव्यं मूल्यं

वा स **लभते न्यायतः क्रयेण**। **कुलसंनिधौ** विशुद्धम्। **न्यायतः क्रय** उचितेन मूल्येन। असंभाव्यपापपुरुषाकुलस्यान्यव्यवहर्तृमेलककारपुरुषसमूहस्य समक्षं गृहीतं लभते नापहारयति। अन्यथा अस्वामिना विक्रये तु द्रव्यं प्रतिनीयते किन्तु मूल्यं लभते। तस्माद्यस्तस्य विक्रयी सोऽन्यायतः क्रये दण्ड्यते मूल्यं च हारयति। एतदुक्तं (या. व्य. १७०)

> **"विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम्।**
> **क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥"**

एष एवार्थोऽनेन श्लोकेन प्रतिपाद्यते ॥ २०१ ॥

(२) **सर्वज्ञनारायणः**। कुलं संघः स च स्वर्णकारादिर्मध्यस्थः। क्रयेण विशुद्धं विक्रेतारि संभाव्य तावद्वस्तुसद्भावं तथा अमूल्यत्वादेशकालत्वादिक्रयाविशुद्धिरहितम्। अन्यथा स्वाम्यदर्शनेपि राज्ञएव तदित्यर्थः ॥ २०१ ॥

(३) **कुल्लूकः**। विक्रीयतेऽस्मिन्निति विक्रयदेशोविक्रयः ततोयत्क्रेयधनंकिंचिद्-व्यवहर्तृसमूहसमक्षं क्रीयतेऽनेनेति क्रयोमूल्यं तेन यस्माद्गृह्णीयात् अतोन्यायत एवास्वामिविक्रेतृसकाशात्क्रयणाद्विशुद्धं धनं लभते ॥ २०१ ॥

(४) **राघवानन्दः**। क्रयादिस्वत्वापादकमिति सनियममाह विक्रयादिति। विक्रयाद्विक्रेतुःधनं क्रेयम् क्रयेण द्रव्येण क्रीणात्यनेनेति। कुलसंनिधौ हट्टादिस्थितबहुजनसन्निधौ यो गृह्णीयात्तन्न्यायतोविशुद्धं धनं क्रेयद्रव्यं लभतेविप्रतिपत्तावपि मूल्यंविक्रेतृसकाशाल्लभत-इति भावः ॥ २०१ ॥

(५) **नन्दनः**। अस्वामिविक्रयमजानतः क्रेतुः दोषोनास्तीत्याह विक्रयाद्य इति। यः क्रेताधनंक्षेत्रादिकंक्रयेण हेतुना विक्रेतुः सकाशाद्धनंमूल्यंलभते ॥ २०१ ॥

(६) **रामचन्द्रः**। कुलसंनिधौ यः किंचिद्यदि गृह्णीयात्सः क्रयेण विशुद्धं देशकालोचितमूल्यं न्यायतोधनं लभेत ॥ २०१ ॥

(७) **मणिरामः**। कुलसन्निधौ समुदायसमक्षं। विक्रयात् विक्रयदेशात्। धनं अस्वामिकक्रेयधनं। क्रयेण मूल्येन गृह्यते तत् न्यायतः शुद्धमाप्यते। चोरत्वहंडयोनभवतीत्यर्थः ॥ २०१ ॥

(८) **गोविन्दराजः**। विक्रेयादिति। आपणभूमौ (यत्) प्रयत्नेन तद्व्यवहर्तृपुरुषसमक्षं वोद्धव्यम्। किञ्चिन्मौल्येन गृह्णीयात्स यस्मात्प्रकाशोचितः मूल्यकुलसंनिध्यापणस्थानानुष्ठितेन न्यायक्रमेण विशुद्धं तदीयं धनं मूल्यमानाधिकं हस्तात्स लभते ॥ २०१ ॥

(९) **भारुचिः**। यतश्चैतदेवमतः न्यायतस्तु क्रयः कुलसंनिधावनितेन मूल्येन संभाव्य चान्यात् पुरुषात्। एतच्च तस्यानभियोगो धनलाभश्च युक्तः। एवं बौद्धपूर्णव्यवहारयिता (यं ? य)न्यायकारिणः ॥ २०१ ॥

**अथ मूलमनाहार्यं प्रकाशक्रयशोधितः ॥**
**अदण्ड्यो मुच्यते राजा नाष्टिको लभते धनम् ॥ २०२ ॥**

(१) **मेधातिथिः।** असंभाव्यपातात् पुरुषादित्यादि न्यायतः क्रय उक्तः। स चेद्विक्रेता शक्य आहर्तुं तदा पूर्वोक्तो विधिः—"स्वामी द्रव्यम्" इत्यादि। अथ स विक्रयी गतः, येन क्रीतं स्वामिना विज्ञीकृतं तेन न **मूलं** विक्रेता पुरुष आहर्तुं न शक्यते। **प्रकाशं** जनसमक्षं प्रसिद्धाया विक्रयभुवः क्रीतमत उद्भूतेन क्रयेण शोधितद्रव्ये 'शुद्धः' क्रेताऽदण्ड्यो **मुच्यते। धनं** तु **नाष्टिकः** स्वामी आपितस्वं वा लभते। नष्टमन्वेषते **नाष्टिकः।** नष्ट-मस्यास्तीत्येवंऽनि कृते प्रज्ञादित्वात्स्वार्थिकोऽण् कर्तव्यः। नष्टं प्रयोजनमस्येति वा। तेनायं संक्षेपः—प्रकाशक्रये तु दण्डो न स्याद्धननाशस्तु स्थित एव ॥ २०१ ॥

(२) **सर्वज्ञनारायणः।** अस्वामिविक्रये तद्धनस्य मूलं विक्रेता यद्याहार्यस्तदा तमाहूय क्रेता शुध्यति। तदाहरणासंभवे तु प्रकाशक्रयेणाविनष्टदेशकालसमाक्षिकक्रयेण राज्ञा न दण्ड्यः। धनं तु मूल्यमदत्त्वैव नाष्टिको नष्टमतद्रव्यो लभेत। क्रयप्रकाशाभावे दण्डोऽपि ॥ २०२ ॥

(३) **कुल्लूकः।** अथ मूलस्वामी विक्रेता मरणाद्देशान्तरादिगमनादिनावानाहर्तुं शक्यते प्रकाशक्रयेण चासौ निश्चितस्तदा दण्डात्स एव क्रेता राज्ञा मुच्यते नष्टधनस्वामी च यदस्वामि-नाविक्रीतंद्रव्यंतत्क्रेतुर्हस्ताल्लभते। अत्र च विपर्यार्धमूल्यं क्रेतुर्दत्त्वा स्वधनं स्वामिना ग्राह्यम्। तदाह बृहस्पतिः॥ वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः। अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः॥ स्वामी दत्त्वार्धमूल्यं तु प्रगृह्णीयात्स्वकं धनम्। अर्धं द्वयोरपहृतं तत्र स्याद्व्यव-हारतः ॥ २०२ ॥

(४) **राघवानन्दः।** कुलमर्थाश्रयो क्रीतस्यापि नष्टधनस्वामिनोविप्रतिपत्तौ विशेषमाह अर्थेति। मूलं विक्रेतृरूपं अनाहार्यं देशाद्देशान्तरगमनात्साक्षात्कर्तुमशक्यं यदि तदा नाष्टिकः नास्ति कं धनं यस्य सताऽप्यभावः स्वीयधनं गृह्णीयात् क्रेता त्वदण्ड्यो यतः प्रकाशक्रयशोधितः प्रकाशे बहुजनसमक्षो क्रीतत्वेन चौरत्वाशङ्कानपनोदितेति यावार्थः। तथाच याज्ञवल्क्यः॥ स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते। हीनाद्रहोहीनमूल्ये वेलाहीने च तस्करइति॥ हीनादस्वामिनः। अल्पीकृतबहुमूल्यं निकृष्टाद्दासादेः क्रेता तस्कर इवदण्ड्य इति याज्ञ-वल्क्यार्थः। एवं क्रेतानु बृहस्पत्युक्ततोऽर्धमूल्यं प्राप्नोति। तथाच "वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः। अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः॥ स्वामी दत्त्वार्धमूल्यं तु-प्रगृह्णीयात्स्वकं धनम्। अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः इति॥ द्वयोः क्रेतृस्वामिनोः हृतं नष्टमित्यर्थः। मूलमाहार्यं चेत्तदाह याज्ञवल्क्यः "विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम्। क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी" तस्य परधनस्येत्यर्थः। यत्र भूम्यादौ प्रतिग्रहीतॄणां पौर्वापर्यं तत्र पूर्वएव प्राप्नोति पूर्वो तु बलवत्तरेति याज्ञवल्क्योक्तेः। पूर्वो प्रतिग्रहीतेत्यर्थः ॥ २०२ ॥

(५) **नन्दनः।** अथान्यशब्दादायदर्थः। मूलमनाहार्यविक्रेतुः सकाशान्नष्टं लभते ॥ २०२ ॥

(६) **रामचन्द्रः।** नाष्टिकः नष्टमूलद्रव्यः धनं लभते ॥ २०२ ॥

(७) **मणिरामः।** अथ मूलं नष्टद्रव्यं। अनाहार्यं अस्वामि विक्रेतृमरणात्। देशान्तरग-मनाद्वा आहर्तुमशक्यं अथ तद्यस्य हस्तेदृष्टं सच प्रकाशक्रयशोधितः। अयं क्रयकर्तानतुचौर

इति ज्ञातः। तदा स क्रयकर्ताऽदंडचोराज्ञामुच्यते। नाष्टिकः नष्टधनस्तुअर्द्धमूल्यंक्रेतुर्दत्वा स्वधनं तस्माल्लभत इत्यर्थः। तदाह बृहस्पतिः। वणिग्वीथी परिगतं विज्ञातं राजपुरुषैः। अविज्ञाताश्रयात्क्रीतं विक्रेता वा यत्रमृतः। स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीयात्स्वकं धनमिति ॥ २०२ ॥

(८) **गोविन्दराजः।** अभियोगकाले च तस्य यदि मूलमाहर्तुं शक्यं स्यात् विक्रेतुर-भावात्। अतस्तस्य प्रकाशक्रयेण शुद्धस्यादण्डत्वं युक्तम्। अपि च देशान्तरादागतैः पापकारिभिः निश्शङ्कं राजसन्निधावप्रविकाशं वि(क्रि ? क्री)यते द्रव्यं तत्र च यदि मूल्यस्या-नाहार्यत्वात् प्रकाशक्रयशुद्धे विक्रये क्रेतुर्दोषः स्यात्। एवं च सति राज्ञः सर्वदिक्को व्यवहारः साधूनामपि विच्छिद्येत। न चैतदिष्टम्। अतः क्रेतुरत्र नास्ति दोषः। नाष्टिकस्तु कारणतः स्वमर्थं प्रज्ञापयन् कथमिव न लभुत स्वधनम्। अतस्तस्य धनलाभो युक्तः। इतरस्य चादोषत्वाददण्ड्यत्वं युक्तम्॥ २०२ ॥

(९) **भारुचिः। अथ मूलमनाहार्यं प्रकाशक्रयशोधितमिति।** यदि तेन किञ्चि-द्देशान्तरं गत्वा क्रीतद्रव्यमूल्यमाहर्तुमशक्यं तदा पूर्वश्लोकन्यायेन प्रकाशक्रयशोधितं कृत्वा क्रेता दण्डत एव राज्ञा द्रष्टव्यः। स्वामी च तद्द्रव्यं यदस्वामिना विक्रीतं तत्क्रेतृहस्ताल्लभते ॥ २०२ ॥

**नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ॥**
**न सावद्यं न च न्यूनं न दूरे न तिरोहितम् ॥ २०३ ॥**

(१) **मेधातिथिः।** अस्वामिविक्रयप्रसङ्गेनान्योऽपि धर्म उच्यते।

**नान्यत्** कुंकुमादिद्रव्यं कुद्रव्येण तदाभासेन कुसुंभादिना **संसृष्टं** विक्रेयम्। यच्च **सावद्यं** चिरकालं भांडेऽवस्थिततत्वात् प्राप्तविभावं जीर्णमजीर्णाभासं वस्त्रादि। **न च न्यूनं** तुला-मानादिना। **दूरे**—दूरस्थितं—ग्रामे मम विद्यन्ते वासांसि गुडादि वा द्रव्यम्। **तिरोहितं** स्थगितं वस्त्रादिनाऽन्तर्हितं—यस्य वा स्वरूपं केनचिद्द्रव्यरागेणान्तर्द्धीयते पुराणं नववत्प्रतिभाति **तत्तिरोहितं** न विक्रेतव्यम्। इदं द्रव्यमीदृशं च प्रदर्श्य विक्रयः कर्त्तव्यः। अन्यथाकृतस्तु न कृतो दशाहादूर्ध्वमपि प्रत्यर्पणे न दोषः।

अन्यस्य दण्डस्येहानाम्नातत्वात् 'उपधाभिरि'त्येष एव दण्डः। प्रकरणभेदेन पठित-त्वादस्वामिविक्रयदण्ड इत्यन्ये ॥ २०३ ॥

(२) **सर्वज्ञनारायणः।** विक्रयप्रसंगागतमन्यदपि प्रदर्शयति नान्यदिति। नान्यदन्येन विजातीयेन संसृष्टंरूपं नाणकं विक्रयमर्हति विक्रीतमपि निवर्त्यमित्यर्थः। रूपपदं विक्रीत-मात्रोपलक्षणम्। सावद्यं दुष्टमदुष्टमितिविक्रीतं। न्यूनं धरणछद्मना समतां नीतम्। न दूरे दर्शनायोपस्थाने स्थितम्। न तत्रैवस्थितमपि वस्त्राददितिरोहितम् ॥ २०३ ॥

(३) **कुल्लूकः।** कुंकुमादिद्रव्यंकुसुंभादिना मिश्रीकृत्य न विक्रेतव्यं नचासारंसार-मित्यभिधाय नच तुलादिना न्यूनंन परोक्षावस्थितंनरागादिना स्थगितरूपं अत्रास्वामिविक्रय-

सादृश्यादस्वामिविविक्रये दण्डएव स्यात् ।। २०३ ।।

(४) **राघवानन्दः**। विक्रयप्रसंगेन द्रव्यान्तरमिश्रितं विक्रयमपि प्राप्तं तन्निषेधति नान्यदिति। रूपं कुंङ्कुमादि अन्येन कुसुम्भादिना संसृष्टं मिश्रीकृतम् सावद्यं सारमित्युक्ताऽसारम् न्यूनं परिमाणेनतत्। दूरे गृहंगत्वा ददामीति परोक्षावस्थितम्। तिरोहितं रागादिना। अत्राप्यर्धमूल्यं दण्डः। अविज्ञाताश्रयादिति पदेन सूचितत्वात् आश्रयपदस्य नानार्थत्वात् ।। २०३ ।।

(५) **नन्दनः**। अन्येनसंसृष्टमन्यद्रव्यंवस्तु कुंकुमादि न विक्रयमर्हति। सावद्यं-जरादिदोषदुष्टंवस्त्वादिकं न्यूनं परिभाषितेन परिमाणेन हीनम्। दूरेदुर्गमे देशान्तरे स्थिताः क्षेत्रादिकम्, तिरोहितं निखननापरोक्षं वर्णादीनि विक्रयमर्हति ।। २०३ ।।

(६) **रामचन्द्रः**। अन्यद्रव्यंअन्येन विजातीयद्रव्येण संस्पृष्टंमिलितरूपं न विक्रय-मर्हति। न सावद्यं नचन्यूनं दूरे वर्तमानंन। तिरोहितंविक्रयंनार्हति ।। २०३ ।।

(७) **मणिरामः**। अन्यत् कुंकुभादिअन्येन कुसुंभादिना संस्पृष्टरूपं मिश्रीकृत्य कपटेनविक्रयं नार्हति। न सारत्वं असारं सारमित्यभिधाय। न न्यूनं कपट तुलया न दूरेण परोक्षाऽव स्थितं न तिरोहितं रागादिनास्थगितरूपं विक्रेतव्यमित्यर्थः। अत्राप्येतादृशविक्रये-अस्वामिविक्रयदंडोज्ञेयः ।। २०३ ।।

(८) **गोविन्दराजः**। अस्वामिविक्रयव्यवहारसाधर्म्यात् तत्विक्रयकरण एवायम् उच्यते–अन्यत् कुंकुमादिद्रव्यमन्येन कुसुम्भादिना द्रव्येण संसृष्टं विक्रयं नार्हति। एवं च प्रतिषेधादस्यैवमकार्य मानुमीयते। एवं सावद्यमसंसृष्टमपि यद् भाण्डं पूतिकं चिरन्तनं जीर्णवस्त्रादि। न च न्यूनं यत्तुल्यान्तरेण पश्चाद्धीयते न दूरे अप्रत्यक्षत्वात्। एतेन तिरोहितं व्याख्यातम्। अद्रव्यं वा द्रव्यभासं यत् क्रियते भाण्डरागादिना कर्मणा तत् तिरोहितम्। एवं च सति ईदृशमेवं विक्रीणानस्य दोषत्वादस्य दण्डार्हता न केवलमशुद्धता विक्रेतुः। तथा च यदि क्रेता ऊर्ध्वमपि दशाहादेतद्विक्रेतुः प्रत्यर्पणीयमेव येनास्यै (तं ? तत्) प्रतिषेधशास्त्रं असद्विक्रयेणापोदितम्। "परेण तु दशाहस्य न दद्यान्नापि दापयेदि"ति। विक्रयसम्बन्धेनैवायमपरः कन्याव्यवहारः शुल्काश्रयः स्तूयते–

> **अन्यां चेद्दर्शयित्वान्या वोढुः कन्या प्रदीयते ।**
> **उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः ।।**

निरवद्यां कन्यां दर्शयित्वा यसा. . .ददाति तस्योभे अप्येते एकशुल्केनैव वहनीये ।।

(९) **भारुचिः**। नेति । न सावद्यमिति। कुकुंमादिद्रव्यं कुसुंभादिना व्याज-बुद्ध्या मिश्रीकृतं विक्रेतव्यम्। न चाप्तकरान्तःक्लेशादिदोषोपेतं यत्तुलादिनाऽपि व्यव-स्थितं न च रागादिना स्थगितरूपं एवं चात्रास्वामिविक्रयदण्डवत्स्यात् ।। २०३ ।।

**अन्यां चेद्दर्शयित्वाऽन्या वोढुः कन्या प्रदीयते ।।**
**उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः ।। २०४ ।।**

(१) **मेधातिथिः।** विक्रयप्रकारत्वाच्छुल्कादिना कन्यादानस्य अस्मिन् प्रकरणे ध उच्यते। शुल्ककाले रूपवतीं दर्शयित्वा गृहीतशुल्को यस्य रूपहीनां ददाति वयोहीनां गुणहीन वा तस्योभे अपि शुल्कदेनैकेन **शुल्केन** हर्तव्ये। कन्यानामेवायं धर्मः। गवाश्वादिद्रव्याण त्वस्मिन्व्यतिक्रमेऽन्यो विधिर्वक्ष्यते ॥ २०४ ॥

(२) **सर्वज्ञनारायणः।** प्रदीयते शुल्केनानेनेति उन्मत्तादिदोषवत्यपि। प्रथमं दोष कथने दण्डोनास्ति नापि निवृत्तिः। एतच्च द्रव्यान्तरेपि द्रष्टव्यं न्यायसाम्यात् कन्याप स्योपलक्षणत्वात् ॥ २०४ ॥

(३) **कुल्लूकः।।** शुल्कदेयां शुल्कव्यवस्थाकाले निरवद्यां दर्शयित्वा यदि सावद वराय दीयते तदा द्वेऽपि कन्ये तेनैवैकेन शुल्केनासौ वरः परिणयेदिति मनुराह। शुल्कग्रहण पूर्वककन्यादानस्य विक्रयरूपत्वादर्थक्रयविक्रयसाधर्म्येणास्यात्राभिधानम् ॥ २०४ ॥

(४) **राघवानन्दः।** आर्षेयादिविवाहेषु कन्यायाः शुल्कं प्राप्तमनूद्य तत्र विशेषमा अन्यां चेति। वोढुः विवाहोद्यतस्य। उभेते कन्ये। एकशुल्केन एकस्या यच्छुल्कं मूल्यं तेन मनुरब्रवीत् शास्त्रमर्यादेति ॥ २०४ ॥

(५) **नन्दनः।** अभिरूपांकन्यां शुल्कक्लृप्तिकाले दर्शयित्वाऽन्या कन्या तत्पित्रादिन वोढुः परिणेतुः प्रदीयते चेदेकशुल्केनाभिरूपाविषयपरिणितेन शुल्केन ते द्वेऽपिकन्ये सहोद्व हेदुपयच्छेत् ॥ २०४ ॥

(६) **रामचन्द्रः।** अथ कन्यानिमित्तंकिंचिदुच्यते अन्यांचेति। वोढुः परिणेतुः अन्या दर्शयित्वा अन्या वाकन्या प्रदीयते ते कन्ये एकशुल्केन उद्वहेत् परिणयेत् इतिमनुरब्रवीत् ॥ २०४ ॥

(७) **मणिरामः।** वोढुः वराय ते उभे शुल्कलोभाद्दर्शिताऽदर्शिते कन्ये। एकशुल्के अंगीकृतेनै तेनैवैकशुल्केन एक एव वरः वहेत् परिणयेत् ॥ २०४ ॥

(८) **गोविन्दराजः।** अन्यामिति। शुल्कदेयां कन्यां शुल्कवृद्धचेच्छाकाले निरवद्य दर्शयित्वा यदि सावद्या वरस्य दीयते तदा द्वे अपि कन्ये तेन एकेनैव शुल्कदानेन हरेत्। इति विक्रयसाधर्म्येणास्येतभिधानम् ॥ २०४ ॥

**नोन्मत्ताया न कुष्ठिन्या न च या स्पृष्टमैथुना ॥**
**पूर्वं दोषानभिख्याप्य प्रदाता दण्डमर्हति ॥ २०५ ॥**

(१) **मेधातिथिः।** उन्मत्तादिदोषान्कथयित्वा ददतो दण्डो नास्तीति प्रतिषेधद्वारेण कथयतो दण्डमाह। न केवलं शुल्के देया–या अन्यस्या अपि ब्राह्मादिविवाहेन विवाहयिष्य माणायाः–दत्ताऽप्यदत्ता भवति, दण्डश्च प्राप्नुयाच्चौरकिल्बिषमिति जानानस्य। अजानत षट्शतम् प्रकृतत्वात्।

**उन्मत्ताया कुष्ठिन्या** ये कुष्ठोन्मादादयः। **या च स्पृष्टमैथुना** तस्याश्च यो दोषो मैथुन

स्पर्शः। तान्दोषान्पूर्वं वाक्प्रदानेनाख्याप्य प्रकाश्यैतद्दोषा कन्येत्येवमुक्त्वा ददतो नास्ति दण्ड इति पदयोजना ।। २०५ ।।

(२) **सर्वज्ञनारायणः।** या स्पृष्टमैथुना लब्धपुंयोगा तस्या दाता। अभिख्याप्य प्रकाश्य। अस्वामिविक्रयः ।। २०५ ।।

(३) **कुल्लूकः।** उन्मत्तायास्तथा कुष्ठवत्याया चानुभूतमैथुना तस्या ब्राह्मणादिविवाहात्पूर्वमुन्मादादीन्दोषान्वरस्य कथयित्वा दण्डार्होनभवति तेनाकथने दण्डइति गम्यते। यस्तु दोषवतींकन्यामितिवक्ष्यति ।। २०५ ।।

(४) **राघवानन्दः।** कन्याप्रसंगेन ज्ञाततद्दोषाकथने दण्डइत्याह नेति। या स्पृष्टमैथुना स्पृष्टमनुभूतं मैथुनसुखं यया स्यादिति शेषः। तासां पूर्वदोषान् अनभिख्याप्य* अकथयित्वा तथा दाता चेद्दण्डंवक्ष्यमाणषण्णवतिपणानर्हतीत्यन्वयः ।। २०५ ।।

---

* अनभिख्याप्य अकथयित्वा = अनभिख्याप्यनदानं (राघ० २)

(५) **नन्दनः।** दोषवत्याः कन्यायादोषंप्रकाश्य प्रदातुनं दण्डइत्याह नोन्मत्तायाइति। कुष्ठिन्याश्च या स्पृष्टमैथुना तस्याश्च दोषानभिख्याप्य पूर्वंप्रदानात्प्राक्। प्रदाता दण्डंनार्हति। अनभिख्याप्य प्रदानाद्दण्डमर्हतीत्यर्थः। सिद्धिमुन्मत्तादिग्रहणंसर्वदोषाणां सर्वासामप्युपलक्षणार्थम्। अस्वामिविक्रयःसमाप्तः ।। २०५ ।।

(६) **रामचन्द्रः।** उन्मत्ता या कुष्ठिन्या या स्पृष्टमैथुनापूर्वंदोषान् अविख्याप्य अकथयित्वा एवंयःकन्यादाता सःदण्डमर्हति ।। २०५ ।।

(७) **मणिरामः।** उन्मत्ततादिदोषं वरायपूर्वं कथयित्वा चेत्कन्यां प्रयछति तदा प्रदाता न दंड्यः अकथयित्वादंड्य इत्यर्थः ।। २०५ ।।

(८) **गोविन्दराजः। नेति।** उन्मत्तायाः कन्यायास्तथा कुष्ठवत्या या चानुभूतमैथुना तस्याः ब्राह्मया (क्षा) दि विवाहादावपि दानात्पूर्वमुन्मत्तादीन् दोषान्वराय कन्यां दत्वाऽख्यापयन् दण्डमर्हति। दण्डश्च दोषवतीमिति वक्ष्यते ।। २०५ ।।

(९) **भारुचिः।** एवं च सति दोषवत्यास्तद्दोषाकथने विपर्यास···वेदने ऊढायाश्च दोषवत्या अपिपरित्यागो नास्ति ।। २०५ ।।

**ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।।**
**तस्य कर्मानुरूपेण देयोंऽशः सहकर्तृभिः ।। २०६ ।।**

(१) **मेधातिथिः।** संभूयसमुत्थानस्य प्रक्रमोऽयम्। तत्र वैदिकं तावत्संभूयकार्यमुदाहरति। **यज्ञो** ज्योतिष्टोमादिः। तत्र यागरूपानेकांगकर्मनिर्वर्तनार्थमृत्विग्वृतः—'त्वया ममेदं हौत्रं कर्तव्यमाध्वर्यवमौद्गात्रं वेति' श्रौतेन विधिनाऽनुष्ठेयमित्युपगमश्च प्रवर्तितः। कथंचिदपाटवादिना सामिकृतं **यत्परिहापये**त्त्यजेत्तदानीं तस्य **देयो** दक्षिणांशः **कर्मानुरूपेण**। यावती तस्मिन् क्रतौ दक्षिणा तां निरूप्य चतुर्थे भागे कर्मणः कृते चतुर्थ इत्येनदानु-

रूप्यम्। **सहकर्तृभिः।** कर्त्तारः पुरुषाः प्रधानर्त्विजो होतुद्गात्रादीनां प्रस्तोतृमैत्रावरुण-प्रभृतयः ।। २०६ ।।

(२) **सर्वज्ञनारायणः।** संभूयसमुत्थानमाह ऋत्विगिति। परिहापयेत् व्याध्यादिना न समापयेत्। सहकर्तृभिरन्यैस्तत्स्थानपूरणाय स्थितैः ।। २०६ ।।

(३) **कुल्लूकः।** अथसंभूयसमुत्थानमाह ऋत्विगिति। यज्ञे कृतवरणऋत्विग्यदि किंचित्कर्मकृत्वा व्याध्यादिना कर्मत्यजति तदा तस्येतरऋत्विग्भिः पर्यालोच्य कृतानुसारेण दक्षिणांशो देयः ।। २०६ ।।

(४) **राघवानन्दः।** संभूय च समुत्थानमातिदेशिकंभविष्यतीतिकृत्वा दत्तस्यानपकर्माह ऋत्विगितिद्वादशभिः। तत्रादौ दक्षिणाया दृष्टार्थतया श्रुतिरूपत्वं प्रकटयन्नाह ऋत्विगिति। स्वकर्माध्वर्यवादिकं हापयेत् त्यजेत् वृतः वरणं मानतः व्याध्यादिना कर्तृभिःसह संमन्त्र्य तैस्तदीयकर्मसमापयद्भिःकर्मानुरूपोंशोदेयः ।। २०६ ।।

(५) **नन्दनः।** अथ संभूय समुत्थानं प्रस्तौति ऋत्विग्यदीति। कर्मानुरूपेणांशो देयः कर्मचतुर्थेऽशे कृते दक्षिणायाश्चतुर्थांशोदेयइत्यादि। सहकर्तृभिः सहकारिभिः ऋत्विग्भिः ।। २०६ ।।

(६) **रामचन्द्रः।** यदि ऋत्विग्यज्ञे वृतः स्वकर्म व्याध्यादिना परिहापयेत् त्यजेत तस्यअन्यकर्तृभिःसहअन्यर्त्विग्भिःसह। तस्य कर्मानुरूपेण अंशोदेयः ।। २०६ ।।

(७) **मणिरामः।** कर्मकर्तृभिः सह ।। २०६ ।।

(८) **गोविन्दराजः।** संभूय च समुत्थानमाह **ऋत्विगिति।** प्रधानऋत्विक् होमादिश्रौतकरणेन कृतकरणो ज्योतिष्टोमादौ यदि व्याधिना स्वं कर्म परित्यजेत् तदा तस्य तदनुयाचितमित्रावरुणादिभिः तस्य कृतकर्मानुसारेण दक्षिणा दातव्या ।। २०६ ।।

(९) **भारुचिः।** क्रमप्राप्तं सम्भूयसमुत्थानमधुनोच्यते यतस्तदर्थं श्रौतमुदाहरणं दर्शयति। प्रधानर्त्विक्प्रक्रान्तक(र्मा ऽ र्मं) यदि परिहापयेत् स्वकर्मदेशान्तरगमनपटलादिभिरर्थलक्षणैः तस्य कर्मानुरूप्येण दक्षिणांशः स्यात्। कथं कर्मणः· · ·या अपि चतुर्भागः एवं त्रिभागादिष्वपि याज्यं स्वकर्तृभिरिति प्रस्थातृप्रभृतिंस्तत्पुरुषानाह ।। २०६ ।।

**दक्षिणासु च दत्तासु स्वकर्म परिहापयन् ।।**
**कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ।। २०७ ।।**

(१) **मेधातिथिः।** माध्यन्दिने सवने दक्षिणा दीयन्त इति। तत उपरिष्टात्कर्म त्यजतामप्रत्याहरणीयां **लभेत**–दक्षिणामितिशेषः–न प्रतीपं त्याजयेदित्यर्थः। अन्यां भृतिं दत्त्वा **अन्येन** पुरुषेण यजमानस्तत्कर्म समापयेत्।

'ऋत्विग्भिः कर्म कर्त्तव्यं वरणाच्च ऋत्विजो भवन्ति–तच्च नियतकाले प्राक्कर्मण आरंभात्–अंतःक्रतु क्रियमाणं विगुणं भवति–समाप्तिश्चापि कर्तव्येति–विगुणं चेत्समापनीय-

मंगान्येव तदन्यकर्तृकाणि करिष्यामीति'–बुद्धिनिवृत्त्यर्थमुक्तमन्येनैवेति। तावदेव विगुणं यदशक्यं–शक्यं तु सर्वं कर्तव्यम्।

केचित्कारयेदिति ऋत्विजोऽपि संबन्धमाहुः। गृहीत्वा दक्षिणां वाऽधिकां दद्यात्स्वयमशक्नुवन्। प्राग्दक्षिणाभ्यः शेषकर्मसमापने यजमान एवाऽधिक्रियते ॥ २०७ ॥

(२) **सर्वज्ञनारायणः**। अन्येनैव कारयेदृत्विकः स्वकार्यशेषम् ॥ २०७ ॥

(३) **कुल्लूकः**। माध्यंदिनसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्म परित्यजन्नतु शाठ्यात् कृत्स्नमेव दक्षिणाभागंलभेत कर्मशेषंप्रकृतमन्येन कारयेत् ॥ २०७ ॥

(४) **राघवानन्दः**। तस्यैवाप्तदक्षिणस्य विशेषमाह दक्षिणास्विति। स्वयं परित्यज्यान्येन कारयेच्चेत्कृत्स्नं लभेतान्यथा न संपूर्णं लभेतेतिभावः ॥ २०७ ॥

(५) **नन्दनः**। अस्यापवादमाह दक्षिणास्विति परिहापयन् त्यजन्न प्रतिदद्यात्। अन्येन स्ववर्ज्यपुरुषेण स्वकर्मकारयेत् ॥ २०७ ॥

(६) **रामचन्द्रः**। कृत्स्नमेव अंशं लभेत। च पुनः अन्येन कर्म कारयेत् ॥ २०७ ॥

(७) **मणिरामः**। दक्षिणासुदत्तासु पंचमदिने माध्यंदिने सवने दक्षिणादानसमये चेत्कर्मत्यजतितदेत्यर्थः ॥ २०७ ॥

(८) **गोविन्दराजः**। **दक्षिणास्विति**। दक्षिणासु च माध्यन्दिने सवने दक्षिणानयन्तीत्येवमादिदक्षिणाकाले दत्तासु दैवात्स्वसाध्यं कर्म परित्यजन् कृत्स्नमेव दक्षिणाकर्मशेषं चान्येनासौ प्रकृत ऋत्विक् कारयेत् ॥ २०७ ॥

(९) **भारुचिः**। अस्यापवादः–दक्षिणादानादूर्ध्वं तेषां स्वकर्माकुर्वतां कारणान्तरतो न प्रत्याहरणीया दक्षिणास्तेभ्यः अकुर्वा···व्यौ परिशिष्टानि कर्माणि अन्येनैव च कारयेत्। तानि तत्पुरुषेण वान्येन वा परिशिष्टकर्मानुरूपं यत्किञ्चिद्दत्वा इतरथा ह्यपरिसमाप्तं दक्षिणया तत्कर्म यजमानार्थं न स्यात्। इदमेव शास्त्रं परिशिष्टकर्मानुष्ठातुर्दक्षिणादाने विज्ञेयम् ॥ २०७ ॥

**यस्मिन्कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः ॥**
**स एव ता आददीत भजेरन्सर्व एव वा ॥ २०८ ॥**

(१) **मेधातिथिः**। इदमपरं प्रकृतोपयोगि वैदिकं कथ्यते। वैदिके कर्मणि सामस्त्येन दक्षिणा आम्नायंते न प्रतिपुरुषं विभागेन–'तस्य द्वादशशतं दक्षिणेति'। तच्चातिदेशेन क्रत्वन्तराणि तद्विकाराण्यनुगच्छन्ति राजसूयादीनि। तत्र च केषुचिदङ्गकर्मसु प्रतिपदमन्या दक्षिणाऽऽम्नाता पुरुषविशेषसंयोगेन–'हिरण्मये प्रकाशवदध्वर्यवे' इत्यादि। ताः **प्रत्यङ्गदक्षिणाः** संपद्यन्ते। किमध्वर्योश्चातुर्विद्यावादिकवद्ददातिसंबन्धः–सर्वेषामृत्विजां दक्षिणा –अध्वर्युस्तु द्वारमात्रम्–उत तस्यैव सा–अन्येषां प्रकृतांशः इति संशयोपन्यासार्थः श्लोकः।

प्रतिपदं पुरुषविशेषाश्रया अङ्गेषु दक्षिणाः **प्रत्यङ्गदक्षिणाः।** अथवा वीप्सायां प्रत्यङ्ग-शब्दः। अङ्गमङ्गमाश्रिताः **प्रत्यङ्गाः। स एव ता आददीत।** मुख्य एव पुरुषस्य ददातिना संयोग उत कर्तृत्वाविशेषादन्येऽपि भजेरँल्लभेरन्–प्रधानदक्षिणा इव इति कथयित्वा प्रश्नः। पुरुषविशेषमुक्तास्तदर्था एवेति निर्णयः। एवं ददातिर्मुख्यार्थो भवति। पुरुष-संयोगश्च नादृष्टार्थः ॥ २०८ ॥

(२) **सर्वज्ञनारायणः।** प्रत्यङ्गदक्षिणाः प्रतिस्वकर्मणां दक्षिणाः । स एव वाददीत यमृत्विजं प्रति यथोद्यते। सर्वेभजेरन् ऋत्वग्विशेषानित्युक्तिः ॥ २०८ ॥

(३) **कुल्लूकः।** यस्मिन्कर्मण्याधानादावङ्गमङ्गंप्रति या दक्षिणा यत्संबन्धेन श्रुताः स्युः स एव ता आददीत न तत्तद्भागमात्रं सर्वे विभज्य गृह्णीरन्निति संशयः ॥ २०८ ॥

(४) **राघवानन्दः।** दक्षिणाप्रसंगेन तद्विभागमाह यस्मिन्निति द्वाभ्याम्। आधानादौ प्रत्यङ्गदक्षिणाः अङ्गमङ्गंप्रति या भिन्नभिन्नकारिकादक्षिणा यत्संबन्धेन श्रुताहौत्रमित्यादिना समाख्याताः सएवर्त्विक् ताःसर्वाः प्राप्नुयादुत सर्वे वेतिसंशये। सएवेति तु पूर्वपक्षे ॥ २०८ ॥

(५) **नन्दनः।** सएव तस्य कर्मणः ॥ २०८ ॥

(६) **रामचन्द्रः।** यस्मिन्कर्मणि याःप्रत्यङ्गकर्मदक्षिणाउक्ताःस्युस्तादक्षिणाःसएव पुरुषआददीत। सर्वएव वाभजेरन्वा ॥ २०८ ॥

(७) **मणिरामः।** प्रत्यंगदक्षिणाः उक्ताः यस्मिन्कर्मणि आधानादौ। अंगमंगंप्रति या दक्षिणा यत्संबन्धेनश्रुताः स्युः सएव ता आददीत सर्वेवा ऋत्विजो विभज्य गृह्णीरन्नितिसंशयः ॥ २०८ ॥

(८) **गोविन्दराजः। यस्मिन्निति।** यस्मिन्कर्मणि आधानाग्नौ अङ्गमङ्गं प्रति याः दक्षिणाश्च उदिता स्युः यथारब्धमध्वर्युमित्यादौ प्रधानदक्षिणाश्च गावो देयाः आदिना कियत् उद्देशेन श्रूयन्ते स एव श्रुत त्वात्स्वीकुर्यात्। अथ पर्षद्वारिकावत् प्रतिग्रहमात्राव्या-पारात्सर्व एव उदितः इति सन्देहे उपन्यासः ॥ २०८ ॥

(९) **भारुचिः।** अनेन च प्रसङ्गेनेदमपरं तद्गतमेवोच्यते प्रत्यङ्गदक्षिणा सर्वदा संशय्यन्ते किममीषामृत्विजां प्रतिग्रहनियमः। चातुर्विध्य (पि ? वि) नियुक्तपारिक-ब्राह्मणवत् उत पदार्थस्वरूपस्वाभाव्यात् तदर्थेनेति न्यायविकल्पोऽनूद्यते ॥ २०८ ॥

**रथं हरेत चाध्वर्युर्ब्रह्माधाने च वाजिनम् ॥**
**होता वाऽपि हरेदश्वमुद्गाता चाप्यनः क्रये ॥ २०९ ॥**

(१) **मेधातिथिः। रथमध्वर्यु**राधाने हरेत्। **ब्रह्मा च वाजिनं** वेगवन्तमश्वम्। **होता वा अश्वं** वृषमन्यं वा। कासुचिच्छाखास्वाधान एता दक्षिणाः। अतः सोमक्रये यच्छकटं तदुद्गातुः। तत्र शकटेऽन्यतरोऽनड्वान्युक्तः स्यात् अन्यतरो वियुक्त इत्यपि पठ्यते। तेन च सोमः क्रीत उपाह्रियते।

अन्ये त्वपूर्वमन आहुर्न सोमोपाहरणार्थम्, न हि क्रयेण शक्यते विशेषयितुम् ।। २०९ ।।

(२) **सर्वज्ञनारायणः।** आद्यमुदाहरति रथमिति। आधाने अग्न्याधाने। अश्वं-होता ज्योतिष्टोमे। क्रये सोमक्रये।। २०९ ।।

(३) **कुल्लूकः।** अत्र सिद्धांतमाह रथमिति। केषाचिच्छाखिनामाधानेऽध्वर्यवे रथोदेयत्वेनाम्नायते। ब्रह्मणे वेगवानश्वः होत्रे चाश्वः। उद्गात्रे सोमक्रयवहनशकटमतो-व्यवस्थाम्नानसामर्थ्याद्या दक्षिणा यत्संबन्धत्वेन श्रूयते स एव तामाददीत ।। २०९ ।।

(४) **राघवानन्दः।** व्यवस्थामाह रथमिति। आधाने कर्मणि। अनः शकटम् क्रये सोमक्रयार्थं यदनः वाजीभूत्वादेवानवहदितिश्रुतेरश्वविशेषं वाजिनम् ।। २०९ ।।

(५) **नन्दनः।** तत्रैवास्यविकल्पस्यापवादमाह। रथंहरेदिति ।। २०९ ।।

(६) **रामचन्द्रः।** अध्वर्युः रथं हरेत गृह्णीयात्। आधाने अग्न्याधाने ब्रह्मा वाजिनं हरेत्। होता ज्योतिष्टोमे अश्वंहरेत्। च पुनः उद्गाता क्रये सोमक्रये अनः हरेत्। अनः शकटे मातारिश्वेत्यमरः ।। २०९ ।।

(७) **मणिरामः।** अत्रसिद्धांतमाह। रथमिति। आधाने केषांचित् शाखिनां क्रये सोमक्रयवहनशकटं। तथा च व्यवस्था न सामर्थ्याद्यत्संबंधेन या दक्षिणा श्रूयते स एव तामाददीतेति सिद्धांतः ।। २०९ ।।

(८) **गोविन्दराजः।** अत्र श्रुतत्वात्तादर्थ्यपक्षमाश्रित्य निर्णयमाह रथमिति। अध्वर्योरथो देयत्वेन श्रुतोवसतामेव स्वीकुर्यात्तथाधाने ब्रह्मा अश्वो देय इति तस्य श्रुतेः आददीत होताऽप्यश्वमात्मसात्कुर्यात् उद्गातापि सोमक्रये यच्छकटं तद्गृह्णीयात् ।। २०९ ।।

(९) **भारुचिः।** तादर्थपक्षं चाश्रित्यतदधुनोच्यते। क्रतौ नानाशाखावस्थितानां अङ्गदक्षिणानां बह्वीनां प्रदर्शनार्थः श्लोकः। एवं तावदाधाने प्रधानर्त्विग्दक्षिणा-त्रासोमिकेष्वपि ।। ।। २०९ ।।

## सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।।
## तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ।।२१० ।।

(१) **मेधातिथिः। सर्वेषामृत्विजां** ये **मुख्यास्तेऽर्धिनः।** यावती तस्मिन्क्रतौ साम-स्त्येन दक्षिणाऽऽम्नाता तस्यास्तेऽर्द्धिनोऽर्द्धहराः। सोमयागेषु हि षोडशर्त्विजस्तत्र चत्वारो मुख्या होताऽध्वर्युर्ब्रह्मोद्गातेति, तेषामर्धम्। 'तस्य द्वादशशतं दक्षिणेति' ततोर्धं षट्पञ्चा-शत्। **तदर्धेन** अष्टाविंशत्याऽर्धिनस्तद्वन्तः—**अपरे** येषां ततोऽनन्तरं वरणमाम्नातं मैत्रावरुणा-प्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः। **तृतीयिनः तृतीयांशाः।** अंशशब्दोऽर्धशब्देन समा-नार्थोऽर्धशब्दश्च नावश्यं समप्रविभाग एव—किंचिन्न्यूनेऽधिकेऽपि सामीप्येन वर्तते। तेन तृतीयो भागः षट्पञ्चाशतः षोडश गृह्णन्ते। एकैकस्य चतस्रो भवन्ति। समस्ततृतीयं भागं प्रयच्छन्ति षट्पञ्चाशतस्तृतीयं च। होतुरच्छावाकोध्वर्योर्नेष्टा ब्रह्मणोग्निदुद्गातुः

प्रतिहर्ता। ये च **पादिनस्ते** चतुर्थं भागं कर्मणः कुर्वन्तीति 'पादिनः'। चतुर्थे च स्थाने मैत्रावरुणस्थानान्ते। **चतुर्थांशाः**। द्वादशसमुदाये पूर्ववत्। एवं "तं शतेन दीक्षयन्ती"त्यत्रापि क्लृप्तिः कर्तव्या–'अर्धिनो दीक्षयति' 'पादिनो दीक्षयती'त्येवमादिभिः शब्दैः। तत्र द्वादशक्रमविधिरेव। अन्यत्र श्रुतो व्यवहार इहापि तयैव रीत्या कृत इति ॥ २१० ॥

(२) **सर्वज्ञनारायणः**। द्वितीयमुदाहरतिसर्वेषामिति। शतंगावोग्निष्टोमे दक्षिणा तत्र यदर्धं तद्भागिनः सर्वेषांमुख्याः होत्रध्वर्युब्रह्मोद्गातारः। अर्धमिति किंचिन्न्यूनंग्राह्यं अष्टाचत्वारिंशद्धि वस्तुतो भवन्ति। अपरेचत्वारोमैत्रावरुणाद्यास्तद्भागार्धेऽनार्धिनोऽर्धभागाः। तृतीयिनस्तृतीयास्तृतीयस्थानाअच्छावाकादयस्तृतीयिनोमुख्यदक्षिणास्तृतीयांशिनः। चतुर्थांशाश्चतुर्थस्थानभागिनोग्रावस्तुदादयः पादिनः पादभागाः ॥ २१० ॥

(३) **कुल्लूकः**। संप्रतिपत्तिविधाने दक्षिणाविभागमाह सर्वेषामिति। तं शतेनदीक्षयतीति श्रूयते तत्र सर्वेषांषोडशानामृत्विजांमध्ये ये मुख्याऋत्विजोहोत्रध्वर्युब्रह्मोद्गातारः समग्रदक्षिणायास्तेऽर्धहाराः। अष्टचत्वारिंशद्गोभाजोभवन्ति अतएव कात्यायनेन यद्वादशाद्येभ्य इति प्रत्येकद्वादशगोदानंविहितम्। यद्यपिशतस्यार्धपञ्चाशद्भवति तथापीह न्यूनार्धग्रहणेनापि मेऽर्धिनउच्यन्ते सामीप्यात्। अपरे मैत्रावरुणयोः प्रतिप्रस्थातृब्राह्मणच्छंसिप्रस्तोतारस्ते मुख्यर्त्विग्गृहीतदक्षिणार्धग्रहणेनार्धिनउच्यन्ते तृतीयिनोऽच्छावाकनेष्ट्रग्नीध्रप्रतिहर्तारस्तेमुख्यर्त्विग्गृहीतस्य तृतीयमंशंलभन्ते पादिनस्तुग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्याएते मुख्यार्त्विक्गृहीतस्य चतुर्थमंशंलभन्ते एतच्च षट्षट्द्वितीयेभ्यश्चतस्रः चतस्रश्चतृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्य इति सूत्रयता कात्यायनेन स्फुटीकृतम् ॥ २१० ॥

(४) **राघवानन्दः**। तं शतेन दीक्षयन्तीत्यादिसंख्याश्रवणे विभागविशेषमाह सर्वेषामिति। सर्वेतिगवामितिशेषः सर्वेषां षोडशानामृत्विजां ये मुख्याऋत्विजोहोत्रध्वर्युर्ब्रह्मोद्गातारः ते अर्धिनोऽष्टचत्वारिंशद्भागभागिनः अपरेमैत्रावरुणप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः तदर्धिनः मुख्यर्त्विग्गृहीताष्टचत्वारिंशदर्धं। ततएवार्धिनश्चतुर्विंशतिभागभागिनः। तृतीयिनोच्छावाकनेष्टा अग्नीध्रप्रतिहर्तारस्तु मुख्यर्त्विग्गृहीततृतीयांशभागिनः। अतएव षोडशभागभाजः पादिनः ग्रावस्तुनेतृपोतृसुरापास्ते मुख्यर्त्विक्चतुर्थांशाः। अतएव द्वादशभागभाजः। इतिप्रत्येकं द्वादश मुख्येभ्यः षट् द्वितीयेभ्यश्चतस्रस्तृतीयेभ्यस्तिस्रइतरेभ्यइति कात्यायनसूत्रेणैव तत्स्पष्टीकृतम्। दक्षिणायाश्रुतिरूपत्वं दीक्षितमदीक्षितादक्षिणाभिः परिक्रीताऋत्विजोयाजयेयुरिति श्रुतिसिद्धम् गावोऽत्र स्त्रियः गावोवै देवमातर इति श्रुतेः। एवंसहस्रदक्षिणेन यजेतेत्यादावपि विभागउन्नेयः ॥ २१० ॥

(५) **नन्दनः**। सर्वेषां षोडशानामृत्विजांमध्येहोताध्वर्युरुद्गाताब्रह्मेत्येते मुखसंज्ञाश्चत्वारः समस्तायाः ऋतुदक्षिणायार्द्धिनोर्द्धभाजः स्युः। मैत्रावरुणः प्रतिप्रस्थाता प्रस्तोता ब्राह्मणाच्छंसीत्यपरेऽर्धिसंज्ञाश्चत्वारस्तदर्द्धेन मुख्यर्त्विग्भागार्द्धेन भागिनःस्युः। अच्छावाकोनेष्टाप्रतिहर्त्ताग्नीध्रइत्येते तृतीयसंज्ञाश्चत्वारस्तृतीयांशामुख्यभागतृतीयभागभाजः स्युः। ग्रावस्तुदुन्नेता सुब्रह्मण्यः पोतेत्येते पादिनःसंज्ञाश्चत्वारश्चतुर्थांशभाजः स्युः। तद्यथा

दक्षिणांपञ्चविंशतिधा विभज्य प्रथमस्य चतुष्टयस्य द्वादशभागाःस्युः। द्वितीयस्य षट्। तृतीयस्य चत्वारः। चतुर्थस्य तृतीय इति प्रथमस्य सार्द्धद्वादशभागप्राप्तौ तस्यामपि यद्वादशभागाःस्युः। द्वितीयस्य षट्। तृतीयस्य चत्वारः। चतुर्थस्य तृतीयइति प्रथमस्य सार्द्धद्वादशभागप्राप्तौ तस्यामपि यद्वादशभागकल्पना चतुष्टयानामन्येषांभागकल्पना या दुःशकतामाभूदिति सर्वेषामर्द्धिनोमुख्याइत्यत्रार्द्धिशब्दः। किंचिन्न्यूनार्थवाचोमन्तव्य इति ॥ २१० ॥

(७) **मणिरामः।** संप्रतिपत्ति विधाने दक्षिणविभागमाह। **सर्वेषामिति।** तं शतेन दीक्षयतीति श्रूयसे तत्र सर्वेषां षोऽशर्त्विजांमध्ये मुख्याः ब्रह्मोद्गातृहोत्रध्वर्यणः। अर्द्धिनः समग्रदक्षिणायअर्द्धहराःअष्टाचत्वरिंशद्गोभाजोभवंति। यद्यप्यर्द्धं वंशाशद्भवति तथापि न्यूनाद्धग्रहणेनाप्यर्द्धिन उच्यंते। अपरे मैत्रावरुण प्रतिप्रस्थातृब्राह्मणाछंसि प्रस्तोतारः। अर्द्धेन अर्द्धिनः चतुर्विंशतिगोभाज इत्यर्थः। तृतीयिनः अछावाकनेष्टाग्नीध्रप्रतिहर्तारः। यांशाः मुख्यर्त्विगृहीतस्य तृतीयमंशं लभते षोडशगोभाजो भवंतीत्यर्थः। वादिनःत्वष्टृपोतृग्रावस्तुत्सुब्रह्मण्यः। एतेचतुर्थांशाः मुख्यर्त्विगृहीतस्य चतुर्थांशाः। द्वादशगोभाजो भवंतीत्यर्थः ॥ २१० ॥

(८) **गोविन्दराजः।** अधुना प्रधानदक्षिणाविधिमाह **सर्वेषामिति।** तं शतेन दीक्षयतीति श्रूयते। तत्र सर्वेषां ऋत्विजां मध्यांशे मुख्या ऋत्विजो होत्रध्वर्युर्ब्रह्मोद्गातारक्ते अर्धहरा अष्टाचत्वारिंशगोभाजो एवं तदर्धादि संख्याभिधानं वक्ष्यमाणं समञ्जसं भवति। कात्यायनश्च द्वादश द्वादशाद्येभ्यः इत्याह। तस्या अष्टा चत्वारिंशतोऽर्धेन चतुर्विंशत्याश्च परे द्वितीयस्थाना प्रति प्रस्थातृमैत्रावरुण ब्रह्माछंसि प्रस्तोतारोऽर्धवन्तः कात्यायनश्च षट् षट् द्वितीयेभ्य इत्याह। तृतीय स्थानिनीच्छावाकान शब्द अग्नीन् प्रतिहर्तारोऽष्टाचत्वारिंशत्तृतीयांशषोडशगोभाजः। कात्यायनश्चतस्रचतस्रस्तृतीयेभ्य इति आह, पादिनश्चतुर्थव्यवस्थाः पादसुब्रह्मण्याग्रावष्टुनोतारे अष्टा चत्वारिंशश्चतुर्थांश द्वादशगोभाजः। कात्यायनश्च तिसृतिसृ इतरेभ्य इत्यत आह ॥ २१० ॥

(९) **भारुचिः।** ताञ्छतेन दीक्षयन्तीवचनं तावदाधाने। प्रधानर्त्विग्दक्षिणानां सौमिकेष्वपि सर्वेषामधिनो मुख्यास्तदर्धाधिनः परे तृतीयांशाः। चतुर्थांशास्तु पादिनः। ताञ्छतेन दक्षयन्तीवचनदशाष्टचत्वारिंशद् भवन्तीति। एवं तदर्धादिव संख्यानिर्देश उत्तरत्र समर्थो भवति। तेनार्धिनोर्धिनोऽध्वर्युब्रह्महोतृन् होतारो मुखा ऋत्विजो भवन्ति। तदर्धेन चतुर्विंशत्या अर्धिनोऽपरे उक्तेभ्यो द्वितीयस्थानं प्रतिप्रस्थातुर्मैत्रावरुणब्राह्मणाच्छंसिप्रस्तोतारः। एवं च कात्यायनष्षट् षड्द्वितीयेभ्यो वक्ति। तृतीयिनः तृतीयं स्थानं येषां त इमे तृतीयिनस्तृतीयांशाःसंक्षेपे(न ? ण) शोडशपशुभाजः कात्यायनोऽपि चैवमेव वक्ति। चतस्रस्तृतीयेभ्य इति प्रत्येकं चतुर्थ अंशो येषां त इमे चतुर्थांशाः। समुदायतो द्वादशपशुभाजः पादिनो भवन्ति। कात्यायनोऽपि तिस्त्रस्तिस्त्र इतरेभ्यः। आद्यसंख्यापेक्षया पाद एषामस्तीति पादिनःचतुर्थस्थाना उच्यन्ते स्थाने। स्थानिनां व्यपदेशोऽयम्। चतुर्थ अंश एषां त इमे चतुर्थांशाः। समुदायतो द्वादशपशुभाजः पादिनो भवन्ति। चतुर्थांशशब्दस्तु भागकल्पकः समासपदेन।

तथा चोक्तं विपर्ययेण वैतद्व्याख्येयम्। उभयनिर्देशश्चात्रपादपूरणार्थो विज्ञेयः। यद्यप्य-न्यतरस्मादुभयार्थप्रतीतिः। अयं च सर्वो विधिन्र्यायिश्रुतिसिद्धो दृष्टान्तत्वेनेहोपादीयते। यथा —सम्भूयैकं कर्म सहकुर्वता गुरुलघुता(न ? म) वेक्ष्यानवेक्ष्य वा। वचनसामर्थ्याद्विषमांश-प्रक्लृप्तिः एवम्॥ २१०॥

**संभूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः॥**
**अनेन विधियोगेन कर्तव्यांऽशप्रकल्पना॥ २११॥**

(१) **मेधातिथिः।** यथा यज्ञे यो बहूनि कर्माणि कायक्लेशकरणे विद्वत्तातिशयसाध्ये च नियुक्तो भूयसीं दक्षिणां लभते न्यूनकर्मकारी तु न्यूनां तद्वल्ल्लौकिकेषु गृहचैत्यादिकारिषु **संभूय** संहत्य वर्धकिस्थपतिसूत्रधारादिषु स्वसमयप्रसिद्धो यावानंशः सूत्रधारस्य यावान्स्थ-पतेस्तत्रानेन **विधियोगेन**। 'विधि'र्वैदिकोऽर्थः तत्प्रसिद्धा व्यवस्था' विधियोगेन'वैदिक्या यज्ञगतया व्यवस्थयेत्यर्थः।

एवं नाटकादिप्रेक्षायां नर्तनगायनवादकेषु भागप्रक्लृप्तिः। यद्यपि सर्वे विद्वांसः सर्वकर्मा-नुष्ठानशक्ताश्च तथापि कर्मानुरूप्येण भागो न पुरुषानुरूप्येणेति संभूयसमुत्थानम्॥ २११॥

(२) **सर्वज्ञनारायणः।** स्वानि कर्माणि वाणिज्यादीनि। अनेन क्रमयोगेन विधि-प्रकारसंबन्धेन श्रमानुरूपधनविभागेन मूलसाम्येपि तल्लाभविभागस्तदार्जनश्रमानुरूप-एवेति। संभूयोत्थानम्॥ २११॥

(३) **कुल्लूकः।** मिलित्वा गृहनिर्माणादीनि स्वकर्माणि लोके स्थपतिसूत्रधार्यादिभिश्च मनुष्यैः कुर्वद्भिरनेन यज्ञदक्षिणाविधिनाश्रयणेन विज्ञानव्यापाराद्यपेक्षया भागकल्पना कार्या॥ २११॥

(४) **राघवानन्दः।** संभूयच समुत्थानमित्युक्तं तत्रातिदिशति समिति। इह लौकिके स्मार्ते च कर्मणि। एतद्दक्षिणाविभागः स्थपतिसूत्रधारादिभिः। अनेन मुख्या-मुख्यानुरूपविभागेनेत्यन्वयः॥ २११॥

(५) **नन्दनः।** एवमुक्तां वैदिकीं विषमांशकल्पनां लोकेऽप्यतिदिशति संभूय स्वामि-कर्माणीति। वाणिज्यादिषु भागवैषम्यकल्पनं मूल्यप्रयत्नगुरुलाघवापेक्षया कल्पनीयमिति। इति संभूय समुत्थानं समाप्तम्॥ २११॥

(६) **रामचन्द्रः।** स्वानि कर्माणि वाणिज्यादीनि कुर्वद्भिः मानवैःसंभूय मिलित्वा॥ २११॥

(७) **मणिरामः।** संभूय एकीभूय स्वानिकर्माणि गृहोत्थापनादीनि अनेन विधियोगेन यज्ञदक्षिणाप्रकारेण॥ २११॥

(८) **गोविन्दराजः। संभूयेति।** एकीभूय गृहनिर्वर्तनादीनि स्वकार्याणि स्थपति-वर्धकिसूत्रधारादिभिः मनुष्यैः सम्पादयद्भिरनेक मुक्त विधानाश्रयेण विज्ञान व्यापाराद्य-पेक्षया भागकल्पना कार्या॥ २११॥

(९) **भारुचिः**। एकस्मिन् गृहकरणादौ सूत्रकारवर्धकिस्थपत्यादीनां गुरुलघुतामवेक्ष्यानवेक्ष्य वा यथास्मरणं कर्तव्यांशप्रकल्पना ॥ २११ ॥

**धर्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम् ।**
**पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत् ॥ २१२ ॥**

(१) **मेधातिथिः**। यः कश्चिदाह 'सान्तानिकोऽहं यियक्षुर्वा देहिमे किंचिदिति तस्मै यदिदत्तं–भवेत्–स च न यजेत न विवाहकर्मणि प्रवर्तेत–तद्धनं द्यूतेन वेश्याभिर्वा क्षपयेदन्यत्र वा विनियुञ्जीत वृद्धिलाभकृष्यादौ–**न देयं तस्य** तद्दत्तस्य। दानप्रतिषेधो नोपपद्यते–अतः प्रत्याहरणीयमिति वाक्यार्थः।

अथवा दत्तान्तो गौणो व्याख्येयः–**दत्तं** प्रतिश्रुतं न **देयम्**। तथा च गौतमः (५/२१) "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्"।

किंपुनरत्र युक्तम्।

उभयमित्याह। दत्तस्य प्रत्याहरणं प्रतिश्रुतस्य वाऽदानम्। तथा च स्मृत्यन्तर उभयं पठितम्। आह हि नारदः (८/१०–११) "कर्त्ताहमेतत्कर्मेति" उपक्रम्य "यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम्" इति। प्रयोजनविशेषोद्देशेन यद्दत्तं तस्मिन्ननिर्वर्त्यमाने व्यवस्थितमपि प्रतिग्रहीतुर्गृहादाहर्त्तव्यम्। दानस्योपक्रममात्रं तदानीं समर्पणं समाप्तिस्तु निर्वृत्तप्रयोजनेति नारदस्य मतम् ॥ २१२ ॥

(२) **सर्वज्ञनारायणः**। दत्तानपाकर्माह धर्मार्थमिति। धर्मार्थं स्वधर्मसिद्ध्यर्थम्। न तथा धर्मार्थं भवति दानानर्हत्वादिना प्रतिग्रहीतुः। केचित्तु यागादिधर्मार्थे याचमानाय दत्तं तथा न भवति यदि तेन यागादि न करोतीति व्याचक्षते ॥ २१२ ॥

(३) **कुल्लूकः**। इदानींदत्तानपकर्माह धर्मार्थमिति। येन यागादिकर्मार्थं कस्मैचिद्याचमानाय धनंदत्तंप्रतिश्रुतंवा पश्चाच्च तद्धनमसौ यागार्थे न विनियुञ्जीत तदा तद्दत्तमपि धनंग्राह्यं प्रतिश्रुतंच न देयं। यदाह गौतमः प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्। ॥ २१२ ॥

(४) **राघवानन्दः**। किंच तवेदं यज्ञादिकर्म करिष्यामीतिकृत्वा याचते यद्दत्तं प्रतिश्रुतंवा सचेत्तत्कर्मनकरोति पुनस्तद्ग्राह्यमित्याह धर्मार्थमिति। नतथातत्स्यादत्तंनस्यात् अपितुदानस्यौपाधिकत्वात् उपाध्यभावेन स्वत्वापादनादित्यर्थः ॥ २१२ ॥

(५) **नन्दनः**। अथ दत्तानपकर्मात्मकं विवादपदं श्लोकद्वयेनाह धर्मार्थं येनेति। कस्मैचिद्याचते धर्मार्थं येन धनंदत्तंस्यात्पश्चाच्चेन्न तथा तद्धर्मार्थेन मया दत्तमिति प्रदातानुशयादभियुक्तंचेदित्यर्थः। तस्मै प्रदात्रे तेन प्रतिग्रहीत्रा तद्धनं नदेयं प्रदात्रा नापहार्यमित्यर्थः ॥ २१२ ॥

(६) **रामचन्द्रः**। कस्मैचित्भिक्षुकाय धनं याचते धर्मार्थं दत्तं स्यात् पश्चाद्दत्तानन्तरं तद्धनं **न तथा** तत्स्यात् तस्य स्वामिनः न देयं पूर्वस्वामिना तस्यग्रहीतुःतद्भवेत्विवादपरम्॥ २१२ ॥

(७) **मणिरामः।** इदानीं दत्तानपकर्माह। धर्मार्थमिति। न तथा तत्स्यात् यज्ञाद्यर्थ-गृहीतद्रव्येण यज्ञादिकं नकृतं चेत्स्यात्तदा तन्न देयं परावृत्य ग्राह्यमित्यर्थः ।। २१२ ।।

(८) **गोविन्दराजः।** **धर्मार्थमिति।** येन यागाद्यर्थं भिक्षमाणाय कस्मैचिद्धनं दत्तं प्रतिज्ञातञ्च स्यात्पश्चात्तद्धनमसौ यागार्थं यदि न युञ्जीत तदाऽस्य प्रतिश्रुतं न देयं, दत्तं वा प्रत्याहरणीयम् ।। २१२ ।।

(९) **भारुचिः।** न ह्यशिल्पेषु व्यवहारेषु वा मनुष्याणां तुल्यता शक्या ग्रहीतुमदत्ता-नवकर्मप्रदर्शनार्थमिदमाह स्वनिगदोपवर्णितः श्लोकः ।। २१२ ।।

**यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।।**
**राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ।। २१३ ।।**

(१) **मेधातिथिः।** **संसाधनं** राजनिवेदनादिना ऋणवत्प्रतिश्रुतस्य मार्गणं—स्वीकृतस्य प्रतियाच्यमानस्य राजनिवेदनं—अयं मह्यं दत्त्वा प्रतिजिहीर्षतीति सिद्धस्य दृढीकरणं—संसा-धनमेतदेतत्।

**दर्पाल्लोभेनेति** कारणानुवादः।

एवं कुर्वतो दण्डः **सुवर्णं** स्यात्तस्य **स्तेयस्य निष्कृतिरिति।** चौरदण्डमाशङ्कमानः सुवर्णं विधत्ते। अचौरशङ्कया च दत्तं किल तेन तस्मै न स्वयं हृतं कथमयं चौरः स्यादिति शङ्का निवर्तयितुं स्तेयशब्दः प्रयुक्तः। सत्यपि चौरत्वे वाचनिकः सुवर्णदण्डोऽन्यासु क्रियासु चौरवद्व्यवहर्तव्यः ।। २१३ ।।

(२) **सर्वज्ञनारायणः।** सुवर्णदाप्यः शतम् ।। २१३ ।।

(३) **कुल्लूकः।** यदि तद्दत्तमसौ गृहीत्वा लोभादहंकाराद्वा न त्यजति प्रतिश्रुतं वा-धनंबलेन गृह्णाति तदा तस्य चौर्यपापस्य संशुध्यर्थंराज्ञा स्वर्णदण्डंदापनीयोभवति ।। २१३ ।।

(४) **राघवानन्दः।** याचयितुस्तदादाने दण्डमाह यदीति। संसाधयेत् प्रतिश्रुतं-गृह्णीयात्। दत्तं नदद्याद्वा। अदाने हेतुः। दर्पेपि। दर्पोराजपुत्रादिबलम् स्तेयस्येत्यनेन तस्य स्वामिनो धनं दापनीयम्। राज्ञा ससुवर्णो दण्डत्वेन ग्राह्यइत्यर्थः ।। २१३ ।।

(५) **नन्दनः।** संसाधयेदनुतिष्ठेत्। तत्प्रतिग्रहणकाले प्रदात्रे निवेदितं धर्मं विवाहय-ज्ञादिकंमानवः प्रतिग्रहीता स्वर्णंप्रतिभाषितं पञ्चकृष्णलिको माषस्ते सुवर्णस्तु षोडशेति तद्दाप्यो दण्डरूपेण। अपहृतार्थे प्रतिपादनमर्थप्राप्तमेव। इतिदत्तानपाकर्म समाप्तम्।।। २१३ ।।

(६) **रामचन्द्रः।** दर्पाल्लोभेनवा पुनर्यदि तत्संधारयेत्तस्य स्तेयस्य निष्कृतीराज्ञा-सुवर्णदाप्यःस्यात् दापनीयः स्यात् ।। २१३ ।।

(७) **मणिरामः।** यदितत् धर्मार्थंगृहीतं ग्रहणार्थं वाअंगीकृतं वाद्रव्यं। लोभेन धर्ममकृत्वा संसाधयेन्। परावृत्त्यन दद्यात्। दर्पेण वा धर्मार्थं प्रतिश्रुतं नांगीकरोति। तदा तस्य चौर्यपापस्य निष्कृतिः शुद्धयर्थं राज्ञा स्वर्णं दाप्यः दापनीयः स्यात् ।। २१३ ।। २१४ ।।

(८) **गोविन्दराजः। यदिति**। यदि तत्प्रतिश्रुतं धनमसौ प्रतिगृहीताऽहङ्कारात्लोभाद्वा मार्गे स्वकृतं वा दातुं न त्यजेत् तदा तस्य चौर्यपापस्य संशुद्धयर्थं राज्ञा दण्डनीयो भवेत्। हठादपि दण्डितस्य दण्डेन पापनिर्हरणं भवतीत्यस्मान्निष्कृतिवचनादवसीयते ॥ २१३ ॥

(९) **भारुचिः**। येन धर्मार्थं किञ्चित् प्रतिश्रुतं न तु दत्तं, तं चेद्धर्ममकुर्वन् प्रतिश्रुतमिति कृत्वा शोधयेद्दातारं ततो राज्ञा सुवर्णं स दाप्यः। सोपधर्मत्वात्. . दद्धृतदण्डास्त्विति ॥ २१३ ॥

**दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया ॥**
**अत ऊर्ध्वं प्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥ २१४ ॥**

(१) **मेधातिथिः**। पूर्वेणार्धेन पूर्वविवादोपसंहारः। उत्तरेण वक्ष्यमाणोपक्रमः। **दत्तस्यैषाऽनपक्रियोदिता**। 'अपक्रिया' क्रियापायः। तस्य नञा प्रतिषेधः। दानमेवं न चलितं भवति—एषैव दाने स्थितिरिति यावत्। धर्मादनपेता **धर्म्या**।

कथं प्रतिश्रुत्या दीयमाने धर्मो न नश्यतीति नैषा शङ्का कर्तव्या। एष एवात्र धर्मो यन्न दीयते दत्तं च प्रत्यादीयते। **उदिता** उक्ता। **यथावच्छब्दसमुदाय** एव याथातथ्ये वर्तते। सम्यङ्निरूपितेत्यर्थः। अथवा यथाशब्दो योग्यतायां वर्तते—तामर्हतीति वतिः कर्तव्यः।

**वेतनं** भृतिः—तस्या**नपक्रिया**। वेतनेन स्वकर्म कुर्वतां यो धर्मः स इदानीमुच्यत इति प्रतिज्ञा ॥ २१४ ॥

(२) **सर्वज्ञनारायणः**। धर्म्या न्याय्या। दत्ताप्रदानम् ॥ २१४ ॥

(३) **कुल्लूकः**। एतद्दत्तस्याप्रतिपादनं धर्मादपेतं तदुक्तं अतोऽनन्तरंभृतेरसमर्पणादिकं वक्ष्यामि ॥ २१४ ॥

(४) **राघवानन्दः**। दक्षिणामुपसंहरन् लौकिकभृतेरनपक्रियां प्रतिजानीते दत्तस्येति। अपगच्छति धनमन्यं प्रत्येनेनेति अपक्रिया दानं तदभावोऽनपक्रिया पुनरादानम् ॥ २१४ ॥

(५) **नन्दनः**। अथ वेतनप्रदानमाह दत्तस्यैषइति। अनपाक्रिया अनपाकरणं प्रदानमितियावत् ॥ २१४ ॥

(६) **रामचन्द्रः**। दत्तस्ययथावद्दत्तस्य दानं तस्यक्रियाउदिता ॥ २१४ ॥

(८) **गोविन्दराजः। दत्तस्येति**। एतदस्य प्रतिपादनं धर्मादनपेतं तत्त्वं तदुक्तमतोनन्तरं अन्यतरदपि प्रतिपादनं कथयिष्यामि ॥ २१४ ॥

(९) **भारुचिः**। उपसंहारोपन्यासार्थः श्लोकः ॥ २१४ ॥

**भृतोऽनार्त्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् ॥**
**स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥ २१५ ॥**

(१) **मेधातिथिः**। उद्दिष्टेन मूल्येनोद्दिष्टं कर्म करोति स इह **भृतो**ऽभिप्रेतः, भृत्य-

कर्मविशेषेण स्वीकृतो भृत्यः—देहि मे पञ्चरूपकाणीदं ते कर्म कर्ताऽस्मीयता कालेनेत्याभाष्य प्रविष्टः। स चेत्कर्म न समापयति—**कृष्णलानि** सौवर्णानि ताम्ररजतयोर्वा कर्मस्वरूपमनुबन्धादि च ज्ञात्वा दण्डयते। तानि च रूपकाणि वेतनार्थं कल्पितानि न लभेत। **यद्यनार्तो दर्पान्न** करोति यथोदितं कर्म। व्याध्यादिनाऽपीडितस्य दर्पादकुर्वतो भृतिहानिर्दण्डनं च। अतः स एवं वक्तुं न लभते—यावन्मया कर्मांशः कृतस्तदानुरूप्येण देहीति।

ऋत्विजामप्येव दण्डं केचिदिच्छन्ति स्वेच्छया त्यजताम्। तदयुक्तम्। अत्र हि महाननर्थो यजमानस्य सामिकृत्ये यजमानेऽतो दण्डो महानत्र युक्तः—यजमानस्य च यन्नष्टं तद्दापनीयम्—दीक्षोपसद्देवव्रतैः शरीरापचये समुत्थातव्यम्।

अन्यो यः शिल्पी कंचन कर्मणि प्रवर्तयति तडागखनने देवस्य गृहकरणे 'अहं ते समापयिता प्रवर्तस्वेति'—पश्चाच्चापसरेत्तेन स्वामिनः क्षयव्ययायासाः सर्वे संवोढव्या भाण्डवाहवणिग्न्यायेन। एष हि न्यायः कात्यायनेन सर्वत्रातिदिष्टः। भाण्डवाहकदोषेण वणिजो यदि द्रव्यं नश्येत्तद्भांडवाहको वहेत्। "यो वाऽन्यः कस्यचित्कर्मणि धनमावध्यार्धतो निवर्तेतेति" कात्यायनीये सूत्रे धनमावध्याऽऽसज्य धनव्ययं कारयित्वा यद्यर्द्धकृते निवर्तेत सोऽपि तद्वदिहेत्यनुषङ्गः। एवं योऽपि षाण्मास्यः सांवत्सरो वा यथोपपादककर्मकारी भक्तदासस्तस्याप्येष एव न्यायः। आह च नारदः (६/५)—

> **"कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात्।**
> **भृतिं गृहीत्वाऽकुर्वाणो द्विगुणं भृतिमावहेत्॥**
> **कालेऽपूर्णे त्यजन्कर्म भृतिनाशनमर्हति"॥ २१५॥**

(२) **सर्वज्ञनारायणः**। अथ वेतनानपकर्म। भृतइति। भृतःसन्ननार्त्तः पीडारहितोपि। वेतनं न देयं कृतस्याप्येकदेशस्य यच्च दत्तं तदप्यादेयमित्यर्थः॥ २१५॥

(३) **कुल्लूकः**। यो भृतिपरिक्रीतोव्याध्यपीडितोयथानिरूपितंकर्माहंकारान्न कुर्यात्स कर्मानुरूपेण सुवर्णादिकृष्णलान्यष्टौ दण्डनीयः वेतनंचास्य न देयम्॥ २१५॥

(४) **राघवानन्दः**। तमेवाह भृतइति। भृतिर्वेतनं तया क्रीतो भृतः अनार्त्तोपि यदि नकुर्यात्। अष्टौकृष्णलानि सभृत्योराज्ञादण्डयः। न तद्देयं तदापनीयं वेतनमिति च॥ २१५॥

(५) **नन्दनः**। भृतो वेतनग्राही। अनार्त्तो व्याधिरहितः॥ २१५॥

(६) **रामचन्द्रः**। अनार्तःभृतःसन्दर्पाद्यथोदितंकर्म योनकुर्याद्यथोदितम्॥ २१५॥

(७) **मणिरामः**। इदानींवेतनानपकर्माह॥ भृत इति। भृतः वेतनेन कार्यंकरः। यद्वेतनं कृतं तदस्य न देयं रक्ति काष्टक परिमितं स्वर्णं राज्ञा दंडयश्च॥ २१५॥

(८) **गोविन्दराजः**। **भृत इति**। यो भृतः परक्रीतो व्याध्याद्यपीडितो यथानिरूपितं कर्म अहङ्कारान्न कुर्यात् स कुर्वाण क्रियोक्तस्वरूपे सुवर्णादिकृष्णलानष्टौ दण्डयो भृतिश्चास्य कर्मभागादपि न देया॥ २१५॥

(९) **भारुचिः**। भृतो नार्तो न कुर्याद्यो दर्पात् कर्म यथोदितम्। सदण्डचः कृष्णला-न्यष्टौ न देयं चास्य वेतनम्। उत्पन्ने वेतनं किञ्चित् कृतकर्मापि दण्डयितव्यः। वेतनं च लभेत। येन दत्वा कर्मणः प्रक्रान्तस्याऽकृत्स्नकारी ॥ २१५ ॥

**अनार्त्तस्य दण्ड उक्तो भृतिहरणं च। आर्त्तस्येदानीमुच्यते–**

**आर्त्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ॥**
**स दीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥ २१६ ।**

(१) **मेधातिथिः**। आर्त्तो भृतोऽर्द्धकृतं कर्म यदि हित्वा गच्छेत्स **स्वस्थः** सन्पुनरागत्य यथोक्तमादौ तत्कुर्यात्। बहुनाऽपि कालेन पीडया मुक्तः प्रत्यागतः कृतकर्मशेषे **लभेतैव वेतनम्** ॥ २१६ ॥

(२) **सर्वज्ञनारायणः**। आर्त्तोयदि मध्ये तदा स्वस्थःस तत्कर्म कुर्यात्। सुदीर्घस्यापि कालस्य दीर्घेणापिकालेन कुर्यादित्यन्वयः ॥ २१६ ॥

(३) **कुल्लूकः**। यदा व्याध्यादिपीडया कर्म न करोति स्वस्थः सन्यादृग्भाषितंता-दृक्कर्म कुर्यात् वेतनंच चिरकालादपि लभेतैव ॥ २१६ ॥

(४) **राघवानन्दः**। आर्त्तश्चेतस्य कालविलम्बेन करणेन दोषइत्याह आर्त्तस्त्विति। तेन यथा भाषितं तादृक्कुर्यात्। आदितः आदौ। तद्भृतिधनम् ॥ २१६ ॥

(६) **रामचन्द्रः**। पूर्वंआर्तः पश्चात्स्वस्थः सन्दीर्घस्य कालस्य आदितोयथा भाषितं-कुर्यात् तद्वेतनंलभेत् ॥ २१६ ॥

(७) **मणिरामः**। आर्त्तश्चेत् भृत्यः तदा सुस्थोयदा भवति तदा कार्यं करोति वेतनं तु सर्वमेव लभते ॥ २१६ ॥

(८) **गोविन्दराजः**। **आर्त इति** ' यदा पुनः पीडादिना वा कर्म न करोति तदा स्वस्थः सन् पूर्वं यादृक् निरूपितं तादृक् कुर्यात् तां च वृत्तिं सकलादपि कालाल्लभेतैव ॥ २१६ ॥

(९) **भारुचिः**। प्रतीर्थश्लोकः ॥ २१६ ॥

**यथोक्तमार्तः सुस्थो वा यस्तत्कर्म न कारयेत् ॥**
**न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥२१७ ॥**

(१) **मेधातिथिः**। अथवा स्वामी न वारयति, येन च तत्कर्म कारितं स्वात्स्वां भृतिं दत्वा तदा तत्सममसौ स्वस्थः कारयितव्यः। अथापि स्वामी ब्रूयान्न मे किंचित्कर्तव्यमस्तीति —तत्रापि कृतानुरूपेण लभेतैव यथोक्तमात्राम् ॥ २१७ ॥

(२) **सर्वज्ञनारायणः**। यथोक्तमार्त्ते स्वस्थे वा यः प्रकार उक्तः। वेतनादानम्। ॥ २१७ ॥

(३) **कुल्लूकः।** यत्कर्म यथाभाषितं पीडितोऽन्येन कारयेत् सुस्थो वा न कुर्यान्नापि कारयेत् तस्य किंचिच्छेषस्यापि कृतस्य कर्मणोवेतननं देयम् ।। २१७ ।।

(४) **राघवानन्दः ।** स्वीकृतासंपूरणेपि यथोक्तं वेतननंदेयमित्याह यथेति। अल्पोनस्याल्पन्यूनस्यापि कर्मणः । स्वस्थोपि न वा कुर्यान्न संपूरयेन्न वा कारयेदन्येन ।। २१७ ।।

(५) **नन्दनः।** कर्मणःवेतनंतस्य न देयमित्यन्वयः। इति वेतनानपक्रियोक्ता। ।। २१७ ।।

(६) **रामचन्द्रः।** आर्तःस्वस्थो वा यः यथोक्तं कर्म न कारयेत् अल्पोनस्य अल्पन्यूनस्य कर्मणः तस्य पुंसः वेतनं न देयं ।। २१७ ।।

(७) **मणिरामः।** यथोक्तं सुस्थः स्वयं कुर्यात् अशक्तः अन्येन कारयेदिति नियमितं। स चेत्तथा न करोति। तदा तस्य अल्पोनस्यापि किंचित्कृतस्यापि कर्मणः वेतनं न देयमित्यर्थः ।। २१७ ।। २१८ ।।

(८) **गोविन्दराजः। यथोक्तमिति।** ।। २१७ ।।

(९) **भारुचिः।** आर्तः स्वस्थो वा यथोदितं कर्म न कुर्वन्न कारयन्वाल्पोनस्यापि वेतनं न लभेत ।। २१७ ।।

**एष धर्मोऽखिलेनोक्तो वेतनादानकर्मणः ।।**
**अत ऊर्ध्वं प्रवक्ष्यामि धर्मं समयभेदिनाम् ।। २१८ ।।**

(१) **मेधातिथिः। वेतनादानकर्मण इति** विवादपरस्यास्य नामधेयमेवमेतत्। तेन न चोद्यमेतत्–कथं वेतनस्यादानकर्मोक्तं यावता दानकर्माप्युक्तं "न लभेतैव वेतनम्" इति। नाम्नो हि येन केनचिदन्वितेन संबन्धिना नामता न विरुद्धा। न हि यावन्तः सूत्रार्थास्ते सर्वे प्रवर्तन्ते। तथा चाग्निहोत्रे यद्यप्यग्निप्रजापत्योर्होमस्तथाप्यग्निहोत्रमिति नाम प्रवर्तत एव। तदुक्तं तत्रैवं स्थूणादर्शे या च समा नीचा स्यादिति।

**समयः** संवित् सङ्केतः–इदं मया भवतामनुमते निश्चितं कर्तव्यमित्यभ्युपगमः। तं भिन्दन्ति व्यतिक्रामन्ति ते **समयभेदिनः।** "संविदश्च व्यतिक्रमः" (८/५) इति यदुद्दिष्टं तदिदानीमुच्यते।

पूर्वेणार्द्धेन पूर्वप्रकरणोपसंहारोऽपरेण यथोद्दिष्टप्रकरणांतरसूचनम् ।। २१८ ।।

(२) **सर्वज्ञनारायणः।** समयभेदनमतवारयति एषइति। समयभेदिनां धर्मं नियतं दण्डम् ।। २१८ ।।

(३) **कुल्लूकः।** एषा व्यवस्था वेतनादानाख्यकर्मणोनिःशेषेणोक्ता अतोऽनन्तरं संविदव्यतिक्रमकारिणं दण्डादिव्यवस्थां वदिष्यामि ।। २१८ ।।

ब्राह्मणस्य न दण्डः केवलं ग्रामत्यागइति ।। २१९ ।।

(५) **नन्दनः** । योग्रामदेशसंघानामिति त्रयंस्पष्टम् । संविद्व्यतिक्रमउक्तः ।। २१९–२२१ ।।

(६) **रामचन्द्रः** । यःपुरुषः ग्रामदेशसङ्घानां ग्रामाणां देशानां सङ्घानां समूहानां सत्येन शपथेन संविदं समयं । मर्यादां कृत्वा नरःलोभाद्विसंवदेदन्यथावदेत्तंराष्ट्राद्विप्रवासयेत् ।। २१९ ।।

(७) **मणिरामः** । इदानीं समयवेदिनां धर्ममाह् । यो ग्रामेति । ग्रामदेशशब्दाभ्यां तद्वासिनोज्ञेयाः । संघो वणिगादिसमूहः । इदमस्माभिः कर्तव्यमितिशपथादिना संविदं कृत्वाग्रामदेशवासिवणिक्संघानां मध्ये पश्चात् लोभादिना विसंवदेत् अतिक्रामेत् तंराजाराष्ट्रात् विप्रवासयेत् निष्काशयेदित्यर्थः ।। २१९ ।।

(८) **गोविन्दराजः । य इति ।** ग्राम्याणां देशवासिनां वणिगादीनां मध्याद्यो नर इदमस्माभिः कर्तव्यं परिहार्यं चेत्येवं संकेतं विरुद्धेन रूपेण कृत्वा विचलेत्तं राष्ट्रात्-राजा निर्वासियेत् ।। २१९ ।।

(९) **भारुचिः** । धर्मार्थयुक्तेषु प्रयोजनेषु राजकार्यविरोधिषु गोप्रचारोदकरक्षण-देवतायतनप्रतिसंस्करणादिषु ग्रामादिनां या संविदुत्पद्यते तत्र व्यभिचारिणं तस्माद्देशाद् राजा निर्वासियेत् ।। २१९ ।।

**निगृह्य दापयेच्चैनं समयव्यभिचारिणम् ।।**
**चतुःसुवर्णान् षण्णिष्कांश्छतमानं च राजतम् ।। २२० ।।**

(१) **मेधातिथिः** । निगृह्यावष्टभ्य पीडयित्वा काललाभमकारयित्वा दण्ड्यः । चत्वारि सुवर्णानि येषां निष्काणां परिमाणं ते **चतुःसुवर्णा निष्काः** । यद्यपि चतुःसुवर्णिको निष्क इत्यत्रोक्तं (१३७) तथापि शास्त्रान्तरात् "साष्टं शतं सुवर्णानां निष्कमाहुर्महाधियः" इत्येवमादिपरिमाणान्तरं पश्यन् विशिनष्टि । "संज्ञाकारणसामर्थ्यादेव लभ्यत" इति चेत् पद्यग्रन्थत्वान्न दोषः ।

अन्ये तु सहार्थे बहुव्रीहिं कृत्वा त्रीन् दण्डानाहुः । चतुर्भिः सुवर्णैः सह षण्णिष्कान् दण्डनीय । दश निष्काः प्रतिपादिता भवन्ति ।

बहुव्रीहिसिद्धचर्थं सहार्थे कथंचिन्मत्वर्थो योजितव्यः । न हि चित्राभिर्गोभिः सहित-श्चित्रगुर्देवदत्त इति भवति । एते च त्रयो दण्डा यदि च त्रिभिरेक इति कार्यपेक्षया योजनम् । निर्वासनदण्डेन विकल्प्यते दण्डोऽयम् ।। २२० ।।

(२) **सर्वज्ञनारायणः** । चतुर्भिःसौवर्णैर्निष्कस्तान् षट्पलानीत्यर्थः । एतच्च दीना-रादिनिष्कव्यवच्छेदार्थं विशेषणम् । शतमानमेकम् ।। २२० ।।

(३) **कुल्लूकः** । अथ चैनं संविद्व्यतिक्रमकारिणं निबोध्य चतुरः सुवर्णान् षण्निष्कान्

प्रत्येकं चतुःसुवर्णपरिमितान् राजतंच शतमानांविंशत्यधिकरक्तिकाशतत्रयपरिमाणंत्रय-मेतद्विषयलाघवगौरवापेक्षया समन्वितंव्यस्तंवाराजदण्डंदापयेत् ।। २२० ।।

(४) **राघवानन्दः** । दण्डसंख्यामाह नीति । निगृह्य कारागारंप्रापयित्वा चतुः-सौवर्णिकोनिष्कइत्युक्तेः चतुःसुवर्णानिति तु निष्कपदस्याभरणाद्यर्थव्यावृत्यर्थं तेनपशुमाल-भेतेत्याद्येकत्वस्येव षडित्युपादेयविशेषणमतः प्रत्येकं षण्णिष्कानांदण्ड इति । शतमानं विंशत्यधिकरक्तिकाशतत्रयं समस्तं व्यस्तंवा कार्यगौरवलाघवापेक्षया ।। २२० ।।

(६) **रामचन्द्रः** । एवं समयव्यभिचारिणं समयभेत्तारं निगृह्य दण्डंदापयेत् । दण्डमाह चतुःसुवर्णान्वा दण्डयेत् । षण्णिष्कान् निष्कंसुवर्णाश्चत्वारः इति षट्पलानि अथवा राजतः रूप्यस्य शतमानः । द्वात्रिंशत्कृष्णलं धरणं भवेत् धरणानि दश ज्ञेयःशतमान एवं कृष्णला भवन्ति अष्टगुंजात्मकोमाषः तेषांचत्वारिंशत्—माषप्रमाणं भवति ।। २२० ।।

(७) **मणिरामः** । एनं समये व्यभिचारिणं संविद्व्यतिक्रमकारिणं षट्निष्कान् चतुर्विंशति सुवर्णान् । राजतं शतमानं विंशत्यधिकशतत्रयरक्तिकापरिमाणं विषयलाघव-गौरवं विचार्य एतत् त्रयं समस्तं व्यस्तंवा दंडंनिगृह्य राज्ञादापयेत् ।। २२० ।। २२१ ।।

(८) **गोविन्दराजः** । **निगृह्येति** । य एवं संविद्व्यतिक्रमेत् चतुःसुवर्णकार्षिका-निष्कानुक्तरूपान्नतु सार्धशतं सुवर्णानां निष्कानाहुरिति शास्त्रान्तरोक्ताराजतञ्च शतमान-मुक्तम् ।। २२० ।।

(९) **भारुचिः** । चतुस्सुवर्णान् षण्णिष्काञ्छतमानं च राजतम् । चतुस्सुवर्णादि च दण्डं च दाप्यः । ततो निर्वास्यः । 'निगृह्य दापयेद्वैनं' इत्यपरो दण्डविकल्पपाठः । एवं च सति निर्वासनं दण्डो वा ।। २२० ।।

**एतद्दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः ।।**
**ग्रामजातिसमूहेषु समयव्यभिचारिणम् ।। २२१ ।।**

(१) **मेधातिथिः** । **जातिसमूहेषु** च नानाजातीयानां समानजातीयानां वा संघेषु तद्विषयो व्यभिचारो येषामित्यर्थः ।

प्रकरणोपसंहारः ।। २२१ ।।

(२) **सर्वज्ञनारायणः** दण्डविधिं दण्डप्रकारम् । जातिर्ब्राह्मणादिः ।। २२१ ।।

(३) **कुल्लूकः** । ग्रामेषु ब्राह्मणजातिसमूहेषु संविद्व्यतिक्रमकारिणामेतद्दण्डविधिं धर्मप्रधानो राजानुतिष्ठेत् ।। २२१ ।।

(४) **राघवानन्दः** । उक्तंदण्डविधिमन्यत्रातिदिशति एतमिति । ग्रामजातिसमूहेषु ग्रामस्य ब्राह्मणादिषु जातिसमूहेषु वणिगादिषु च ।। २२१ ।।

(६) **रामचन्द्रः** । एवं धार्मिकः पृथिवीपतिः दण्डविधिं कुर्यात् ।। २२१ ।।

(७) **मणिरामः**। व्यतिक्रमिणं एतद्दण्डविधानमनुतिष्ठेत् ।। २२१ ।।

(८) **गोविन्दराजः**। एवं **दण्डविविधिमिति** ! धर्मप्रधानो राजा ग्रामेषु ब्राह्मणादिषु

(९) **भारुचिः**। उपसंहारार्थः श्लोकः ।। २२१ ।।

**क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत् ।।**
**सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ।। २२२ ।।**

(१) **मेधातिथिः**। यद्द्रव्यं प्रचुरक्रयविक्रयं व्यवहारकाले न गच्छति न नश्यति मूल्यतश्च नापचीयते त्रपुताम्रभाण्डादि स्थिरार्घं तादृशस्यानुपभुक्तस्य दशाहमध्ये आदान-प्रत्यर्पणे। यत्तु विरलक्रयविक्रयं देवयात्रोत्सवादौ विक्रीयते अनियतार्थं च तस्य तदहरपरे-द्युर्वा। फलकुसुमादौ तु तत्क्षण एवानुशयः। पश्चादपि–'क्रीत्वा यस्यानुशयो न ममैतदुप-युज्यते' स दशाहमध्ये दद्यात्। विक्रेता प्रतिगृह्णीयात्। विक्रेतुरनुशये–'न मया साधु कृतं यद्विक्रीतमिति'–क्रेता तस्मै प्रतिपादयितव्यः।

एवं हि नारदः पठति (९/२-३)

इति

**एकस्थानवासिनां चैष कालः। देशान्तरवासिनां तात्कालिकी प्रतिनिवृत्तिः।**
**केचिद्गोभूम्यादिविषयं विधिमिममिच्छन्ति, न वस्त्रादौ।**
**स्मृत्यन्तरे हि वणिक्पण्येऽन्यो विधिराम्नायते। एवं हि नारदः पठति (९।२–३)**
**"क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतमिति मन्यते।**
**विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम्"।**
**"द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्र्यंशांशमावहेत्।**
**द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ।।" इति**

विक्रयार्थं यद्द्रव्यं तत्'पण्यं' यद्विक्रीय तदुत्पन्नेन द्रव्यान्तरक्रयादिना पुरुषो व्यवहरति जीविकाधनमर्जयितुं–तथा पणभूमौ प्रसारितमप्रसारितं च भवति वणिजाम्। तत्रेह पण्य-ग्रहणात्कश्चिद्विशेषो विवक्षितः। इतरथा क्रीत्वा मूल्येन इत्येतावदपेक्ष्यम्। कः पुनरसौ विशेषः? उच्यते। यत्क्रीतमपि पण्यत्वमजहद्वणिग्भिर्विक्रीयते तर्हि विक्रयार्थमेव क्रीणन्ति। तेषां वणिजामितरेतरं क्रीणतांविक्रिणतां च नारदीयो विधिः, अन्येषां मानव इति केचित्। किं पुनरत्र युक्तम्। पण्यधर्मादिर्व्यवस्था वाऽनुसरणीया। तथा चाश्वानां बलसञ्चारो हस्तिनामङ्कु-शारोहणं विक्रयविभावकमित्यादिना व्यवहारस्तेषु पण्येषु सिद्धो भवति। 'अविक्षत'मवि-नष्टमुपनिध्यादौ वस्त्रादेर्यावन्नात्र नाशस्तावतो मूल्यमुपनिधात्रे दीयते, द्रव्यं तु गृह्णाति। इह त्वीषन्नाशेऽपि सर्वं मूल्यं देयं क्रेतुः ।। २२२ ।।

अनुशयः पश्चात्तापः ।। २२२ ।।

(२) **सर्वज्ञनारायणः**। क्रयविक्रयानुशयमाह क्रीत्वेति। अनुशयः पश्चात्तापः ।।। २२२ ।।

(३) **कुल्लूकः।** क्रीत्वा विक्रीयवा किंचिद्रव्यम् विनश्वररूपंस्थिरार्धंभूमिताम्रपट्टादि यस्य लोके पश्चात्तापोजायते न साधु मया क्रीतमिति स क्रीतं दशाहमध्ये प्रत्यर्पयेत् विक्रीतंवा गृह्लीयात् ।। २२२ ।।

(४) **राघवानन्दः।** क्रयविक्रयानुशयइत्युक्तं तत्र क्रेतृविक्रेत्रोः पश्चात्तापाद्युत्पत्तौ दशाहाभ्यन्तरे निवर्त्ययोग्यतास्तीत्याह क्रीत्वेति। साधु मया नकृतमित्यनुतापोनुशयः। क्रीतं दद्याद्विक्रीतंच गृह्लीयादित्यर्थः ।। २२२ ।।

(५) **नन्दनः।** अथक्रयविक्रयानुशयमाह क्रीत्वाविक्रीयवेति। तद्रव्यंयन्मूल्यत्वेन क्रेत्रादत्तम् ।। २२२ ।।

(६) **रामचन्द्रः।** किंचिद्वस्तु क्रीत्वा विक्रीय वा इह यस्य अनुशयः पश्चात्तापः भवेत्सः अन्तर्दशाहात्तदद्रव्यंदद्यात् आददीत स्वीकुर्यात् वा ।। २२२ ।।

(७) **मणिरामः।** अनुशयः पश्चात्तापः।

(८) **गोविन्दराजः।** **क्रीत्वेति।** विक्रीय किञ्चिद्द्रव्यमचिरस्वभावं स्थिरार्थं विक्रीय वा यस्य लाभात्पश्चात्तापो भवति न साधुमया कृतमिति दशाहमध्ये प्रत्यर्थं यद्विक्रीतं तद् गृह्लीयात् ।। २२२ ।।

(९) **भारुचिः।** अन्तर्दशाहमादानप्रत्यर्पणे साम्नेत्ययमपाठः। येनोर्ध्वमपि दशाहात् कश्शक्तस्साम्नादानादाने प्रतिषेद्धुं लब्धिमेष्वपि द्रव्येषु साम्नाशक्यं प्रतिषेद्धुम्। किं पुनः कृत्रिमेषु। यत्रन (क? कुत) कश्चिद्धर्मगन्धोऽति धर्म्येषु तु प्रतिग्रहेषु तदनन्तरनिवृत्त-त्वाद्धर्मस्य साम्नाप्यशक्यं कृतमकृतं कर्तुं तत्र च प्रत्यर्पणे पुनर्दानं वा कृतं भवेत्। परित्यागो वा यतश्चैतदेवम्। अत एवं पठितव्य उत्तरश्लोकार्धः। सोऽयं दशाहात् तद्द्रव्यं दद्याच्चैवा-ददीत चेति। अत्रैव चार्थे उत्तरश्लोकार्धपाठोऽन्यो भवति। 'दानादाने दशाहं तु स्यातामपि निपातिनी' इति। अथवा सामग्रहणं दशाहे दण्डनिवृत्त्यर्थम्। अन्तर्दशाहानुशये कथञ्चि-द्विवदतां राजाधिगमे दण्डनीतिर्यथा स्याद्राजतस्तयोः तथा च दशाहस्योत्तरत्र तद्विवादे दण्डः श्रूयते ।। २२२ ।।

**परेण तु दशाहस्य न दद्यान्नापि दापयेत् ॥**
**आददानो ददच्चैव राज्ञा दण्डचो शतानि षट् ।। २२३ ।।**

**[स्याच्चतुर्विंशतिपणो दण्डस्तस्य व्यतिक्रमे।**
**पणस्य दशमो भागो दाप्यः स्यादति पातिनि ।। १ ।।]‡**

**[क्रीत्वाविक्रीयवा पण्यमगृह्लन्न ददतस्तथा।**
**पणाद्द्वादशदाप्यश्च मनुष्याणांच वत्सरान् ।। २ ।।]**

**[पणाद्द्वादशदाप्यः स्यात्प्रतिबोधे न चेद्भवेत्।**
**पशूनामप्यनाख्याने त्रिपदादर्पणं भवेत् ।। ३ ।।]**

(१) **मेधातिथिः।** दशाहात्परतो न क्रीतानुशयः। जातानुशयश्चापि क्रेता विक्रेता वा यदि राजनि विवदतां तौ ततः **षट् शतानि दण्ड्यौ।**

**न दद्यादिति** नायमदृष्टार्थः प्रतिषेधः। किं तर्हि ज्ञायते। स्थितिरीदृशी। अनिच्छन्क्रेता दशाहादूर्ध्वं न त्याजनीयो नापि विक्रेता ग्राहयितव्यः। अतश्च यदि साम्नोभयेच्छायां दानादाने स्यातां तत्र न कश्चिद्दोषः ।। २२३ ।।

(२) **सर्वज्ञनारायणः।** दशाहस्यपरेणेति बीजविषयम्। वस्त्रवाह्यरत्नदोह्यपुरुषस्त्रीषु एकपञ्चसप्तदशमासार्धमासानामवधीनां स्मृत्यन्तरे उक्तत्वात्। नाददीत विक्रीतं वस्त्वादातुं न यतेत। शतानि पणानाम् ।। २२३ ।।

(३) **कुल्लूकः।** दशाहादूर्ध्वंक्रीतंन त्यजेत् नापि विक्रीतंविक्रयिकोबलेन दापयेत्। विक्रीतंबलेन गृह्णन्परित्यजन् राज्ञा षट्शतानि पणान्दण्ड्यः।।। २२३ ।।

(४) **राघवानन्दः।** दशाहादाधिक्ये तदुभयमनुचितमित्याह परेणति शतानीति ताम्रिकपणानामितिशेषः। एवं सर्वत्र ।। २२३ ।।

(५) **नन्दनः।** आददानो बलाद्गृण्हन्न ददच्च षट्शतानि कार्षापणानां दण्ड्यः ।। २२३ ।।

(६) **रामचन्द्रः।** अन्यथाराज्ञा षट्शतानि पणानि दण्ड्यः ।। २२३ ।।

(७) **मणिरामः।** दशाहस्यपरेण ऊर्ध्वं। शतानिषट् पणाः ।। २२३ ।। ।। २२४ ।।

(८) **गोविन्दराजः। प्रेरणेति।** दशाहोत्तरकालं क्रीतञ्च न दापयेत् ।। २२३ ।।

(९) **भारुचिः।** नायं श्लोको दशाहादूर्ध्वं सामप्रतिषेधार्थ आरभ्यते। साम्नाप्यूर्ध्वं दशाहान्न दद्यान्नापि दापयेदिति। नहिसाम प्रतिषेद्धुं शक्यमित्युक्तम्। यत्र तु सा(मना? म्ना)पि प्रत्यर्पणं नास्ति तत्र नियमयत्येव यथा—सकृदंशो निपततीति। अत्रापि त्वंशपातने साम्नैव प्रतिषेद्धुं शक्यं नियमाभावात् व्यवस्थार्थत्वाच्च। कन्यादाने तु निष्के च विसर्गाभ्यामिति विशेषनियमात् साम न विद्यते ।। २२३ ।।

**यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।।**
**तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ।। २२४ ।।**

(१) **मेधातिथिः।** या कन्या दोषैर्युक्ता सा च दात्रा वराय नाख्यायते न प्रकाश्यत नेव दीयते तत्र दातुर्दण्डो विदिते राज्ञा कार्यः। स्वयंग्रहणमादरार्थम्। कन्यादोषाश्च प्रजासामर्थ्यविघातहेतवः क्षयो व्याधिर्मैथुनसंबन्धश्च।

नोन्मत्ताया इत्येतत्प्रकरणोक्तो दण्डोऽयं वा ।। २२४ ।।

(२) **सर्वज्ञनारायणः।** यस्त्विति पूर्वोक्तकन्याविक्रयविषयदण्डसामान्यस्य विशेषोक्तिरियमत्र तस्य संगतिसंभवात्। कुर्यात् दण्डम्। अर्थात्कन्यामपि प्रतिपादयेत् पूर्वकृतशुल्कं वरो न दद्यात् ।। २२४ ।।

(३) **कुल्लूकः**। नोन्मत्तायाइति सामान्येनोक्तं दण्डविशेषाभिधानार्थमिदं उन्मादादिदोषानकथयित्वा दोषवतींकन्यांवराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिपणान्दण्डंकुर्यात्। अनुशयप्रसङ्गेनैतत्कन्यागतमुच्यते ॥ २२४ ॥

(४) **राघवानन्दः**। नोन्मत्तायाइत्यत्रोक्तदण्डस्य संख्यामाह यस्त्विति। दोषवतीमुक्तोन्मत्तादिदोषत्रययुक्ताम् ॥ २२४ ॥

(५) **नन्दनः**। अनुपक्रान्तमपि क्रयविक्रयसाधर्म्यात्कन्याप्रदानविषयंविवादमाह यस्तुदोषवतीमिति स्वयंकन्यां भर्त्रादिभिरनिवेदितोऽपि ॥ २२४ ॥

(६) **रामचन्द्रः**। षण्णवतिपणान्नृपःस्वयंदण्डंकुर्यात् ॥ २२४ ॥

(८) **गोविन्दराजः**। **यस्त्विति** ॥ २२४ ॥

(९) **भारुचिः**। अनुशयप्रसङ्गादिदमन्यदत्रोच्यते। धर्मप्रजानिरोधिना रोगेण ग्रहीता (स्प्रष्टु ? स्पृष्ट) मैथुना वा दोषवती। तामनाख्याय दोषवतीं प्रयच्छतो दण्डः। नोन्मत्ताया इति। पूर्वोक्तश्लोकेनैव गतार्थो यतः वयं तत्र नाधीयामहे। अथवानुवादपक्षः केनचित कारणेन तस्यास्य चाशक्यते दर्शयितुं यतो युक्तमध्ययनम् अन्य...... ॥ २२४ ॥

**अकन्येति तु यः कन्यां ब्रूयाद् द्वेषेण मानवः ॥**
**स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ २२५ ॥**

(१) **मेधातिथिः**। **अकन्या** वृत्तमैथुनसंबन्धेति यो वदेत्तं च दोषं न भावयेत्तदा **शतं** कार्षापणं दण्डयः।

अन्ये मन्यन्तेऽल्पत्वाद्दण्डस्य महत्त्वाच्चाक्रोशस्येतिकरणस्य च पदार्थविपर्ययाशक्तत्वेन दर्शनाद**कन्येति** शब्दस्वरूपं विवक्षितम्। अकन्येयमित्येतेनैव शब्देनाक्रोशे तस्य शतं दण्डः। कः पुनरत्र विशेषः ? उच्यते। स इदंवादी पृच्छयते—कथमियमकन्येति। स चेद्ब्रूयान्निर्लज्जा नृशंसाऽश्लीलवादिनी—नैष कन्यानां धर्मः। एतच्च न साधयेत्तदाऽयं दण्डः कन्यागुणनिषेध उक्ते सति। अथवा कन्याशब्दं प्रथमवयोवचनमाश्रित्य परोक्षे प्रार्थयमानस्य ब्रूयात्किं तावन्नासौ कन्या अतिस्वल्पा वृद्धा वा—तत्र कन्यादाता यदि राजानं ज्ञापयेदभिरूपतमा कन्या मदीया प्रार्थ्यमानाऽनेन तस्यामभिलाषः एवमुक्त्वाऽथ पराजितः, तत्र प्राप्तकालायां यद्येवमुक्तं तदा पराजितस्यायं दण्डः ॥ २२५ ॥

(२) **सर्वज्ञनारायणः**। अकन्याचेयं स्त्री किंतु क्लीबमिति ॥ २२५ ॥

(३) **कुल्लूकः**। नेयंकन्या क्षतयोनिरियमिति योमनुष्योद्वेषेण ब्रूयात्तस्याउक्तदोषविभावयन्पणशतंराजा दण्डंप्रकल्पयेत् ॥ २२५ ॥

(४) **राघवानन्दः**। वाचादूषितकन्यस्य दण्डमाह। अकन्येयं कन्या केनापि क्षतयोनित्वादिति योब्रूयात्। दोषं क्षतयोनित्वादिकमदर्शयन्पणशतंदण्डमाप्नुयादित्यन्वयः। ॥ २२५ ॥

(५) **नन्दनः।** अकन्या क्षतयोनिः। शतंपणानाम् ॥ २२५ ॥

(६) **रामचन्द्रः।** यः द्वेषेण कन्यां अकन्याइति ब्रूयात्सः पणशतंदण्डंप्राप्नुयात्। किंकुर्वाणः तस्याःदोषं अदर्शयन् ॥ २२५ ॥

(७) **मणिरामः।** अकन्यां सक्षतां। तस्याः कन्यायाः। दोषं सक्षतारूपं ॥ २२५ ॥

(८) **गोविन्दराजः। अकन्येति।** नेयं कन्या क्षतयोनिरियं इत्येवं यो मनुष्यो द्वेषेण कन्यायाः कुर्यात् स तस्याः तं दोषमविभावयन् पणशतं दण्डं प्राप्नुयात्। उक्तस्याप्यतिक्रमकारित्वाद्दण्डः ॥ २२५ ॥

(९) **भारुचिः।** स्वशब्दव्याख्यातश्लोकः। कस्य पुनर्हेतोरयं दण्डो महान् विधीयते ॥ २२५ ॥

**पाणिग्रहणिका मन्त्राः कन्यास्वेव प्रतिष्ठिताः ॥**
**नाकन्यासु कचिन्नृणां लुप्तधर्मक्रिया हि ताः ॥ २२६ ॥**

(१) **मेधातिथिः।** 'पाणिग्रहणं' विवाहो दारकर्म, मन्त्राणां तत्र विद्यमानत्वात्। तत्र विद्यमानत्वात्स चाग्निमयक्षतेत्येताभ्यां संबन्धेनासां विवाहे कर्तृत्वं दर्शयति। परमार्थतस्तु विवाहविधौ कन्यामुपयच्छेदिति विहितं,—तादृशमेवार्थं मन्त्रा अभिवदन्ति। न पुनर्मन्त्रेषु कन्याशब्दश्रवणात्कन्यानां विवाहः, मन्त्राणामविधायकत्वात्। एष एवार्थस्तद्विपरीतप्रतिषेधमुखेन दृढीक्रियते। **न कन्यासु क्वचिन्नृणाम्।** न कस्यांचिद्वेदशाखायां मनुष्याणामकन्याविषयो विवाहः श्रुतः। **लुप्तक्रियाः**—यासां धर्मेऽग्निहोत्रादावपत्योत्पादनविधौ चाधिकारो नास्त्यतस्ता न विवाह्याः।

अतः कन्यामकन्येति वदन्महता दण्डेन योजनीय इति पूर्वश्लोकादनन्तरमुच्यते। अप्राप्तमैथुना स्त्री **कन्योच्यते** ॥ २२६ ॥

(२) **सर्वज्ञनारायणः।** अकन्यातु यदि या वस्तुतः स्यात्तदा त्याज्यैवेत्युपपादयति पाणिग्रहणिका इति। कन्यास्वेव कन्याविषयाः। एवं नाकन्यासु क्लीबेषु ॥ २२६ ॥

(३) **कुल्लूकः।** युक्तश्चास्याकन्येति वादिनोदण्डोयस्मात् पाणिग्रहेति अर्यमणं देवंकन्याऽग्निमयक्षतेत्येवमादयोवैवाहिकामनुष्याणांमन्त्राः। कन्याशब्दश्रवणात्कन्यास्वेव व्यवस्थितानां कन्याविषये क्वचिच्छास्त्रे धर्मविवाहसिद्धये व्यवस्थिता असमवेतार्थत्वात् अतएवाह ताःक्षतयोनयोवैवाहिकमन्त्रैः संस्क्रियमाणा अपि यस्मादपगतधर्मविवाहादिशालिन्योभवन्ति नासौ धर्म्योविवाहइत्यर्थः ननु क्षतयोनेर्वैवाहिकमन्त्रहोमादिनिषेधकमिदम् या गर्भिणीसंस्क्रियते तथा वोढुः कन्या समुद्भवमिति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्य वक्ष्यमाणत्वात्। देवलेन तु ॥ गान्धर्वेषु विवाहेषु पुनर्वैवाहिकोविधिः ॥ कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिक इति ॥ गान्धर्वेषु विवाहेषु होममन्त्रादिविधिरुक्तः। गान्धर्वश्चोपगमनपूर्वकोऽपि भवतितस्य क्षत्रियविषये सुधर्मत्वंमनुनोक्तं। अतः सामान्यविशेषन्यायादितरविषयोयंक्षतयोनिविवाहस्याधर्मत्वोपदेशः ॥ २२६ ॥

(४) **राघवानन्दः**। ननु कन्यात्वक्षतौ किं स्यात्तत्राह पाणीति। अर्यमणं नुदेवं कन्या-अग्निमयक्षतेति मन्त्रलिङ्गमाश्रित्यावधारणमाह कन्यास्वेवेति। लुप्तधर्मक्रियाः अपगत-विवाहादि*क्रिया इति निन्दामात्रम्। अष्टवर्षा भवेत्कन्येति तत्कालावच्छिन्नकन्यादान-तात्पर्यमन्यथा या गर्भिणी संस्क्रियते तथा वोढुःसुतमिति क्षतयोन्यधिकृता न स्यात्। अपिच गान्धर्वासुरपैशाचानां क्षतयोनेरावश्यकत्वात्॥ गान्धर्वेषु विवाहेषु पुनर्वैवाहिकोविधिः। कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकइति होममन्त्रविधेर्देवलोक्तत्वात्। अत एव गोत्र-त्वप्राप्तिः। तदुक्तम्। एकत्वमागता यस्माच्चरुमन्त्राहुतिव्रतैरिति॥ २२६॥

---

* क्रिया = इति धर्म्या (राघ० २)

(५) **नन्दनः**। पाणिग्रहणं विवाहस्तत्र भवाः पाणिग्रहणिकाः विवाहसाधनभूता इति यावत्॥ २२६॥

(६) **रामचन्द्रः**। अकन्यासु क्वचित् लुप्तधर्मक्रिया नृणां हिता न॥ २२६॥

(७) **मणिरामः**। कन्यास्वेव अक्षतास्वेव न अकन्यासु सक्षतासु। ताः सक्षताः। तेन गंधर्वादिविवाहे मंत्रा भवंतीत्यर्थः॥ २२६॥

(८) **गोविन्दराजः**। **यस्मात्पाणिग्रहणिका इति**। अर्यमणं नु देवं कन्या अग्निमय-क्षतेत्येवमादयो वैवाहिका मनुष्याणां मन्त्राः॥ २२६॥

(९) **भारुचिः**। तथा वैवाहिको मन्त्रः—'अर्यमणं नु देवं कन्या अग्निमयक्षत। स नो अर्यमा देवः। प्रेतो मुञ्चातनामुन्त स्वाहे'त्येवमादिना। कन्यास्वित्यत्र कारणं· · · · नाधिकृता विवाहादिभिरित्यर्थः। एवं च सति पूर्वं पाणिग्रहणात् प्रतिगृही(ता? त्रा)पि स्पृष्टमैथुना परित्यक्तव्येति। यश्च॥ २२६॥

**पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्॥**
**तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे॥ २२७॥**

(१) **मेधातिथिः**। **दारा** भार्या, तस्या **लक्षणं** निमित्तं विवाहमन्त्राः तैस्तत्र प्रयुक्तै-र्ववाहाख्यः संस्कारो निर्वर्तते। द्विजातीनां पुनर्मन्त्राः। न च शूद्रस्य दारप्रसङ्गः न हि तस्य मन्त्राः सन्ति—मन्त्रवर्जं सर्वान्येतिकर्तव्यतास्ति। अतो विवाहाख्यसंस्कारोपलक्षणं मन्त्राः। **तेषां** मन्त्राणां **निष्ठा** समाप्तिः **सप्तमे पदे विज्ञेया**। लाजाहोममभिनिर्वर्त्य त्रिःप्रदक्षिणमग्निमावर्त्य सप्तपदानि स्त्री प्रक्रम्यते "एष एकपदी भव" इत्यादि यावत् "सखा सप्तपदी भवेति"। तस्मिन्प्रक्रान्ते कन्यायाः पदे कन्यापितुर्वोढुर्वानुशयो नास्ति। उन्माद-वत्यपि भार्यैव। न त्याज्या।

मैथुनवत्यास्तु नैवासौ विवाहः। सत्यपि लाजाहोमादावितिकर्तव्यतास्वरूपे न भार्या सा। अतस्तत्र द्रव्यान्तरवदनुशयः। यथा च शूद्रकर्तृकेणाधानेनाहवनीयो न भवति—

सपिण्डायाश्च कृतेऽप्यग्निसंस्कारे न विवाहस्वरूपत्वम्। तत्र तु प्रसिद्धम्–"संस्कारकरणादेकः प्रायश्चित्तीयते पुमान्"। कन्या चान्यस्याप्यविवाह्या वसिष्ठवचनात्।

**"यदि प्रजनविघातरोगगृहीतामूढ्वा न त्यजति का तर्हि गतिः।"**

'सत्यधिकारे अन्यामुद्वाहयिष्यति। 'सद्यस्त्वप्रियवादिनीति'वत् (९/८१)। कृते तु जातपुत्रायामाधाने यदि क्षयो व्याधिः स्यात्तथापि नैनामधिविन्देदधिवेदननिमित्तानां परिगणनात् (९/७७-८५)। तत्रापि यदि "कामतस्तु प्रवृत्तानाम्" इत्येतत्प्रयोजकमिष्यते न निवारयामः।

तेनैव संक्षेपतः कन्यायां धर्मः। यथाऽन्येषां द्रव्याणां दशाहादूर्ध्वमपि साम्ना प्रत्यर्पणं, नैवं कन्यानां कृतविवाहानाम् शुल्कदेयानामपि प्राग्विवाहाद्द्रव्यान्तरधर्मः। या तु धर्माय दीयते तस्या नैवानुशय इति वचनात्। तत्रापि "दत्तामपि हरेत्कन्यां ज्यायांश्चेद्वर आव्रजेत्" (याज्ञ. १/६५) इत्यस्त्येवापहार आ सप्तमपदात्।

सप्तमे तु पदे दानानिवृत्तेर्गवादिद्रव्यदानवन्नास्त्यपहारः। अथैव केनचित्कस्मैचिद्गवि दत्तायां न तयोरन्योन्येच्छयाऽनुशयो दानादाने–दानस्य तदानीमेव निर्वृत्तत्वात्। प्रतिगृहीतं चेद्दाते पुनः प्रयच्छेत्तद्दानान्तरमेव तत्स्यात्, न पूर्वदाननिवृत्तिः। एवं सगुणयोः कन्यावर-योर्नान्योन्येच्छया त्यागोऽस्ति, प्रागपि विवाहात्। विवाहे तु कृते दोषवत्या अपि नास्ति त्यागः कन्यायाः। स्पृष्टमैथुना, या कन्यैव न भवति, अतोऽसौ त्यज्यते–कन्याया यतो विवाहो विहितः। विवाहश्चोपभोगस्थानीयः। यथा परिभुक्तं वस्त्रमन्तर्दशाहमपि नैव विक्रेत्रेऽ-र्प्यते तथैव कन्या कृतविवाहा।

पुनश्चायमर्थो निर्णेष्यते "सकृत्कन्या प्रदीयत" इत्यत्रान्तरे (९/४७)।। २२७।।

(२) **सर्वज्ञनारायणः**। किंच सप्तपदीगमनात्प्राग्दोषदर्शने कन्याया अशुल्काया अपि त्याग इत्युपपादयति पाणिग्रहणिका इति। दारलक्षणं दारहेतुः। निष्ठा अनिवर्तमानोचिता समाप्तिः।। २२७।।

(३) **कुल्लूकः**। वैवाहिकामन्त्रानियतंनिश्चितंभार्यात्वे निमित्तंमन्त्रैर्यथाशास्त्र-प्रयुक्तैर्भार्यात्वेन निष्पत्तेः तेषांतु मन्त्राणां सखा सप्तपदी भवेति मन्त्रेण कल्पनया सप्तमे दत्ते पदे भार्यात्वनिष्पत्तेः। शास्त्रज्ञैः निष्पत्तिर्विज्ञेया एवंच सप्तपदी दानात्प्राग्भार्यात्वानिष्पत्तेः सत्यनुशये जह्यान्नोर्ध्वम्।। २२७।।

(४) **राघवानन्दः**। पाणिग्रहस्य दृष्टतया तन्मन्त्राणां क्वोपयोगस्तत्राह पाणिग्रहेति। तेषां मन्त्राणां निष्ठा समाप्तिः सप्तमेपदे सप्तमपदगमनेन कन्यायाः। अन्यथा विधितोदार-त्वासिद्धेः सर्वधर्मलोपापत्तिरिति। एतेन सखासप्तपदीभवेति मन्त्रेण कन्यायाःसप्तमपद-गमनेन भार्यात्वस्यावधिकथनात्तदभ्यन्तरेऽनुशये सति त्याज्यत्वं सूचितम्।। २२७।।

(५) **नन्दनः**। कन्याया दारत्वे नियामकः पाणिग्रहणमन्त्रैःसंस्कारस्तेषांनिष्ठा तैर्मन्त्रैः

संस्कारसंपत्तिः सप्तमे पदे न प्रागिति। पाणिग्रहणमन्त्रसंस्कारोऽक्षतयोनीनामेव नान्य सामिति पाणिग्रहणिकाइत्युक्तंविशेषणम् ।। २२७ ।।

(६) **रामचन्द्रः**। तेषां मन्त्राणां निष्ठा अवस्था वर्तनोचिता समाप्तिः सप्तमे प विद्वद्भिर्विज्ञेया ।। २२७ ।।

(७) **मणिरामः**। दारलक्षणं भार्यात्वेनिमित्तं। तेषां मंत्राणां निष्ठा भार्यात्वोत्पादक त्वम्। तथा च सप्तपदीदानात् प्राक् भार्यात्वानिष्पत्तेः पश्चात्तापे जाते सा त्याज नोर्ध्वमित्यर्थः ।। २२७ ।।

(८) **गोविन्दराजः। पाणिग्रहणिका मन्त्रा नियतमिति।** वैवाहिकाः मन्त्राः नि श्चितं भार्यात्वे निमित्तं, तैः प्रयुक्तैः भार्या भवति, तेषां पुनर्मन्त्राणां सखा सप्तपदी भवे मन्त्रेण कन्याया सप्तमे पदे दत्ते सति शास्त्रज्ञैः समाप्तिर्बोद्धव्यैव च सप्तमात्पदादर्वागकन्य त्वपरिज्ञानेऽनुशये सति त्यजेन्नोर्ध्वं कानीनसहोढगूढोत्पन्नानां शास्त्रे वोढुः पुत्रदर्शनात् ।। २२७

(९) **भारुचिः।** संस्कारे...विवाहलक्षणे भवाः पाणिग्रहणिकाः तत्कर्मसाध भूतामन्त्राः नियतं दारलक्षणं दारोपसंग्रहलक्षणं कन्यानामेव गृह्यशास्त्रतो नाकन्यानाम् तथा च दर्शयति–विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्। त्रि त्रिषूत्तरादि(सु ? षु)स्वातौ मृगशिरसि रोहिण्यावति पुनश्चैवमेवार्थं दर्शयति–कुमार्या भ्रा शमीपलाशमिश्रा लाजानञ्जलिनाञ्जलावापपतितां जुहोति संहतेन तिष्ठन्तीति। य श्चैतदेव अतस्तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे। तेषां मन्त्राणां पाणिग्रहणप्रयो नानां सप्तमे पदे निष्ठा परिसमाप्तिः प्रेत्य तस्याकार्यतः प्राप्तव्यस्य सप्तलोकसंस्थस्य लोक इयत्परिमाणत्वात्। सप्त हि लोकाः भूरादयः सत्यान्ताः तानसौ पादसंख्यासम्मितः त सह श्रौतस्मार्तैः कर्मभिः यातुमिच्छति सखा सप्तपदी भवेति। एवं च सति आसप्तभ्यः पदेभ्य स्पृष्टमैथुनत्वेन विज्ञा(ता ? त्वा)हेया भवति। ऊर्ध्वं तु सप्तमात् पदात् स्पृष्टमैथुना सती न परित्याज्या। तस्मान्न निष्ठा वचनलिङ्गाद्भवति। तथा च सति सहोढकानीनय शास्त्रोपदेशः समर्थो भवति। या तु रेगिणी सती धर्मप्रजननयोर (त्य ? न्व) समर्था भव तां प्रतिगृह्य नोत्सृजेत्। नहि तस्या धर्मविरोधे प्रजाविरोधे वा सति पुंसा कर्तव्यतान्यास्ति अथाप्यस्यादृष्टार्थः सम्प्रयोगः। तथाप्यसौ प्रागस्याधेयादन्यामुद्वाहयिष्यति। यातूभयोर धर्मप्रजननयोरसमर्था सा विद्यमानयातुल्येति परित्याज्यैव। अयं च कन्याव्यवहारः क्र विक्रयानुशयसादृश्यादेतस्मिन् नवधाप्युच्यत इति ।। २२७ ।।

**यस्मिन्यस्मिन् कृते यस्येहानुशयो भवेत्।**
**तमनेन विधानेन धर्म्ये पथि निवेशयेत् ।। २२८ ।।**

(१) **मेधातिथिः।** न केवलं वाणिजां पण्यधर्मोऽयं दशाहिकोऽनुशयः, किं तर्हि, वेत संविद्वृद्धिप्रयोगादिषु **यस्मिन्यस्मिन्निति** वीप्सयाऽशेषकार्यपरिग्रहः अनेन **विधानेन** दाशाहिके विधिना। धर्मादनपेतो **धर्म्यः। पन्था** मार्गः। **निवेशयेत्**स्थापयेद्राजा। अतिदेशोऽयम्

**कृते कार्यं** इति प्रक्रान्ते पुनः सर्वेण सर्वनिवृत्तेस्तत्रानुशयाभावः। वाचा निरूपिते स्थापिते वाऽन्तरेऽनुशयय्य दशाहप्रतीक्षणम्। यत्र पुनर्वृत्यर्थे धनं नीतमृत्विक् च वृतो वेतनं च दत्तं—कृतसमये विरोध आरब्धस्तत्र नायं धर्म इति केचित्। न हि कृतमकृतं भवति। एतच्च न कृतं 'कृतं' निर्वृत्तमुच्यते, न प्रक्रान्तम्। न ह्ययं "आदिकर्मणि क्तः"। न हि मुख्यार्थत्यागे कारणमस्ति। यत्तु कृतं नाकृतं भवतीति कृतमपि तत्साध्यकार्यप्रतिषेधादकृतमेव। यथा भुक्तं वांतमिति। लौकिकेष्वपि पदार्थेषु शास्त्रावसेयव्यवस्था—केषु शास्त्रत एव निवृत्त्यनिवृत्ति विज्ञेये। अथापि वृत्ताः पदार्थास्तथापि प्रत्याहरणं विधीयते। निष्पन्नेऽपि धनप्रयोगे स्वस्थाननीतेष्वपि रूपकेषु प्रत्यानयनं कर्तव्यमन्यतरानुशयात्। क्षयव्ययाः शास्त्रधर्मेण नीतेषु वोढव्याः। तथा च गृहीतमात्रेषु मासिकीं वृद्धिमिच्छन्ति। यत्रैवं बन्ध एष भोक्तव्य इयन्तं कालमित्येवमाद्यन्तर्दशाहमनुशये निवर्त्यते। ऋत्विजां तु वरणं विवाह इव कन्यानाम्। संविदे दशाहादूर्ध्वे प्रवर्तितव्यमन्यस्मिन् शास्त्रे सति ॥ २२८ ॥

(२) **सर्वज्ञनारायणः**। एवमन्येष्वपि द्रव्येषु दोषदर्शनान्निवर्तनमूह्यमित्यतिदिशति यस्मिन्निति। धर्मेपथि निवेशयेत् क्रयप्रत्यावर्तनेन राजा ॥ २२८ ॥

(३) **कुल्लूकः**। न केवलंक्रयएव अन्यत्रापि यस्मिन् यस्मिन्संबन्धित्वेनादौ कार्ये यस्य पश्चात्तापोजायते तमनेन दशाहविधिना धर्मादनपेते मार्गे नृपः स्थापयेत् ॥ २२८ ॥

(४) **राघवानन्दः**। क्रीत्वेत्यत्रोक्तंगृहीतस्य त्यागमन्यत्राप्यतिदिशन्नाह यस्मिन्निति। धर्म्ये दशाहाभ्यन्तरे सप्तमपदाभ्यन्तरे कन्यामपि निवेशयेत् पूर्वस्वामिन्यर्पयेदिति भावः ॥ २२८ ॥

(६) **रामचन्द्रः**। यस्य पुंसः इहकार्ये अनुशयः पश्चात्तापः भवेत् ॥ २२८ ॥

(७) **मणिरामः**। अनेनविधानेन दशाहविधिना ॥ २२८ ॥ २२९ ॥

(८) **गोविन्दराजः**। यस्मिन्निति। न केवलं क्रयविक्रयः एवं यावद्यस्मिन्त्संविद्वेदनादावपि कार्ये कृते यस्य लोके पश्चात्तापः स्यात् तं पुत्रदानादिकविधिना धर्मादनपेते मार्गे नृपः स्थापयेत् ॥ २२८ ॥

(९) **भारुचिः**। आधिवेतनसमयाद्यनुशयेषु दशाह एव निष्ठा स्यात् ॥ २२८ ॥

**पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ॥**
**विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥ २२९ ॥**

(१) **मेधातिथिः**। गवादिपशुविषये **व्यतिक्रमे स्वामिनां पालानां च** गोपालादीनां यो **विवादः**—'गौस्त्वया मे नाशिता तां मे देहीति'—पालोऽपि विप्रतिपद्यते—'मदीयो दोषो नाभवत्—इत्यत्र वादपदे यद्धर्मतत्त्वं यादृशी व्यवस्था तां **यथावन्निपुणतो वक्ष्यामी**त्यवधानार्थः पिण्डीकृतप्रकरणोपन्यासः ॥ २२९ ॥

(२) **सर्वज्ञनारायणः**। स्वामिपालविवादं प्रक्रमते पशुष्विति। पशुषु विषयेषु। ॥ २२९ ॥

(३) **कुल्लूकः**। गवादिपशुविषये स्वामिनां पालानां व्यतिक्रमे जाते विवादं सम्यग्धर्म्यं यथा तथा व्यवस्थया वक्ष्यामि ॥ २२९ ॥

(४) **राघवानन्दः**। स्वामिपालयोरित्युक्तं तमनुसरति पशुष्विति। यथावद्धर्मतत्त्वतः यथातथाव्यवस्थितयोः ॥ २२९ ॥

(५) **नन्दनः**। अथ स्वामिपालयोर्विवादमाह पशुषु स्वामिनां चैवेति ॥ २२९ ॥

(६) **रामचन्द्रः**। पशूनां स्वामिनां च पुनः पालानां गोपानां व्यतिक्रमे अपराधे यथावद्वक्ष्यामि ॥ २२९ ॥

(८) **गोविन्दराजः**। पशुष्विति। पशुविवाददोषैरुत्पन्नैः स्वामिनां तत्पालानाञ्च विवादमशेषं कृत्वा तात्त्विकव्यवस्थां वक्ष्यति ॥ २२९ ॥

(९) **भारुचिः**। उपन्यासार्थं श्लोकः ॥ २२९ ॥

**दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ॥**
**योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥ २३० ॥**

(१) **मेधातिथिः**। **दिवा** पशूनां **योगक्षेमे** दोष उत्पन्ने 'नष्टं विनष्टम्' इत्यादिके वक्ष्यमाणे—**पाले वक्तव्यता** कुत्सनीयता। तेन स दोषो निवोढव्यः। **रात्रौ स्वामिनो** दोष उद्बन्धनादिमृतानाम्। **तद्गृहे** स्वामिगृहे यदि पालेन प्रवेशिता भवन्ति। **अन्यथा चेत्तु—** यदि रात्रावपि पालेन न प्रवेशिता अरण्य एव वर्तन्ते तदा पालो दोषभाक् स्यात्। एतदुक्तं भवति। पालहस्तगता गावो यदा क्षेत्रे कस्यचित्सस्यं भक्षयन्ति केनचिद्वा हन्यन्ते तदा पालस्य, अथ पालेन समर्पितास्तदा स्वामिनः। अयोगक्षेमे **योगक्षेम**शब्दः प्रयुक्तो लक्षणया—यथाऽन्धे चक्षुष्मानिति ॥ २३० ॥

(२) **सर्वज्ञनारायणः**। वक्तव्यता पशूनामक्षेमे तत्कृतापचयवत्ता। तद्गृहे तद्गृहावस्थाने पशूनाम्। योगक्षेमे पशूनामप्राप्तानां प्रापणं प्राप्तरक्षणं च यदि त्वन्यथा दिवारात्रौ च पाल एवार्पितं तदा पालदोषः ॥ २३० ॥

(३) **कुल्लूकः**। दिवा पशूनां पालहस्तन्यस्तानां योगक्षेमविषये पालस्य गर्हणीयता। रात्रौ पुनः पालप्रत्यर्पितानां स्वामिगृहस्थितानांस्वामिनो दोषोऽन्यथातु यदि रात्रावपि पालहस्तगता भवन्ति तत्रदोषउत्पन्ने पाल एव गर्हणीयतां प्राप्नोति ॥ २३० ॥

(४) **राघवानन्दः**। तमेवाह दिवेति। वक्तव्यता गर्हणीयता योगक्षेमविषये योगोऽप्राप्तस्य प्रापणं क्षेमः प्राप्तस्य परिपालनं तस्य न सति तद्गृहपालेन समर्पितत्वे, अन्यथा पालेनासमर्पितत्वे पाल एव वक्तव्यः प्रायश्चित्ताद्यन्वितत्वेन इत्यन्वयः ॥ २३० ॥

(५) **नन्दनः**। वक्तव्यताऽपराधः। योगो यवस्पानीयादिदानरूपः क्षेमोऽनिष्टसनिवारणरूपः ॥ २३० ॥

(६) **रामचन्द्रः**। अन्यथाचेत्पाले समर्पिता सर्वदा पालःवक्तव्यतां दोषभावितां इयात् ।। २३० ।।

(७) **मणिरामः**। इदानीं स्वामिपालधर्ममाह। दिवेति। रात्रौ तद्गृहे स्वामिगृहे पशुषुस्थितेषु स्वामिनि वक्तव्यतादोषः। अन्यथा। रात्रावपिचेत्पशुपालहस्ते पशुः स्तदा पाले एवेत्यर्थः ।। २३० ।।

(८) **गोविन्दराजः**। दिवेति। पालकन्यस्तानां पशूनां दिवा दोष उत्पन्ने पालस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्थिनां स्वामिनो दोषो यदि पुना रात्रावपि पालहस्तगता भवन्ति तत्र दोष उच्यते। तदा पाल एव गर्हतां प्राप्नुयादयोगक्षेमे योगक्षेमशब्दप्रकाशवत् ।। २३० ।।

(९) **भारुचिः**। प्रतीर्थः श्लोकः ।। २३० ।।

कोऽसौ योगक्षेमः। अतः प्रपञ्चयति—

**गोपः क्षीरभृतो यस्तु स दुह्याद्दशतोवराम् ।।**
**गोस्वाम्यानुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ।। २३१ ।।**

(१) **मेधातिथिः**। गाः पाति **गोपः** गोपालकः। स कदाचिद्भक्तादिना भ्रियते कदाचित्क्षीरेण। तत्र **क्षीरभृतो** दशभ्यो **वराम्** श्रेष्ठाम्, अवरां वा–संहितायामकारप्रश्लेषात्। रक्षायामनुरूपकता। **यस्य** नान्यदन्नं स एकस्या गोःक्षीरमादद्यात् दशतः। अनया कल्पनया न्यूनाधिकरक्षणे भृतिः कल्पयितव्या। एवं दोह्यादोह्यधेनुवत्सतरीदम्यवत्सकादिवारणे क्वचित्त्रिभागः क्षीरस्य क्वचिच्चतुर्भागः स्वामिभिः कल्पयितव्यः।

दिङ्मात्रप्रदर्शनार्थश्लोकोऽयम्। देशव्यवस्था त्वाश्रयणीया। भृतिं निरूपयिष्यामीति ग्रामगोपालेन यदि गावस्त्यक्ता भवन्ति न तेन स्वामिनमननुज्ञाप्य दशमी गौर्दोह्येति।

भक्तभृतोऽपि 'क्षीरेण विनिमयेयमिति' बुद्ध्या दुहीत–तन्निवृत्त्यर्थमुक्तं **गोस्वाम्यनुमत इति**। स्वामिनोऽनुमतिमन्तरेण प्रवर्त्तमानो दण्ड्यः।

**सा**–अनन्तरोक्ता। **अभृते** भक्तादिना–**भृतिर्भवेत्**। क्षीरभृतो वा एषा वृत्तिः। 'भृत्यो' भरणार्थं न धर्माय प्रवृत्तो गोरक्षायाम्।

अथवा स्वेच्छया दशम्या गोः क्षीरमाददानश्चोरः स्यात्। अस्मिंस्त्वनुज्ञाते भृतिस्तस्येयमिति न दोषः।

अत्रापि स्वामिनोऽननुमत्या दोष एवेति चेत्सत्यम्–कल्प्या काचिद्दंडमात्रा न चौरो भवति। अस्मिंस्तु चौरो निक्षेपहारी वा स्यात्।

अयं श्लोक आदौ वक्तव्यः। अतोऽनंतरः क्वचित्पठ्यते ।। २३१ ।।

(२) **सर्वज्ञनारायणः**। क्षीरभृतः क्षीरमात्रवेतनो यो गोपालः स दुह्यादात्मार्थम्।

दशतोदशसु गोषु रक्षितासु तन्मध्यतोवरामुत्तमाम्। गोस्वाम्यनुमत इति तदनुमत्या। भृत्यवष्टम्भेन दोहे दण्डच इत्यर्थः। क्षीरं दुह्यादितिच तत्तत्पशुविकारोपयोगोपलक्षणम्। तेन मेषादावूर्णादिग्रहणेपि तत्पालकस्यायं भागक्रम इत्याह सा स्यादिति ॥ २३१ ॥

(३) **कुल्लूकः**। यो गोपालाख्यो भृत्यः क्षीरेण न भक्तादिना स्वस्वाम्यनुज्ञया धर्षितोगोभ्यः श्रेष्ठामेकांगां भृत्यर्थंदुह्यात्साभक्तादिरहिते गोपाले भृतिः स्यात्। एवं चैकगवीक्षीरदानेन दशगाः पालयेदित्युक्तम् ॥ २३१ ॥

(४) **राघवानन्दः**। गवां पालस्य भृतिमाह गोप इति। गवां क्षीरमेव भृतं भृतिर्यस्य दशतोवरां दशभ्यःश्रेष्ठां गां दुह्यात् स्वभृतितया। अभृते भक्तादिभिः सा गोभृतिः स्यात्स्वार्थं दुह्यमानाया दुग्धभृतिरितिभावः ॥ २३१ ॥

(५) **नन्दनः**। क्षीररूपभृतिग्राही क्षीरभृतः। दशतोवरंदशभ्योगोभ्यः पाल्यमानाभ्यो दोह्यहेतुभूताभ्यः अवरामेकांगां गोस्वामिनानुज्ञातोदुह्यात्। जातस्य दशगोरक्षकस्य मृतिः ॥ २३१ ॥

(६) **रामचन्द्रः**। क्षीरभृतः क्षीरवेतनः गोपः दशतः अवरां ऊनां गोस्वामिनि मृते सःभृत्यः दद्यात् दशगवां मध्ये वरां श्रेष्ठां अमृते। अकृतवेतने पाले साभृतिः स्यात् ॥ २३१ ॥

(७) **मणिरामः**। यस्तुक्षीरभृतः क्षीरेणैवभृत्यः न तु भक्तादिना। सः वरां श्रेष्ठां एकां स्वाम्यनुज्ञायादुह्यात्। सा–अमृते पालेभृतिः स्यात्। एवं च एकगवीक्षीरदानेन दशगाः पालयेत् ॥ २३१ ॥

(८) **गोविन्दराजः**। **गोप इति**। यो गोपालाख्यो भृत्यः क्षीरभृतो न भक्तादिभृतः स स्वाम्यनुज्ञया दशभ्यो गोभ्य एकां श्रेष्ठां आत्मभृत्यर्थं दुहीत। सा भक्तादिना भृते पाले भृत्या स्यादेव चैकक्षीरादनेन दश गाः पालयेत् ॥ २३१ ॥

(९) **भारुचिः**। क्षीरभृतो भक्ताच्छादनभृतो द्विविधः यस्माद् गोपः अत इदं विशेष्यते क्षीरभृतो यस्तु गोपः स दुहेद्दशतः दशभ्यो धेनुभ्य एकां वरां श्रेष्ठां इत्यर्थः। तामपि गोस्वाम्यनुमतः। न स्वेच्छया सा स्यात् (बाले ? पाले) भृत्यन्तरेणाभृते भृतिः। एवं च सति पञ्चावस्थासु गोषु बह्ववस्थासु वा गोस्वामिभिर्गोपैश्च त्रिभागः क्षीरस्य कल्पितः। परिकल्प्यभोग्याभोग्यरूपाण्यनेनैव शास्त्रेण येन एतस्मादेव च दर्शनात्। क्षीरभृतिः पशूनां संरक्षणे न दोषाय प्रतिषेधात्तस्या इति ॥ २३१ ॥

**नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतं॥**
**हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ २३२ ॥**

(१) **मेधातिथिः**। **नष्टं** दृष्टिपथादपेतं न ज्ञायते क्व गतम्। **विनष्टं कृमिभिः**। आरोहकनामानः कृमयो गवां प्रजननवर्त्मनाऽनुप्रविश्य नाशयन्ति। **श्वभिर्हतम्**। प्रदर्शनार्थमेतत्। तेन गोमायुव्याघ्रादिहतानामेषैव स्थिति। **विषमे** श्वभ्रदरीशिलादिसंकटादौ

(६) **रामचन्द्रः**। अन्यथाचेत्पाले समर्पिता सर्वदा पालःवक्तव्यतां दोषभावितां इयात् ॥ २३० ॥

(७) **मणिरामः**। इदानीं स्वामिपालधर्ममाह। दिवेति। रात्रौ तद्गृहे स्वामिगृहे पशुषुस्थितेषु स्वामिनि वक्तव्यतादोषः। अन्यथा। रात्रावपिचेत्पशुपालहस्ते पशुः स्तदा पाले एवेत्यर्थः ॥ २३० ॥

(८) **गोविन्दराजः**। दिवेति। पालकन्यस्तानां पशूनां दिवा दोष उत्पन्ने पालस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्थिनां स्वामिनो दोषो यदि पुना रात्रावपि पालहस्तगता भवन्ति तत्र दोष उच्यते। तदा पाल एव गर्हतां प्राप्नुयादयोगक्षेमे योगक्षेमशब्दप्रकाशवत् ॥ २३० ॥

(९) **भारुचिः**। प्रतीर्थः श्लोकः ॥ २३० ॥

कोऽसौ योगक्षेमः। अतः प्रपञ्चयति—

**गोपः क्षीरभृतो यस्तु स दुह्याद्दशतोवराम् ॥**
**गोस्वाम्यानुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥ २३१ ॥**

(१) **मेधातिथिः**। गाः पाति **गोपः** गोपालकः। स कदाचिद्भक्तादिना भ्रियते कदाचित्क्षीरेण। तत्र **क्षीरभृतो** दशभ्यो **वराम्** श्रेष्ठाम्, अवरां वा—संहितायामकारप्रश्लेषात्। रक्षायामनुरूपकता। **यस्य** नान्यदन्नं स एकस्या गोःक्षीरमादद्यात् दशतः। अनया कल्पनया न्यूनाधिकरक्षणे भृतिः कल्पयितव्या। एवं दोह्यादोह्यधेनुवत्सतरीदम्यवत्सकादिवारणे क्वचित्त्रिभागः क्षीरस्य क्वचिच्चतुर्भागः स्वामिभिः कल्पयितव्यः।

दिङ्मात्रप्रदर्शनार्थश्लोकोऽयम्। देशव्यवस्था त्वाश्रयणीया। भृतिं निरूपयिष्यामीति ग्रामगोपालेन यदि गावस्त्यक्ता भवन्ति न तेन स्वामिनमननुज्ञाप्य दशमी गौर्दोह्येति।

भक्तभृतोऽपि 'क्षीरेण विनिमयेयमिति' बुद्ध्या दुहीत—तन्निवृत्त्यर्थमुक्तं **गोस्वाम्यनुमत इति**। स्वामिनोऽनुमतिमन्तरेण प्रवर्त्तमानो दण्ड्यः।

**सा**—अनन्तरोक्ता। **अभृते** भक्तादिना—**भृतिर्भवेत्**। क्षीरभृतो वा एषा वृत्तिः। 'भृत्यो' भरणार्थं न धर्माय प्रवृत्तो गोरक्षायाम्।

अथवा स्वेच्छया दशम्या गोः क्षीरमाददानश्चोरः स्यात्। अस्मिंस्त्वनुज्ञाते भृतिस्तस्येयमिति न दोषः।

अत्रापि स्वामिनोऽननुमत्या दोष एवेति चेत्सत्यम्—कल्प्या काचिद्दंडमात्रा न चौरो भवति। अस्मिस्तु चौरो निक्षेपहारी वा स्यात्।

अयं श्लोक आदौ वक्तव्यः। अतोऽनंतरः क्वचित्पठ्यते ॥ २३१ ॥

(२) **सर्वज्ञनारायणः**। क्षीरभृतः क्षीरमात्रवेतनो यो गोपालः स दुह्यादात्मार्थम्।

दशतोदशसु गोषु रक्षितासु तन्मध्यतोवरामुत्तमाम्। गोस्वाम्यनुमत इति तदनुमत्या। भृत्यवष्टम्भेन दोहे दण्डच इत्यर्थः। क्षीरं दुह्यादितिच तत्तत्पशुविकारोपयोगोपलक्षणम्। तेन मेषादावूर्णादिग्रहणेपि तत्पालकस्यायं भागक्रम इत्याह सा स्यादिति ॥ २३१ ॥

(३) **कुल्लूकः।** यो गोपालाख्यो भृत्यः क्षीरेण न भक्तादिना स्वस्वाम्यनुज्ञया धर्षितो-गोभ्यः श्रेष्ठामेकांगां भृत्यर्थंदुह्यात्साभक्तादिरहिते गोपाले भृतिः स्यात्। एवं चैकगवीक्षीर-दानेन दशगाः पालयेदित्युक्तम् ॥ २३१ ॥

(४) **राघवानन्दः।** गवां पालस्य भृतिमाह गोप इति। गवां क्षीरमेव भृतं भृतिर्यस्य दशतोवरां दशभ्यःश्रेष्ठां गां दुह्यात् स्वभृतितया। अभृते भक्तादिभिः सा गोभृतिः स्या-त्स्वार्थं दुह्यमानाया दुग्धभृतिरितिभावः ॥ २३१ ॥

(५) **नन्दनः।** क्षीररूपभृतिग्राही क्षीरभृतः। दशतोवरंदशभ्योगोभ्यः पाल्यमानाभ्यो दोह्यहेतुभूताभ्यः अवरामेकांगां गोस्वामिनानुज्ञातोदुह्यात्। जातस्य दशगोरक्षकस्य मृतिः ॥ २३१ ॥

(६) **रामचन्द्रः।** क्षीरभृतः क्षीरवेतनः गोपः दशतः अवरां ऊनां गोस्वामिनि मृते सःभृत्यः दद्यात् दशगवां मध्ये वरां श्रेष्ठां अमृते। अकृतवेतने पाले साभृतिः स्यात् ॥ २३१ ॥

(७) **मणिरामः।** यस्तुक्षीरभृतः क्षीरेणैवभृत्यः न तु भक्तादिना। सः वरां श्रेष्ठां एकां स्वाम्यनुज्ञायादुह्यात्। सा–अमृते पालेभृतिः स्यात्। एवं च एकगवीक्षीरदानेन दशगाः पालयेत् ॥ २३१ ॥

(८) **गोविन्दराजः। गोप इति।** यो गोपालाख्यो भृत्यः क्षीरभृतो न भक्तादिभृतः स स्वाम्यनुज्ञया दशभ्यो गोभ्य एकां श्रेष्ठां आत्मभृत्यर्थं दुहीत। सा भक्तादिना भृते पाले भृत्या स्यादेव चैकक्षीरादनेन दश गाः पालयेत् ॥ २३१ ॥

(९) **भारुचिः।** क्षीरभृतो भक्ताच्छादनभृतो द्विविधः यस्माद् गोपः अत इदं विशे-ष्यते क्षीरभृतो यस्तु गोपः स दुहेद्दशतः दशभ्यो धेनुभ्य एकां वरां श्रेष्ठां इत्यर्थः। तामपि गोस्वाम्यनुमतः। न स्वेच्छया सा स्यात् (बाले ? पाले) भृत्यन्तरेणाभृते भृतिः। एवं च सति पञ्चावस्थासु गोषु बह्ववस्थासु वा गोस्वामिभिर्गोपैश्च त्रिभागः क्षीरस्य कल्पितः। परिकल्प्यभोग्याभोग्यरूपाण्यनेनैव शास्त्रेण येन एतस्मादेव च दर्शनात्। क्षीरभृतिः पशूनां संरक्षणे न दोषाय प्रतिषेधात्तस्या इति ॥ २३१ ॥

**नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतं ॥**
**हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ २३२ ॥**

(१) **मेधातिथिः।** **नष्टं** दृष्टिपथादपेतं न ज्ञायते क्व गतम्। **विनष्टं कृमिभिः।** आरोहकनामानः कृमयो गवां प्रजनवर्त्मनाऽनुप्रविश्य नाशयन्ति। **श्वभिर्हतम्।** प्रदर्शनार्थ-मेतत्। तेन गोमायुव्याघ्रादिहतानामेषैव स्थिति। **विषमे** श्वभ्रदरीशिलादिसंकटादौ

मृतम्। **प्रदद्यात्पाल एव** । **हीनं पुरुषकारेण** 'पुरुषकारः' पुरुषव्यापारः। पालस्य तत्र संनिधानात् वृकनिवारणं च (गोपकर्तव्या) प्रवृत्तिः। तेनापेतम्। यदि व्याप्रियमाणो व्याघ्रादेर्निवारणे नैव समर्थः—सहसैव वोत्पत्य कश्चित् पशुर्वेगेन श्वभ्रं गच्छेदनुगच्छताऽपि न शक्यः प्रत्यावर्तयितुं—न पाले दोषः ।। २३२ ।।

**(२) सर्वज्ञनारायणः।** नष्टमदर्शनंगतं क्रमिभिर्विनष्टंविनाशितं विषमे मृतं निम्नपातादिना यत्तु पुरुषकारसंभवे तदकरणं तत्पुरुषकारहीनं तं पालो दद्यात् ।। २३२ ।।

**(३) कुल्लूकः ।** नष्टंदृष्टिपथातीतंक्रमिभिर्नाशितंश्वभिःखादितंहृतंविवरादिपातमृतंप्रदर्शनंचैतत्पालसंबन्धिरक्षकाख्यपुरुषव्यापाररहितंमृतंपलायितंगवादि पशुपालएव तु स्वामिने दद्यात् ।। २३२ ।।

**(४) राघवानन्दः।** भृतिभुजः पालस्य दण्डमाह नष्टमिति। नष्टं दृष्टिपथातीतं क्रमिभिः सर्पादिभिर्विनष्टं मृतं पुरुषकारेण हीनं चोरादिना ह्रियमाणं न रक्षितं तादृशं पशुं दद्यात् ।। २३२ ।।

**(५) नन्दनः।** नष्टमदृष्टं पशुमितिशेषः ।। २३२ ।।

**(६) रामचन्द्रः।** पुरुषकारेण हीनं नष्टं पुरुषकारे सति यदि तं न करोति तं हि पाल एव प्रदद्यात् ।। २३२ ।।

**(७) मणिरामः।** नष्टं दृष्टिपथातीतं। क्रमिमिर्विनष्टं नाशितं। पुरुषकारेणहीनं पालसंववरिक्षकाख्यपुरुषव्यापारेण रहितं सत् नष्टादिकं भवति तदा पाल एव दद्यात्। ।। २३२ ।।

**(८) गोविन्दराजः।** नष्टमिति। पालसम्बन्धिरक्षणाद्यः साक्षात्पुरुषव्यापारेण शून्यं सन्तं नष्टं द्रष्टिगोचराऽतीतं क्रमिभिः भक्षितं श्वभ्रादिमृतं पाल एव स्वामिनो दद्यात् ।। २३२ ।।

**(९) भारुचिः।** एवं च सति गोपप्रमादेन। अस्यापवादः ।। २३२ ।।

**विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति ।।**
**यदि देशे च काले च स्वामिनः स्वस्य शंसति ।। २३३ ।।**

**(१) मेधातिथिः। विघुष्या**ऽऽघुष्य पटहान् **चौरैर्हृतं** पशुं **पालो** न दाप्यते। विघोषणं च पालस्याशक्त्युपलक्षणार्थम्। यदि बहवश्चोराः प्रसह्य च मुष्णन्ति तदा पालो मुच्यते। सोऽपि यदि प्राप्तकालं तस्यामेव वेलायां स्वामिनः कथयति। **देशे** यत्र स्वामी संनिहितः।

"कथं विज्ञातस्तत्र अथवा निवासदेशे स्वामिनः।" तत्र यद्यसावसंनिहितोऽपि भवति तथापि तत्स्थानीयो भवति—यो राजानमधिकारिणं वा ज्ञापयित्वा चौरानभिद्रवति।

**स्वस्येति** राजनिवृत्त्यर्थम्। स्वोहि स्वामी स्वद्रव्यमोक्षणे यत्नं कुरुते न तथा पालज्ञापितो राजा। दुष्करा च राजज्ञापना पालस्य। अथ मुषित्वा गतेषु ज्ञापयेदेव। ।। २३३ ।।

(२) **सर्वज्ञनारायणः**। विघुष्य प्रकाश्य बलादिति यावत्। देशे समीपदेशे काले दिवसादौ वा शंसति दूरदेशविषमकालादौ त्वकथनेऽप्यदोष इत्यर्थः ।। २३३ ।।

(३) **कुल्लूकः**। चौरैः पुनः पटहादिविघुष्य हृतं पालोदातुं नार्हति । विघुष्येति चौराणांबहुत्वंप्रबलत्वकथनपरम्। सन्निहिते देशे हरणकालान्तरमेवात्मीयस्वामिनः कथयति ।। २३३ ।।

(४) **राघवानन्दः**। एवंकर्मा पालेन दद्यादित्याह विघुष्येति। तेषां प्राबल्ये सतीत्यरर्थः। यदीति देशकालनिश्चयार्थम्। देशे नदीतीरादौ काले प्रातरादौ हरणकालानन्तरमेव स्वस्य गवादेर्वृत्तं स्वामिनःप्रति शंसति कथयति स्वस्य युद्धादिकमिति वा ।। २३३ ।।

(५) **नन्दनः**। विघुष्य ह्रियमाणं विख्याप्य हृतं बलाद्धृतमितियावत् ।। २३३ ।।

(६) **रामचन्द्रः**। यदि देशे यस्मिन्देशे चौरैर्ह्रतं अस्मिन्काले स्वामिनः स्वस्य द्रव्यस्य गवादेः हरणे सति सः न दातुं अर्हति ।। २३३ ।।

(७) **मणिरामः**। शंसति मरणादिकालं देशं च कथयति ।। २३३ ।।

(८) **गोविन्दराजः**। **विघुष्येति**। चौरैःपुनः पटहाद्याघुष्य हृतं पालो दातुं नार्हति। यदि तस्मिन्नेव देशे हरणं कालानन्तरं एवात्मीयस्य स्वामिनः कथय (थ्य) ते ।। २३३ ।।

(९) **भारुचिः**। हरणदेशे हरणकाले च विघुष्य अनन्तरं स्वामिन आख्याते पालो न दद्यात्। स्वयं मृत्युनापि च मृतेषु प्रयत्नवतो गोपस्य स इदं कुर्यात् ।। २३३ ।।

**कर्णौ चर्म च बालांश्च बस्तिं स्नायुं च रोचनाम् ।।**
**पशुषु स्वामिनां दद्यान्मृतेष्वङ्कांश्च दर्शयेत् ।। २३४ ।।**

(१) **मेधातिथिः**। आयुषः क्षयान्मृतेषु पशुषु स्वामिनः कर्णाद्यर्पणीयम्। गोरोचनां गवां श्रृङ्गेषु चूर्णं भवति। **बस्तिरङ्ग**विशेषः। **अङ्काः** कर्णादयः, स्वामिविशेषज्ञानार्थं चिह्नानि। तानपि दर्शयेत्। एवं पालस्य शुद्धिः। अङ्कदर्शनेन हि प्रत्यभिज्ञा भवत्ययं स पशुरिति ।। २३४ ।।

(२) **सर्वज्ञनारायणः**। स्वयं मृतेत्वाह कर्णाविति। बस्तिं मूत्रपुटं। एतेषामन्यतमं दद्यात्। श्रृङ्गाणिच दर्शयेदिति विकल्पः। मृतेष्वङ्गानीति पाठे अङ्गान्यङ्गरूपाणि अङ्गान्तराणीत्यर्थः ।। २३४ ।।

(३) **कुल्लूकः**। स्वयं मृतेषु पशुषु कर्णचर्मलाङ्गूलप्रवालान्नाभेरधोभागस्नायुरोचनाः स्वामिनां दद्यात् अन्यानि च चिन्हानि श्रृङ्गखुरादीनि दर्शयेत् ।। २३४ ।।

(४) **राघवानन्दः**। स्वयंमृतेषु पशुस्वामिने तदीयानेतान्प्रदर्शयन्न दण्डभागित्याह कर्णाविति। बस्तिमधोदेशम्। अंगान्युपतातिरिक्तानि श्रृङ्गखुरादीनि ।। २३४ ।।

(५) **नन्दनः**। गवां मरणे गोपालेन कर्त्तव्यमाह कर्णौ चर्मेति। मृतेषु पशुष्वङ्गा न्युक्तान्येव दर्शयेत्स्वामिने ।। २३४ ।।

(६) **रामचन्द्रः**। पशौ मृते पशोःअंगानि कर्णादीनि दर्शयेत् गोरोचनं तिलकादि ।। २३४ ।।

(८) **गोविन्दराजः**। **मृतेषु** स्वयं मृतेषु एतान् दर्शयेत्। वस्ति पुच्छं स्नायुं अधोभागं। रोचनां गोरोचनेति प्रसिद्धां ।। २३४ ।।

(९) **भारुचिः**। कर्णौ चर्म च लोमाश्चेति। पशुस्वामिषु दद्यात्तु मृतेस्वङ्काश्च दर्शयेत्। स्वयं मृतेषु पशुषु कर्णचर्मरोमवस्त्याख्यमूत्राधाराङ्गविशेषस्नायुगोरोचना उपकारकत्वात्स्वामिने दद्यात्। चिन्हानि वदता कर्णत्वगादीनि प्रत्यभिज्ञानं दर्शयेत् ।। २३४ ।।

. . . . चाविशेषः ।। २३४ ।।

**अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।।**
**यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ।। २३५ ।।**

(१) **मेधातिथिः**। अजा चाविका **चाजाविके**। अविरेवाविकैडका। एते **वृकैः** श्रृगालप्रभृतिभिः **संरुद्धे** अवष्टब्धे, न प्रथमपात एव हते। अस्मिंश्चान्तरे सत्यामोक्षणेऽहतत्वात्। न च पाल आयाति मोक्षयितुम्। **अनायत्य**नागच्छति **पाले**। **यत्** तत्र **प्रसह्य** बलेनाभिभूय **वृको हन्यात्पाल**स्य स दोषः। स्वामिनो दापयितव्यः। प्रायश्चित्तं चरेत्। गोर्महत्त्वाद्गोमायुना न शक्यते संरोद्धुमित्यजाविके इत्युच्यते, न पुनस्तद्रूपम्। अतश्च बालानां गोवत्सानामेष एव न्यायः ।। २३५ ।।

(२) **सर्वज्ञनारायणः**। अजाविकइति वृकघातयोग्यतया गवागवादेस्तुव्याघ्रादेरेव भयं तत्रच पालस्य रक्षणाशक्तेर्न दोषः। वृकैःसंरुद्धे तदाच पालेऽन्यव्यासक्तया तत्रागत्य क्षेममकुर्वति। किल्बिषमपराधः ।। २३५ ।।

(३) **कुल्लूकः**। अजाश्चाविकाश्चाजाविकं गवाश्वप्रभृतीनिचेति द्वन्द्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृते सति पाले नागच्छति यामजामेडकांवा वने वृकोहन्यात्सपालस्य दोषः स्यात् ।। २३५ ।।

(४) **राघवानन्दः**। गोविषयकमुक्ताऽजादिविषयकमाह अजेतिद्वाभ्याम्। वृकैर्व्याघ्रैर्हन्तुं रुद्धे अनायति अनागच्छति सति दण्डो बहिःप्रायश्चित्तार्थम्। किल्बिषमिति तद्वधपापं पालस्येत्यर्थः ।। २३५ ।।

(५) **नन्दनः**। वृकग्रहणंव्याघ्रादीनामप्युपक्षणार्थं अनायत्यनागच्छति। यामजामविंवा। अजाविकेति पुंसां पूर्वलक्षणमेतत्। तत्किल्बिषं तस्य वधोपराधः ।। २३५ ।।

(६) **रामचन्द्रः**। अजःछागःआविकःअनायतिसति अनागच्छतिसति वृकःयान्प्रसह्य

हन्यात् तत्किलिबषं पाले भवेत् ।। २३५ ।।

(७) **मणिरामः** । अनायति अनागच्छति सति ।। २३५ ।।

(८) **गोविन्दराजः । अजाव्वि(वि)केषु इति ।** अजैडके श्रृगालादिभिः आक्रान्ते भवति तदा पालेऽनागच्छति यानभिभूय वृको हन्यात् स पालस्य दोषः स्यात् । बहुत्वाद्-वृकाक्षेपासंभवे सत्यजादिग्रहणम् ।। २३५ ।।

(९) **भारुचिः** । पशुरक्षकस्य सतस्तत्पदसन्निधाने .... पालो दद्यात् । यस्माद-वरुद्धानां सन्निहितो न भवति । वृकग्रहणं चान्येषामपि प्रदर्शनार्थम् ।। २३५ ।।

**तासां चेदवरुद्धानां चरंतीनां मिथो वने ।।**
**यामुत्प्लुत्य वृको इन्यान्न पालस्तत्र किल्बिषी ।। २३६ ।।**

(१) **मेधातिथिः** । 'अजाविके' पूर्वश्लोके जात्यपेक्षं द्विवचनम् । पशुशकुनिद्वन्द्व-त्वाद्विभाषितैकवद्भावः । इह तु **तासामिति** व्यक्त्यपेक्षो बहुवचने परामर्शः ।

**अवरुद्धानां मिथ** एकत्र प्रदेशे स्थापितानां संहतीभूतानां दिग्भ्यो विदिग्भ्यश्च निरूद्ध-गमनानां **वने चरन्तीनां** दृष्टिगोचराणां—यदि कुतश्चन कुञ्जात्संचरणोत्पतनानुक्रमेण निष्क्रम्य वृको हन्यान्न पालो दोषभाक् । अशक्यं ह्यनेकवृक्षक्षुपशरवल्लीगहनं वनं निर्विवरीकर्तुम्,

**मिथो**ग्रहणाच्चातिदूरविप्रकृष्टासु वधे दोष एव । पालहस्तगताः पशवस्तदुपेक्षायां यदि दोषमाप्नुयुः स पालेनैव समाधेय इति सिद्धे एष प्रपञ्चः सुखाववोधार्थः ।। २३६ ।।

(२) **सर्वज्ञनारायणः** । अवरुद्धानामेकस्थानीकृत्य पालेन रक्ष्यमाणानाम् ।। २३६ ।।

(३) **कुल्लूकः** । तासामजाविकानां पालेन नियमितानां सधीभूय वनेचरन्तीनाम् यत्नाद्यदि कश्चित्कुतश्चिदुत्प्लुत्यालक्षितो यां कांचिद्धन्यान्न पालस्तत्र दोषभाक् ।। २३६ ।।

(४) **राघवानन्दः** । अवरुद्धानांपालेनप्राकारादिना रक्षार्थमागते तुनदोष इत्याह तासामिति । यामिति लिङ्गमविवक्षितम् । तत्र तादृशे हते नकिल्बिषी दण्डं प्रायश्चित्तंवा नार्हति ।। २३६ ।।

(५) **नन्दनः** । अजावीनां मद्धये मिथोवने वनगहने ।। २३६ ।।

(७) **मणिरामः** । तासांअजाविकानां । अवरुद्धानां पालेनरक्षितानां ।। २३६ ।।

(८) **गोविन्दराजः** । तासामिति । यदि तासामजाविकानां पालेनैव श्वानुगतश्चा-वरुद्धगमनानां संहतीभूय वने चरन्तीनां मध्यात्कांश्चित्कुतश्चित् वनादेरुत्पत्य श्रृगालादि हन्यात् न तत्र पालो दोषभाक् ।। २३६ ।।

(९) **भारुचिः** । तासां चेदवरुद्धानां चरन्तीनां मिथोवने । यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी । अशक्यत्वादटव्यां बहुवृक्षक्षुपगर्तायां तत्संरक्षणस्य मिथश्चरन्तीनां न पालापराधः । एतेन गोमहिष्यादि व्याख्यातम् । उक्तो गोसंरक्षण विधिः ।। २३६ ।।

**धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः ॥**
**शम्यापातास्त्रयो वाऽपि त्रिगुणो नगरस्य तु ॥ २३७ ॥**

(१) **मेधातिथिः।** चतुर्हस्तं धनुस्तेषां **शतम्**। चत्वारि हस्तशतानि। **समंतत** श्चतसृ दिक्षु। **ग्रामस्य परीहारः** कर्तव्यः। अनुप्तसस्या भूमिः पशूनां सुखप्रचारार्था कर्तव्या

**शम्या** दण्डयष्टिः। शम्या बाहुवेगेन प्रेरिता यत्र पतति ततः प्रदेशादुद्धृत्य पुनः पात तव्या—यावत्त्रिस्तस्य परिमाणो वा **शम्यापातः** परीहारः।

**त्रिगुणो नगरस्य**। ग्रामनगरे प्रसिद्धे।

शम्यायाः पाताः प्रेरितायाः वेगसंस्कारक्षयो भूमौ स्थानादि ॥ २३७ ॥

(२) **सर्वज्ञनारायणः।** धनुर्हस्तचतुष्कं तच्चतुःशतं महाग्रामस्य परीणाहो वेष्टने त्याज्या भूमिः। परीहारइति क्वचित्पाठः। शम्यापाताः क्षिप्ताः शम्या यावति ते त्रयस् त्रिगुणोदेशः क्षुद्रग्रामस्य। एतयोर्द्वयोस्त्रैगुण्यं नगरस्य बृहत्त्वक्षुद्रत्वापेक्षया विकल्पेन ॥ २३७ ॥

(३) **कुल्लूकः।** चतुर्हस्तोधनुः शम्या यष्टिः तस्याः पातः प्रक्षेपो ग्रामसमीपे सर्वा दिक्षु चत्वारिहस्तशतानि त्रीन्वा यष्टिप्रक्षेपान्यावत्पशुप्रचारार्थं सस्यवपनादिसंरोधपरिहा कार्यः। नगरसमीपे पुनरयंत्रिगुणः कर्त्तव्यः ॥ २३७ ॥

(४) **राघवानन्दः।** ग्रामनगरयोर्निकटवर्तिनि सस्ये पशुभिर्भुक्तेपि पालो नदण्डभा नवरुद्धत्वात्सस्यस्येत्याह धनुरितिद्वाभ्याम्। चतुर्हस्तो धनुः। शम्यापातः शमी यष्टिस्तस्य आपातः प्रक्षेपः तेन धनुःशतेन शम्यापातैस्त्रिभिर्वा यावान्व्याप्योदेशस्तावतः परिहारः त्या सस्यशून्यतया कर्तव्यः। नगरस्यतु त्रिगुणः परिहारः कार्य इत्यन्वयः ॥ २३७ ॥

(५) **नन्दनः।** अथ गोप्रचारभूमिपरिमाणमाह धनुःशतमिति। धनुःशतेन परिमा नपरिवार्यत इति धनुःशतपरिवार्यकोदेशः। शम्यास्मिन्पात्यत इति शम्यापातोदेशः त्रिगु धनुःशतत्रयपरिमाणानि। शम्या पातनकपरिमाणा वा। क्षुद्रत्वमहत्त्वापेक्षया विकल ॥ २३७ ॥

(६) **रामचन्द्रः।** ग्रामस्य समन्ततो धनुःशतं धनुः चतुर्हस्तं परिणाहः अनुप्तसस भूमिःस्यात् यष्टिः यादण्डयष्टिः पातास्त्रयः दण्डः प्रक्षपेण यत्र पतति तावत्त्रयंवा परिणा तु पुनः नगरस्य त्रिगुणः परीणाहनः सस्यं विद्यते यस्यां सा असस्या भूमिः ॥ २३७ ॥

(७) **मणिरामः।** चतुर्हस्तोधनुः। शम्पायष्टिः परीहारः परार्थं च दशतः गो वपनादित्यागः। त्रिगुणः द्वादशहस्तशतानि नवयष्टिक्षेपान् वा ॥ २३७ ॥

(८) **गोविन्दराजः।** धनुःशतमिति। चतुर्हस्तं धनुः शम्या यष्टिः तस्याः पा शम्याप्रक्षेपः ग्रामसमीपे सर्वासु दिक्षु चत्वारि हस्तशतानि त्रीन्वा यष्टिप्रक्षेपान्यावत्सस्य-वपनपरिहारः पशुप्रचारार्थं कार्यो नगरसमीपे पुनरयं त्रिगुणः कार्यः ॥ २३७ ॥

(९) **भारुचिः**। पशुविहारार्थमिदमुच्यते यद् देशे ग्रामनगरयोः समन्ततो गवां सुख-प्रचारस्थानासनार्थमनुप्तसस्यः कार्यः ।। २३७ ।।

**तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।।**
**न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ।। २३८ ।।**

(१) **मेधातिथिः**। तत्र परिहारस्थाने क्षेत्रं न कर्तव्यम् । अथ कृतं कस्माद्वृतिर्न कृता । अतः क्षेत्रिण एवापराध्यन्ति, न पशुपालाः । न हि पाल एकैकं पशुं हस्तबन्धेन नेतुं शक्नोति । न च पशूनामन्यो निर्गमोऽस्ति ।। २३८ ।।

(२) **सर्वज्ञनारायणः**। तत्र परिणाहे। धान्यमिति पशुभक्ष्योपलक्षणम् विहिंस्यु-र्भक्षयेयुः ।। २३८ ।।

(३) **कुल्लूकः**। तस्मिन्परिहारस्थाने यदि केनचिददत्तावृतिकं धान्यमुप्यते तच्चे-त्पशवो भक्षेयुस्तत्र पशुपालानां नृपो दण्डं न कुर्यात् ।। २३८ ।।

(४) **राघवानन्दः**। अपावृतेषु न दण्डइत्याह तत्रेति । विहिंस्युर्भक्षयेयुर्विमर्दयेयुर्वा ।। २३८ ।।

(५) **नन्दनः**। तत्र गोप्रचारदेशे अपरिवृतं वृतिरहितम् । तत्र वान्यहिंसाविषये ।। २३८ ।।

(६) **रामचन्द्रः**। तत्र परिणाहे अपरिवृतं अवेष्टितं धान्यं पशवो यदि विहिंस्यु-स्तत्रापराधे नृपतिः पशुरक्षिणां दण्डं न प्रणयेत् ।। २३८ ।।

(७) **मणिरामः**। तत्र परिहारस्थाने। अपरिवृतं अरक्षितं ।। २३८ ।।

(८) **गोविन्दराजः**। तत्रेति । तस्मिन्व्यवहारस्थाने यदि केनचिद्धान्यमुप्येत अदत्त-वृत्तिके चेद्यदि पशवो भक्षयेयुः तदा तत्र पशुपालानां राजा दण्डं न कुर्यात् ।। २३८ ।।

(९) **भारुचिः**। यदि तु तत्र भूलोपात् समुप्यते येन केनचित् परिवृतं च भवेत् ततस्त-द्भक्षणे गोभिर्नदोषः स्यात् पशुरक्षिणाम् ।। २३८ ।।

**वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् ।।**
**छिद्रं च वारयेत्सर्वं श्वसूकरमुखानुगम् ।। २३९ ।।**

(१) **मेधातिथिः**। कंटकशाखादीनां प्राकारविन्यासः पशुप्रवेशवारणार्थः क्षेत्रारा-मादीनां वृतिरुच्यते । या क्वचित्पर्णिकेति प्रसिद्धा—वारणाद् 'वृतिः' । तस्या उन्नतिरियती कर्तव्या ययोष्ट्रो नावलोकयति ।

"किमियं द्वितीया तृतीयार्थे यामुष्ट्र इति" ।

नेति ब्रूमः ।

कथं तर्हि वृतिमुष्ट्रो न पश्यति" ।

महोत्सेधाया द्वितीयपार्श्वस्यादर्शनाददृष्टैव वृतिः। **छिद्रं च** विवरं **वारयेत्सर्वम्**। **श्वसूकरमुखेन** यदनुगम्यते—तन्मुखपरिमाणम्। तथा कुर्याद्यथा श्वमुखं न माति। तन्मुखादप्यल्पच्छिद्रमित्यर्थः ॥ २३९ ॥

(२) **सर्वज्ञनारायणः।** प्रकुर्वीत धान्यस्वामी यामुष्ट्र इत्युच्चतोक्ता। श्वशूकरमुखं यत्रानुगच्छति तादृक्छिद्रं वारयेत् ॥ २३९ ॥

(३) **कुल्लूकः।** तत्र परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमयीं तथाविधामुच्छ्रितां कुर्यात् यामपरपार्श्वे उष्ट्रो न विलोकयेत्तस्यां च यत्किंचिच्छिद्रं श्वसूकरमुखप्रवेशयोग्यं तत्सर्वमावृणुयात् ॥ २३९ ॥

(४) **राघवानन्दः।** अपरिवृतमित्युक्तं तत्र किंरूपा वृतिर्देयेत्यपेक्षायामाह वृतिमिति। उष्ट्रावलोकपर्यन्तामुच्छ्रितां वृतिं कुर्यादिति। श्वादेर्मुखं यावत्प्रविशति तावदपि छिद्रं निरुन्ध्यादिति। अनेन खेटखर्वट्वाटीनामप्यावृतत्वं सचितम् ॥ २३९ ॥

(५) **नन्दनः।** श्वसूकरमुखानुगं श्वसूकरमुख्यैरनुगम्यंसुप्रवेशम् ॥ २३९ ॥

(६) **रामचन्द्रः।** तत्र परिणाहे वृतिं कण्टवेष्टनं। यां वृतिमुष्ट्रोनविलोकयेत् न पश्येत्। वा पातान्तरंश्वशूकरमुखानुगं छिद्रं सर्वं वारयेत् यत्रछिद्रे शुनः शूकरस्य तयोःमुखप्रवेशयोग्यं छिद्रस्यमुद्रणंकुर्यात् ॥ २३९ ॥

(७) **मणिरामः।** वृतिं कंटकादिमयीं ॥ २३९ ॥

(८) **गोविन्दराजः। वृतिमिति** तस्मिन्परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमयीं प्राकाराकृतिं तथाविधामूर्जितां कुर्यात् यामपरपार्श्वतः यथा उष्ट्रो नाऽवलोकयेत्। तस्याञ्च यावत्किञ्चिच्छिद्रं श्वशूकरमुखप्रवेशक्षममपि तत्सर्वं स्थगयेयुः ॥ २३९ ॥

(९) **भारुचिः।** पशुवारणसमर्थायां तु वृतौन कृतायां सस्योपघाते पालस्य न दोषःस्यात् ॥ २३९ ॥

तथा कृतायां वृतौ—

**पथि क्षेत्रेऽपरिवृते ग्रामान्तीयेऽथ वा पुनः ॥**
**सपालः शतदण्डार्हो विपालान् वारयेत्पशून् ॥ २४० ॥**

(१) **मेधातिथिः। परिवृते पथि** क्षेत्रे ग्रामसमीपवर्तिनि च परिहारमध्यगते। **अन्तशब्दः** समीपवचनः। यदि भक्षयेत्पशुः। **सपालश्च** स्यात्। सन्निहितः **पालः शतदण्डार्हः** पशोर्दण्डासंभवात्। पालेऽसन्निहितेऽपि गृहे यदा—नाप्यसौ पालः प्रसिद्धो न पुनस्तत्प्रेषितो वारिको रूपकमात्रवेतनः।

**विपालाः पशवो वारयितव्या** दण्डादिना—न तु दण्डनीयाः। **विपालाश्चोत्सृष्ट**-वृषादयः। अन्येषां तु विपालानां स्वामिनो दण्डः।

अथवा **अपरिवृत** इति प्रश्लेषः। क्षेत्रसंबंधाच्च गम्यमानः क्षेत्रस्वामी 'सपाल' इत्यन्य-पदार्थतयाऽभिसंबध्यते–'सह पालेनेति'।

क्षेत्रे को दण्डयः। उभौ दण्डयौ। पालः क्षेत्रिकश्च। क्षेत्रिकस्तावत्किल किमिति पथि क्षेत्रे वृतिं न कृतवान्। पालेनापि वृतौ चासत्यां किं क्षेत्रं खादयितव्यम्। विपालं प्रमादाद्यूथच्युतं वारयेत्। तथा च गौतमः (१२/२१) "पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः" इति ।। २४० ।।

(२) **सर्वज्ञनारायणः**। पथि परिवृते तथा क्षेत्रे तथाग्रामान्तीये प्रागुक्तग्रामान्तर-परिणाहेच परिवृत्ते। ग्रामपदं नगरस्याप्युपलक्षणम्। सपालःपशुः शतं पणान् दण्डयः। पशोर्दण्डः पालस्यैवार्थात्। विपालान् देवादिपशून् स्वयमेव क्षेत्रस्वामी चारयेत्।। २४० ।।

(३) **कुल्लूकः**। वर्त्मसमीपग्रामसमीपवर्तिनि वा परिहारस्थे क्षेत्रे दत्तवृत्तौ सपालः पशुः पालानिवारितो द्वारादिना कथंचित्प्रविष्टो यदा भक्षयति तदा पणशतं दण्डयः। पशोश्च दण्डासंभवात्पाल एव दण्डयः। विपालान्पुनर्भक्षणप्रवृत्तान्क्षेत्ररक्षको निवारयेत्।। २४० ।।

(४) **राघवानन्दः**। परिवृतसस्यभोजिनां पालस्य भावाभावावाश्रित्याह पथीति। सपालः पशुः पालेन रक्षितः तत्रापि पालस्यैव दण्डो न पशोः। वारयेत् भक्ष्ये प्रवृत्तान् विपालानिति शेषः ।। २४० ।।

(५) **नन्दनः**। परिवृते वृतियुक्ते धान्यंविहिंस्युःपशवोयदीत्यनुषङ्गः। शतंपणशतं। विपालंगोपरहितं पशुंक्षेत्रस्वामी वारयेत्। न तत्र दोषः।। २४० ।।

(६) **रामचन्द्रः**। पथि क्षेत्रे मार्गसमीपक्षेत्रे कंटकैः परिवृते विपालान्चारयेत् तर्हि सपालः शतदण्डार्हः। वा पुनः ग्रामान्तीये ग्रामसमीपे पशून्चारयेत् स दण्डार्हः।। २४० ।।

(७) **मणिरामः**। सपालः पालसहितश्चेत् पशुःद्वारं कृत्वान्नं भक्षयति तदा पशु-पालः पणशतं दंड्यः। विपालान् पशुपालरहितान् पशून् वारयेत् धान्यस्वाम्येव निवारयेत् ।। २४० ।।

(८) **गोविन्दराजः**। पथीति। यदि पुनर्मार्गसमीपवर्तिनि ग्रामसमीपे गतेऽ-कृतवृतौ सपालः पशुपालप्रक्षिप्तो न रक्षति तदा पणशतं दण्डयः पशोर्दण्डासंभवात्पाल एव दण्डयो विपालं पुनर्भक्षणे प्रवृत्तं क्षेत्रस्वामी वारयेत्।। २४० ।।

(९) **भारुचिः**। दृष्टिपातेन खातयन् पालः शतदण्डार्हः स्यात्। विपालं च पशुं वारयेत्। अदण्डश्च स्यात् पशुपालस्तदसन्निधानात्। अन्यस्त्वत्रार्थः। सह पालेन सपालः क्षेत्रिकः। न पशुरत्रोच्यते, पूर्ववच्छतदण्डार्हः स्यात्। उभयापराधात् क्षेत्रिकेण ताव ...क्षिपचिक्षेत्रः स्वत्रावृतमिति पालो नापि किं पथि क्षेत्रेणावृतमिति मत्वा खादयितव्यम्। तस्मादुभयापराधादुभयोर्दण्डः। गौतमीयेऽपि चोक्तम्–'पथिक्षेत्रेऽनावृते पालक्षेत्रिकयोरिति ।। २४० ।।

**क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति ।**
**सर्वत्र तु सदोदेयः क्षेत्रिकस्येति धारणा ।। २४१ ।।**

**(१) मेधातिथिः ।** पथिक्षेत्रग्रामान्तीयेभ्योऽन्यानि क्षेत्राणि–तद्भक्षणो **सपादपणो** दण्डः । "ननु चात्र स्वल्पेन दण्डेन भवितव्यं दूरक्षेत्रात्सन्निहिते क्षेत्रे। यत्तु पन्थानमतिक्रम्य क्षेत्रं बहिर्ग्रामं वा, तत्र महान् दण्डो युक्तः। किमिति गवां पालो गन्तुं तत्र ददाति"।

**नैष** दोषः। यद्यत्र महादण्डो नोच्येत तदा प्रत्यहं प्रवेशनिर्गमैर्गवां भक्षयन्तीनां ग्रामान्तरक्षेत्राण्युत्सीदेयुः। दण्डात्तु महतो बिभ्यतो यत्नेन रक्षन्ति। अन्यत्र गास्तृणविशेषार्थं कथंचिन्नयतः स्वल्पो दण्डः ।

अत्रापि विपालानां वारणमेव ।

सर्वत्र क्षेत्रस्वामिनः सदफले देये, कुशलैः च ते परिमाणेन कल्पिते ।

**क्षेत्रिकस्य ।** क्षेत्रमस्यास्तीति । व्रीह्यादित्वाट्ठक् ।

**इति धारणैष** निश्चय इत्यर्थः ।

**सर्वत्र**ग्रहणाच्च विपालेऽपि पशौ क्षेत्रिकस्य सदलाभः ।

यद्यपि पशुशब्दः सामान्यशब्दो महिष्यजाव्युष्ट्रगर्दभादिषु वर्तते तथापि स्मृत्यन्तरदर्शनाद् गोष्वयं दण्ड इति मन्यते। तथा च गौतमः (१२/२४-२५) "अश्वमहिष्योर्दशअजाविषु द्वावित्यादि" अन्यत्र कल्पना ।। २४१ ।।

**(२) सर्वज्ञनारायणः ।** क्षेत्रेष्वन्येष्वनावृतेषु ग्रामदूरस्थक्षेत्रेषु अयं च राजदण्डः। नष्टस्तु सदः सस्य क्षेत्रिकस्य सर्वत्र पशुकृतापराधे देयः ।। २४१ ।।

**(३) कुल्लूकः ।** वर्त्मग्रामान्तव्यतिरिक्तेषु पशुर्भक्षयन्सपादं पणं दण्डमर्हति अत्रापि पालएव दण्ड्यः। सर्वत्र क्षेत्रे पशुभक्षितं फलं स्वामिने पालेन स्वामिना वा यथापराधं दातव्यमिति निश्चयः ।। २४१ ।।

**(४) राघवानन्दः ।** वर्त्मग्रामान्तव्यतिरिक्तक्षेत्रेषु दण्डन्यूनतामाह क्षेत्रेष्विति। एवंविधे पशुः पशुपालः पणं मूल्यं पणस्यपादंवासपादं माषचतुष्काधिकताम्रतोलकद्वयं सर्वत्र सपालैर्विपालैर्वा भक्षितसस्याय। क्षेत्रिणे सदः मूल्यं स्वामिना पालेन वोक्तानुसारेण देयम् इति धारणा नियमः। नियमविशेषोयाज्ञवल्कयात् ज्ञेयः। तथाहि। माषानष्टौतु महिषी सस्यघातस्य कारिणी। दण्डनीया तदर्धंतु गौस्तदर्धमजाविकम्। भक्षयित्वोपविष्टानांयथोक्ताद्द्विगुणो दमः। सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्। यावत्सस्यं विनश्येत तावत्क्षेत्री फलंलभेत्। गोपस्ताड्यस्तु गोमीतु पूर्वोक्तं दण्डमर्हतीति। विवीते वननिकटे। सपालेपि। धारणा नियमः ।। २४१ ।।

**(५) नन्दनः ।** अन्येषु क्षेत्रेषु वृतिरहितेषु गोप्रचारदेशव्यतिरिक्तेषु। पशुर्हिस्यादित्यनुषज्यते वचनविपरिणामे न। सर्वत्र ग्रामान्तादौ। सदःकृषिफलं क्षेत्रिकाय क्षेत्रस्वामिने ।। २४१ ।।

(६) **रामचन्द्रः**। अन्येषु क्षेत्रेषु सपादं पणं दण्डं अर्हति। तु पुनः सर्वत्र सदः अन्नं क्षेत्रिकस्य देयः इति धारणा मर्यादा ॥ २४१ ॥

(७) **मणिरामः**। अन्येषु ग्रामनगरमार्गाद्दूरवर्तिषु। सपादं पणं ॥ २४१ ॥

(८) **गोविन्दराजः**। क्षेत्रेष्विति। सर्वत्र त्वसितं ज्ञेयमिति। पथिग्रामान्तव्यतिरिक्तेषु क्षेत्रेषु पशुर्भक्षयन् सपादं पणदण्डं अर्हति, अर्थात्पाल एव सर्वस्मिंश्च |क्षेत्रे स्वामिनः पशुभक्षितं फलं पालेन पशुस्वामिना वा यथाऽपराधं दातव्यमिति निश्चयः ॥ २४१ ॥

(९) **भारुचिः**। अन्यक्षेत्राणि पूर्वोक्तादवधेयानि बहिस्तान्युच्यन्ते। गोश्च सपादस्य पणस्योपदेशादुपघातानुरूपेण महिष्यादीनां स्यात्। राजभाव्यो दण्डः सदः क्षेत्रिकस्य सर्वत्र शब्दाच्च विपा(दो ? दे)ऽपि सदो देयः इति ॥ २४१ ॥

**अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ॥**
**सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥ २४२ ॥**

(१) **मेधातिथिः**। गोग्रहणान्महिष्यादिषु दोषः। **वृषाः** उक्षाणः। **देवपशवो** देवयागार्थे यजमानेन कल्पिताः प्रत्यासन्नयागाः। अथवेष्टकादिकूटस्थापिताः। हरिहरादीनां प्रतिकृतयो 'देवा' उच्यन्ते—तेषां 'पशवः'—तानुद्दिश्य केनचिदुत्सृष्टाः। तदा ह्यस्य देवानां पशूनां च स्वस्वामिसंबंधस्य संभवात्। देवायतनमण्डनानां चैष धर्मः। न तु तत्पालकैर्वाहदोहाद्यर्थे ये देवगृहेषु धार्यन्ते। यतः पालका एव तेषां देवानामर्थे विनियुज्यन्ते। अतस्तत्र पालका एव स्वामिनः। अतो युक्तः स्वामिवतामन्येषां यो धर्मः स तत्र। आयतनमण्डनास्त्वपरिगृहीता अव्यवधानेन देवपशुबुद्धिमुत्पादयन्ति।

वृषोत्सर्गादिविधानोत्सृष्टा 'वृषाः' कैश्चित्परिगृह्यन्ते।

ततः **सपाला** अथवा परिगृहीतास्ततो **विपालाः**—उभयेषामदण्डः ॥ २४२ ॥

(२) **सर्वज्ञनारायणः**। अनिर्दशाहां सूतां तस्याश्चारयितव्यत्वादुन्मत्ततया रक्षणाशक्तेश्च सपालत्वेपि न दोषः। वृषानुत्सृष्टान् देवपशून् देवसंबन्धिनश्छागादीन् विपालानप्येतान्नदण्डयेत् देवस्वग्रहणपर्यवसानात् ॥ २४२ ॥

(३) **कुल्लूकः**। प्रसूतां गामनिर्गतदशाहां तथा च चक्रशूलांकितोत्सृष्टवृषान् हरिहरादिप्रतिमासंबन्धिपशून् पालसहितान् पालरहितान्वा सस्यभक्षणप्रवृत्तान्मनुरदण्ड्यानाह उत्सृष्टवृषाणामपि गर्भार्थं गोकुले पालैर्धारणात्सपालत्वसंभवः ॥ २४२ ॥

(४) **राघवानन्दः**। सपालेपि प्राप्तदण्डाभावमाह अनिर्दशेति। वृषान् बह्वीषु गोषु रेतःसेकसमर्थम्। देवपशून् देवोद्देशेनोत्सृष्टान्। अत्र सदोपि न वाक्यभेदात् ॥ २४२ ॥

(५) **नन्दनः**। अनिर्दशाहामनतीतदशाहां न दण्ड्यानदण्ड्यान् ॥ २४२ ॥

(६) **रामचन्द्रः**। दण्डस्यापवादमाह। गां अनिर्दशाहां सूतां प्रसूतां वृषान् वृषाउत्सृष्टपशवः तथा देवतोद्देशेन त्यक्तान् सपालान्वा अपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥ २४२ ॥

(७) **मणिरामः।** वृषान् चक्रशूलांकितोत्सृष्टान्। देवपशून् हरिहरादिप्रतिमा-संबंधिपशून्। उत्सृष्ट वृषाणांमपि गो गर्भार्थं गोकुले पालैर्धारणात् सपालत्वसंभवः ।। २४२ ।।

(८) **गोविन्दराजः।** अनिर्दशाहामिति। गां प्रसूतां अनिर्दशाहां तथा ग्रहणदत्त-छागवृषभादि प्रतिमासं बन्धिपशून्यवान् रक्षायुक्तान् शून्यान्वा सस्यभक्षणेऽदण्डार्हान्मनुराह। न पालस्य दण्डो स्वामिन इत्यर्थः। परिपालकोपेक्षानां देवप्रकृतीनां परिपालाय पशु-सम्बन्धि शङ्काते अतो विपालदेवपशुस्सस्यभक्षकस्य दण्ड इति न चोदनीयः ।। २४२ ।।

**क्षेत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।।**
**ततोऽर्धदण्डो भृत्यानामज्ञानात्क्षेत्रिकस्य तु ।। २४३ ।।**

(१) **मेधातिथिः।** क्षेत्रस्वामिनः स्वक्षेत्रेऽत्ययोऽतिक्रमोऽपराधो यदि भवेत्स्वकृते —अकाले वापनं, निदानमयोग्यबीजवापः, स्वपशुभिर्भक्षणं गिरणं वा, विदितफलके प्राश इत्यादि—तदा राज्ञो यावान्भाग आगच्छति तं दशगुणं दण्डनीयः ।। २४३ ।।

अथ तस्याज्ञातमेतत् तत्प्रयुक्तैर्भृत्यैः क्षेत्रजागर्यानियुक्तैर्वा अपराद्धं तदाऽर्धदण्डः। भृत्यानामत्यये क्षेत्रिकस्य दण्ड इति संबन्धः।

क्षेत्रप्रसङ्गादत्रेदमुक्तम् ।। २४३ ।।

(२) **सर्वज्ञनारायणः।** क्षेत्राधिकृतस्यैव पशुभिः सस्यात्यये कृते राज्ञो ग्राह्यस्वभागा-द्दशगुणोऽन्योपि भागोदण्डत्वेन ग्राह्यः। क्षेत्रिकाज्ञाने पालमात्रदोषात्तन्नाशे ग्राह्यस्वभागा-त्पञ्चगुणोभागो भृत्यानांदण्डः। भृत्येनच क्षेत्रि—काय सदोदेयस्तुल्यन्यायत्वात् ।। २४३ ।।

(३) **कुल्लूकः।** क्षेत्रकर्षकस्यात्मपशुसस्यभक्षणेऽयथाकालं वपनादौ वाऽपराधे सति यावतो राजभागस्य तेन हानिः कृता ततो दशगुणदण्डः स्यात्। क्षेत्रिकाविदिते भृत्याना-मक्तापराधे क्षेत्रिकस्यैव दशगुणार्धदण्डः। क्षेत्रसस्यप्रसङ्गाच्चेदमुक्तम् ।। २४३ ।।

(४) **राघवानन्दः।** क्षेत्रदण्डप्रसंगेन कालापराधादौ दण्डमाह क्षेत्रिकस्येति। अत्यये कृषियोग्यकालात्यये राजकीयभागस्य दशगुणः क्षेत्रिकस्य कृषिकस्य दण्डस्ततोर्धदण्डः पञ्च-गुणः। क्षेत्रिकस्य क्षेत्रकर्मणः कृष्यादेः अज्ञानात् भृत्यानाम् ।। २४३ ।।

(५) **नन्दनः।** क्षेत्रिकस्याक्रमे दण्डमाह क्षेत्रिकस्येति। अत्ययेऽतिक्रमे क्षेत्रिक-निमित्ते सस्यघात इति यावत्। तस्य विनष्टाद्भागाद्दशगुणो दण्डो भवेत्। क्षेत्रस्याज्ञाना-दनुमत्या भृत्यानांसंबन्धिनामत्यये दशगुणादर्द्धदण्डः पञ्चगुणडण्डोभवेत् ।। २४३ ।।

(६) **रामचन्द्रः।** क्षेत्रिकस्य अत्यये क्षेत्राधिपतेरेव पशुभिः क्षेत्रनाशे कृते भागात् राजग्राह्यात् दशगुणःदण्डः भवेत् राज्ञा ग्रहीतव्यः। क्षेत्रिकस्यतुअज्ञानात्। भृत्यानां पालानां ततो र्धदशभागार्धदण्डः ।। २४३ ।।

(७) **मणिरामः।** क्षेत्रियस्य क्षेत्रत्यागिनः। अत्यये वीजवपनकाले वीजवपनाऽ-करणेधर्ममाह। सीमामिति ।। तस्मिन्समये तृणादिनाशाभावात् यावतोराजभागस्यहानिः

क्षतातावद्भागात् दशगुणोदंडः। क्षेत्रिकस्य अज्ञानात् यदि भृत्यानामपराधः तदासावधानता-भावात्स्वामिन एव दशगुणार्द्धदंडः ।। २४३ ।। ।। २४४ ।।

(८) **गोविन्दराजः। क्षेत्रिकस्येति।** क्षेत्रस्वामिनः आत्मपशुसस्यभक्षणकालवपनस-स्यापहारादौ अपराधे यावतो राजभागस्य तेन हानिः कृता ततो दशगुणो दण्डः स्यात्। भृत्यानां पुनः क्षेत्रस्वाम्यविदित एवं कुर्वतां दशगुणादर्धदण्डः स्यात्। तदनुज्ञानात्तु तस्यैव दशगुणो दण्ड इति क्षेत्राऽपराधेऽपीदमुक्तम् ।। २४३ ।।

(९) **भारुचिः।** साऽस्मात् सः स्यात् क्षेत्रिको यदपहरेत् तस्य भागकल्पनया दशगुणो दण्डः प्रकल्प्यः। अर्धदण्डाः भृत्याः स्युः। अज्ञानात् क्षेत्रिकस्य तु प्रयोगादेव भृत्यानाम-सावेव दण्डः स्यात्। सस्यसम्बन्धप्रसङ्गच्चायं क्षेत्रिकस्य व्यतिक्रम उच्यते अ(स्त्रे ? स्ते) याभिमतत्त्वाच्च ।। २४३ ।।

**एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।।**
**स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ।। २४४ ।।**

(१) **मेधातिथिः।** सुबोधोयंश्लोकः ।। २४४ ।।
दण्डप्रकारविशेषम् ।। २४४ ।।

(२) **सर्वज्ञनारायणः।** पशूनां पशुभिर्व्यतिक्रमे तत्स्वामिनां तत्पालानां च विधानं दण्डप्रकारविशेषम् ।। २४४ ।।

(३) **कुल्लूकः।** स्वामिनां पालानां चारक्षणादपराधे पशूनांच सस्यभक्षणरूपे व्यति-क्रमे धर्मप्रधानो भूपतिरेतत्पूर्वोक्तं कर्त्तव्यमनुतिष्ठेत् ।। २४४ ।।

(४) **राघवानन्दः।** उपसंहरति एतदिति। व्यतिक्रमे सस्यभक्षणादौ ।। २४४ ।।

(५) **नन्दनः।** एतदुक्तं विधानम् ।। २४४ ।।

(६) **रामचन्द्रः।** धार्मिकःपृथिवीपतिः एतद्विधानं आतिष्ठेत् कुर्यात् ।। २४४ ।।

(८) **गोविन्दराजः।** एतदिति। पशुभिः सस्यभक्षणेन स्वामिनां पालानाञ्चापराधे देवपश्वादिसस्यभक्षणे धर्मप्रधानो राजा एतत्पूर्वोक्तं कर्तव्यमनुतिष्ठेत् ।। २४४ ।।

(९) **भारुचिः।** उपसंहारार्थः श्लोकः ।। २४४ ।।

**सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।।**
**ज्येष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ।। २४५ ।।**

(१) **मेधातिथिः। सीमां प्रति विवादे**—सीमानिमित्ते। लक्षणेत्थंभूतेति प्रतेः कर्म-प्रवचनीयत्वाद् द्वितीयानिमित्तमपि लक्षणमिति शक्यते वक्तुम्। 'सीमा' मर्यादा—ग्रामादीनां विभागः परिमाणमियत्ता परिच्छेदनमिति यावत्। **ज्येष्ठे मासि नयेन्**निर्णयः कर्तव्यः। मासविशेषनिर्णये हेतुमाह—**सुप्रकाशेषु सेतुषु।** सेतवः सीमालिङ्गानि वक्ष्यमाणानि, लोष्ठ-

पाषाणादिविशिष्टजातीयसीमाग्राह्यतृणगुंजादीनि । प्रागस्मात्कालादनुत्थितेषु तृणेषु लोष्ठपाषाणयोरन्यस्याश्च भूमेर्न विशेषो लक्ष्यते। पाषाणलक्षितायां यदा तत्र तृणानि न ज्ञायन्ते तदा सा सीमेति निश्चीयते। एवं वल्लीस्थानादिष्वपि। प्राग्वसंताद्वासंतिके दाहे विशेषो न लक्ष्यते। हेत्वभिधानाच्च यस्मिन्देशे यदा व्यज्यंते ततो मासात्कालहरणं कर्तुं नादेयम्। अन्यदा तु लिङ्गज्ञानार्थे कालापेक्षाऽपि भवतीत्येतावत्फलं ज्येष्ठग्रहणे ।। २४५ ।।

(२) **सर्वज्ञनारायणः**। अथसीमा ।। सीमांप्रतीति। नयेदुन्नयेत। संप्रकाशेषु प्रकटेषु ।। २४५ ।।

(३) **कुल्लूकः**। द्वयोर्ग्रामयोर्मर्यादांप्रतिवि प्रतिपत्तावुत्पन्नायां ज्येष्ठे मासि ग्रीष्म-रवितापसंशुष्कतृणत्वात्प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमांनिश्चिनुयात् ।। २४५ ।।

(४) **राघवानन्दः**। सीमाविवादधर्मस्येत्युक्तंतन्निर्णयमाह सीमेत्यादिभिर्द्वाविंशत्या। तत्र सीमा चतुर्धा देशग्रामक्षेत्रगृहभेदेन तत्र तदुचितकालमाह सीमामिति। सेतुषु भेदकेषु सुप्रकाशेषूक्तस्थले तणादीनां शोषदाहाभ्याम् ।। २४५ ।।

(५) **नन्दनः**। सीमाविवादमाह सीमामिति नयेत्प्रापयेत्। ज्येष्ठमासे सीमानयन-विधेः कारणं तस्मिन्काले सीमाविवादनिर्णयहेतवः सेतवः सुप्रकाशा भवन्तीति ।। २४५ ।।

(६) **रामचन्द्रः**। ज्येष्ठे मासि सप्रकाशेषुसेतषु सीमां ग्रामयोःसीमां नयेत्प्रापयेत् ।। २४५ ।।

(७) **मणिरामः**। इदानींसीमाविवादधर्ममाह। सीममिति ।। तस्मिन्समये तृणादिनाशात्सीमानिर्णयः सम्यग्भवतीत्यर्थः ।। २४५ ।। ।। २४६ ।।

(८) **गोविन्दराजः**। **सीमामिति**। द्वयोर्ग्रामिमर्यादाविषयायां विप्रतिपत्तौ उत्पन्नायां ज्येष्ठे मासि ग्रीष्मे तापसंशुष्कतृणत्वात्प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमां निश्चिनुयात्। सीमापरिज्ञाने सर्वदा लोके जनानां भ्रान्तिं दृष्ट्वोक्तानि गुह्यानि वक्ष्यमाणानि सीमा चिह्नानि कारयेत् ।। २४५ ।।

(९) **भारुचिः**। उपन्यासश्चित्तप्रणिधानार्थः। ज्येष्ठमासेऽभिसेतवः सुविज्ञाता भवन्ति ।। २४५ ।।

**सीमावृक्षांश्च कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।।**
**शाल्मलीन्सालतालांश्च क्षीरिणश्चैव पादपान् ।। २४६ ।।**

(१) **मेधातिथिः**। **पादपा** वृक्षाः। **क्षीरिणो**ऽर्कोदुंबरप्रभृतयः। एते च चिरस्था-यित्वात्सीमादेश एव रोपयितव्या न ग्राममध्ये। सीमादेशादन्यत्र क्रियमाणा न निश्चायकाः स्युः ।। २४६ ।।

(२) **सर्वज्ञनारायणः**। यैरूहेत्तदभिधानाय सीमाचिन्हकरणप्रकारमाह सीमा-वृक्षानिति। सीमावृक्षान् सीमालिङ्गवृक्षान् ।। २४६ ।।

(३) **कुल्लूकः**। न्यग्रोधादीन्वृक्षान् क्षीरिण उदुम्बरादीन् चिर ङ्गभूतान्कुर्वीत ।। २४६ ।।

(४) **राघवानन्दः**। सीमाज्ञप्त्यै तदुचितवृक्षानाह सीमेति द्वाभ्याम् किंशुकः पलाशः। क्षीरिणः उदुम्बरादीन् ।। २४६ ।।

(५) **नन्दनः**। किंशुकान्पलाशान् ।। २४६ ।।

(६) **रामचन्द्रः**। किंशुकान्पलाशान् च पुनः क्षीरिणः पादपान्कुर्वीत ।। २४६ ।।

(८) **गोविन्दराजः**। **सीमावृक्षानिति**। सीमालिङ्गभूतान्न्यग्रोधादीन्वृक्षविशेषान् क्षीरिणश्च वृक्षान् उदुम्बरादीन् चिरस्थान् कारयेत् ।। २४६ ।।

## गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च ।।
## शरान्कुब्जकगुल्मांश्च तथा सीमा न नश्यति ।। २४७ ।।

(१) **मेधातिथिः**। संहतप्रकाण्डा वीरुधो **गुल्मानि**। **वेणव** आरग्वधादयः। बहुत्वाच्च **विविध**ग्रहणम्। वल्लयो व्रततयः दीर्घाङ्कुरास्तृणजातयः। **स्थलानि** कृत्रिमा शाद्वलादिपिण्डिकाः। **कुब्जकस्य** गुल्मत्वात्पृथगुपदेश आदरार्थः।

**करीषं** शुष्कं गोमयम्। **अङ्गारा** अग्निदग्धाः काष्ठावयवाः। पाषाणकठिना मृदः **शर्कराः**। **कपालिका** कलशैकदेशः ।। २४७ ।।

(२) **सर्वज्ञनारायणः**। गुल्मान् बीजपूराद्यान्। शमीं वृक्षविशेषम्। वल्लीं चिरस्थायिनीं करञ्जादिलताम्। स्थलंच मृदादिना। कुब्जकगुल्मान् कुब्जकषण्डान् ।। २४७ ।।

(३) **कुल्लूकः**। गुल्मान्प्रकाण्डरहितान्वेणूंश्च प्रचुरकण्टकत्वाल्पकण्टकत्वादिभेदेन नानाप्रकारान्सीमावृक्षान्वल्लीर्लताः स्थानानि कृत्रिमोन्नतभूभागान् शरान्कुब्जकगुल्मांश्च प्रचुराऽल्पभोगत्वेनादरार्थं पृथग्निर्दिष्टान्सीमालिङ्गभूतान्कुर्यात्। एवंकृते सीमा न नश्यति ।। २४७ ।।

(४) **राघवानन्दः**। गुल्मान् बहुमूललताकारान् शतमूल्यादीन्। वल्ली लता। स्थलानि कृत्रिमोच्छ्रितभूमयः अत्यादरार्थे पुनर्गुल्मांश्चेति ।। २४७ ।।

(६) **रामचन्द्रः**। गुल्मान् बीजपूरादीन् वल्ली करञ्जादिलता। स्थलानि सत्कूटादीनि ।। २४७ ।।

(७) **मणिरामः**। स्थलानि कृत्रिमोन्नतभूमिभागान्। कुब्जकगुल्मान् ।। २४७ ।।
।। २४८ ।।

(८) **गोविन्दराजः**। **गुल्मानिति**। अप्रकाण्डाः स्मृता इति काण्डाभिधानात् गुल्मान् वृक्षान् विविधान् वेणूंश्च वेणुकीचकवेण्वादीन्नानाप्रकारान् शम्याख्यान् मल्लिकादिविचित्रानुप्तान्भूभागान् शरान् कुब्जकसम्बन्धिनो गुल्मानचिरोपभोगत्वेन पृथक् निविष्टत्वात् ।। २४७ ।।

**अश्मनोऽस्थीनि गोवालांस्तुपान्भस्मकपालिकाः ।।**
**करीषमिष्टकांगारांश्छर्करा वालुकास्तथा ।। २४८ ।।**

(१) **मेधातिथिः।** महांभांसि तडागानि वाप्यः पुष्करिण्यउदपानानि कूपप्रभृतीनि प्रस्त्रवणान्युदकस्यन्दा ईषत्स्त्रवदुदका भूप्रदेशाः। देवतायतनानि यक्षगृहकादीन्येतानि प्रकाशकानि नह्येतानि स्वल्पेनायासेन नाशयितुं शक्यन्ते नाश्यमानेषु च महान्प्रत्यवायो भवति। सर्वस्य चोदकार्थिनो देवतादर्शनार्थिनश्च तत्र संनिधानात्सुज्ञातश्च साक्षिणां सीमासन्धिर्भवति ।। २४८ ।।

(२) **सर्वज्ञनारायणः।** तडागानि पुष्करिण्यः। उदपानानि कूपाः। वाप्यः क्षुद्रपुष्करिण्यः। प्रस्त्रवणानि बृहत्खातानि ।। २४८ ।।

(३) **कुल्लूकः।** तडागकूपदीर्घिकाजलनिर्गममार्गदेवगृहाणि सीमारूपेषु ग्रामद्वयसंधिस्थानेषु कर्त्तव्यानि। एतेषु सीमानिर्णयाय विख्याप्य कृतेषूदकाद्यर्थिजनाअपि श्रुतिपरंपरया चिरकालेऽपि साक्षिणो भवन्ति ।। २४८ ।।

(४) **राघवानन्दः।** तस्यांतु महत्यां तडागाद्यपि कार्यमित्यादि तडागानीति। उदपानानि कूपाः। देवतायतनानि मण्डपादीनि। बहुजनप्रसिद्धता फलम्। तत्र देशसीम्नि तडागः कार्यः। ग्रामसीम्नि वापी। क्षेत्रसीम्नि कूपः। गृहसीमायां प्रस्त्रवणम्। जलसंचरणार्थमर्थतो व्यवस्था। तत्र ।। "पञ्चाशद्भिर्भवेत्कूपः शतहस्ता तु वापिका। पुष्करिण्यस्तदर्धेतु यावद्धनुःशतद्वयम्। तडागोष्टशतः प्रोक्तः सरस्तु चतुरस्रकम्" इत्यधिकसंख्यावच्छेदार्थम् ।। २४८ ।।

(५) **नन्दनः।** कुल्यगुल्मान् (इरण्डानात्तु) वाप्यः दीर्धिकाः। प्रस्त्रवणानि (केणीकल) देवतायतनानि दुर्गाविनायकादिस्थानानि ।। २४८ ।।

(६) **रामचन्द्रः।** प्रस्त्रवणानि बहुस्रामितानि ।। २४८ ।।

(८) **गोविन्दराजः।** तडागानिति। तडागकूपपुष्करिण्युदक प्रणीत देव गृहाणि सीमायां ग्रामद्वयसन्धिस्थानेषूदकाभ्यर्थित्वेन जनसंसर्गे सति साक्षिसंभावनार्थे कर्तव्यानि ।। २४८ ।।

**उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।।**
**सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम् ।। २४९ ।।**

(१) **मेधातिथिः।** अन्यानि **उपच्छन्नानि कारयेद्**राजा नवग्रामसन्निवेशे कृते निर्णयम्। एवं सीमा न कदाचिन्नश्यति। अन्यथा तं प्रदेशं **वीक्ष्य नित्यं लोके** कश्चित्कर्षणेन नाशयेत् ।। २४९ ।।

(२) **सर्वज्ञनारायणः।** उपच्छन्नानि मृन्मध्यनिहितानि ।। २४९ ।।

* [illegible]

(३) **कुल्लूकः**। सीमानिर्णये सर्वदाऽस्मिल्लोके मनुष्याणां विभ्रममज्ञानं दृष्ट्वा-ऽभिहितव्यतिरिक्तानि गूढानि वक्ष्यमाणानि सीमाचिन्हानि कारयेत् ॥ २४९ ॥

(४) **राघवानन्दः**। किंच प्रयत्नतोप्युद्धरणासमर्थानि स्थायीनि गूढान्यपि कुर्युरि-त्याह उपेति। उपच्छन्नानि गूढान्यपि कुर्युरिति ॥ २४९ ॥

(५) **नन्दनः**। लिङ्गानि चिन्हकरणे प्रयोजनमुत्तरार्द्धेनोच्यते विपर्ययविसंवादं वीक्ष्य विगणय्य तत्परिहारार्थे कारयेदिति ॥ २४९ ॥

(६) **रामचन्द्रः**। उपच्छन्नानि मृत्कूटवेष्टितानि लोके नित्यं विपर्ययं अन्यत्वं वीक्ष्य सीमालिङ्गानि कारयेत् ॥ २४९ ॥

(७) **मणिरामः** उपच्छन्नानि गुप्तानि। अन्यानि वक्ष्यमाणानि विपर्ययं भ्रमं सीमासंदेहं वीक्ष्य सीमालिंगानि कारयेत् ॥ २४९ ॥

(८) **गोविन्दराजः**। उपच्छन्नानीति। सीमापरिज्ञाने सर्वदा लोके जनानां भ्रान्ति द्रष्ट्वा अदृष्टानि गुहयानि वक्ष्यमाणानि सीमाचिन्हानि कारयेत् ॥ २४९ ॥

**तडागान्युदपानानि वाप्यः प्रस्रवणानि च ॥**
**सीमासन्धिषु कार्याणि देवतायतनानि च ॥ २५० ॥**

(१) **मेधातिथिः**। महांभांसि **तडागानि : वाप्यः** पुष्करिण्यः। **उदपानानि** कूप-प्रभृतीनि। **प्रस्रवणान्यु**दकस्यन्दा ईषत्स्रवदुदका भूप्रदेशाः। **देवतायतनानि** यक्षगृहा-दीनि। एतानि प्रकाशानि। न ह्येतानि स्वल्पेनायासेन नाशयितुं शक्यन्ते। नाश्यमानेषु च महान्प्रत्यवायो भवति। सर्वस्य चोदकार्थिनो देवतादर्शनार्थिनश्च तत्र संनिधानात्सुज्ञातश्च साक्षिणां सीमासन्धिर्भवति ॥ २५० ॥

(२) **सर्वज्ञनारायणः**। कपालिकाघटादिकर्परान्। शर्करागङ्गेष्टकाः ॥ २५० ॥

(३) **कुल्लूकः**। प्रस्तरास्थिगोवालतुषभस्मकर्पटिकाशुष्कगोमयपक्वेष्टकाऽङ्गारपाषाण-कर्परसिकता अन्यान्यप्येवंप्रकाराणि कालाञ्जनकार्पासाऽस्थिप्रभृतीनि यानि चिरकालेनापि भूमिरात्मसान्न करोति तानि ग्रामयोः संधिषु सीमायां प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेदिति बृहस्पतिवचनात्। स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा प्रच्छन्नानि भूमौनिखाय धारयेत् ॥ २५० ॥ २५१ ॥

(४) **राघवानन्दः**। उपच्छन्नानीत्यस्य विवरणं अश्मनइतिद्वाभ्याम्। करीषं शुष्कगोमयम्। शर्कराः पाषाणकणिकाः ॥ २५० ॥

(५) **नन्दनः**। तान्येवच्छिन्नानि चिन्हान्याह अश्मानोस्थीनीति ॥ २५० ॥

(७) **मणिरामः**। अन्यान्येवोक्तानि सीमालिंगान्याह अश्मन इति ॥ २५० ॥

(८) **गोविन्दराजः**। अश्मन इति। यानीति। पाषाणास्थिगोवालतुषभस्मखर्प-रिका शुष्कगोमयपक्वेष्टकाङ्गार–दृषत्कणिका सिकता अन्यान्यप्येवंविधानि खदिर-सारिका कालाञ्जनादीन् तानि ग्रामसंधिषु प्रच्छन्नानि स्थापयेत् ॥ २५० ॥ २५१ ॥

**यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ॥**
**तानि संधिषु सीमाया अप्रकाशानि कारयेत् ॥ २५१ ॥**

(१) **मेधातिथिः**। गुल्मादीनामुपदेशः प्रदर्शनार्थो न परिसंख्यार्थः खदिरसारकाला-ञ्जनाद्यानि शर्करा हि गुल्मादिकैवंप्रकारता अत आह कालाद्भूमिर्न भक्षयेत् भूमेर्भक्षण-मुपमया स्वरूपोपादानं यथा भक्षितंभेदेन नोपलभ्यते तद्वद्भूमिसादादपत्रमिव तादृशं कुर्यात् ॥ २५१ ॥

(४) **राघवानन्दः**। सर्वत्रहेतुः कालादित्यादिः ॥ २५१ ॥

(६) **रामचन्द्रः**। एवं यानि प्रकाराणि भूमिर्नकालान्तरे भक्षयेत् तानि सीमाया-सन्धिषु अप्रकाशानि कारयेत् ॥ २५१ ॥

(७) **मणिरामः**। न भक्षयेत् आत्मसान्न कुर्यात् ॥ २५१ ॥

(९) **भारुचिः**। षट् श्लोकाः सीमासेतुप्रकारदर्शनार्थाः ॥ २५१ ॥

**एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ॥**
**पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥ २५२ ॥**

(१) **मेधातिथिः**। उभयोर्ग्रामयोः शून्यत्वे **लिङ्गैर्निर्णयः**। वसतोः **पूर्वभुक्त्या** सततमविच्छिन्नयाऽस्मर्यमाणावधिकया—न हि त्रिपुरुषभोगेन। स ह्यत्र प्रतिषिद्धप्रामाण्य "आधिः सीमा" इत्यत्र (८/४९)। संभवति हि तत्रोपेक्षा बहुसाधारण्यात्सीमायाः। ये तु तत्र सीमशब्दं न पठन्ति तेषां भुक्तेः सिद्धमेव प्रामाण्यम्। लिङ्गानां प्रामाण्यस्योक्त-त्वात्प्रमाणान्तरनिवृत्तिराशङ्क्येतेति पुनरुच्यते।

"कोऽयम**ुदकागमः** प्रामाण्येनोच्यते"।

यथाऽन्यानि लिङ्गानि नवसंनिवेशे क्रियन्ते तद्वदेवोदकप्रवाहोऽपि कर्तव्यः। अथवा ययोर्ग्रामयोः प्रदेशान्तरे स एवोदकागमो विभागहेतुः प्रदेशान्तरे च विप्रतिपत्तिस्तत्र स एव प्रमाणम्। अथवा महाग्रामविषयमेतत्। नद्या अपर एको वा वार एकग्रामस्तत्र न पारवारिणो वक्तव्यं 'अस्मदीया भूमिरत्रापि विद्यत' इति। यदि वा कुतश्चिद् ग्रामात्तादृशेन प्रवाहेणावच्छिन्नापि काचिद् भूस्तथापि स एव विभागहेतुः—स्वल्पेऽपहारे ॥ २५२ ॥

(२) **सर्वज्ञनारायणः**। उदकस्यागमेन यत्र ग्रामद्वयोदकमूर्छति तेनेत्यर्थः ॥ २५२ ॥

(३) **कुल्लूकः**। विवदमानयोर्ग्रामयोः प्रागुक्तैरेतैरुक्तचिन्है राजा सीमामुन्नयेत् वदतोः पुनरविच्छिन्नया भुक्त्या सीमानिर्णयोनतु त्रिपुरुषादिकतया तस्याधिः सीमेति पर्युदस्त-त्वात्। ग्रामद्वयसंधिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमां निश्चिनुयात् ॥ २५२ ॥

(४) **राघवानन्दः**। सीमानिर्णयः प्रायशोराजकृत्यइत्याह एतैरिति। पूर्वभुक्तया-ऽनवच्छिन्नभुक्तया। उदकस्यागमने न ग्रामद्वयसंधिस्थनद्यादिप्रवाहेण ॥ २५२ ॥

(५) **नन्दनः** । एतैरुक्तैर्लिङ्गाभावे पूर्वभुक्त्योदकस्यागमेनोदकस्यागमनमार्गेण ।। २५२ ।।

(६) **रामचन्द्रः** । एतैर्लिङ्गैः राजा सीमां नयेत् निर्द्धारयेत् च पुनः उदकस्यागमेन निम्नजलप्रवाहमार्गेण सीमा नेया ।। २५२ ।।

(७) **मणिरामः** । पूर्वभुक्त्या च अविछिन्नया भुक्त्या सीमा निर्णयः न तु त्रिपुरुषाधिकतयादिकतया । तस्याधिः सीमेति पूर्वं पर्युदस्तत्वात् ।। २५२ ।।२५३ ।।

(८) **गोविन्दराजः** । **एतैरिति** । विवदमानयोर्ग्रामयोः शून्ययोरशून्ययोर्वा एतैरुक्तैश्चिन्हैर्नृपः सीमां निश्चिनुयात् । अशून्यत्वे पुनरपि पूर्वभुक्त्या च शून्यत्वे आधिः सीमेत्युक्तत्वादुदकप्रवाहे चानन्यकारणकेन ग्रामयोर्यत्संनिवेशकालवृत्तेन शून्यता वसतेः ।। २५२ ।।

(९) **भारुचिः** । यत्र निबद्धानि लिङ्गान्युप ······ न चान्यतरस्य शून्यता स्मर्यते तत्र पूर्वभुक्तिः प्रमाणम् । अन्यतरशून्यत्वे तु 'न भोगेन प्रणश्यती'ति पूर्वभुक्तिर्नाश्रीयते । विद्यते हि भोगस्य निमित्तम् । ······ द्वयोः शून्ययोः स्रो ······ स्रवाच्छेदः क्रियते । किमत्र लिङ्गकरणेन स्रोत एव हि नित्यमभिप्रवृत्तं सीमास्थापकं भविष्यति । नहि पूर्वभुक्तौ सत्याम् उदकागमो निर्हेतुको विकल्पेन वा बाधकत्वेन वा अशक्य आश्रयितुम् । तस्माच्छून्यविषय एव सुखप्रतिपत्त्यर्थं आयत्युपेतयै(त्य ? त)देकागमः कल्प्यते । अथवा महास्रोतोविषय एव द्रष्टव्यः । स्रोतांसि हि महान्ति कदाचित् किञ्चित्कूलमतिक्रम्य प्रवर्तन्ते । तत्र पूर्वभुक्तिमतीत्यापि स्रोत एव निर्णयाय स्यादिति ।। २५२ ।।

**यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।।**
**साक्षिप्रत्यय एव स्यात्सीमावादविनिश्चयः ।।२५३ ।।**

(१) **मेधातिथिः** । "कथं पुनर्लिङ्गेषु सत्सु संशयः" ।

यानि तावत्प्रच्छन्नानि तानि यदि केनचित्कथंचिदगम्य प्रच्छन्नमन्यत्र नीयेरन्नैव निश्चयः स्यात् । येऽपि प्रकाशा न्यग्रोधादयस्तेऽपि न सीमायामेव रोहन्त्यन्यत्रापि जायन्ते ततः संदेह आभासत्वात् । यत्र पुनरियं संभावना नास्ति तत्र प्रमाणमेव लिङ्गानि ।

**साक्षिप्रत्ययः** साक्षितुहेकः । साक्षिणः प्रत्ययो यत्रेति । **विनिश्चयः** तत्त्वाधिगमः । संशयितलिङ्गे अलिङ्गे वा सीमाविवादे साक्षिहेतुको निर्णय इति तात्पर्यम् ।। २५३ ।।

(२) **सर्वज्ञनारायणः** । लिङ्गानां लिङ्गतयोक्तानां वृक्षादीनां संशयएव वृक्षाद्यन्तरदर्शनादिना । सक्षिप्रत्ययः साक्षिकारणकः ।। २५३ ।।

(३) **कुल्लूकः** । यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेऽपि प्रच्छन्नांगारतुषादिकुम्भा अमी स्थानान्तरं नीत्वा निखातानायं सीमा तरुर्न्यग्रोधः स नष्ट इत्यादि समस्त एव यदि संदेहः स्यात्तदा साक्षिप्रमाण एव सीमाविवादनिश्चयोभवेत् ।। २५३ ।।

(४) **राघवानन्दः** । एवंकृतेपि संशये सति विधानान्तरमाह यदीति । लिङ्गानां वृक्षादीनां आधुनिका एते स्थानभ्रष्टाश्चेतिसंशये साक्षिप्रत्ययः साक्षिप्रमाणकः सीमावाद निर्णयः सीम्नि योवादो विप्रतिपत्तिः तस्य निर्णयो यस्मात् ।। २५३ ।।

(५) **नन्दनः**। लिङ्गानांवृक्षाद्युदकागमान्तानांसाक्षिप्रत्ययः साक्षिहेतुकः ॥ २५३ ॥

(८) **गोविन्दराजः**। यदीति। लिङ्गदर्शनेऽपि ईषदुभयत्र सीमां प्रति संशय एव भवेत् तदा साक्षिप्रत्ययः सीमाविवादनिर्णयः स्यात् ॥ २५३ ॥

(९) **भारुचिः**। यतश्चिल्लिङ्गोत्पत्तावुभयथा लिङ्गानुस्मृतौ च साक्षिप्रत्ययः ॥ २५३ ॥

**ग्रामेयककुलानां च समक्षं सीम्नि साक्षिणः ॥**
**प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥ २५४ ॥**

(१) **मेधातिथिः**। यद्यप्यसंख्यातपुरुषको ग्रामस्तथापि द्वौ विवादिनौ द्वयोर्ग्रामयोर्भवतस्तयोः समक्षमन्येषां च **ग्रामेयककुलानां च** ग्रामीणपुरुषसमूहानां **समक्षं सीम्नि साक्षिणः प्रष्टव्याः**। साक्षिप्रश्नकाले सर्वैर्ग्रामीणैर्दत्तव्यवहारकैरपि संनिहितैर्भवितव्यम्—नार्थिप्रत्यर्थिनोरन्यतरो वक्तुं लभते—'आवयोर्विशिष्टार्थविवादे किमेते संनिधीयन्ते।' अथवा येऽन्ये सामन्तेभ्यो ग्रामेभ्यः केचिद्वृद्धतमाः साक्ष्ये समुद्दिष्टास्तद्ग्रामीणैरन्यैः संनिहितैर्भवितव्यम्। यतस्तैर्वृद्धेभ्यः श्रुतं भवति तत्समक्षं पृच्छ्यमाना न विपर्यन्ति वृद्धाः।

**सीमालिङ्गानि**। यत्र लिङ्गान्युभयथा तत्र वृद्धेभ्यो निश्चयः। असत्सु लिङ्गेषु सीम्न्येव साक्ष्यं पृच्छ्यते—काऽत्र सीमेति ॥ २५४ ॥

(२) **सर्वज्ञनारायणः**। ग्रामेयककुलानां ग्रामीणसमूहानां। विरुद्धानेकसीमलिङ्गदर्शनेन सीमलिङ्गानि प्रष्टव्याः कान्यत्र सीमालिङ्गानीति। विवादिनोः समक्षमित्यन्वयः ॥ २५४ ॥

(३) **कुल्लूकः**। ग्रामिकजनसमूहानां ग्रामद्वयस्थनियुक्तयोर्वादिप्रतिवादिनोश्च समक्षं सीमाविषये सीमालिङ्गसंदेहे लिङ्गानि साक्षिणः प्रष्टव्याः ॥ २५४ ॥

(४) **राघवानन्दः**। साक्षिप्रश्नोचितदेशमाह ग्रामेति। ग्रामेयककुलानां ग्रामीणजनसमूहानां कुलानां विप्राणां चेति वा तयोः सीमद्वयसंबन्धिनोः समक्षं प्रष्टव्या इत्यन्वयः ॥ २५४ ॥

(५) **नन्दनः**। ग्रामीयकुलानां ग्रामवासिनांकुलानां तयोर्विवादिनोस्समक्षम्। ॥ २५४ ॥

(७) **मणिरामः**। ग्रामीयककुलानां ग्रामवासिजनसमूहानां ॥ २५४ ॥

(८) **गोविन्दराजः**। ग्रामेयककुलानामिति। ग्रामजनसमूहानां ग्रामेण नियुक्तयोश्च विवादिनोः प्रत्यक्षसीमाचिन्हानि साक्षिणः प्रष्टव्याः ॥ २५४ ॥

(९) **भारुचिः**। प्रश्नविधिः ॥ २५४ ॥

**ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् ॥
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥ २५५ ॥**

(१) **मेधातिथिः**। ते साक्षिणो **यथा** यादृशं **निश्चयं ब्रूयुः**। **समस्ताः** सर्व एव। न पुनर्वाक्यभेदोक्तौ न्यायः "द्वैधे च बहूनामिति"। **निबन्धीयात्** पत्रके लिखेत्—साक्षिणश्च नाम—विभागेन ॥ २५५ ॥

(२) **सर्वज्ञनारायणः**। समस्ता नतु व्यस्ताः। तांश्च निबन्धीयादेतत्साक्षिकैषा सीमेति ॥ २५५ ॥

(३) **कुल्लूकः**। ते पृष्टाः साक्षिणः समस्ता न द्वैधेन सीमाविषयेण येन प्रकारेण निश्चयंब्रूयुस्तेन प्रकारेणाविस्मरणार्थं पत्रे सीमां लिखेत् तांश्च सर्वानेव साक्षिणो नाम-विभागतो लिखेत् ॥ २५५ ॥

(४) **राघवानन्दः**। साक्षिप्रश्नानन्तरं पुनः सीमाः कार्या इत्याह त इति। समस्ता मिलिताः सर्वैकमत्येनेति यावत्। तथैव सीमा ताम्रपट्टेषु लेख्येत्याह। निबन्धीयात् नामतः साक्षिणांनामभिःसह ॥ २५५ ॥

(५) **नन्दनः**। निबन्धीयाच्छिलादिषु लिखेदमुनैवमुक्तममुनैवमुक्तमिति। सर्वां-स्तांश्च नामतोनिबन्धीयात् ॥ २५५ ॥

(६) **रामचन्द्रः**। नामतः नामग्रहणात्। समन्ताद्भवाः सामन्ताः ॥ २५५ ॥

(७) **मणिरामः**। निबन्धीयात्–विस्मरणं मामूदिति सीमां साक्षिणोपि नामतः। एतेषां समक्षमेतत्पर्यंतमियं सीमाकृतेति रूपेण पत्रे लिखेत् ॥ २५५ ॥

(८) **गोविन्दराजः**। ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चितमिति। ते साक्षिणः पृष्टाः सन्तो येन प्रकारेण समस्तानद्वैधं सीमाविषयं निश्चितं ब्रूयुः तेन प्रकारेण स्मरणार्थं पत्रके सीमां लेख्य तांश्च सर्वानेव साक्षिणो नामविभागतो लिखेत् ॥ २५५ ॥

(९) **भारुचिः**। निबन्धनं लेख्यमपि स्मरणार्थं तल्लिखेत् ॥ २५५ ॥

**शिरोभिस्ते गृहीत्वा वा स्रग्विणा रक्तवाससः ॥
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समंजसम् ॥ २५६ ॥**

(१) **मेधातिथिः**। **मूर्ध्नोर्वी** पृथ्वीं मृल्लोष्टकान्गृहीत्वा साक्षिणः **स्रग्विणो** यथा-संभवं माल्यधरा रक्तवर्णकुसुमधरा **रक्तवाससो** लोहिताच्छादनाः। यद्यपि शुक्लस्य वर्णान्तरापादनेऽपि रञ्जिर्वर्तते भूयांस्तु लोहिते प्रयोगो रक्तो गौर्लोहित इति। भयसञ्जन-नार्थं चैतत्। लोहितवाससश्च शुद्धा भवन्ति। 'यदस्माकं सुकृतं किंचिदर्जितमस्ति तन्निष्फल-मस्त्विति' वाच्यंते। **स्वैः स्वैरिति** वीप्सया विशेषनामभिः सुकृतं कथयेयुः—कस्यादानं

तीर्थस्नानं चेत्यादि । **समंजसं** क्रियाविशेषणम् । सत्यादनपेतऋजुर्धार्मिको यो मार्गस्तेन नयेयुः । समंजसमृजु स्पष्टमित्येकोऽर्थः । सत्यव्यवहारश्च स्पष्ट इत्युक्तं **समंजसमिति** ।। २५६ ।।

(२) **सर्वज्ञनारायणः** । उर्वी मृत्तिकाखण्डम् । स्रग्विणो रक्तस्रजः । एतच्च वास्तुपुरुषरूपमिति तद्रूपधारिभिः सीमानयनमुक्तम् । समंजसं यथार्थम् ।। २५६ ।।

(३) **कुल्लूकः** । ते साक्षिणइति सामान्यश्रवणेऽपि रक्तस्रग्वाससः सीमांनयेयुरिति याज्ञवल्क्यवचनाद्रक्तपुष्पमाला धारिणो लोहितवाससो मस्तके मृल्लोष्ठानि गृहीत्वा यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तः तां सीमां यथाशक्ति निर्णयेषुः ।। २५६ ।।

(४) **राघवानन्दः** । साक्ष्यदानप्रकारमाह शिरोभिरिति । शिरोभिर्भूलोष्टादिति गृहीत्वा स्रग्विणः रक्तपुष्पस्रग्विणः रक्तवसनाः सीमां नयेयुः क्षितिधारिण इतियाज्ञवल्क्योक्तेः । सुकृतैः यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवंप्रकारैरिति केचित् । वस्तुतस्तु । सत्येन शापयेद्विजं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकै रित्यत्रोक्तः अन्यथा स्वैस्वैरित्यनुपपत्तिः । समञ्जसं सत्यम् ।। २५६ ।।

(५) **नन्दनः** । उर्वी मृदम् ।। २५६ ।।

(६) **रामचन्द्रः** । स्वैः स्वैः शपथैः । सत्येन शापयेत् विप्रंक्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः । ते शिरोभिः ऊर्वीं गृहीत्वा मूर्धारोपितक्षितिखण्डाः स्रग्विणस्ते समंजसं यथार्थं नयेयुः सीमां प्रापयेयुः ।। २५६ ।।

(७) **मणिरामः** । उर्वी भूल्लोष्टं । स्वैसुकृतैः यदस्माकं सुकृतं तन्निष्फलं स्यादिति रूपैः शापिताः शपथं कारिताः संतः समंजसं यथाशक्ति नयेयुः निर्णयेयुः ।। २५६ ।। २५७ ।।

(८) **गोविन्दराजः** । शिरोभिरिति । ते साक्षिणः कृतमाल्यरक्तवाससो मूर्धनि मृल्लोष्ठं गृहीत्वा यदस्माकं सुकृतं तन्निष्फलं स्यादित्येवमादिभिः सुकृतैः शापिताः समस्तां सीमां सत्यादनपेतां कृत्वा निश्चिनुयुः ।। २५६ ।।

(९) **भारुचिः** । नयनविधिः ।। २५६ ।।

**यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।।**
**विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम् ।। २५७ ।।**

(१) **मेधातिथिः** । प्रमाणान्तरलिङ्गेभ्योऽन्यथासंभवद्भ्यः प्रत्ययितरपुरुषेभ्यो मिथ्यात्वेऽवधारिते—प्रत्येकं द्विशतो दण्डः । एकैकस्य साक्षित्वात्साक्षिणां च दण्डचत्वात् । न हि व्यासज्य वदन्ति साक्ष्यम् । सत्यप्रधानाः साक्षिणः **सत्यसाक्षिणः** । **पूयन्ते** अनृताभिधानेन पापेन न संबध्यन्त इति । **यथोक्तेन** याथातथ्येन । न हि शब्दात्मकस्य वचनस्यात्रावसरः । प्रमाणान्तरसंवादमात्रमनेन लक्ष्यते । अथवा यथाशास्त्रमुक्तेन सत्येनेति यावत् । शास्त्रे हि सत्यं वक्तव्यमित्येवमुक्तमतो यथोक्तेन सत्येनेत्युक्तं भवति ।। २५७ ।।

(२) **सर्वज्ञनारायणः** । विपरीतं नयन्तः पश्चाल्लिङ्गान्तरेण सप्ताहान्तर्बन्धुमरणादिना च तद्विपर्ययनिश्चये द्विशतं पणान् प्रत्येकम् ।। २५७ ।।

(३) **कुल्लूकः** । ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन विधानेन निर्णयस्था निष्पापाभवन्ति, अतथ्येन तु निश्चिन्वन्तः प्रत्येकंपणशतद्वयंदण्डंदाप्याभवेयुः ।। २५७ ।।

(४) **राघवानन्दः** । तत्रैवार्थवादं प्रदर्शयन्विपरीते दण्डमाह यथेति । तान्त्रिकं पणशतद्वयं प्रत्येकमितिशेषः ।। २५७ ।।

(५) **नन्दनः** । यथोक्तेन मार्गेण । सेतुंसीमांनयन्तः स्थापयन्तस्त्रिपक्षादर्वाग्रोगाद्यभावे पूयन्ते । विपरीतंनयन्तस्त्रिपक्षादर्वाग्रोगादिदर्शनात् ।। २५७ ।।

(६) **रामचन्द्रः** । विपरीतं नयन्तः अनयेन प्रापयन्तः द्विशतं दमं दण्डं दाप्याःस्युः ।। २५७ ।।

(८) **गोविन्दराजः** । यथोक्तेनेति । ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन रूपेण निश्चयन्तः सत्याभिधाननियमाः सर्वे पवित्रा भवन्ति । असत्यं पुनर्निश्चयन्तः प्रत्येकं पणशतद्वयं दण्डं दाप्याः स्युः ।। २५७ ।।

(९) **भारुचिः** । स्तुतिः प्ररोचनार्था दण्डश्च यथोक्तः । विपरीतनयनं त्वन्येन व्यवहारान्तरेण ज्ञातव्यम् ।। २५७ ।।

**साक्ष्यभावे तु चत्वारो ग्रामसीमान्तवासिनः ।।**
**सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ।। २५८ ।।**

(१) **मेधातिथिः** । ग्रामसामन्ताः **सीमान्तवासिनः** प्रष्टव्याः । तेषां वचने निश्चयं कुर्यात् । **प्रयताः**—साक्षिधर्मेण शास्त्रान्तरेण । **राजसंनिधाविति** श्लोकपूरणम् । न तु सामन्ताः स्वेच्छया राजवन्निश्चिन्वन्ति ।। २५८ ।।

(२) **सर्वज्ञनारायणः** । सीमान्तवासिनो मध्य भूत विवाद विषय ग्रामयोः पर्यन्तेषु निरन्तरवासिनः । प्रयाता नियमिताः । साक्ष्युक्त प्रकारेणैव ।। २५८ ।।

(३) **कुल्लूकः** । ग्रामद्वयं संबन्धिसीमाविवादसाक्ष्यभावे चतुर्दिशं सीमान्तभवाः सामन्तास्तद्वासिनश्चत्वारोग्रामवासिनः साक्षिधर्मेण राजसमक्षं सीमानिर्णयं कुर्युः ।। २५८ ।।

(४) **राघवानन्दः** । साक्ष्यभावे प्रकारान्तरमाह साक्ष्यभावइति ग्रामाः ग्रामस्थाः सामन्तवासिनः समन्त एव सामन्तः तत्र वासिनश्चतुर्दिशंवर्तमानाः ।। २५८ ।।

(५) **नन्दनः** । समन्ताद्भवोदेवः सामन्तः ।। २५८ ।।

(७) **मणिरामः** । सामंतवासिनः चतुर्दिशं समंततो भवाः । ग्राम्याः ग्रामवासिनः ।। २५८ ।।

(८) **गोविन्दराजः** । साक्ष्यभावे तु चत्वारो ग्राम्याः सीमान्तवासिन इति । तद्ग्रामद्वयस्य विवादीभूतस्य साक्षिणोऽभावे चतसृषु दिक्षु सीमान्तवासिनः चत्वारो ग्राम्याः साक्षिधर्मेण राजसमक्षं सीमानिर्णयं कुर्युः ।। २५८ ।।

(९) भारुचिः। पूर्वेऽनुभाविनः। इमे तु सामन्ताः कर्णपरम्परया श्रुतवन्तः ।। २५८ ।।

**सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम् ।।**
**इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ।। २५९ ।।**

(१) **मेधातिथिः।** **सामन्तानां मौलानामिति** विशेषणविशेष्यभावः स्तुत्यर्थः। ग्रामप्रतिष्ठानकाले भवा उत्पत्तिसहभुवो **मौला** उच्यन्ते। ते च सामन्ता नित्याः, नित्यसंनिहितत्वात्। तेषामप्यभावः कथंचिदुच्छन्नत्वात्। तदा का गतिः। तदे**मानपि** वक्ष्यमाणान् पृच्छेत्।

अथवा **मौला** अनुभाविनः—**सामन्ता** व्याख्याताः—व्यवहर्तव्याः। मौलानां पूर्वोक्तानां अभावे सामन्ताः प्रमाणम्। तदभावे **वनगोचरान्विनियुञ्जीत** निपुणतः पृच्छेत् ।। २५९ ।।

(२) **सर्वज्ञनारायणः।** सामान्तानामभावे तथा मौलानां मूलभूतानां साक्षिणामभावे। इमान् वक्ष्यमाणान्। एतच्च वनसमीपग्रामविषयम् ।। २५९ ।।

(३) **कुल्लूकः।** साक्षिधर्मेण राजसमक्षमनुभवेन निर्णयमकुर्वतां ग्रामवासिनां ग्रामनिर्माणकालादारभ्य मौलानां पुरुषक्रमेण तद्ग्रामस्थानां सीमासाक्षिणामभाव इमान्वक्ष्यमाणान्सन्निहितवनचारिणः पृच्छेत् ।। २५९ ।।

(४) **राघवानन्दः।** पूर्वोक्तानामभावे साक्ष्यन्तरमाह सामन्तानामिति। मौलानां ग्रामारम्भप्रभृतिपुत्रपौत्रतया तत्रैव कृतवसतीनां सामन्तानां मौलेत्यादिविशेषणद्वयम्। इमान्वक्ष्यमाणाम्। जलारण्यवासिनः ।। २५९ ।।

(५) **नन्दनः।** मौलानां प्रोक्तानां तदानीन्तनानां वा च्छेदरहितानामिमान्वक्ष्यमाणाननुयुञ्जीत पृच्छेत् ।। २५९ ।।

(६) **रामचन्द्रः।** सामन्तानां अभावे तु मौलाःमूले भवा मौलाः तेषां सीम्नि साक्षिणांअभावे इमान् वनगोचरान् अपि साक्ष्येनियुञ्जीत पृच्छेत् ।। २५९ ।।

(७) **मणिरामः।** मौलानां ग्रामनिर्माणकालादारभ्य पुरुषक्रमेण तद्ग्रामस्थानां इमान् वक्ष्यमाणान् ।। २५९ ।।

(८) **गोविन्दराजः।** सामन्तानामभावे तु मौलानां सीमसाक्षिणां। इतरानपि युञ्जीत पुरुषान्वनगोचरान्। ग्रामसंनिवेशकालादारभ्य तद् ग्रामाभिजनानां सीमान्तवासिनां सीमासाक्षिणामभावे इतरानपि वक्ष्यमाणान् वनमभ्यवहारिणः पुरुषान् पृच्छेत् ।। २५९ ।।

(९) **भारुचिः।** तदभावे तु वनगोचराः प्रमाणं स्युः ।। २५९ ।।

**व्याधांश्छाकुनिकान्गोपान्कैवर्तान्मूलखानकान् ।।**
**व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः ।। २६० ।।**

(१) **मेधातिथिः।** एते वनानि भ्राम्यन्ति। ग्राममध्येन गच्छन्तः कदाचित्तद्वृत्ते

विद्युः। ते हि तेन पथा गच्छन्तो विवादास्पदं प्रदेशं पूर्वं कांश्चित्पुरुषान्कृषतो दृष्ट्वा पृच्छेयुः 'कोऽयं ग्रामो यो भवद्भिः कृष्यत' इति। एवमादिना संभवति पूर्वानुभवः।

**व्याधा** मृगयाजीविनः। तेषामपि वनाद्भ्रष्टमृगमनुधावतां भवति ग्रामसंबन्धः। एवं **शाकुनिकाः** शकुनिबन्धजीविनः। तदन्वेषणे ये सर्वान्ग्रामानागोचरयन्ति। **गोपा** गवां तृणविशेषज्ञानाय तत्र तत्र परिभ्राम्यन्ति। **कैवर्ता** दाशास्तडागखननादिजीविनस्तत्र तत्र गच्छन्ति क्वास्माकीनं कर्मोपयुज्यते। **मूलखनका** मूलं वृक्षादेः खनयन्ति स्थूलकाशादेः। **व्यालग्रहाः** सर्पग्राहिणः—जीविकार्थे तेऽपि सर्पास्तं तं प्रदेशमन्विच्छन्ति। अतः तेषामपि पारिग्रामिकैर्बहुभिः संबन्धः। **उच्छवृत्तयोऽपि** दरिद्रा अनेकग्रामपर्यटनेन पात्रमात्रं निर्वर्तयन्ति। **अन्यांश्च** फलकुसुमेन्धनार्थिनः।। २६०।।

(२) **सर्वज्ञनारायणः।** व्याधान् मृगवेधिनः। शाकुनिकाः शकुनघातजीविनः। गोपान् गोपालान् प्रायो ये वनगता एव। मूलखानकान् मूलमुत्पाट्य विक्रीय जीवतः। उञ्छवृत्तीन् शिलोञ्छवृत्त्या वर्तमानान्द्विजान् तेषांप्रायः क्षेत्रवनगोचरत्वात्। अन्यांश्च शबरादीन्।। २६०।।

(३) **कुल्लूक।** लुब्धकान्पक्षिवधजीविनः गोपालान्मत्स्यजीविनोमूलोत्पाटनजीविनः सर्पग्राहिणः शिलोञ्छवृत्तीनन्यांश्च फलपुष्पेन्धनाद्यर्थे वनव्यवहारिणः पृच्छेत्। एतेहि स्वप्रयोजनार्थं तेन ग्रामेण सर्वदा वनंगच्छेयुस्तद्ग्राम सीमाभिज्ञाः संभवन्ति।। २६०।।

(४) **राघवानन्दः।** तानवाहे व्याधानिति। व्याधान् लुब्धकान्। मूलखानकानं सूरणादिमूलोत्पाटनेन जीविनः। व्यालग्राहान् सर्पान्वेषिणः। एतेहि मूलमृणालाद्यर्थं ग्रामाद्ग्रामं संचरन्तस्तद्ग्रामस्थैर्निवारिताः सीमां जानन्तीति भावः। अन्यान्वनचारिणः फलाद्यर्थमिति केचित्। वस्तुतस्तु वनमत्र जलं सीमावधितडागादि जलचारिणः शम्बूकजलपुष्पाद्यर्थम्।। २६०।।

(६) **रामचन्द्रः।** शाकुनिकान् पक्षिवधजीविनः। उच्छवृत्तीन् अन्यांश्च शबरादीन्।। २६०।।

(७) **मणिरामः।** कैवर्तान् मत्स्यजीवितः। मूलखानकात् मूलोत्पाटनजीवान्। व्यालग्राह्यान् सर्पग्राहिणः।। २६०।। २६१।।

(८) **गोविन्दराजः।** व्याधानिति। लुब्धकान् पक्षिवधजीविनो गोपालान् तडागादिखननवृत्तीन् वृक्षादिमूलोत्पादकान् सर्पग्राहिणो शिलोंछजीविनोऽन्यांश्च फलपुष्पेन्धनाद्यर्थं वमव्यवहारिणः पृच्छेदेतेहि कार्यार्थं ग्राममध्यं ते सकृद्वनं प्रजन्ति।। २६०।।

**ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्।।**
**तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः।। २६१।।**

(१) **मेधातिथिः।** **ते धर्मेण पृष्टा इति** योजना। सीमाश्च ताः सन्धयश्च **सीमासन्धयः।** ग्रामद्वयसंयोगः 'सन्धिः'। स च सीमैव। **लक्षणं** ज्ञापकम्।। २६१।।

(२) **सर्वज्ञनारायणः**। इदमेव लक्षणं युक्तं नेदमिति यथा ब्रूयुः ।। २६१ ।।

(३) **कुल्लूकः**। ते व्याधादयः पृष्टाः सीमारूपेषु ग्रामसंधिषु येन प्रकारेण चिह्नं- ब्रूयुस्तत्तेनैव प्रकारेण राजा द्वयोर्ग्रामयोः सीमां व्यवस्थापयेत् ।। २६१ ।।

(४) **राघवानन्दः**। उक्तार्थवादोयं त इति ।। २६१ ।।

(६) **रामचन्द्रः**। यद्वयोःमध्ये स्थापयेत् ।। २६१ ।।

(८) **गोविन्दराजः**। **त इति**। ते व्याधादयः पृष्टाः सन्तः सीमायाः संधिर्यथादेशं येन प्रकारेण ज्ञापकं ब्रूयुः तत्तेन रूपेण पक्षपातपरिहारेण राजा द्वयोर्ग्रामयोः मर्यादां स्थापयेत ।। २६१ ।।

(९) **भारुचिः**। उपसंहारार्थः श्लोकः ।। २६१ ।।

**क्षेत्रकूपतडागानामारामस्य गृहस्य च ।।**
**सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः ।। २६२ ।।**

(१) **मेधातिथिः**। **आराम** उद्यानभूमिः शाकवाटश्च । सामन्तप्रमाणकस्तत्र निश्चयः । व्याधादिनिवृत्त्यर्थमिदमुच्यते। **सीमासेतुः** सीमाबन्धः। सीमाविभावनार्थे य आबध्यते स्थाप्यते ।। २६२ ।।

(२) **सर्वज्ञनारायणः**। कूपस्य सीमाकूपस्य परितस्त्याज्यो यो देशस्तस्य सीमा। एवंतडागादौ। सामन्तप्रत्ययः सामन्ताः समन्तवासिनः तद्धेतुकः सीमानिर्णय इति शेषः। तथा सीमासु ये सेतवस्तेषामपि सीमानिर्णये कर्तव्ये ।। २६२ ।।

(३) **कुल्लूकः**। एकग्रामेऽपि क्षेत्रकूपतडागोद्यानगृहाणां सीमासेतुविवादे समस्त-देशवासिसाक्षिप्रमाणकएव। मर्यादा चिन्हनिश्चयो विज्ञेयो न व्याधादिप्रमाणकः ।। २६२ ।।

(४) **राघवानन्दः**। ग्रामसीमायामुक्तनिर्णयप्रकारमन्यत्रातिदिशति क्षेत्रेति। तडागा-द्युक्तलक्षणम्। आरामः उपवनम्। सामन्तप्रत्ययः समन्ततोवर्त्मप्रद(र्श)नेनाह-रन् पञ्चशतान् प्रतिदण्डयः स इत्यन्वय एवं मानानां ज्ञानपुरःसरं वाक्यमेव प्रमाणनित्यर्थः। न तु व्याधादीनां तत्र युक्तयन्तरापेक्षणात् ।। २६२ ।।

(५) **नन्दनः**। एवंग्रामयोः सीमाविनिर्णयमुक्त्वा क्षेत्रादीनामाह क्षेत्रकूपतटाना-मिति। सामन्ताः समन्ताद्वासिनः ।। २६२ ।।

(६) **रामचन्द्रः**। क्षेत्रादि सीमासेत्विति विनिश्चयः। सामन्तप्रत्ययो ज्ञेयः सामन्तादि-भिर्यदुक्तं तत्प्रायोज्ञेयः ।। २६२ ।।

(७) **मणिरामः**। क्षेत्रकूपादौ सीमासेतुविनिर्णयः मर्यादाचिह्ननिर्णयः। सामंत-प्रत्ययः समंतदेशबासि साक्षिप्रमाणक एव ज्ञेयः न तु व्याधादिप्रमाणक इत्यर्थः ।। २६२ ।।
।। २६३ ।।

(८) **गोविन्दराजः।** क्षेत्रकूपतडागानामिति। सामन्ता इति। सीमानिमित्तं विवदमानानां मनुष्याणां यदि सीमान्तेवासिनः मिथ्या ब्रूयुः तदा राज्ञा ते सर्वे प्रत्येकं मध्यमसाहसं दण्ड्याः। एवञ्च सामन्तरूपाणां द्वे शते दमः पूर्वोक्तो विज्ञेयः ॥ २६२ ॥ २६३ ॥

(९) **भारुचिः।** सीम्नि गुरुत्वादर्थस्य कदाचिद्दशवर्षाणि नाभियोगं कुर्युः। अतस्तत्र 'न भोगेन प्रणश्यती'त्युक्तम्। क्षेत्रादिषु त्यत्वदर्थस्य यत्किञ्चिद्दशवर्षाणि त्ययमेव पक्ष आश्रीयते। अत एषां सामन्तप्रत्ययो निर्णय उच्यते। यथैवान्येषां द्रव्याणां साक्षिप्रत्ययो निर्णयः एवममीषामपीति ॥ २६२ ॥

**सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम् ॥**
**सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ॥ २६३ ॥**

(१) **मेधातिथिः।** पूर्वेभ्यः **सामन्तानामधिको** दण्डः। **पृथक्पृथगित्यनुवादः।** उक्तत्वान्न्यायस्य। क्षेत्रादिप्रातिवेश्या अवश्यं ज्ञातारो भवन्ति। प्रत्यासन्नतरतः एषां दण्डमहत्त्वम्। सामन्तानां तु परकीयसीमावेदनं नावश्यमिति द्विशतो दमोऽनुवर्त्यः। तेन ग्रामसीमायां द्रष्टॄणां सामन्तानां च द्विशतः।

ये तु सामन्तशब्दमाश्रित्य ग्रामक्षेत्रादिसीमयोः सामन्तत्वात्तुल्यदण्डत्वमाहुस्ते न्यायविरोधादुपेक्षणीयाः ॥ २६३ ॥

(२) **सर्वज्ञनारायणः।** सेतावित्युपलक्षणं क्षेत्रादावपि ॥ २६३ ॥

(३) **कुल्लूकः।** सीमाचिन्हनिमित्तं विवदमानानां मनुष्याणां यदि सामन्तादेशवासिनोर्मिथ्याब्रूयुस्तदा ते सर्वे प्रत्येकंराज्ञा मध्यमसाहसं दण्डनीयाः एवं चासामन्तरूपाणां पूर्वोक्तद्विशतोदमोज्ञेयः ॥ २६३ ॥

(४) **राघवानन्दः।** तेषांमिथ्याभाषित्वे दण्डमाह सामन्ताइति। मध्यमसाहसं पणानां पञ्चशतानि। सेतावित्युपलक्षणं कूपादिचतुर्णाम्। सेतुर्मर्यादा सीमेतिपर्यायाः ॥ २६३ ॥

(५) **नन्दनः।** सेतौ सीमाविषये ॥ २६३ ॥

(६) **रामचन्द्रः।** अन्यथा ब्रयुःते सर्वे राज्ञा मध्यमसाहसं दण्ड्याः ॥ २६३ ॥

(९) **भारुचिः।** सीमासाक्षिणामयं विशेषदण्डः ॥ २६३ ॥

**गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ॥**
**शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥ २६४ ॥**

(१) **मेधातिथिः।** क्षेत्रादिप्रसङ्गादिदमुच्यते। भीग्रहणं निमित्तोपलक्षणार्थम्। अस्यैवैतन्निश्चितमित्येवं जानतो हरतः पञ्चशतो दण्डः। मध्यमसाहसे प्रकृते पञ्चशतग्रहणं निमित्तभेदे न्यूनाधिकदण्डार्थम्। पूर्वत्र वा संख्यानमविवक्षितं मन्यन्ते। व्यवहारं

लेखयामि' 'राज्ञा दण्डयामि' 'चौरैर्दोषयामीति' भयप्रदर्शनेन हरति। तस्यां दण्डो निमित्तान्तरानुकल्पः ॥ २६४॥

(२) **सर्वज्ञनारायणः।** भीषया भयोपदर्शनेन हरन् तत्सीमां लङ्घयन्। भीषयेति ज्ञानपूर्वकत्वोपलक्षणम् ॥ २६४॥

(३) **कुल्लूकः।** गृहतडागोद्यानक्षेत्राणामन्यतमं मारणं बन्धनादिभयकथनपूर्वमाक्रम्य हरणे पञ्चपणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरणाद् द्विशतो दमः ॥ २६४॥

(४) **राघवानन्दः।** गृहादीनां निर्णयप्रसंगेन तेषां हरणेपि दण्डमाह गृहमिति। भीषया भयप्रदर्शनेन। सचेद्विप्रःस्याद्दण्डार्हो न वधार्हः एतदर्थम्। उपधाभिस्तु यः कश्चित्परद्रव्यंहरेन्नर इत्यत्र वध उक्तोऽत्र दण्डविशेष इतिभेदः ॥ २६४॥

(६) **रामचन्द्रः।** गृहादिषु अन्यथा वदन् पञ्चशतानि दण्ड्यः ॥ २६४॥

(७) **मणिरामः।** भीषया मारणंबंधनादि भयकथनपूर्वमाक्रम्य हरन्। पंच पणशतानि दंडनीयः। अज्ञानात् हरणे द्विशतो दमः ॥ २६४॥

(८) **गोविन्दराजः।** गृहमिति। गृहतडागोद्यानानामन्यतममारणबन्धनभयकथनपूर्वकं हरन् पञ्चशतपणानि दण्डनीयः स्यादत्र भ्रान्त्या तु हरतो द्विशतोदण्ड्यः ॥ २६४॥

(९) **भारुचिः।** ज्ञानाज्ञानहरणेऽयं दण्डः ॥ २६४॥

**सीमायामविषह्यायां स्वयं राजैव धर्मवित् ॥**
**प्रदिशेद्ऽभूमिमेतेषामुपकारादिति स्थितिः ॥ २६५॥**

**[ध्वजिनी मत्सिनी चैव निधानी भयवर्जित।**
**राजशासननीता च सीमा पञ्चविधा स्मृताः ॥ १ ॥]‡**

(१) **मेधातिथिः।** **अविषह्या** निश्चेतुमशक्या—लिङ्गसाक्ष्यभावात्। **राजैव** स्वेच्छया **भूमिं दिशेद्दद्यात्**-'इयं' वो भूमिरियं व' इति। **धर्मवित्**-पक्षपातो नैव कस्यचित्कर्तव्य इति। एतदाह **उपकारात्** हेतोः। यया सीमया द्वावपि ग्रामौ समोपकारौ भवतः। तेन यदि न्यूनाऽपि कस्यचिद्भूमिः स्यात्क्षेत्रं चेत्सुगुणं बहूत्पत्तिकं तदपेक्षः प्रदेशः ल्यब्लोपे पञ्चमी—उपकारमपेक्ष्य।

अथवैकेषां **प्रदिशेत्**-परेषामनिश्चितामपहरेत्। यदि विवादिग्रामस्तां सीमां यावद्धकुं न शक्नुयादितरे च शक्तास्तदान्येभ्यः प्रदिशेत्। एवमात्मनो बहूनां च ग्रामीणानामुपकृतं भवति ॥ २६५॥

(२) **सर्वज्ञनारायणः।** अविषह्यायां सर्वथा निर्णेतुमशक्यायाम्। प्रदिशेत् भूमिं उपकारात् तया यस्योपकारातिशयस्तस्मै ग्रामाय दद्यादित्यर्थः ॥ सीमानिर्णयः ॥ २६५॥

(३) **कुल्लूकः।** लिङ्गसाक्ष्याद्यभावे सीमायां परिच्छेत्तुमशक्यायां राजैव धर्मज्ञः पक्षपातरहितोग्रामद्वयमध्यवर्तिनीं विवादविषयां भूमिं येषामेव ग्रामवासिनामुपकारातिशयो-भवति तद्व्यतिरेकेण च महाननिर्वाहस्तेषामेव दद्यादिति शास्त्रव्यवस्था ।। २६५ ।।

(४) **राघवानन्दः।** उक्तोपायैर्यदा सीमाया अपरिच्छेद्यकर्तुमन्यथाकर्तुमसर्थेन राज्ञैव तत्कर्तव्यं तस्य भूमित्वादित्याह सीमायामिति। अविषह्यायां विचारंसोढुमशक्यायाम्। तं धर्मं न विचालयेदित्युक्तेः। ननु स्वतन्त्रोराजा कथं प्रवर्तते तत्राह प्रदिशेदिति। विवाद-समाप्तेस्तेषांमहानुपकारःस्यात्। स्थितिः पुण्यं परोपकारेणेतिशास्त्रमर्यादा ।। २६५ ।।

(६) **रामचन्द्रः।** सीमायामविषह्यायां सर्वोपायैर्निश्चेतुमशक्यायां एतेषां स्वयं राजैव प्रदिशेत् निर्णयि प्रदद्यात् योगीश्वरः। राजा सीम्नःप्रवर्तिता ।। २६५ ।।

(७) **मणिरामः।** अविशक्यायां लिंगसाक्ष्यभावे परिछेत्तुमशक्यायां। उपकारात्–विवाद निवारणरूपात्। अन्यथा महाविवादेन परस्परमरणं स्यात् ।। २६५ ।। २६६ ।।

(८) **गोविन्दराजः।** सीमायामिति। सीमायां लिङ्गसाक्ष्याद्यभावात्परिच्छेत्तुम-शक्यायां राजा धर्मज्ञोऽपक्षपातेन ग्रामद्वयस्य मध्यवर्तिनीं भूमिं येषामेव ग्रामीणानां तया भूम्या उपकारो भवति तेषामेवेति मर्यादा ।। २६५ ।।

(९) **भारुचिः।** दूरत्वादशक्योपभोगायां राजा दृष्टोपकारग(न्ध ? न्धे)नैकत्र प्रयच्छेद् भूमिम्। न च राज्ञो ग्रहणे तत्र दोषः। एवमर्थश्चायमुपदेशः। अतोऽप्रदानेऽपि न दोषः ।। २६५ ।।

**एषोऽखिलेनाभिहितो धर्मः सीमाविनिर्णये ॥**
**अत ऊर्ध्वं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयम् ॥ २६६ ॥**

(१) **मेधातिथिः।** पूर्वोपसंहारोऽपरसंक्षेपोपन्यासः श्लोकार्थः। 'दण्डवाचिक' इत्युक्त्वा (६) क्रमभेदो लाघवाद्वाक्पारुष्यं स्यात्ततो दण्डव्यापारः। द्वन्द्वे चेतरेतरयोगा-द्व्यस्तक्रमसमासार्थप्रतिपत्तेरेकैकस्योभयार्थप्रतिपादनाद्दण्डशब्देन वागर्थोऽप्युपात्त इति कः क्रमभेदः। तथा च यथासंख्यसूत्रारंभो (पा. १/३/१०) महाभाष्यकारेण समर्थितः—एतदेव दर्शनमाश्रित्य संज्ञासमासनिर्देशादिति ।। २६६ ।।

(२) **सर्वज्ञनारायणः।** एष इति वाक्पारुष्यं पश्चादुक्तमपि लघुत्वादेवाभिधातुमत-ऊर्ध्वमिति ।। २६६ ।।

(३) **कुल्लूकः।** एष सीमानिश्चयो धर्मो निःशेषेणोक्तः अत ऊर्ध्वं वाक्पारुष्यं वक्ष्यामि दण्डपारुष्याद्वाक्पारुष्यप्रवृत्तेः पूर्वमभिधानं अनुक्रमश्रुत्यान्तु पारुष्ये दण्डवाचिक इतिदण्ड-शब्दस्याल्पस्वरत्वात्पूर्वनिर्देशः ।। २६६ ।।

(४) **राघवानन्दः।** सीमानिर्णयमुपसंहरन्पारुष्ये दण्डवाचिकइत्युक्तं तत्र वाक्पा-रुष्यनिर्णयं प्रतिजानीते एष इति ।। २६६ ।।

(५) **नन्दनः**। अथवाक्पारुष्यनिर्णयं प्रस्तौति एषोऽखिलेनेति। नचात्रोद्देशक्रमत्यागः शङ्क्यः दण्डवाचिके इत्यदण्डशब्दप्राथम्यस्याल्पाच्तरत्वप्रयुक्तपूर्वनिबन्धिनत्वेनार्थमस्याविवक्षितत्वादिति ॥ २६६ ॥

(६) **रामचन्द्रः**। एषसीमाविनिर्णयः धर्मः अखिलेन उपायेन अभिहितः उक्तः ॥ २६६ ॥

(८) **गोविन्दराजः**। एष इति। एषोऽनन्तरोक्तो धर्मादनपेतः सीमाविनिर्णयो निःशेषेणोक्तः। अनन्तरं परुषभाषण विषय निर्णयं प्रकर्षेण वक्ष्यामि दण्डपारुष्यतो वाक्पारुष्यस्य प्राथेणासहत्वम्। प्रथमं वाक्पारुष्यविचारोऽनुक्रमण्यां पुनः पारुष्ये दण्डः वाचिक इति वृत्तानुरोधाद्दण्डशब्दस्य पूर्वाभिधानम् ॥ २६६ ॥

(९) **भारुचिः**। उपसंहारोपन्यासार्थः श्लोकः। ननु चैवं क्रमभेदः। पारुष्ये दण्डवाचिके' इत्यभिधानात् व्यवहारास्पदानुक्रमण्यां छन्दोऽनुविधानान्न पूर्वं दण्डपारुष्यग्रहणम्। अयं त्वर्थः क्रममाश्रित्यात्र वाक्पारुष्यस्य पूर्वमुपन्यासः स च शब्दक्रमाद् गरीयान्। यतो नास्ति क्रमभेदः अल्पाच्परत्वादत्र पूर्वं ग्रहणं द्वे द्वे॥ २६६ ॥

**शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ॥**
**वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥ २६७ ॥**

(१) **मेधातिथिः**। परुषवचनमाक्रोशः। स च बहुधा नृशंसाश्लीलभाषणान्मर्मणि तोदः अभिशापः 'अकरणहन्ता वृषलो भूयाः'। असत उपन्यसनं "कन्या ते गर्भिणीति"। पातकोपपातकैर्याजनमिति। तत्र द्वयोर्ब्राह्मणक्रोशे क्षत्रियवैश्ययोरयं दण्डः। अन्यत्र "पतनीये कृते क्षेपे दण्डो मध्यमसाहसः" इत्यादि (याज्ञ. व्य २१०) स्मृत्यन्तरोक्तः। शूद्रस्य **वधः** ताडनजिह्वाच्छेदनमारणादिरूप आक्रोशभेदाद् वेदितव्यः ॥ २६७ ॥

(२) **सर्वज्ञनारायणः**। आक्रुश्य त्वं पापिष्ठोसीत्यादिना। अध्यर्धशतं सार्धशतमल्पाक्षेपे। द्वेवेत्यतिशयिते। एते सर्वे पणाः। वधस्ताडनम् ॥ २६७ ॥

(३) **कुल्लूकः**। द्विजस्य चौरेत्याक्षेपरूपं परुषमुक्त्वा क्षत्रियः पणशतं दण्डमर्हति। एवं सार्द्धशतं द्वे वा शते लाघवगौरवापेक्षया वैश्यः। शूद्रोप्येवं ब्राह्मणक्रोशे ताडनादिरूपं वधमर्हति॥ २६७ ॥

(४) **राघवानन्दः**। वाक्पारुष्यमते त्वनुवदंस्तदुचितदण्डमाह शतमिति द्वादशभिः। अध्यर्धशतं अधि अधिकमर्धं शतं यत्र तेन सार्धशतम्। द्वेवेतिगुणवद्ब्राह्मणापेक्षया। वधं ताडनादिरूपं हुंकाराद्यल्पाक्रोशे उत्तरत्र जिव्हाछेदस्य वक्ष्यमाणत्वात् ॥ २६७ ॥

(५) **नन्दनः**। द्वे शते वा गुणदोषापेक्षा विकल्पः ॥ २६७ ॥

(६) **रामचन्द्रः**। द्विजमाक्रुश्यवैश्यो अप्यर्धशतं द्वेवा। शूद्रस्तु वधं ताडनं अर्हति ॥ २६७ ॥

(७) **मणिरामः।** इदानीं वाक्पाठष्य निर्णयमाह शतमिति। ब्राह्मणं आक्रुश्य। त्वं चौर इत्यादि कठोरवचनमुक्त्वा क्षत्रियः पणशतं वैश्यः सार्द्धशतं द्विशतं च लाघव गौरवापेक्षया दंडमर्हति। शूद्रस्तु वधं ताडनरूपं अर्हति॥ २६७॥

(८) **गोविन्दराजः। शतमिति।** वादेष्विति वक्ष्यमाणत्वान्मातृभगिन्याद्यश्लील पतनीयवर्जं पुरुषं ब्राह्मणमाक्रुश्य पणशतं क्षत्रियो वैश्योऽध्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति। पुनराक्रोशविशेषापेक्षया ताडनजिह्वाकर्तनाद्यमर्हति॥ २६७॥

(९) **भारुचिः।** अवचनीयादाक्रोशादृते अन्यस्मिन्नाक्रोशे एते यथार्हं दण्डवि..... र्याः। यस्मा...ब्राह्मणम...क्रुश्य वैश्यस्य दण्डयुक्तः। ततोऽर्धं क्षत्रियमाक्रुश्य। वैश्यस्यान्यायादाप्नोति दण्डः। शूद्रस्य त्वेकजातिदण्डः। एकजातिद्विजातिरिति द्विजातिमात्रे .......॥ २६७॥

**पञ्चाशद्ब्राह्मणो दण्डचः क्षत्रियस्याभिमर्शने॥**
**वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः॥ २६८॥**

(१) **मेधातिथिः। अभिशंसनं** सर्वप्रकार आक्रोशः, पतनीयादन्यः—तत्र दण्डान्तरविधानात्। निमित्तसप्तमी चैषा। **वैश्य इति** विषयसप्तमी। ब्राह्मणस्याक्रोष्टुराक्रुश्यमानस्य च दण्ड उक्तः। क्षत्रियादीनां त्वितरेतरं स्मृत्यन्तरमन्वेषणीयम्। तथा च गौतमः (१२/११) "ब्राह्मणराजन्यवत् क्षत्रियवैश्यौ"। परस्पराक्रोशे क्षत्रियश्चेद्वैश्यमाक्रोशेत्पञ्चाशतं दण्डचः, वैश्यः क्षत्रियं शतम्। एवं क्षत्रियः शूद्रमाक्रोशेत्पञ्चविंशतिर्दण्डचः। वैश्यः पञ्चाशतम्। शूद्रस्य तु तदाक्रोशे गुणापेक्षिको दण्डो वक्ष्यते॥ २६८॥

(२) **सर्वज्ञनारायणः।** अभिशंसने आक्रोशे। वैश्ये आक्रुश्यमाने विप्रेण। एवं शूद्र इत्यत्रापि॥ २६८॥

(३) **कुल्लूकः।** ब्राह्मणः क्षत्रियस्योक्तरूपाक्षेपे कृते पञ्चाशत्पणान्दण्डचः वैश्ये शूद्रे च यथोक्ताक्रोशे कृते पञ्चविंशतिर्द्वादशपणाः क्रमेण ब्राह्मणस्य दण्डः स्यात्॥ २६८॥

(४) **राघवानन्दः।** प्रतिलोमतयोक्ताऽनुलोमतयाह पञ्चाशदिति। अभिशंसने स वैश्ये आक्रुष्टे। एवं शूद्रे॥ २६८॥

(५) **नन्दनः।** अर्द्धपञ्चाशत् पञ्चविंशतिः॥ २६८॥

(७) **मणिरामः।** क्षत्रियस्य अभिशंसने कठोरवचसे। ब्राह्मणः पंचाशतं पणान् दंदचः। वैश्ये शूद्रेच यथोक्ताक्रोशे कृते यथाक्रमेण पंचविंशतिर्द्वादशपणाः ब्राह्मणस्य दंडःस्यात्॥ २६८॥

(८) **गोविन्दराजः। पञ्चाशदिति।** ब्राह्मणक्षत्रियवैश्यशूद्राणाम् उक्ताद्यपेक्षा पञ्चाशत्पञ्चविंशतिः विंशतिः चार्धद्वादशपणान् यथाक्रमं ब्राह्मणो दण्डचः॥ २६८॥

(९) **भारुचिः**। निगदव्याख्यातः श्लोकः अत्रापि न्यायप्रा(का?क्त)प्त्या क्षत्रियो वैश्यमाक्रोशन् ब्राह्म······क्षत्रियः स्यात्। वैश्यस्य शूद्रमाक्रुश्य ब्राह्मणदण्डात् त्रिगुणं दद्यात्॥ २६८॥

**समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे॥**
**वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्॥ २६९॥**

(१) **मेधातिथिः**। **द्विजाति**ग्रहणमतन्त्रम्। **समवर्णे व्यतिक्रमे** परस्पराक्रोशे **द्वादश दण्डः**। समत्वं च जातिवित्तबन्धुवयःकर्मविद्याभिः, विशेषानुपदेशात्। तत्र समानजातीय वित्ताधिके द्विगुणं–तस्मिन्नेव बन्धुत्वाधिके त्रिगुणं–यावत्सर्वगुणे निर्गुणस्य षड्गुणम्। **वादा** आक्रोशा **अवचनीया** अत्यन्तनृशंसा मातृभगिनीभार्यादिगताः। **तदेव द्विगुणं** दण्डपरिमाणम्। नपुंसकलिङ्गात्सर्वशेषोऽयं न समवर्णविषय एव। अथवा **तदेव** शतमिति योजना। लिङ्ग-सामर्थ्याच्छतस्य च प्रथमश्लोके श्रुतत्वात्। अतोऽवचनीयेषु समवर्णेष्वपि द्विशतो दमः। लिङ्गोपपत्त्यर्थे परिमाणपदमश्रुतमध्याहर्तव्यम्। शते तु व्यवहितकल्पना ज्यायसी। ॥ २६९॥

(२) **सर्वज्ञनारायणः**। समुत्कर्ष इति। क्षत्रादिनामपि स्वावरवर्णष्वाक्रोशे विप्रस्येव दण्डक्लृप्तिरित्यर्थः। द्विजातीनां त्रयाणां व्यतिक्रमे आक्रोशे। अवचनीयेष्वश्लीलेषु त्वं स्वसृगामीत्यादिष्वाक्रोशमात्रतात्पर्येणोक्तेषु समवर्णेषु॥ २६९॥

(३) **कुल्लूकः**। द्विजातीनां समानजातिविषये यथोक्तोक्रोशे कृते द्वादशपणो दण्डः। अवचनीयेषु पुनराक्रोशवादेषु मातृभगिन्याद्यश्लीलरूपेषु तदेवेति नपुंसकनिर्देशात् शतं-ब्राह्मणमाक्रुश्येत्यादियदुक्तं तदेव द्विगुणं दण्डरूपं भवेत्॥ २६९॥

(४) **राघवानन्दः**। किंच समिति। समवर्णे तुल्यजातीये व्यतिक्रमे यदि विप्रो विप्र-माक्षिपति। एवमुत्तरत्र। वादेषु तु विशेषमाह वादेष्विति। अवचनीयेषु मातृभगिन्याद्य-श्लीलेषु क्रोधावेशपुरःसरेषु॥ २६९॥

(५) **नन्दनः**। व्यतिक्रमेऽल्पवाक्पारुष्ये। यदिदंद्वादशेत्युक्तंतदेव द्विगुणंभवेत् ॥ २६९॥

(६) **रामचन्द्रः**। द्विजातीनां व्यतिक्रमे द्विजस्य द्विजः क्षत्रियस्य क्षत्रियः वैश्यस्य वैश्यः शूद्रस्य शूद्रः व्यतिक्रमे द्वादशैव पणान्दण्डचः। व्यतिक्रमेद्विगुणं चतुर्विशतिःपणाः ॥ २६९॥

**विप्रक्षत्रियवत्कार्यो दण्डो राजन्यवैश्ययोः।**
**वैश्यक्षत्रिययोः शूद्रे विप्रे यः क्षत्रशूद्रयोः॥ १॥**

**समुत्कर्षापकर्षास्तु विप्रदण्डस्य कल्पना।**
**राजन्यवैश्यशूद्राणां धनवर्जमिति स्थितिः॥ २॥**

(७) **मणिरामः**। द्विजातीनां समवर्णे व्यतिक्रमे वाक्पारुष्ये। द्वादशैव पणाः दंडः। अवचनीयेषु वादिषु मातृभगिन्यादिशालिप्रदानरूपवाक्पारुष्येषु। तदेवशतमेव द्विगुणं दंडरूपं भवेत्।। २६९।।

(८) **गोविन्दराजः। समवर्ण इति।** द्विजातीनां समजातिविषये उक्तरूपे आक्रोशे कृते व्यतिक्रमे सति द्वादशैव पणान् दण्ड्यः अवचनीयेषु वादेषु मातृभगिन्याद्यश्लीलरूपेषु शतं ब्राह्मणमाकुश्येत्यादि यदुक्तं तदेव दण्डं द्विगुणं दण्डाद्भवति।। २६९।।

(९) **भारुचिः**।...तो ब्राह्मण एवमितरयोरपि शूद्रेऽपि कार्यसामान्यादेतदेव स्यात् - एवं च द्विजातिजातिग्रहणस्याविवक्षितत्वादेकजातिप्रदर्शनार्थमप्येतदत्र स्यात्। अवचनीयेषु तु वादेषु 'शतं ब्राह्मणमाक्रुश्ये' त्येवमादिषु यद्यदुक्तं तत्तद्विगुणं तत्र स्यात् ।। २६९।।

**एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन् ।।**
**जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ।। २७० ।।**

(१) **मेधातिथि। एकजातिः** शूद्रः। स त्रैवर्णिकान्**क्षिपन्नाक्रोशन् दारुणया** पातकादियोगिन्या **वाचा** नृशंसादिरूपया जिह्वाच्छेदं लभते। **जघन्यप्रभव** इति पादाभ्यां ब्राह्मण उत्पन्न इति हेत्वभिधानं प्रतिलोमानामपि ग्रहणार्थम्। तेऽपि जघन्यप्रभवा एव–"नास्ति पञ्चम" इति वर्णान्तरनिषेधात्।। २७०।।

(२) **सर्वज्ञनारायण**। एकजातिः शूद्रः। दारुणया अवचनीयया। जघन्यप्रभवो। न्त्यजन्मा।। २७०।।

(३) **कुल्लूकः**। शूद्रो द्विजातीन्पातकाभियोगिन्या वाचाक्रुश्य जिह्वाच्छेदं लभेत। यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जातः।। २७०।।

(४) **राघवानन्दः**। शूद्रकर्तृकत्रैवर्णिकाक्रोशे विशेषमाह एकेतिचतुर्भिः। एकजातिः शूद्रः एकैव जातिर्जन्मरूपा यस्येतिव्युत्पत्तेः। वाचा दारुणयेति कस्त्वं रे यज्ञदत्तेत्यादिरूपया। जिह्वाछेदेहेतुः जघन्यप्रभवः पद्भ्यां शूद्रो अजायतेतिपादजः।। २७०।।

(५) **नन्दनः**। एकजातिरुपनयनानर्हः शूद्रइतियावत्।। २७०।।

(६) **रामचन्द्रः**। एकजातिः शूद्रः द्विजातिब्राह्मणक्षत्रियवैश्यानां दारुणयावाचाक्षिपन् जिव्हायाः छेदं प्राप्नुयात्। सः द्विजातिः जघन्यस्य शूद्रस्य प्रभवः।। २७०।।

(७) **मणिरामः**। एकजातिः शूद्रः दारुणयावाचा त्वं पातकीतिवाचा।। २७०।।

(८) **गोविन्दराजः। एकजातिरिति।** शूद्रो द्विजातीन् घातकाद्यभियोगिन्या वाचा आक्रुश्य जिह्वाच्छेदं प्राप्नुयात् यदसौ पादाख्यनिकृष्ट इति।। २७०।।

(९) **भारुचिः**। ब्राह्मणक्रोशे वध उक्तश्शूद्रस्य। यतोऽयं क्षत्रियवैश्याक्रोशे तस्य दण्डो विज्ञेयः। यतः जिह्वाच्छेदश्चाप्राणोपरोधी सामर्थ्यादस्य विज्ञायते।। २७०।।

**नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः ।।**
**निक्षेप्योऽयोमयः शंकुर्ज्वलन्नास्ये दशांगुलः ।। २७१ ।।**

(१) **मेधातिथिः ।** **अभिद्रोह** आक्रोशः । कुत्साबुद्धिः–'ब्राह्मणक त्वं मा मया स्पर्धिष्टाः' । एवन्नाम्न्यपि योज्यम् । ग्रहणं **ग्रहः** निरुपपदं नाम गृह्णाति कुत्साप्रत्यययोगेन वा 'देवदत्तकेति' । **अभिद्रोहेण** क्रोधेन । अभिद्रोहः क्रोधः—न प्रणयेन । **निःक्षेप्यः** प्रक्षेप्यः । **शङ्कुः** कीलकः । **ज्वलन्**नग्निना दीप्यमानोऽ**योमयो** लोहमयः ।। २७१ ।।

(२) **सर्वज्ञनारायणः ।** नामग्रहंमैत्र इति । जातिग्रहं ब्राह्मण इति । अभिद्रोहेणाक्रोशाभिमानेन कुर्वतः शूद्रस्य ज्वलन्नतितप्तः ।। २७१ ।।

(३) **कुल्लूकः ।** अभिद्रोह आक्रोशः ब्राह्मणादीनां रे त्वं यज्ञदत्त ब्राह्मणापसद इत्याक्रोशेन नामजात्यादिग्रहणं कुर्वतो लोहकीलोऽग्निना प्रदीप्तो दशाङ्गुलो मुखेषु क्षेप्तव्यः ।। २७१ ।।

(४) **राघवानन्दः ।** ब्राह्मणापसदइत्याद्याक्रोशेदण्डान्तरमाह नामेति । शङ्कुर्लोहकीलकंज्वलन्नग्निदीप्तः निक्षेप्यःप्रवेशनीयः ।। २७१ ।।

(५) **नन्दनः ।** नामजात्योर्ग्रहणं हे यज्ञशर्मन्ब्राह्मणेत्यादिकं एषां द्विजातीनां कुर्वतएकजातेः ।। २७१ ।।

(६) **रामचन्द्रः ।** अमुकनामासित्वं अमुकजातिस्त्वं । अभिद्रोहेण आक्रोशाभिमानेन ग्रहं कलहं कुर्वतः यस्तस्य आस्ये मुखे अयोमयःशङ्कुःदशाङ्गुलः ज्वलन्स्थाप्यः ।। २७१ ।।

(७) **मणिरामः ।** एषां द्विजातीनां । नामजातिग्रहं कुर्वतः यज्ञदत्त ब्राह्मणाऽपसद इति रूपेण ।। २७१ ।।

(८) **गोविन्दराजः ।** **नामजातिग्रहमिति ।** एषां द्विजातीनामाक्रोशबुद्धया नामोच्चार्यं जात्युच्चारणञ्च शूद्रस्य कृतवतः आयसकीलोऽग्निना दीप्यमानो दशाङ्गुलप्रमाण आस्ये प्रेक्षेप्तव्यः ।। २७१ ।।

(९) **भारुचिः ।** अवचनीयैरभिद्रोहेणाक्रोशतः शूद्रस्यानेन प्रकारेण वध उपदिश्यते ।। २७१ ।।

**धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः ।।**
**तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ।। २७२ ।।**

(१) **मेधातिथिः ।** 'अयं ते स्वधर्म' इयं वाऽत्रेतिकर्तव्यता' 'मैवं कार्षीः छांदसोऽसीति'—एवमादिव्याकरणलेशज्ञानतया दुन्दुकत्वेन दर्पवन्तः शूद्रा उपदिशन्ति । तेषामेष दण्डः । यस्तु प्रणयात् ब्राह्मणापाश्रयादेव व्युत्पन्नो विस्मृतं कथंचिद्देशकालविभागं स्मारयेत् —'पूर्वाह्णकालं नातिक्रामयेति', 'क्रियतां दैवं कर्म, देवांस्तर्पयोपवीती भव, मा प्राचीनावीतं कार्षीरिति' तस्य न दोषः । **तप्त**मग्निसंबन्धात्पीडाकरम् । **आसेचये**त्क्षारयेत् ।

"युक्तं वक्त्रे, मुखेनोपदेशकत्वात्। श्रोत्रस्य कोऽपराधः।'

प्रागसत्तर्कादि श्रवणम् ।। २७२ ।।

(२) **सर्वज्ञनारायणः**। धर्मोपदेशं प्रायश्चित्ताद्युपदेशम्। अस्य शूद्रस्य ।। २७२ ।।

(३) **कुल्लूकः**। कथंचिद्धर्मलेशमवगम्यायं ते धर्मोनुष्ठेय इति ब्राह्मणस्याहङ्कारादुपदिशतोऽस्यशूद्रस्य मुखे कर्णयोश्च ज्वलत्तैलं राजा प्रक्षेपयेत् ।। २७२ ।।

(४) **राघवानन्दः**। तस्यैव धर्मवक्तृत्वे दण्डान्तरमाह धर्म इति। दर्पेण धनविद्यादिजेन विप्राणां धर्मोपदेशं कुर्वतोऽस्य शूद्रस्य। तं धर्मं स्वयं श्रुत्वाऽनुष्ठास्यतीति कृत्वा श्रोत्रे ।। २७२ ।।

(५) **नन्दनः**। अस्यैकजातेरित्येव ।। २७२ ।।

(६) **रामचन्द्रः**। विप्राणां धर्मोपदेशं दर्पेण कुर्वतः अस्य शूद्रस्य वक्त्रे तप्तं तैलं च पुनः श्रोत्रे आसेचयेत्पार्थिवः ।। २७२ ।।

(७) **मणिरामः**। अस्य शूद्रस्य ।। २७२ ।।

(८) **गोविन्दराजः**। **धर्मोपदेशमिति**। छद्मना कुतश्चिद्धर्मलेशं बुद्ध्वा अयं ते स्वधर्म इत्येवमहङ्कारेण ब्राह्मणानां शूद्रस्योपदिशतः आस्ये कर्णयोश्च ज्वलत्तैलं राजा प्रक्षेपयेत् ।। २७२ ।।

(९) **भारुचिः**। धर्मोपदेशसामर्थ्यं चैतच्छूद्रस्यार्थाद्विज्ञेयम्। एवं च सति नेदं लिङ्गं शूद्रस्य शास्त्रप्राप्तेर्भवति ।। २७२ ।।

**श्रुतं देशं च जातिं च कर्म शारीरमेव च ।।**
**वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद् द्विशतं दमम् ।। २७३ ।।**

(१) **मेधातिथिः**। सत्ये च श्रुते 'नैतदनेन सम्यक् श्रुतं' इत्याह—**श्रुतमेव** वाक्षिपति—'नैतत्सम्यक् यदनेन श्रुतमिति'। ब्रह्मावर्तीयमभिजनाभिमानिनं 'बाह्यकोऽय'मित्याह। एवं **जात्या** ब्राह्मणं 'क्षत्रियोऽयमि'त्याह—क्षत्रियं वा हेलया 'ब्राह्मण' इति। **कर्म**—ब्रह्मचारिणं 'स्नातक' इति। शरीरावयवः **शरीरे**—अव्यङ्गं 'दुश्चर्मेति'। **वितथेन** वितथमानृतम्। 'प्रकृत्यादिभ्य' इति तृतीया। अथवाऽधर्मो 'वैतथ्यं'—तस्य वाच्यं प्रति कारणतायुक्तैव। स्वगुणमदात्परावज्ञानं **दर्पः**। अज्ञानात्परिहासतो वा न दोषः।

"कस्य पुनरयं दण्डः।"

सर्वेषामिति ब्रूमः। शूद्राधिकाराच्छूद्रस्यैवेति परे। द्विजातिविषये वैतथ्ये ।। २७३ ।।

(२) **सर्वज्ञनारायणः**। शारीरं कर्म भारवाहनादि वितथेति ब्रुवन्नत्वश्रुतादि। दर्पादभिमानात्। अश्रुताद्यभिमानेन ब्रुवन्द्विज एव दण्ड्यो नतु शूद्रस्तस्य तु वध एव ।। २७३ ।।

(३) **कुल्लूकः।** समानजातिविषयमिदं दण्डलाघवन्नतु शूद्रस्य द्विजात्याक्षेपविषयम्। न त्वयैतच्छ्रुतं न भवान् तद्देशजातो न तवेयंजातिर्न तव शरीरसंस्कारमुपनयनादि कर्मकृत मित्यहङ्कारेण मिथ्याब्रुवन्द्विशतंदण्डंदाप्यः स्यात्। वितथेनेति तृतीयाविधाने प्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीया ।। २७३ ।।

(४) **राघवानन्दः।** समवर्णेआह श्रुतमिति। न त्वंद्विजातिर्न तवायमुचितोदेश इत्येवं वितथेन वितथं ब्रुवन् शूद्रःशूद्रस्यैव ब्रुवन्। प्रकृत्यादिभ्यः उपसंख्यानमितितृतीया। अथवा स्वख्यात्यर्थंदर्पात् मिथ्यावदंच्छूद्रोदण्डनीयइत्याह श्रुतमिति। मयैतत्पुराणादिकं श्रुतं मम मध्यदेशे वसतिरतीव कुलीनोऽहमतीव सत्कर्मास्मि ममातीव चूडादिसंस्कारो वृत्त इति। अन्यथा वितथेनेत्यनुपपत्तेरिति ।। २७३ ।।

(५) **नन्दनः।** सर्ववर्णानामविशेषेण दण्डमाह श्रुतदेशं चेति। देशं जन्मभूम्यादिकं। कर्मयज्ञादिकं। शारीरमुपनयनादिकं। वितथेनवैतथ्येन ।। २७३ ।।

(६) **रामचन्द्रः।** तवश्रुतं तवदेश तवजाति तवशारीरंकर्म भारवाहनादिकर्म- वितथेन विथतत्वेन दर्पात् ब्रुवन् द्विशतं दमं दाप्यःस्यात् ।। २७३ ।।

(७) **मणिरामः।** न त्वयैतछ्रुतं न भवान् तद्देशजातः न तवायंजातिः न तव शरीर- संस्कारमुपनयनादि कर्मकृतमित्यादि दर्पात् वितथेन ब्रुवन् मिथ्याब्रुवन् द्विशतं पणाः दंडं दाप्यः ।। २७३ ।।

(८) **गोविन्दराजः। श्रुतिमिति।** न त्वयैतच्छ्रुतं न भवानेतद्देशाभिजातो न तवेयं जोतिः न तवोपनयनादि शरीरसंस्कारकं कर्म कृतं इत्येवमनृतमेवामर्षात्समानजाति ब्रुवन् द्विशतं दण्डं दाप्यः स्यान्न शूद्रः प्रकृतो द्विजातीनां ब्रुवन्दण्डलाघवात् ।। २७३ ।।

(९) **भारुचिः।** सत्यपि शूद्रप्रकरणे सर्वेषां ब्राह्मणादीनामयं विधिर्ज्ञेयः सामर्थ्यात् ।। २७३ ।।

**काणं वाऽप्यथ वा खञ्जमन्यं वाऽपि तथाविधम् ।।**
**तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम् ।। २७४ ।।**

(१) **मेधातिथिः।** एकेनाक्ष्णा विकलः **काणः।** **खञ्जः** पादविकलः। **तथाविधं** कुणि चिपिटनासं—**तथ्येन** 'असत्येन' अपिशब्दाद्वितथेन—अकाणं काण इत्युक्ते। **कार्षापणावरो** दण्डः। अत्यन्ताल्पो यदि दण्डः कथंचिदनुग्राह्यतया, तदा कार्षापणो दण्डः। अन्यथा द्वौ त्रयः पञ्च वा। पुरुषविशेषापेक्षयाऽपि दण्ड्यः शूद्रः। सर्वे वा पूर्ववत् ।। २७४ ।।

(२) **सर्वज्ञनारायणः।** ब्रुवन्काणस्त्वमिज्यादिकमभिमानात् कार्षापणोत्यन्तावरोयत्र दण्डे तम्। अधिकसंभवेतु ततोपि किंचिदधिकंदाप्यइत्यर्थः ।। २७४ ।।

(३) **कुल्लूकः।** एकाक्षिविकलंपादविकलमन्यमपि वा तथाविधं हस्ताद्यङ्गविकलं- सत्येनापि काणादि शब्देन ब्रुवन्नत्यल्तांल्पं तदा कार्षापणं दण्डं दाप्यः ।। २७४ ।।

(४) **राघवानन्दः**। किंचान्यत् वस्तुतोङ्गहीनमस्य तथावदने दण्डमाह काणमिति। तथाविधं विरूपम्। तथ्येनापीत्यत्रापेरवधारणार्थत्वात्परिहासवारणाय। कार्षापणावरं पणादपि न्यूनं पुनः प्रसंगवारणाय ।। २८४ ।।

(५) **नन्दनः**। तथाविधं विकलाङ्गं शक्त्यपेक्षया परिणामनीयम् ।। २७४ ।।

(६) **रामचन्द्रः**। काणादिकं तथ्येन ब्रुवन् कार्षापणां अवरंदण्डं दाप्यःकर्ष पणंकार्षापणं अवरतुच्छं ।। २७४ ।।

(७) **मणिरामः**। अन्यं नापि तथाविधं हस्ताद्यंगविकलं। तथ्येनापिब्रुवन् हे काण हे खंजेतिवदन्। अवरं अत्यंताल्पं कार्षापणं दंडं दाप्यः ।। २७४ ।।

(८) **गोविन्दराजः। काणमिति।** काणं पादविकलं वा अन्यमपि वा तथारूपं अङ्गविकलमन्धादिकं काणादिशब्देन सत्येनापि ब्रुवन्यादि सर्वनिकृष्टं कार्षापणं दण्डं दाप्यः ।। २७४ ।।

(९) **भारुचिः**। कार्षाप(णवा : णाव) रत्वं चापराधं परिज्ञाय स्थाप्यम्। तथा च विहितः दण्डापवादः शास्त्रोक्त एवानुबन्धं प... (ज्ञे ? ज्ञा)येत्येवमादिः ।। २७४ ।।

**मातरं पितरं जायां भ्रातरं तनयं गुरुम् ।।**
**आक्षारयञ्छतं दाप्यः पन्थानं चाददद् गुरोः ।। २७५ ।।**

(१) **मेधातिथिः**। **आक्षारणं** भेदनं द्वेषजननमनृतेन। 'एषा ते माता न स्नेहवती द्वितीये पुत्रेऽत्यन्ततृष्णावती कनकमयमङ्गुलीयकं रहसि तस्मै दत्तवती' इत्येवमाद्युक्त्वा भेदयति। एवं पितापुत्रौ जायापती भ्रातॄन् गुरुशिष्यौ। **तनय**ग्रहणं द्वितीयसंबन्धिप्रदशनार्थम्। अन्यथा मातरमित्युक्ते मातरं पुत्राद्भिन्दतो दण्डः स्यान्न पुत्रं मातुः। यद्यपि भेदनमुभयाधिष्ठानं तथापि यन्मुखेन क्रियते स एव भेदयितव्य इति व्यवहारः। तत्रासति तनयग्रहणे प्रदर्शनार्थे यदैव मातरमाह—'न एष ते पुत्रो भक्तो दुःशीलश्च' इत्येवमादिना मातरमाक्षारयति तत्रैव स्यान्न तु पुत्रं यथा दर्शितम्।

अन्ये तु चित्तकदर्थनोत्पादनम् 'आक्षारण'माहुः। प्रवक्ष्यामि धनं श्रुतं वाऽर्जयितुं तीर्थान्युपसेवितुं तत्प्रवासशङ्कया च मनसि तृष्णया पीडा भवतीति तथा न कर्तव्यम्।

यावद्गुरवस्ते जीवेयुस्तावन्नान्यं समाचरेन्न तैरननुज्ञात इति च। यत्तु विद्वेषणादिना चित्ते खेदोत्पादनं तत्र शता न मुच्यते, 'प्रतिरोद्धा गुरोरिति' महत्वाद्दोषस्य।

जायाया अनुकूलायाः पुत्रवत्याः 'करोत्यन्यं विवाहम्' इत्येत**दाक्षारणम्**। एवं गुणवतः पुत्रस्याकारणेऽन्यकरणम् ।।

गुरोः सर्वप्रकारं पन्थानमत्यजतः शतं दण्डः ।। २७५ ।।

(२) **सर्वज्ञनारायणः**। अक्षारयन्नगम्यमैथुनेनाभिशंसन्। जायासंनिधेर्जायायाएव मातरं पितरं चेति ग्राह्यम्। तेनात्र जायां प्रति तव माता स्वैरिणीत्यादिरभिशापो द्रष्टव्यः ।। २७५ ।।

(३) **कुल्लूकः।** आक्षारितः क्षारितोऽभिशप्तइत्याभिधानिकाः मात्रादीन्पातकादि-नाऽभिशपन्गुरोश्च पन्थानमत्यजन् दण्डचः । भार्यादीनांगुरुलघुपापाभिशापेन दण्डसाम्यं समाधेयम्। मेधातिथिस्तु आक्षारणं भेदनमित्युक्त्वा मातृपुत्रपित्रादीनां परस्परभेदन-कर्तुर्दण्डविधिरितिव्याख्यातवान् ।। २७५ ।।

(४) **राघवानन्दः।** मात्राद्यभिशप्तस्तुदण्डमाह मातरमिति। आक्षारयन् पातका-दिना अभिशप्तं कुर्वन् शतं दाप्यः। तथा गुरोराचार्यस्य पन्थानमददज्जनो दण्डचः। क्षारण-मेतेषामन्योन्यंवैमत्यं तत्कर्तुर्दण्डइतिमेधातिथिः ।। २७५ ।।

(५) **नन्दनः।** आक्षारयन्वाक्पारुष्येण क्रोधयन्मातापितृगुरुज्येष्ठभ्रातृणामाक्षारणे सकृत्कृतेऽन्येषामसकृत्कृते दण्डः अतुल्यकक्षित्वात् ।। २७५ ।।

(६) **रामचन्द्रः।** मातरंवा पितरंवा जायांवा जायाशब्दसन्निधानात्तस्या एव पितरौ ग्राह्यौ भ्रातरं तनयं गुरुं वाऽऽक्षारयन् अगम्यागमनेन निन्दन् सः शतंदाप्यः च पुनः गुरोः-पन्थानं अददत् शतंदाप्यः ।। २७५ ।।

(७) **मणिरामः।** अक्षारितं पातकादिनाऽभिशपन्। दाप्यः दंडचः आक्षारिकोभि-शप्त इत्याभिधानिकाः ।। २७५ ।।

(८) **गोविन्दराजः। मातरमिति।** क्षारिताक्षारितौ सद्भिरभिशस्तावुदाहृताविति त्रिकाण्डदर्शनात् मातृपितृभार्याभ्रातृपुत्रगुरूणां महापातकाभिशापमुत्पादयन् गुरोश्च पन्थानमददच्छतं दण्डचः। अभ्यासाऽनभ्यासाक्षारणेन वात्र मातृभार्यादीनां दण्डस्य विषमसीमाकरणं परिहरणीयम् ।। २७५ ।।

(९) **भारुचिः।** अत्रश्लोके जायातनयग्रहणमर्थवादार्थम्। कथं कृत्वा भार्यापुत्र-योरेव ताव (द ? दा)क्षारणेऽयमस्य दण्डो भवितुमर्हति। प्रागेव मात्रादीनां यस्मान्मात्रादिभि ••• नत्वं भार्यापुत्रयोः। एतस्मात्सामर्थ्यादिदमेवं व्याकरणीयम्। भ्राता च यदि कनीयान् तत्र एषैवात्र व्याख्या। अथ तु ज्येष्ठस्य ग्रहणं ततो गुरुत्वादस्य विध्यर्थतैव न्याय्या। एवं च सति गुरुग्रहणं विद्यांगुरुप्रभृतीनामवरोधार्थम्। गुरुग्रहणादेव च मात्रादिग्रहणे सिद्धे पृथगुपदेशस्तेषामादरार्थो विज्ञेयः। इदं चान्यदर्थान्तरविषयं वाक्यान्तरम्। समानदण्ड-त्वादस्मिन्नेवावधावुच्यते–पन्थानं चाददद्गुरोः सर्वप्रकारस्य अनाक्षारयन्नप्ययमेव दण्ड एकः कार्यः स्यात्। एतस्मादेव च गुरुग्रहणात् पूर्वत्र भार्यापुत्रग्रहणमर्थवादार्थं सुतरां विज्ञायते (येन ? यौ)समानदण्ड एव व्यभिचारान्तरौ श्रूयेते। आक्षारणं च प्रतरद्वाक्पारुष्यविशेष आक्रोशादिः। अन्यस्त्वाह–अनृतेन भेदनमाक्षारणम्। अनृताभिशंसनं त्वपरः। तत्त्वे तदुभयं प्रकरणविरोधाद्विचारणीयं युक्तायुक्तत्वेन ।। २७५ ।।

**ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ।।**
**ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ।। २७६ ।।**

(१) **मेधातिथिः। ब्राह्मणक्षत्रियाभ्यां** परस्पराक्रोशे कृते तयोरयं **दण्ड** इत्येवमध्या-

हारेण योजना। तादर्थ्ये चतुर्थी वा। तद्विनयाय दण्डः कर्तव्यः। पातकस्याक्रोशे कृतेऽयं दण्डो दुःखोत्पादनरूपे।। २७६ ।।

(२) **सर्वज्ञनारायणः।** ब्राह्मणक्षत्रियाभ्यामन्योन्यमाक्षारणे।। २७६ ।।

(३) **कुल्लूकः।** ब्राह्मणक्षत्रियाभ्यां परस्परं पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्यः दण्डमेव विशेषेणाह ब्राह्मण क्षत्रियाक्रोशिनि प्रथमसाहसः कार्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यम साहसः।। २७६ ।।

(४) **राघवानन्दः।** ब्राह्मणक्षत्रियाभ्यामन्योन्यं पतनीयाक्रोशे कृते दण्डमाह ब्राह्मणेति। विजानता दण्डशास्त्रज्ञेन राज्ञा दण्डःकार्यः। तयोर्व्यवस्थानमाह। ब्राह्मणे क्षत्रियाक्रोशिनि पूर्वः सार्धशतत्रयम्। विप्राक्रोशिनिराजनि मध्यमः पञ्चशतानि।। २७६ ।।

(५) **नन्दनः।** वर्णानां स्वजातिविषये वाक्पारुष्यातिशये दण्डं श्लोकद्वयेनाह ब्राह्मणक्षत्रियाभ्यान्त्विति। विजानता राज्ञा। ब्राह्मणक्षत्रियाभ्यांवाक्पारुष्यातिशये कृते तयोर्दण्डौ कार्यावित्यर्थः। तावुत्तरार्द्धेनोक्तौ।। २७६ ।।

(६) **रामचन्द्रः।** ब्राह्मणक्षत्रियाभ्यां अन्योन्याक्षारणे पतनीये कृतः विजानता पुंसा दण्डःकार्यःपूर्वसाहसःप्रथमसाहसः।। २७६ ।।

(८) **गोविन्दराजः। ब्राह्मणक्षत्रियाभ्यामिति।** ब्राह्मणक्षत्रियाभ्यामितरेतरं पतनीयाक्रोशे कृते सति तयोः शास्त्राभिजनदेशजात्यादिनाऽयं दण्डः कर्तव्यः। क्षत्रियाक्रोशे सति ब्राह्मणे प्रथमसाहसः कर्तव्यः। ब्राह्मणाक्रोशे निपुणः क्षत्रिये मध्यमसाहसः।। २७६ ।।

**विट्शूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः।।**
**छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः।। २७७ ।।**

[**पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः।**
**वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेत्।। १ ।।**]‡

(१) **मेधातिथिः।** एवमेव प्रथममध्यमौ साहसावित्यतिदिश्यते। तेनैव क्रमे वैश्यस्य शूद्राक्रोशे प्रथमः शूद्रस्य वैश्याक्रोशे मध्यमः।

**छेदवर्जं दण्डस्य प्रणयनमिति।** 'एकजातिर्द्विजातिम्' (२७०) इत्यनेन जिह्वाछे प्राप्तं निवर्तयति।

**स्वजातिं प्रतीति।** नैवं मन्तव्यं समानजातीयं प्रतीति–किं तर्हि याऽत्र जातिरूपात्ता वैश्यशूद्राविति स्वग्रहणम्। श्लोकाभिप्रायः–परस्पराक्रोशे यावत् स्वजातिमिति पूर्वत्रापि संबन्धनीयम्।

**प्रणयनं** प्रवर्तनम्।

क्षत्रियस्य वैश्यशूद्राक्षारणे प्रथमार्द्धसाहसः। एवं ब्राह्मणस्य वैश्यशूद्रयोः।। २७७ ।।

(२) **सर्वज्ञनारायणः।** विट्शूद्रयोरेवमेवान्योन्याक्षारणे प्रथमोवैश्यस्य शूद्रस्य मध्यमः। तयोस्तुस्वस्वजात्याक्षारणे छेदवर्जं तत्तज्जात्युचितदण्डमात्र प्रणयनम्। तेनार्थाद् ब्राह्मणक्षत्रियाक्षरणे छेद एवेत्यर्थः ॥ २७७ ॥

[ **सर्वज्ञनारायणः।** पतितमिति। पतितं पातकिनम्। उक्त्वाआक्रोशबुद्धया तुल्य-दोषोऽतस्तुल्यो दण्डः। एवंद्विर्दोषितां द्विगुणदोषतामित्यादि ॥ वाक्पारुष्यम् ॥ १ ॥ ]

(३) **कुल्लूकः।** वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवद्वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यम साहस इत्येवं रूपं दण्डस्य प्रणयनं जिह्वाच्छेदरहितं यथावत्कर्तव्यमिति शास्त्रनिश्चयः एवं चेकजातिर्द्विजातींस्त्विति प्रागुक्त-जिह्वाच्छेदो वैश्ये निवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवावतिष्ठते ॥ २७७ ॥

(४) **राघवानन्दः।** उक्तदण्डमन्यत्रातिदिशति विडिति। शूद्राक्रोशिनि वैश्ये प्रथमः। वैश्याक्रोशिनि शूद्रे मध्यमः। स्वजातिप्रति संनिधेःस्वस्य जातिर्यदनन्तरं तत्स्वजातिस्तेन वैश्यः क्षत्रियमाक्रुश्य प्रथमसाहसं दद्यात्। वैश्यमाक्रुश्य शूद्रो मध्यम साहसं दद्यात्। अन्यथा समवर्णे द्विजातीनामिति वैश्यस्य द्वादशस्योक्तत्वात्तत्त्वतः परिहासं विना छेदवर्जं जिव्हा-छेदंविना। अतो ब्राह्मण क्षत्रियाक्रोशिनि शूद्रे जिव्हाछेदः प्रथमोक्तः पर्याप्तः ॥ २७७ ॥

(५) **नन्दनः।** एवमेवेति मध्यमसाहसातिदेशः स्वजातिं प्रतिवाक्पारुष्य इति शेषः। अपराद्धेऽपि स्वजातिंप्रतीत्यनुषङ्गः। शूद्रस्येति च विपरिणामः तेनायमर्थः शूद्रस्य जिह्वाछेदवर्जनं दण्डप्रणयनं स्वजातिविषये न द्विजातिविषय इति ॥ २७७ ॥

(६) **रामचन्द्रः।** वैश्यशूद्रजातिं प्रति तत्त्वतःक्ष्वेडं वर्जयेत्। प्रणयनपरिहासवर्जं प्रणयनं दण्डस्य इति विनिश्चयः दण्डः कार्यः ॥ २७७ ॥

[ **रामचन्द्रः।** पतितमिति। पतितंप्रति त्वंपतित इत्युक्त्वा चौरं प्रति त्वंचोर इत्युक्त्वा वा वचनात्ततुल्यदोषः स्यात् ॥ १ ॥ ]

(७) **मणिरामः।** ब्राह्मणे क्षत्रियाक्रोशिनि पूर्वः साहसः प्रथमसाहसः सार्द्ध द्विशत-पणात्मकः। क्षत्रिये ब्राह्मणाक्रोशिनि मध्यमः मध्यमसाहसः। एवंरूपं दंडस्य प्रणयनं जह्वाछेदरहितं तत्वतः यथावत्कर्तव्यमिति शास्त्रस्यनिश्चयः। एवं चानेन पूर्वं वैश्याक्रोशे शूद्रस्य प्राप्तं जिह्वाछेदनं निवर्त्त्यते ॥ २७७ ॥

(८) **गोविन्दराजः। विटशूद्रयोरिति।** वैश्यशूद्रयोः परस्परजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवत्। प्रथम मध्यम साहसात्मकं जिह्वाच्छेदवर्जं यथावद्दण्डस्य करणम्। एकञ्च ब्राह्मणक्षत्रियाक्रोशे। एवं शूद्रस्य जिह्वाछेदनमवतिष्ठते ॥ २७७ ॥

(९) **भारुचिः।** अयमपर उपदेशसामर्थ्याद्विकल्पार्थो विधिरुच्यते। यदा ब्राह्मणः क्षत्रियमाक्रोशति तदा तस्य पूर्वसाहसः। यदा च क्षत्रियो ब्राह्मणं तदा तत्र मध्यमः साहसः। एवं क्षत्रिय वैश्ययोस्तथा वैश्य शूद्रयोः। एवं च जातिं प्रत्यन्योत्यं दण्डनियमः कर्तव्यः। एवं च सति शूद्रस्य जिह्वाच्छेदनवर्जं दण्डनिपातनमुक्तं भवति ॥ २७७ ॥

**एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः ।।**
**अत ऊर्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयम् ।। २७८ ।।**

(१) **मेधातिथिः।** **दण्डपारुष्यं** दण्डेन दुःखोत्पादनम्। यथा कण्टकादेः पुरुषस्य स्पर्शः पीडाकर एवं पीडाकरत्वसामान्यात्पारुष्यशब्दप्रयोगः। तत्र **निर्णयो** दण्डविशेष-निर्णयः। पूर्वकरणोपसंहारोपन्यासार्थः श्लोकः ।। २७८ ।।

(२) **सर्वज्ञनारायणः।** तत्त्वतोधर्मतः ।। २७८ ।।

(३) **कुल्लूकः।** एषोऽनन्तरोक्तो वाक्पारुष्यस्य यथावद्दण्डविधिरुक्तोऽनन्तरं ताडनादेर्दण्डपारुष्यस्य निर्णयं वक्ष्यति ।। २७८ ।।

(४) **राघवानन्दः।** वाक्पारुष्य दण्डमुपसंहरन्कायकृताहिंसने तं प्रतिजानीते एष इति ।। २७८ ।।

(८) **गोविन्दराजः।** **एष इति।** एषोऽनन्तरो वाक्सम्बन्धिनः पारुष्यस्य दण्ड-प्रकारो यः प्रागुक्तोऽस्मादनन्तर हस्तकाष्ठ शस्त्रादि सम्बन्धिनः पारुष्यस्य दुःखोत्पादन-हेतोस्ताडनहिंसनादेर्दण्डनिर्णयं वक्ष्यामि ।। २७८ ।।

(९) **भारुचिः।** अयमुक्तस्य विशेषप्रपञ्चस्य सामान्यनिर्देशः। श्रेष्ठं द्विजाति-मन्त्य ··· निदर्शनाच्च पूर्ववर्णस्य हिंसायामुत्तरेणाप्येतद्विज्ञेयम्। न केवलं शूद्रस्य। पूर्वापराधे अस्य सामान्यश्लोकस्य चत्वारो वक्ष्यमाणाः श्लोकाः प्रपञ्चाः ।। २७८ ।।

**येनकेनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः ।।**
**छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ।। २७९ ।।**

(१) **मेधातिथिः।** **अन्त्यजः** शूद्रश्चण्डालपर्यन्तः। **श्रेष्ठः** त्रैवर्णिकः। **तं चेद्धिंस्यादङ्गेन केनचित्** साक्षाद् दण्डखङ्गादिप्रहरणव्यवधानेन वा–**तदङ्गमस्य** छेत्तव्यम्। 'हिंसा' च क्रोधेन प्रहरणं ताडनेच्छया हस्ताद्युद्यम्य वेगेन निपातनम्, न मारणमेव। **तत्तदिति** वीप्सा। अङ्गमिति छेत्तव्यमिति चैकत्वविवक्षा मा विज्ञायि। तेनानेकेनाङ्गेन प्रहरणेऽनेकस्यैव छेदः। **अनुशासनमुपदेशः।** मनुकृतैषा मर्यादा। **अनुशासनग्रहणं** कारुणिकस्य राज्ञः प्रवृत्त्यर्थः ।। २७८ ।।

(२) **सर्वज्ञनारायणः।** हिंस्यात् पीडयेत्। अन्त्यजः शूद्रः ।। २७९ ।।

(३) **कुल्लूकः।** अन्त्यजः शूद्रो योन केनचित्करचरणादिनाङ्गेन साक्षाद्दण्डादिना-ऽव्यवहितेन द्विजाति प्रहरेत्तदेवाङ्गमस्यछेत्तव्यमित्ययं मनोरुपदेशः मनुग्रहणमादरार्थम् ।। २७९ ।।

(४) **राघवानन्दः।** तमेवाह येनेति द्वाविंशत्या। केनचित् पाण्याद्यन्यतमेन। अन्त्यजः शूद्रः ।। २७९ ।।

(५) **नन्दनः**। अथ दण्डवाक्पारुष्यमाह येनकेनचिदिति । श्रेयांसं स्वस्यपूर्ववर्णं अन्त्यजस्तस्मादपरवर्णः ।। २७९ ।।

(६) **रामचन्द्रः**। अन्त्यजः शूद्रः श्रेष्ठं विप्रं येनकेनचित् अंगेन हिंस्यात् करेण पादेन वा तत्तदेव अंगं अस्य शूद्रस्य छेत्तव्यं तन्मनोःअनुशासनम् ।। २७९ ।।

(७) **मणिरामः**। अंत्यजः शद्रः ।। २७९ ।।

(८) **गोविन्दराजः। येनेति**। अन्त्यजः शूद्रो येन केनचिद्धस्तपादादिना वा न साक्षाद्दण्डादिव्यवहितेन वा द्विजमेव प्रहरेत्तत्तदङ्गमेवाऽस्य छेदनीयमित्येवं मनुसम्बन्धी उपदेशो मनुग्रहणमादरार्थमस्यैवोत्तरञ्च ।। २७९ ।।

**पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।।**
**पादेन प्रहरन् कोपात्पादच्छेदनमर्हति ।। २८० ।।**

(१) **मेधातिथिः। उद्यम्योत्क्षिप्यैव** कोपात्ताडनेच्छोस्तदङ्गमनिपातयतोऽस्य पाणिः छेत्तव्यः। दण्डग्रहणं समानपीडाकरस्य हिंसासाधनस्योपलक्षणार्थम्। तेन मृदुशफादावन्यो दण्डः। **पादेन प्रहरन्निति**। अत्राप्युद्यम्येत्यपेक्षितव्यम्। अवगुरतोऽप्येष एव ।। २८० ।।

(२) **सर्वज्ञनारायणः**। उद्यममात्रेत्वाह पाणिमिति। प्रहरन् प्रहारार्थमुद्यमं कुर्वन् प्रहरंश्च ।। २८० ।।

(३) **कुल्लूकः**। अस्यैवोत्तरप्रपञ्चः पाणिमिति प्रहर्तुं पाणिं दण्डं वोद्यम्य पाणिच्छेदं लभते पादेन कोपात्प्रहरणे पादच्छेदं प्राप्नोति ।। २८० ।।

(४) **राघवानन्दः**। येनेत्यस्य विवरणं पाणिमिति पञ्चभिः। दण्डः लगुडादिः। अस्थिभेदनपर्यन्तं कोपादित्यनुवर्तते तदभावे वाग्दण्डादिः ।। २८० ।।

(५) **नन्दनः**। उक्तमर्थं चतुर्भिः श्लोकैः प्रपञ्चयति। पाणिमुद्यम्येति पादेन प्रहरन्पादप्रहारहेतोः पादमुद्यम्येत्यर्थः ।। २८० ।।

(६) **रामचन्द्रः**। पाणिं हस्तं वा उद्यम्य हिंस्यात्तर्हि पाणिछेदनं अर्हति ।। २८० ।।

(७) **मणिरामः**। तदेवस्यष्टयति। पाणिमिति। दंडं वा पाणिना मारणार्थं मुद्यम्य ।। २८० ।।

(८) **गोविन्दराजः। पाणिमुद्यम्येति**। हस्तं दण्डं वावगूर्य हस्तच्छेदनयोग्यो भवति। पादेन क्रोधेन प्रहरन् पादच्छेदनार्हो भवति ।। २८० ।।

(९) **भारुचिः**। एवं च सति न मारणमेव हिंसा। किं तर्हि अनेकोपायसाध्यं च परदु···सेति। अयन्त्व··· द्विजातीनामेवान्योन्यव्यतिक्रमे धनदण्ड उच्यते पूर्ववद्दण्डस्य वैकल्पिकः। एतेषामपत्यल्पापराधोऽपेक्षया ।। २८० ।।

**सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।।**
**कट्यां कृताङ्को निर्वास्यः स्फिचं वाऽस्यावकर्तयेत् ।। २८१ ।।**

(१) **मेधातिथिः।** **उत्कृष्टो** ब्राह्मणो जातितो दौःशील्यादवकृष्टोऽपि। इतरे वर्णा औत्तराधर्येण परस्परापेक्षयोत्कृष्टाश्चावकृष्टाश्च। तत्र **अवकृष्टज** इति जनिना जन्मावकर्ष उपात्तः। तत्संनिधानादुत्कर्षोऽपि जन्मनैव। जन्मना च निरपेक्षोत्कर्षो ब्राह्मणस्य नापकर्षः। तेन शूद्रस्यायं ब्राह्मणेन सहैकमासनमारूढवतो दण्डः। **कटिः** श्रेणी। तत्र कृतचिह्नः। अङ्कविधौ च न सुधाकुंकुमादिना चिह्नकरणमात्रमपि तु दण्डख्यापनार्थम्—अतिक्रमाद्विभियुरिति। तेन देशान्तरे यदनपायि तच्चिह्नमायसो लेखनादुपदिश्यते। तथा च वक्ष्यति "उद्वेजनकरैर्दण्डैश्चिह्नयित्वेति" (३५२)। राष्ट्राच्च निष्कास्यः **स्फिक्** श्रोण्येकदेशः। सव्यो दक्षिणश्च। तं **चावकर्तयेत्।** चिह्नेन विकल्पविधानात्तावन्मात्रश्छेदो न सर्वस्य स्फिजः। **अभिप्रेप्सुरिति।** च नेच्छामात्रेण किंतर्हि प्राप्तवत एव। इच्छाया शक्यापह्नवत्वाद्दण्डस्य च महत्त्वात् ।। २८१ ।।।

(२) **सर्वज्ञनारायणः।** उत्कृष्टस्योत्तमजातेः। अपकृष्टः क्षत्रियादिः। कट्यामिति क्षत्रविशोः शूद्रस्य च तदुभयस्य हास्येच्छायाम्। स्फिचमिति शूद्रस्य ब्राह्मणहासेच्छायाम् ।। २८१ ।।

(३) **कुल्लूकः।** ब्राह्मणेन सहासनोपविष्टः शूद्रः कट्यां तप्तलोहकृतचिन्होपदेशो निर्वासनीयः स्फिचंवास्य यथा न म्रियते तथा छेदयेत् ।। २८१ ।।

(४) **राघवानन्दः।** सहासनं सहोपवेशनम्। उत्कृष्टस्य द्विजातेः। कृताङ्कः कृतचिह्नः। निर्वास्योदेशादेव। स्फिचं कटिं यथा न म्रियते तथा छेदयेत् ।। २८१ ।।

(५) **नन्दनः।** गुणोदोषवशाद्विकल्पः ।। २८१ ।।

(६) **रामचन्द्रः।** अवकृष्टजः शूद्रः उत्कृष्टस्य महासनं अभिप्रेप्सुः ईप्सुः इच्छेत्सः शूद्रः कट्यां कटिप्रदेशे कृताङ्कः कृतलाञ्छनः निर्वास्यः निष्कासनीयः। च पुनः अस्य स्फिचं अवकर्तयेत् ।। २८१ ।।

(७) **मणिरामः।** अपकृष्टजं कटिप्रोथं ।। २८१ ।।

(८) **गोविन्दराजः।** **सहासनमिति।** ब्राह्मणेन सहैकस्मिन्नासने निकृष्टजन्मा शूद्र उपविशन् कट्यां कृततप्तायःस्थिरचिन्हो देशान्निर्वासनीयः। **स्फिजाख्यं वा श्रोण्यधोकर्तनं** कुर्यात् ।। २८१ ।।

**अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः।।**
**अवमूत्रयतो मेढ्रमवशर्धयतो गुदम्।। २८२।।**

(१) **मेधातिथिः।** मूत्रेणावसिंचतोऽभिमुख वा तदवमानार्थं क्षिपतोऽसत्यपि सस्पर्शेऽवमानयते मूत्रेणेति निष्कर्तव्यः। समानफलत्वाद्रेतस्यपि दण्डोऽयम्। 'निष्ठीवनं' नासिका-

स्यन्स्रावः। तस्य घ्राणेन क्षेपे नासापुटच्छेदः–"येनाङ्गेने"त्युक्तत्वात्। 'शर्धनं' कुत्सितो गुदशब्दः। दर्पान्न प्रमादात्॥ २८२॥

(२) **सर्वज्ञनारायणः**। अवनिष्ठीवतः उत्तमस्योपरिनिष्ठीवतः। एवमत्र उपरि-मूत्रणम्। अवशर्धनं कुत्सितगुदशब्दकरणं तदुपरि॥ २८२॥

(३) **कुल्लूकः**। दर्पेण श्लेश्मणा ब्राह्मणमवमानयतः शूद्रस्य राजा द्वावोष्ठौ छेदयेत् मूत्रप्रक्षेपेणापमानयतो मेढ्ं शर्धनं कुत्सितो गुदशब्दः तेनावमानयतोदर्पान्न प्रमादाद्गुदंछेदयेत् ॥२८२॥

(४) **राघवानन्दः**। किंच। अवनिष्ठिवतो द्विजादौ कफादीन्यस्यतः ओष्ठौ छेद-येदेव। मेढ्ं लिंगम्। अवशर्धनं कुत्सितो गुदशब्दस्तत्कुर्वतः॥ २८२॥

(६) **रामचन्द्रः**। दर्पात् अवनिष्ठीवतः द्विजोपरि निष्ठीवनं कुर्वतः द्वावोष्ठौछेदयेत् ॥ २८२॥

(७) **मणिरामः**। अवनिष्ठीवतः ब्राह्मणो परीति सर्वत्रज्ञेयं॥ २८२॥

(८) **गोविन्दराजः**। **अवनिष्ठीवनादिति**। निष्ठीवनेन श्लेष्मणां मर्षेण श्लेष्माणं वमयन् शूद्रस्य द्वावप्योष्ठौ छेदयेदेवं मूत्रेणाऽवमानयतो लिङ्गमधमाङ्गध्वनिनाऽवमानयतः पायुं छेदयेत्॥ २८२॥

**केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्॥**
**पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च॥ २८३॥**

(१) **मेधातिथिः**। दर्पादित्यनुवर्तते। परिभवबुद्ध्या केशेषु ब्राह्मणं **गृह्णतः** शूद्रस्य **हस्तौ छेदयेत्**। द्विवचनमेकेनापि द्वाभ्यां तुल्यपीडाकर उभयच्छेदो नैकस्यैव। **दाढिका** श्मश्रु। अन्यदपि यदङ्गं गृह्यमाणं ग्रीवादितुल्यपीडाकरं तत्र सर्वथाप्ययमेव दण्डः। **अवि-चारयन्**। पीडा कियत्यस्य गृहीतस्य संजाता महती स्वल्पा वेत्येतदनुबन्धश्लोकप्राप्तं विचारणं निवार्यते। ग्रहणमात्रे दण्डः॥ २८३॥

(२) **सर्वज्ञनारायणः**। दाढिकायां श्मश्रुणि। एतत्सर्वमुत्तमेऽधमेन क्रियमाणम् ॥ २८३॥

(३) **कुल्लूकः**। दर्पादित्यनुवर्ततेऽहंकारेण केशेषु ब्राह्मणं गृह्णतः शूद्रस्य पीडाऽस्य जाता न जातावेत्यविचारयन्हस्तौ छेदयेत् पादयोः श्मश्रुणि च ग्रीवायां वृषणे चहिंसार्थं गृह्णतो हस्तद्वयच्छेदमेव कुर्यात्॥ २८३॥

---

(२८३) णेषुच=णेषुवा (क)

(४) **राघवानन्दः**। किंच केशेष्विति। दाढिकायां श्मश्रुणि। हिंसार्थं पादादि-चतुष्टये नरं गृह्णतो हस्तौ छेदयेदित्यन्वयः। वृषणं फलकद्वयम्॥ २८३॥

(५) **नन्दनः**। पादयोरित्यादिषु गृह्णत इत्येव॥ २८३॥

(७) **मणिरामः**। दर्पादित्यनुवर्तते। ब्राह्मणस्यकेशादौ गृह्णतः शूद्रस्य हस्तौ छेदयेत्। घंटिकायां गलाग्रे ॥ २८३ ॥

(८) **गोविन्दराजः**। **केशेष्विति**। केशपादश्मश्रुग्रीवावृषणानां चान्यतमस्माद्-ब्राह्मणं शूद्रस्य हस्ताभ्यामाकर्षयतो हस्ताविलम्बमानो राजा छेदयेत् ॥ २८३ ॥

**त्वग्भेदकः शतं दण्डचो लोहितस्य च दर्शकः ॥**
**मांसभेत्ता तु षण्णिष्कान्प्रवास्यस्त्वस्थिभेदकः ॥ २८४ ॥**

**द्विजातीनामयं परस्परापराधे। शूद्रस्य तु शूद्रापराधे उच्यते।**

(१) **मेधातिथिः**। यः केवलामेव त्वचं भिन्द्याद्विदारयेन्न लोहितं दर्शयेत्तस्य **शतं दण्डः**। तावदेव लोहितदर्शने। यद्यपि त्वग्भेदमन्तरेण न लोहितं दृश्यते तथाप्यधिका-पराधादधिकदण्डे प्राप्ते शतवचनं नियमार्थम्। अन्ये तु कर्णनासिकादेरपि स्रवति शोणितं बहिस्त्वग्भेदेऽपि तदर्थमुच्यत इत्याहुः। तदयुक्तम्। अन्तर्भेदे हि महत्त्वान्महादण्डो युक्तः। तस्माद्यत्रैषत्स्रवति शोणितं तत्र शतम्। शिरोभेदे तु मांसवत्।

**निष्कशब्दः** सुवर्णपरिमाणवाचीत्युक्तम्।

**प्रवास्योऽस्थ्नां भेदकः** तत्प्रयोजक इति। घञन्तेन समासं कृत्वा तं करोतीति पठितव्यः —अस्थिभेदकृदिति।

'प्रवासन'मर्थशास्त्रप्रवृत्त्या मारणम्, निर्वासनं वा। दण्डविधौ ह्यर्थशास्त्रश्रवणं दृश्यते। तथाहि 'दशबन्धमिति' बार्हस्पत्य औशनस्ये च प्रयोगः। निर्वासनं ब्राह्मणस्य नान्येषाम् ॥ २८४ ॥

(२) **सर्वज्ञनारायणः**। त्वग्भेदक इत्यादिसमावकृष्टविषयापराधकरणे। शतं पणान्। षट् निष्कान् दीनारान्। प्रवास्यो देशान्निर्वास्यो गृहीतसर्वस्वः। अस्थिभेदकोऽस्थिभङ्ग-प्रहारकृत् ॥ २८४ ॥

(३) **कुल्लूकः**। चर्ममात्रभेदकृत्समानजातिर्न शूद्रो ब्राह्मणस्य दण्डलाघवं पणशतं दण्डनीयः तथा रक्तोत्पादकोपि पणशतमेव दण्डचः मांसभेदी षण्णिष्कान् दाप्यः अस्थि-भेदकस्तु देशान्निर्वास्यः ॥ २८४ ॥

(४) **राघवानन्दः**। त्वग्भेदक इत्ययं श्लोकः शूद्रस्य समानजातिविषयो दण्डस्य लाघवादिति ॥ २९४ ॥

(५) **नन्दनः**। एवं तावदसमजातिविषये दण्डमाह त्वग्भेदक इति। शतं पणानाम् ॥ २८४ ॥

(६) **रामचन्द्रः**। त्वग्भेदको द्विजः शतं दण्डयः। च पुनः शोणितस्य च दर्शकः **दण्डयः। एषां संभेत्ता दंडयः** अस्तिभेदको गृहीतसर्वस्वः प्रवास्यः ॥ २८४ ॥

(८) **गोविन्दराजः। त्वग्भेदक इति।** चर्ममात्रभेदकृत्समानजातिः न तु शूद्रो ब्राह्मणस्य दण्डलाघवात्पणशतं दण्डनीयः। तथा रुधिरोत्पादी शतमेव दण्ड्यो मांसभेदकृत् षड् निष्कान् दण्ड्योऽस्थिभेदी देशान्निर्वास्यः ॥ २८४ ॥

**वनस्पतीनां सर्वेषामुपभोगो यथा यथा ॥**
**तथा तथा दमः कार्यो हिंसायामिति धारणा ॥ २८५ ॥**

(१) **मेधातिथिः।** वनस्पतिग्रहणं सर्वस्थावरप्रदर्शनार्थम्। फलपुष्पपत्रच्छायादिना महोपभोग्यस्य वृक्षस्य हिंसायां दण्ड उत्तमसाहसः, मध्यमस्य मध्यमो निकृष्टस्य प्रथमः। तथा स्थानविशेषो द्रष्टव्यः—पत्रच्छेदः फलच्छेदः शाखाछेद इति। फलानामपि विशेषो महार्घता दुष्प्रापता। तथा स्थानविशेषोऽपि द्रष्टव्यः—सीम्नि चतुष्पथे तपोवन इति ॥ २८५ ॥

(२) **सर्वज्ञनारायणः।** उपभोगो यथाधिकः कस्यचिच्छायामात्रेणान्यस्य पुष्पैरन्यस्याम्रादेः फलैरपीत्यादि ॥ २८५ ॥

(३) **कुल्लूकः।** वृक्षाद्युद्भिदां सर्वेषां येन येन प्रकारेणोपभोगः फलपुष्पपत्रादिनोत्तममध्यमाधमरूपो भवति तथा तथा हिंसायामप्युत्तमसाहसादिर्दण्डो विधेय इति निश्चयः। तथा च विष्णुः फलोपभोगद्रुमच्छेदि तूत्तमं साहसं पुष्पोपभोगाद्रुमच्छेदी मध्यमं वल्लीगुल्मलताछेदी कार्षापणशतं तृणच्छेद्येकं कार्षापणं च पण एवमनुनाप्युक्तो वेदितव्यः ॥ २८५ ॥

(४) **राघवानन्दः।** नृकायदण्डप्रसंगेन स्थावरस्यापि। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्तीति श्रुतेः। तस्मात्पश्यन्ति पादपा इति स्मृतेस्तेषां कायाभिमानित्वेन हिंस्यत्वात्तत्कर्तुः प्रथमसाहसादिर्दण्डो ज्ञेय इत्याह वनस्पतीनामिति। तथा च विष्णुः॥ फलोपभोगद्रुमच्छेत्ता तूत्तमसाहस पुष्पोपभोगच्छेदी कार्षापणशतं तृणच्छेद्येकपणमिति। छेद्यत्रहिंसकः। धारणा शास्त्रमर्यादा॥ २८५॥

(५) **नन्दनः।** वनस्पतीनां स्थावराणां हिंसायामुपभोगगुरुलाघवापेक्षया दण्डः कल्प्यः ॥ २८५ ॥

(६) **रामचन्द्रः।** हिंसायां छेदनेन इति सर्वत्र धारणा मर्यादा ॥ २८५ ॥

(७) **मणिरामः।** यथा यथा उपभोगः फलपुष्पपत्रादीनां उत्तममध्याऽधमरूपः तथा तथा हिंसायामपि छेदनेपि दंडः उत्तम साहसादिकार्यः। इदं स्पष्टं विष्णुस्मृतौ। फलोपभोगद्रुमच्छेदीतूत्तमं साहसं पुष्पोपभोगी मध्यमं वल्लीगुल्मलताछेदी कार्षापणशतं तृणछेककार्षापणमिति॥ २८५॥

(८) **गोविन्दराजः। वनस्पतीनां सर्वेषामुपभोगो यथा यथेति।** छायादानात्मकेन निकृष्ट उपभोगः वनस्पतिवृक्षाणां सर्वेषां येन येन प्रकारेण उपभोगः कुसुम(मा) दानरूपेण मध्यमः फल(ला) दानमात्रेणोत्कृष्टः तदपेक्षया छेदने दण्डः कार्यः। छायामात्रोपभोगिनि वटादौ स्वल्पो दण्डः पुष्पोपभोगिनि मल्लिकादौ मध्यमः फलोपभोगिनि आम्रादावुत्कृष्टः ॥ २८५ ॥

**मनुष्याणां पशूनां च दुःखाय प्रहृते सति ॥**
**यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥ २८६ ॥**

(१) **मेधातिथिः।** यदुक्तं त्वग्भेदक इति तस्य विशेषोऽयम्। असति मनुष्यग्रहणे प्राणिमात्रहिंसाविषयत्वेऽस्य श्लोकस्य महापशूनां क्षुद्राणां च पशुपक्षिमृगाणां तुल्यदण्डता मा भूदिति तदर्थमिदम्।

**यथा यथा महद्दुःखमिति।** स्वल्पे भेदने शोणिते च प्राणिनां महत्त्वादल्पत्वे प्रहारस्य। शतादूनोऽपि दण्डः। महति शतादभ्यधिकोऽपि।

अन्ये तु महद्ग्रहणान्महति दुःखे दण्डवृद्ध्यर्थे नाल्पेऽपचयार्थम्। यथाश्रुतमेव तत्र **दुःखाय प्रहृते** दुःखोत्पत्त्यर्थं प्रहारे। प्रमादतस्तु न वृद्धिः। "अनुबन्धं परिज्ञाय" इत्यस्यैव श्लोकद्वयमुदाहरणभङ्ग्या व्याख्येयम्॥ २८६॥

(२) **सर्वज्ञनारायणः।** दुःखाय न मरणाय॥ २८६॥

(३) **कुल्लूकः।** मनुष्याणां पशूनां पीडोत्पादनार्थं प्रहारे कृते सति यथा यथा पीडाधिक्यं तथा तथा दण्डमप्यधिकं कुर्यात्। एवं च मर्मस्थानादौ त्वग्भेदनादिषु कृतेषु त्वग्भेदकः शतं दण्ड्य इत्युक्तादप्यधिको दण्डो दुःखविशेषापेक्षया कर्तव्यः॥ २८६॥

(४) **राघवानन्दः।** मनुष्यादीनामपि दुःखतारतम्याद्दण्डतारतम्यमाह मनुष्याणामिति। प्रहृते प्रहारे कृते॥ २८६॥

(५) **नन्दनः।** मनुष्याणां पशूनां च मध्ये कस्मिंश्चिद्दुःखाय प्रहृते सति दुःखतारतम्येन दण्डं कुर्यात्॥ २८६॥

(७) **मणिरामः।** प्रहृते प्रहारे कृते सति॥ २८६॥

(८) **गोविन्दराजः।** **मनुष्याणामिति।** मनुष्याणां पशूनाञ्च पीडोत्पादनार्थं प्रहारे दत्ते सति यथा यथा महती पीडा त्वग्भेदादावपि मर्मभेदनादिना भवति तथा तथा त्वग्भेदकरी शतं दण्ड्य इत्येवमादितोऽधिकमपि दण्डं कुर्यात्॥ २८६॥

**अङ्गावपीडनायां च प्राणशोणितयोस्तथा ॥**
**समुत्थानव्ययं दाप्यः सर्वदण्डमथापि वा ॥ २८७ ॥**

(१) **मेधातिथिः।** **अङ्गानामवपीडना** दृढरज्ज्वादिग्रहणसन्धिविश्लेषणादिना। तत्र यावता धनेन पथ्यभिषगौषधादिमूल्येन प्रत्यापत्तिमायाति तावत् पीडितस्य दाप्यः। एवं **प्राणशोणितयो**रवपीडनानामिति समस्तमपि योज्यम्। अथवा **प्राणशोणितयोः** समुत्थानव्ययं दाप्य इति संबन्धः सामर्थ्यादपचितयोरिपि लभ्यते। **समुत्थानं** प्रकृत्यापत्तिः। **प्राणो** बलम्। प्रहारेणास्वस्थस्य भोजनादृते कार्श्याद्युपपत्तौ बलमपचीयते। तत्राङ्गेऽनष्टे प्रत्यागते च यावद्बललाभस्तावत्तदुपयोगि यत्किंचिद् घृततैलादि दापनीयः। एवं शोणिताद्युत्पत्तौ तद्दुर्बलीभूतस्य व्याध्यन्तरं वा प्राप्तस्याप्रकृतशरीरावस्थाप्राप्तेः समुत्थानव्ययं दाप्यः।

न चेत्तद्गृह्णाति तदा तच्च दण्डं च परिपिण्ड्य सर्वं राज्ञे दद्यात् ।। २८७ ।।

(२) **सर्वज्ञनारायणः।** अङ्गावपीडनमङ्गभङ्गः। व्रणो मांसभेदः। शोणितं त्वग्भेदेन रक्तोत्पादः। समुत्थानं संरोहणं। तद्यावता भवति भग्नादीनां तावत् भग्नाङ्गादिभ्यो दापनीयः। प्राणपदं व्रणपदस्थाने क्वचित्पठ्यते तत्र प्राणो बलं तस्य समुत्थानं प्रागवस्था प्राप्तिः। तथा सर्वं दण्डं प्रागुक्तं यथायोग्यं दण्ड्यः। वेति समुच्चये।। २८७।।

(३) **कुल्लूकः।** अङ्गानां करचरणादीनां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्वावस्था प्राप्तिः समुत्थान संबन्धो भवति तावत्कालेन पथ्यौषधादिना यावान्व्ययो भवति तमसौ दापनीयः अथ तं व्ययं पीडोत्पादकोन दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दण्डस्तमेनं दण्डत्वेन राज्ञा दाप्यः ।। २८७ ।।

(२८७) व्रण ।ि ।तयोस्तथा=प्राणशोणितयोः (ट, ठ, ड, त, थ)

(४) **राघवानन्दः।** तेषामेव पीडाविशेषनिमित्तं दण्डविशेषमाह अङ्गेति अङ्गानां करचरणादीनाम्। प्राणे निश्वासावरोधने कृते। समुत्थानव्ययं येन व्ययेनौषधादिना समुत्थातुमर्हति तं दातुं नेच्छति तावदेवासौ दाप्यः त्वग्भेदकः शतमित्यनेनोक्तं सर्वं तावदभावे सर्वस्वं देयमित्याह सर्वेति। एतत्तु वधमुद्दिश्य पीडामात्र इति पूर्वस्माद्भेदः ।। २८७ ।।

(५) **नन्दनः।** अङ्गावपीडनायां कृतायां व्रणशोणितयोश्च कृतयोः समुत्थाननामावृत्यावर्त्तितं तदर्थं व्ययं समुत्थानव्ययमपीडिताय राज्ञा विचिकित्सादिहेतोर्दाप्यः अपि च सर्वं दण्डम्। अथवैतस्मिन्निमित्ते यावद्राज्ञः प्रदेयं दण्डात्मकं द्रव्यं तावत्पीडितायापि पीडको दाप्यः ।। २८७ ।।

(७) **मणिरामः।** समुत्थानव्ययं दाप्यः यावता कालेन पूर्वावस्थाप्राप्तिसमुत्थानसंबंधो भवति तावत्कालेन पथ्यौषधादिना यावान्व्ययो भवति तावद्द्रव्यमसौ दापनीय इत्यर्थः।। अथ तं व्ययं दातुं चेन्नेछति तदा राज्ञा सर्वं तं व्ययं दंडत्वेन दाप्यः ।। २८७ ।।

(८) **गोविन्दराजः। अङ्गावपीडनानाञ्च घ्राणे शोणितयोस्तथा। समुत्थानव्ययं दाप्यः शतदण्डमथापि वा।** अङ्गेनोदरबाहवादीनां येन वस्त्रादिबन्धनादिना पीडनानि कृतानि तथा प्राणस्य वायोर्येन निरोधादिना पीडनानि कृतानि रुधिरस्यापि येन दृढमुष्टिरज्ज्वाद्याकर्षणेन बहिःस्रवणवर्जितमपि पीडनं कृतं सशरीरस्य प्राग्रूपापत्त्युत्पादकमौषधादिव्ययं तस्य राज्ञा दापनीयः। आत्मीयश्च दण्डमसौ समुत्थानव्ययं न गृह्णाति तदा तद्व्ययं दण्डं चोभयमपि दण्डार्थं राज्ञा दापनीयः ।। २८७ ।।

**द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।।**
**स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम् ।। २८८ ।।**

(१) **मेधातिथिः। द्रव्याणि** गृहोपकरणाद्यन्यानि वाऽनुक्तदण्डविशेषाणि शूर्पोलूखलघटस्थालीपिठरादीनि। तेषां 'हिंसा' प्राग्रूपनाशः सत्यपि कार्यक्षमत्वे। **ज्ञानतोऽज्ञानत इति** प्रमादकृते बुद्धिपूर्वे चाविशेषेण हिंसनात् तस्य द्रव्यस्वामिनो जनयेत्परितोषं

तद्रूपान्यदानेन मूल्येन प्रणयेन वा। राज्ञे तु द्रव्यमूल्यं द्रव्यं वा दद्यात्। अस्य क्वचिदपवादः ॥ २८८ ॥

(२) **सर्वज्ञनारायणः**। हिंस्यात् विनाशभङ्गादिना। तुष्टिमुत्पादयेत् वाचापि। तत्समं तन्मूल्येन तुल्यं दण्डम्। ज्ञानतोऽज्ञानतस्त्वर्धमित्यर्थसिद्धत्वान्नोक्तम्। तुष्ट्युत्पादने तु न विशेष इति तदपेक्षया ज्ञानतोऽज्ञानत इत्युक्तम् ॥ २८८ ॥

(३) **कुल्लूकः**। द्रव्याण्यनुक्तविशेषदण्डानि कटकानि ताम्रघटादीनि यो यस्य ज्ञानादज्ञानाद्वा नाशयेत्स तस्य द्रव्यान्तरादिना तुष्टिमुत्पादयेत् राज्ञश्च विनाशितद्रव्यसमं दण्डं दद्यात् ॥ २८८ ॥

(४) **राघवानन्दः**। द्रव्यनाशोपि हिंसाविशेषोऽतस्तत्रापि स्वामिनो मूल्यद्रव्यादिना तुष्टिं विदधदपि राजकीय दण्डमर्हतीत्याह द्रव्याणीति। तुष्टिं प्रणिपातेन धनेन वा। राज्ञस्तु तत्समं नाशितद्रव्यमूल्यसमं दद्यात् ॥ २८८ ॥

(५) **नन्दनः**। द्रव्याणि वस्त्रादीनि तुष्टिमुत्पादयेत्तदा द्रव्यदानादिना। तत्सम हिंसितद्रव्यसम अज्ञानतो हिंसायां तुष्टिर्ज्ञानतो हिंसायां तुष्टिश्च राज्ञे तत्सम द्रव्यदान च॥ २८८॥

(६) **रामचन्द्रः**। द्रव्याणि वस्तूनि यो यस्य हिंस्यात् ज्ञानतः पूर्णदण्डः कार्यः। अज्ञानतः अज्ञानपूर्वके नाशे अर्धदण्डः ॥ २८८ ॥

(७) **मणिरामः**। द्रव्याणि अनुक्तविशेषदंडानि ताम्रघटादीनि। हिंस्यात् नाशयेत् ॥ २८८ ॥

(८) **गोविन्दराजः**। **द्रव्याणीति**। चर्मचार्मिकादि वक्ष्यमाणमतिरक्तानि कटकाऽङ्गदादीनि द्रव्याणि यस्य सम्बन्धीनि यो हठात्प्रमादाद्वा नाशयेत्स तस्य प्रतिसंस्कारादिना तुष्टिमुत्पादयेद्राज्ञे विनाशितद्रव्यसमानं दण्डं दद्यात् ॥ २८८ ॥

**चर्मचार्मिकभाण्डेषु काष्ठलोष्ठमयेषु च ॥**
**मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च ॥ २८९ ॥**

(१) **मेधातिथिः**। चर्मचार्मिकयोर्द्वन्द्वं कृत्वा भाण्डपदेन विशेष्येण समासः। अथवा चार्मिकभाण्डयोर्विशेषणसमासं कृत्वा चर्मशब्देन द्वन्द्वः। चर्मविकाराच्चार्मिकाणि भाण्डानि कटिसूत्रवस्त्रादीनि। **चर्माण्य**विकृतानि गवादीनाम्। अथवा **चर्मभाण्डानि** केवल चर्ममयानि, चर्मावनद्धानि **चार्मिकाणि**। **काष्ठमय**भाण्डान्युलूखलमुसलफलकादीनि। **लोष्ठो** मृद्विकारः पाषाणाकृतिः पिण्डीभूता मृत्। तन्मयानि स्वल्पपाकाधानादीनि। तन्नाशने **मूल्यात्पञ्चगुणो दण्डः**। तुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव ॥ २८९ ॥

(२) **सर्वज्ञनारायणः**। पूर्वोक्तापवादस्थानमाह चर्मेति। चर्म स्वरूपतः। चार्मिकं चर्मनिर्मितं भाण्डम्। काष्ठभाण्डेषु लोष्टेन मृदा कृतेषु च भाण्डेषु नाशितेषु द्रव्यवते मूल्यं दाप्यः। तथा मूल्यात्पञ्चगुणो नृपाय ॥ २८९ ॥

(३) **कुल्लूकः।** चर्मणि चर्मघटितवरत्रादौ चर्मकाष्ठमृत्तिकानिर्मितेषु च भाण्डेषु पुष्पमूलफलेषु परस्य नाशितेषु मूल्यात्पञ्चगुणो दण्डो राज्ञो देयः स्वामिनश्च तुष्टिरुत्पादनीयैव ॥ २८९ ॥

(४) **राघवानन्दः।** द्रव्यविशेषे तद्भेदमाह चर्मेति। चर्मणि तन्निर्मितेषु लोष्टोत्र मृत् तन्निर्मितेषु घटादिषु एतेषु नाशितेषु। स्वामिनस्तुष्टयुत्पादोनुवर्तते ॥ २८९ ॥

(५) **नन्दनः।** चार्मिकभाण्डादिषु हिंसितेष्विति विपरिणामः। लोष्टं मृत्पिण्डः चर्मादिभ्योन्यत्र पूर्वोक्तस्तत्समो दण्डः ॥ २८९ ॥

(६) **रामचन्द्रः।** चर्मादिभाण्डेषु नष्टेषु चर्मोस्यायंचार्मिकः मूल्यात्पञ्चगुणोदण्डः द्रव्यस्वामिने मूल्यं पञ्चगुणंदेयम् ॥ २८९ ॥

(७) **मणिरामः।** चर्मचार्मिकभांडेषु चर्मणि चर्मघटितभांडेषु। काष्ठलोष्टमयेषु च भांडेषु ॥ २८९ ॥

(८) **गोविन्दराजः। चर्मचार्मिकभाण्डेष्विति।** चर्मसु चर्मकाष्ठमृण्मयेषु भाण्डेषु पुष्पमूलफलेषु च परकीयेषु च नास्ति तेषु तन्मूल्यात्पञ्चगुणो दण्डो राज्ञाऽऽदेयः तुष्टयुत्पत्तिश्च स्वामिनः कार्या ॥ २८९ ॥

**यानस्य चैव यातुश्च यानस्वामिन एव च ॥**
**दशातिवर्तनान्याहुः शेषे दण्डो विधीयते ॥ २९० ॥**

(१) **मेधातिथिः।** सत्यामपि हिंसायां क्वचिद्दोषो नास्तीत्येतदनेन प्रकरणेन प्रदर्श्यते। **यानं** गन्त्र्यादि यदारुह्य यान्ति पन्थानम्। तच्च गन्त्र्यादि बलीवर्दगर्दभमहिषादिवाह्यम्। त एव वा गर्दभादयः पृष्ठारोह्या **यानानि। याता** तदारूढः सारथ्यादिः। **यानस्वामी** यस्य तत्स्वयानम्। तत्रैषां चक्रवेगादिभी रथ्याकर्षणयुक्तैर्वाऽश्वादिभिः कस्यचिद्द्रव्यस्य नाशो वा मरणम्। तत्र पशुस्वामिपालव्यतिक्रमन्याये प्राप्ते कदाचिद्यातुर्दोषः कदाचित्स्वामिनः कदाचिदुभयोः कदाचिन्न कस्यचिदपीति यो विशेषस्तत्र नोक्त इहैवेष्यते—स उच्यते। **अतिवर्तनानि**—अतिक्रम्य हिंसादण्डं वर्तते, नात्र दण्डोऽस्ति, दण्डनिमित्तानि न भवन्तीति यावत्। **शेषे दण्ड** उक्तेभ्यो निमित्तेभ्योऽन्यत्र। तान्यपि वक्ष्यति ॥ २९० ॥

(२) **सर्वज्ञनारायणः**। यानस्य यद्यपि पश्वदेर्न दण्डस्तथापि शिबिकावाहकमनुष्यादिरूपस्यास्तीति यानग्रहणम्। यातुयपियितुर्नेतुःसारथ्यादेः। यानस्वामिनोऽधिकृतस्य। वक्ष्यमाणान्यतिवर्तनानि दण्डातिवृत्तेर्दण्डातिभावस्थानानि। **अभिवर्तनानीति क्वचित्पाठः।** तत्र दण्डार्थं निवर्तनं विरोधनं नास्तीत्यर्थः ॥ २९० ॥

(३) **कुल्लूकः।** यानस्य रथादेर्यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानं तेषां छिन्ननास्यादीनि दशनिमित्तानि दण्डमतिक्रम्य वर्तन्ते एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च प्रकृते यानस्वामिनां दण्डो न भवतीति मन्वादय आहुः। एतद्व्यतिरिक्तनिमित्ते च पुनर्दण्डोऽनुष्ठीयते ॥ २९० ॥

(४) **राघवानन्दः।** अत्रैव प्रतिप्रसवमाह यानस्येति। यानस्य रथशकटादेः। छिन्नास्यादिदशानिमित्तिकान्दण्डानतिक्रामन्तीत्यतिवर्तनानि। नैतेषु निमित्तेषु दण्डः यातुः सारथेः तदारूढस्य यानस्वामिनश्च न स्यात्। तथा च वक्ष्यमाणानि दशनिमित्तानि वर्जयित्वा शेषे दण्ड इत्यन्वयः ।। २९० ।।

(५) **नन्दनः।** यानस्य शकटादेः यातुः सारथेः यानस्वामिनो यानारूढस्य च दशातिवर्त्तनान्याहुः दण्डविधानरहितानि दशातिक्रमणान्याहुरित्यर्थः। शेष इति वर्त्तने दण्डो-विधीयते न तेषु दशस्विति ।। २९० ।।

(६) **रामचन्द्रः।** यानादिकानां भग्ने सति दशातिवर्तनान्याहुः शेषस्थाने दण्डो-विधीयते ।। २९० ।।

(७) **मणिरामः।** यातुः सारथ्यादेः। दशातिवर्तनानि वक्ष्यमाणानि छिन्नास्यादीनि। दश निमित्तानि दंडं अतिक्रम्य वर्त्तंते। एषु निमित्तेषु सत्सु प्राणिमारणे द्रव्यनाशे च जाते दंडो न भवति इति मन्वादयः आहुः। शेषे एतद् व्यतिरिक्त निमित्ते दंडो विधीयते ।। २९० ।।

(८) **गोविन्दराजः। यानस्येति।** यानस्य गन्त्र्यादेर्यातुश्च सारथ्यादेर्यानस्वामिनः यत्सम्बन्धि यानं तेषां छिन्नासारथ्यत्वादीनि वक्ष्यमाणानि निमित्तादिनि अतिवर्तनानि दण्डञ्चातिक्रम्य वर्तन्ते। तेषु सत्सु यानेन प्राणिहिंसाद्रव्यविनाशयोरपि कृतयोर्यानस्वा-म्यादीनां सारथ्ये इत्येवं सारथ्यादि सम्बन्धिवाग्दाने सति यानेन प्राणिहिंसाद्रव्य विनाशयोः सारथ्यादेः दण्डो न भवतीति मन्वादय आहुस्तन्न, निमितव्यतिरेकेषु पुनर्दण्डः क्रियते ।। २९० ।।

यत्र नास्ति दोषस्तानि तावदाह—

**छिन्ननास्ये भग्नयुगे तिर्यक्प्रतिमुखागते ।।**
**अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ।। २९१ ।।**

(२) **सर्वज्ञनारायणः।** तान्याह छिन्ननास्य इति। वाहकाक्षादिरज्जुच्छेदे भङ्गे युगकाष्ठस्य दैवादभिघातादिना तिर्यग्गते याने तथा प्रतिमुखागते प्रत्यावृत्यागते ।। २९१ ।। तिर्यग्गते याने तथा प्रतिमुखागते प्रत्यावृत्यागते ।। २८१ ।।

(३) **कुल्लूकः।** नासायां भवंनास्यं शरीरावयवत्वाद्यत्। सा चेहबलीवर्दनासा-संबंधिनीरज्जुः छिन्ननास्यरज्जौ बलीवर्दादिके भग्नयुगाख्ये काष्ठे रथादौ भूमिवैषम्यादिना तिरश्चीनं वा गते तथा चक्रान्तःप्रविष्टाक्षकाष्ठभङ्गयन्त्राणां चर्म बंधनानां छेदने योक्तस्य पशुग्रीवारज्जौ रश्मेः प्रहरणस्य छेदनेऽपसरापसरेत्युच्चैः शब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसाद्रव्यविनाशयोःकृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराह ।। २९१ ।। २९२ ।।

(४) **राघवानन्दः।** तान्येवाह छिन्नेति द्वाभ्याम्। छिन्ननास्ये नासायैतत्संबन्धिर-ज्जुद्रव्यं तस्मिन्बलीवर्दादिना छिन्नं। भग्नयुगे युगाख्ये रथकाष्ठे भग्ने। तिर्यक्प्रतिमुखागते भूमिवैषम्यात्प्रतीचीन आगते। अक्षभङ्गे चक्रान्तःकाष्ठमक्षम् ।। २९१ ।।

(५) **नन्दनः।** तान्येवातिवर्त्तनानि श्लोकद्वयेनाह छिन्ननास्य इति। छिन्ननास्ये-छिन्ननासिकारज्जौ याने सति यन्तारमतिक्रम्य तिर्यगागते प्रतिमुखमागते च ।। २९१ ।।

(६) **रामचन्द्रः।** द्वाभ्यामाह छिन्ननास्य इति ।। २९१ ।।

(७) **मणिरामः।** तानि निमित्तान्याह। छिन्नेति। नासायां भवं नास्यं। बलीवर्द्दनासा संबंधिनीरज्जुस्तस्मिन् रज्जौ छिन्ने त्रुटिते। तत्समये चेद्बलीवर्दो मनुष्यादीन् मारयति द्रव्यंवानाशयति तदातत्स्वामी न दंडनीयः। एवं भग्नयुगसमये। तिर्यक् प्रतिमुखागते भूमिवैषम्यादिना तिरश्चीनंगते। अक्षभंगे चक्रमध्यप्रविष्टकाष्ठभंगे। चक्रभंगे च ।। २९१ ।।

(८) **गोविन्दराजः।** **छिन्नास्य इति। छेदन इति।** छिन्ननासिकारज्जौ बलीवर्दे भग्ने युग्माख्यकाष्ठे गन्त्र्यादौ भूमिविषमादिना तिरश्चीनं वा गतं प्रतीचीनं वा तथा यानस्य गन्त्र्यादेष्वक्षमप्रविश्य कीलकादि तस्य भङ्गे यन्त्राणाञ्च चर्मबन्धानां छेदने योक्त्राख्य-पशुग्रीवाकाष्ठरज्जुछेदनेऽपसरापसरेत्येवं सारथ्यादिसम्बन्धिनि चाह्वाने सति यानेन प्राणि-हिंसाद्रव्यविनाशयोः सारथ्यादेर्दण्डो न भवति इति मनुराह ।। २९१ ।। २९२ ।।

**छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च ।**
**आक्रन्दने चाप्यपैहीति न दण्डं मनुरब्रवीत् ।। २९२ ।।**

(१) **मेधातिथिः।** नासायां भवं **नास्यम्।** शरीरावयवाद्यत्। नासिकापुटसंयोगिनी बलीवर्दानां रज्जुरश्वानां खलीनं हस्तिनामङ्कुशः। तस्मिन् **छिन्ने** त्रुटिते। **युगे च भग्ने।** रथाङ्गकाष्ठं युगम्। छिन्नं नास्यमस्येति बहुव्रीहिणा रथ उच्यते पशुर्वा—उभयोरपि साक्षा-त्पारंपर्येण संबन्धात्। **तिर्यक्प्रतिमुखागते** याने। तिरश्चीनं वा प्रतीचीनं वा कथंचिद्भू-वैषम्यात्पशुत्रासाद्वा यानं गच्छत् कंचिदपराध्येन्न दुष्येत्। प्राजको हि संमुखीनाञ्छक्तो रक्षितुं तिर्यक् प्रत्यगवस्थितौ त्वदृश्यमानस्य कथं रक्षतु। 'प्रतिमुखागतं' प्रत्यगावृत्तिः।

अन्ये तु तिर्यगागते हिंस्यमाने ऋजुगामिन्येव याने न दोषमाहुः—प्रतिमुखं चाभिमुखं मन्यन्ते। अभिमुखागतः किमिति चक्रिणं दृष्ट्वा पन्थानं न ददाति।

**अक्षचक्रे** रथाङ्गे प्रसिद्धे। **यन्त्राणि** चर्मबन्धनानि शकटकाष्ठानाम्। **योक्त्रं** पशु-ग्रीवाकाष्ठम्। **रश्मिः** प्रग्रहो हस्तप्रधृतो युग्यानां संचरणनियमनार्थः। **आक्रन्द** उच्चैः शब्दोऽपैहीत्यपसरेत्यर्थः। इतिकरणो भाषाप्रसिद्धतदर्थशब्दोच्चारणार्थो, न त्वयमेव शब्दः प्रयोक्तव्यः। अविधेयेषु युग्येष्वपसरापसरेति क्रोशतः प्राजकस्य पथो नातिक्रामन्यदि हिंस्यान्न दोषः ।। २९२ ।।

(२) **सर्वज्ञनारायणः।** यन्त्राणां काष्ठसन्धिघटनानाम्। योक्त्रं युगादिबन्धनरज्जुः। रश्मिः अश्वापकर्षणरज्जुः ।।आक्रन्दे सारथिनान्येनवाक्रुष्टे। अशक्यनिवर्तनत्वे सतीदम् ।। २९२ ।।

(४) **राघवानन्दः।** यन्त्राणां चर्मबद्धानाम्। योक्त्ररश्म्योः योत्क्रस्य पशुग्रीवा-स्थरज्जोः रश्मेः प्रग्रहस्यच छेदने। आक्रन्दे सारथ्यादिना अपेहीत्युक्ते। एतैर्हि प्राणि-हिंसाद्रव्यनाशयोःसत्वेपि सारथ्यादेर्न दण्ड इति मनुरब्रवीदित्यन्वयः।। २९२।।

(५) **नन्दनः।** योत्क्रस्य छेदने च यन्तुर्यानस्वामिनोर्यानारूढानां वा दण्डं मनुरब्रवीत् ॥ २९२ ॥

(६) **रामचन्द्रः।** चक्ररश्म्योः युगबन्धनरज्जुः आक्रंदेत् पृष्ठे इति अपेहि ॥ २९२ ॥

(७) **मणिरामः।** यंत्राणां चर्म बंधनानां। योत्क्रः पशुग्रीवारज्जोः। रश्मेः वलीवर्दादि प्रग्रहरज्जोः। छेदनसमये। आक्रंदे सावधानो भव इति उच्चैः सारथ्यादिना शब्दे कृते अपैहि याहीति शब्दे कृते च न दंड्यः ॥ २९२ ॥

**यत्रापवर्तते युग्यं वैगुण्यात्प्राजकस्य तु।**
**तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥ २९३ ॥**

(१) **मेधातिथिः।** प्राजको यानसारथिस्तस्य **वैगुण्य**मशिक्षितत्वं न तु प्रमादः। प्रमादे हि शिक्षितस्य स्वामिनो न दोषः। तस्माद्धेतोर्यदि **युग्यं** यानं सहसाऽ**पवर्तते** स्पष्टं मार्गं हित्वा तिर्यक् पश्चाद्वा गच्छेत् किंचिन्नाशयेत्तत्र **स्वामी दण्ड्यः।** अशिक्षितः प्राजकः किमित्यारोपितः। "मनुष्यमारणे क्षिप्रम्" (२९६) इत्यादिना वक्ष्यमाणेन प्राणिभेदेन द्रव्यभेदेन च दण्डान्तरविधानाद्द्विशतमित्यविक्षितम्। दण्डनिमित्तमेतदित्येतावतैव वाक्यस्यार्थवत्वादुत्तरत्र न कश्चिदन्योऽर्थः श्रूयते येन वाक्यं तत्र संख्याविधायकमित्युच्येत ॥ २९३ ॥

(२) **सर्वज्ञनारायणः।** अपवर्तते व्यावर्तते युग्यं रथादि। वैगुण्यादज्ञानात्। स्वामी दण्ड्यः तादृक्सारथिकरणात्। अङ्गभङ्गादिरूपायां हिंसायां भूतायां द्विशतं पणान्दण्ड्यो नान्यथा ॥ २९३ ॥

(३) **कुल्लूकः।** यत्र सारथेरकौशलाद्यानमन्यथा व्रजति तत्र हिंसायामशिक्षितसारथ्यनियोगस्वामी द्विशतं दण्डं दाप्यः स्यात् ॥ २९३ ॥

(४) **राघवानन्दः।** एतदन्यत्र दण्डमाह यत्रेति। प्राजकस्य सारथेर्वैगुण्यादकौशलात्। युग्यं रथशकटादि। तन्निमित्तहिंसायां स्वामी द्विशतं दण्ड्य इत्यन्वयः ॥ २९३ ॥

(५) **नन्दनः।** यत्र निमित्ते युग्यं यानं रथादिकं प्राजकस्य वैगुण्यात्सारथेरसामर्थ्यादवर्तते विषमं प्रवर्तते तत्र निमित्ते मनुष्यपश्वादिहिंसायां द्विशतंदमंस्वामी दण्ड्योभवेदनाप्तप्राजकनियोगात् प्राजकस्य मनुष्यमारणे क्षिप्रसंचोरवदित्यादि श्लोकद्वये वक्ष्यमाणसर्वजनसामान्येति एवं दण्ड इत्यवगन्तव्यम् ॥ २९३ ॥

(६) **रामचन्द्रः।** अथ यत्र स्थानात् युग्यंरथं॥ युग्यंपत्रंच धोरण इत्यमरः॥ प्राजकस्य सारथेः वैगुण्यात् अपवर्तते तत्स्वामी दण्ड्यः भवेत् ॥ २९३ ॥

(७) **मणिरामः।** दंडनिमित्तान्याह॥ यत्रेति। प्राजकस्य सारथेः वैगुण्यात् अकौशलात् युग्यं रथादि यानं अपवर्तते अन्यथा व्रजति तत्रहिंसायां स्वामीद्विशतं दमं दंड्यः। अशिक्षित सारथ्यनियोगात्स्वामिनो दंडः॥ २९३ ॥

(८) **गोविन्दराजः। यत्रापवर्तते युग्यमिति।** यत्र पुनः सारथेरकौशल्यात् यानमन्यथा प्रजति तत्र हिंसायामकुशलसारथिकरणाद्यानस्वामी द्विशतं दण्डं दाप्यः। सारथेश्च

मनुष्यमारणे सत्यपि अविलम्बत्वं क्षिप्रमित्येव सारथिर्वक्ष्यमाणो भवति। एवञ्च द्विशतग्रहस्योत्तरश्लोके च शतग्रहणस्य विवक्षितत्वमातस्तदसदप्रमादाभिधायित्वाददृषेः॥२९३॥

**प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति ॥**
**युग्यस्थाः प्राजकेऽनाप्ते सर्वे दण्ड्याः शतं शतम् ॥ २९४ ॥**

(२) **सर्वज्ञनारायणः**। आप्तो विज्ञःप्राजको दण्ड्यः स्वाम्यपराधाभावात्। तत्रानाप्ते अज्ञे युग्यस्थानरथस्थाः सारथिपक्षपूरकतया विज्ञाता- स्वामिना नियुक्तास्ते दण्ड्याः। अतःस्वामी तेचसर्वे शतं प्रत्येकं दण्ड्याः॥ २९४॥

(३) **कुल्लूकः**। यदि सारथिः कुशलः स्यात्तदा सारथिरेवोक्तद्विशतं मंवक्ष्यमाणं च मनुष्यमारण इत्यादिकं दण्डमर्हति न स्वामी अकुशले तु तस्मिन्सारथिस्वामिव्यतिरिक्ता अन्येपि यानारूढा अकुशलसारथिकयानारोहणात्सर्वे प्रत्येकं शतं शतं दण्ड्याः॥ २९४॥

(४) **राघवानन्दः**। तत्रैव विधानान्तरमाह प्राजकश्चेति। आप्तो निपुणो नैपुण्ये तु प्राजकस्य। सर्वे स्वामिसारथियुग्यस्था अपि दण्डभाजः। युग्यं शकटादि। अकुशलसारथ्येनोढत्वात् शतंशतंप्रत्येकम्॥ २९४॥

(५) **नन्दनः**। प्राजक आप्तश्चेन्मनुष्यपश्वादिहिंसायां प्राजक एव दण्डमर्हति न स्वामी प्राजके त्वनाप्ते केवलं स्वाम्येव दण्ड्यः किन्तु युग्यस्था रथादिस्थाः सर्वेपि शतं शतं दण्ड्याः॥ २९४॥

(६) **रामचन्द्रः**। प्राजकः सारथिश्चेत् आप्तः निपुणः। युग्यस्थाः सारथिपक्षपूरकाः प्राजके अनाप्ते सति अनिपुणे सति ते सर्वे शत दण्ड्याः॥ २९४॥

(७) **मणिरामः**। आप्तः कुशलः। अनाप्ते अकुशले। युग्यस्थाः सर्वेः यानारूढाः स्वामिनः अस्वामिनश्च॥ २९४॥

(८) **गोविन्दराजः**। **प्राजक इति**। यदि पुनः सारथिः कुशलस्तदा सारथिरेव मनुष्यमारणे इत्यादि वक्ष्यमाणं अर्हति दण्डं न स्वामी द्विशतं अकुशले सारथौ स्वाम्यतिरिक्ता अन्येऽपि यानारूढाः अकुशलसारथियानारोहणात्सर्वे शतं शतं दण्ड्याः। सारथिस्तु मनुष्यमारण इत्यादिस्थित एव॥ २९४॥

**स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा॥**
**प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः॥ २९५ ॥**

(१) **मेधातिथिः**। उक्तो हिंसायां दमः। तत्र विशेषं वक्तुमिदमाह। **स प्राजकः पथि संरुद्धोऽ**ग्रेघनावसर्पिणा **संरुद्धो** निरुद्धगतिः पश्चात्स्थितेनासुशिक्षितत्वात्प्रमादाद्वा **वेगेन** धुर्याश्चोदिताः पुनः स्थिरयतश्चेन्निकटो रथस्तेन च तस्य वेगनिरोधे कृते यदि पुरोरथस्थावेगपातात्**पशुभिः** रथयुक्तैरश्वादिभिः। **रथेन** रथावयवैर्वा। **प्राणिनो** मनुष्यादीन्मारयेत्। ततो दण्डस्य विचारो नास्ति। **स्थित एव दण्डः**।

अथवा जवोत्पतिता अश्वाः पथि संरोधकसंमुखीनरथदर्शनेन बलाद्विधार्यमाणास्तिर्यग्गत्या गच्छेयुः पार्श्वकीयान् प्रत्यगवस्थितत्वात्तथा हन्युस्तत्र दण्डो विचारितो नास्ति–प्राजके दोषाभावात्।

अथवा पथि स्थितो वर्तमानः संरुद्धो न विध्रियमाणः।

अथवा **विचारितो** विशेषेण विहितो विक्षेपित इति यावत् ॥ २९५ ॥

(२) **सर्वज्ञनारायणः।** अशक्यविषयेषु हिंसायामाह सचेदिति। सयुग्यादिः। पशुभिर्हस्त्यादिभिः। उपलक्षणंचैतत्। प्रपातगमनोच्चारोहणतिर्यग्गमनादिनापीत्यशक्यप्रतीकारागन्तुनिमित्तवशादित्यर्थः। दण्डोऽविचारित नर्निर्णीतो मुनिभिः नास्त्येवेत्यर्थः॥२९५॥।

(३) **कुल्लूकः।** सचेत्प्राजकःसंमुखागतैः प्रचुरगवादिभीरथान्तरेण वा संरुद्धः स्वरथगमनानवधानात्प्रत्यक्समर्पणाक्षमः संकटेपि स्वरथतुरगान्प्रेरयन्तुरगैरथेन वा रथावयवैर्वा प्राणिनो व्यापादयति तत्राविचारितो दण्डः कर्तव्य एव ॥ २९५ ॥

(४) **राघवानन्दः।** प्रकारान्तरेण दण्डमाह सचेदिति। पशुभिः गजादिभिः स्वरथसबन्धव्यतिरिक्तैः रथेन रथान्तरेणवा बद्धोगन्तुमशक्तः सन्परावृत्तत्वात् उक्तातिरिक्तपाश्चात्यात्। प्रमापयेत् हिंस्यात्। अकुशलो भूत्वा लोभायत्तो यतःप्रवृत्तः अतो दण्डार्हः। अविचारितः पूर्वं विचारो न कृतः केवल किंतु दण्डोऽस्तीति॥ २९५॥

(५) **नन्दनः।** योयंस्वामिप्राजकरथस्यानां दण्डउक्तस्तत्र प्राजकं प्रति नियममाह स चेत्त्वति। सआप्तोनाप्तो वा प्राजकः पथि पथिकैः संरुद्धः पशुभिः स्वरथवाहिभिर्बलीवर्दादिभीरथेन वा प्राणभृतः प्रमापयतिचेत्तत्र प्रमापणे दण्डः अविचारितोऽसंदिग्धः पुनस्तद्भयात्पथोपक्रमण निमित्तरूपपतनादिहेतुके प्रमापन्न इति ॥ २९५ ॥

(६) **रामचन्द्रः।** पशुभिः सःयुग्यादिना रथंपशुभिः पथि संरुद्धः प्राणिभृतः प्रमापयेत् हन्यात् तत्र दण्डः अविचारितः मुनिभिः ॥ २९५ ॥

(७) **मणिरामः।** सः प्राजकः। संरुद्धः स्वरथगमनाऽनवधानात् प्रत्यक् समर्पणाक्षमः संकटेपिस्वरथतुरगात् अन्यरथतुरगैः रथेन वा रथावयवैर्वा प्राणिनः प्रमापयेत् मारयेत्-तदा त्वविचारतस्तत्र दंडः कर्तव्य इत्यर्थः॥ २९५॥

(८) **गोविन्दराजः। स इति।** स प्राजकः सम्मुखागतयानान्तराध्वरुद्धैर्बलीवर्दादेभिः संरुद्धयानो रथान्तरेण वा भूमिवैषम्यात्प्रत्यगपसर्पिणा अकुशलत्वात्प्राणिनो रथ |मापयेत्तत्र दण्डो मन्वादिभिर्विचारितः ॥ २९५ ॥

**मनुष्यमारणे क्षिप्रं चौरवत्किल्बिषं भवेत् ॥**
**प्राणभृत्सु महत्स्वर्धं गोगजोष्ट्रहयादिषु ॥ २९६ ॥**

(१) **मेधातिथिः।** तादृशे प्राजके रथपशुभिर्मनुष्यश्चेन्मार्यते तदा **चौरवत्तस्य किल्बिष** दण्डः। यद्यपि चौरस्य वधः सर्वस्वहरणादयो दण्डास्तथापीह धनदण्ड एव गृह्यते

न वधः। महत्स्वर्धमिति तत्रैवार्धसंभवात्। स चोत्तमसाहसः कैश्चिदभ्युपगतः। यतश्च क्षते क्षुद्रकपशूनां तृतीयस्थानप्राप्तानां द्विशतो दमोऽतः प्रथमस्थानां मुख्यानामुत्तमो युक्त इति। प्राणभृतः प्राणवन्तो मनुष्यतिर्यक्पक्ष्यादयः। महत्सु महत्त्वं गवां प्रभावतो हस्त्यादीना प्रमाणतः। आदिग्रहणाद्गर्दभाश्वतरव्याघ्रादयश्च कथंचित्परिगृह्यन्ते।

वयं तु ब्रूमः– 'सहस्रम्' इत्येवमवक्ष्यत् यद्यन्ते चौरवद्दण्डा नाभिप्रेता अभविष्यन्। तस्मादर्धग्रहणाद्वधो मा भूद्धनदण्डास्तु सर्वस्वहरणादयः सर्वे चौरोक्ताः पुरुषापेक्षयातिदिश्यन्ते।

ननु च मनुष्यमारणेऽन्यस्य चौरदण्डस्यातिदेशोऽयुक्तः। स प्रतिपदं मनुष्यहनने विहितः स च 'पुरुषाणां कुलीनानामिति' (३३२) वध एव। तत्र किमिति वाक्यान्तरगतार्धशब्दानुरोधेनैवं व्याख्यायते। वरमर्धस्यैव गुणतः काचिद्वृत्तिराश्रीयताम्।"

सत्यं–यदि धर्मशब्दो मारणेन संबध्यमानोऽन्यथोपपद्येत। न च चौरवदित्यस्यानुषङ्गागतस्यार्थान्तरवृत्तिः सर्वापरवाक्ययोः शक्या॥ २९६॥

(२) **सर्वज्ञनारायणः**। अथ लगुडादिना बुद्धिपूर्वं मारणे दण्डमाह मनुष्यमारण इति। प्राणभृत्सु महत्सु गवादिषु अर्थं यस्य चौर्ये यावान्दण्डोऽवनक्तस्तदर्धम्। ॥ २९६॥

(३) **कुल्लूकः**। सकृदपराधे कीदृश इत्याह मनुष्येति। तत्र मनुष्यमारणे प्राजकस्यानवधानाद्यानेन कृतं शीघ्रमेव चौरदण्डोत्तमसाहसं भवेन्नतु मारणरूपः प्राणभृत्सु महत्स्वर्द्धमिति श्रवणात्। गोगजादिषु महत्सु प्राणिषु मारितेषूत्तमसाहसस्यार्द्धंपञ्चशतपणो दण्डोभवेत्॥ २९६॥

(४) **राघवानन्दः**। तां दण्डव्यवस्थामाह मनुष्येति त्रिभिः। चौरवत् चोरश्चोत्तमसाहसं इत्युक्तेः। गवित्यादि चतुष्टयं विशेषणं प्राणभृतादेरर्धं पञ्चशतानि॥ २९६॥

(५) **नन्दनः**। एवं यानेन प्रमापणे दण्ड उक्तः। अथ पारुष्येण मनुष्यपश्वादिमारणे दण्डं श्लोकत्रयेणाह मनुष्यमारण इति। किल्बिषं दण्डः स चार्थविषय एव अर्थविषयसामर्थ्यात् चोरकिल्बिषमुत्तमसाहसः गवादीनां प्रभावतो महत्त्वम्॥ २९६॥

(७) **मणिरामः**। कीदृशापराधे कीदृशोदंड इति प्रश्नेप्राह। मनुष्येति। चौरवत् सारथेरनवधानाद्यानेन कृते उत्तमसाहसं भवेत् न तु मारणरूपः। महत्सु प्राणभृत्सु गजोष्ट्रहयादिषु मारितेषु अर्द्धं उत्तम साहसस्यार्द्धं पंचशतं पणाः दंडो भवेत्॥ २९६॥

(८) **गोविन्दराजः**। **मनुष्यमारण इति**। प्राजकस्याकौशलेन मनुष्यमारणे सत्यपि विलम्बत्वमेव चौरवत्तस्य उत्तमसाहसो न तु वधादिचौरदण्डः। प्राणभृत्सु महत्स्वर्धदर्शनान्महत्सु च प्राणिषु प्रभावतो गवादिषु प्रमाणतः स्यात्। (मारितेषु अहिमहिषेषु) उत्तमस्य साहसपञ्चशतानि दण्डो भवेत्॥ २९६॥

**क्षुद्रकाणां पशूनान्तु हिंसायां द्विशतो दमः॥**
**पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥ २९७॥**

(१) **मेधातिथिः**। अपचितपरिमाणाः **क्षुद्रकाः**। ते च केचिद्वयस्तः, वत्सकिशोर-

ककलभादयः । केचिज्जातिस्वभावतः, अजैडकादयः । तत्राजाविकानां पञ्च माषान्वक्ष्यति । परिशेषाणां गवादीनामेवायं दण्डोऽल्पपरिमाणानाम् ।* शुभा मृगाः पृषतादयः—आकारतो लक्षणतश्च । दक्षिणो हंसशुककसारिकादयः । अशुभाः* काकोलूकश्रृगालादयः । पशुशब्दश्चतुष्पाज्जातिवचनः ।

हिंसामात्रेण दण्डमिममिच्छन्ति । न प्रकृतयानविधिहेतुं ब्रुवते । 'तत्र दण्डो विचारित' (२९५) इत्यनेनैव यानप्रकरणं व्यवच्छिन्नम् । विचारितः समाप्तविचार इत्यर्थः । इदानीमेतत्प्रकरणनिरपेक्षमुच्यत इति । एवं तु "प्राणभृत्सु महत्स्वर्धमिति" हस्तादिच्छेदनं 'मारण' मित्यर्धशब्दो नेयः स्मृत्यन्तरात् ।। २९७ ।।

**(२) सर्वज्ञनारायणः ।** क्षुद्रपशूनां मृगपक्ष्यादीनां द्विशत इत्युत्तमदण्डोपदर्शनमेतत् । ततस्तत्तु क्षुद्रत्वे ह्रासः क्रमेणोह्यः । एतच्च परिगृहीतविषये । अपरिगृहीतेप्याह पञ्चाशत्त्विति । शुभेषु चित्रमृगशुकादिषु ।। २९७ ।।

**(३) कुल्लूकः ।** क्षुद्रकाणां पशूनां जातितो विशेषापदिष्टेतरेषां वनचरादीनां वयसा च किशोरादीनां मारणे द्विशतोदण्डः स्यात् । शुभेषु मृगेषु रुरुपृषतादिषु पक्षिषु च शुकहंससारसादिषु पक्षिषु हतेषु पञ्चाशद्दण्डो भवेत् ।। २९७ ।।

**(४) राघवानन्दः ।** क्षुद्रकाणामित्यल्पार्थो कः रुरुपृषतादीनाम् । शुभेषु हंसदारावतसारसादिषु कृष्णसारादिषु द्विशतोदमोऽन्यथा व्याधादीनामवृत्तिः स्यात् ।। २९७ ।।

**(५) नन्दनः ।** क्षुद्राणां मार्जारादीनां मृगपक्षिहिंसितेषु ।। २९७ ।।

**(७) मणिरामः ।** पृषतमृगेषु रुरुपृषतादिषु । शुभेषु पक्षिषु शुकहंससारसादिषु ।। २९७ ।।

**(८) गोविन्दराजः ।** क्षुद्रकाणामिति । अजाविकानां वक्ष्यमाणत्वादपचितप्रमाणानां वत्सकिशोरादीनां पशूनां हिंसायां द्विशतो दण्डः कार्यः । पुतमृगपक्षिषु वराहादिषु हिंसायां पञ्चाशत्पणो दण्डो भवेत् ।। २९७ ।।

**गर्दभाजाविकानां तु दण्डः स्यात्पाञ्चमाषिकः ।।**
**माषिकस्तु भवेद्दण्डः श्वसूकरनिपातने ।। २९८ ।।**

**(१) मेधातिथिः ।** पञ्च माषाः परिमाणमस्येति पाञ्चमाषिकः । माषस्य च द्रव्यजातेरनुपपादनान्मध्यमकल्पनायाश्च न्याय्यत्वाद्रौप्यस्य निर्देशोऽयमित्याहु । हिरण्यं तु युक्तं । एवं तत्सममिति न बाधितं भवति । अनुबन्धाद्यपेक्षया तु द्रव्यजातिः कल्प्येति सिद्धान्तः ।। २९८ ।।

**(२) सर्वज्ञनारायणः ।** पञ्चमाषिकः सुवर्णमाषाः पञ्च तन्निष्पाद्यो माषकः सुवर्णः तन्निष्पाद्यः । सुकरो ग्राम्यः । वराहे त्वधिकम् ।। २९८ ।।

---

* सकृदपराधे = रथसंकटापराधे (अ)

* अशुभाः = शुभामृगात्तपृष्ठादयः आकारतोलक्षणतश्च पक्षिणो हंसशुकसारिकादयः । अशुभाः ।

(३) **कुल्लूकः**। गर्दभछागेडकादीनां पुनर्मारणे पञ्चरूप्यमाषकपरिमाणो दण्डः स्यात्। नचात्र हैरण्यमाषग्रहणमुत्तरोत्तरलघुदण्डाभिधानात्। श्वसूकरमारणेषु पुना-रौप्यमाषपरिमाणोदण्डः स्यात्॥ २९८॥

(४) **राघवानन्दः**। किंच गर्दभेति। अविर्मेषः। पञ्चमाषिकः पञ्च रुप्यमाषं-परिमाणं यस्य सस्तथा॥ २९८॥

(५) **नन्दनः**। गदर्दभाजाविकानां निपातने॥ २९८॥

(६) **रामचन्द्रः**। अच्छागः अविकः रूप्यदण्डः॥ २९८॥

(७) **मणिरामः**। शुभे। पंचमाषिकरूप्य पंचमाषिकः। उत्तरोत्तरलघुदंडाभिधानात् स्वर्णमाष इति ज्ञेयं॥ २९८॥ २९९॥

(८) **गोविन्दराजः**। **गर्दभाजाविकानामिति**। स्वरच्छागाविविषयवधे रूप्यमाषक-परिमाणो दण्डः स्यादुत्तरोत्तरमपचितं दण्डाभिधानदर्शनाद्हैरण्यं माषग्रहणं पूर्वदण्डानून-त्वान्नापि ताम्रिकस्य करणमत्यन्तलघुत्वोदयं श्वशूकरमारणेऽपि रूप्यमाषकपरिमाणो दण्डः स्यात्॥ २९८॥

**भार्या पुत्रश्च दासश्च प्रेष्यो भ्राता च सोदरः॥**
**प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥ २९९॥**

(१) **मेधातिथिः**। प्राप्ता अपराधं **प्राप्तापराधाः**। 'अपराधो' व्यतिक्रमः नीतिभ्रंशः। स यदा तैः कृतो भवति तदा ताडयितव्याः। ताडनमपि हिंसेत्युक्तम्। सा च "न हिंस्या-द्भूतानीति" प्रतिषिद्धाऽपराधे निमित्ते भार्यादीनां प्रतिप्रसूयते। संबन्धिशब्दाश्चैते। य यस्य भार्या यश्च यस्य दासः स तेनानुशासनीयः। मार्गस्थापनोपायविधिपरश्चायम्, न ताडनविधिरेव। तेन वाग्दण्डाद्यपि कर्तव्यम्। अपराधानुरूपेण कदाचित्ताडनम्। **सोदर-**स्थाने कनीयान्पठितव्यः—**भ्राता तथानुजः**। स हि ज्येष्ठस्य पुत्रवत्ताडनार्हः। वैमात्रेयो-ऽपि चेदपितृको गुणवज्ज्येष्ठतन्त्रश्च। सोऽप्युन्मार्गगामी ताडनादिपर्यन्तैरुपायैर्निवारणीयः। **वेणुदलं** वंशत्वक्। एतदप्युपलक्षणं—तथाविधानां मृदुपीडासाधनानां शिफादीनाम्॥ २९९॥

(२) **सर्वज्ञनारायणः**। भ्राता कनीयान्॥ २९९॥

(३) **कुल्लूकः**। भार्यापुत्रादयः कृतापराधा रज्ज्वा वातिलघुवेणुशलाकया ताड्या भवेयुः शिक्षार्थं ताडनविधानादत्रदण्डापवादः॥ २९९॥

(४) **राघवानन्दः**। ननु पितरमित्यभिशस्ति निषेधता भार्यादीनामपराधे ताडनमपि निरस्तमतस्तेषां स्वातन्त्र्ये प्राप्ते ताडनसाधनं तदुचितस्थलान्याविदयन्ताड्यत्वमाह भार्येति सार्धेन। तत्रत्यं तनयपदं भार्याद्युपलक्षणं तुल्यन्यायत्वात्। वेणुदलेन वेणोरेकांशेन॥ २९९॥

(५) **नन्दनः**। अथ भार्यापुत्रादीनामनुशासनप्रकारमन्यथानुशंसने दण्डविधानार्थमाह भार्यापुत्रश्चेति॥ २९९॥

(६) **रामचन्द्रः**। भार्यादयः प्राप्तापराधाः रज्ज्वा वेणुदलेनवा ताड्याः ताडनीयाः। सोदरः भ्राता च अन्यमातृजो न ।। २९९ ।।

(८) **गोविन्दराजः**। भार्याशिष्यश्च दासश्च पुत्रो भ्राता च सोदर इति। भार्यादयः कृतापराधा रज्वा वेणुत्वचा वा दण्डनीयाः स्युरिति हिंसादण्डोपरार्धार्थः। साधने दण्ड्याः स्युः ।। २९९ ।।

**पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ।।**
**अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ।। ३०० ।।**

(१) **मेधातिथिः**। उक्तताडनदेशसाधनाभ्यामन्येन प्रकारेण घ्नन्नक्ष्यादिषु लगुडादिभिर्वा चौरदण्डं प्राप्नोति। निन्दैषा। न त्वयमेव दण्डः। योऽन्यत्र हिंसायां दण्डः सोऽत्र भवतीत्युक्तं भवति ।। ३०० ।।

(२) **सर्वज्ञनारायणः**। चोरकिल्बिषं ताडितस्यामरणे स्तेयदण्डो मरणेतु भूयस्त्वमूह्यमित्यर्थः ।। ३०० ।।

(३) **कुल्लूकः**। रज्ज्वादिभिरपि देहस्य पृष्ठदेशे ताडनीयाः नतु शिरसि। उक्तव्यतिरेकेण प्रहरणे वाग्दण्डधनदण्डरूपञ्चौरदण्डं प्राप्नुयात् ।। ३०० ।।

---

(२९९) वा=च (क) (२९९) प्रेष्यो=शिष्यो (ज, झ, ञ, ढ)

(३००) कथंचन=न वक्षसि (ट, ड)

(४) **राघवानन्दः**। उक्तातिक्रमे दोषमाह अतइति। अतोन्यथापृष्ठादन्यत्र ।। ३०० ।।

(५) **नन्दनः**। ताडनस्थानमाह पृष्ठतस्त्विति। अन्यथाऽनुशासने दण्ड उत्तरार्द्धेनोच्यत इति दण्डपारुष्यनिर्णयः ।। ३०० ।।

(७) **मणिरामः**। कुत्र रज्वादिना ताडनं कर्तव्यमित्यतआह। पृष्ठत इति ।। ३०० ।।

(८) **गोविन्दराजः**। **पृष्ठत इति**। ते पुनः शरीरस्य पृष्ठदेशे ताडनीयाः न तु कदाचिदुत्तमाङ्गे न वक्षसि उक्तप्रकारव्यतिरेकेण ताडयित्वा दण्डरूपेण वाग्दण्डरूप चौरदण्डं प्राप्नुयात् ।। ३०० ।।

**एषोऽखिलेनाभिहतो दण्डपारुष्यनिर्णयः ।।**
**स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णये ।। ३०१ ।।**

(१) **मेधातिथिः**। **एष** निःशेषेणोक्तो **दण्डपारुष्यनिर्णयो** दण्डव्यवस्था। दण्डशब्दोहि साधनोपलक्षकतया विवादपदेऽन्वितार्थः। नामधेये पूर्वपदम्। **स्तेनस्य** चौरस्य दण्डभेदानतःपरं **वक्ष्यामी**त्युपसंहारोपन्यासार्थः श्लोकः ।। ३०१ ।।

(२) **सर्वज्ञनारायणः**। एष इति। स्तेनस्य स्तेनदोषे ।। ३०१ ।।

(३) **कुल्लूकः।** एष दण्डपारुष्यनिर्णयो निःशेषेणोक्तः अत ऊर्ध्वं चौरदण्डविनिर्णये विधानं वक्ष्यामि ।। ३०१ ।।

(४) **राघवानन्दः।** कायदण्डमुपसंहरंस्तेनदण्डंप्रतिजानीते एष इति। दण्डविनिर्णये दण्डार्थम् ।। ३०१ ।।

(५) **नन्दनः।** अथ स्तेयनिर्णयं प्रस्तौति एषोऽखिलोनेति अतः परं स्तेयसाहसयोरर्थ-हिंसात्मकत्वेनापृथग्भावमाशङ्क्य भेदोपन्यासेन परिहरति तस्मात्साहसन्त्वनवयवप्रसभं कर्म यत्कृतं। निरन्वयं भवेत्स्तेयं कृत्वापव्ययते च यत्। अन्वयोनुसारोनुमतिरिति यावत् तद्युक्तमन्वयवत् यत्कर्म कृतं तेन योपहारः कृतस्तत्साहसंस्यात् येन केन चिदुपायेन स्वामिनो-ऽनुमतिमासाद्य परद्रव्यापहरणं साहसं स्यादित्यर्थः प्रसभं प्रसह्य यत्कृतं तच्च साहसं स्यात् अनुमतमपि यत्कर्म कृत्वापव्ययतेऽपह्नुते पुरुषस्तच्च स्तेयं भवेदिति ।। ३०१ ।।

(८) **गोविन्दराजः।** **एष इति।** अनन्तरोक्तो वाग्दण्डः पारुष्यस्य निर्णयो निः-शेषेणोक्तः। अत ऊर्ध्वं चौरदण्डस्य व्यवस्थाया विधानं वक्ष्यामि ।। ३०१ ।।

**परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः ।।**
**स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्धते ।। ३०२ ।।**

(१) **मेधातिथिः।** कश्चित्करुणावान् क्रूरं हिंसाकर्मेति मन्यमानो न प्रवर्तते। अत-स्तत्प्रवृत्त्यर्थं स्तेननिग्रहस्तुत्यर्थवादः प्रक्रम्यते। नात्र हिंसादोषोऽस्ति। प्रत्युत दृष्टोपकार-हेतुत्वात्स्तेनहिंसैव श्रेयस्करी। वेदतुल्यतां च ख्यापयितुमर्थवादा भूयांसः। तत्र हि प्रायेण सार्थवादका विध्युद्देशा इति। तत्प्रतीत्यनुसरणेन वैदिकोऽयमर्थ इति प्रसिद्धिः। भवन्ति चात्र केचित्प्रतिपत्तारो ये स्तुतिभिरतितरां प्रवर्तन्ते।

**परमं यत्नं** प्रकृष्टमतिशयवत्तात्पर्यमाश्रयेत्। चरैश्चारयेत् साक्षात्प्रकाशं चातियत्नतः। **स्तेनाश्चौराः।** **निग्रहो** नियमनवधबन्धनादि। एवं कृते **यशः** ख्यातिर्भवति। निरुपद्रवो-ऽस्य राज्ञो देशः स्तेना नाभिभवन्ति निशा दिवा तुल्या तत्रेति सर्वत्र स्थितं भवति। **राष्ट्रं वर्धते।** राष्ट्रं जनपदस्तस्मिन्निवासिनश्च पुरुषाश्चौरैरनुपद्रूयमाणा वर्धन्ते। श्रीभिः प्रमोदमाना बहु पर्यन्ते देशान्तरस्था अपि निरुपद्रवं राष्ट्रमाश्रयन्ते। ततो वर्धते ।। ३०२ ।।

(२) **सर्वज्ञनारायणः।** निग्रहे दण्डने ।। ३०२ ।।

(३) **कुल्लूकः।** चौराणां नियमने राजा परममुत्कृष्टं यत्नं कुर्यात् यस्मात् चौरनिग्रहा-द्राज्ञः ख्यातिर्निरुपद्रवतया राष्ट्रं च वृद्धिमेति ।। ३०२ ।।

(४) **राघवानन्दः।** तत्र दृष्टादृष्टदोषाननुसंधायिनो राज्ञः ततो निवृत्तिमाशंक्य दृष्टफलैः प्रलोभयन् तत्र यत्नाधिक्यं नोपरमितिपञ्चभिः। तत्र सततं नृप इत्यन्तं दृष्ट-फलमतः परमदृष्टफलम् अस्य राज्ञः ।। ३०२ ।।

(५) **नन्दनः।** राज्ञा स्तेननिग्रहोवश्यः कार्य इत्यष्टभिः श्लोकैराह परमं यत्नमिति। अस्य राज्ञः ।। ३०२ ।।

(७) **मणिरामः**। इदानीं स्तेयनिर्णयमाह। परममिति ।। ३०२ ।।

(८) **गोविन्दराजः**। **परममिति**। चौरनियमे प्रकष्टमभियोगं राजा कुर्यात् यस्मात्त-न्निग्रहात् राज्ञः प्रजाः निरुपद्रवतया च देशो जनधनबाहुल्येन वृद्धिमेति ।। ३०२ ।।

**अभयस्य हि यो दाता स पूज्यः सततं नृपः ॥**
**सत्रं हि वर्धते तस्य सदैवाभयदक्षिणम् ।। ३०३ ।।**

(१) **मेधातिथिः**। अभयं चौरादिभ्योऽधिकृतेभ्यश्चासद्दण्डनिवारणेन यो ददाति स सर्वदैव **पूज्यो** भवति। स्वैरकथास्वपि राज्याच्च्युतो वनस्थोऽपि। **सत्रं** क्रतुविशेषो गवामयनादि। तदस्य **वर्धते** निष्पद्यते। सर्वाङ्गसमुत्पन्नमेवंगुणमित्येतद्वर्धत इत्यनेनाहरहः सत्रफलं प्राप्नोतीत्यर्थः। **अभयं** यत्र दक्षिणा। अन्येषु सत्रेषु दक्षिणा नास्ति। इदं तु सर्वे-भ्योऽपि विशिष्टं यद्दक्षिणावत्। सा च गवाश्वादि–दक्षिणा विलक्षणेत्यर्थवान्सत्रव्यतिरेकः ।। ३०३ ।।

(२) **सर्वज्ञनारायणः**। स एव पूज्यो न त्वन्यादृशः। सत्रं प्रजारक्षणरूपो यज्ञः। वर्धतेऽधिकफलतया ।। ३०३ ।।

(३) **कुल्लूकः**। हिरवधारणे चौराणांनियमनेन योनृपतिः साधूनामभयंददाति स एव पूज्यः पूर्वेषां श्लाघ्यो भवति। सत्रं गवायनादिक्रतुविशेषः यद्यस्मात्सत्रमिव सत्रं तदभयदाना-च्चौरनिग्रहरूपाऽभयदक्षिणं सर्वदैवतस्य वृद्धिमेति अन्यद्धि नियतकालीनं नियतदक्षिणं च एतत्सर्वकालीनमभयदक्षिणं चेति वाक्यं व्यतिरेकालङ्कारः ।। ३०३ ।।

(४) **राघवानन्दः**। अभयदक्षिणं साधूनामभयं दक्षिणात्वेन निरूपितं यत्र तादृशं सत्रम्। अर्थाद्दस्युवधःपशुसोमादिः ।। ३०३ ।।

(५) **नन्दनः**। अभयस्य स्तेननिग्रहरूपस्य ।। ३०३ ।।

(६) **रामचन्द्रः**। यः नृपः अभयस्य दाता स सततं पूज्यः। सदैव तस्य अभयदक्षिणं सत्रं प्रजारक्षणरूपो यज्ञःप्रवर्तते ।। ३०३ ।।

(७) **मणिरामः**। अभयस्य चौरनिग्रहेण लोकानामभयस्य न तु चौरस्य। सत्रं गवानयनादि क्रतुविशेषं तत्फलं प्राप्नोतीत्यर्थः ।। ३०३ ।। ३०४ ।। ३०५ ।।

(८) **गोविन्दराजः**। **अभयस्येति**। चौरपापस्य निग्रहेण साधूनामभयं ददाति स सदा सर्वस्य पूज्यो भवति। यस्मात्सत्रं क्रतुविशेषवत् स्तेननिग्रहः सम्पद्यते। स्तेननिग्र-हाख्यं तस्यान्यसत्रविलक्षणमतिशयेन सम्पद्यते। अन्यत्किल सत्रं नियतकालं भवति इदं सदैव भवति चादक्षिणञ्चान्यत्सत्रं। इदं पुनरभयं दक्षिणा यस्य तदभयदक्षिणम् ।। ३०३ ।।

**सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः ॥**
**अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ।। ३०४ ।।**

(१) **मेधातिथिः**। **सर्वतः** प्रकाशाद्यज्ञादेः तथा ग्रामवासिभिः वनवासिभिश्च कृता-

द्धर्मषड्भागं राजा ·भते। एवमधर्मादपि चौरैः प्रच्छन्नकृताद्राज्ञः षड्भागो भवति। न केवलं स्तेनैर्ये मुष्यन्ते तदरक्षातो राज्ञामधर्मो यावद्ये हरन्ति तेषामपि चौर्यभावेनाधर्मोदयस्त-दंशेनापि राजानः संबध्यन्तेताननिगृह्णन्तः। अदृष्टदोषसंबन्धनिवारणमपि रक्ष्याणां रक्षैव। तत्राधिकृतस्य राज्ञस्तदकरणाद्युक्तः प्रत्यवायः। "ननु च भृतिपरिक्रीतत्वाद्धर्म-षड्भागमयुक्तम्।" उक्तं दीनानाथप्रव्रजिता यः सन्त्यकरप्रदाः। परिपूर्णस्वधर्मपालने कानुपपत्तिः।। ३०४।।

(२) **सर्वज्ञनारायणः।** धर्मषड्भागः प्रजाभिः क्रियमाणस्य धर्मस्य यावान् षष्ठो-भागस्तावान्धर्म इत्यर्थः।। ३०४।।

(३) **कुल्लूकः।** प्रजा रक्षतो राज्ञः सर्वस्य भृतिदातुर्वणिगादेर्भृत्यदातुश्च श्रोत्रियादेः सकाशाद्धर्मषड्भागो भवति अरक्षतश्चाधर्मादपि लोकेन कृतात् षड्भागः स्यात् तस्माद्यत्नतः स्तेननिग्रहेण राजा रक्षणं कुर्यात्। नच भृतिक्रीतत्वाद्राज्ञो धर्मषड्भागो न युक्त इति वाच्यम् भृत्याधर्मषड्भागेन च परिक्रीतस्य शास्त्रीयत्वात्।। ३०४।।

(४) **राघवानन्दः।** किंच सर्वत इति। रक्षतो रक्षां कुर्वाणस्य प्रजाभिरनुष्ठिताद्धर्मात् षड्भागः षष्ठांशो राज्ञः स्यादेव। अरक्षतोऽधर्मांशः।। ३०४।।

(८) **गोविन्दराजः। सर्वत इति।** सर्वतो भृतिप्रदानव्यतिरिक्ताच्च श्रोत्रियादीनां साधूनां सकाशाद्धर्मषड्भागे राज्ञः प्रजारक्षणाद्भवति। अरक्षतश्चाधर्मादपि लोके चौर्य-भाग त् षड्भागोऽस्य भवति तस्माद्यत्नतः स्तेननिग्रहेण प्रजासंरक्षणं कुर्यात्। न च वृत्तिपरि-क्रीतत्वाद्राज्ञो धर्मप्राप्तिरयुक्ता वृत्तिपरिक्रयवद्धर्मभागपरिक्रयस्यापि शास्त्रीयत्वात्।। ३०४।।

**यदधीते यद्यजते यद्ददाति यदर्चति।।**
**तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात्।। ३०५।।**

(१) **मेधातिथिः।** यदुक्तं 'सर्वत' इति तस्य प्रपंचोऽयम्। अध्ययनादयो धर्मार्थ-तयाऽन्यत्र ज्ञापिताः प्रसिद्धरूपाश्च। 'अर्चनं' देवगुरूणां पूजनम्। **तस्येति** कर्मणोऽध्ययनादेः पदार्थस्येति योजनीयम्। क्रियायाः स्त्रीलिङ्गत्वात्। **षड्भाग इति।** न च कर्तुः पञ्च-कर्मफलांशात् षष्ठो नृपतेः, समग्रकर्मफलभोक्तृत्वस्याधिकारतः कर्तुरवगतत्वात्। अपि तु **सम्यग्रक्षणात्**स्वकर्मानुष्ठानात्तावन्मात्रं राज्ञः फलमुत्पद्यत इति। नान्यकृतस्य शुभस्या-शुभस्य वा अन्यत्र गमनम्। नाकर्तुः फलमस्तीति स्थितम्।। ३०५।।

(२) **सर्वज्ञनारायणः। अधीते लोकः। यदर्चति पुष्पादिना देवादीन्** ।। ३०५।।

(३) **कुल्लूकः।** यः कश्चिज्जपयागदानदेवतार्च्चादीनि करोति तस्य राजा पालनेन षड्भागं प्राप्नोति।। ३०५।।

(४) **राघवानन्दः।** धर्मेत्युक्तं तमेवाह यदिति। यदधीते वेदादि यद्यजते यज्ञादि वेदादि यद्यजते यज्ञादि करोति यद्ददाति यदर्चति पूजयति तस्याध्ययनादिचतुष्टयस्य फल-भाग्रक्षणाद्भवति राजेत्यन्वयः।। ३०५।।

(५) **नन्दनः**। उक्तमर्थं प्रपञ्चयति यदधीत इति।

(८) **गोविन्दराजः**। **यदधीत इति**। यः कश्चिदध्ययनयजनयाजनदेवतार्चनादि यत्फलं तस्य फलस्य राज्ञा सम्यक्प्रजापालनात् षड्भागः प्राप्यते ॥ ३०५ ॥

**रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् ॥**
**यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ ३०६ ॥**

(१) **मेधातिथिः**। **भूतानि** स्थावरजङ्गमानि चौरेभ्यो **रक्षन्**। **वध्यांश्च** शास्त्रतो वधार्हाः—तांश्च **घातयन्**। **सहस्रशतदक्षिणानां** पौण्डरीकादीनां क्रतूनां फलमन्वहं राजा प्राप्नोतीति स्तुतिः ॥ ३०६ ॥

(२) **सर्वज्ञनारायणः**। यजेत बहुदक्षिणे यागफललाभात् ॥ ३०६ ॥

(३) **कुल्लूकः**। भूतानि सर्वाणि स्थावरजङ्गमादीनि यथा शास्त्रं दण्डप्रणयनरूपेण धर्मेण रक्षन् वध्यांश्च स्तेनादीन्ताडयन्प्रत्यहं लक्षगोदक्षिणैर्यजते तज्जन्यं पुण्यं प्राप्नोतीति भावः ॥ ३०६ ॥

(४) **राघवानन्दः**। किंच रक्षन्निति। वध्यान्वधार्हांश्चोरादीन्। यज्ञैर्यज्ञवद्दृष्टादृष्टफलसाधनत्वाद्रक्षायाः ॥ ३०६ ॥

(५) **नन्दनः**। भूतानि न्यायवर्त्तीनि ॥ ३०६ ॥

(६) **रामचन्द्रः**। एवं रक्षादि कुर्वन् राजा अहरहः यज्ञैर्यजते वा कीदृशैः? सहस्रशतदक्षिणैः ॥ ३०६ ॥

(७) **मणिरामः**। एवं कुर्वतो राज्ञः अहरहर्यज्ञफलं भवतीत्यर्थः ॥ ३०६ ॥

(८) **गोविन्दराजः**। **रक्षन्धर्मेणेति**। भूतानि स्थावरजङ्गमानि शास्त्रव्यवस्थया राजा रक्षन् वध्यान्स्तेनादीन् यथाशास्त्रं घातयन् लक्षदक्षिणानां यज्ञानां सम्बन्धिफलं प्रत्यहमर्जयति। तत्र महाप्रयासकर्मसम्बन्धिफलं कथमल्पप्रयासात्कर्मणः प्राप्यते तथा सति को नाम प्रयासेषु वर्तेतेति चोदनीयम्। फलोपभोगकालाल्पभूयस्त्वे च विशेषसंभवात्। एवमन्यत्रापि द्रष्टव्यम् ॥ ३०६ ॥

**योऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः ॥**
**प्रतिभागं च दण्डं च स सद्यो नरकं व्रजेत् ॥ ३०७ ॥**

(१) **मेधातिथिः**। बलिप्रभृतीनि राजग्राह्यकरनामानि देशभेदे सूपमाणवकवत्प्रसिद्धानि। तत्र **बलि**र्धान्यादेः षष्ठो भागः। **करो** द्रव्यादानम्। **शुल्कं** वणिक्प्राप्यभागः। **प्रतिभागं** फलभरणिकाद्युपायनम्। राजैतद्गृह्णाति चौरेभ्यश्च न रक्षति **स सद्य** आयुःक्षयान्**नरकं** गच्छेत्। गृहीत्वा राजभागं रक्षा कर्तव्या नरकायुःक्षयभयादिति श्लोकतात्पर्यम् ॥ ३०७ ॥

(२) **सर्वज्ञनारायणः।** बलिं धान्यादिभागम् । करं तद्वद्भूमिनियतं देयं हिरण्यम्। शुल्कं तरादिदेयम्। प्रतिभोगं फलाद्युपायनमुपढौकितम्। प्रीतिभोगमिति क्वचित्पाठः। तत्र प्रीत्योपढौकितं फलादीत्यर्थः। दण्डमपराधनिमित्तग्राह्यम्॥ ३०७॥

(३) **कुल्लूकः।** यो राजा रक्षामकुर्वन्बलिं धान्यादेः षड्भागं ग्रामवासिभ्यः प्रतिमासं वा भाद्रपौषनियमेन ग्राह्यं शुल्कं स्थलजलपथादिना वाणिज्याकारिभ्यो नियतस्थानेषु द्रव्यानुसारेण ग्राह्यं दानमिति प्रसिद्धं प्रतिभागं फलकुसुमशाकतृणाद्युपायनं प्रतिदिनग्राह्यं दण्डं व्यवहारादौ गृह्णाति स मृतः सन्सद्य एव नरकं याति॥ ३०७॥

(४) **राघवानन्दः।** तस्यैव स्वधर्मस्याकरणे दोषमाह य इतित्रिभिः। बलिं धान्यादेः षड्भागम् । करं ग्रामवासिभ्यः प्रतिमासिकशुल्कंवणिगादेर्हट्टघट्टादिनियतस्थानेषु द्रव्यानुसारेण यत् ग्राह्यं तत्। प्रीतिभोगं पुष्पशाकाद्युपायनं प्रतिदिनं ग्राह्यम्। दण्डं व्यवहारादौ यतः॥ ३०७॥

(५) **नन्दनः।** अरक्षन्निति पदं रत्नहारित्वेन यद्राष्ट्रात्पशुधान्यादिकं विशिष्टमाच्छाद्य राज्ञा भुज्यते वस्तु तद्बलिरित्युच्यते शुल्कं पथिकैर्वणिगादिभिर्देयं प्रीतिभोगमुपायनादिकम्। ॥ ३०७॥

(६) **रामचन्द्रः।** यः राजा अरक्षन् बलिं धान्यादिषड्भागं आदत्ते यः करं गुल्मं दायादिकं आदत्ते यः शुल्कं तुरादिकं आदत्ते यः प्रीतिभोगं आदत्ते यः दण्डं फलहरणाद्युपायनं शिष्टचर्थे न्यायदण्डग्रहणं। अरक्षन् एवं आदत्ते सः सद्यः नरकं व्रजेत्॥ ३०७॥

---

(३०७) प्रतिभागं=प्रतिभोगं (क, च, घ, ण)

(७) **मणिरामः।** अरक्षणे दोषमाह य इति। बलिं धान्यादिषड्भागं। करं ग्रामवासिभ्यः प्रतिमासिकं। शुल्कं स्थलजलपथादिषु वणिगादिभ्यो ग्राह्यं। प्रतिभोगं फलकुसुमाद्युपायनं प्रतिदिनं ग्राह्यं। दंडं व्यवहारादौ ग्राह्यं॥ ३०७॥

(८) **गोविन्दराजः। यो यक्षन्निति।** भूतिभोगञ्चेति। यो राजा प्रजासंरक्षणमकुर्वन् धान्यादेः षड्भागादिकं करं गुल्मदास्यादिकं स्थलपथादिजीविभ्यो गतागतिभ्यो भूतेर्भोगं फलं फलकुसुमाद्युपायेन शुल्कं दण्डं व्यबहारादौ गृह्णाति। स आयुःक्षयेण सत्यमेव नरकं याति॥ ३०७॥

**अरक्षितारमत्तारं बलिषड्भागहारिणम्॥**
**तमाहुः सर्वलोकस्य समग्रमलहारकम्॥ ३०८॥**

(१) **मेधातिथिः।** पूर्वस्य शेषोऽयं निन्दार्थवादः। न रक्षति **अत्ता।** उपजीविता प्रजानां राजभागग्रहणेन। एतदेव स्पष्टयति। **बलिषड्भागहारिणं तं** तादृशं राजानमाहुः शिष्टाः **सर्वलोकस्य** सर्वस्याः प्रजायाः **समग्रं मलं** पापं तस्य **हारकं** स्वीकर्तारम्। सर्वेण प्रजापापेन दूष्यत इत्यर्थः॥ ३०८॥

(२) **सर्वज्ञनारायणः**। अत्तारमतिशयितकरग्रहेण खादकमिव। राजानमिति क्वचित्पाठः। सोऽनाकरः। बलिरूपोयोधान्यादेः षड्भागः षष्ठो भागस्तद्धारिणम्। मलं पापं पूर्वमरक्षणात्पापषष्ठभागित्वमुक्तम्। अत्र त्वत्तृत्वेनाधिकेन सर्वपापग्रहणमिति। सर्वत्र चात्र तावत्पापान्तरकर्मान्तिरोत्पत्तौ तात्पर्यं नतु तत्पापधर्मयोरेव प्रतिसंक्रम इत्यर्थो-ग्राह्यः ।। ३०८ ।।

(३) **कुल्लूकः**। यो राजा न रक्षति अथ च धान्यादिषड्भागं बलिरूपं गृह्णाति तं सर्व-लोकानां सकलपापहारिणं मन्वादय आहुः ।। ३०८ ।।

(४) **राघवानन्दः**। उक्तबल्यादिगृहीत्वाप्यरक्षितारं समग्रमलहारकं मन्वादयस्त-माहुरित्यन्वयः। अग्रं फलं तेन सह वर्तते समग्रं फलदानोन्मुखस्य मलस्य हर्तारं सर्वेषां पाप-हर्तारं तथावानलसेन रक्षितव्यं आत्मनो हितं कुर्वतेत्यन्वयः।। ३०८ ।।

(५) **नन्दनः**। अत्रबलिशब्दः करवचनः ।। ३०८ ।।

(७) **मणिरामः**। समग्रमलहारकं समग्रपापहारकं ।। ३०८ ।। ३०९ ।।

(८) **गोविन्दराजः। अरक्षितारमिति**। यो राजा न रक्षति अन्यच्च धान्यादि-षड्भागं बलिरूपं गृह्णाति तं सकललोकसम्बन्धिसर्वपापस्वीकारिणं मन्वाद्या आहुः ।। ३०८ ।।

**अनवेक्षितमर्यादं नास्तिकं विप्रलुंपकम् ।।**
**अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ।। ३०९ ।।**

(१) **मेधातिथिः। मर्यादा** शास्त्रशिष्टसमाचारनिरूढा धर्मव्यवस्था—साऽनवेक्षि-ताऽतिक्रान्ता येन। 'नास्ति परलोको नास्ति दत्तं नास्ति हुतमिति' **नास्तिकः। प्रथमो** रागादिना त्यक्तधर्मः, नास्ति वस्त्विति विपरीताभिनिवेशः। विलुम्पति हरति धनान्य-सहृण्डैः प्रजानाम्। तत्तुल्योऽ**रक्षिता। तमधोगतिं विद्यान्न**रकपतितमधोगतं विद्यान्नरक पतितमेवाचिरात्। पाठांतरम्—'असत्यं च नृपं त्यजेत्'। अन्यदुक्त्वाऽन्यत्करोति यस्त त्यजेत्तद्विषये नासीत ।। ३०९ ।।

(२) **सर्वज्ञनारायणः**। मर्यादा धर्माधर्मव्यवस्था। नास्तिकं परलोकनास्तिकता-ज्ञानवन्तं। विप्रलुंम्पकं विप्राणां लोपकमपचयहेतुम् ।। ३०९ ।।

(३) **कुल्लूकः**। लङ्घितशास्त्रमर्यादं परलोकाभावशालिनमनुचितदण्डादिना धन-ग्राहिणंरक्षणरहितं करबल्यादेर्भक्षितारं राजानं नरकगामिनं जानीयात् ।। ३०९ ।।

(४) **राघवानन्दः। किंच**। अनपेक्षितमर्यादं उल्लङ्घितशास्त्रमर्यादं विप्रलुम्पकं विप्रा-दपि धनहारिणं लुण्ठाकं अत्तारं केवलं अधोगतिं नरकस्थमेव तं विद्यादित्यन्वयः ।।। ३०९ ।।

(५) **नन्दनः**। प्रलुम्पकं ब्राह्मणपरित्यागिनम् ।। ३०९ ।।

(६) **रामचन्द्रः**। अनवेक्षिता मर्यादा येन तं अनवेक्षितमर्यादं पुनःकीदृशं नृपं विप्र-लुम्पकं असद्वादादिना धनानां लुम्पकं पुनः कीदृशं अत्तारं करादेर्भक्षितारं एतादृशं नृपमधो-

गतिं विद्यात्। अधः नरके गतिर्यस्य सः अधोगतिः ।। ३०९ ।।

(३०९) नृपं विद्यादधोगतिं=असत्यं च नृपं त्यजेत् (मेधा)
‡ धान्यानि=धनानि (आआ)।

(८) **गोविन्दराजः। अनपेक्षितमर्यादमिति।** अतिक्रान्तशास्त्राचारमर्यादं परलोका-भावबुद्धिमसद्दण्डादिधनच्छेदनं करबल्यादेर्भक्षितारं च राजानं नरकगामिनं जानीयात् ।। ३०९ ।।

**अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।।**
**निरोधनेन बन्धेन विविधेन वधेन च ।। ३१० ।।**

(१) **मेधातिथिः।** अर्थवादैर्दृढीकृत्य निग्रहविधिमिदानीं प्रस्तौति। **अधार्मिकः** प्रकरणाच्चौरः। तं **त्रिभिर्नियमनप्रकारैर्निगृह्णीयान्नियच्छेत्। न्यायो** नियामकः। **निरोधनं** राजदुर्गे **बन्धनागारे** धरणम्। बन्धस्तत्रैव रज्जुनिगडादिभिरस्वातन्त्र्योत्पादनम्। **विविधो वधस्ताडनादारभ्य** शरीरनाशनात् प्राणत्यागपर्यन्तः। निर्देशादेव त्रित्वे लब्धे **त्रिभिरिति** वचनमन्येषामपि नियमनप्रकाराणां परिग्रहणार्थम्। तेन तप्ततैलसेकादयोऽपि परिगृहीता भवन्ति ।। ३१० ।।

(२) **सर्वज्ञनारायणः।** न्यायैः नियमैः। निरोधनेन कारागारे ।। ३१० ।।

(३) **कुल्लूकः।** अधार्मिकं चौरादिकमपराधापेक्षया त्रिभिरुपायैः प्रयत्नेन नियमयेत्ता-नाह कारागारप्रवेशनेन निगडादिबन्धनेन करचरणच्छेदनादिनानाप्रकारहिंसनेन ।। ३१० ।।

(४) **राघवानन्दः।** अत्यौत्सुक्येन निग्रहोपायं प्रदर्शयन् राजानं स्तौति अधार्मिकमिति द्वाभ्याम्। तत्र निरोधः कारागारप्रवेशः। बन्धनं निगडः ।। ३१० ।।

(५) **नन्दनः।** एवं स्तेननिग्रहस्यावश्यकर्तव्यतां प्रतिपाद्य तन्निग्रहप्रकारमाह अधार्मिक-मिति। विविधेन तत्तत्स्तेयानुरूपेण ।। ३१० ।।

(६) **रामचन्द्रः।** अधार्मिकं पुरुषं त्रिभिर्न्यायैः नियमैः सामदानादिभेदैः च पुनः केन उपायेन निरोधनेन नितरां रोधनेन ।। ३१० ।।

(७) **मणिरामः।** अधार्मिकं चौरादिकं। अपराधापेक्षया निरोधनादि त्रिभिर्न्यायैः उपायैः। निगृह्णीयात् नियमयेत् ।। ३१० ।।

(८) **गोविन्दराजः। अधार्मिकमिति।** अधार्मिकं चौरमपराधापेक्षया त्रिभिर्नियमन-प्रकारैः प्रयत्नेन नियच्छेत्। बन्धनागारस्थापननिगडादिबन्धनकरचरणकर्तनादि नाना-प्रकारहिंसनैरिति ।। ३१० ।।

**निग्रहेण हि पापानां साधूनां संग्रहेण च ।।**
**द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ।। ३११ ।।**

(१) **मेधातिथिः।** पापयुक्ताः पुरुषाः **पापाः**। तेषां **निग्रहः** पूर्वोक्तः। यथाशास्त्र-

वर्तिनः **साधवः**। तेषां **संग्रहो**ऽनुग्रहो यथाशक्त्युपकारः। तेन **पूयंते** विपाप्मानो भवन्ति प्रायश्चित्तेन वेत्यर्थवादः। अथवा पापानुत्पत्तिरेव पूतत्वम्। ब्राह्मणा इव **सततमिज्याभिः** नित्यैर्महायज्ञादिभिः ॥ ३११ ॥

(२) **सर्वज्ञनारायणः**। द्विजातयो विप्राः ॥ ३११ ॥

(३) **कुल्लूकः**। पापशालिनां निग्रहेण साधूनां संग्रहेण द्विजातय इव महायज्ञादिभिः सर्वकालंनृपतयः पवित्रीभवन्ति तस्मादधार्मिकान्निगृह्णीयात् साधूंश्चानुगृह्णीयात् ॥ ३११ ॥

(४) **राघवानन्दः**। ततः किंतत्राह। पापानां पापिनां निग्रहेण साधूनां परिपालनेन। द्विजातयः विप्रोत्तमाः सर्वदा यज्वानो वा नृपस्योभयसंभवेन दार्ष्टान्तिकत्वासिद्धिः ॥ ३११ ॥

(५) **नन्दनः**। स्तेनहिंसा राज्ञ एव धर्मो नान्यस्येत्याह निग्रहेणचेति ॥ ३११ ॥

(६) **रामचन्द्रः**। एवं निग्रहादिना नृपाः सततं पूयन्ते इज्यादिभिःद्विजा इव ॥ ३११ ॥

(७) **मणिरामः**। द्विजातय इवेज्याभिः यथा द्विजातयो यज्ञेन पवित्रा भवंति तथा राजानः अपि दुष्ट निग्रहेण च **पवित्रा भवंतीत्यर्थः** साधुसंग्रहेणच पवित्रा भवंतीत्यर्थः ॥ ३११ ॥

(८) **गोविन्दराजः**। **निग्रहेणेति**। यस्मात्पापकर्मणो निग्रहेण साध्वाचाराणां चानुग्रहेण राजानो द्विजातथ इव महायज्ञादिभिः सर्वकालं पवित्रीभवन्ति तस्मादधार्मिकं निगृहणीयात् ॥ ३११ ॥

**क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ॥**
**बालवृद्धातुराणां च कुर्वता हितमात्मनः ॥ ३१२ ॥**

(३१०) वधेन च=बलेन च (१) आ आ

(१) **मेधातिथिः**। **कार्यिणो**ऽर्थिप्रत्यर्थिज्ञातिसुहृदः। कस्मिंश्चिद्बध्यमाने यदि तत्पिता तन्माता वा राजानं क्षिपेत्कुत्सयेत् अभिशपेद्वा तदा क्षमा कार्या। बालादीनां **कार्यिणामपि**। एव**मात्मने हितं** कृतं भवति। क्षंतव्यमित्येतद्विधेः फलमेवात्महितम् ॥ ३१२ ॥
॥ ३१२ ॥

(२) **सर्वज्ञनारायणः**। प्रभुणा शक्तेनापि। कार्यिणां कार्यासिद्धेः क्षिपतामप्रियं वदतां बालादीनामकार्यिणामपि ॥ ३१२ ॥

(३) **कुल्लूकः**। कार्यवतामर्थिप्रत्यर्थिनां दुःखेनाक्षेपोक्तिं रचयतां तथा बालवृद्ध-व्याधितानामाक्षिपतां वक्ष्यमाणमात्मीयमुपकारमिच्छता प्रभुणा क्षमणीयम् ॥ ३१२ ॥

(४) **राघवानन्दः**। राज्ञः स्वतन्त्रस्यापि कार्यविशेषे अस्वातन्त्र्यं सार्थवादमाह क्षन्तव्यमिति द्वाभ्याम्। प्रभुणा प्रतीकारसमर्थेनापि राज्ञा क्षिपतामाक्षेपं कुर्वतां कार्यिणा-मर्थिप्रत्यर्थिनां तथा बालादीनां च क्षन्तव्यमात्मनो हितं कुर्वतेत्यन्वयः। तेषामाक्षेपसहनमेव हितमिति भावः ॥ ३१२ ॥

(५) **नन्दनः**। स्तेनापहृतद्रव्यैस्तद्द्रव्यप्रत्यानयनकालात्ययादिव दुर्जनैर्यत्पारुष्यमुच्यते

तद्राज्ञा क्षन्तव्यमित्यभिप्रायेणाह क्षन्तव्यं प्रभुणेति। प्रभुणा क्षिपतां तेषां निग्रहाय प्रभुणापि ।। ३१२ ।।

(६) **रामचन्द्रः।** कार्यिणां कार्यार्थिनां नृणां क्षिपतां अप्रियं वदतां प्रभुणा क्षन्तव्यं बालादीनां हितं आत्मनःहितंकुर्वता ।। ३१२ ।।

(७) **मणिरामः।** कार्यिणां अर्थिप्रत्यर्थिनां। क्षिपतां दुःखेनाक्षेपोक्तिं रचयतां ।। ३१२ ।।

(८) **गोविन्दराजः। क्षन्तव्यमिति।** बालवृद्धातुराणां च कुर्वतां हितमात्मने। कार्यवतां क्षिपतां स्तेनहृतबान्धवादीनां सन्तापेनाक्रोशतां बालवृद्धव्याधितानां चाक्रोशतां आत्मने वक्ष्यमाणमुपकारमिच्छतां पार्थिवेन सर्वदा क्षमणीयम् ।। ३१२ ।।

**यः क्षिप्तो मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते ।।**
**यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ।। ३१३ ।।**

(१) **मेधातिथिः। आर्तै**र्दण्ड्यमानतत्सबन्धिभिरधि**क्षिप्त** आक्रुष्टो यन्मर्षयति न क्रुध्यति **तेन** क्षमणेन **स्वर्गे महीयते**। कण्ड्वादित्वाद् यः। महत्त्वं प्राप्नोति **स्वर्गे**। अकोपेन तर्हि क्षमा कर्तव्या। अकामिनो यथाकामी अत आह। यत्तु प्रभुरहमित्यभिमानेन न सहते **तेन नरकं** प्राप्नोति। **आर्त्त**ग्रहणं बालवृद्धयोरपि प्रदर्शनार्थं पूर्वशेषत्वादस्य ।। ३१३ ।।

(२) **सर्वज्ञनारायणः।** आर्त्तैः कार्यालाभाद्दुःखितैः ।। ३१३ ।।

(३) **कुल्लूकः।** दुःखितैराक्षिप्तः सहते यःसतेन स्वर्गलोके पूजां लभते प्रभुत्वदर्पान्न सहते यः स तेन नरकं गच्छति ।। ३१३ ।।

(४) **राघवानन्दः।** हितं व्यनक्ति य इति। आर्त्तैःदुःखादिभिःपीडितैः आक्षिप्तोपि मर्षयति क्षमते तेन तितिक्षारूपेण स्वर्गे महीयतेऽक्षमायां नरकं गच्छतीत्यन्वयः ।। ३१३ ।।

(५) **नन्दनः।** तेन क्षेपणेन क्षान्तेन ।। ३१३ ।।

(६) **रामचन्द्रः।** आर्त्तैः कार्यालाभाद्दुःखितैः क्षिप्तः तिरस्कृतः सन् मर्षयति क्षमापयति ।। ३१३ ।।

(७) **मणिरामः।** आर्त्तैः दुःखितैः। क्षिप्तः कटुभाषितः। मर्षति सहते ।। ३१३ ।।

(८) **गोविन्दराजः। यत्क्षिप्तो मर्षयतीति।** संतप्तैराक्रुष्टो यत्तेषां क्षमते तेन स्वर्गलोके महीयते महिमानं भजते यत्पुनः प्रभुत्वदर्पान्न सहते तेन नरकं व्रजति ।। ३१३ ।।

**राजा स्तेनेन गंतव्यो मुक्तकेशेन धीमता ।।**
**आचक्षाणेन तत्स्तेयमेवंकर्माऽस्मि शाधि माम् ।। ३१४ ।।**

(१) **मेधातिथिः।** अविशेषोपादाने सुवर्णहारी **स्तेनो** द्रष्टव्यः। तस्यैव शास्त्रान्तरे गमनविधानात्। न चेदमागमनपरं विधिशास्त्रम् दण्डविधित्वात्। उक्तं हि "स्तेनस्यातः

प्रवक्ष्यामि विधिं दण्डविनिर्णय" इति (३०१)। अतोऽनुवादो गमनस्यात्र। राजसकाशं सुवर्णचौरेण गन्तव्यम्। **मुक्तकेशेन धीमता** धैर्यवता। 'धावतेति' पाठान्तरम्। **आचक्षाणेन** कथयता पथि तत्पातक**मेवंकर्माऽस्मि**–'ब्राह्मणस्य मयेयत्सुवर्णं हृतमिति कुरु निग्रहं मे'॥ ३१४॥

(२) **सर्वज्ञनारायणः**। राजास्तेनेनेत्यादिप्रायश्चित्तप्रकरणवाच्यार्थाभिधानम्। वधावश्यकर्तव्यतारूपराजधर्मकथनार्थम्। स्तेनेन ब्राह्मणस्वर्णहारकेण। मुक्तकेशेनेति-च नियतंमरणरूपप्रायश्चित्ताङ्गम्। एवमुत्तराण्यपि। शीघ्रगत्या गच्छता धावता॥ ३१४॥

---

(३१४) धावता=धीमता (मेधा.)

(३) **कुल्लूकः**। यद्यपि सुवर्णस्तेयकृद्विप्र इत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यति तथापि सुवर्णस्तेनं प्रति राजदण्डरूपतामस्य दंडप्रकरणे दर्शयितुं पाठः ब्राह्मणसुवर्णस्य चौरेण मुक्तकेशेन वेगाद्गच्छता मया ब्राह्मणसुवर्णमेतद्हृतमितिख्यापयतामुसलाख्यमायुधं खादिरमयं-वादण्डमुभयतस्तीक्ष्णां शक्तिलोहमयं वा दण्डं स्कन्धे गृहीत्वा राजसमीपं गच्छेत्ततोब्राह्मणसुवर्णहार्य्यहमतोऽनेन मुसलादिना मां व्यापदयेत्येवं राज्ञे वक्तव्यम्॥ ३१४॥ ३१५॥

(४) **राघवानन्दः**। एवं स्तुतिनिन्दाभ्यां राजानमभिमुखीकृत्य स्तेनस्य कृत्यमाह राजेति त्रिभिः। आशु शुद्धिमिच्छता स्तेनेनाचक्षाणेन स्तेयकर्मेतिशेषः॥ ३१४॥

(५) **नन्दनः**। स्तेनं प्रत्याह राजा स्तेनेनेति। शाधि मामित्यत्रेतिकरणं द्रष्टव्यं इत्याचक्षाणेनेति तस्यान्वयः ब्राह्मणसुवर्णापहरणविषयमेतत्॥ ३१४॥

(६) **रामचन्द्रः**। स्तेनेन सुवर्णस्तेनेन चौरेण राज्ञःसमीपे गन्तव्यं। कीदृशेन स्तेनेन तत्स्तेयं राज्ञः आचक्षाणेन कथकेन एवं कर्मा मां शाधि॥ ३१४॥

(७) **मणिरामः**। यद्यपि प्रायश्चित्तमग्रे वक्ष्यति तथापि राजदंडप्रदर्शनार्थमत्राह स्तेनेनेति। मुक्तकेशेन धावता एवं कर्मास्मि, ब्राह्मणस्वर्णचौरोहमस्मीति आचक्षाणेन स्तेनेन चौरेण स्वस्कंधे खादिरं मुसलादिकञ्चादाय राजसमीपं गतव्यः गच्छेत् ततोऽनेन मुसलादिना मां शाधि मारयेति वक्तव्यं॥ ३१४॥ ३१५॥

(८) **गोविन्दराजः। राजेति। स्कन्धेनेति।** सुवर्णस्तेयकृद्विप्र इत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यमाणस्तेन कर्तव्यःअनेन श्लोकद्वयेन अस्मिन्दण्डप्रकरणेऽनूद्यते सुवर्णस्तेनं प्रति दण्डाख्यराजकर्तव्यस्योपदेशार्थः। ब्राह्मणसुवर्णचौरेण मुक्तकेशेनादराद्वेगगतिना ब्राह्मणसुवर्णमिदम्मयाऽपहृतं इत्येवं तत्स्तेयं ख्यापयता मुशलाख्येनायुधं खदिरमयं वा लगुडं शक्त्याख्यं चायुधं तीक्ष्णोभयप्रान्तमयोमयं वा दण्डं स्कन्धेन गृहीत्वा राजसमीपं गन्तव्यम्। गत्वा च ब्राह्मणसुवर्णाऽपहारी चाहं अनेन मुशलादिना मां जहीत्येवं राज्ञो वक्तव्यम्॥ ३१४॥ ३१५॥

**स्कन्धेनादाय मुशलं लगुडं वाऽपि खादिरम् ॥**
**शक्तिं चोभयतस्तीक्ष्णामायसं दण्डमेव वा ॥ ३१५ ॥**

[ गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ।
वधेन शुध्यते स्तेनो ब्राह्मणस्तपसैव वा ॥ १ ॥ ] ‡

(१) **मेधातिथिः ।** वर्णानामनुक्रमेण मुशलादीनामुपदेशं मन्यन्ते । तदयुक्तम् । **वा**शब्दो न समर्थितः स्यात् । न च ब्राह्मणस्येदं प्रायश्चित्तमिच्छन्ति । तत्प्रायश्चित्तेषु निरूपयिष्यामः । **खदिर**जातिर्लगुड एव—न मुशलेनानुषक्तव्यः ॥ ३१५ ॥

(४) **राघवानन्दः ।** स्वप्रहारोचितं दण्डाद्यादायैव गन्तव्यमित्याह स्कन्धेनेति । शक्तिं सदण्डां छुरिकाकारां तीक्ष्णां क्षुरधारोपमाम् ॥ ३१५ ॥

(५) **नन्दनः ।** उभयतस्तीक्ष्णां उभयाग्रकृतधारामादाय गन्तव्य इति सर्वेण संबन्धः ॥ ३१५ ॥

(६) **रामचन्द्रः ।** स्कन्धेनेति द्वाभ्यामाह । मुसलादिकं गृहीत्वा आत्मानं घातयेत् ॥ ३१५ ॥

**शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ॥**
**अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम् ॥ ३१६ ॥**

(१) **मेधातिथिः । शासना**न्मुशलादिभिः प्रहरणात्क्षत्रियादिः पापान्मुच्यते । **विमोक्षा**दुत्सर्गात् । गच्छ क्षान्तमिति । "ब्राह्मणस्तपसैवेति" वधतपसी विहिते (मनु ११/१००) । तत्र वधस्तावद्ब्राह्मणस्य नास्ति । तपस्तु प्रायश्चित्तम् । न च तप इच्छातो राजाभिगमनमस्ति । तस्मात्क्षत्रियादीनामेष विमोक्षः । स च धनदण्डं गृहीत्वा । यत आह **अशासित्वेत्यादि ।** न च विमोक्षणशुद्धौ सत्यां राज्ञस्तदशासनाद्दोषोपपत्तिः । न च "शासनमपि विहितं मोक्षोऽपि विहितः—तत्र यस्मिन्पक्षे शासनं तदपेक्षं दोषवचनम् ।" पाक्षिकं हि तथा कल्पनम् । न च नित्यवच्छ्रुतस्य पाक्षिकत्वं युक्तं कल्पयितुम् । तथा च सामान्येन वसिष्ठादय आहुः—अधर्मेण स्वीयेन ऋच्छति राजानमुत्सृजन्तं सकिल्बिषन्तं चेद् घातयेद् राजा घ्नन्धर्मेण न दुष्यति' । नायं विकल्पो युक्तः । क्वचिदियं हिंसा प्रतिषिद्धा "न हिंस्याद्भूतानीति" रागादिना पुरुषार्थतया प्राप्ता । क्वचिद्विहिता—क्रत्वर्थत्वेन 'यो दीक्षितो यदग्नीषोमीयमिति' । इदं तु शासनविमोक्षणवचनं न नाम प्रतिषिद्धं सति विधौ । कथं न प्रतिषेधः । "न हिंस्याद् भूतानीति" सामान्यतः प्रतिषेधो विधिविशेषमन्तरेण न शक्यो बाधितुम् । अथोच्यते—नैवायं प्रतिषेधस्य विषयः, कर्मार्थत्वात् । कथं पुनरन्तरेण विधिं कर्मार्थता शक्याऽवगन्तुम् । लोकत इति चेल्लौकिकी प्रवृत्तिः । कथं तर्हि प्रतिषेधस्तत्रावतरेत् । ननु प्रधाने प्रवृत्तिर्निरूप्यताम् । यदि तावद्वैदिकी प्रवृत्तिस्ततस्तदङ्गे हिंसायामपि तत एव । एका हि प्रवृत्तिरङ्गप्रधानयोः । अथ लिप्सातोऽङ्गेऽपि तत्र प्रवृत्तिः, सुतरां तर्हि हिंसेयं लौकिकी । जीविकार्थिनो हि प्रजापालनाधिकारनियमो न वैधः । तेनेयमङ्गस्थापि हिंसा श्येनतुल्यत्वात्प्रति-

षेधविषयः । न च लौकिकमस्या नियतमङ्गत्वम् । नो हिंसामन्तरेण प्रजापालनमशक्यम्, निरोधादिनाऽपि शक्यत्वात् । नैष नियमः । एकरूपाऽङ्गप्रधानयोः प्रवृत्तिरिति स्यान्नाग्नीषोमीययोरनेन विशेषः स्यात् । अतो लिप्सालक्षणेऽपि प्रधानेऽङ्गे विविधलक्षणमभ्युपेतव्यम् । न चैष हिंसाविधिलक्षणा शक्याऽभ्युपगन्तुं स्वरूपस्य कार्यस्य च लौकिकत्वात्पालनस्य हिंस याश्च । अथ विधिलक्षणा षोडशिग्रहणवद्विकल्पितुमर्हति शासनवचनेन प्रतिषिद्धा ।

अन्ये तु मन्यन्ते । द्वे एते वाक्ये । शासनादिति स्तेनस्य शुद्धिरुच्यते, परेणार्धेन राज्ञस्तदशासने दोषः । तत्र यदि राजाऽशासनदोषमात्मन्यङ्गीकृत्य मुंचेन्मुच्येतैवैनसः । एवं ब्राह्मणस्यापि स्वयमागतस्य वधः शुद्धिहेतुः—'लक्ष्यं शस्त्रभृतामिति' वचनात् (मनु० ११/७३) । "न शारीरो ब्राह्मणदण्डः" इति (गौतम सू. १२/४६) राजा यदि प्रतिषेधातिक्रमेण हन्याद् ब्राह्मणः शुध्येदेव ।

**अशासित्वा** मुशलादिभिरहत्वा । **स्तेनस्य** यत्पापं तेन युज्यते ।। ३१६ ।।

(२) **सर्वज्ञनारायणः** । शासनात् तदन्यतरेणाभिघातात् । विमोक्षान्न शासिष्यामीतिमनसा राज्ञा त्यागात् । एतच्च क्षत्रियादीनामेव ब्राह्मणस्य तु प्रकारन्तरेणात्महननम् ।। ३१६ ।।

(३) **कुल्लूकः** । सकृन्मुसलादिप्रहारेण प्राणपरित्याजनान्मृतककल्पस्य जीवतोपि परित्यागाद्वा स चौरस्तस्मात्पापात्प्रमुच्यते । अत एव याज्ञवल्क्यः ।। मृतकल्पः प्रहारार्त्तोजीवन्नपि विशुध्यतीति । तंपुनःस्तेनं करुणादिभिरहत्वा स्तेनस्य यत् पापं तद्राजा प्राप्नोति ।। ३१६ ।।

(४) **राघवानन्दः** । ततः किं एवं शासनान्मृतो जीवन्वा उभयथा शुद्धःइत्याह शासनाद्वेति । स्तेयात् स्तेयजपापात् अशासित्वा तैर्दण्डादिभिरहत्वा किल्विषं पापं सहस्रदंडं वा ।। ३१६ ।।

(५) **नन्दनः** । शासनात्तेनानीतमुसलादिना ताडनरूपात् विमोक्षान्न त्वां हन्मि गच्छेत्यनुज्ञारूपात् स्तेयाद्दोषात्तस्य शासनाद्राजास्तेनस्याप्नोति किल्बिषं तस्मात्सः शासितव्यइति ।। ३१६ ।।

(६) **रामचन्द्रः** । शासनाद्वा तमाशिष्यामीति मनसा राज्ञा त्यागाद्विमोक्षाद्वा स्तेनश्चौरः स्तेयात् कृतपापात् विमुच्यते । एतत् क्षत्रियाणामेव ।। ३१६ ।।

(७) **मणिरामः** । ततः किं भवतीत्यक्त आह । शासनादिति । एकप्रहारं कृत्वा मृतक कल्पस्य मोक्षाद्वा । तथा च याज्ञवल्क्यः । मृतकल्पप्रहारार्त्तो जीवन्नपि विशुद्धचतीति । अशासित्वा चौरकरुणया एक प्रहारमप्यकृत्वा ।। ३१६ ।।

(८) **गोविन्दराजः । शासनादिति ।** प्रशाधि त्वेति । राजसम्बन्धिहननेन परित्यागेन वा स चौरस्तस्मात्पापात् विमुच्यते । तं पुनः स्तेनं न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितमिति वक्ष्यमाणत्वात् ब्राह्मणतर्जनहन्ता राजा तस्य सम्बन्धि यत्पापं प्राप्नोति तस्मादसौ राज्ञा हन्तव्यः । इत्येवंपरमेतत्सर्वमिहाभिधानम् ।। ३१६ ।।

**अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्याऽपचारिणी ।।**
**गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ।। ३१७ ।।**

(१) **मेधातिथिः।** अन्नमत्तीत्यन्नादः। **भ्रणहा** ब्रह्महा। तदीयमन्नं यो भुङ्क्ते तस्मिंस्तद्ब्रह्महत्यापापं **मार्ष्टि** निरस्यति श्लेषयति। यथा मलिनं वस्त्रमुदके मृज्यते तन्मलं तत्र संक्रामत्येवम्। अर्थवादश्चायम्। तस्य तत्पापमुत्पद्यते। ब्रह्मणो श्लेषः। **पत्यौ** भर्त्तरि **भार्यापचारिणी** जारिणी–स चेत्क्षमते। अत्रापि भर्तुरुत्पद्यते पापं, तस्या अपैति। **गुरौ शिष्यश्च याज्यश्च** 'शिष्यः' सूर्याभ्युदिताभिरपराध्य गुरौ क्षममाणे तत्पापं प्रक्षिपति। एवं याज्यो याजके। सोऽपि गुरुरेवेत्यतो याजकग्रहणं न कृतम्। एवं चौरो **राजनि**–न चेद्राज्ञा निगृह्यते। याज्योऽपि कर्मणि प्रवृत्ते विधिमपक्रामति चेद्याजकवचने नावतिष्ठते तदा त्याज्यः, न पुनस्तस्य ताडनादि शिष्यवत्कर्तव्यम्। अन्नादादिषु सर्वेष्वन्यत्र विधिरस्तीति न बुद्धिः। अतोऽर्थवादोऽयम्।। ३१७ ।।

(२) **सर्वज्ञनारायणः।** अन्नादे तदीयान्नभोक्तरि भ्रूणहा ब्रह्महा मार्ष्टि शोधयति। भ्रूणघ्नस्तेनपापस्य क्षयात्पापोत्पादाच्च । एवं पत्यौ भार्या व्यभिचारिणी संगृह्यमाणा- गुरावध्यापकर्त्विजोः शिष्ययाज्यौ पापिष्ठौ। स्तेनो राजनीति तु प्रकृतम्।। ३१७ ।।

(३) **कुल्लूकः।** ब्रह्महा यस्तत्संबन्धियोऽन्नमत्ति तस्मिन्नसौ स्वपापं संक्रामयति भ्रूणहान्नभोक्तुः पापं भवतीति एतदत्र विवक्षितं नतु ब्रह्मघ्नः पापं नश्यति तथा भार्या व्यभि- चारिणी जारपतिं क्षममाणे भर्त्तरि पापं संश्लेषयति शिष्यश्च संध्याग्निकार्याद्यकरणजन्यं पापं- गुरौ सहमाने न्यस्यति याज्यश्च विधिमतिक्रामन्याजके क्षममाणे पापं निःक्षिपति स्तेनश्च राजन्युपेक्षमाणे पापं समर्पयति तस्माद्राज्ञा स्तेनो निगृहीतव्यः ।। ३१७ ।।

(४) **राघवानन्दः।** स्तेनस्य परस्य पापेन राजा तज्जातीयपापवान्भवतीति स्तेनदृष्टान्तेनाऽन्येषामपि परपापवत्त्वमाह अन्नादइति । अन्नादेतदन्नभोक्ता भ्रूणहा स्वकिल्बिषं मार्ष्टि संक्रामयतीत्यन्वयः। पतिपदमुपलक्षणं येन येन संगता तं तमपि। अतएवोक्तं निःश्वासाद्गात्रसंस्पर्शादित्यादिः। याज्यश्च याजकेतिशेषः। एतेनान्य- पापेनान्यस्यापि तज्जातीयपापजन्म विवक्षितम् नतु पापिनः पापनाशइति केचित्। तत्र दानेनाकार्यकारिणे नेतिवचनात् शुध्यन्त्येव ते सर्वदा अन्यथा बहुवित्तव्ययायासप्राय- श्चित्तादौ तादृशे कोपि नप्रवर्तेत अत एव यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषमिति- संगतम्। अत्र भ्रूणहेत्यादित्रयं सिद्धवत्कृत्य राजनि पापसंक्रान्तिरुक्ता अतश्चतुर्णां परस्पर- दृष्टान्तता तेन पापिनोऽन्नं न भोक्तव्यम् भार्यादिकं च शासनीयमितिभावः ।। ३१७ ।।

(५) **नन्दनः।** उक्तमेवार्थं दृष्टान्तेन द्रढयति। अन्नादे भ्रूणहेति यो भ्रूणघ्नोऽन्नमत्ति तस्मिन्भ्रूणहा स्वकिल्बिषं शोधयति अपचारिणी व्यभिचारिणी एवं शासितरि राजनि किल्बिषं स्तेनोमार्ष्टि यत एवं तस्माद्राज्ञा स्तेनः शासितव्य इति ।। ३१७ ।।

(६) **रामचन्द्रः।** अन्नादे अन्नभोक्तरि भ्रूणहापापंमार्ष्टि। मृजूशुद्धौइत्यस्य धातोरूपम्। अपचारिणी मर्यादाव्यभिचारिणी भार्या पत्यौ उपपतिं क्षममाणे पापंमार्ष्टि। याज्योशिष्यः

गुरौ पापंमार्ष्टि। अशास्तरि राजनि चौरःकिल्बिषम् राजनि ।। ३१७ ।।

(७) **मणिरामः।** भ्रूणहा ब्रह्महा अन्नादे ब्रह्मघ्नसंबंध्यन्नभक्षके किल्विषं स्वपापं मार्ष्टि संक्रामयति। तथा च ब्रह्मघ्नस्यान्नं न भोक्तव्यमित्यभिप्रायः। एनमग्रेपि। अपचारिणी भार्या पत्यौ। पापं संक्रामयति यदि भर्त्ता जारं क्षमते तदा नान्यथेत्यर्थः। शिष्यः याज्यश्च गुरौ यथोक्ताऽकरणस्योपेक्षके। तथा गुरुणा उपेक्षा न कार्येत्यर्थः। स्तेनः राजानं अदंण्डकर्तारं।। ३१७ ।।

(८) **गोविन्दराजः। यस्मादन्नाद इति।** यो ब्राह्मण स तत्सम्बन्धि अन्नमत्ति तद्विषयमात्मीयं पापं शोधयति पापं तस्य भवतीत्येवं एतदेवात्र विवक्षितम्। न तु भ्रूणपापप्रायश्चित्तधिया[1]। तथैवं भार्या व्यभिचारिणी उपपतिं क्षममाणे भर्तरि पापं तं संश्लेषयति। शिष्यश्च यमनियमाननुष्ठानजन्यं पापं गुरौ सहमाने अर्पयति। याज्यश्च यागेऽन्यथा प्रचरन् याजके क्षममाणे प्रक्षिपति। स्तेनश्च राजनि सहमाने सत्यसति तस्माद्राज्ञा वक्तव्यः ।। ३१७ ।।

---

१. पाप ··· धिया=पापमेति अन्नदानस्य प्रायश्चित्तत्वेनाश्रवणात् (गो. ५)।

**राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।।**
**निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ।। ३१८ ।।**

(१) **मेधातिथिः।** यदुक्तं पापकारिणो निग्रहेण कर्मकृतो रक्ष्यन्त इति तत्स्फुटयति। **धृतो** विनिपातितो **दण्डो** येषां **राजभिस्ते कृत्वा पापानि** कृतपापा राजनिग्रहेण **निर्मला** निरस्तपापा भवन्ति। अपगते च पापे यदेषां स्वर्गारोहकं कर्म तेन स्वर्गं प्राप्नुवन्ति। महद्धि पापं शुद्धस्य कर्मणः फलस्य प्रतिबन्धकम्। **सुकृतिनो** नित्यं सुकृतकर्मकारिणः। यथा **सन्तः** धार्मिकास्तद्वत्। सतामधर्मो नैवोत्पाद्यत एषामुत्पन्नो निग्रहणेन विनाशित इति प्राक्प्रध्वंसाभावयोर्विशेषः।

**मानव**ग्रहणान्न प्रकरणाच्चौराणामेव।

दण्डशब्दस्तु शरीरनिग्रहविषयो न हि प्रकरणमतिक्रामति। धनदण्डो हि राजार्थः। वृत्तिर्हि सा राज्ञः। शारीरे तु दण्डे दण्ड्यमानार्थता न शक्यते निह्नोतुम्। त्वक्संस्कारो हि सा। अथेयं बुद्धिः—'पालनमेव हिंसामन्तरेण न निष्पाद्यते—तच्च राजार्थमिति कुतो मार्यमाणार्थता मारणस्य'—अथ किं पालनं न पाल्यमानार्थं दृष्टमेवापह्नूयते। न हि तद्दृष्टमुपादेयं राज्ञैव स्वरक्षार्थे करशुल्कादिभृत्या उपादीयन्ते। अतः सुतरां रक्षोपयोगित्वे हिंसायां न हिंस्यमानार्थतासिद्धिः। कथं वा हिंसाया विना न रक्षानिर्वृत्तिर्यदि तावदेवमर्थे निगृह्यन्ते पुनरकार्यमावर्तयिष्यते तन्निरोधनादिनापि शक्यते नियन्तुम्। अथ तान्निगृहीतान्दृष्ट्वा भयादन्ये न प्रवर्तयिष्यन्त इति धनदण्डेनापि शक्यते दुःखयितुम्। हन्यमानेष्वपि सहस्रशः प्रवर्तन्ते। तस्मादियं हिंसा रक्षा सती हिंस्यमानसंस्कार इति मन्तव्यम्। अतश्च करणादिछेदने नियमः। हस्त्यादिविधिश्च दंडयेष्वेवादृष्टमाधास्यति, न राजार्थो भविष्यति।

तस्माच्छरीरदण्डे पापान्मुक्तिर्न धनदण्ड इति स्थितम् ।

तथा च महापातिकिनां हृतसर्वस्वानामप्सु प्रवेशितदण्डानां संव्यवहारपरिहारार्थ-मङ्कनं वक्ष्यति । यदि च धनदण्डेन शुध्येयुः पुनरङ्कनमनर्थकं स्यात् ।

अत्र च स्वयमागतस्य नानीतस्य विशेषो यः स्तेन एवं विशेषो भवतु । इदं तु सर्वं शारीर-दण्डविषयम् ।। ३१८ ।।

(२) **सर्वज्ञनारायणः** । कृत्वा पापानि धृतदण्डा इत्यन्वयः । स्वर्गमायान्ति पापक्षये पूर्वोपात्तधर्मेण ।। ३१८ ।।

(३) **कुल्लूकः** । सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभिर्विहितदण्डा मनुष्याः संतः प्रतिबन्धकदुरिताभावात्पूर्वार्जितपुण्यवशेन साधवः सुकृतकारिण इव स्वर्गंगच्छन्ति । एवं प्रायश्चित्तवद्दण्डस्यापि पापक्षयहेतुत्वमुक्तम् ।। ३१८ ।।

(४) **राघवानन्दः** । दण्डेन न केवलं पापान्मुक्तिरपितु स्वर्गाद्यपीत्याह राजभिरिति । पापनिर्मुक्तिमात्रमत्र विवक्षितं स्वर्गावाप्तिस्तु पूर्वकृतसुकृतकर्मणः दुरदृष्टप्रतिबन्धरहितात् । नच पापिनः कुतः सुकृतमितिवाच्यम् । कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठतीतिस्मृतेरना-रब्धफलकर्मणःसत्वप्रतीतेः ।। ३१८ ।।

(५) **नन्दनः** । पापकृतामपि श्रेयस्करो राजदण्डः तेनाप्यवश्यं ते दण्ड्या इत्याह राजभिर्धृतदण्डास्त्विति न केवलं निर्मलंनिर्मलत्वमेव किन्तुस्वर्गमायान्तिच ।। ३१८ ।।

(७) **मणिरामः** । प्रायश्चित्तवद्दंडस्यापि पापक्षयकारित्वमाह । राजभिरिति ।। ३१८ ।।

(८) **गोविन्दराजः** । **राजभिरिति** । ते समुद्धताः पापानि कृत्वा पूर्वार्जिनं तथा ऋतुवरान् कृत्वा स्वर्गमपापाः सन्तः शिष्टा इव शुभकारिणो व्रजन्ति । ये तत्पापनिमित्तं राजनि कृतदण्डा भवन्ति इहा पापानीति बहुवचनात् हिरण्यस्तेनविषय एव दण्डयः न कार्य-निष्कृतिः अपि तु सकलैनः स्वविजये व्यवसीयते न च स्वयमागतविषयैव दण्डेन पापनिष्कृतिः न हठदण्डितविषये मन्तव्यम् । हठदण्डितस्यापि यदि संसाधयेत्वयित्यादिनिष्कृतेर्दर्शित्त-त्वाद्याम्ययातनाभिर्वा कथं परवशस्य निष्कृतिः स्यात् ।। ३१८ ।।

**यस्तु रज्जुं घटं कूपाद्धरेद्भिद्याच्च यः प्रपाम् ।।**
**स दण्डं प्राप्नुयान्माषं तच्च तस्मिन्समाहरेत् ।। ३१९ ।।**

(१) **मेधातिथिः** । पिबन्त्यस्यामिति **प्रपा** । जलाधारस्थानं उद्धृतजलनिधानं वा । माषस्य जातिर्न निर्दिष्टा । सा मरुजाङ्गलानूपभेदाद् द्रष्टव्या । **तच्च** रज्ज्वादि **समाहरेद्या-**तस्मिन् स्थाने, न राजनि ।। ३१९ ।।

(२) **सर्वज्ञनारायणः** । प्रपां जलशालां भिन्द्यात् तत्काष्ठादि हरेत् । माषं सुवर्णस्य । तस्मिन् कूपादौ तद्रज्ज्वादि ।। ३१९ ।।

(३) **कुल्लूकः।** कूपसमीपे रज्जुघटयोर्जलोद्धारणाय धृतयो रज्जुं घटं वा हरेत् यो वा पानीयदानगृहं विदारयेत्स सौवर्णमाषं दण्डंप्राप्नुयात्। अनिर्दिष्टन्तुसौवर्णमाषंतत्र प्रकल्पयेदिति कात्यायनवचनात्। तच्च रज्वादि तस्मिन्कूपे समर्पयेत् ॥ ३१९ ॥

(४) **राघवानन्दः।** प्रकृतं पुनर्दण्डमाह यस्त्विति। केनापि पुण्यवता कूपसमीपे स्थापितौ रज्जुघटौ कृतप्रपां वा हरेद्वानाशयेत् स सौवर्णमाषं दण्डं प्राप्नुयादित्यर्थः। तच्च रज्वादिकं समाहरेत्। संपाद्य दद्यादिति ॥ ३१९ ॥

(५) **नन्दनः।** द्रव्यान्तराणां चोरयितारं प्रत्याह यस्तुरज्जुं घटमिति। रज्जुश्चघटश्चरज्जुघटं हरेन्मुष्णीयात्ततश्च तस्मिन्कूपे कूपसमीपे समाहरेत्पुनरास्थापयेत्तस्मिन्स्थाने प्रतिसमादध्यादिति ॥ ३१९ ॥

(६) **रामचन्द्रः।** माषं सुवर्णस्य। तच्च रज्जुघटादि तस्मिन् कूपादिस्थाने समाहरेत् ॥ ३१९ ॥

(७) **मणिरामः।** माषं सौवर्णं। यन्निर्दिष्टं तु सौवर्णं माषं तत्र प्रकल्पयेदिति कात्यायनवचनात्। तच्च रज्वादि। तस्मिन् कूपे। समाहरेत् समर्पयेत् ॥ ३१९ ॥

(८) **गोविन्दराजः।** **य इति।** यः कूपाद्रज्जुघटमपहरेत् यो वा उदकदानगृहं विनाशयेत् सरुप्यं सुवर्णं वा माषं स राज्ञा गलकेशाद्यपेक्षया दण्डं प्राप्नुयात्। तत्र च रज्ज्वादि तस्मिन्कूपे प्रत्यानयेत् ॥ ३१९ ॥

**धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥**
**शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥ ३२० ॥**

(१) **मेधातिथिः।** **कुंभ**शब्दः परिमाणविशेषे वर्तते न घटमात्रे। क्वचिद्विंशतिप्रस्थान्क्वचिद्द्वाविंशतिरिति देशभेदाद्व्यवस्था। **दशभ्योऽधिकं हरतो** वधविधिरुक्तार्थोऽनुबंधादिना नियम्यते। शेषेषु दशसु प्राकृत एकादशगुणो दण्डः। **तस्य च तद्धनमिति** सर्वत्र स्तेये योज्यम्। **धान्यं** व्रीहियवादिसप्तदशानीति स्मर्यते ॥ ३२० ॥

(२) **सर्वज्ञनारायणः।** कुम्भः पलशतद्वयम्। वधस्ताडनादि। ब्राह्मणादिद्रव्ये-त्वङ्गच्छेदादिः। शेषे ततःप्राक् तस्य तद्धनं दाप्य इत्युभयत्र ॥ ३२० ॥

(३) कुल्लूकः। द्विपलशतं द्रोणो विंशतिद्रोणश्च कुम्भोदशसख्येभ्यः कुंभेभ्योऽधिक धान्यं हरतोवधः सच हर्तस्वामिगुणवत्तापेक्षया ताडनागच्छेदमारणात्मकोज्ञेयः। शेषे पुनरेकस्मादारभ्य दशकुम्भपर्यन्तहरणे निह्नुवते एकादशगुण दण्ड दाप्यः स्वामिनश्चापहृत दाप्यः। ॥३२०॥

(४) **राघवानन्दः।** धान्यहरणे दण्डमाह धान्यमिति। **कुम्भेभ्यः** द्विपलशतं द्रोणो विंशतिद्रोणश्च कुम्भः तेभ्योधिकं हरतो वधः हर्तृगुणवत्वाद्यपेक्षया ताडनाङ्गछेदनमारणात्मकः हिंसामात्रवाचित्वाद्वधस्य। शेषे दशकुम्भाभ्यन्तरे एकादशगुणं हृतद्रव्यापेक्षया। तस्य धान्यस्वामिनं तद्धनं तावद्धान्यम् ॥ ३२० ॥

(५) **नन्दनः।** कुसूलात्किञ्चिन्न्यूनं धान्यभाजनं कुम्भः दशभ्यः कुम्भेभ्य इत्येक-पुरुषस्य संवत्सरभोजनपर्य्यन्तधान्यग्रहणं ततोभ्यधिके हरणे दण्डःस्यात्। दशभ्यःकुंभे-भ्योन्यूनेहरणे हृतादेकादशगुणंधान्यंहर्ता दण्डत्वेन दाप्यः। धान्यस्वामिने तद्धृतं धान्यं च दाप्यं। ब्राह्मणधान्यहरणे क्षत्रियादीनामयमेव दण्डोऽवगन्तव्यः॥ ३२०॥

(६) **रामचन्द्रः।** अभ्यधिकं हरतःवधः ताडनादि। एतद्विप्रविषयम् क्षत्रियादा-वंगच्छेदइत्यर्थः। शेषेपि ततोन्यूने राज्ञे एकादशगुणं दण्डं तस्य स्वामिनः तद्धनम्॥ ३२०॥

(७) **मणिरामः।** दशभ्यः कुंभेभ्यः अभ्यधिकं धान्यं हरतः। वधः कार्यः द्विपलशतं द्रोणः विंशतिद्रोणश्च कुंभः। शेषे पलादारभ्य दशकुंभपर्यंतहरणे। एकादशगुणं याव-च्चौरितं तदेवैकादशगुणं दाप्यः दंडत्वेन। स्वामिनश्च हृतपरिमाणं दाप्यः॥ ३२०॥

(८) **गोविन्दराजः। धान्यमिति।** द्विपलं शतं द्रोणं विंशतिद्रोणा एककुंभः। दश-कुंभेभ्योऽधिकं धान्यं हरतो हर्तृक्रियमाणगुणापेक्षया सुभिक्षदुर्भिक्षाद्यपेक्षया च ताडनाऽ-ङ्गच्छेदनाद्यात्मको वधदण्डः कर्तव्यो राज्ञा, दशकुंभं पुनर्यावदपहृतं एकादशगुणं दण्डं दाप्यः। तस्य च तद्धनं दाप्यः। वक्ष्यमाणञ्च सर्वत्र स्वामिनो दाप्यः॥ ३२०॥

**तथा धरिममेयानां शतादभ्यधिके वधः॥**
**सुवर्णरजतादीनामुत्तमानां च वाससाम्॥३२१॥**

(१) **मेधातिथिः।** धरणं धरिम तुला तेन मीयन्ते तानि धरिममेयानि घृतादीनां द्रवाणां प्रस्थादिमेयताऽस्तीति कठिनानां परिमेयता भवतीति तदर्थनात्— **सुवर्णरजता-दीनाम्।** आदिग्रहणादेव रजते लब्धे पुनरुपादानात्तुल्यग्रहणार्थात्प्रवालादीनि गृह्यन्ते, न तु ताम्रलोहादीनि। तेषां शतादूर्ध्वं हरणे वधः।

किं पुनरेतच्छतं पलानामुत कर्षाणामेव कार्षापणानां वा।

केचिदाहुः पलानामिति। न त्वत्र विशेषे हेतुरस्ति। तस्माद्यस्मिन्देशे धरिममानकाले यया संख्यया व्यवहारः—'शतमिदं सुवर्णस्य' क्वचित्तोलके क्वचित्पलेषु—यथादेशं व्यवस्था।

**उत्तमानां च वाससां** कौशेयपट्टादीनामिति। **शतादभ्यधिके वधः** इत्यनुषङ्गः। अत्रापि शाटकयुगमेकमिति संख्यायते। पुष्पपटाद्युपबृंहणं त्वेकमेवेति।

"ननु च सुवर्णरजतादीनामित्येव सिद्धे परिमेयग्रहणमनर्थकम्॥"

नानर्थकं कर्पूरागुरुकस्तूरिकादीनां महार्घाणां ग्रहणार्थम्।

**आदिग्रहणाद्धि** तैजसानि गृह्यन्ते, निष्कादिपरिमाणव्यपदेश्यानि वा। न हि कर्पूरादीनां कर्षादिव्यपदेशोऽस्ति। यद्यपि सुवर्णवद्रजतेऽपि शतसंख्या तथापि प्रायश्चित्तभेदवद्दण्ड-भेदोऽपि युक्तो विषमसमीकरणस्यान्याय्यत्वात्। अतो यावत्सुवर्णगतस्य मूल्यं तावति रूप्ये गृहीते वधः। कर्पूरादीनां तु पलानामेव शतसंख्या॥ ३२१॥

(२) सर्वज्ञनारायणः। धरिमं तुला तन्मेयानां सुवर्णरजतव्यतिरिक्तानां ताम्रादीनां शतात् निष्कशतात्। एतच्च षोडशमाषकरूपसुवर्णचतुष्टयरूपनिष्कव्यवस्थया ग्राह्यम्। अत्रापि वधो मारणं ब्राह्मणद्रव्यत्वे अन्यत्र त्वङ्गच्छेदादि। सुवर्णेति। सुवर्णरजतोत्तमवाससामल्पानामपि हरणे वध एवेत्यर्थः ॥ ३२१ ॥

(३) कुल्लूकः। यथा धान्येन वध उक्तस्तथा तुलापरिच्छेद्यानां सुवर्णरजतादीनामुत्कृष्टानां च वाससां पट्टादीनां पञ्चशताधिकेऽपहृतेवधः कर्त्तव्य एव विषयसमीकरणं चात्र देशकालापहर्तृद्रव्यस्वामिजातिगुणापेक्षया परिहरणीयं एवमुत्तरत्रापि ज्ञेयम् ॥ ३२१ ॥

(४) राघवानन्दः। उक्तदण्डमन्यत्रातिदिशति तथेति द्वाभ्याम्। धरिमेति धरिमं तुला तेन परिच्छेद्यानां कार्पासादिद्रव्याणां पलशतादधिके अपहृते वधः। तत्रापि देशकालहर्तृद्रव्यस्वामिजातिगुणापेक्षया ताडनाङ्गछेदनमारणादि ज्ञेयम् ॥ ३२१ ॥

(६) रामचन्द्रः। धरधटताम्रादीनां तुलामेयानां शतात् निष्कात् अभ्यधिकं हरतः वधः ताडनादि। सुवर्णादि हरतः अल्पानां हरणे वधः ॥ ३२१ ॥

(७) मणिरामः। यथा धान्यहरणे वध उक्तः धटिममेयानां धटिमया तुलया मेयानां तुलितानां। सुवर्णरजतादीनां। उत्कृष्टवाससांच शतादभ्यधिके सुवर्णादीनां पलशतात् वस्त्रस्य संख्याशतात् हरणे वधः कार्यः ॥ ३२१ ॥

(८) गोविन्दराजः। तथेति। सुवर्णरजतादीनां महार्घाणाञ्च वाससाम्। न केवलं धान्ये यथा पूर्वोक्तो यावत्तुलाछेद्यानामपि सुवर्णरजतप्रवालादीनामुत्कृष्टानाञ्च वाससां चान्तःपट्टादीनां एतच्छतादभ्यदिकेऽपहृते वधः कर्तव्यः। विषमसमीकरणञ्चात्र देशकालाऽपहृतद्रव्यं स्वामिजातिगुणाद्यपेक्षया परिहरणीयम्। अन्यथा महार्घाल्पार्घ्ययोः तुल्यदण्डता स्यादेवं द्रष्टव्यम् ॥ ३२१ ॥

**पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते॥**
**शेषे त्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥ ३२२ ॥**

(१) मेधातिथिः। सुबोधोऽयम्। मूल्यादिति। नापहृतमेव द्रव्यं देयम्। क्वचित्तज्जातीयं नैव प्राप्यते। अतो रूपकैर्धान्यादिना वा विनिमेयम् ॥ ३२२ ॥

(२) सर्वज्ञनारायणः। पञ्चाशत इति ताम्रादिविषयम्। शेषे पञ्चशत ऊने ॥ ३२२ ॥

(३) कुल्लूकः। पूर्वोक्तानां पञ्चशदूर्ध्वं शतं यावदपहारे कृते हस्तच्छेदनं मन्वादिभिरभिहितं शेषेष्वेकपलादारभ्य पञ्चाशत्पलपर्यन्तापहारेऽपहृतधनादेकादशगुणं दण्डं दाप्यः ॥ ३२२ ॥

(४) राघवानन्दः। एवमुक्तानां सुवर्णादीनां तोलकानां पञ्चाशत्पर्यन्तमपहृतस्य मूल्यादेकादशगुणो दण्डः पञ्चाशतोऽधिके हस्तच्छेदः ॥ ३२२ ॥

(५) नन्दनः। स्वर्णानां पञ्चशतोभ्यधिके हरणे शेषे पञ्चाशतो न्यूने ॥ ३२२ ॥

(६) **रामचन्द्रः।** पञ्चाशतस्तु अधिके ताम्रादि पञ्चाशतन्यूनेन ॥ ३२२ ॥

(७) **मणिरामः।** पूर्वोक्तानां सुवर्णरजतादीनां पंचाशत्त्वमधिके हृते हस्तच्छेदः कार्यः। शेषे एकादिपलादूर्ध्वं पंचाशत्पलपर्यंतं हरणे॥ ३२२॥३२३॥

(८) **गोविन्दराजः।** पञ्चाशत इति। एषां पूर्वनिर्दिष्टानां पञ्चाशत ऊर्ध्वं शतस्य यावदपहृते चैतत् हस्तच्छेदनं मन्वादिभिरुच्यते। पञ्चाशतः पञ्चाशतः यावदपहृते तन्मूल्यादेकादशगुणं राजा दण्डं कुर्यात् ॥ ३२२ ॥

**पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥**
**मुख्यानां चैव रत्नानां हरणे वधमर्हति ॥ ३२३ ॥**

(१) **मेधातिथिः।** सत्कुले जाता विद्यादिगुणयोगिनः **कुलीनाः। नारीणां च विशेषतः** गुणरूपसौभाग्यसंपन्नानामित्यर्थः। चशब्दात्कुलीनानामित्येव परस्परापेक्षाणि नारीणां विशेषणानि। **मुख्यानि** उत्तमानि रत्नानि वज्रवैडूर्यमरकतप्रभृतीनि।

अत्रापि सुवर्णशततुल्यानीत्यपेक्ष्यम्। अन्यथोत्तमत्वमापेक्षिकमिति दण्डो न व्यवतिष्ठेत।

**वधमर्हति।** अनुबन्धाद्यपेक्षया सर्वत्र वध्यर्थो योजनीयः।

अकुलीनानामविशिष्टानाममुख्यानां च 'शेषे त्वेकादशगुण' इत्येव ॥ ३२३ ॥

(२) **सर्वज्ञनारायणः।** वधः उत्कृष्टापकृष्टापेक्षया मारणाङ्गच्छेदादिः ॥ ३२३ ॥

(३) **कुल्लूकः।** महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां महाकुलप्रसूतानां श्रेष्ठानां च रत्नानां वज्रवैदूर्यादीनामपहारे वधमर्हति ॥ ३२३ ॥

(४) **राघवानन्दः।** मनुष्यरत्नविशेषयोरपहृते* अवश्यं वध इत्याह पुरुषाणामिति। नारीणां विशेषतः कुलजानाम्। कपिंजलानितिवत्त्रित्वं विवक्षितम्। मुख्याना वज्रवैडूर्यादीनां रत्नानाम् ॥ ३२३ ॥

(५) **नन्दनः।** ह्रियमाणहरणयोर्जातिगुणाद्यपेक्षया वधशब्दार्थः कल्पनीयः छेदनरूपो मारणरूपो वा ॥ ३२३ ॥

(८) **गोविन्दराजः। पुरुषाणामिति।** महाकुलानां मनुष्याणां विशेषेण च स्त्रीणां महाकुलोत्पन्नानां प्रधानानां मणीनां वज्रवैडुर्यादीनां हरणे देशकालहर्तृस्वामिजात्याद्यपेक्षया ताडनाङ्गच्छेदनात्मकं वधमर्हति ॥ ३२३ ॥

**महापशूनां हरणे शस्त्राणामौषधस्य च ॥**
**कालमासाद्य कार्यं च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥**

(१) **मेधातिथिः।** महापशवो हस्त्यश्वादयः। तेषां हरणे कालकार्यपेक्षा दण्डप्रक्लृप्तिः।

---

* अपहृते=अपह्नवे (राघ २)

"ननु च सर्वत्रैव कालाद्यपेक्षोक्ता। तथा च कालदेशवयःशक्तीश्चिन्तयेद्दण्डकर्मणीति"।

सत्यम्। विज्ञाते दण्डस्वरूपे न्यूनाधिकभावोऽनुबन्धाद्यपेक्षाः। यथा वधविधौ ताडन-मारणादिकल्पनाऽपेक्ष्या। इहात्यन्तविलक्षणो दण्डः। तथा हि विंशतिपणोऽपि खड्गः शत्रोरुद्यतशस्त्रस्य सन्निधौ यदि ह्रियते तेन कार्यातिशयेन तेन च कालेन मारणं दण्डः। अन्यदा द्विगुण एकादशगुणो वा। तथौषधमलभ्यत्वेन महाप्रयोजनं तदुपयोगवेलायां ह्रियते लभ्यानामपि क्वाथाद्यपेक्षं कालातिक्रमणेन महदातुरस्य दुःखं जनयतीति—तत्र महान्दण्डः। अन्यदा तु स्वल्प इति। न तत्रान्तरामन्तरेणेदृशं वैषम्यं लभ्यते। अन्यथा स एवैकः श्लोको दण्डविधौ पठितव्यः स्यात्। तस्माद्वक्तव्यमिदम्। विग्रहकालेऽश्वादीनां राज्यापेक्षो दण्डः। शस्त्राणां राजोपयोगिनां कदाचित्क्षमा कदाचिन्महान्दण्डः। गोमहिष्यादीनां तु प्रजासंबन्धिनां न राज्ञा क्षन्तव्यम्। कार्ये च यदश्वादिभिः कर्तव्य तदप्यपेक्ष्यम्। विग्रहोऽपि यदि पर्वतादौ भवति यत्र नातीवाश्वैः प्रयोजनं भवत्येव दण्डह्रासः।

कालमासाद्य ज्ञात्वा निरूप्य दण्डं कल्पयेत्। स एवात्र भवति नतः शास्त्रम्॥ ३२४॥

(२) **सर्वज्ञनारायणः**। महापशूनामश्वादीनां हरणे वधः। शास्त्राणामौषधस्य च हरणे तदेकादशगुणमित्यादिः कार्यबहुत्वाल्पत्वमपेक्ष्य दण्डः। तथा शस्त्रादीनां युद्धकालादौ हरणे ततो द्विगुणमित्याद्युन्नेयमित्यर्थः॥ ३२४॥

(३) **कुल्लूकः**। महतां पशूनां हस्त्यश्वादिगोमहिष्यादीनांतथा खड्गादीनां शस्त्राणां कल्याणघृतादेश्चौषधस्य च दुर्भिक्षादिरूपं कालं कार्यं प्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदवधरूपं दण्डं प्रकल्पयेत्॥ ३२४॥

(४) **राघवानन्दः**। पश्वादीनामपहारेऽङ्गच्छेदनादिदण्डमात्रमित्याह महेति। महापशूनां हस्त्यश्वानाम्। शस्त्राणां खड्गादीनाम्। औषधस्य कल्याणघृतादेः। कालं सुभिक्षदुर्भिक्षरूपम्। कार्यमासन्नं युद्धरोगादि। आसाद्य विचार्य॥ ३२४॥

(५) **नन्दनः**। महापशूनां हस्त्यश्वानां कालं दुर्भिक्षसुभिक्षादिकं कार्यमाह पशुभि-रिदंकार्यं शस्त्रैरिदंकार्यमित्यादिकं आसाद्य निरूप्य दण्डं वधमेकादशगुणं वा राजा कल्पयेत्॥ ३२४॥

(६) **रामचन्द्रः**। महापशूनां अश्वादीनां हरणे कालं युद्धादिसमयं आसाद्य कार्यं-युद्धादिरूपं प्रकल्पयेत् च पुनःराजा दण्डं वा प्रकल्पयेत्॥ ३२४॥

(७) **मणिरामः**। महापशूनां हस्त्यश्वागोमहिष्यादीनां। महास्त्राणां खड्गादीनां। महदौषधस्य कल्याणघृतादेः। कालं दुर्भिक्षादिरूपं कार्यं सदसद्विनियोगरूपं आसाद्य दंडं अंगछेदरूपं प्रकल्पयेत्॥ ३२४॥

(८) **गोविन्दराजः**। **महापशूनामिति**। हस्त्यश्वगोमहिषादीनां महतां पशूनां हरणे खड्गादीनां कल्याणघृतादेश्च कालविग्रहदुर्भिक्षात्मकं कार्यं चापहारप्रयोजनं द्युतवैर रज्ववसादादिरूपं पर्यालोच्य राजान्यूनाऽधिकं दण्डं प्रकल्पयेत्। अनुबन्धं परिज्ञाय नैतल्ला-घवार्थमपि सादरार्थमुच्यते शस्त्रौषधहस्ताद्यपहारे विग्रहादौ स्थूलानर्थोत्पादनात्॥ ३२४॥

**गोषु ब्राह्मणसंस्थासु खरिकायाश्व भेदने ॥**
**पशूनां हरणे चैव सद्यः कार्योऽर्धपादिकः ॥ ३२५ ॥**

(१) **मेधातिथिः।** **ब्राह्मणसंस्था** ब्राह्मणाश्रिता ब्राह्मणस्वामिकाः। तासां **हरणे**। षष्ठ्यर्थे सप्तमी। **पशूनां** चाजैडकादीनाम्। बहुवचनं सर्वत्राविवक्षितम्। **सद्य**स्तत्क्षणादविचार्य। पादस्यार्धमर्धपादम्, तदस्यास्तीत्य**र्धपादिकः**। तच्च संभवति यदि पादार्धे छिद्यते। तेनार्धपादछेदनं कर्तव्यमिति वाक्यार्थः।

**खरिका** यया गोरथक्षेत्रादौ वाह्यते बलीवर्दः। **भेदने** वाह्यमानायाः प्रतोदेन पीडोत्पादने।

'भेदनं' वाहानामुपलक्षणार्थे व्याचक्षते पूर्वे। अवश्यं वाहयन्दुःखयति। प्रतोदेन वाहने एवायं दण्ड इत्यन्ये पठन्ति।

अन्ये तु पादस्य पश्चाद्भागं चतुर्थं **खरिका**माहुः। खरिकेति या प्रसिद्धा पलायनशीला यां पालोऽन्यो वा भिन्दन्नर्धपादिकः कार्यः।

अन्ये त्वधिकरणसप्तमीं मत्वा गोसंस्थदध्यादीन्यध्याहरन्ति। तदयुक्तम्। श्रुतपदसंबन्धसंभवे कुतोऽध्याहारः॥ ३२५॥

(२) **सर्वज्ञनारायणः।** ब्राह्मणसंस्थासु ब्राह्मणसंबन्धिनीषु। स्थूरपृष्ठेन भारवोढा वृषः तद्भारः स्थूरिका तस्या भेदने पाटयित्वा तद्गतधान्यादेरपहार इत्यर्थः। पशूनां महिषादीनाम्। अर्धपादिकः छिन्नार्धपादद्वयः॥ ३२५॥

(३) **कुल्लूकः।** ब्राह्मणसंबन्धिनीनां गवामपहारे वन्ध्यायाश्च गोर्वाहनार्थे नासाछेदने पशूनां चाजैडकानां दण्डभूयस्त्वाद्यागाद्यर्थानां हरणेऽनन्तरमेव छिन्नार्धपादिकः कार्यः॥ ३२५॥

(४) **राघवानन्दः।** तद्विशेषे अर्धपादछेदोदण्डः स्यादित्याह गोष्विति। ब्राह्मणसंस्थासु तत्संबन्धिनीषु हरण इतिशेषः। भेदनेस्थूरिकायाः वन्ध्यागोर्वाहनार्थं नासिकायां। पशूनां अजाव्यादीनाम्॥ ३२५॥

(५) **नन्दनः।** स्थूरिकानामपार्ष्णेश्चतुरङ्गुलादूर्ध्वःप्रदेशः। ब्राह्मणगोस्थूरिकाभेदने च इतरेषां पशूनां हरणे च भेत्ता हर्त्तार्धपादिकः कार्य्यः॥ ३२५॥

(६) **रामचन्द्रः।** ब्राह्मणसंस्थासु संबन्धिनीषु गोषु पृष्ठे भारयोः प्रच्छुरिकायाः भेदने च पुनः पशूनां हरणे अर्थपादिकः दमः छिन्नार्धद्विपादिकः दमः कार्यः अर्धदण्डः कार्यः॥ ३२५॥

(७) **मणिरामः।** गोषुब्राह्मणसंस्थासु ब्राह्मणसंबंधिनीनां गवामपहारे। छुरिकायाः वंध्यायाः गोः भेदने वाहनार्थं नासाछेदने। पशूनां यागसंबंधिनीनां हरणे **सद्यः** तत्कालमेव। अर्द्धपादिकः छिन्नार्द्धपादः कार्यः॥ ३२५॥

(८) **गोविन्दराजः। गोषु ब्राह्मणसंस्थासु नासिकायाश्च भेदन इति।** ब्राह्मण-सम्बन्धीनां गवामपहरणे, एवं वन्ध्यायाश्च गोः वाहनाद्यर्थं नासिकाभेदने पशूनां चैडकादीनां दण्डभूयस्त्वाद्यागाद्यर्थानामपहरणे समनन्तरमेव पादार्धच्छेदयुक्तो दण्डः कार्यः॥ ३२५॥

## सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च।
## दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च॥ ३२६॥

(१) **मेधातिथिः। सूत्रमूर्णासणादि। लवणानि** सैंधवबिड्लवणादीनि। **यच्चा-न्यत्पशुसंभवमामिषादि। अन्येषामपूपमोदकादीनाम्।** आदिशब्दः प्रकारे। प्रकारः सादृश्यं तुल्यता सदृशकार्यकरणोपयोगादिरूपा। तथा च सर्पिर्मण्डेक्षुखण्डशर्कराकिलाटकूर्चिकाद्या अपूपा गृह्यन्ते। **पशुसंभवं** राङ्कवाजिनाद्यपीच्छन्ति केचित्। **आदिग्रहणात्प्रकृतिर्विकृ-तिरपि।।** यच्चोभयोपादानं दध्नः क्षीरस्य चेति तदुदाहरणार्थम्। एवं **सूत्रग्रहणेन** सूत्र-मयं वासोऽपि गृह्यते। नलिकादीनां सत्यपि सूत्रमयत्वे पशुसंभवत्व उत्तमत्वादुत्तमानां चेत्यस्यापवादविषयः।

प्रकृत्यन्तरे तैलशब्दः स्नेहवाची, न तिलविकार एव। तेनातसीप्रियङ्गुपञ्चाङ्गुल-तैलादयोऽपि गृह्यन्ते॥ ३२६-३२९॥

(२) **सर्वज्ञनारायणः।** किण्वं मद्यबीजम्॥ ३२६॥

(३) **कुल्लूकः।** ऊर्णादिसूत्रकार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य च सूक्ष्म-वेणुखण्डनिर्मितजलाहरणभांडादीनां यदप्यन्यत्पशुसंभवं च मृगचर्मखड्गशृङ्गाद्यन्येषामप्ये-वंविधानामसारप्रायाणां मनःशिलादीनां मद्यानां द्वादशानां पक्वान्नानामोदनव्यतिरिक्ताना-मप्यपूपमोदकादीनां च कार्पासादिशब्दार्थानां प्रसिद्धानां चापहारे कृतमूल्याद्द्विगुणो दण्डः कार्यः॥ ॥ ३२६॥ ३२७॥३२८॥ ३२९॥

(४) **राघवानन्दः।** द्रव्यविशेषेषु तद्द्रव्यमूल्याद्द्विगुणं दण्डं दापयितुं षड्विंशतिं द्रव्यविशेषाननुवदति सूत्रेति चतुर्भिः। किण्वानां सुराबीजानाम्। पानीयस्य पानार्थं संस्कृतस्य॥ ३२६॥

(५) **नन्दनः।** किण्वं सुराप्रकृतिद्रव्यम्॥ ३२६॥

(६) **रामचन्द्रः।** सूत्रादीनां हरणेदण्डमाह सूत्रेतिचतुर्भिः। किण्वानां मद्यबीजा-नाम्॥ ४२६॥

(७) **मणिरामः।** किण्वानां। सुरोत्पादकद्रव्याणां॥ ३२६॥

(८) **गोविन्दराजः। सूत्रकार्पासकिण्वानामिति** वेणुवैदलभाण्डनामिति। मत्स्या-नामिति। अन्येषामिति। ऊर्णादिसूत्रस्य किण्वाख्यस्य च तुराद्रव्यस्थतक्रस्य गोरसस्य वैदलानाञ्च वेण्वादित्वङ्निर्मितानां भाण्डानां लवणानां सैन्धवबिग्लवणादीनां मधुनः माक्षिकस्य यदप्यल्पतरपशुप्रभवं श्रृङ्गदन्तादि तस्य तथाऽन्येषामप्येवंविधानां च सारद्र-व्याणां मनःशिलसिन्दूरादीनां ओदनस्य च भक्तसक्त्वादेः पक्वान्नानां चापूपमोदकानां

सर्वेषाञ्च कार्पासादीनां च प्रसिद्धानां हरणान्मूल्याद् द्विगुणो दण्डःकार्यः ॥ ३२६ ॥
॥ ३२७ ॥ ३२८ ॥ ३२९ ॥

**वेणुवैदलभाण्डानां लवणानां तथैव च ॥**
**मृण्मयानां च हरणे मृदो भस्मन एव च ॥ ३२७ ॥**

(२) **सर्वज्ञनारायणः**। वेणुभाण्डानां तथा वैदलभाण्डानां विदलीकृतान्यकाष्ठ-भाण्डानाम् ॥ ३२७ ॥

(४) **राघवानन्दः**। वैदलभाण्डानां स्थूलवेणुखण्डनिर्मितजलाहरणादिसमर्थानाम्। भस्मनः कदलीक्षारादेः ॥ ३२७ ॥

(५) **नन्दनः**। वैदलं वेत्रमयं भाण्डमुपकरणम् ॥ ३२७ ॥

(६) **रामचन्द्रः**। मृण्मयानां भाण्डानाम् ॥ ३२७ ॥

(७) **मणिरामः**। वेणुवैदलभाण्डानाम्। वेणुदंडनिर्मितजलाद्याहरणभाण्डानाम् ॥ ३२७ ॥

**मत्स्यानां पक्षिणां चैव तैलस्य च घृतस्य च ॥**
**मांसस्य मधुनश्चैव यच्चान्यत्पशुसंभवम् ॥ ३२८ ॥**

(२) **सर्वज्ञनारायणः**। पशुसंभवं रोचनादि ॥ ३२८ ॥

(४) **राघवानन्दः**। पशुसंभवं चर्मचामरवर्मरज्जुगोरोचनाशृङ्गास्थिनिर्मितसंपुटकङ्काभरणादिकम्। तस्यापि हरण इत्यनुषज्यते ॥ ३२८ ॥

(६) **रामचन्द्रः**। पशुसंभवं दुग्धादि ॥ ३२८ ॥

(७) **मणिरामः**। यच्चान्यत् पशुसंभवं मृगचर्मखड्गशृंगादि ॥ ३२८ ॥

**अन्येषां चैवमादीनामद्यानामोदनस्य च ॥**
**पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः ॥ ३२९ ॥**

(२) **सर्वज्ञनारायणः**। एवमादिनां पक्वान्नानां व्यञ्जनानाम्। सर्वत्रात्र द्रव्यवत् द्रव्यमूल्यमधिकं देयम् ॥ ३२९ ॥

(४) **राघवानन्दः**। एवमादीनां एवंविधानां पानका*दिद्वादशानाम्। पक्वान्नानामोदनेतरशष्कुल्यादीनाम् ॥ ३२९ ॥

(५) **नन्दनः**। आद्यानां भक्ष्याणाम् ॥ ३२९ ॥

(६) **रामचन्द्रः**। अन्येषां अजादीनां अद्यानां अदनीयानां च पुनः ओदनस्य भक्तस्य तन्मूल्यात् तद्वस्तुमूल्यात् द्विगुणो दमः ॥ ३२९ ॥

(७) **मणिरामः**। एवमादीनां असारप्रायाणां हरितालादीनां। पक्वान्नानां ओदनातिरिक्तानां ॥ ३२९ ॥

**पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ॥**
**अन्येष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥**

(१) **मेधातिथिः**। नवमालिकादीनि **पुष्पाणि**। **हरितं** धान्यं क्षेत्रस्थं अपक्वम्। **नगा** वृक्षाः। **अन्येष्वपरिपूतेषु**। बहुवचनात्परिपवनस्य च धान्येष्वेव तुषपलालादिविमोक्षरूपस्य संभवादुत्तरश्लोके धान्यग्रहणमेवाकृष्यते। **गुल्मादीनां** हि सत्यपि पलाशे व्यामिश्रत्वे पुष्पाणां च परिपूतव्यवहारः।

सप्तमी हरणापेक्षा। तत्तु पूर्वस्मादनुवर्तते।

अत्र **पञ्चकृष्णलो दण्डः**। कृष्णला नानाद्रव्यजाः। अल्पत्वमहत्त्वप्रयोजनापेक्षाः। सुवर्णस्येति पूर्वं ॥ ३३० ॥

(२) **सर्वज्ञनारायणः**। हरिते माषादौ शमीधान्ये धान्येशूकधान्ये। एष्वल्पेषु तथाऽपरिपूतेष्वपृथक्कृतबुसेषु ॥ ३३० ॥

(३) **कुल्लूकः**। पुष्पेषु हरिते क्षेत्रस्थे धान्ये गुल्मलतावृक्षेषु परिवृतेषु अनपावृतवृक्षेषु वक्ष्यमाणश्लोके धान्यादिषु निर्देशात्परिवनसंभवाच्च धान्येषु अन्येषु समर्थपुरुषभारहार्येषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णलमाषपरिमाणो दण्डः स्यात् ॥ ३३० ॥

(४) **राघवानन्दः**। पुष्पादिद्रव्यविशेषापहरणे पञ्चकृष्णलकं दण्डं विदधदपि तान्यनुवदति पुष्पेष्विति। हरिते क्षेत्रस्थधान्ये गृहधान्येषूक्तत्वात्। अपरिपूतेष्वनुत्सादिततुषादिषु। सुवर्णमाषः पञ्चकृष्णलो माष इत्युक्तोः नतु रूप्यमाषकः ॥ ३३० ॥

(५) **नन्दनः**। धरिमं तुला तेन मेयानामुन्मानयोग्यानांस्वर्णादीनामुत्तमवाससांह्रणे पुष्पेषु हरिते नवे धान्येचपरिपूतेष्वशोधितपांसुषु धान्येष्वित्युत्तरश्लोकादपकर्षणीयम् ॥ ३३०

[१] नांपानकादि (न, श) (३३०) अन्येष्व.=अल्पेष्व (क, ख, ग, च, ण, र

(६) **रामचन्द्रः**। हरिते धान्ये माषादौ नगेषु वृक्षेषु अपरिपूतेषु अदूरीकृतबु॰ ॥ ३३० ॥

(७) **मणिरामः**। हिरते क्षेत्रस्थे प्रकर्तिते इति यावत्। नगो वृक्षः। **अन्येषु**। क्षेत्रात्कर्तितेषु धान्येषु अपरिपूतेषु वृषेणादूरीकृततुषेषु। पंचकृष्णालः देशकालाद्यपेक्षया सुवर्णस्य रजतस्य वा ॥ ३३० ॥

(८) **गोविन्दराजः**। **पुष्पेष्विति**। पुष्पेषु नीलीक्षेत्रेषु धान्येषु गुल्मलतावृक्षेषु पुरुषभारप्रायेषु वक्ष्यमाणाच्छ्लोकात्परिवपनसंभवाच्च धान्येषु खलवासितापहृतेषु देशकालापेक्षया सुवर्णस्य रूप्यस्य वा पञ्चकृष्णलपरिमाणो दण्डःस्यात् ॥ ३३० ॥

---

* पानकादि=मद्य [१] नांपानकादि (राघ. २)=मनःशिलादीनां एवं विधानां मद्य

**परिपूतेषु धान्येषु शाकमूलफलेषु च ।**
**निरन्वये शतं दण्डः सान्वयेऽर्धशतं दमः ॥ ३३१ ॥**

**(१) मेधातिथिः ।** मूलमिक्षुद्राक्षादि । **निरन्वये** द्रव्यहरणे । 'अन्वयो'ऽनुनयः, स्वामिनः प्रीत्यादिप्रयोगः—'यत्त्वदीयं तन्मदीयमेवेत्यनया बुद्ध्याऽहं प्रवृत्तः—न चेदेवं तद्-गृहाणे'त्येवमादिवचनम् तद्यत्र न क्रियते **तन्निरन्वयम् ।** साहसप्रकारत्वादधिको दण्डः । अन्वयेन सह **सान्वयः ।**

अथवा **निरन्वयो** येन सह कश्चिदपि संबन्धो नास्त्येकग्रामवासादिः । ततः शतं दण्डचः । अथवा अनारक्षं **निरन्वयम् ।** सति तु रक्षके उभयापराधादल्पो दण्डः । खलस्थेषु धान्येष्वयं दण्डः । तत्र हि परिपूयन्ते । गृहस्थेषु त्वेकादशगुणः प्रागुक्तः (३२०) ॥ ३३१ ॥

**(२) सर्वज्ञनारायणः ।** परिपूतेष्वपास्तबुसेषु । शाकमूलफलेषु बहुमूल्यादत्यन्तोपयुक्तेषु । निरन्वये तद्द्रव्यसंबन्धयोग्यतापादकज्ञानोपाधिकोन्वयो यस्तमभिधाय यत्र हरण न भवति तत्र । तद्विपरीतं सान्वयम् ॥ ३३१ ॥

**(३) कुल्लूकः ।** निष्पुलाकीकृतेषु वृक्षेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्य-स्वामिनां संबंधः येन सहकश्चिदपि संबन्धो नास्त्येकग्रामवासादिस्तत्र शतंदण्डचः सान्वये तु पञ्चशत्पणो देयः खलस्थेषु च धान्येष्वय दण्डस्तत्र हि परिपूर्यते गृहेष्वेकादशगुणो दण्डः प्रागुक्तः ॥ ३३१ ॥

**(४) राघवानन्दः ।** तद्विशेषेषु धान्यादिचतुष्टयेषु व्यवस्थया शतमर्धशतंवा दमं दापयन् तान् उद्दिशति परीति । परिपूतेषु यज्ञाद्यर्थसंस्कृतेषु अपसारिततुषेषु वा । निरन्वये संपूर्णहृते द्रव्यस्वामिना एकग्रामवासादिसंबन्ध इति केचित् ॥ ३३१ ॥

**(५) नन्दनः ।** अपहृतेष्वित्येव निरन्वये निःशेषापहारेर्द्धशतम् ॥ ३३१ ॥

**(६) रामचन्द्रः ।** परिपूतेषु धान्येषु दूरीकृतबुसेषु निरन्वये अनारक्षे निर्मले सान्वये रक्षासहिते वंशजे ॥ ३३१ ॥

**(७) मणिरामः ।** परिपूतेषु अपासिततुषेषु । निरन्वये यस्य धान्यादिकं हृतं तेन एक ग्रामवासादि संबंधाभावे । सान्वये एक ग्रामवासादिसंबंधे ॥ ३३१ ॥

**(८) गोविन्दराजः ।** परिपूतेष्विति । अपासितेषु शेषेषु शाकादिषु वाऽपहृतेषु स्वामिना सह संग्रामेऽ (=संग्र?ऽ) पहारे पणशतं दण्डः । संगतेषु पुनः पञ्चाशतं दण्डः ॥ ३३१ ॥

**स्यात्साहसं त्वन्वयवत्प्रसभं कर्म यत्कृतम् ।**
**निरन्वयं भवेत्स्तेयं हृतापव्ययते च यत् ॥ ३३२ ॥**

**(१) मेधातिथिः ।** परद्रव्यापहरणं स्तेयमुच्यते । धात्वर्थप्रसिद्ध्या चास्यैव कर्ता 'स्तेनः' । इह तु विशेषेणायं व्यवहार इष्यते तदर्थोऽयं श्लोकः । न परद्रव्यादानमात्रं स्तेयम् । ऋणादाननिक्षेपादिष्वपि स्तेयदण्डप्रसङ्गात् । संज्ञाभेदो दण्डभेदार्थः ।

**कर्म यत्कृतं** परपीडाकं वस्त्रोत्पाटनाग्निदाहद्रव्यापहरणादि। अग्निदाहे यद्यपि द्रव्यापहरणं नास्ति तथापि चौर्यमेव रहसि करणादपह्नवाच्च मन्यन्ते। चौर्ये हि द्रव्यविशेषाश्रयो दण्डः। सोऽत्र न स्यात्। एवमर्थमेव स्तेयप्रकरणोत्कर्षणम्। **प्रसभं कर्मेति** कर्मग्रहणाद्-द्रव्यापहारादन्यदप्येवं कृतमयुक्तं साहसमेव। "कस्तर्ह्यग्निदाहादावप्रसभं कृते दण्डः"। कंटकशुद्धौ वक्ष्यामः (९।२५६) अत एव सन्धिच्छेदेऽसत्यपि द्रव्यापहरणे कण्टकशुद्धौ दण्डमामनन्ति। अन्यथा स्तेय एवावक्ष्यत्॥ ३३२॥

(२) **सर्वज्ञनारायणः**। उपक्लृप्तानि भोजनादिप्रयोजनार्थं सज्जितानि। आद्यं प्रथमसाहसं। अग्निं त्रेताग्निमाधानादिसंस्कृतम्॥ ३३२॥

(३) **कुल्लूकः**। यद्धान्यापहारादिकं कर्मद्रव्यस्वामिसमक्षं बलाद्धृतं तत्साहसं स्यात्सहोबलंतद्भवं साहसमत इह स्तेयदण्डो न कार्यः एतदर्थः स्तेयप्रकरणेऽस्य पाठः। यत्पुनः स्वामिपरोक्षापहृतं तत्स्तेयं भवेत् यच्चहृत्वाऽपह्नुते तदपि स्तेयमेव॥ ३३२॥

(४) **राघवानन्दः**। स्तेयात्साहसंभिन्दन्नाह स्यादिति। साहसं सहोबलं तेन कृतम्। प्रसभं प्रभोः समक्षम्। अन्वयवत् पयानां शतार्धं दण्डः संख्यान्तरानुक्तेः। स्तेयं प्रभोः परोक्षं हृतंतन्निरन्वयं भवेत् तन्निरन्वयवत् शतदण्डार्हन्। हृता अपव्ययते अपह्नुते यत्र तत्र शतं दण्ड इति॥ ३३२॥

(६) **रामचन्द्रः**। प्रसभं कर्म प्रत्यक्षापहाररूपं कर्म निरन्वयं आरक्षवर्जितम्॥ ३३२॥

(७) **मणिरामः**। साहसस्तेययोर्लक्षणमाह। स्यादिति। यत् धान्यापहारादिकं कर्म अन्वयवत् द्रव्यस्वामिसमक्षं। प्रसमं बलात् कृतं तत्तुसाहसं। निरन्वयं द्रव्यस्वाम्यसमक्षं यत् हृतं तत् स्तेयं। यच्चकृत्वा अपव्ययते अपह्नूते तदपि स्तेयं इत्यर्थः॥ ३३२॥

(८) **गोविन्दराजः**। **स्यात्साहसमिति**। यत्कर्मधान्यापहारादिद्रव्यस्वामिसमक्षमेव प्रसह्य कृतं तत्साहसं स्यादतस्तत्र स्तेयदण्डो न कार्यः इत्येवमर्थस्तेयप्रकारस्योपदेशः। यत्पुनः परोक्षं कृतं तत्स्तेयं भवेत्। यद्यपि च हृत्वाऽपहनुते तदपि स्तेयमेव॥ ३३२॥

**यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः।**
**तस्माद्यं दण्डयद्राजा यश्चाग्निं चोरयेद् गृहात्॥ ३३३॥**

(१) **मेधातिथिः**। एतानि सूत्रादीन्युपक्लृप्तानि प्रत्यासन्नदानोपभोगादिकार्यकालानि अथवा संस्कृतानि कृतसामर्थ्याधानानि तथा तदेवसूत्रं तन्तुवायहस्ते वायनार्थं दत्तं गुणीक्रियते किंचित्परिवर्त्यते — एवं दधिमन्थनमरिचशर्करादिसंस्कृतं क्षीरं घृतमित्यादिसंस्कारः। तत्र शतं दण्डः।

आद्यमिति पाठे प्रथमसाहसः।

**अग्निगृहात्** परिगृहीतं शालाग्निहोत्रेत्यादिकम्—हेमन्ते वा शीतार्दितानां दरिद्राणामप्रणीतमप्यग्नेरुपकल्पनं पाककालः शीतादिनिवृत्त्यर्थं वा तापनकालः। अविशेषेणायमग्नेर्दण्डः स्वल्पस्य बहोरुपक्लृप्तस्यानुपक्लृप्तस्य च।

सत्यपि सूत्रादिदण्डे आदिग्रहणे नाग्नेस्तन्मूल्यादि संभवति, क्रयविक्रयव्यवहाराप्रसिद्धेः। यावता वेन्धनेनाग्निरपहृतपरिमाण उत्पद्यते यावतीभिर्दक्षणाभिस्तन्मूल्याद्द्विगुणो दण्डः संभवति शक्यते च व्यपदेष्टुम्। तुष्ट्युत्पत्तिश्च स्वामिनः स्थितैव। अतस्त्रेताग्निहरणे यावत्पुनराधाने गच्छति प्रायश्चित्तेष्टौ च तावदग्निमते दातव्यः। अतोऽयमग्नेर्दण्डः शाला प्रणीताग्निविषय एव स्वल्पत्वात्। त्रेतायां तु तन्मूल्याद्द्विगुण इति। तथा च "सुलभेष्व-धिकारनिवृत्तिमकुर्वत्सु यागाङ्गद्रव्येष्वपह्रियमाणेषु कुशकरकाग्निहोत्रद्रव्याण्यपहरतो-ऽङ्गच्छेदः स्यात्" इति शङ्खः। अग्निषु तु हृतेष्वधिकार एव निवर्तते। तत्र कथं महान् दण्डो न स्यात्॥ ३३३॥

(२) **सर्वज्ञनारायणः**। अत्र साहसं सहसा अविविच्य दोषगुणौ यदि कृतौ तदा स्तेयमपि तथैवेत्याशङ्कां प्रसंगादपनयति स्यादिति। नैव तावन्मात्रं साहसं किंतु प्रसभं हठात्स्वामि-समक्षं बलवदन्वयवदनुबन्धि उत्तरकालमपि यत्र न तद्गोप्यते साहसं तदित्यर्थः। निरन्वयं उत्तरकालनिह्नवयत्नसहितं यच्च कृत्वा स्वामिनोऽपव्ययते तदैव निह्नवाय यतते तद्द्रव्या-हरणं स्तेयम्। एवं च युद्धादिना यत्परस्वहरणं परमारणादि तत्साहसं निह्नवप्रयत्नवता तु यत्परस्वमादीयते तत् स्तेयमित्यर्थः। तथा अनिह्नवेनचायतकलहादिनिमित्तकं ताडनादि क्रियते तद्दण्डपारुष्यमित्युक्तम्॥ ३३३॥

(३) **कुल्लूकः**। यः पुनरेतानि सूत्रादिद्रव्याण्युपभोगार्थं कृतसंस्काराणि मनुष्य-श्चोरयेत् यश्च त्रेताग्निं गृह्याग्निं वाऽग्निगृहाच्चोरयेत्तं राजा प्रथमं साहसं दण्डयेदग्निस्वा-मिनश्चाधानोपक्षयो दातव्यः। गोविन्दराजस्तुलौकिकाग्निमपिचोरयतो दण्ड इत्याह तद-युक्तमल्पापराधे गुरुदण्डस्यान्याय्यत्वात्॥ ३३३॥

(४) **राघवानन्दः**। संप्रत्युक्तसूत्रादिद्रव्यापहारे प्रकारविशेषमुपक्षिपन्प्राथमिकं दण्ड-माह यस्त्विति। उपक्लृप्तानि उपयोगार्थं कृतसंस्काराणि स्तेनयेत् चौर्यं कुर्यात्। तेषामाद्यं प्रथमसाहसम्। अग्निं गार्हपत्याग्निम्। गृहाग्निगेहात्॥ ३३३॥

(५) **नन्दनः**। एतानि सूत्रकार्पासकिण्वादीनि उपक्लृप्तानि महाभोगार्थं स्तुतानि ॥ ३३३॥

(६) **रामचन्द्रः**। एतान्युपक्लृप्तानि सूत्रादीनि द्रव्याणि यो नरः स्तेनयेत् चौर्येण-गृह्णीयात् तं पुरुषं आद्यं प्रथमसाहसं राजा दण्डयेत् च पुनः यः अग्निं वैतानाग्निं गृह्णीयात् चौर्येण नयेत्सोऽपि प्रथमसाहसं दण्ड्यः॥ ३३३॥

(७) **मणिरामः**। एतानि पूर्वोक्तसूत्रादिद्रव्याणि। उपक्लृप्तानि उपभोगार्थं कृत-संस्काराणि। अग्निं त्रैताग्निं। गृहात् अग्निं गृहात्। आद्यं प्रथमसाहसं सार्द्धद्विशतपणा-त्मकं॥ ३३३॥

(८) **गोविन्दराजः**। **यश्चैतानिति**। एतानि सूत्रादीनि द्रव्याणि उपभोगार्थमुपकल्पितानि यो मनुष्यश्चोरयेत् यश्चाग्निं लौकिकमपि चोरयेत् तं प्रथमसाहसं राजा दण्डयेत्। अग्नेश्च

मूल्यव्यवहाराप्रसिद्धेस्तन्मूल्यात् द्विगुणो दम इत्येतदसंभवे सति सूत्रादिभ्यः पृथग्ग्रहणम् ॥ ३३३ ॥

**येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते ॥**
**तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥ ३३४ ॥**

(१) **मेधातिथिः**। भूयोभूयः प्रवृत्तस्यायं दण्डः। यो धनेन दण्डितोऽपि न मार्गेऽवतिष्ठते तस्य त्रिचतुर्दण्डितस्यानवतिष्ठमानस्य द्रव्यजातिपरिमाणानपेक्षः सन्धिच्छेदाद्यनपेक्षश्चौर्यक्रियामात्राश्रितोऽङ्गच्छेदः। यस्य यस्याङ्गस्य बलमाश्रित्यावतिष्ठते स्तेनश्चौर्ये प्रवर्तते तत्तदस्य **हरे**च्छिन्द्यात्। यथा कश्चित्पादबलमाश्रित्यावष्टभ्य पलायते 'न मामनुगंतुं कश्चिदपि शक्नोतीति' तस्य पादच्छेदः। अन्यः 'संधिभेदज्ञोऽहं' तस्य हस्तच्छेदः। **प्रत्यादेशाय** प्रतिरूपफलदर्शनाय। स्वावष्टंभेन साभिमानं सक्रोधं सावज्ञं न्यक्करणं वा 'प्रत्यादेशः'—य एवं करोति तस्य तस्याहमेवं कर्तेति व्याख्यापनं 'प्रत्यादेशः' ॥ ३३४ ॥

(२) **सर्वज्ञनारायणः**। विचेष्टते विरुद्धं चेष्टते द्रव्यं हरति। हरेदपनयेदतिशयिताऽपराधे। प्रत्यादेशायान्यस्यापि निषेधाय ॥ ३३४ ॥

(३) **कुल्लूकः**। येन येन अङ्गेन हस्तपादादिना येन प्रकारेण संधिच्छेदादिना चौरो मनुष्येषु विरुद्धं धनापहारादिकंचेष्टते तस्य तदेवाङ्गं प्रसङ्गनिवारणाय राजा छेदयेत् तद्धनस्वाम्युत्कर्षापेक्षयाऽयमङ्गच्छेदः ॥ ३३४ ॥

(४) **राघवानन्दः**। येनाङ्गविशेषेण द्रव्यस्वामिनमनुरुन्धानोस्तेनयेत्तस्य तत्तदवयवं छिन्द्यादित्याह येनेति। यथा यथावत्। अस्य चोरस्य। प्रत्यादेशाय पुनःप्रसंगवारणाय ॥ ३३४ ॥

(५) **नन्दनः**। अर्थदण्डे पुनरपि स्तेनयन्तं प्रत्याह येन येन यथेति। विचेष्टते स्तेनयति हरेच्छिन्द्यात् प्रत्यादेशाय प्रतिषेधाय अपुनरपराधायेति यावत् ॥ ३३४ ॥

(६) **रामचन्द्रः**। पार्थिवः प्रत्यादेशाय चौर्यनिराकरणाय एतस्य तदेव वस्तु हरेत् ॥ ३३४ ॥

(७) **मणिरामः**। प्रत्यादेशाय। तदंगेन पुनरेवं प्रसंगो न स्यादिति निवारणाय ॥ ३३४ ॥

(८) **गोविन्दराजः**। **येन येनेति**। यच्च येन हस्तपादादिकाङ्गेन येव प्रकारेण ग्रन्थिच्छेदनिःश्रेण्यारोहणादिना चौरो मनुष्येषु विरुद्धं धनाऽपहारादि कर्तुमीहते तत्तदेवाङ्गं तस्याभ्यासप्रवृत्तौ सत्यां तदपराधच्छेदनाय राजा छेदयेत् ॥ ३३४ ॥

**पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ॥**
**नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ ३३५ ॥**

(१) **मेधातिथिः**। 'भार्या पुत्रः स्वका तनुः' आत्मीयं शरीरं—कः पुनरात्मनो दण्डः। प्रायश्चित्ततपोधनदानादिविवक्षितम्। विचलितो धर्मात् स्वकात् यो यः स्वधर्मान्नानुतिष्ठति स सर्वो दण्ड्यः ॥ ३३५ ॥

**(५) नन्दनः ।** दास्यप्रसंगाद्दासभेदानाह ध्वजाहृत इति। ध्वजशब्देनात्र युद्धमुपचर्यते ध्वजाहृतो युद्धनिर्जितः। भक्तदासोऽन्नदानेन स्वीकृतः। गृहजो दासीपुत्रः। क्रीतदत्रिमौ क्रयदानस्वीकृतौ। पैतृकः क्रमागतः दण्डदासः प्रव्रज्यावसितः दासत्वं हि तस्य दण्डः धनाभावे न दण्डद्रव्यार्थं पित्रादिना दास्यप्रवेशितः स्वयं वा प्रविष्ट इति केचित् ध्वजाहृतादयो भावप्रधाना निर्देशाः। एते ध्वजाहृतत्वादयो दस्युयोनयः स्वकारणानि॥४१५॥

**(६) रामचन्द्रः ।** ध्वजाहृतः युद्धजितः १ भक्तदासः २ गृहजः ३ क्रीतः ४ दत्तः ५ पैतृकः ६ पितृपितामहादागतः ७ दण्डदासः सप्तैते दासयोनयः॥४१५॥

**(७) मणिरामः ।** दासोत्पादकानाह॥ ध्वजेति॥ ध्वजाकृतः संग्रामसकाशाज्जित्वाऽनीतः। भक्तदासः भक्तलाभाद्युपगतः। गृहजः तद्दासीपुत्रः। दंडदासः दंडादिधनशुद्ध्यर्थं स्वीकृत-दास्यभावः॥४१५॥

**(८) गोविन्दराजः ।** ध्वजाहृत इति। संग्रामे स्वामिना कोशाज्जितो वेतनभृतो दासीपुत्रोऽन्यस्मात्क्रीतोऽन्येन दत्तः पित्रादिप्रबन्धायातो निर्धनतया दण्डशुद्ध्यभावे सति शुद्ध्यर्थं दास्यमुपगत इति सप्तध्वजाः सप्ततत्त्वादीनि दासत्वकारणानि॥४१५॥

**भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः॥**
**यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥४१६॥**

**(१) मेधातिथिः ।** एते त्रयोऽर्जितधना **अप्यधनाः**। स्वामिनो धनम्। यत्किंचित्ते धनमर्जयन्ति **तद्धनं तस्य** स्वं यस्य ते स्वत्वमापन्नाः। भार्याधनं भर्तुः, पितुः पुत्रस्य, स्वामिनो दासस्य।

''ननु च यद्येते निर्धनाः कथमेषां कर्मभिरधिकारः। तत्रेदं नोपपद्यते—'पुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता दद्यात्तेभ्यः पुत्र'' इति। दम्पत्योरपि सहधर्मश्चरितव्यः। ''धर्मे चार्थे च कामे च नातिचरितव्या त्वयेति।'' यदि च निर्धनाः कोऽन्योऽर्थेऽनतिचारः। शूद्रस्यापि 'पाकयज्ञैः स्वय यजेतेति' निर्धनत्वे विरुद्ध्यते। स्वच्छन्दशूद्रविषयत्वेन विरोधो न भवेत्। अस्ति तावद्दासानां स्वधने स्वाम्यं, यदा स्वधनमिति व्यपदिश्यते। न ह्यसति संबन्धे व्यपदेशः। अर्जनं च स्वत्वं नापादयतीति विप्रतिषिद्धम्। तस्माद्विरुद्धमिदं **यत्ते समधिगच्छन्ति** न तत्तेषां स्वमिति। यथा कश्चिदब्रूयाद्यस्या अहं पुत्रः सा न मम जननीति तादृगेतत्। असति वा स्त्रीणां स्वाम्ये पत्न्यै वा तदनुमतं क्रियते। ''पत्नी वै पारिणाह्यस्येष्टे'' इत्यादि श्रुतयो निरालम्बनाः स्युः''।

अत्रोच्यते। पारतन्त्र्यविधानमेतत्। असत्यां भर्तुरनुज्ञायां न स्त्रीभिः स्वातन्त्र्येण यत्र क्वचिद्धनं विनियोक्तव्यम्। एवं पुत्रदासयोरपि द्रष्टव्यम्।

अन्ये तु मन्यन्ते—भार्यापुत्रग्रहणं दासार्थम्। तस्य चैतद्वचनमुत्तरार्थम्। आपदि तेषां धनग्रहणे न विचिकित्सितव्यं—भर्तुरेव हि तत्स्वम्॥४१६॥

**(२) सर्वज्ञनारायणः ।** अधिगच्छन्ति परकर्मकरणादिनापि॥४१६॥

**(३) कुल्लूकः ।** पुत्रभार्यादासास्त्रयोऽमी निर्धना एव मन्वादिभिः स्मृताः यस्माद्यद्धनं तेऽर्जयन्ति यस्य ते भार्यादयस्तस्य तद्धनं भवति एतच्च भार्यादीनां पारतन्त्र्यप्रदर्शनार्थं परमध्यग्न्यादेः षड्विधस्य स्त्रीधनस्य वक्ष्यमाणत्वाद्धनसाध्यादृष्टार्थं कर्मोपदेशार्थं च भार्यादीनां पत्यधिकरणे

पत्न्यर्थेपि यागाधिकारस्योक्तत्वात् स्त्रीपुंसयोर्मध्यएकधने चानुमतिद्वारेण स्त्रिया अपि कर्तृत्वात्।।४१६।।

(४) राघवानन्दः। दासप्रसंगेनान्ययोरपि धनास्वामित्वमाह भार्येति। एते त्रयो यत्समधिगच्छन्त्यर्जयन्ति यस्य संबन्धिनस्ते तस्यैव तेषां धनं तेन तस्मिन् जीवति तदनुज्ञां विना धनव्यये नाधिकारः अनीशास्ते हि जीवतोरित्युक्तेः। पुत्रं प्रतिस्वत्वं च पितुरूर्ध्वं हरेद्धनमित्युक्तेः। स्त्रियं प्रति तु स्वत्वं अध्यग्न्यध्यावाहनिकमित्यादिषट्प्रकारजं स्त्रीपुंसोर्मध्यगं धनमित्यादिसिद्धं न स्त्रीस्वातन्त्र्यमर्हतीत्यनधिकारात्। दासस्यापि जीवेत्कारुककर्मभिरित्यादि वक्ष्यमाणं स्वत्वहेतुर्न कार्यो धनसंग्रह इत्यादिनिषेधबलाच्च, त्रयाणाम् स्वातन्त्र्यम् अस्वातंत्र्यम्।।४१६।।

(५) नन्दनः। अत्र भार्यापुत्रयोस्स्वधनत्वप्रसंगादुपन्यासः भार्यापुत्रदासभर्तृपितृस्वामिषु जीवत्स्वधनाः अजीवत्सु सधनाः स्मृत्यन्तरानुगुण्यात् यत एवं ततः।।४१६।।

(६) रामचन्द्रः। यद्द्रव्यं ते भार्यादयः समधिगच्छन्ति प्राप्नुवन्ति।।४१६।।

(७) मणिरामः। अधनाः स्वोपार्जितधनस्याप्यस्वामिनः। यस्मात् यत् धनं ते पुत्रादयः समधिगच्छति उपार्जयंति तद्धन यस्य ते पुत्रादयः तस्य भवतीत्यर्थः।।४१६।।

(८) गोविन्दराजः। भार्येति। अतोऽपि निर्धन एव मन्वादिभिः स्मृतः यस्माद्यद्वित्तं तेऽर्जयन्ति यस्य ते भार्यादयस्तत्सम्बन्धि तद्धनमिति। तत्पारतन्त्र्यादि वा यस्यैतदुच्यते।।४१६।।

**विस्रब्धं ब्राह्मणः शूद्राद् द्रव्योपादानमाचरेत्।।**
**न हि तस्यास्ति किंचित्स्वं भर्तृहार्यधनो हि सः।।४१७।।**

(१) मेधातिथिः। अत्र कश्चिदाह—"धर्मोपगतशूद्रविषयमिदम्"। तदयुक्तं, विशेषे प्रमाणाभावात्। तस्मात्सर्वस्य दासः शूद्रस्तस्यैव प्रतिग्राह्यत्वमुच्यते।

**विस्रब्धं** निःशंकम्। शूद्रधनं कथं प्रतिगृह्णीयात्प्रतिषिद्धं हि तदित्येषा शंका न कर्तव्या। यतो न तस्य किंचिदर्थो यस्य निचयः स्यादित्युक्तं भवति। स्वामी न ह्रियते धनस्य एतदेवार्जने तस्य प्रयोजनं स्वामी हीयते। अतो **विश्रब्धं द्रव्योपदानं** द्रव्यग्रहणं कुर्यात्। तेनोपनीयमानमपि स्वगृहस्थमिव विनियुञ्जीत। सति प्रयोजन एतद्युक्तं भवति—अविद्यमानधनस्य दासाच्छूद्रात्प्रतिगृह्णतो न दोषः।।४१७।।

(२) सर्वज्ञनारायणः। अतःशूद्राद्दासात् विश्रब्धं निःशंकं द्रव्यादानमाचरेत्। नतु शूद्रधनादिशंकया तद्धनत्यागः।।४१७।।

(३) कुल्लूकः। निर्विचिकित्समेव प्रकृताद् दासशूद्राद्धनग्रहणं कुर्यात् ब्राह्मणो यतस्तस्य किंचिदपि स्वं नास्ति यस्माद्भर्तृग्राह्यधनोऽसौ एवं चापदि बलादपि दासाद्ब्राह्मणो धनं गृह्णन्न राज्ञा दण्डनीय इत्येवमर्थमेतदुच्यते।।४१७।।

(४) राघवानन्दः। अत एवाह विस्रब्धमिति। विस्रब्धं कृतविश्वासं यथा स्यात्तथा शूद्रात्सप्तविधदासात् द्रव्योपादानं द्रव्यादानं तमाचरेत् तत्र हेतुः भर्तृहार्यधनो हि स इति। भर्त्रर्थमेवाहार्यं जीवेत्कारुककर्मभिरित्यादिनोक्तं धनं यस्य स इत्यर्थः।।४१७।।

(५) **नन्दनः ।** विस्रब्धः शूद्रप्रतिग्रहः भयरहितब्राह्मणस्त्रैवर्णिकः॥४१७॥

(६) **रामचन्द्रः ।** विस्रब्धं निःशंकं तस्य शूद्रस्य किंचित्स्वं द्रव्यं नास्ति॥४१७॥

(७) **मणिरामः ।** विश्रब्धं निर्विचिकित्सं। शूद्रात् स्वदासशूद्रात्। तस्य दासस्य किंचिदपि स्वं नास्ति। हि यस्मात् सः दासः भर्तृहार्यधनः स्वामिग्रहणधनः। तथा चापदि बलादपि दासाद्ब्राह्मणो धनं गृह्णन् न राजदंड्य इति तात्पर्यं॥४१७॥

(८) **गोविन्दराजः ।** विश्रब्धमिति। ब्राह्मणो निर्विचिकित्समेव प्राकृताद् दासशूद्रत्वेन अयुक्तः। तस्मात्तस्य दासशूद्रस्य न किञ्चित्स्वं विद्यते यतोऽस्य स्वामिनो धनमपह्रियते एवञ्च यदि विश्रब्धं द्रव्यं दासाद्ब्राह्मणो गृह्णन् न दण्डनीय एव इत्येवं सर्वमित्येतदुच्यते॥४१७॥

**वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत्॥**
**तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत्॥४१८॥**

(१) **मेधातिथिः ।** कर्म व्यतिक्रामन्तः क्षोभयेयुराकुलीकुर्युर्जगत्। अतस्ते **प्रयत्नेन** स्वकर्मभ्यश्च्यावयितुं न लभेरन्। अनल्प एवातिक्रामे भूयसा दण्डेन योजनीया वैश्या अपि। बन्धनं नास्त्यपि, धनशक्यः स्वधर्मः॥४१८॥

(२) **सर्वज्ञनारायणः ।** कारयेद्राजा॥४१८॥

(३) **कुल्लूकः ।** वैश्यं कृष्यादीनि शूद्रं च द्विजातिशुश्रूषादीनि कर्माणि यत्नतो राजा कारयेद्यस्मात्तौ स्वकर्मभ्यश्च्युतावशास्त्रीयोपार्जितधनग्रहणमदादिना जगदाकुलीकुर्याताम्॥४१८॥

(४) **राघवानन्दः ।** विट्शूद्रौ स्वानि कर्माणिं स्वामिनोः विप्रराजन्ययोः कर्माणि कृषि-शुश्रूषादीनि कारयेद्राजा ब्राह्मणो वा स्वानीति क्वचित्पाठः। अन्यथादोषमाह तौहीति। स्वकर्मभ्यश्च्युतौ जगदिदं क्षोभयेताम्। वैश्यशूद्रौ धनवत्तया विप्रानधीनौ प्रचुरधनरुचितया गोरक्षाकृष्याद्य-करणाज्जगन्नाशयेद्वैश्यः। शूद्रोपि शुश्रूषाद्यकरणेन विप्रकृत्यधर्मादावननुकूलत्वाज्जगन्नाश-हेतुरिति॥४१८॥

(५) **नन्दनः ।** कारयेद्राजा॥४१८॥

(६) **मणिरामः ।** स्वानि कर्माणि वैश्यं कृष्यादीनि शूद्रं द्विजातिः शुश्रूषादीनि कर्माणि राजा कारयेत्। यतः तौ वैश्यशूद्रौ स्वकर्मभ्यः च्युतौ इदं जगत् क्षोभयेता॥४१८॥

(८) **गोविन्दराजः ।** वैश्यशूद्राविति। वैश्यशूद्रौ कृषिदास्यादीनि स्वकर्माणि राजा कारयेत्। यस्माद्वैश्यः कृषिवाणिज्यादि शूद्रो दास्याद्यकुर्वन् धर्मक्षयादिदं जगदाकुलीकुर्यात्। शूद्रश्च दास्यमकुर्वन् अनतिमभिज्ञाय कदाचित् द्वैजाते कर्मणि प्रवर्तमानो दुर्भिक्षनरकाद्युपद्रवकृत्स्यात्॥४१८॥

**अहन्यहन्यवेक्षेत कर्मान्तान्वाहनानि च॥**
**आयव्ययौ च नियतावाकरान्कोशमेव च॥४१९॥**

(१) **मेधातिथिः ।** राजधर्माणामनुसन्धानार्थम्। **कर्मान्ताः** कृषिशुल्कस्थानादयः। **वाहनम्** हस्त्यादि। **आयव्ययौ**–इदमस्य प्रविष्टमिदं निर्यातमित्येव सततं गवेषणीयम्। **आकरा** धातवः सुवर्णाद्युत्पादे भवन्ति भूमयः। **कोशो** द्रव्यनिचयस्थानम्॥४१९॥

(२) **सर्वज्ञनारायणः ।** कर्मान्तान् शस्त्रपातादिकर्मशालाः। आकरान् सुवर्णाद्युत्पत्तिस्थानानि॥४१९॥

(३) **कुल्लूकः ।** प्रत्यहं तदधिकृतद्वारेण प्रारब्धदृष्टादृष्टार्थकर्माणि निरूपयेत्तथा हस्त्यश्वादीनि किमद्यप्रविष्टं किंनिःसृतमिति सुवर्णरत्नोत्पत्तिस्थानानि भाण्डागारं चावेक्षेत व्यवहारदर्शनासक्तोऽपि राजा धर्मान्नपरित्यजेदिति दर्शयितुमुक्तस्यापि पुनर्वचनम्॥४१९॥

(४) **राघवानन्दः ।** राजधर्मान्प्रवक्ष्यामीत्युपक्रम्याध्यायद्वयसमाप्यं सार्थवादमुपसंहरति अहन्यहनीतिद्वाभ्याम्। कर्मान्तं प्रारब्धकर्मसमाप्तिं वाहनानि हस्त्यश्वादीनि आकरान् सुवर्णाद्युत्पत्तिस्थानानि कोशं धनागारं अवेक्षेत रक्षणार्थमीक्षेतेत्यर्थः॥४१९॥

(५) **नन्दनः ।** कर्मान्तान्कर्मनिष्पत्तिं नियतौ राजशास्त्रसिद्धौ॥४१९॥

(६) **रामचन्द्रः ।** अहन्यहनि राजा आयव्ययौ नियतौ आकरान् उत्पत्तिस्थानानि च पुनः कोशमेव वीक्षेत पश्येत्॥४१९॥ इति श्री रामचन्द्रभट्टविरचितायां मनुभावार्थदीपिकायां न्यायप्रकरणे व्यवहारो नामाष्टमोध्यायः॥८॥६॥

(७) **मणिरामः ।** कर्मांतान् प्रारब्धदृष्टादृष्टकर्मणां निष्पत्तिं। आकरान् सुवर्णरत्नोत्पत्तिस्थानानि॥४१९॥४२०॥

(८) **गोविन्दराजः ।** अहनीति। प्रत्यहं कर्मान्तान् कृषिशुल्कादिस्थानानि धनसञ्चयं योगक्षेमार्थं प्रति जागृयादिति व्यवहारदर्शनाशक्तस्यापि राजधर्माऽपरित्यागार्थं पुनर्वचनम्॥४१९॥

**एवं सर्वानिमान्राजा व्यवहारान् समापयन्॥**
**व्यपोह्य किल्विषं सर्वं प्राप्नोति परमां गतिम्॥४२०॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां**

**(राजधर्मे व्यवहारनिर्णये सामान्यव्यवहारो नाम)**

**अष्टमोऽध्यायः**॥८॥ समाप्तः;

(१) **मेधातिथिः ।** उक्तेन प्रकारेण **व्यवहारा**नृणादीन्**समापय**न्निर्णयावसानं कुर्वन्यत्किञ्चित्तत्सर्वमविज्ञातदोषं **तत्सर्वं व्यपोह्या**पनुद्य - **परमा** गतिमभिप्रेता स्वर्गापवर्गभूमिं **प्राप्नोति** लभते॥४२०॥

इति श्री भट्टमेधातिथिविरचिते मनुभाष्येऽष्टमोऽध्यायः॥

(२) **सर्वज्ञनारायणः ।** बह्वर्थविषयत्वेनाध्यायस्य दीर्घत्वादतः परमध्यायानुसंतानेऽतिदीर्घता स्यादित्यपर्यवसित एव प्रतिज्ञातार्थेऽध्यायमुपसंहरति एवमिति। समापयन् संस्थां नयन् व्यपोह्य निरुह्य। परमां गतिं ब्रह्मप्राप्तिलक्षणामिति॥४२०॥ श्रीनारायणसर्वज्ञकृता वृत्तिर्मनुस्मृतेः। कुनिबन्धकृतव्याख्यामिय दूरे निरस्यते॥ इति मन्वर्थनिबन्धे सर्वज्ञश्रीनारायणकृतेऽष्टमोध्यायः॥८॥ समाप्तश्चाय व्यवहारक्षमोऽध्यायः॥ छ॥ छ॥

(३) **कुल्लूकः ।** एवमुक्तप्रकारेणैतान्सर्वानृणादानादीन्व्यवहारान् तत्त्वतो निर्णयेनान्तं नयन्-पापं सर्वमपहाय स्वर्गादिप्राप्तिरूपामुत्कृष्टां गतिं लभते॥४२०॥ इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यामष्टमोऽध्यायः॥८॥

(४) **राघवानन्दः । किंच।** एवमुक्तानृणादिकानष्टादश समापयन्। समाप्तिपर्यन्तमनु-तिष्ठन्। अतएवावश्यकस्य करणात्। इति श्रीराघवानन्दसरस्वतीविचितायां मन्वर्थचन्द्रिकायामष्ट-मोऽध्यायः॥८॥

(५) **नन्दनः ।** इमानुक्तान्व्यवहारानृणादानादीन्समापयन्यथाशास्त्रं नयन्निर्णयन्ब्रह्मलोके हरिश्चंद्रानिवासस्थाने॥४२०॥ इति मानवव्याख्याने नन्दनकृतेऽष्टमोध्यायः॥

(७) **मणिरामः ।** इति श्रीमणिरामकृतायां सुखबोधिन्यां मनुवृत्तावष्टमोऽध्यायः समाप्तः॥ •

(८) **गोविन्दराजः ।** एवमिति। व्यपोह्य कल्मषं सर्वं प्राप्नोति परमां गतिम्। एवमुक्तनीत्या एतानृणादानादीन् व्यवहारानिर्णयेनान्तं नयन् राजा अपक्षपातव्यवहारदर्शनेन शास्त्र दान सामर्थ्यात् प्रमादकृतसञ्चितपापं अपनुद्य ब्रह्मलोकं प्राप्नोति इति समस्तव्यवहारासमाप्तावपि प्रधानविवादसमाप्ता-भिप्रायेणेदं फलकथनम्॥४२०॥

इति श्री भट्टमाधवात्मजगोविन्दराजविरचितायां मन्वाशयानुसारिण्यां सर्वव्यवहार-निर्णयो नामाष्टमोऽध्यायः॥

भारतीयविद्या-श्रेणी —ग्रन्थः ३९

# मनुस्मृतिः

मेधातिथि-सर्वज्ञनारायण-कुल्लूक-राघवानन्द-नन्दन-
रामचन्द्र-मणिराम-गोविन्दराज-भारुचि

इति व्याख्यानवकेन समलङ्कृता

◎

## पञ्चमो विभागः

(९-१० अध्यायात्मकः)

◎

भारतशासनस्य शिक्षणविभागस्यार्थसाहाय्येन प्रकाशिता

◎

सम्पादकः

जयन्तकृष्ण हरिकृष्ण दवे

महामहोपाध्याय, विद्यावाचस्पति

एम्.ए., एलूएल्.बी., अॅड्व्होकेट (सु. को.)

इत्यनेन

भारतीयविद्याभवनस्य संमान्यनियामकेन परिष्कृता

१९८२

भारतीय विद्या भवनम्

कुलपति के. एम्. मुनशीपथः, चौपाटी

मुम्बई ४०० ००७

Bhāratīya Vidyā Series—Vol. No. 39

# MANU-SMṚITI

With Nine Commentaries by Medhātithi, Sarvajñanārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmachandra, Maṇirāma, Govindarāja and Bhāruchi

VOLUME V (Adhyāyas 9-10)

*Edited by*

JAYANTAKRISHNA HARIKRISHNA DAVE

Mahāmahopādhyāya, Vidyāvāchaspati

M.A., LL.B., ADVOCATE (SUPREME COURT)

Hon. Director, Bharatiya Vidya Bhavan

*Published with the financial assistance of the Ministry of Education, Government of India*

1982

**BHARATIYA VIDYA BHAVAN**

Kulapati K. M. Munshi Marg, Chowpatty, Bombay-400 007

# INTRODUCTION

This is the fifth volume of Manusmṛti, with nine commentaries of Medhātithi, Sarvajñanārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmachandra, Maṇirāma, Govindarāja and Bhāruchi.

It covers the ninth and the tenth Adhyāyas of Manusmṛti.

This project of Manusmṛti with these nine Sanskrit Commentaries is undertaken by the Bhāratīya Vidyā Bhavan with the financial assistance of the Ministry of Education, Government of India. The Editor expresses warm thanks to the Government of India for its kind and continued financial assistance.

The printing of this and the remaining volume has been delayed for various reasons like power-cuts, paper-shortage and other press problems for which the Editor apologises.

With the situation easing a bit, the remaining part of the project will soon be completed.

Bharatiya Vidya Bhavan,
Kulapati K. M. Munshi Marg,
Bombay-400 007.
January 15, 1982

**Jayantakrishna Harikrishna Dave**

# मनुस्मृतिः

## नवमदशमाध्याययोर्विषयानुक्रमकोशः

### नवमोऽध्यायः

| विषयः | अ. श्लो. |
|---|---|
| नारीपुरुषयोः समायोगाद्बीजसंभवः .. .. | ९–३३ |
| बीजस्य क्वचिद्वैशिष्ट्यं क्षेत्रजादिषु कुत्रचिदुभयं समं प्रशस्तम् .. | ९–३४–३५ |
| यादृशं बीजं तूप्यते तत्तज्जातीयमेव फलं जायते .. .. | ९–३६ |
| एषा भूमिर्भूतानां क्षेत्रम् .. .. | ९–३७ |
| एकस्मिन्नेव क्षेत्रे कर्षकैरुप्तानि बीजानि भिन्नरूपाणि भवन्ति .. | ९–३८ |
| बीजस्वभावस्योदाहरणम् .. .. | ९–३९–४० |
| प्राज्ञेनानुशिष्टेन परयोषिति बीजनिषेको न कर्तव्य इति परस्त्रीगमननिषेधः | ९–४१–४२ |
| परस्त्रियां सिक्तं बीजं क्षेत्रस्वामिनोऽपत्यं भवति .. .. | ९–४३ |
| कर्षकस्यैव फलं येन क्षेत्रीकृतमिति पृथिवीदृष्टान्तेन तद् विवृणोति .. | ९–४४–४५ |
| विक्रयविनिमयत्यागाभ्यां भार्यात्वं नापैति इति शास्त्रमर्यादा .. | ९–४६ |
| विभागकन्यादानानि त्रीणि सद्भिः सकृदेव दीयन्ते .. .. | ९–४७–५० |
| परक्षेत्रे बीजवप्तुः फलनिर्णयः .. .. | ९–५१ |
| बीजाद् योनिर्बलीयसीति क्षेत्रिण इत्यधिकबलं क्षेत्रमिति निर्णयः .. | ९–५२ |
| बीजार्थं यत्प्रदीयते तस्येह द्वावपि भागिनौ भवतः .. .. | ९–५३–५४ |
| जलनिषेकेन वायुना वा हृतं बीजं यस्य क्षेत्रे प्ररोहति तस्यैव तद्भवति .. | ९–५३–५४ |
| आपदि भोजनाच्छादनादिविरहे योषितां धर्मनिरूपणम् .. .. | ९–५६ |
| ज्येष्ठयवीयसोऽनापदि नियुक्तौ पातित्यम् .. .. | ९–५८ |
| सन्तानस्य परिक्षये शास्त्रविहिता नियुक्तिः .. .. | ९–५९ |
| विधवायां नियुक्तौ शास्त्रमर्यादा .. .. | ९–६० |
| विधवानियोगार्थे निर्वृत्ते शास्त्रनिर्णयः .. .. | ९–६१ |
| तदतिक्रमे तयोः पातित्यम् .. .. | ९–६२ |
| पूर्वविहितस्य प्रतिषेधः .. .. | ९–६३ |
| उद्वाहकर्मणि मंत्रेषु न नियोगोक्तिः .. .. | ९–६५–६६ |
| पुरा वेने राष्ट्रं पालयति सत्ययं पशुधर्मः प्रवर्तितः .. .. | ९–६७ |
| वाग्दाने निर्वृत्ते पतिमरणे च संजाते विधिनिरूपणम् .. .. | ९–६९–७० |
| विधिवत् प्रतिगृह्यापि कन्यात्यागे निर्णयः .. .. | ९–७१–७३ |
| पत्युः प्रवासेऽवृत्तिकर्शितायाः स्त्रियः कार्याकार्यनिर्णयः .. .. | ९–७४ |
| धर्मकार्यादौ पतिप्रवासे शास्त्रोक्ता व्यवस्था .. .. | ९–७६–७७ |
| मत्तरोगार्तातिक्रमादौ निग्रहः .. .. | ९–७८ |
| नार्याः गृहात् रोषेण गमने व्यवस्था .. .. | ९–७९–८४ |
| कामतः प्रवृत्तानां समानासमानजातीयानां विवाहे विवाहक्रमः .. | ९–८६–८७ |
| अभिरूपाय वराय कन्यां दद्यात् .. .. | ९–८८ |
| गुणहीनाय कन्यां न प्रयच्छेत्, अपि तु ऋतुदर्शनेऽपि सा गृहे तिष्ठेत् .. | ९–८९–९० |

इति मनुस्मृतिनवमाध्यायविषयानुक्रमकोशः ।।

–: ० :–

## दशमोऽध्यायः

| विषयः | | | अ. श्लो. |
|---|---|---|---|
| व्रात्यनिरूपणम् | .. | .. | १०–२० |
| व्रात्याद् भृज्जकण्टकः आवन्त्यवाटधान-पुष्पध-शैखादीनां निरूपणम् | | .. | १०–२१ |
| भल्ल–मल्ल–निच्छिवि–नटादीनां समुत्पत्तिः | .. | .. | १०–२२–२३ |
| व्यभिचारेण वर्णानां सङ्करा जायन्ते | .. | .. | १०–२४ |
| प्रतिलोमानुलोमान्योन्यव्यतिषक्तनिरूपणप्रस्तावः | .. | .. | १०–२५–२६ |
| सूतादिप्रतिलोमाः सजातीयाञ्जनयन्ति | .. | .. | १०–२७–३१ |
| तेषां जीवनसाधनादिनिरूपणम् | .. | .. | १०–३२–४९ |
| तेषां निवासस्थान–पात्रशुद्ध्यादि | .. | .. | १०–५०–५१ |
| विवाहश्च तेषां सदृशैः सह | .. | .. | १०–५३–५४ |
| दस्यूनां जीविकासाधनं कार्याकार्यादि | .. | .. | १०–५५–५८ |
| जारजातानां स्वभावात्परिचयः | .. | .. | १०–५८ |
| पित्र्यं मातुर्वा शीलं भजते, न स्वं गोपयितुं शक्नोति | .. | .. | १०–५९–६० |
| एते वर्णसंकरा राष्ट्रनाशहेतुकत्वाद्राज्ञा वर्जनीयाः | .. | .. | १०–६१–६२ |
| सर्वमनुष्यभेदजातेः सामासिको धर्मः | .. | .. | १०–६३ |
| ब्राह्मणाच्छूद्रायां जातस्य सप्तमाज्जन्मतो विशेषः | .. | .. | १०–६४ |
| शूद्रस्य ब्राह्मणता तथाभावे ब्राह्मणस्य च शूद्रत्वम् | .. | .. | १०–६५ |
| क्वचिद्बीजं क्वचिद्योनिरिति हीनोत्कृष्टत्वे निर्णयः | .. | .. | १०–६६–६८ |
| स्वजातिनिहितं स्वजातावपि संस्कारमर्हति | .. | .. | १०–६९ |
| बीजप्राधान्यवादिनामभिमतम् | .. | .. | १०–७०–७२ |
| मनुस्तु आर्यकर्माणमनार्यं समासममाह | .. | .. | १०–७३ |
| ब्रह्मयोनिस्थब्राह्मणानां षट्कर्मानुष्ठानम् | .. | .. | १०–७४ |
| अध्यापनाध्ययनादि–षट्कर्मणां निरूपणम् | .. | .. | १०–७५ |
| षट्सु कर्मसु ब्राह्मणस्यैव त्रिकं जीविकासाधनम् | .. | .. | १०–७६–७८ |
| क्षत्रवैश्ययोर्जीविकाकर्माह मनुः | .. | .. | १०–७९ |
| ब्राह्मणक्षत्रियविशां श्रेयस्करं जीवनकर्म | .. | .. | १०–८०–८२ |
| तत्र ब्राह्मणक्षत्रिययोः कृषिप्रतिषेधः | .. | .. | १०–८३–८४ |
| आपदि वाणिज्यया धनवृद्धिं कुर्यात् | .. | .. | १०–८५ |
| अविक्रेयद्रव्यनिरूपणम् | .. | .. | १०–८६–९० |
| निषिद्धद्रव्यविक्रयप्रतिषेधः | .. | .. | १०–९१–९४ |
| अधमो जात्योत्कृष्टकर्मभिर्न जीवेत् | .. | .. | १०–९५ |
| एवंविधं राजा दण्डयेत् | .. | .. | १०–९६ |
| स्वधर्म एव श्रेयान्परधर्मानुष्ठानादिति प्रतिपादनम् | .. | .. | १०–९७–९८ |
| विहितवृत्तिशक्त्यभावे व्यवस्था | .. | .. | १०–९९–१०० |

| विषयः | | | अ. श्लो. |
|---|---|---|---|
| ब्राह्मणस्य विहितकर्माशक्तौ आपत्सु व्यवस्था | .. | .. | १०-१०१-१०४ |
| धर्माधर्मविचक्षणैः पूर्वं कृतान्युदाहरणानि | .. | .. | १०-१०५-१०८ |
| गर्हितप्रतिग्रहो निषिद्धः | .. | .. | १०-१०९ |
| आतनापि ब्राह्मणेन शूद्रयाजनाध्यापने न करणीये | .. | .. | १०-११० |
| याजनाध्यापनप्रतिग्रहाणां दोषापहोपायाः | .. | .. | १०-१११ |
| दुष्टप्रतिग्रहाच्छिलोञ्छवृत्तिः प्रशस्ता | .. | .. | १०-११२ |
| कुटुम्बावसादप्राप्तौ राजा याच्यस्त्यागो वा विषयात्कार्यः | | .. | १०-११३ |
| सप्तवित्तागमानां धर्म्यत्वम् | .. | .. | १०-११५ |
| आपत्तौ दश जीवनहेतवः | .. | .. | १०-११६ |
| ब्राह्मणक्षत्रियाणामापदि वृत्तिः | .. | .. | १०-११७-११९ |
| आपत्प्रसक्तौ शूद्रस्य जीविकाविधिनिषेधौ | .. | .. | १०-१२०-१२३ |
| आपदि शूद्रस्य यथाशक्ति ब्राह्मणेन पालनम् | .. | .. | १०-१२४-१२८ |
| शक्तेन शूद्रेण धनसञ्चयो न कार्यः | .. | .. | १०-१२९ |
| इति चतुर्वर्णानामापद्धर्मोपसंहारः | .. | .. | १०-१३०-१३१ |

**।। इति नवमदशमाध्यायविषयानुक्रमकोशः ।।**

---

# नवमोऽध्यायः ९

◎

**पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ॥**
**संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥ १ ॥**

(१) **मेधातिथिः**। स्त्रीसंग्रहणानंतरं विवादपदनिर्देशः "स्त्रीपुंधर्मो विभागश्चेति"। (८।७)तदिदानीमुच्यते अत्यन्त ++++++++++++++++द्युपसृष्टेन भर्त्रा कथंचिदपि बाध्यमानया तेन सह राजनि विवदितव्यमिति ++++++++++++ ++++++++++++विध एव न्यायानुवर्तिनि न द्वेषमत्सरादिमति भार्यायां तथा च विशील ++++++++++++++++++++++++++++ति तथाविधस्य पत्युरुपचर्योक्ता। न भार्यां प्रति प्रभुत्वम्। उपचारश्च भृत्याच्छुश्रूषा पाद-संवाहनादि ++++++++++++++ स्त्रीपुरुषशब्दौ च यद्यपि लिङ्गविशेषाव-च्छिन्नमनुष्यजातिवचनौ तथापीह सम्बन्धिनि जायापत्या ++++++++++++ "अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशमिति" (९।२) स्वग्रहणेन संबन्धितां लक्षयति। वर्तमानप्रतिज्ञावचन + प्रयोजन++++++++++++भर्तुः **स्त्रियाश्च** जायायाः **संयोग** एकत्र संनिधाने तथा **विप्रयोगे** प्रवासप्रयाणे ++++++++धर्मे या वृत्तिः प्रसाधनं शरीररक्षा हि +++++++++++++++++++++++ +++++++++++++++**तान्वक्ष्यामि। शाश्वत**ग्रहणं स्तुतिः। **धर्म्ये वर्त्मनि तिष्ठतोः**—अनुवादोऽयम्! न्याय्यो धर्मशास्त्राचारनिरूढो मार्गः ॥ १ ॥

(२) **सर्वज्ञनारायणः**। क्रमप्राप्तं स्त्रीपुंधर्ममवतारयति **पुरुषस्येति**। संयोगे गार्हस्थ्य-काले। विप्रयोगे पतिप्रवासवैधव्यादौ।

(३) **कुल्लूकः**। पुरुषस्य पत्न्याश्च धर्माय हि तेऽन्योन्याऽव्यभिचारिलक्षणे वर्त्मनि वर्तमानयोः संयुक्तवियुक्तयोश्च धर्मान्पारम्पर्यगतत्वेन नित्यान्**वक्ष्यामि**। दंपत्योः परस्पर-धर्मव्यतिक्रमे सत्यन्यतरज्ञाने दण्डेनापि स्वधर्मव्यवस्थानं राज्ञा कर्तव्यमिति व्यवहारमध्ये-ऽस्योपदेशः ॥ १ ॥

(४) **राघवानन्दः**। स्त्रीपुंसोर्धर्मं प्रतिजानीते **पुरुषस्येति**। 'स्त्रीपुंधर्मो विभागश्च द्यूत-माह्वयमेव च' इति। व्यवहारमध्यपातित्वाद्राजकृत्येन संगतिरस्याध्यायस्य। **धर्म्ये** धर्मजनके धर्मादनपेते वा **वर्त्मनि** धर्मोपाये। **संयोगे** स्वदेशस्थयोः। विप्रयोगे देशान्तरस्थयोः मृतौ वा। शाश्वतान् वेदोक्तान् ॥ १ ॥

(५) **नन्दनः**। अथ स्त्रीपुंधर्मं प्रस्तौति **पुरुषस्येति**। धर्मे(र्म्ये)ऽन्योन्यव्यभिचार-रहिते ॥ १ ॥

(६) **रामचन्द्रः**। धर्म्ये वर्त्मनि तिष्ठतोः दम्पत्योः ॥ १ ॥

(७) **मणिरामः**। धर्म्ये वर्त्मनि अन्योन्याऽव्यभिचारिलक्षणे वर्त्मनि। तिष्ठतोः वर्तमानयोः। धर्मान् शाश्वतान् पारंपर्यागतत्वेन नित्यान्।। १।।

(८) **गोविंदराजः**। ॐशिवाय नमः। **पुरुषस्येति**। स्त्रीपुंसयोर्दम्पत्योरन्योन्याव्यभिचारलक्षणे मार्गे वर्तमानयोः संयुक्तयोर्वियुक्तयोश्च नित्यान् धर्मान् वक्ष्यामि। जायापत्योरितरेतरविप्रतिपत्तौ कथञ्चित् राजनिवेदने सत्यनया व्यवस्थया राज्ञा दण्डादिनापि मार्गस्थापनं करणीयम्। अकरणाद्राज्ञो दोषः। इत्येतदर्थं व्यवहारमध्ये राजधर्मेषु स्त्रीपुंसयोः धर्मा उच्यन्ते।। १।।

(९) **भारुचिः**। धर्म्ये वर्त्मनीत्यन्योन्याव्यभिचारलक्षणे तिष्ठतोर्दम्पत्योः संयोगे जीवति पत्यौ सन्निहिते वा विप्रयोगे च मृते प्रोषिते वा तयोर्धर्मान् वक्ष्यामि नियोगवृत्तिनियमादीन्। शाश्वतग्रहणं चानयोरनुष्ठानस्तुत्यर्थम्। इदं तावत् प्राक्प्रसिद्धमेव यथा।। १।।

**अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।।**
**विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे।। २।।**

(१) **मेधातिथिः**। स्वेच्छया स्त्रीणां धर्मार्थकामेषु व्यवहर्तुं न देयम्। यत्किंचन धनं धर्मादौ विनियुज्यते तत्र यथावयः स्वपुरुषाः पत्यादयोऽनुज्ञापनीयाः। 'स्वपुरुषाः' रक्षाधिगताः "पिता रक्षती" (९।३)त्यादिनिर्दिष्टाः। **विषयेषु** हि गीतादिषु सज्जन्त्यः प्रसङ्गं कुर्वन्त्य **आत्मनो वशे स्थाप्याः** ततो निवारणीयाः। यद्यप्यस्वतन्त्रा इत्यनेनैव सर्वक्रियाविषया स्वातन्त्र्यनिवृत्तिरुपदिष्टा भवति तथापि पुनर्विषयव्यावृत्तिवचनं यत्नतः परिहारार्थम्। मा विज्ञायि यत्तेभ्य एव परपुरुषसंपर्कादिभ्यो निवारणीयाः, गृहावस्थितास्तु मद्यपानादिसक्ता न दुष्यन्ति।

**च**शब्देन तावदयं **धर्मः** पुरुषाणामुक्तः—स्वातन्त्र्यं स्त्रीणां तावन्न देयम्, अर्थात्तु ताभिरपि स्वतन्त्राभिर्न भवितव्यमित्युक्तं भवति। एवं च "पुरुषस्य स्त्रियाश्चैवेति" (९।१) चशब्द इतरेतरविषययोर्ये स्त्रीपुंसयोर्धर्मास्त एवोच्यन्ते, न तु यागादय इति समन्वयो भवति।। २।।

(२) **सर्वज्ञनारायणः**। पुरुषैः पतिभिः। विषयेषु गीतादिषु। आत्मनो वशे स्थाप्याः यथा न सज्जन्ते।। २।।

(३) **कुल्लूकः**। स्वीयैर्भर्त्रादिभिः सदा स्त्रियः स्वाधीनाः कार्याः। अनिषिद्धेष्वपि रूपरसादिविषयेषु प्रसक्ता अप्यात्मवशाः कार्याः।। २।।

(४) **राघवानन्दः**। तत्रादौ स्त्रियाः स्वातन्त्र्यं निषेधति **अस्वतन्त्रा** इति पंचभिः। पितृभ्रातृपुत्रादिभिः विषयेषु पुरुषान्तरस्पर्शसंभोगशब्दादिषु रसायनादिषु च संस्थया (?) वशे कृत्वा दिवा गृह्यकृत्येषु, रात्रौ तु स्वनिकटे शयनादौ।। २।।

(६) **रामचन्द्रः**। स्वैः पुरुषैः दिवानिशं अस्वतन्त्राः स्त्रियः कार्याः। पुनः विषयेषु नृत्यगीतादिषु सज्जन्त्यः आसक्तिं कुर्वन्त्यः स्त्रिय आत्मनो वशे च हि संस्थाप्याः।। २।।

(७) **मणिरामः**। स्वीयैः भर्त्रादिभिः। विषयेषु च रसायनादिविषयेषु। सज्जन्त्यः प्रसक्ता अपि आत्मवशाः कार्याः ॥ २ – ३ ॥

(८) **गोविंदराजः**। **अस्वतंत्रा इति**। भर्त्रादिभिः स्त्रियः सर्वदा परतंत्राः कार्याश्च, निषिद्धेऽपि च शब्दादिषु विषयेष्वतिसक्तिं भजमानास्ततोऽपास्यात्मवर्तिन्यः कार्याः ॥ २ ॥

(९) **भारुचिः**। नन्वासामस्वातन्त्र्यं स्त्रीधर्मे निर्दिष्टमेव पञ्चमेऽध्याये। सत्यं, स्त्रीधर्मा एव ते। इमे तु वक्ष्यमाणाः स्त्रीपुंसयोः। तथा च सति प्रतिज्ञेयं पुरुषस्य स्त्रि(या)श्चैवे'ति शास्त्रानुक्रमण्याञ्चैवमेवोक्तं 'साक्षिप्रश्नविधानं च धर्मः स्त्रीपुंसयो-स्तथे'ति। पुनश्च व्यवहारानुक्रमण्यामष्टमेऽध्याये समस्तयोरेव निर्देशः 'स्त्रीपुंधर्मो विभागश्चे'ति (८।७)। अथवा उत्तरार्थमेतत् स्यात्। एवं च सति यदुक्तमासां स्त्रीधर्मेषु पारतन्त्र्यं तत् कुतः स्यादिति ॥ २ ॥

**पिता रक्षति कौमारे भर्ता रक्षति यौवने ।।**
**रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ।। ३ ।।**

(१) **मेधातिथिः**। 'रक्षा' नामानर्थप्रतीघातः। अनर्थस्त्वनाचारवृत्तातिक्रमेणाप्रवृत्ति-परेण चान्यायतो धनहरणादिना परिभवः। तस्य प्रतीघातो निवारणम्। तत्पित्रादिभिः कर्तव्यम्। **रक्षतीति** भवन्तिर्लिङर्थे छान्दसत्वात्। ततो रक्षेदिति विधेयप्रत्ययः। वयो-विभागश्रवणं चाधिकतरदोषार्थम्। सर्व एव तु सर्वदा रक्षार्थमधिक्रियन्ते। **कौमार**ग्रहणं दानात्पूर्वकालोपलक्षणार्थम्। एवं **यौवनं** जीवद्भर्तृकायाः प्रदर्शनम्। अतश्च नित्यानुवाद एवायम्। यदा यदा यदधीना तदा तदा तेनावश्यं रक्षितव्या। तथा च जीवत्यपि भर्तरि पितुः पुत्रस्य चाधिकारः। तथा दर्शितं मानवे। सर्व एते सर्वदा तत्संरक्षणं कुर्युः। वक्ष्यमाणं तु ग्रन्थगौरवं करोति।

"ननु च 'बालया वा युवत्या वे'(५।१४७)त्यनेनोक्तमेवैतत्"। मैवम्, अन्यदेवा-स्वातन्त्र्यमन्या च रक्षा। तत्र चास्वातन्त्र्यमुपदिष्टम्, इह तु रक्षोच्यते। (तेन च सर्वक्रिया-विषयम्।) अन्यतन्त्राया अपि शक्योऽनर्थः प्रतिहन्तुम्।

"ननु चेहापि पठ्यते 'न स्त्री स्वातन्त्र्यमर्हतीति'।" उच्यते। नानेन सर्वक्रियाविषय-मस्वातन्त्र्यं विधीयते, किं तर्हि? नास्वतन्त्राऽन्यमनस्का स्वात्मसंरक्षणाय प्रभवति शक्ति-विकलत्वात्स्वतः। पञ्चमे तु वचनमस्वातन्त्र्यार्थमर्थान्तिरस्य तत्रोक्तत्वात् ॥ ३ ॥

(२) **सर्वज्ञनारायणः**। पिता रक्षति कन्यादूषणादेः ॥ ३ ॥

(३) **कुल्लूकः**। पिता विवाहात्पूर्वं स्त्रियं रक्षेत्, पश्चाद्भर्ता, तदभावे पुत्राः। नत्वास्य स्त्री कस्यांचिदप्यवस्थायां स्वातन्त्र्यं भजेत्। 'भर्ता रक्षति यौवन' इत्यादिप्रायिकम्, अभर्तृपुत्रायाः पित्रादिभिरपि रक्षणात् ॥ ३ ॥

(४) **राघवानन्दः**। रक्षितृव्यवस्थितिमाह **पितेति**। स्वातन्त्र्यं रक्षितृरहितत्वम् ॥ ३ ॥

(५) **नन्दनः।** रक्षति रक्षेत् स्थविरे वार्धके ।। ३ ।।

(८) **गोविन्दराजः। पितेति।** प्राग्विवाहात् पिता स्त्रियं रक्षति। तदनु भर्ता, तदभावे पुत्राः, अत एभिर्न कदाचित्स्वतंत्राः कार्याः। भर्तृपुत्रयौवनवार्धक्यग्रहणं व्यवस्थार्थमपि त्वौचित्याप्राप्तानुवादोऽयम् ।। ३ ।।

(९) **भारुचिः।** यत इदं तत्सम्बन्धेनोच्यते **पितेति।** एवं च सति राजनि भर्तर्येवाऽऽसामस्वातन्त्र्यम्। किं तर्हि ? यथा वयं पित्रादिषु तत्संरक्षणपरेण च वाक्येन पित्रादयो वयोविभागाश्रयेण दुहित्रादिस्त्रीणां रक्षितारो नियम्यन्ते, एवं च सति सर्वदा सर्वेषां तद्रक्षणोपदेशोऽयं सामर्थ्याद्विज्ञेयः। सर्वत्र लङ द्रष्टव्यः। विध्यथ (?) रक्षेदित्येवं छान्दसत्वाद्विशेषात् स्मृते युक्ति तल्लक्षणमत्र ।। ३ ।।

**कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।।**
**मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ।। ४ ।।**

(१) **मेधातिथिः।** दानकाले प्राप्ते यदि पिता न ददाति + + + + यः। कः पुनः कन्याया दानकालः? 'अष्टमाद्वर्षात्प्रभृति प्रागृतोरिति' स्मर्यते। इहापि लिङ्गमस्ति + + + + + + + + + + + + + + + + + + तिः। अनुपयन्नगच्छन्नरमयन्भार्याभिर्निघ्नः। उपगमने कालश्च ऋतुः सद्व्रतस्य पर्ववर्ज्यमित्युक्तः ।। ४ ।।

(२) **सर्वज्ञनारायणः।** अदाता योग्याय। अनुपयन् वाग्दत्तामपि परिणयनेनासंस्तुवन्। वाच्यो गर्ह्यः। उच्य इति पाठे देहीत्यादि राज्ञा नियोज्यः ।। ४ ।।

(३) **कुल्लूकः।** प्रदानकाले पिता तामददन्गर्ह्यो भवति 'प्रदानं प्रागृतो'रिति (गौ. १८।३) **गौतम**वचनात् ऋतोः प्राक्प्रदानकालः। पतिश्च ऋतुकाले पत्नीमगच्छन्गर्हणीयो भवति। पत्यौ मृते मातरमरक्षन्पुत्रो निन्द्यः स्यात् ।। ४ ।।

(४) **राघवानन्दः।** रक्षितॄणां तदकरणे गर्ह्यतामाह **काल इति।** अदातेति च्छेदः। वाच्यः गर्हणीयः। अनुपयन्नृतावृतावगच्छन्। अरक्षिता रक्षणं प्रत्यकर्ता ।। ४ ।।

(५) **नन्दनः।** अदातेति पदच्छेदः। याप्यः कुत्सितो दण्डच इति यावत्। अनुपयन्नृतुकालेऽनुपगच्छन् ।। ४ ।।

(६) **रामचन्द्रः।** काले दशवर्षाभ्यन्तरेऽदाता पिता वाच्यः निन्द्यः। च पुनः पतिः अनुपयन् स्त्रियम् अगच्छन् वाच्यो निन्द्यः। मृते भर्तरि मातुररक्षिता पुत्रो वाच्यो निन्द्यः ।।४।।

(७) **मणिरामः।** काले प्रदानकाले। अदाता चेन्न ददाति तदा पिता वाच्यः निंद्यो भवति। अनुपयन् ऋतुकाले अगच्छन् ।। ४ ।।

(८) **गोविन्दराजः। काल इति।** "प्रदानं प्रागृतो"रिति **गौतम**स्मरणात्; अस्मिन् काले पिता कन्यामददन् गर्ह्यः, ऋतुकालेऽगच्छन् भर्ता निन्द्यः। पतौ पुनर्मृते मातरमरक्षन् पुत्रो गर्हणीयः ।। ४ ।।

(९) **भारुचिः।** सर्वदा तत्संरक्षणमकुर्वन्तः कन्यादानादि च यथासम्भवं याप्याः वचनीयाः स्युः ।। ४ ।।

**सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।।**
**द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ।। ५ ।।**

(१) **मेधातिथिः। प्रसङ्गः** कुसंपर्कः । यया कदाचिदविज्ञातशीलया + + + + + ण बालेन वा गृहद्वारावस्थानादिनोज्ज्वलवेषपुरुषदर्शनशीलयेत्येवमादय उच्यन्ते। अर्थाच्चित्त-चलने + + + + + + + + क्ष्यत्वं चैषाम्। नैते किल साक्षाद्दोषरूपाः। न हि साक्षात्स्त्री-संपर्कः स्त्रियो दोषरूपाः + + + + + + + + + + सूक्ष्मादित्युच्यते। ततो **रक्ष्याः** निवारणीयाः। **विशेषतः** प्रयत्नेन निवारणे दारदः + + + + + + + + + + + + + + + + + + + + तश्च। सर्वैस्तत्कुलीनैर्भ्रातृपितृव्यदेवराद्यै रक्षितव्या इति सिद्धं भवति। न तत्रा + + + + + + + + + + + + + + + + ।। ५ ।।

(२) **सर्वज्ञनारायणः।** प्रसंगेभ्यः परपुरुषभाषणादिभ्यः ।। ५ ।।

(३) **कुल्लूकः।** स्वल्पेभ्योऽपि दुःसङ्गेभ्यो दौःशील्यसंपादकेभ्यो विशेषेण स्त्रियो रक्ष-णीयाः किं पुनर्महद्भ्यः। यस्मादुपेक्षितरक्षणाद् द्वयोः पितृभर्तृगणयोः संतापं दापयेयुः ।। ५ ।।

(४) **राघवानन्दः।** इतोऽपि स्त्रियो रक्ष्या इत्याह **सूक्ष्मेभ्य** इति। प्रसंगेभ्यः दौःशील्य-संपादकेभ्यो नृत्तगीतपरगृहयानादिभ्यः। कुलयोः पतिपितृसंबन्धिनोः। शोकं जारादि-दोषेण ।। ५ ।।

(५) **नन्दनः।** सूक्ष्मेभ्योऽपि शुश्रूषादिभ्योऽपि ।। ५ ।।

(६) **रामचन्द्रः।** प्रसंगेभ्यः दुःसंगेभ्यः ।। ५ ।।

(७) **मणिरामः।** प्रसंगेभ्यः दुःसंगेभ्यः ।। ५ ।।

(८) **गोविन्दराजः। सूक्ष्मेभ्य इति।** अल्पेभ्योऽपि दुःसम्पर्केभ्यो दुःशीलत्वसम्पादिभ्यो-ऽतिशयेन रक्षणीयाः। किमुत महद्भ्यो यस्मादरक्षिता सद्योऽभिचारोत्पत्त्या पितृभर्तृकुलयो-र्द्वयोरपि सन्तापं कुर्युः ।। ५ ।।

(९) **भारुचिः।** यतस्तद्दोषपरिहारार्थमेभिः। **सूक्ष्मेति।** सूक्ष्मप्रसङ्गाच्चासां व्यभि-चारहेतवो लोके प्रसिद्धाः। परिव्राजिकादिसंसर्गाख्याः अननुशिष्टा अपि ।। ५ ।।

**इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।।**
**यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ।। ६ ।।**

(१) **मेधातिथिः।** चातुर्वर्ण्यस्य एष उत्तमो + + + + + + + + + + + + **पश्यन्तो** जानानाः **दुर्बला अपि भर्तारो भार्यां रक्षितुं** यतेरन्प्रयत्नं कुर्युः। लिङर्थे भवन्ती। यत + + + + + + + + + + + + + + + वस्त्वनिजगुप्तीतमतरेयत्तत्र मणापरिवृत्तं

बहिराविरोद्धि जातं वधूवपुरहोरतयेऽतिरागात्। अ + + + + + + + + क्षाभाय कियंचिन्नियमेनवतिद्युमानाराजकुलमाश्रयादिना रक्षितव्या ।। ६ ।।

(२) **सर्वज्ञनारायणः**। इमं भार्यारिक्षणरूपम् ।। ६ ।।

(३) **कुल्लूकः**। सर्वेषां ब्राह्मणादिवर्णानां भार्यारक्षणलक्षणं धर्मं वक्ष्यमाणश्लोक-रीत्या सर्वधर्मेभ्य उत्कृष्टं जानन्तोऽन्धपङ्ग्वादयोऽपि भार्यां रक्षितुं यतेरन् ।। ६ ।।

(४) **राघवानन्दः**। अन्धपङ्गुक्लीबदरिद्रादिभिर्दुर्बलैरपि रक्षणीयास्ता इत्याह **इममिति। पश्यन्तो** जानन्तः। धर्मं उत्तमं तत्प्रसूतत्वाद्ब्राह्मण्याद्युत्तमत्रयस्य ।। ६ ।।

(५) **नन्दनः। इमं धर्मं** भार्यापरिरिक्षणलक्षणम् ।। ६ ।।

(६) **रामचन्द्रः**। इमं भार्यारिक्षणरूपं धर्मम् ।। ६ ।।

(७) **मणिरामः**। इमं धर्मं भार्यारिक्षणरूपं। उत्कृष्टं उत्तमं पश्यंतो जानंतः ।। ६ ।।

(८) **गोविन्दराजः। इममिति**। यस्मात्सर्वेषां ब्राह्मणादिवर्णानां भार्यारिक्षणं वक्ष्य-माणश्लोकनीत्या सर्वधर्मेभ्य उत्कृष्टं अतो भर्तारो दुर्बला अपि भार्यां रक्षितुं यत्नं कुर्युः। यतः 'स्त्रियो रक्ष्या'(९।६) इति पूर्वमेव (उक्तम्?) ।। ६ ।।

(९) **भारुचिः**। किं पुनरितरेतरच्च धर्मोत्तमत्वं स्त्रीरक्षणस्य यथा भवति तथेदम-धुनोच्यते सर्वार्थम् ।। ६ ।।

**स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।।**
**स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति ।। ७ ।।**

(१) **मेधातिथिः**। न केवलं शास्त्रोपदेशादेव स्त्रीरक्षा कर्तव्या, यावदिमानि बहूनि प्रयोजनानि। **प्रसूतिरपत्यं** पुत्रदुहितृलक्षणम्। संकरो न भवतीत्यर्थः। **चरित्रं** शिष्ट-समाचारः। **कुलं** पूर्वोक्तम्। कस्यापि सत्कुलस्य भ्रष्टशीलायां भार्यायां दोषः सर्वं कुल-मुपतिष्ठतीति– न साध्व्यः स्त्रिय एतेषामिति। अथवा पितृपितामहादीनां संततिशुद्धचभावा-दौर्ध्वदैहिकस्यानिवृत्ते रक्षा स्यात्। **आत्मानम्**। प्रसिद्धमुपपतिनाऽवश्यं हन्यते भार्ययैव वा विषादिना। **स्वं च धर्मम्**। व्यभिचारिण्या धर्मानधिकारात्। अतो जायां रक्षिता सर्व-मेतद्रक्षति ।। ७ ।।

(२) **सर्वज्ञनारायणः**। प्रसूतिं पुत्रादिं। चरित्रमाचारं। कुलं कुलस्थितिं। स्वधर्मं गार्हस्थ्यनियतम् ।। ७ ।।

(३) **कुल्लूकः**। यस्माद्भार्यां रक्षतो रक्षणमसंकीर्णविशुद्धापत्योत्पादनेन स्वसंततिं तथा शिष्टसमाचारं पितृपितामहाद्यन्वयमात्मानं विशुद्धसंताननिमित्तौर्ध्वदेहिकलाभेन स्वधर्मं च विशुद्धभार्यस्याधानादावप्यधिकाराद्रक्षति; तस्मात्स्त्रियो रक्षितुं यतेतेति पूर्वस्य विशेषः ।। ७ ।।

(४) **राघवानन्दः** । तद्रक्षणे अन्येऽपि सुरक्षिता इत्याह **स्वामिति** । प्रसूतिं सन्ततिं असंकीर्णविशुद्धापत्योत्पादनेन चरित्रं कुलपरंपरागतमाचारं न्यायोपात्तवित्तेन यच्चरितं श्राद्धातिथ्यादि तत्स्त्रीत एव कुलं इति आत्मानं विशुद्धसंतानोत्पत्तौ नरकादेः स्वधर्मं अग्निहोत्रादिधर्मं च रक्षतीत्यन्वयः ।। ७ ।।

(५) **नन्दनः** । प्रसूतिः सन्तानपरिवारादिः, चरित्रमाचारम् ।। ७ ।।

(६) **रामचन्द्रः** । चरित्रं आचारं । **स्वं धर्मं** आश्रमधर्मम् ।। ७ ।।

(७) **मणिरामः** । स्वां प्रसूतिं स्वसंततिं । चरित्रं शिष्टसमाचारं ।। ७ ।।

(८) **गोविन्दराजः** । **स्वामिति** । भार्यां यत्नतो रक्षन् स्वां सन्ततिं सङ्करानुत्पादनेन रक्षति । भार्यासंरक्षणे च तिष्ठन् समाचारं च रक्षति । पितृपितामहाद्यन्वयमात्मानं चासंकीर्णापत्यौर्ध्वदैहिककरणेषु रक्षति । स्वं धर्मं विशुद्धता (भा? )र्यस्याधानाद्यधिकाराद्रक्षति ।।७।।

(९) **भारुचिः** । स्वां प्रसूतिमपत्यशुद्धिं जायां रक्षन् हि रक्षति यथा तथैव चरित्रमाचारं भार्या संरक्षणीयेत्येवं कुलं च पूर्वपुरुषान् आत्मानं च प्रेतं सन्तमसंकीर्णापत्यपिण्डोदकक्रियया जीवन्तं चापत्यसङ्करपरिहारेण । तथा च स्मृत्यन्तरम्-"एभिरुपाः (?) कुले जाताः विद्याशीलसमन्विताः । सत्पुत्रशिष्यास्त्रायन्ते मातरं पितरं गुरुम् ।।" स्वं धर्मं, श्रौतं येनासङ्कीर्णापत्यस्याधानादिभिरधिकारः 'जातपुत्रो हि नादधीते'ति वचनात् । न चान्यजातमपत्यं भवति गौणं वा तदिति वक्ष्यामः ।। ७ ।।

**पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते ।।**
**जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ।। ८ ।।**

(१) **मेधातिथिः** । अर्थवादोऽयम् । न च पत्या पत्न्या उदरे प्रवेशदर्शनम् । अतः शरीरसारभूतशुक्रद्वारेण गुणवादतः प्रवेशोऽयमुच्यते । "आत्मा वै पुत्रनामासीति"— एतदेव जायाशब्दस्य भार्यावचनत्वे प्रवृत्तिनिमित्तम् । यतोऽस्यां **पतिर्जायते** । अपत्यजन्मनिमित्ते जायाशब्दे जारस्यापि जायोच्यते ।। ८ ।।

(२) **सर्वज्ञनारायणः** । पतिर्जायते शुक्रजननात् ।। ८ ।।

(३) **कुल्लूकः** । पतिः शुक्ररूपेण भार्यां संप्रविश्य गर्भमापाद्य तस्यां भार्यायां पुत्ररूपेण जायते । तथाच श्रुतिः (आश्व.गृ. सू. १।१५) 'आत्मा वै पुत्रनामासी'ति । जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुनर्जायते । तथा च **बह्वृचब्राह्मणं** 'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरं । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः ।।' ततश्चासौ रक्षणीयेत्येतदर्थं नामनिर्वचनम् ।। ८ ।।

(४) **राघवानन्दः** । जायापदं व्युत्पादयंस्तद्रक्षणेऽतीव यत्नमाविष्करोति **पतिरिति** द्वाभ्याम् । गर्भो भूत्वा तस्या आहुतेर्गर्भः संभवति । तथा 'पतिर्जायां प्रविशति गर्भो भूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते

पुन'रिति श्रुतेः ।। पतिः पतिरेतोऽवच्छिन्नं लिङ्गशरीरपरिवेष्टितं चैतन्यं भूतपञ्चकसहितं स्त्रीरजोयुक्तं गर्भपात(र्भता) मापद्यापत्यतया जायत इति । अत्र श्रुत्यन्तरम् (तै. २।६) 'सोऽकामयत जाया मे स्यादथ प्रजायेये'ति। तथा (बृ.उ.६।४।९) 'अङ्गादङ्गात्संभवसी'ति; तथा 'आत्मा वै जायते पुत्र' इत्यत्र चात्मपदं देहारम्भकभूतसाररेतःपरं, लिङ्गदेहात्मनोर-नादित्वेन जन्मासंभवात् ।। ८ ।।

(६) **रामचन्द्रः** । पतिः यस्मात् अस्यां जायायां पुनः जायते ।। ८ ।।

(७) **मणिरामः** । जायाया निरुक्तिमाह **पतिरिति** । संप्रविश्य शुक्ररूपेण ।। ८ ।।

(८) **गोविन्दराजः** । **पतिरिति** । भर्ता भार्यायां संप्रविश्य गर्भतामापद्येह जायते । एवञ्चाप्यक्षरवर्णसामान्यानि ब्रूयादिति तेन हेतुना जायाया जायात्वं पुनरसौ पुत्ररूपेणैवं चासौ रक्षणीयेत्येतदर्थं नामनिर्वचनम् ।। ८ ।।

(९) **भारुचिः** । नामधेयं च स्त्रियः संरक्षणार्थमर्थवादी कुर्वन्निदमाह वेदस्मृतिशास्त्र-न्यायविरोधश्चायमर्थवादो भार्यासंरक्षणार्थः । तथा च प्रकरणं–दृष्टश्चायं लोकप्रवाद-स्तत्संरक्षणार्थः ।। ८ ।।

**यादृशं भजते हि स्त्री सुतं सूते तथाविधम् ।।**
**तस्मात्प्रजाविशुद्धयर्थं स्त्रियं रक्षेत्प्रयत्नतः ।। ९ ।।**

(१) **मेधातिथिः** । "स्वां प्रसूतिमिति" (९।७) यदुक्तं तद्दर्शयति । न चैवं मन्तव्यं—यादृशं 'द्वितीयं पुरुषं सेवेत सुतं सूते पुत्रं जनयति तथाविधजातीयम्' । नापि गुणसादृश्यमभिप्रेतम् । यतः शूद्रादिजातस्य चण्डालादिजातित्वम् । समानजातीयजातस्यापि नैव तज्जातीयत्वं— "पत्नीष्वक्षतयोनिष्विति" वचनात् । गुणसादृश्येऽपि विशीलदरिद्र-पतिकाया उत्कृष्टपुरुषगमनमनुज्ञा स्यात् । यदा त्वयमर्थवादस्तदा यादृशं तथाविधमित्य-कुलानुरूपमिति नीयते ।। ९ ।।

(२) **सर्वज्ञनारायणः** । भजते संप्रयोगकाले न मनसा ध्यायति रक्षेन्मनोव्यभि-चारात् ।। ९ ।।

(३) **कुल्लूकः** । यस्माद्यादृशं पुरुषं शास्त्रेण विहितं प्रतिषिद्धं वा स्त्री भजते तादृश-शास्त्रोक्तपुरुषसेवनेनोत्कृष्टं निषिद्धपुरुषसेवनेन च निकृष्टं पुत्रं जनयति । तस्मादपत्यविशुद्धयर्थं पत्नीं यत्नतो रक्षेत् ।। ९ ।।

(४) **राघवानन्दः** । यादृशं शास्त्रविहितं निषिद्धं वा पतिं भजते तथाविधं तज्जातिमेव । नहि मनुष्याद्गौः शूद्राद्विप्रः । अतः प्रयत्नतः स्त्रियं रक्षेदित्यन्वयः ।। ९ ।।

(६) **रामचन्द्रः** । यादृशं पुरुषं स्त्री ऋतुस्नानकाले भजते मनसापि संगच्छेत तादृशं सुतं सूते जनयति, 'सू प्रस्रवणे' ।। ९ ।।

(७) **मणिरामः** । यादृशं पुरुषं शास्त्रे विहितं प्रतिषिद्धं वा । तथाविधं तादृशं सुतं सूते ।। ९ ।।

(८) **गोविन्दराजः। यादृशमिति।** यस्माद्यथाविधं पुरुषं यथा-चोदितं भर्तारं शास्त्र-निषिद्धं वा स्त्री सेवते तादृशं शास्त्रोक्तमेव तथोत्कृष्टं निषिद्धसेवनेन च निकृष्टं पुत्रं जनयति। तस्मादपत्यशुद्धचर्थं भार्यां यत्नतो रक्षेत् ।। ९ ।।

(९) **भारुचिः।** अपरो (ऽर्थ) वाद उच्यते । तत्संरक्षणाच्चापत्यशुद्धया सर्व-धर्माधिकारोऽत्यन्तोत्कर्षप्रयोजनो यस्मात् अतश्चायमुक्तो मुहुर्मुहुरादरेण तत्संरक्षणे ।। ९ ।।

**न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।।**
**एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ।। १० ।।**

(१) **मेधातिथिः।** वक्ष्यमाणोपायप्रशंसार्थः श्लोकः। **प्रसह्य** बलेनावष्टभ्य शुद्धान्ताव-रोधादिना परपुरुषादिनिष्कासनादिना न शक्या **रक्षितुम्**। किंत्वे**तैरुपाययोगैः शक्याः**। 'योगाः' प्रयोगाः। 'उपायैः' प्रयुज्यमानैरित्यर्थः ।। १० ।।

(२) **सर्वज्ञनारायणः।** प्रसह्य बलात्। एतैर्वक्ष्यमाणैः ।। १० ।।

(३) **कुल्लूकः।** कथं रक्षणीयेत्यत आह **नेति।** कश्चिद्बलात्संरोधादिनापि स्त्रियो रक्षितुं न शक्तस्तत्रापि व्यभिचारदर्शनात्; किंत्वेतैर्वक्ष्यमाणै रक्षणोपायप्रयोगैस्ता रक्षयितुं शक्याः ।। १० ।।

(४) **राघवानन्दः।** उपायाभावात्तद्रक्षणमशक्यमित्याशङ्क्याशक्यत्वं स्वीकुर्वन्निवोपाय-माह **नेति** द्वाभ्याम्। प्रसह्य बलात्। एतैः औत्तरैः संग्रहणाद्यैः ।। १० ।।

(५) **नन्दनः।** प्रसह्य परिरक्षितुमाप्तपुरुषादिभिर्गृहाभ्यन्तरनिरोधनादिना रक्षितु-मेतैर्वक्ष्यमाणैः ।। १० ।।

(६) **रामचन्द्रः।** एतैः वक्ष्यमाणैरुपाययोगैः तु शक्याः ताः परिरक्षितुम् ।। १० ।।

(७) **मणिरामः।** एतैः वक्ष्यमाणैः ।। १० ।।

(८) **गोविन्दराजः।** एवं रक्षणीयमुपदिष्टे कथं रक्ष्या इत्यत आह **न कश्चिदिति।** न कश्चिद्बलादन्त (रनि) रोधादिना स्त्रियो रक्षितुं (पारयति?) अनयोर्मनोव्यभिचार-त्वेऽरक्ष्यत्वाद् वक्ष्यमाणै रक्षणोपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ।। १० ।।

(९) **भारुचिः।** पूर्वापरविरोधः शास्त्रे न न्याय्यः भिन्नप्रकरणेऽपि, किं पुनरेकप्रकरणे। यत एव '........ द्योषितः शक्याः प्रसह्य परिरक्षितुमि'तीदं वक्ष्यमाणोपायस्तुत्यर्थम्। एवं च पूर्वं स्त्रीसंरक्षणोपदेशो न विरुध्यते ।। १० ।।

**अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।।**
**शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ।। ११ ।।**

(१) **मेधातिथिः।** **अर्थो** धनम्, तस्य **संग्रहः** संख्यादिना परिच्छिद्य रक्षार्थं वेश्मनि निधानं रज्ज्वायसबन्धादिना संयम्य मुद्राङ्कमित्येवमादि। **व्ययो** विसर्गस्तस्यैव—इदमेता-

वद्भक्तार्थमिदं च सूपार्थमेतावच्छाकार्थमिति। **शौचं** दर्वीपिठरादिशुद्धिर्भूमिलेपनादिश्च। **धर्मे** आचमनोदकतर्पणादिदानं स्त्रीवासगृहकादौ बलिकुसुमविकारैर्देवार्चनम्। **अन्नपक्तिः** प्रसिद्धा। **पारिणाह्यं** यस्यासंदीखट्वादि। तत्प्रत्यवेक्षणे नियोक्तव्या ॥ ११ ॥

(२) **सर्वज्ञनारायणः**। शौचे गृहादिशोधने। धर्मे सायंबलिदानादौ। अन्नपक्त्या-मन्नपाके। पारिणह्यमौपासनाग्नेः। पारीणह्य इति पाठे पारिणाहो गृहबन्धहेतुः, स एव पारिणाह्यो गृहपरिकरस्तस्य तद्भाण्डादेरित्यर्थः ॥ ११ ॥

(३) **कुल्लूकः**। तानुपायानाह **अर्थेति**। धनस्य संग्रहणे विनियोगे च द्रव्यशरीरशुद्धौ भर्त्रग्निशुश्रूषादिकेऽन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणे एनां नियोजयेत् वेक्षणे अवस्य आदिलोपः ॥ ११ ॥

(४) **राघवानन्दः**। अर्थस्य संग्रहणे रक्षणे व्यये शास्त्राविरुद्धे शौचे द्रव्यशरीरादेः धर्मे आतिथ्यादिके अन्नपक्त्यां तत्पाके पारिणाह्यस्य गृहोपस्करणस्य शय्यासनकुण्डकटाहादेः ईक्षणे एतां स्त्रियं नियोजयेदित्यन्वयः। एतेषु परं व्यग्रचित्तायाः परपुरुषाद्यभिलाषानुत्पत्तेः। 'स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः। तेन नारद नारीणां सतीत्वमुपजायते।" इति **पञ्चचूडो**क्तेः ॥ ११ ॥

(५) **नन्दनः**। तानेवोपाययोगान्दर्शयति **अर्थस्य संग्रहे चैनामिति**। परितो नह्यत इति परिणह्यं, तत्र भवं पारिणाह्यमासनशयनादिकं अर्थसंग्रहणादिषु नियुक्ताः स्त्रियस्तदधि-कारभ्रंशभयादात्मनाऽऽरक्षन्तीत्यभिप्रायः ॥ ११ ॥

(६) **रामचन्द्रः**। एनां स्त्रियं अर्थस्य संग्रहे नियोजयेत्, व्यये शौचे गृहशौचधनादौ धर्मे सायंबलिदानादौ च पुनः अन्नपक्त्यां गृहस्य भाण्डादे; उपस्करस्य पारिणाह्य औपा [स]-नाग्नेः एतेषां अवेक्षणे नियोजयेत् ॥ ११ ॥

(७) **मणिरामः**। एनां स्त्रियं। शौचे धर्मे द्रव्यशरीरशुश्रूषादिके। अनुपक्त्यां पाके। पारिणाह्यस्य च गृहोपस्करणस्य शय्यासनभूषणादेश्च वेक्षणे अवेक्षणे नियोजयेत् ॥ ११ ॥

(८) **गोविन्दराजः**। तानुपायानाह **अर्थस्येति**। धनावस्थानविनियोगयोस्तथा द्रव्य-शरीरशुद्धौ शौचे धर्मे च शयनासनादिषु प्रतिजागरणे एवञ्च तद्व्यापृतमना श्रान्ता स्वपिति संयोगं न स्मरति ॥ ११ ॥

(९) **भारुचिः**। के पुनस्तद्रक्षणोपायाः? यतस्तान् दर्शयति पारिणह्यमासनशयनाव-धानास्तरणादि। 'पत्नी परिणह्यस्येष्ट' इति श्रुतेः ॥ ११ ॥

**अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ॥**
**आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२ ॥**

(१) **मेधातिथिः**। आप्तं प्राप्तं काले तं कुर्वन्त्य**आप्तकारिणो**ऽवधानवन्त उच्यन्ते शुद्धान्ता-धिकारिणः। कञ्चुकिनः। तैः स्वे गृहे **रुद्धा**श्चास्वतन्त्रीकृता यथेष्टविहारनिषेधेन रक्ष्यमाणा

न रक्षिता भवन्ति, किंत्वात्मनाऽऽत्मानं रक्षन्ति। ताः कथं रक्षन्ति ? यद्येतेषु कार्येषु नियुज्यन्ते ।। १२ ।।

(२) **सर्वज्ञनारायणः।** निरोधं कृत्वा या रक्ष्यन्ते ता अरक्षिताः। आप्तकारिभिः यथार्थकारिभिः ।। १२ ।।

(३) **कुल्लूकः।** आप्ताश्च ते आज्ञाकारिणश्च तैः पुरुषैर्गृहे रुद्धा अप्यरक्षिता भवन्ति या दुःशीलतया नात्मानं रक्षन्ति। यास्तु धर्मज्ञतयाऽऽत्मानमात्मना रक्षन्ति ता एव सुरक्षिता भवन्ति। अतो धर्माधर्मफलस्वर्गनरकप्राप्त्याद्युपदेशेनासां संयमः कार्य इति मुख्यरक्षणोपाय-कथनपरमिदम् ।। १२ ।।

(४) **राघवानन्दः।** एतैरपि तद्रक्षणाशंक्ति स्वीकुर्वन्निव तास्वेव रक्षणधुरं निक्षिपति **अरक्षिता इति।** आप्तकारिभिः आप्ताश्च ते कार्यकारिणश्च तैः रक्षिता अपि अरक्षिता इति स्वयं रक्षिताश्चेदात्मानं प्रति सुरक्षिता एवेति भावः ।। १२ ।।

(५) **नन्दनः।** एष एवोपाययोगो नतु बलात्कार इत्याह **अरक्षिता इति।** गृहे रुद्धा गृहान्तरे गुप्ता अरक्षिता भवन्ति, रक्षिता न भवन्तीत्यर्थः ।। १२ ।।

(७) **मणिरामः।** याः स्त्रियः आप्तकारिभिः पुरुषैः गृहे रुद्धा अपि अरक्षिता भवंति ताः दुःशीलाः ज्ञातव्याः। यास्तु आत्मना आत्मानं रक्षेयुस्ताः सुरक्षिताः, सुशीला ज्ञातव्या इत्यर्थः। अतो धर्माधर्मफलस्वर्गनरकप्राप्त्याद्युपदेशेन आसां संयमः कार्य इति मुख्यरक्षणो-पायकथनमिदं ज्ञेयं ।। १२ ।।

(८) **गोविन्दराजः। अरक्षिता** इति। ता अपि अरक्षिता एव मनोव्यभिचारसंभवाद्याः पुनरात्मनैवात्मानं संयमाश्रयेण रक्षत एव सुष्ठुमना (समा?)चारेण संयमाधान आसां यत्नः कार्यः। इति प्रधानसंरक्षणोपायोपदेशः ।। १२ ।।

(९) **भारुचिः।** अनन्तरश्लोकोक्तेन चोल्प(न्ना एता) आत्मानमात्मना रक्षन्ति। तस्मात् तत्स्तुतिपरमेवेदं न तु गृहोपरोधात्परपुरुषौपग्रहक्षणस्त्री(रक्षण) हेत्वोरयं प्रतिषेधः सामर्थ्यात् प्रकरणाच्चेति। अथवा नारीसन्दूषणपरिवर्जनस्तुतिपरमेतत् 'आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः' इति ।। १२ ।।

**पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।।**
**स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ।। १३ ।।**

(१) **मेधातिथिः। अटनमापणभूमिषु** अन्नशाकादिक्रयार्थम् देवतायतनेषु च। ज्ञाति-कुले बहूनि दिनान्यवस्थानम् **अन्यगेहवासः। नारीसंदूषणानि। स्त्रीणामेते** चित्तसंक्षोभहेतवः। एता हि श्वशुरादिभयं जनापवादभयं च त्यजन्ति ।। १३ ।।

(२) **सर्वज्ञनारायणः।** पानं मद्यस्य। दुर्जनैरसतीभिः संसर्गं। अटनमितस्ततो भ्रमणं। स्वप्नः सातत्येन। तेन हि जागरादौ बुद्धिविपरिवर्तते ।। १३ ।।

(३) **कुल्लूकः ।** मद्यपानम्, असत्पुरुषसंसर्गः, भर्त्रा सह विरहः, इतस्ततश्च भ्रमणं, अकालस्वापः, परगृहनिवास इत्येतानि षट् स्त्रिया व्यभिचाराख्यदोषजनकानि तस्मादेतेभ्य एता रक्षणीयाः ।। १३ ।।

(४) **राघवानन्दः ।** ताभिरपि स्वरक्षणार्थं पानादिषट्कं वर्जनीयमित्याह **पानमिति ।** पानं मद्यादेः । दुर्जनसंसर्गः पारदारिकसंसर्गः । पतिदेशात्स्थानान्तरावस्थानेन शयनादिना वियोगो विरहः । अटनं परगृहादौ । स्वप्नोऽकाले अहनि वा ।। १३ ।।

(५) **नन्दनः ।** तस्मात्पानादिभ्यः स्त्रियो रक्ष्या इत्यभिप्रायः ।। १३ ।।

(६) **रामचन्द्रः ।** यानं उत्सवादिदर्शननिमित्तं गमनं, दुर्जनसंसर्गः व्यभिचारिणीसंसर्गः, पत्या विरहः भर्तृविरहः, अटनं परिभ्रमणं, स्वप्नः शयनं, अन्यगेहवासः; एतानि षट् नारीणां दूषणानि ।। १३ ।।

(७) **मणिरामः ।** पानं मद्यपानं, अटनं इतस्ततो भ्रमणं, स्वप्नः अकालस्वापः ।। १३ ।।

(८) **गोविन्दराजः ।** **पानमिति ।** मद्यपानदुर्जनसंसर्गोऽसत्पुरुषेण सहाधिवासः, भर्तृ-वियोगः, इतरगृहे वासः सर्वथैव नारीणां (?) इत्येतानि षट् दूषणानि साधुप्रकृतेरपि नार्याः व्यभिचाराख्यदोषजननानि; तस्मादेभ्य एताः परिरक्षणीयाः ।। १३ ।।

(९) **भारुचिः ।** यतस्तत्परिवर्जनार्थं तानि दर्शयति– परिवर्जनार्थ एषामुपदेशस्त-त्पुरुषाणाम् । यतश्च पानादिव्यभिचारकरणेषु वर्तमानाः ।। १३ ।।

**नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।।**
**सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ।। १४ ।।**

(१) **मेधातिथिः ।** नायमभिमानो वोढव्यः––सुभगः स्वाकृतिस्तरुणोऽहं **मां** हित्वा कथमन्यं कामयिष्यते ? यतो नैता दर्शनीयोऽयं शूराकृतिरयमित्येव विचारयन्ति । **पुमानयमित्येतावतैव भुञ्जते** संयुज्यन्ते तेन ।। १४ ।।

(२) **सर्वज्ञनारायणः ।** संस्थितिर्व्यवस्थितिः ।। १४ ।।

(३) **कुल्लूकः ।** नैताः कमनीयरूपं विचारयन्ति, नचासां यौवनादिके वयस्यादरो भवति, किन्तु सुरूपं कुरूपं वा पुमानित्येतावतैव तमुपभुञ्जते ।। १४ ।।

(४) **राघवानन्दः ।** ताभिः परपुरुषालोकनमपि न कार्यमित्याह **नैता इति ।** रूपमङ्ग-सौष्ठवम्, वयः पञ्चविंशतिवर्षादि पुंसः । आसां च षोडशवर्षादि । तत्र हेतुः **पुमानिति ।** भुञ्जते भोगायाभिमुखाः स्युः ।। १४ ।।

(५) **नन्दनः ।** स्त्रीणां दुःस्वभावमवश्यं रक्षणार्थमष्टभिः श्लोकैराह **नैता इति ।** रूपं पुंसः कान्तिः ।। १४ ।।

(६) **रामचन्द्रः ।** एताः स्त्रियः रूपं न परीक्षन्ते ।। १४ ।।

(८) **गोविन्दराजः। नैता** इति। नैता सुरूपकुरूपविचारं कुर्वन्ति। न ह्यासां यौवनवान् पुरुषश्च प्रियो भवति। अपि तु सुरूपं वा विरूपं वा पुमानित्येतावतैव ताः नरमुपभुञ्जन्ते। अपि च पुंमात्रदर्शनेन धैर्यचलनायासां (?) ताः पुंश्चल्यः ।। १४ ।।

(९) **भारुचिः।** एतास्ववस्थासु वर्तमाना विसंज्ञास्सत्यः यतः पावनादीन् वर्जयेयुः ।। १४ ।।

**पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ॥**
**रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ।। १५ ॥**

(१) **मेधातिथिः।** यस्मिन्कस्मिंश्च पुंसि दृष्टे धैर्याच्चिलनं—कथमनेन संप्रयुज्येयेति चेतसो विकारः स्त्रीणां—**तत्पौंश्चल्यम्।** अन्यत्रापि धर्मादौ कार्येऽस्थिरता **चलचित्तत्वम्।** य एव द्वेष्यः स एव स्पृह्यत इति भ्रातृपुत्रादिर्यो दृष्टस्तस्मा एव कामुकत्वेन स्पृहयन्ति। स्नेहो रागस्तृष्णा च भर्तरि पुत्रादौ मानविरुद्धहृदया भवन्ति। एतैर्दोषैर्योगाद्**विकुर्वते** विक्रियां भर्तृषु गच्छन्ति तस्मात् ।। १५ ।।

(२) **सर्वज्ञनारायणः।** पौंश्चल्यात्पुरुषेच्छुत्वात् चालचित्त्यात् अस्थिरबुद्धित्वात्।।१५।।

(३) **कुल्लूकः।** पुंसो दर्शने संभोगाद्यभिलाषशीलत्वाच्चित्तस्थैर्याभावात्स्वभावतः स्नेहरहितत्वाच्चैता यत्नेनापि लोके रक्षिताः सत्यो व्यभिचाराश्रयणेन भर्तृषु विक्रियां गच्छन्ति ।। १५ ।।

(४) **राघवानन्दः।** किंच विश्वासश्च न कर्तव्यः स्त्रीषु राजकुलेषु चे'ति न्यायेन स्वरक्षणीया इति स्मारयन्नाह **पौंश्चल्याच्चेति।** पुंमात्रदर्शनेन मैथुनेच्छुत्वं तद्गतचित्तत्वनिःस्नेहत्वानां स्वभावत्वात्। ननु मात्रादिशिक्षिताम् अहो पापीयसी सृष्टिरित्याह **भर्तृष्विति।** पुरुषान्तराभिलाषितया विकुर्वते मारणादिविक्रियां कुर्वते ।। १५ ।।

(५) **नन्दनः।** पुंसश्चलन्तीति पुंश्चल्यः, तद्भावः पौंश्चल्यं, परिचितपुंसः परित्यज्य नूतनं भजन्त इति यावत्। पौंश्चल्यादिति प्रत्येकं संबध्यते ।। १५ ।।

(६) **रामचन्द्रः।** पौंश्चल्यात् पुंश्चल्या भावः पौंश्चल्यं, तस्माच्चलचित्तस्य भावः चालचैत्यं, तस्मात् चालचैत्यात् निःस्नेहस्वभावः नैःस्नेह्यं तस्माद्ध्येतस्मात्स्वभावतः ।। १५ ।।

(७) **मणिरामः।** विकुर्वते व्यभिचाराश्रयणेन भर्तृषु विक्रियां गच्छन्ति ।। १५ ।।

(८) **गोविन्दराजः। पौंश्चल्यादिति।** पुंश्चल्याः चलचित्तत्वात् स्वभावेनैव स्नेहाभावात् एताः यत्नेन रक्षिता अपि (अ) सत्योक्त्यभिचाराश्रयेण भर्तृषु विक्रियां गच्छन्ति ।।१५।।

(९) **भारुचिः।** आसु पानाद्यवस्थासु। अतो न पूर्वविश्वासात् पानादिषूपेक्ष्याः ।।१५।।

**एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् ॥**
**परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥ १६ ॥**

(१) **मेधातिथिः** । प्रजापतिर्हिरण्यगर्भस्तदीये निसर्गे उत्पत्तिकाले जातम् । शिष्टं स्पष्टम् ॥ १६ ॥

(२) **सर्वज्ञनारायणः** । प्रजापतिनिसर्गः प्रजापतिना तादृक्स्वभावस्य दानम् ॥ १६ ॥

(३) **कुल्लूकः** । एवं श्लोकद्वयोक्तमासां स्वभावं हिरण्यगर्भसृष्टिकालजनितं ज्ञात्वा रक्षणार्थं प्रकृष्टं यत्नं पुरुषः कुर्यात् ॥ १६ ॥

(४) **राघवानन्दः** । अतस्ता रक्षणीया इत्याह **एवमिति** । प्रजापतिनिसर्गजं प्रजापति-सृष्टिकालीनमनादिम् । अतस्तासां रक्षणप्रतियत्नमातिष्ठेदित्यन्वयः ॥ १६ ॥

(५) **नन्दनः** । प्रजापतिनिसर्गजं स्वायंभुवमनुप्राणजातम् ॥ १६ ॥

(६) **रामचन्द्रः** । आसां स्त्रीणाम्, निसर्गजं विधातृसृष्टिकम् ॥ १६ ॥

(७) **मणिरामः** । प्रजापतिनिसर्गजं सृष्टिकालजनितं स्वभावं ॥ १६ ॥

(८) **गोविन्दराजः** । **एवमिति** । एवं श्लोकद्वयं दौःशील्याच्चलचित्तत्वोक्तरूपमासां स्वभावं हिरण्यगर्भसृष्टिकाले जनितं ज्ञात्वा रक्षायां यत्नेन (यत्नः?) पुरुषेण कार्यम् (कार्यः?) ॥ १६ ॥

(९) **भारुचिः** । व्यभिचारात्मकत्वमासां स्वभावतः । अतस्तं विदित्वा नित्यमेता रक्ष्याः । न विश्वासादुपेक्षणीयाः गृहीतविनया इति कृत्वा ॥ १६ ॥

**शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ॥**
**द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥ १७ ॥**

(१) **मेधातिथिः** । **शय्या** शयनं स्वप्नशीलत्वम् । **आसनम**नभ्युत्थानशीलता । **अलङ्कारः** शरीरमण्डनम् । **कामं** पुरुषोपभोगस्पृहा । **क्रोधो** द्वेष. । **अनार्यता** स्निग्धेऽपि द्वेषो द्विष्टेऽपि स्नेहः, आकारसंवरणं, निर्धर्मता । **द्रोग्धृभावः** । द्रोग्धृत्वं भर्तृपित्रादेः । द्रुहेः कर्तरि तृचा भावशब्देन समासः । **कुचर्या** नीचपुरुषसेवनम् । एष स्वभावः स्त्रीणां मनुना सर्गादौ कल्पितः । शय्यासनालङ्कारा द्रोहकुचर्ययोर्दृष्टान्तत्वेनोपादीयन्ते । यथैते पदार्थाः स्वभावभूता अविचा-लिता एवं कुचर्यादयोऽपि ॥ १७ ॥

(२) **सर्वज्ञनारायणः** । शय्यां उत्तमशयनम् । आसनं सततोपवेशनम् । अलङ्कार-मलंक्रियाम् । अनार्यतामनृजुताम् । द्रोहभावं हिंसात्वम् । कुचर्यामसदाचारम् । मनुर-कल्पयदिति प्रजापतिनिसर्गविवरणम् ॥ १७ ॥

(३) **कुल्लूकः** । शयनोपवेशनालङ्करणशीलत्वं कामक्रोधानार्जवपरहिंसाकुत्सिताचार-त्वानि सर्गादौ मनुः स्त्रीभ्यः कल्पितवान् । तस्माद्यत्नतो रक्षणीयाः ॥ १७ ॥

(३) **कुल्लूकः।** वेनकालात्प्रभृति यो मृतभर्तृकादिस्त्रियं शास्त्रार्थाज्ञानादपत्यनिमित्तं देवरादौ नियोजयति तं साधवो नियतं गर्हयन्ते। अयं च स्वोक्तनियोगनिषेधः कलियुगविषयः। तदाह **बृहस्पतिः** 'उक्तो नियोगो मुनिना निषिद्धः स्वयमेव तु। युगक्रमादशक्योऽयं कर्तुमन्यैर्विधानतः। तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता। अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः। न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनैः॥' अतो **यद्गोविन्दराजेन** युगविशेषव्यवस्थामज्ञात्वा सर्वदैव संतानाभावे नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितं तन्मुनिव्याख्याविरोधान्नाद्रियामहे। 'प्रायशो मनुवाक्येषु मुनिव्याख्यानमेव हि। नापराध्योऽस्मि विदुषां क्वाहं सर्वविदः कुधीः'॥६८॥

(४) **राघवानन्दः।** ततः किं तत्राह **तदेति।** प्रमीतपतिकां प्रमीतो हिंसितः पतिर्यस्यास्तां, पुत्रवतीमिति शेषः। यो नियोजयत्यपत्यार्थेऽपत्योत्पादनाय तं गर्हयन्तीत्यन्वयः। अपत्यार्थे विद्यमानपुत्रे सतीति। एषु वेदनश्रुत्यनुरोधेन 'यस्या म्रियेत' इत्युत्तरस्वरसात् 'सकृत्प्रदीयते कन्या' इत्यादिवचनबलात्पुनर्विवाहो निषिद्धो नत्वपत्यार्थे नियोग इति। यत्तु **बृहस्पतिः** "उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युगक्रमादशक्योऽयं कर्तुमन्यैर्विधानतः। तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता। अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः। न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनै" रिति। तदन्यथा सिद्धं; निषेधस्य पुनर्विवाहविषयत्वात्। पुत्रप्रयोजना भार्येति तात्पर्यम्। शास्त्रतात्पर्यादग्नीषोमीयपशोरिव क्वचिदननुष्ठानस्य शास्त्रासंकोचकत्वाद्धोलाकाद्यननुष्ठानवदेकमुत्पादयेत्। **पुत्रमिति।** नियोगविधेः प्राधान्येनार्थवादस्य 'न हिंस्यात्सर्वा भूतानी'तिवत्। स्तनाद्युपमर्दरागनिवर्तनेऽन्यथासिद्धे**र्गोविन्दराज**व्याख्या गरीयसी। अन्यथा संतानक्षतेर्दोषापत्तिः। यत्तु 'अग्निहोत्रं गवालंभं संन्यासं पलपैतृकम्। देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जये' दिति;—तदनमूलम्; समूलत्वे वा लाभाख्यात्यादिरागिणां निवृत्तितात्पर्यकम्। अन्यथा 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्।' 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिश्रुतिविरोधश्चेति दिक्। अत एव **मेधातिथि**र्देवराद्वेत्यादि साधव इत्यन्ते ग्रन्थे षोडशिग्रहणादिवद्विकल्पः। नियोगतदभावयोः पित्राद्युद्धरणफलं गन्तुश्च परमोपकारः तदाप्रभृत्ययं श्लोकोऽर्थवाद एवेति॥ ६८॥

(५) **नन्दनः।** नियोगनिन्दा च तदाप्रभृत्येवासीदित्याह **तदाप्रभृतीति।** सप्रकारः सापवादश्च नियोगः पुनरेव प्रतिषिद्धः। तत्र मनोरयमभिप्राय इति **बृहस्पतिना** व्याख्यातं नियोगमुक्त्वा **मनुना** निषिद्धः स्वयमेव तु। युगह्रासादशक्योऽयं कर्तुमन्यैर्विधानतः। तपोज्ञानसमायुक्ताः कृते त्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता। अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः। न शक्यन्तेऽधुना कर्तुं शक्तिहीनैरिदंतनै'रिति॥६८॥

(६) **रामचन्द्रः।** मृतभर्तृकां प्रत्याह **तदेति।** प्रमीतपतिकां मृतभर्तृकाम्॥ ६८॥

(७) **मणिरामः।** अयं च निषेधः कलियुगविषयः। तदाह **बृहस्पतिः** 'उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युगक्रमादशक्योऽयं कर्तुमन्यैर्विधानतः। तपोज्ञान-

समायुक्ताः कृतत्रेतायुगे नराः । द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता । अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः । न शक्यंतेऽधुना कर्तुं शक्तिहीनैरिदंतनैरिति ।। ६८ ।।

(८) **गोविन्दराजः** । तदाप्रभृतीति । एवं चेदानींतनत्वादमुष्याचारस्य तस्माद्वेनकालात्प्रभृति यो मृतभर्तृकां स्त्रियं सम्यक्शास्त्रविगर्हिते एवं च विहितप्रतिषेधत्वान्नियोगस्य कालसूत्रनियोक्तॄणां निन्दाश्रवणं स्त्रीधर्मेषु ।। ६८ ।।

(९) **भारुचिः** । इमे नियोगप्रतिषेधार्थाः सपुराकल्पाः पञ्च श्लोकाः । उक्तप्रतिषिद्धत्वाच्च नियोगस्य विकल्पः, अनयोस्तु स्मृत्योः कतरा ज्यायसीति । किन्न एतेन शक्यते तदेवं वक्तुम् उभयत्राभ्युदयः यो नैकत्रापत्यमन्यत्र संयमः, उभयं च विशेषतः संस्कृतो यतो नियोगोऽभ्युदयाय । न हिं मृतस्य जीवतो वा पत्युर्नियोक्तुः काचिदिन्द्रियप्रीतिरस्ति । नापि पित्रादीनां विधानसामर्थ्याच्च पित्रादीनामपि योगाभ्युदयायेति गम्यते । प्रतिषेधोपदेशसामर्थ्याच्चानियोगेऽप्यनत्ययः । विधवानियोगसाम्याच्च तत्प्रकरण एवायं कन्यानियोगः शिष्यते ।। ६८ ।।

**यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।।**
**तामनेन विधानेन निजो विन्देत देवरः ।। ६९ ।।**

(१) **मेधातिथिः** । नियोगरूपत्वात्कन्यागतोऽयं धर्म उच्यते । **वाचा सत्ये कृते** वाग्दाने निवृत्ते एकेन दत्ताऽपरेणाप्रतिगृहीता । **तामनेन** वक्ष्यमाणेन **विधानेन निजः** सोदरो **देवरः विन्देत** विवाहयेत् ।। ६९ ।।

(२) **सर्वज्ञनारायणः** । सर्वदैव कथं पुनर्देवरोपगमस्मृतीनां व्यवस्थेत्यत आह **यस्या इति** । वाग्दत्ताविषयमेव, परिणीतविषयतैव तद्भ्रान्तेर्गृहीतमित्यर्थः । वाचा सत्यवचनेन सत्यं मया दातव्येयमिति सत्याङ्गीकार इत्यर्थः । अनेन विधानेन विवाहविधिना निजः पतिसोदरो देवरो विन्देत ।। ६९ ।।

(३) **कुल्लूकः** । नियोगप्रकरणत्वात्कन्यागतं विशेषमाह **यस्या इति** । यस्याः कन्याया वाग्दाने कृते सति भर्ता म्रियते तामनेन वक्ष्यमाणेनानुष्ठानेन भर्तुः सोदरभ्राता परिणयेत् ।। ६९ ।।

(४) **राघवानन्दः** । अत एव वाग्दत्ता विधितो देवरैव ग्राह्यत्वमाह **यस्या** इति द्वाभ्याम् । सत्ये कृते वा अमुकस्य पौत्रायामुकस्य पौत्रीमित्यादिवंशमुच्चार्येमां दातुं **प्रतिजान** इति । प्रतिश्रुतेऽनेन वक्ष्यमाणेन विधिना ।। ६९ ।।

(५) **नन्दनः** । अथ वाग्दत्तायां पत्यौ मृते कर्तव्यं श्लोकद्वयेनाह **यस्या म्रियेतेति** । अनेन वक्ष्यमाणेन निजः पत्युस्सोदरः ।। ६९ ।।

(६) **रामचन्द्रः** । वाग्दानदत्तां प्रत्याह **यस्येति** । अनेन विधानेन विवाहविधानेन निजो देवरः विन्देत विवाहयेत् ।। ६९ ।।

(७) **मणिरामः।** कन्यागतं विशेषमाह **यस्या इति**। वाचा सत्ये कृते वाग्दाने कृते सति अनेन वक्ष्यमाणेन निजः देवरः विंदेत परिणयेत् ।। ६९ ।।

(८) **गोविन्दराजः।** नियोगप्रकारकत्वात्कन्यागतमिदमाह **यस्या** इति। वाग्दत्तायाः कन्यायाः भर्ता म्रियेत तामनेन विधिना भर्तुः सोदर्यो भ्राता उद्वहेत् ।। ६९ ।।

(९) **भारुचिः।** विधानं विधिर्विवाहो यथोक्तः 'विन्देते'ति वचनात् इतरथा ह्यनूढामुपगच्छतः कन्यादूषणमुपपातकं स्यात् नियमार्थश्चैवमारम्भः। एतस्मादेव च लिङ्गात् प्राग्विवाहात् वाक्प्रदानमस्ति यस्मिन्निवृत्ते मृते भर्तरि साऽन्यस्मै दीयते ।। ६९ ।।

**यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।।**
**मिथो भजेताऽऽप्रसवात्सकृत्सकृदृतावृतौ ।। ७० ।।**

(१) **मेधातिथिः। यथाविधि** यथाशास्त्रं वैवाह्यो विधिस्तथा विवाह्य। वाचनिकोऽयं विवाहः। पुनर्भूश्च तथोच्यते। नवा व्यूढाऽपि सती भार्या भवति। केवलं परार्थोऽस्या वाचनिको विवाहः। तथा च दर्शयति (९।१७१) "न दत्वा कस्यचित्कन्यां पुनरन्यस्य दीयते" **न इति।** नासौ देवराय दीयत इत्यर्थः। अदत्ता चास्वभूता कथमिव भार्या भवेत्? **शुक्लवस्त्राम्।** नियमो गमने। अन्यस्मिन्नपि नियोगे धर्मोऽयमिष्यते ।। ७० ।।

(२) **सर्वज्ञनारायणः।** शुक्लवस्त्रां न रक्तवस्त्राम्। शुचिव्रतां सच्चरित्रवतीम्। आ प्रसवात् प्रसवानन्तरं निवर्तेत। एतदपत्यं क्षेत्रिण एव तदपेक्षया च क्षेत्रिणोऽपत्यं देवराज्जात इति स्मृतिषूच्यत इति समुदायार्थः ।। ७० ।।

(३) **कुल्लूकः। स** देवरो विवाहविधिनैनां स्वीकृत्य शुक्लवस्त्रां कायवाङ्मनःशौचशालिनीमा गर्भग्रहणाद्रहसि ऋतावृतावेकैकवारं गच्छेत्। एवं कन्याया नियोगप्रकारत्वाद्विवाहस्याग्रहाच्च गमनोपदेशाद्यस्मै वाग्दत्ता तस्यैव तदपत्यं भवति ।। ७० ।।

(४) **राघवानन्दः।** यथाविधि विवाहविधिमनतिक्रम्य। शुचिव्रतां कायवाङ्मनोभिरनन्यपराम्। मिथो भजेतां ऋतावृतौ मैथुनेनेति शेषः। आ प्रसवादिति लिङ्गादपत्यं यस्मै वाग्दत्ता तस्यैव न पुनर्देवरस्येति। ततः परं न गम्या सेति भावः ।। ७० ।।

(५) **नन्दनः। अधिगम्य** उद्वह्य ।। ७० ।।

(६) **रामचन्द्रः। शुचिव्रतां** सुचरिताम् ।। ७० ।।

(७) **मणिरामः।** शुचिव्रतां कायवाङ्मनःशौचशालिनीं। यस्मै वाग्दत्ता तस्यैव तदपत्यं नोत्पादकस्येति ज्ञापनार्थमत्रोक्तिः ।। ७० ।।

(८) **गोविन्दराजः। यथेति।** स देवरो विवाहविधिना एतां स्वीकृत्य शुक्लवस्त्रां वाक्कायसंयुतां रहस्याऽऽगर्भग्रहणात्प्रभृति वाचनिकत्वात् च संस्कारस्य नाऽसौ देवरस्य भार्या भवतीति क्षेत्रस्वामिन एव तदपत्यं भवतीति ।। ७० ।।

(९) भारुचिः। यथाविध्यधिगम्यैनां विधिवदूढां शुक्लवस्त्रामिति नियमः। शुचिव्रतां मनोवागादिसंयतामितरथा भजेताऽऽप्रसवात्। सकृत्सकृदृतावृतौ कार्यसामान्या विधवानियोगेऽप्येवमेव स्यात्। पूर्वं च घृताक्तदिह सर्वं स्यात् समानत्वान्नियोगस्य ।।७०।।

**न दत्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।।**
**दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ।। ७१ ।।**

(१) **मेधातिथिः।** "तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे" (९।२२७) इति प्राग्विवाहान्मृते वरे दत्तायामपि पुनर्दानाशङ्कायां प्रतिषेधोऽयम्। विशिष्टे तु पुनर्वचनम्, तथाविधा पुनर्भूरुक्ता। **नान्यस्मै दत्वा** तस्मिन्मृतेऽन्यस्मै **दद्यात्।** तथा कुर्वन्**प्राप्नोति पुरुषानृतम्।** मनुष्यहरणैः यत्पापं तत् तस्य भवति ।। ७१ ।।

(२) **सर्वज्ञनारायणः।** दत्वा ददानीत्युक्त्वा नादद्यादन्यस्मै। पुरुषानृतं पुरुष-विषयानृताभिधानम् ।। ७१ ।।

(३) **कुल्लूकः।** कस्मैचिद्वाचा कन्यां दत्वा तस्मिन्मृते दानगुणदोषज्ञस्तामन्यस्मै न दद्यात्। यस्मादेकस्मै दत्वाऽन्यस्मै ददत् पुरुषानृतं 'सहस्रं पुरुषानृते'(८।९८)इत्युक्तदोषं प्राप्नोति। सप्तपदीकरणस्याजातत्वाद् भार्यात्वानिष्पत्तेः पुनर्दानाशङ्कायामिदं वचनम् ।।७१।।

(४) **राघवानन्दः।** नान्यस्मिन्नित्याद्युपसंहरन् विपक्षे दोषमाह **न दत्वेति।** वाग्दाने दानं भाक्तं दत्त्वा ददत् प्राप्नोति पुरुषानृतं 'सहस्रं पुरुषानृत' इत्युक्तत्वात्। अत एव 'दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजे'दित्यविधिना वाचा दत्ता दानाशंका ।। ७१ ।।

(५) **नन्दनः।** अस्य देवरस्यैव दातव्यत्वे कारणमाह **न दत्वा कस्यचिदिति।** पुरुषविषयेऽयं दत्तो दत्तः क्रीतो क्रीत इत्यादौ विवादे प्रोक्तमनृतं पुरुषानृतं पुरुषाणां 'सहस्रं पुरुषानृते' हन्तीति पूर्वोक्तदोषं प्राप्नोतीत्यर्थः ।। ७१ ।।

(६) **रामचन्द्रः।** कस्यचिद्वराय कन्यां दत्वा ददामीत्युक्त्वा पुनः अन्यस्मै न दद्यात् पुरुषानृतं पापं आप्नोति ।। ७१ ।।

(७) **मणिरामः।** दत्त्वा वाचा दत्वा 'पुरुषानृते सहस्रं'इत्युक्तदंडं ।। ७१ ।।

(८) **गोविन्दराजः। नेति।** शास्त्रज्ञोऽन्यस्मै कन्यां पुनरन्यस्मै न दद्यात् ।। ७१ ।।

[*अत्र द्विसप्ततितमश्लोकादारभ्याध्यायसमाप्तिपर्यन्तमुपलब्धेषु पुस्तकेषु **गोविन्दराज**कृतटीका न दृश्यते, केवलं मूलश्लोका एव वर्तन्ते अतस्ते श्लोका अत्र न गृहीताः]

(९) **भारुचिः। सहस्रं पुरुषानृत इति।** दत्वान्यस्य कस्यचिद्दानाशङ्कया प्रति-षेधानुवादोऽयम् ।। ७१ ।।

**विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।।**
**व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ।। ७२ ।।**

(१) **मेधातिथिः। विधिः** शास्त्रं तदर्हतीति **विधिवत्।** यादृशः शास्त्रेण **विधिरुक्तः** "अद्भिरेव द्विजाग्र्याणाम्" (३। ३५) इति। स च कैश्चिदुदकाधिकारः कन्याविषये स्मर्यते।

तेन **प्रतिगृह्यापि त्यजेत्कन्यां** प्राग्विवाहात्। **विगर्हितां** दुर्लक्षणाम्। पूर्वप्रतिगृहीतामक्षतयोनिमपि। तथा निर्लज्जां बहुपुरुषभाषिणीम्। **व्याधितां** क्षयव्याधिगृहीताम्। **विप्रदुष्टां** रोगिण्यादिशब्दितामन्यगतभावां च त्यजेत्। अन्ये क्षतयोनिं **विप्रदुष्टां** व्याचक्षते।

न ते सम्यङ्मन्यन्ते। यदि तावत्पुरुषानुपभुक्ता स्त्रीकन्यादिविक्रुता तदा नैव दुष्यति। अथ पुरुषसंयुक्ता तदा अन्यैव न भवति। तत्र "त्यजेत्कन्यामिति" सामानाधिकरण्यानुपपत्तिः। उक्तश्च तस्यास्त्यागः। **छद्मना चोपपादिताम्।** न्यूनाधिकाङ्गीम्। यतो हेतुरुक्तोऽकथितेषु स्वल्पेष्वपि दोषेषु कृतवरणाऽपि त्याज्यैव ॥ ७२ ॥

(२) **सर्वज्ञनारायणः।** विगर्हितां दुष्कुलत्वादिना व्याधितामसाध्यव्याधिम्। विप्रदुष्टां पुरुषान्तरदूषिताम्। छद्मना श्वित्रादिदुष्टामेव दोषं वस्त्रादिनावृत्य उपपादितां दत्ताम्। पूर्वाध्याये दोषवत्कन्यादातुर्दोष उक्तोऽत्र तु वतुर्दोषाभावः ॥ ७२ ॥

(३) **कुल्लूकः।** 'अद्भिरेव द्विजाग्र्याणां' (३।३५) मित्येवमादिविधिना प्रतिगृह्यापि कन्यां वैधव्यलक्षणोपेतां रोगिणीं क्षतयोनित्वाद्यभिशापवतीमधिकाङ्गादिगोपनच्छद्मोपपादितां सप्तपदीकरणात्प्राक् ज्ञातां त्यजेत्। ततश्च तत्त्यागे दोषाभाव इत्येतदर्थं न तु त्यागार्थम् ॥ ७२ ॥

(४) **राघवानन्दः।** दातुर्नियममभिधाय स्वीकर्तृनियमं संकोचयति **विधिवदिति।** विधिः शास्त्रं तत्पुरःसरं प्रतिगृह्यापि कन्यां विगर्हितां वैधव्यादिलक्षणोपेतां। विप्रदुष्टा क्षतयोनित्वादिति शापवतीं छद्मनोपपादितां अधिकांगादि प्रच्छाद्य दत्तां सप्तपदीगमनात्प्राक् त्यजेदूर्ध्वं न त्यागः किंतु वस्त्राच्छादनादिना भर्तव्या। पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः इति। 'तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इत्युक्तः ॥ ७२ ॥

(५) **नन्दनः।** विगर्हितलक्षणां विप्रदुष्टां क्षतयोनिम् ॥ ७२ ॥

(६) **रामचन्द्रः।** निन्दितां प्रत्याह **विधिवदिति।** विगर्हितां दुष्कुलां व्याधितां अचिकित्स्यव्याधितां विप्रदुष्टां पुरुषान्तरसंसृष्टां छद्मना कुष्ठादिव्याध्याच्छादनेन उपपादितां प्राप्ताम् ॥ ७२ ॥

(७) **मणिरामः।** विगर्हितां वैधव्यलक्षणयुक्तां, विप्रदुष्टां क्षतयोनित्वाद्यभिशापवतीं। छद्मना अधिकांगादिदोषगोपनछद्मनोपपादितां। एतादृशीं विधिवत्परिगृह्यापि सप्तपदीकरणात्प्राक् त्यजेत्। त्यागे न दण्डभाग्भवति ॥ ७२ ॥

**यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् ॥**
**तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥**

(१) **मेधातिथिः।** कन्यादोषा उक्ताः। **ताननाख्याया**नुक्त्वा **प्रयच्छति** ददाति तस्य तद्दानं **वितथं** निष्फलं **कुर्यात्**प्रत्यर्पणेन। उक्त एवायमर्थः पूर्वश्लोकेनातिस्पष्टीकृतः ॥ ७३ ॥

(२) **सर्वज्ञनारायणः।** तद्दानं वितथं गृहीतस्य पुनरग्रहणात् ॥ ७३ ॥

(३) **कुल्लूकः**। यः पुनर्दोषवतीं कन्यां दोषाननभिधाय ददाति तस्य कन्यादातुर्दुरात्मनो दानं तत्प्रत्यर्पणेन व्यर्थं कुर्यात्। एतदपि त्यागे दोषाभावकथनार्थम् ॥ ७३ ॥

(४) **राघवानन्दः**। तत्र दातुर्दोषं प्रकटयन् त्यक्तुर्दोषाभावमाह **यस्त्विति**। अनाख्याय दोषमिति शेषः। वितथं प्रत्यर्पणेन व्यर्थम्। तेन त्यागे दोषो नास्तीति भावः ॥ ७३ ॥

(५) **नन्दनः**। वितथं विकृतं कुर्यात् पाणिग्राहकमनाख्यायेति विशेषणाद्दोषं ज्ञापितमभ्युपगम्य परिग्रहीता न परित्याज्येति सूचितम् ॥ ७३ ॥

(६) **रामचन्द्रः**। तत् दानरूपं कार्यं वितथं निष्फलं कुर्यात् ॥ ७३ ॥

(७) **मणिरामः**। तत् दानं वितथं परावृत्य दानात् मिथ्या कुर्यात् ॥ ७३ ॥

**विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ॥**
**अवृत्तिकर्शिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥ ७४ ॥**

(१) **मेधातिथिः**। यदा प्रवसेत्तदा भार्याया **वृत्तिं विधाय प्रवसेदि**ति विधिं **विधाये**त्येवमर्थं द्रष्टव्यम्—प्रवसन्भार्याया वृत्तिं विदधीतेति। तथा कुर्याद्यथाऽस्या यावत्प्रवासं वृत्तिर्भवति। शरीरस्थितिहेतुभोजनाच्छादनगृह्योपकरणादि। **तां विधाय प्रवसेत्**स्वदेशाद्देशान्तरं गच्छेत्। **कार्यवान्** कार्यं पुरुषार्थो दृष्टोऽदृष्टश्च। अदृष्टो धर्मो दृष्टावर्थकामौ। तथा वक्ष्यति (९।७६) "प्रोषितो धर्मकार्यार्थम्" इत्यादिना। अन्तरेणैतानि निमित्तानि भार्यां हित्वा प्रवासो निषिध्यते। **अवृत्तिकर्शिता हि**। दृष्टदोषप्रदर्शनमर्थवादा। अवृत्त्या दारिद्र्येण **कर्शिता** पीडिता **प्रदुष्येत्** पुरुषान्तरसम्पर्कादिना। **स्थितिमत्यपि**। स्थितिः कुलाचारस्तत्संपन्ना क्षुधावसरे दीना दोषमवाप्नुयादन्यं भर्तारमाश्रित्य जीवतीति सम्भाव्यत एतत्। सम्भावनायां लिङ् ॥ ७४ ॥

(२) **सर्वज्ञनारायणः**। वृत्तिं प्राणवर्तनोपायम्। कार्यवान् प्रयोजनवान्। प्रदुष्येत् धनलोभात्परपुरुषेण संयुज्येत। स्थितिमती वृत्तवती ॥ ७४ ॥

(३) **कुल्लूकः**। कार्ये सति मनुष्यः पत्न्या ग्रासाच्छादनादि प्रकल्प्य देशान्तरं गच्छेत्, यस्माद् ग्रासाद्यभावपीडिता स्त्री शीलवत्यपि पुरुषान्तरसंपर्कं भजेत् ॥ ७४ ॥

(४) **राघवानन्दः**। स्त्रीप्रसंगेन परलोकभीरुणा सर्वदा पत्नी पोष्येत्याह **विधायेति**। तत्र हेतुः—**अवृत्तिकर्षितेति**। प्रदुष्येद्वस्त्रान्नलोभादिना परपुरुषं व्यभिचरेत्। 'अस्य दग्धोदरस्यार्थे को न कुर्यादसांप्रत'मिति न्यायात् स्थितिमती स्थिरा सापि प्रदुष्यतीति कैमुतिकम् ॥ ७४ ॥

(६) **रामचन्द्रः**। विधायेति प्रवासार्थमाह अवृत्तिकर्शिता स्त्री जीवनोपायरहिता ॥७४॥

(७) **मणिरामः**। वृत्तिं भोजनाच्छादनादि विधाय प्रवसेत् देशांतरं गच्छेत्। स्थितिमत्यपि शीलवत्यपि ॥ ७४ ॥

(९) **भारुचिः**। कार्यार्थं नियमेन ग्रासाच्छादनप्रविधानं कुर्यात् भार्यायाः अस्या नियमे विधेरर्थवाद उत्तरश्लोकार्धः ॥ ७४ ॥

**विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।।**
**प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ।। ७५ ।।**

(१) **मेधातिथिः ।** 'नियमो' यथा सन्निहिते भर्तरि परगृहप्रयाणादिनिषेध एवं **प्रोषितेऽपि आस्थिता** आश्रिता गृहीतवती । अकृत्वा तु **वृत्तिं प्रोषिते शिल्पैर्जीवेदिति ।** कर्तनजालिकाकरणादिना । गर्हितानि वस्तूनि विजनादीनि । एष एव विधवादीनां निजश्रमजन्यो वृत्त्युपायः ।। ७५ ।।

(२) **सर्वज्ञनारायणः ।** नियमं मनोवाक्कायनियमम् । शिल्पैः सूत्रकर्तनाद्यैः । अगर्हितैर्देशान्तरभ्रमणाद्यसाध्यैः ।। ७५ ।।

(३) **कुल्लूकः ।** भक्ताच्छादनादि दत्वा पत्यौ देशान्तरं गते देहप्रसाधनपरगृहगमनरहिता जीवेत् । अदत्वा पुनर्गते सूत्रनिर्माणादिभिरनिन्दितशिल्पैः जीवेत् ।। ७५ ।।

(४) **राघवानन्दः ।** वृत्तिमतीं शिक्षयन् तद्रहिताया वृत्त्यन्तरमाह **विधायेति ।** प्रोषिते विद्याद्यर्थे । नियमं परगृहोत्सवाद्यदर्शनम् । अविधाय वृत्तिमित्यनुषङ्गः । शिल्पैः सूत्रकर्तनाद्यैः ।। ७५ ।।

(५) **नन्दनः ।** अथ प्रोषिते भर्तरि स्त्रिया कर्तव्यमाह **विधाय प्रोषितेति ।** प्रोषिते भर्तरि पत्यौ शिल्पैरगर्हितैः कर्तनावघातादिभिः ।। ७५ ।।

(६) **रामचन्द्रः ।** वृत्तिं विधाय भर्तरि प्रोषिते गते सति नियमास्थिता जीवेत् । वृत्तिं अविधायैव प्रोषिते भर्तरि अगर्हितैः शिल्पैः सूत्रकर्तनादिभिः जीवेत् ।। ७५ ।।

(७) **मणिरामः ।** अविधायैव प्रोषिते वृत्तिमकृत्वैव देशांतरं गते भर्तरि अविगर्हितैः शिल्पैः सूत्रनिर्माणसीवनादिभिः जीवेत् ।। ७५ ।।

(९) **भारुचिः ।** कार्यवतश्च मनुष्यस्य प्रवासोपदेशाद्विना कार्येण भार्यां मुक्त्वान्यत्र गमनं प्रतिषेधति गृहीतापि सत्येव निमित्ते त्याज्या नान्यत्र । 'निष्क्रयविसर्गाभ्या'मिति वचनात् । अतोऽस्याः त्यागनिमित्तैर्विना यथाकामं न त्यागोऽस्ति, यथोच्छिष्टद्रव्याणाम्'' एतस्यामवस्थायामवगर्हितशिल्पजीवनमभ्यनुज्ञायते—तस्या जालिकादिकरणम् । एतेन विधवाया अजातपुत्राया वृत्त्युपायो व्याख्यातः, गर्हितं च वस्त्रनिर्णेजनादि । प्रवासप्रयोजनविशेषेण तदाजीवनापेक्षया कालविकल्पमिदानीं दर्शयति ।। ७५ ।।

**प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः ।।**
**विद्यार्थं षड् यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ।। ७६ ।।**

(१) **मेधातिथिः ।** यदुक्तं 'कार्यवान्प्रवसेदि'ति तानि कार्याणि दर्शयति । तद्विशेषेणाप्रतीक्षाकालभेदः । परतस्त्विदं तया कर्तव्यमिति नोक्तम् । तत्र केचिदाहुः प्रकरणादगर्हितैर्जीवेदिति ।

तदयुक्तम्; प्रागस्मात्कालादगर्हितैरितीयं किं म्रियताम् ? न ह्यस्या आत्मत्याग इष्यते; पुंस इव प्रतिषिद्धत्वात्। तस्मात्प्रागप्यस्मात्प्रतीक्षणविधेरगर्हितैः शिल्पैरजीवन्ती गर्हितैर्जीवेत्।

अन्ये व्यभिचारमिच्छन्ति। तथा च स्मृत्यन्तरे (नारद० १२। ९७) "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥"

अन्येऽप्याहुः– नास्या ज्ञानेन ब्रह्मचर्यमपनेतुं शक्यते। स्त्रीधर्मेषु हि तदस्या विहितं **मनुना**ऽपि—"न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु" (५।१५८) इति। मृते भर्तरि नास्ति व्यभिचारः, किमङ्ग प्रोषिते। पतिशब्दो हि पालनक्रियानिमित्तकः—ग्रामपतिः, सेनायाः पतिरिति। अतश्चास्माद्वचनान्नैषा भर्तृपरतंत्रा स्यात्, अपि त्वात्मनो जीवनार्थं सैरंध्रीकरणादिकर्मभिरन्यमाश्रयेत। तच्च यदा षण्मासभृत्या संवत्सरभृत्या कस्मिंश्चिदाश्रिते भर्ता यद्यागच्छेत्तदानीं तां चेद्वशीकर्तुं शक्नुयात्—'त्यज त्वं भार्यामिति यावद्भवति कालो न पूर्णः प्राक् पत्युरेव सा।' पञ्चमे चर्वितमन्यत् (५।१५६)।

अन्येऽप्यर्थमिममाहुः– पूर्वे तु पुनर्भूवृतमिच्छन्ति। या पत्या वा परित्यक्ता भवति, यस्याः किल पतिरियन्तं कालं विहितवृत्तिको नागच्छति, सा तेन त्यक्तैव भवति। ततश्च यदि सा पुनर्भूधर्मेणान्येनोढा भवेत्तदा भर्ताऽभ्यागतो न किंचिद् ब्रूयात्। पुनर्भवस्येयं भार्येति–तदयुक्तम्; 'न निष्क्रयविसर्गाभ्याम्' (९।४६) इति तस्य श्लोकस्यार्थवत्त्वं दर्शयिष्यामः।

धर्मश्च तत्कार्यं च 'धर्मकार्यम्'। सोऽर्थः प्रयोजनं प्रवासस्येति **धर्मकार्यार्थम्**।

"कुतः? न गृहस्थस्य धर्मार्थो दीर्घकालः प्रवासः। अवश्यं ह्यग्नयस्तेन परिचरणीयाः। पाञ्चयाज्ञिकमनुष्ठेयम्। कुतो गन्तव्यम्? "वसन्ते वसन्ते ज्योतिषा यष्टव्यमिति"। तीर्थस्नानादीन्यपि स्मार्तानि च श्रौताविरोधीन्यनुष्ठेयानि। संविधाय प्रोषितस्य वा भवतीति न च येनोच्येत संविधायापि प्रवास आपर्वणः। स्वयं पर्वणि जुहुयादृत्विजामेकतरकालमित्युक्तम्। अनाहिताग्नेस्तीर्थयात्रायां पाञ्चयाज्ञिकस्य तुल्यत्वेऽपि स्मार्तत्वे भार्यासहितस्योपपत्तेः न तत्त्यागे तीर्थगमनं युक्तम्।" उच्यते – गुरुवचनेन। यं गुरवो धर्मार्जने राजोपसेवायां वा स्वकार्याय प्रेषयन्ति स 'धर्मार्थं' प्रवासः। प्रायश्चित्तं वा—तपोवनदेशभ्रमणेन। अथवाऽर्थार्जनार्थमेव **धर्मकार्यार्थम**भिप्रेतम्। दरिद्रोऽहं कुतश्चिद्धनमर्जयिष्ये।

**विद्यार्थम्**। "ननु स्नातस्य च भार्याधिगमः। कृतविद्यस्य च स्नानम्। तत्र कुतः कृतविवाहस्य विद्यार्थिता?" दर्शितमेतत्। ईषदवगतवेदार्थो विवाहेऽधिक्रियते। निश्चिते स्नानादौ।

"नैतद्युक्तम्; कृतायां धर्मजिज्ञासायां स्नानं—जिज्ञासा च विचारपूर्वकसंशयच्छेदेन निश्चितार्था।"

सत्यम्; नायं विधिर्विद्यार्थितायाः। तथा च सति धर्मकार्यार्थमित्यनेनैवावगता स्यात्। उत्पन्नेऽप्यधिकारोपयोगिन्यवगमेऽभ्यासातिशयार्थं विशेषार्थं चान्यासु विद्यासु।

क्षिप्रं शौर्ययशःख्यापनार्थं बहिः सविशेषविद्वत्त्वख्यापनार्थं देशान्तरप्रवसने यशोहेतुः प्रवासः। **कामार्थं** रूपाजीवानुगमोऽभिप्रेततरां भार्यामुद्वोढुम्।

स्मृत्यन्तरे प्रसूताभेदेन च कालभेदः स्मर्यते। तथा च **विष्णुः**—"अष्टौ विप्रसूताः षट् राजन्याः चतुरो वैश्या द्विगुणं प्रसूतेति। न शूद्रायाः कालनियमः स्यात्। संवत्सरमित्येक" इति॥ ७६॥

(२) **सर्वज्ञनारायणः।** धर्मकार्यार्थे तीर्थयात्रादिधर्मप्रतिग्रहादिकार्यार्थम्। प्रतीक्ष्य-स्तद्गृहावस्थानादिना। "तदूर्ध्वं तु पत्युः संनिकर्षमेव गच्छेत्, ऊर्ध्वं भर्तुः सकाशं गच्छेदि"ति **वसिष्ठस्मरणात्**। यशोर्थमुद्ग्राहादिना दिग्विजयाद्यर्थं गतः। कामार्थं स्त्र्यन्तरप्राप्त्यर्थम्॥७६॥

(३) **कुल्लूकः।** गुर्वाज्ञासंपादनादिधर्मकार्यनिमित्तं (व. स्मृ. १७/१५) प्रोषितः पतिरष्टौ वर्षाणि पत्न्या प्रतीक्षणीयः ऊर्ध्वं, पतिसन्निधिं गच्छेत्। तदाह **वसिष्ठः**— 'प्रोषितपत्नी पञ्चवर्षाण्युपासीत, ऊर्ध्वं पतिसकाशं गच्छे'दिति। विद्यार्थं प्रोषितः षड् वर्षाणि प्रतीक्ष्यः निजविद्याविभाजनेन यशोर्थमपि प्रोषितः पतिः षडेव। भार्यान्तरोपभोगार्थं गतस्त्रीणि वर्षाणि॥ ७६॥

(४) **राघवानन्दः।** प्रोषितप्रसंगेन प्रयोजनं प्रदर्शयंस्तदुचितकालनियममाह **प्रोषित** इति। धर्मकार्यार्थं तीर्थाटनगुर्वाद्याज्ञार्थम्। प्रतीक्ष्यः स्त्रिया नरः पतिः, तदूर्ध्वं पतिसमीपं गच्छेत्। समाः वत्सरान्। तदाह **वसिष्ठः** 'प्रोषितपत्नी पञ्चवर्षाण्युपासीत ऊर्ध्वं पञ्च-भ्यो भर्तुः सकाशं गच्छेदि'ति। अत्र पञ्चपदं न्यूनाधिकसंख्योपलक्षणार्थम्। कामार्थं पत्यंतर-निकटस्थितये॥ ७६॥

(५) **नन्दनः।** प्रतीक्ष्यो भार्ययेति शेषः, ऊर्ध्वं भर्त्रन्तरपरिग्रहे न दोषोऽस्तीत्यभिप्रायः। यत्तु मृतभर्तृकाणां ब्रह्मचर्यवचनं तत्फलातिशयकामानां नान्यासामित्यविरोधः॥ ७६॥

(७) **मणिरामः।** धर्मकार्यार्थं गुर्वाज्ञा संपादनादिधर्मकार्यनिमित्तं गतः पतिः अष्टौ वर्षाणि स्त्रिया प्रतीक्ष्यः, तदनंतरं स्वयं पतिसमीपं गच्छेत्। विद्यार्थं यशोर्थं च गते षट् वर्षाणि। कामार्थं भार्यांतरोपभोगाद्यर्थं गते त्रीणि वर्षाणि प्रतीक्ष्यः; तदनंतरं स्वयं गच्छेत्॥ ७६॥

(९) **भारुचिः। अवगर्हितेनाजीवेदिति।** अविधायेत्यधिकारात् तस्या एवायं काल-नियमः अगर्हितशिल्पजीवनेन। ऊर्ध्वं तु कालादेतस्माद् गर्हितेनापि जीवेच्छिल्पेन। एवं च विरुद्धशिल्पप्रतिप्रसवोऽयं विज्ञेयः, धर्मार्थं गुरुवचनादिकामार्थो रूपाजीवनानुगमः। न तु व्यभि-चारः। 'प्रतीक्ष्योऽष्टौ नरः समा' इत्येवमादिवचनाद्येन शास्त्रं विरुद्ध(स्ता)सासां व्यतिक्रमः अत्यन्तमसंयमोपदेशात्। तथा च सति विधवानियोग एव तावत् कथञ्चिल्लब्धः कुत एव व्यभिचारः? अन्यस्त्वाह— अत ऊर्ध्वं व्यभिचारदोषाभावः; प्रतिप्रसवसामर्थ्यात्। न तु नियमेन व्यभिचारोपदेशः। न हि प्रोषितोऽन्योढायोगोऽस्ति, यतो गुरुनियुक्तापत्यार्थं प्रवर्तते। एवं च सत्यत्यन्तमजीवन्त्याः प्राणवृत्तिमात्रार्थो रहसि जन्यो वा व्यभिचारमात्रप्रतिप्रसवोऽयं विज्ञेयः। या पत्या वा परित्यक्तेत्येवं परित्यागो(पा ?)यजन्यवो नवविषयः।

तत्त्वेतदत्यन्तशास्त्राविरोधादयुक्तम्, अपरे एनं मनुष्याणामेव प्रवासकालनियमार्थं वर्णयन्ति। अतः परं प्रोषितस्यावस्थाने धर्मार्थेऽपि प्रत्यवायः स्यादिति। सोऽयमन्यार्थे वाक्ये सामर्थ्य-गम्योऽर्थः न तु शक्यार्थतया शक्यः कल्पयितुम् ।। ७६ ।।

**संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः ।।**
**ऊर्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ।। ७७ ।।**

(१) मेधातिथिः। द्वेष्यः पतिर्यस्यास्तां **द्विषाणाम्**। एतेन तु न निष्कासनं कुर्यात्। सम्पूर्वस्य वसेरे**नामिति** च द्वितीयानुपपत्तेः। वासयेदिति निर्भर्त्सयेत्। पातकेऽपि तस्या निष्कासनं नास्ति "निरुन्ध्यादेकवेश्मनि" इति वचनात्। प्रायश्चित्तेऽप्यस्मिन्निमित्ते विनया-धानार्थोऽपहार इष्यते। न सर्वेण सर्व आत्यन्तिक आच्छेदः ।। ७७ ।।

(२) **सर्वज्ञनारायणः**। उपेक्षितः प्रतीक्षेत् । द्विषन्तीं संभोगाद्यर्थमनुपस्थायिनीम्। दायं स्त्रीधनं स्वयं दत्तं संगृह्य गृहीत्वा न संवसेत् त्यजेत्। जीवनं तु देयमेव ।। ७७ ।।

(३) **कुल्लूकः**। पतिविषयसंजातद्वेषां स्त्रियं वर्षं यावत्प्रतीक्षेत। तत ऊर्ध्वमपि द्विषंतीं स्वदत्तमलङ्कारादिधनं दत्वा नोपगच्छेत्। ग्रासाच्छादनमात्रन्तु देयमेव ।। ७७ ।।

(४) **राघवानन्दः**। संवत्सरादूर्ध्वमपि पतिं स्वरसतो द्विषन्त्याभरणमात्रं न भोग इत्याह **संवत्सरमिति**। दायं स्वदत्तमलंकारादिकं हृत्वा ग्रासाच्छादनादिकं दद्यात्, न संवसेत् नोपगच्छेत् ।। ७७ ।।

(५) **नन्दनः**। उदीक्षेत प्रतीक्षेत दायं भूषणादिकं नच संवसेन्न संगच्छेत्तया सहेति शेषः ।। ७७ ।।

(६) **रामचन्द्रः**। दायं स्वयं दत्तं हृत्वा न संवसेत्, त्यजेदित्यर्थः ।। ७७ ।।

(७) **मणिरामः**। द्विषन्तीं पतिविषये संजातद्वेषां। दायं स्वदत्तमलंकारादिधनं हृत्वा न संवसेत् नोपगच्छेत्। भोजनाच्छादनमात्रं तु देयमेव ।। ७७ ।।

(९) **भारुचिः**। न संत्यजेतदित्युपगमनिवृत्तिः न निर्वासनं पातकेऽपि तस्याः युक्तं निरुन्ध्य मयेदमे(वा) श्मनी (तन्त्र?) प्रायश्चित्तोपदेशात्। अन्यस्तु त्यागमेवाह। एवं च (सन्त्यजतो) नातिदोषः; कारणोपदेशात्। न त्वन्यत्र सर्वत्र स्त्रीद्याशप्रागन्याधेयात् विज्ञेयः। नोत्तर(त्र) तया सार्धमस्य प्रजाकर्म सहत्वोपदेशादिति ।। ७७ ।।

**अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा ।।**
**सा त्रीन्मासान्परित्याज्याऽविभूषणपरिच्छदा ।। ७८ ।।**

(१) मेधातिथिः। **अतिक्रमस्तदुपचार्याऽवज्ञानं** पथ्यौषधादिष्वतत्परता—न पुरुषा-न्तरसञ्चारः। मासत्रयं परित्यागश्च सम्भोगस्यैव, पूर्वस्मादेव हेतोः। हारकटकादिभूषणै-र्वियुक्ता कर्तव्या। **परिच्छदपरिग्रहेण** भाण्डकुण्डादिना दासीदासेन च ।। ७८ ।।

(२) **सर्वज्ञनारायणः**। अतिक्रामेत् तच्छासनं लङ्घयेत्, नतु व्यभिचरेदित्यस्यार्थः। **प्रमत्तं** द्यूताद्याकृष्टमनसम्। **मद्येन मत्तं**। भूषणपरिच्छदादिना विरहिततत्वमापाद्य त्रीन्मासान्परित्याज्या तदूर्ध्वमुपादेया ।। ७८ ।।

(३) **कुल्लूकः**। या स्त्री द्यूतादिप्रमादवन्तं मदजनकपानादिना मत्तं व्याधितं वा शुश्रूषाद्यकरणे नावजानाति सा विगतालङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्या ।। ७८ ।।

(४) **राघवानन्दः**। भर्तृशुश्रूषणाद्यकरणे कंचित्कालं परित्यजेदित्याह **अतीति**। प्रमत्तं मानादिना। मत्तं मद्येन। रोगार्तं कुष्ठाद्युपहतम्। साऽतिक्रामन्ती। अविभूषणेत्यादि च्छेदः, अतिक्रमणमत्र शुश्रूषाद्यकरणम्, जारादिनातिक्रान्तायावधाद्युक्तेः। तदुत्तरं स्वीकार्येति शेषः ।। ७८ ।।

(५) **नन्दनः**। उत्क्रामत्यतिवर्ततेऽविभूषणपरिच्छदा विगतभूषणादिपरिबर्हा त्रीन्मासान्परित्याज्या संगमादौ नोर्ध्वमिति ।। ७८ ।।

(६) **रामचन्द्रः**। अतिक्रामेत् आज्ञातिक्रमेण। प्रमत्तं द्यूतासक्तम्। मत्तं मद्यपानेन ।। ७८ ।।

(७) **मणिरामः**। प्रमत्तादिदोषयुक्तं पतिं अतिक्रामेत् शुश्रूषाद्यकरणेनाऽवजानाति सा स्त्री त्रीन् मासान् अविभूषणपरिच्छदा विगतालंकारशय्यादिपरिच्छदा कृत्वा त्याज्या नोपगंतव्या ।। ७८ ।।

(९) **भारुचिः**। अत्रासंभोगस्त्यागो(न्द्य)निर्वासनम् ।। ७८ ।।

**उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् ।।**
**न त्यागोऽस्ति द्विषंत्याश्च न च दायापवर्तनम् ।। ७९ ।।**

(१) **मेधातिथिः**। **क्लीब-बीज**शब्दौ नपुंसकमाहतुः। भेदस्तु एको वातरेता, अप्रवृत्तेन्द्रियोऽपरः। तादृशं या द्वेष्टि तस्या नास्ति निग्रहः पूर्वोक्तः। **अपवर्तन**मपहारः। प्रोषितप्रतिषिद्धान्नादयः स्मृत्यन्तरनिषिद्धाः ।। ७९ ।।

(२) **सर्वज्ञनारायणः**। उन्मत्तं वातादिना क्लीबं जन्मना अबीजमन्तरा नष्टबीजं पापरोगा अपस्माराद्यास्तदाक्रान्तं पतिं द्विषन्त्या नार्या न त्यागोऽत्यन्तत्यागः, नच दायापवर्तनं दायस्य स्त्रीधनस्यापहरणं नास्ति, तत्कालद्वेषिण्यपि सुस्थेन परिग्राह्येत्यर्थः, द्विषाणाया इति क्वचित्पाठः ।। ७९ ।।

(३) **कुल्लूकः**। वातादिक्षोभादप्रकृतिस्थं पतितमेकादशाध्याये वक्ष्यमाणं नपुंसकमबीजं बाध्यरेतस्त्वादिना बीजरहितं कुष्ठाद्युपेतं च पतिमपरिचरन्त्यास्त्यागो न करणीयो नच धनग्रहणं करणीयम् ।। ७९ ।।

(४) **राघवानन्दः**। अचिकित्सितव्याध्यादौ पतिं द्विषाणाया न त्यागादीत्याह **उन्मत्त**मिति। अबीजं शुक्रहीनम्। एतादृशं पतिं द्विषन्त्या अपि न त्यागो नापि दायापवर्तनं, ततो धनाद्यादानम् ।। ७९ ।।

(५) **नन्दनः**। अस्यापवादविधिमाह **उन्मत्तं पतितमिति**। अबीजमशुल्कमपवर्तनमपहरणम् ॥ ७९ ॥

(६) **रामचन्द्रः**। उन्मत्तं वातादिना। अबीजं द्विषन्ती या अपचरन्ती। दायापवर्तनं न स्त्रीधनं ॥ ७९ ॥

(७) **मणिरामः**। उन्मत्तादिदोषयुक्तं पतिं उपचरंत्या द्विषंत्या अपि न त्यागः। नच दायाऽपवर्तनं, नच धनग्रहणं करणीयमित्यर्थः ॥ ७९ ॥

(९) **भारुचिः**। अत्र निमित्ते अत्याग एव तस्याः ॥ ७९ ॥

**मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ॥**
**व्याधिता वाऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥ ८० ॥**

(१) **मेधातिथिः**। **मद्यपा**ऽसौ मद्यपानरता। पक्तिसंस्कारगृहकार्यानुष्ठानासमर्था। तत्परिरक्षणाय सा परिवेदनमर्हति। या तु गुरुभिः प्रतिषिद्धमद्यपाना, तस्या दण्डं वक्ष्यति "प्रतिषेधे पिबेदिति" (९।८४)। स्वयं नियमस्य त्वन्यनियमव्यतिक्रमवत्प्रायश्चित्तेन प्रत्यापत्तिर्युक्ता, पुनरधिवेदनं च।

तथा च धर्मानुष्ठानप्रजोत्पत्तिगृहकार्योपघातनिमित्तान्यधिवेदननिमित्तानि पठ्यन्ते— **"प्रतिकूला व्याधितार्थघ्नीति"**।

ब्राह्मण्यास्तु शास्त्रेण प्रतिषिद्धमद्यायास्तत्पानप्रायश्चित्तमेव भूयोऽप्रवृत्तौ। पातित्यं तु—भ्रूणहनि हीनसेवायां स्त्री पततीति परिसंख्यानान्न मद्यपाने पातित्यमिति। तदेकादशे वक्ष्यामः। उक्तं च पञ्चमे (५।९०)।

**असत्यवृत्ता**ऽसाध्वाचारा—भृत्येष्वसत्परुषवाक्, बलिकर्मणां प्रागेव भुङ्क्ते, दैवपित्र्योर्ब्राह्मणभोजनादौ न श्रद्धावती। **अर्थघ्नी** अतिव्ययशीला भाण्डोपस्करणं न परिरक्षति अनल्पमूल्येन क्रीणाति। **हिंस्रा** नाकुलशङ्कया स्यादेवातिताडनशीला। अन्वाहिकस्य व्ययस्यापहन्त्री। **अधिवेदनं** तस्या उपर्यन्याविवाहः ॥ ८० ॥

(२) **सर्वज्ञनारायणः**। असत्यवृत्ता सदामिथ्यावादिनी प्रतिकूला प्रतिकूलचेष्टा हिंस्रा ताडनादिना सदाभृत्यादिहिंसाकारिणी अर्थघ्नी अप्रयोजकव्ययपरा अधिवेत्तव्या अधिवेदनं द्वितीयभार्यासंबन्धस्तेन प्रतियोगेनासंबन्धनीया ॥ ८० ॥

(३) **कुल्लूकः**। निषिद्धमद्यपानरता असाध्वाचारा भर्तुः प्रतिकूलाचरणशीला कुष्ठाद्व्याधियुक्ता भृत्यादिताडनशीला सततमतिव्ययकारिणी या भार्या भवेत्साधिवेत्तव्या। तस्यां सत्यामन्यो विवाहः कार्यः ॥ ८० ॥

(४) **राघवानन्दः**। स्त्र्यन्तरसत्त्वेऽपि स्त्र्यन्तरमुद्वहेदित्याह **मद्यपेति** द्वाभ्याम्। मद्यपा निषिद्धमद्यपा। असत्प्रवृत्ता असदाचारा असत्यभाषिणी वा। अधिवेत्तव्या सत्यामपि तस्याम् अधिवेदनं पूर्वामधि तस्या उपरि स्त्र्यन्तरस्य परिग्रहः, तेन पूर्वाकृतं सपत्निका स्यादतः।

'कृतसापत्निकाध्यूढाऽधिविन्ने'त्यमरः। हिंस्रा भृत्यादिताडनशीला। अर्थघ्नी अतिव्ययशीला व्यये चामुक्तहस्तमित्युक्तत्वात् ॥ ८० ॥

(५) **नन्दनः।** अथाधिवेत्तव्यामाह **मद्यपेति**। यस्यां विद्यमानायामेवाधिकं अपरा वोढव्या भवति साधिवेत्तव्या ॥ ८० ॥

(६) **रामचन्द्रः।** स्त्रीणां त्यागे कारणमाह **मद्यपेति।** मद्यपा असत्यवृत्ता सदा मृषावादिनी हिंस्रा ताडनादिहिंसाकारिणी व्याधिता अधिवेत्तव्या आसामुपरि अन्या विवाहितुं योग्या, सदोषत्वात् ॥ ८० ॥

(७) **मणिरामः।** अधिवेत्तव्या तस्यां विद्यमानायामपि अन्यो विवाहः कर्तव्यः ॥८०॥

**वन्ध्याष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ॥**
**एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ८१ ॥**

(१) मेधातिथिः। तत्र **वन्ध्याऽष्टमेऽब्देऽधिवेद्या दशमे तु मृतप्रजा।** नाधिवेदनेऽपत्योत्पत्त्यभावाद्धि वन्ध्याया अनुष्ठानपरिपातनं स्यात्, अपत्योत्पत्तिविधेराधानविधेश्च। नापुत्रे ह्याधानं श्रूयते। एवं **मृतप्रजायाः स्त्रीजनन्याः। अप्रियवादिन्यास्तु** दोषाभावेन नाधिवेदनेन सत्यां क्षमायां श्रमनियमः (?) ॥ ८१ ॥

(२) **सर्वज्ञनारायणः।** 'वन्ध्याष्टम' इत्यादियोग्यतायामष्टवर्षोपरि गर्भग्रहणाभावे प्रायशो गर्भग्रहणं नास्तीत्यादिशास्त्रान्तरसिद्धस्वभावनियमापेक्षयोक्तम्। एवं द्वादशाब्दानन्तरमपि मृतप्रजात्वानुवृत्तौ। एकादशोर्ध्वं च स्त्रीजन्मानुवृत्तौ। मृतप्रजात्वं स्त्रीप्रसूतिश्च न निवर्तेत इति शास्त्रान्तरादेव सिद्धम्। **सद्य इति** तथा गृहिण्या सद्य एव गृहकार्यासिद्धेः ॥८१॥

(३) **कुल्लूकः।** प्रथमऋतुमारभ्याविद्यमानप्रसूताऽष्टमे वर्षेऽधिवेदनीया, मृतापत्या दशमे वर्षे स्त्रीजनन्येकादशे अप्रियवादिनी सद्य एव। यद्यपुत्रा भवति पुत्रवत्यान्तु तस्यां धर्मप्रजासंपन्ने दारे नान्यां कुर्वीतान्यतरापाये तु कुर्वीतेत्या**पस्तंब**निषेधादधिवेदनं न कार्यम् ॥ ८१ ॥

(४) **राघवानन्दः।** किंच **वन्ध्येति।** अष्टमे षोडशवर्षादिप्रसूतियोग्यकालापेक्षया। मृतप्रजा म्रियते प्रजामात्रं यस्याः सा। स्त्रीजननीस्त्र्यपत्यमात्रं यस्याः सा। **सद्यस्त्वप्रियवादिनीति।** 'धर्मप्रजासुसंपन्ने दारे नान्यां कुर्वीते'त्याद्या**पस्तम्ब**वचनादप्रियवादित्वं धर्मपुत्रशून्याविषयम् ॥ ८१ ॥

(५) **नन्दनः।** अष्टमेऽब्दे युक्तान्प्रसवकालादारभ्याष्टमेऽब्दे ॥ ८१ ॥

(६) **रामचन्द्रः।** अष्टमे अब्दे अधिवेद्या अन्या विवाह्या ॥ ८१ ॥

(७) **मणिरामः।** वन्ध्यादीनां परीक्षाकालमाह **वंध्येति** ॥ ८१ ॥

(९) **भारुचिः।** धर्महानौ यामेतदासनमधिवेदननियमतो विज्ञेयम्, येन जातपुरुषाधिकारः श्रौतेषु अप्रियवादिन्यास्त्वनित्यमधिवेदनं जातपुत्रत्वे सति तया सहाधिकृतत्वात् कर्मसु ॥ ८१ ॥

**या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ॥**
**साऽनुज्ञाप्याऽधिवेत्तव्या नावमान्या च कर्हिचित् ॥ ८२ ॥**

(१) **मेधातिथिः।** भर्त्रे हिता परिचर्यपरा। अनुज्ञापना अवमानयोरिह विधानम्, पूर्वासामेतद्भावात्।

**रोगिणी**ग्रहणं वन्ध्यस्त्रीजनन्यावपि लक्षयति। प्रकृतत्वाविशेषादवमाननिमित्ताभावाच्च **कर्हिचित्**कदाचिदवमाननं शिष्टचर्थं परिभाषितम् ॥ ८२ ॥

(२) **सर्वज्ञनारायणः।** हिता भर्तृहिता। अनुज्ञाप्य यद्यप्यनुमन्यते, अननुमतौ त्वननुज्ञाप्यैव ॥ ८२ ॥

(३) **कुल्लूकः।** या पुनर्व्याधिता सती पत्युरनुकूला भवति, शीलवती च स्यात्तामनुज्ञाप्यान्यो विवाहः कार्यः। कदाचिच्चासौ नावमाननीया ॥ ८२ ॥

(४) **राघवानन्दः।** सा चेदनुकूला तदा तत्रैव सर्वमित्यादिस्तुत्या ततोऽधिवेदनार्थमनुमतिर्ग्राह्येत्याह **येति**। हिता हितैषिणी शीलतश्चरित्रेण ॥ ८२ ॥

(६) **रामचन्द्रः।** या रोहिणी स्यात् 'अष्टवर्षा च रोहिणी' सा अनुज्ञाप्य अधिवेत्तव्या न अवमान्या ॥ ८२ ॥

(७) **मणिरामः।** या रोगिणी स्यात्तु हिता। व्याधिता सती या पत्यनुकूला भवति। सानुज्ञाप्याऽधिवेत्तव्या तस्या आज्ञां गृहीत्वाऽन्यो विवाहः कर्तव्यः। कदाचिच्चासौ नावमाननीया ॥ ८२ ॥

(९) **भारुचिः।** अस्याश्चावमानप्रतिषेधात्। इतरा न केवलमधिवेद्याः। किं तर्हि? शिष्य(त्वं) परिभाष्य च ॥ ८२ ॥

**अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ॥**
**सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ ८३ ॥**

(१) **मेधातिथिः।** क्रोधेनाधिवेदनहेतुना निर्गतायास्त्याग-संनिरोधौ विकल्पतो विधीयेते। न तु यथोपपन्नहेतुना भोजनाच्छादनादिना तत्र प्रीत्या क्रोधावमार्जनं श्वश्रूभिः श्वशुरादिभिर्वा परिभाषणम्। **संनिरोधो** रक्षिपुरुषाधिष्ठानम्। त्यागो व्याख्यातः—असंभोगः सहशय्यावर्जनम्। **कुलं** ज्ञातयः—तत्पितृपक्षाः स्वपक्षाश्च ॥ ८३ ॥

(२) **सर्वज्ञनारायणः।** निर्गच्छेत् गृहान्तरं गच्छेत्। संनिरोद्धव्या बन्धनेन। कुलस्य तत्पितृकुलस्य संनिधौ ॥ ८३ ॥

(३) **कुल्लूकः।** या पुनः कृताधिवेदना स्त्री कुपिता निर्गच्छति सा तदहरेव रज्ज्वादिना बद्ध्वा स्थापनीया आ कोपनिवृत्तेः पित्रादिकुलसन्निधौ वा त्याज्या ॥ ८३ ॥

(४) **राघवानन्दः।** कृतसपत्नीत्वज्ञानेन रुष्टां प्रत्याह **अधिविन्नेति**। 'कृतसपत्निकाध्यूढाऽधिविन्ने'त्यमरः। सन्निरोद्धव्या बन्धनादिना कुलसंनिधौ जनसमूहः कुलं ज्ञातिर्वा देशकालापेक्षया विकल्पः ॥ ८३ ॥

(५) **नन्दनः।** त्याज्या दुर्निरोधा चेत्त्यागविधानात् श्रौतस्मार्तकर्मणां तया विनानुष्ठाने नास्ति विरोधः ॥ ८३ ॥

(६) **रामचन्द्रः।** या अधिविन्ना नारी रुषिता क्रोधयुक्ता सा सद्यः सन्निरोद्धव्या आ कोपनिवृत्तेः त्याज्या। कुलसंनिधौ तत्पित्रे वा ॥ ८३ ॥

(७) **मणिरामः।** अधिविन्ना उत्पन्नसापत्ना। सद्यः तदहरेव ॥ ८३ ॥

(९) **भारुचिः।** उक्तेषु निमित्तेष्वधिविन्नाया निर्गतायाः क्रोधेन त्यागः। श्रुतिकर्माधिकाराविरोधे कुलसन्निधौ असम्भोगो वा त्यागः सन्निरोधो वा तस्याः। अपरे तु प्रजाकर्मसहत्वनिवृत्त्यर्थमिदं त्यागवचनं कथयन्ति श्रौतकर्माविरोधेन ॥ ८३ ॥

**प्रतिषेधे पिबेद्या तु मद्यमभ्युदयेष्वपि ॥**
**प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥ ८४ ॥**

(१) **मेधातिथिः। प्रतिषेधे** गुरुसम्बन्धिभिः। अयं दण्डः क्षत्रियादिस्त्रीणाम्। न शास्त्रीयो ब्राह्मणीनाम्। न हि तत्र दण्डमात्रेण मोक्षः। किं तर्हि? महता। न च तत्राभ्युदयेषु पानाशङ्का। अप्रतिषिद्धमद्यानां तु नियमेनोत्सवसमागता नामादरवती प्रवृत्तिर्दृश्यते।

यां सम्यङ्‌निषेधत्यभ्युदयेष्वपीति। दण्डश्चायं भर्त्रा दीयते। सत्यपि राजवृत्तित्वे "स्त्रीणां भर्ता प्रभुः" इति विज्ञायते। अन्येषामपि परिग्रहवतां भृत्यादिविषये कियति दण्डे स्वातन्त्र्यम्।

**अभ्युदयः** पुत्रजन्मविवाहादय उत्सवाः। **प्रेक्षा** नटादिदर्शनम्। **समाजो** नितान्तमपि जनसमूहः। तत्र कुतूहलिन्या अयं दण्डः ॥ ८४ ॥

(२) **सर्वज्ञनारायणः।** मद्यं सुराव्यतिरिक्तम्। अभ्युदयेषूत्सवेषु। क्षत्रियादयो मद्यं पिबन्ति। प्रेक्षा नृत्यादिदर्शनस्थानं, समाजः सभा ॥ ८४ ॥

(३) **कुल्लूकः।** या पुनः क्षत्रियादिका स्त्री भर्त्रादिनिवारिता विवाहाद्युत्सवेष्वपि निषिद्धमद्यं पिबेत् नृत्यादिस्थानजनसमूहौ वा गच्छेत् सा सुवर्णकृष्णलानि षट् व्यवहारप्रकरणाद्राज्ञा दण्डनीया ॥ ८४ ॥

(४) **राघवानन्दः।** अकार्ये निषिद्धायाः पुनःप्रवृत्तौ दण्डमाह **प्रतिषिद्धेति।** अपि कामोद्बोधसंभावनार्थम्। प्रेक्षासमाजौ नृत्यादिदिदृक्षुजनसमूहः प्रेक्षा, समाजः उत्सवार्थं जनता, तौ चेद्गच्छेत्तदा दण्ड्या, राज्ञेति शेषः ॥ ८४ ॥

(५) **नन्दनः। प्रतिषिद्धेति।** विशेषणादप्रतिषिद्धायां मद्यपानेऽल्पदोषः अपिशब्दग्रहणादभ्युदयेऽल्पतरः, अभ्युदय उत्सवः, अनभ्युदये प्रतिषिद्धायां भूयस्तरः ॥ ८४ ॥

(६) **रामचन्द्रः।** भर्त्रा प्रतिषिद्धा या स्त्री क्षत्रियादिका मद्यं सुराव्यतिरिक्तं अभ्युदये पिबेत् प्रेक्षासमाजे नृत्यस्थलसभायां गच्छेत् सा दण्ड्या कृष्णलानि गुंजाषट्परिमितं रजतम् ।। ८४ ।।

(७) **मणिरामः।** अभ्युदयेष्वपि विवाहाद्युत्सवेष्वपि। प्रेक्षासमाजं नृत्यादिस्थान-सभायां। कृष्णलानि सुवर्णकृष्णलानि ।। ८४ ।।

(९) **भारुचिः।** प्रतिषेधो मद्यपानस्य। प्रेक्षासमाजगमनेऽप्यधिवेदननिमित्तेन मद्यपाने एषैव व्याख्या, 'मद्यपा सत्यवृत्ता चे' त्यत्र इतरवर्णविषयं चैतत् प्रतिषेधरूपं विज्ञेयम् ।।८४।।

**यदि स्वाश्चापराश्चैव विन्देरन्योषितो द्विजाः ।।**
**तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ।। ८५ ।।**

(१) **मेधातिथिः।** कामतः प्रवृत्ता यदि समानजातीया असमानजातीयाश्च **विन्देर-न्विवाहयेयुस्तासां वर्णक्रमेण** जात्यनुरूपं **ज्यैष्ठ्यं—न** वयसा न च विवाहक्रमतः। फले हि दाननिमित्ते **पूजा।** प्रथमं ब्राह्मण्यास्ततः क्षत्रियावैश्ययोरित्येष वर्णक्रमः। **वेश्म** प्रधानं गृहम्। तद्ब्राह्मण्याः सवर्णानां विवाहक्रमो निश्चयः स्मृतः ।। ८५ ।।

(२) **सर्वज्ञनारायणः।** स्वाः स्वजातीयाः। अवरा अधमजातीयाः। द्विजा विप्रादयः। वर्णक्रमेण न वयसा। ज्यैष्ठ्यं ज्येष्ठासाध्यकर्मसंबन्धः। वेश्म सोत्कर्षम् ।। ८५ ।।

(३) **कुल्लूकः।** यदि द्विजातयः स्वजातीया विजातीयाश्चोद्वहेयुस्तदा तासां द्विजाति-क्रमेण वाक्संमानदायविभागोत्कर्षार्थं ज्येष्ठत्वं पूजा च वस्त्रालङ्कारादिदानेन गृहं च प्रधानं स्यात् ।। ८५ ।।

(४) **राघवानन्दः।** किंच स्त्रीप्रसंगेन समानाऽसमानजातीयानामपि समानजातीया-या एव पूजावेश्मनी इतीतिहेतुमाह **यदीति।** यदीत्यमनुमितौ। स्वाः सजातीयाः, अपराः विजा-तीयाः अनुविन्देरन् उद्वहेरन्। ज्यैष्ठ्यम् पूर्वं विप्रस्य विप्रोद्वाहः तथा प्रथमं पूजा प्रधानं वेश्म एव क्षत्रियवैश्ययोरिति वर्णक्रमः, हेतुरत्र विवाहतो ज्यैष्ठ्यम् ।। ८५ ।।

(५) **नन्दनः।** स्वाः सवर्णाः, अपरा असवर्णाः, द्विजास्त्रैवर्णिकाः, वर्णक्रमेण ज्यैष्ठ्यं स्यान्न विवाहक्रमेण 'क्रमतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽपरा' इत्युक्तस्य क्रमस्यापवादादिना; कृते भङ्गे सत्ययमुपदेशः ।। ८५ ।।

(६) **रामचन्द्रः।** यदि स्वाः सवर्णाः, अपराश्चैव असवर्णाः द्विजाः, योषितः, विन्देरन् प्राप्नुयुः, तासां स्त्रीणां वर्णक्रमेण ज्यैष्ठ्यं पूज्या पूजार्हा। वेश्म गृहादिकम् ।। ८५ ।।

(७) **मणिरामः।** स्वाः सजातीयाः, अपराः विजातीयाः। विंदेरन् उद्वहेरन् तासां उद्वाहितानां ।। ८५ ।।

(९) **भारुचिः**। 'इमाः स्युः क्रमशोऽपराः' इत्येतत्क्रमेणैव दारकर्मोक्तम्। इदं तु सृज्य इति क्रमेणाव्यूढानां वर्णक्रमेणैव ज्यैष्ठ्यादि स्यात्। प्रयोजनमस्य दायविभागः। पूजा चैतेनैव च सवर्णानामनुक्रमेणैव ज्येष्ठं विज्ञेयम्, न तु जन्मना ॥ ८५ ॥

## भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यकम् ॥
## स्वा चैव कुर्यात्सर्वेषां नास्वजातिः कथंचन ॥ ८६ ॥

(१) **मेधातिथिः। शरीरशुश्रूषा** भर्तुरुपयोगिपाकादिलक्षणा दानभोजनप्रतिजागरणं **स्वा स्वैव** कुर्यात्। पृष्ठपादसंवाहननिर्णेजनादौ त्वनियमः। युगपत्संनिधौ तु शरीरावयवक्रमो वर्णक्रमेण। **नैत्यकं धर्मकार्यं** "सायं त्वन्नस्येत्यादि" अग्निशरणोपलेपनाचमनोदकतर्पण-दानादि ॥ ८६ ॥

(२) **सर्वज्ञनारायणः**। धर्मकार्यं यज्ञादि। नैत्यकं नित्यकर्तव्यं श्राद्धादि। नास्वजातिः स्वजातिसंभवे ॥ ८६ ॥

(३) **कुल्लूकः**। भर्तुर्देहपरिचर्यामन्नदानादिरूपान्धर्मकार्यं च भिक्षादानातिथिपरिवेषण-होमीयद्रव्योपकल्पनादिप्रात्यहिकं सर्वेषां द्विजातीनां सजातिभार्यैव कुर्यान्नतु कदाचिद्विजाती-येति ॥ ८६ ॥

(४) **राघवानन्दः**। यज्ञादिसहकारित्वान्नादिपाकशुश्रूषादावपि सजातीयाया एवा-धिकार इत्याह **भर्तुरिति**। स्वा स्वेति वीप्सा। नैत्यकमिति विशेषणात्काम्येऽन्यासामपि प्रवेशः बहुसाध्यत्वात्तस्य ॥ ८६ ॥

(५) **नन्दनः**। धर्मकार्यं अग्निशरणालेपनादि ॥ ८६ ॥

(६) **रामचन्द्रः**। सर्वेषां वर्णानां स्वाः नैत्यकं नित्यं कर्म कुर्युः, असजातिः, अन्यजातिः न कथंचन ॥ ८६ ॥

(७) **मणिरामः**। शरीरशुश्रूषां अन्नदानादिरूपां। धर्मकार्यं च नैत्यकं भिक्षादाना-ऽतिथिपरिवेषणहोमीयद्रव्योपकल्पनादिप्रात्यहिकं ॥ ८६ ॥

(९) **भारुचिः**। अग्निशरणोपलेपनादिधर्मकार्यं यत् स्त्रिया कर्तव्यं तद् गृह्यते। पुरुषस्यापि धर्मकार्यप्रवृत्तस्यैवोपस्पर्शनदानादिलक्षणा शरीरशुश्रूषा धर्मकार्यसाहचर्याद् गृह्यते। न तु पादनिर्णेजनादिस्वरूपा धर्मकार्येणासरूपत्वात् ॥ ८६ ॥

## यस्तु तत्कारयेन्मोहात्सजात्या स्थितयाऽन्यया ॥
## यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥ ८७ ॥

(१) **मेधातिथिः**। **यस्त्वेतत्कर्माऽन्यया**ऽसमानजातीयया **कारये**त्सजातीयायां स्थितायां **ब्राह्मण** एव स **चण्डालः** पूर्वस्माद्दृष्टः ॥ ८७ ॥

(२) **सर्वज्ञनारायणः**। एतत्स्फुटयति **यस्त्विति**। दृष्टपूर्वः (?) पुराणे श्रुतः ॥ ८७ ॥

(३) **कुल्लूकः।** यः पुनः स्वजातीयया सन्निहितया देहशुश्रूषादिकं कर्तव्यं विजातीयया मौर्ख्यात्कारयेत्स यथा ब्राह्मण्यां शूद्राज्जातो ब्राह्मणचाण्डालस्तथैव पूर्वैर्ऋषिभिर्दृष्ट इति पूर्वानुवादः ।। ८७ ।।

(४) **राघवानन्दः।** असवर्णागुणमोहितं प्रत्याह **यस्त्विति**। तत् शूश्रूषादिकं स्थितिर-प्रयोजिकास्थितया सुस्थया अन्ययाऽसजात्या। ब्राह्मणचाण्डालः चातुर्वर्ण्यत्वेऽपि सति कुत्सिताचारत्वाच्चण्डालवदुपेक्ष्यः स इत्यर्थवादः। पूर्वदृष्टः पूर्वैर्मन्वादिभिः तथैव दृष्टः कथितः ।।८७।।

(५) **नन्दनः।** तच्छरीरशुश्रूषादिकं स्वजात्या स्थितया स्वजातेरन्यथा ब्राह्मणचाण्डालः कृच्छ्रलब्धायां ब्राह्मणजातौ तिष्ठन्नेव कर्मणा चाण्डालः स्याद्यथा तथैव च पूर्वदृष्टः पूर्वैर्विद्वद्भिर्निरूपितः ।। ८७ ।।

(६) **रामचन्द्रः।** यस्तु पुरुषः सजात्या स्थितया स्त्रिया मोहात् अन्यया गृहकार्यं नैत्यकं सह कारयेत्सः। ब्राह्मणः यथा चाण्डालः तथैवेति पूर्वदृष्टः प्राक्तनैर्मुनिभिर्दृष्टः।।८७।।

(७) **मणिरामः।** अन्यया असमानजात्या। ब्राह्मणचांडालः ब्राह्मण्यां शूद्राज्जातो ब्राह्मणचांडालः। पूर्वदृष्टः पूर्वैः ऋषिभिः दृष्टः ।। ८७ ।।

(९) **भारुचिः।** शुश्रूषानियमार्थवादोऽयम्, एवं च सति नान्यया कार्यः, यस्तु व्यतिक्रमे वर्तते तस्यायं निन्दार्थवादः। केनचित् सामान्येन ।। ८७ ।।

**उत्कृष्टायाभिरूपाय वराय सदृशाय च ।।**
**अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ।। ८८ ।।**

**(प्रयच्छेन्नग्निकां कन्यामृतुकालभयान्वितः ।।**
**ऋतुमत्यां हि तिष्ठन्त्यामेनो दातारमृच्छति ।।)**

(१) **मेधातिथिः। उत्कृष्टायाभिरूपायेति** विशेषणविशेष्यभावः। उत्कृष्टायाभिरूपतराय इत्यर्थः। अथवोत्कृष्टाय जात्यादिभिरभिरूपायेति पृथग्विशेषणम्। रूपमाकृतिमाभिमुख्येन प्राप्तोऽ'**भिरूपः**', स्वभाववचनो वा। सुखभावो विद्वानप्यभिरूप उच्यते। **सदृशाय** जात्यादिभिः। **वरो** वोढा जामाता। **अप्राप्तामप्ययोग्यामपि** कामावशत्वेन बालामप्राप्तां कौमारं वयः। स्मृत्यन्तरे नग्निकेत्युच्यते। कामः स्पृहा यस्या नोत्पन्ना सा चाष्टवर्षा षड्वर्षा वा, न त्वत्यन्तबालैव। तथाहि लिङ्गम् "अष्टवर्षामिति"। इदमेव लिङ्गं धर्मप्रयुक्ततायामपि विवाहस्येति। अन्यथा रागस्यैव प्रयोजकत्वे कुतोऽप्राप्ताया विवाह इत्याहुः।

तदयुक्तम्; धनार्थिनोऽपि बालां विवाहयन्ति। न शास्त्रीयैव सर्वा प्रयुक्तिस्तृतीये निरूपिता ।। ८८ ।।

(२) **सर्वज्ञनारायणः।** उत्कृष्टायोत्तमजातीयाय। अप्राप्तामष्टवर्षन्यूनवयसमपि ।। ८८ ।।

(३) **कुल्लूकः**। कुलाचारादिभिरुत्कृष्टाय सुरूपाय समानजातीयाय वरायाप्राप्तकालामपि विवाहयेत्; 'अष्टवर्षामेवं धर्मो न हीयत'इति दक्षस्मरणात्। तस्मादपि कालात्प्रागपि कन्यां ब्राह्मविवाहविधिना दद्यात् ॥ ८८ ॥

(४) **राघवानन्दः**। कन्यायाः स्त्रीत्वेन विप्रादेरभ्यर्हितत्वेन च तत्प्रसंगमवलम्ब्य यादृग्गुणेनेत्युक्तं, संस्मारयंस्तत्रैव नियमान्तरमाह **उत्कृष्टायेति** द्वाभ्याम्। कुलसौन्दर्यविद्याशीलबलादिविशेषणैर्युक्तायेति भावः। अप्राप्तां कन्यात्वमिति शेषः; 'अष्टवर्षा भवेद्गौरी'त्युक्तेः ॥ ८८ ॥

(५) **नन्दनः**। अथ कन्याप्रदानमाह **उत्कृष्टायेति**। अप्राप्तामपि वयोरूपादिभिरसदृशमपि ॥ ८८ ॥

(६) **रामचन्द्रः**। एतादृशाय वराय प्राप्तां अष्टवर्षन्यूनवयस्कान्तां तस्मै कन्यां दद्यात् ॥ ८८ ॥

(७) **मणिरामः**। अप्राप्तामपि अप्राप्तकालामपि सूक्ष्मामपीति यावत्, तस्मै उत्कृष्टाय वराय। कालप्रतीक्षायां कदाचिदेतादृशः वरो न लभ्यः स्यादित्यर्थः ॥ ८८ ॥

(९) **भारुचिः**। आत्मनो विद्यादिभिरुत्कृष्टकारणैरुत्कृष्टाय अभिरूपाय (व)राय तावाभे(?)सदृशाय वा। ऋज्वन्यत्। 'उत्तमैरुत्तमैर्नित्यं सम्बन्धानाचरेत्सह' (४।२४४) इत्यत्रोक्तामप्येतत्सदृशदानार्थं पुनरारभ्यते। एवं च गुणहीने ददतः प्रत्यवायः ॥ ८८ ॥

**काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ॥**
**न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९ ॥**

(१) **मेधातिथिः**। प्रागृतोः कन्याया दानम्। ऋतुदर्शनेऽपि न दद्याद्यावद्गुणवान्वरो न प्राप्तः। **गुणो** विद्याशौर्यातिशयः शोभनाकृतिर्वयोमहत्त्वोपेतता लोकशास्त्रनिषिद्धपरिवर्जनं कन्यायामनुराग इत्यादिः ॥ ८९ ॥

(२) **सर्वज्ञनारायणः**। ऋतुलङ्घनेनापि गुणवत एव देयेत्यर्थः ॥ ८९ ॥

(३) **कुल्लूकः**। संजातार्तवापि कन्या वरं मरणपर्यंतं पितृगृहे तिष्ठेन्न पुनरेनां विद्यागुणरहिताय कदाचित्पित्रादिर्दद्यात् ॥ ८९ ॥

(४) **राघवानन्दः**। ऋतुमती स्पष्टरजाः। उक्तचतुष्टयविशेषणान्यतरहीनाय न देयेत्युत्कृष्टवरे तात्पर्यात्। अन्यथा 'अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृता'(आचार० ६८)-विति **याज्ञवल्क्यवचनविरोधः** ॥ ८९ ॥

(६) **रामचन्द्रः**। एनां गुणहीनाय न प्रयच्छेत् दद्यात् ॥ ८९ ॥

(७) **मणिरामः**। गेहे पितुर्गेहे ॥ ८९ ॥

(९) **भारुचिः**। तथा चेदमनूद्यते—अनेन चाप्राप्तकालदानेन पारस्याप्राप्तकालस्य कन्याप्रतिग्रहोऽनुमीयते। येन प्राप्नोत्यप्राप्तां न प्रतिग्रहीष्यति, अर्थगृहीतत्वाच्च प्राप्तकाल-संयोगस्याप्राप्ते कालदानकीर्तनं नार्थवादी क्रियते ॥ ८९ ॥

**त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ॥**
**ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९० ॥**

(१) **मेधातिथिः**। रेतो ऋतुकालं—तद्वत्यपि **त्रीणि वर्षाणि** तद्गृहे आसीत। अतः परममुत्कृष्टाभावे **सदृशं** समानजातीयं स्वयं वृणुयात् ॥ ९० ॥

(२) **सर्वज्ञनारायणः**। उदीक्षेत प्रतीक्षेत, न ततः प्राक्स्वयंवरणमस्तीत्यर्थः। उपासी-तेति क्वचित्पाठः। विन्देत स्वप्रयत्नेनैव। सदृशमित्यधमव्यवच्छेदार्थम् ॥ ९० ॥

(३) **कुल्लूकः**। पित्रादिभिर्गुणवद्वरायादीयमाना कन्या संजातार्तवा सती त्रीणि वर्षाणि प्रतीक्षेत। वर्षत्रयात्पुनरूर्ध्वमधिकगुणवरालाभे समानजातिगुणं वरं स्वयं वृणीत ॥ ९० ॥

(४) **राघवानन्दः**। दातॄणामेवाभावे तु स्वयंवरा स्यादित्याह **त्रीणीति**। उदीक्षेत सद्वरं दातारं वा प्रतीक्षेत। एतस्माद्वर्षत्रयात्। सदृशं सजातिं विन्देत वृणुयादित्यन्वयः ॥९०॥

(६) **रामचन्द्रः**। ऋतुमती सती कुमारी त्रीणि वर्षाणि उदीक्षेत। एतस्मात्कालात् ऊर्ध्वं सदृशं बन्धूनामभावे वर्णयोग्यं पतिं विन्देत प्राप्नुयात् ॥ ९० ॥

(७) **मणिरामः**। प्रतीक्षेत उत्तमवरप्राप्त्यर्थं तिष्ठेत्। एतस्मात् कालात् वर्षत्रयात्। सदृशं अधिकगुणवराऽलाभे समानजातिगुणं पतिं विंदेत् स्वयं वृणीयात् ॥ ९० ॥

(९) **भारुचिः**। कन्याया अयमुपदेशः। सा च द्वादशवर्ष(र्तुः) पश्यतीति स्मर्यते यत एतस्मात् कालादूर्ध्वं वर्षत्रयं स्वयम्, परस्याग्रहणं ॥ ९० ॥

**अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ॥**
**नैनः किंचिदवाप्नोति न च यं साऽधिगच्छति ॥ ९१ ॥**

(१) **मेधातिथिः**। वर्षत्रयादूर्ध्व**मदीयमाना** यं **भर्तारं** वृणुते तस्य दोषो न। कन्यायाः पूर्वेणैव दोषाभाव उक्ते व्रियमाणस्य दोषार्थमिदम्। ऋतुदर्शनं च द्वादशवर्षाणामिति स्मर्यते ॥ ९१ ॥

(२) **सर्वज्ञनारायणः**। नैनः पापं पित्रननुमतिकृतं यं साधिगच्छति सोऽपि नैनो रजस्वलापरिणयनादिकृतं प्राप्नोतीत्यनुषङ्गः ॥ ९१ ॥

(३) **कुल्लूकः**। पित्रादिभिरदीयमाना कुमारी यथोक्तकाले यदि भर्तारं स्वयं वृणुते तदा सा न किंचित्पापं प्राप्नोति, न च तत्पतिः पापं प्राप्नोति ॥ ९१ ॥

(४) **राघवानन्दः।** कन्येच्छया पाणिग्रहणे कन्यातत्पत्योर्न पापाशङ्केत्याह **अदीय-मानेति।** अदीयमाना पित्रादिभिः। पतिं निकृष्टमुत्कृष्टं वा। सापि यं गच्छति सोऽपि पापदण्डं न प्राप्नोतीत्यर्थः ॥ ९१ ॥

(५) **नन्दनः।** यं साऽधिगच्छति, स च नैनः प्राप्नोति ॥ ९१ ॥

(६) **रामचन्द्रः।** अदीयमाना बन्धुहीना यदि स्वयं भर्तारमधिगच्छेत्स्वयंवरं कुर्यात्सा एनः पापं किंचित् न आप्नोति ॥ ९१ ॥

(७) **मणिरामः।** अदीयमाना पित्रादिभिः एनः पापं यं च पतिं सा कन्या अधिगच्छति वरयति सोऽपि पापं न प्राप्नोतीत्यर्थः ॥ ९१–९२ ॥

(९) **भारुचिः।** तस्या ऊर्ध्वं तु ये वरं स्वयं कन्याधिगच्छति तस्या दोषार्थं कन्याया अदोषवचनात् ॥ ९१ ॥

**अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ॥**
**मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥ ९२ ॥**

(१) **मेधातिथिः।** भ्रात्रादिभिर्यदादौ दत्तं स्वयंवरणाभिप्रायं तस्या अजानद्भिस्त-दलङ्करणं तेषामेव प्रत्यर्पयेत्। यदि तु तथाविधाया एव ददाति तदा न त्यागः। तेनास्मै न वयमेनां दास्याम इत्येवमभिप्रायं यद्भूषणां न तस्मिन्नन्यथात्वमापन्ने युक्तम्। **"स्तेनः स्यादिति"** पुँल्लिङ्गेन पाठान्तरम्। वरस्य चौरत्वमाहुः। तस्मात्तेनालङ्कारस्त्या-जयितव्यः ॥ ९२ ॥

(२) **सर्वज्ञनारायणः।** **पित्र्यं** परिणयनात्प्राग्दत्तम्। एवं **मातृकं** भ्रातृदत्तं च ॥ ९२ ॥

(३) **कुल्लूकः।** स्वयंवृतपतिका कन्या वरस्वीकरणात्पूर्वं पितृमातृभ्रातृभिर्दत्त-मलङ्कारं तेभ्यः समर्पयेत्। यदा नार्पयेत्तदा चौरी स्यात् ॥ ९२ ॥

(४) **राघवानन्दः।** स्वयंवरा तु पूर्वं पितृभ्रातृभ्यो लब्धमपि धनं त्यक्त्वा पतिं भजेतेत्याह **अलंकारमिति। पित्र्यं** मातृकमिति भूतपूर्वगत्या। तमलंकारम्। **उक्त-**वैपरीत्ये दोषमाह **स्तेनेति।** ग्रहणे स्तेनत्वं यतः स्वयंवरा स्वदेहमात्रमादाय वरं पतिं वृणीते तस्याः पित्रादिधने नाधिकारः ॥ ९२ ॥

(६) **रामचन्द्रः। यदि** तं मातृभ्रातृदत्तं हरेत्सा **स्वयंवरकन्या स्तेना** चौरप्राया **स्यात्** ॥ ९२ ॥

(९) **भारुचिः।** अन्ये त्वेवमिमं श्लोकं पठन्ति। "नाददीत त्वलङ्कारं पित्र्यं कन्या स्वयंवरे। मातृकं भ्रातृदत्तं वा स्तेनः (ना) स्याद्यदि तं हरेत् ॥" एवं चापाठे पुरुषविषय-श्लोको भवतीति ॥ ९२ ॥

**पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।।**
**स च स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ।। ९३ ।।**

(१) **मेधातिथिः।** शुल्कदेयाया ऋतुमत्याः शुल्कनिषेधोऽयम्। तत्र हेतुः—**स च स्वाम्यादतिक्रामेत्।** "बाल्ये पितुर्वशे तिष्ठेत्" (५।१४८) इत्युक्तम्। वयोन्तरप्राप्तौ चाददतः पितुः स्वाम्यं नास्ति। शुल्कादेयाया अपि हेतोः समानत्वात्पितुः स्वाम्यनिवृत्तिः। केचिदाहुः अमानवोऽयं श्लोकः ।। ९३ ।।

(२) **सर्वज्ञनारायणः।** ऋतुमतीं पित्रा दीयमानामपि। अत्र हेतुः **स चेति**। स पिता स्वाम्याच्छुल्कहेतोरतिक्रामेदपगच्छेत्। ऋतूनां प्रतिरोधनादिति गर्भनिरोधनकृतं पापमपेक्षितम् ।। ९३ ।।

(३) **कुल्लूकः।** ऋतुयुक्तां कन्यां वरः परिणयन्पित्रे शुल्कं न दद्यात् यस्मात्स पिता ऋतुकार्यापत्योत्पत्तिनिरोधात्कन्यायाः स्वामित्वाद्धीयते ।। ९३ ।।

(४) **राघवानन्दः।** आर्षे गोमिथुनं विहितमपि ऋतुमत्यां निषेधति **पित्र इति**। स हि पिता स्वाम्यादतिक्रामेत्स्वाम्यात्प्रच्युतः। ऋतूनां प्रतिरोधनात् ऋतुजापत्यप्रतिरोधात्। ऋतुपर्यन्तं कन्यायाः कन्यात्वं पितुः स्वत्वं च। यतः स्वयंवरा स्वदेहमात्रमादाय वरं वरयतीति पित्राद्यनधीनत्वं 'बाल्ये पितुर्निदेशे तिष्ठे'दित्युक्तेर्दशवर्षादिकालस्य स्वत्वनिवर्तकत्ववदृतुकालस्यापि स्वत्वनिवर्तकत्वात्। ('अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी। दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वले'त्युक्तेः) ।। ९३ ।।

(५) **नन्दनः।** सः पिता ।। ९३ ।।

(६) **रामचन्द्रः।** सः पिता ।। ९३ ।।

(७) **मणिरामः।** स हि पिता ऋतूनां प्रतिरोधनात् ऋतुकार्याऽपत्योत्पत्तिनिरोधनात् स्वाम्यात् अतिक्रामेत् कन्यायाः स्वाम्याद्धीयते, अतस्तस्मै शुल्कं न देयमित्यर्थः ।। ९३ ।।

(९) **भारुचिः।** स्मृत्यन्तरे त्वयं श्लोको न त्वत्र समाम्नायते ।। ९३ ।।

**त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।।**
**त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।। ९४ ।।**

(१) **मेधातिथिः।** इयता कालेन यवीयसी कन्या वोढव्या, न पुनरेतावद्वयस एव विवाह इत्युपदेशार्थः। अथापि न यथाश्रुतवर्षसंख्यैव। किं तर्हि? बहुना कालेन यवीयसी वोढव्या। न ह्येतद्विवाहप्रकरणे श्रुतम्। येन संस्कार्यविशेषणत्वेन तदङ्गकालो दशादिवर्षा पञ्चविंशत्यादिवर्षं च निवर्तयेत्। "ननु च वाक्यान्तरस्थस्याप्यङ्गविधिर्भवत्येव"। सत्यम्; इह प्रकरणोत्कर्षेण पाठादाचार्यस्याभिप्रायान्तरमनुमीयते। तथा शिष्टसमाचारः। सुतस्य च पुनर्दारक्रियायां नैष कालः संभवतीति 'पुनर्दारक्रियां कुर्यात्" इति नोपपद्यते ।। ९४ ।।

रागप्रयुक्तता वानेन श्लोकेन विवाहस्य दर्शिता। धर्मप्रयुक्तत्वे ह्यनधिकृतानां कर्मसु कुतस्तेषां विवाहः ? उपनेयता च जात्यन्धपङ्गूनां वातरेतसः क्लीबस्य दर्शिता। उन्मत्तादयस्तूपनेयाः कुतस्तेषां विवाहः ?

**आदि**ग्रहणं चोक्तविषये चरितार्थम्। यदि हि आदिग्रहणसामर्थ्यात्सर्व एव गृह्येरन् पतितोऽपि गृह्येत। तच्च स्मृतिविरोधान्नेष्टम्।

अथवा कृताध्ययनानां कृतविवाहानामुन्मत्तादिरूपे समुपजाते विधिरेष विज्ञेयः। "ननु च कृतविवाहानां 'यद्यर्थिता तु दारै'रिति नोपपद्यते"। नैतदेवम्; कृतविवाहानां जायार्थितायाः संभवात्। पूर्वैस्तु धर्म्येऽपि विवाहेऽस्य प्रयोजनं दृष्टम्। ततश्च क्लीबस्य स्मार्तेष्वधिकारात्तदर्थो विवाहोऽसत्यामप्यर्थितायां युक्त एव। श्रौतेषु तु जातपुत्रस्याधानात्क्लीबस्य नाधिकारः। यस्य च प्रयोजकत्वं युक्तं तद्दर्शितम् ॥ २०३ ॥

(२) **सर्वज्ञनारायणः।** अर्थितेच्छा तेन दारसंबन्धं लक्षयति **क्लीबादीनामिति।** अतद्गुणसंविज्ञानो बहुव्रीहिः। पतितस्यापि दारकर्मणामनर्हत्वादग्रहणं, तेन जात्यन्धादीनां ग्रहणम्। तेषामुत्पन्नजन्तूनां उत्पन्नापत्यानाम्। तेन पूर्वविभक्तैरपि भ्रातृभिः स्वभागादाकृष्य तत्पितृभागो देयः। क्लीबपतितयोः पूर्वपरिगृहीतदारत्वे तत्र च क्षेत्रजपुत्रोत्पत्तौ तस्य विभागप्राप्तिरिति तु प्रागेव सिद्धम् ॥ २०३ ॥

(३) **कुल्लूकः।** 'कथंचने'त्यभिधानात्क्लीबादयो विवाहानर्हा इति सूचितं; यदि कथंचिदेषां विवाहेच्छा भवेत्तदा क्लीबस्य क्षेत्रज उत्पन्नेऽन्येषामुत्पन्नापत्यानामपत्यं धनभाग्भवति ॥ २०३ ॥

(४) **राघवानन्दः।** क्लीबादेरपत्योत्पत्तौ का गतिस्तत्राह **यदीति।** दारैः कृत्वा अर्थिता पुत्रादौ तदर्थं दारसंग्रहः। उत्पन्नतंतूनां प्राणधारणार्थं केवलमुत्पन्नानाम्। उत्पन्नजन्तूनामिति पाठे नियुक्तक्षेत्रादिना जनितपुत्राणाम्। एषां क्षेत्रजाद्यपत्यं दायमर्हतीत्यन्वयः ॥ २०३ ॥

(५) **नन्दनः।** उत्पन्नानां स्वयं क्लीबानामपि क्षेत्रोत्पन्नापत्यानाम् ॥ २०३ ॥

(६) **रामचन्द्रः।** तद्गुणसंविज्ञानो बहुव्रीहिः। क्लीब आदिर्येषां तेषां क्लीबादीनां दारैः स्त्रीभिर्यदि कथंचनार्थिता चेत् यदि तेषां क्लीबादीनामुत्पन्नतन्तूनां पुत्रपुत्राणाम्। क्लीबस्य क्षेत्रजः संभवत्येव अन्येषां औरसा अपि ॥ २०३ ॥

(७) **मणिरामः।** कथंचनेत्यनेन क्लीबादीनां विवाहानर्हत्वं सूचितं। दारैः अर्थिता विवाहेच्छा। तत्र क्लीबस्य क्षेत्रज उत्पन्ने अन्येषामुत्पन्नाऽपत्यानां यदपत्यं स दायं प्रपितामहधनं अर्हति ॥ २०३ ॥

(९) **भारुचिः।** क्लीबादीनामिति चात्र सामर्थ्यान्न बहुव्रीहौ तद्गुणविज्ञानं भवति। एवं च क्लीबादपरे तु गृह्यन्ते। येन धर्मप्रजार्थं दाराणां सङ्ग्रहः। य(दत)स्तदभ(भा)वात् क्लीबस्य नास्ति सङ्ग्रहः, अपुत्रस्यानधिकारादाधानेन। अथ स्मार्तकर्मापेक्षो दारसङ्ग्रहः। ततः क्लीबस्याप्यत्र ग्रहणं युक्तम्। तद्गुणसंविद्ज्ञानं बहुव्रीहिणा ॥ २०३ ॥

**यत्किंचित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ॥**
**भागो यवीयसां तत्र यदि विद्यानुपालिनाम् ॥ २०४॥**

(१) **मेधातिथिः।** पितृक्रमागतान्मित्राद्राजामात्यपुरोहितादेर्वा क्षेत्राद्वा कयाचिद्युक्त्याऽधिकोत्पत्तिं जनयेत्तत्सर्वेषां साधारणम्। नैवं मन्तव्यं 'मयैतद्बुद्धया पित्रा प्रागनुपार्जितं मयैतल्लब्धं ममैवैतदिति'। **विद्यानुपालिन** इति वचनाद्विद्याजीविनां शिल्पिकारुकप्रभृतीनामेष विधिर्वैद्यनटगायनादीनाम् ॥ २०४॥

(२) **सर्वज्ञनारायणः।** ज्येष्ठो विभक्तः स्वयं विद्याप्रकर्षेणापि लब्धे धने ज्येष्ठो भागं दद्यात्। विद्यानुपालिनस्तद्विद्यानुकुलकुटुम्बवच्चर्चाकारिणः। ज्येष्ठ इति वचनात् कनिष्ठार्जितेऽप्येवंभूतेषु न ज्येष्ठस्याधिकार इति दर्शितम् ॥ २०४॥

(३) **कुल्लूकः।** पितरि मृते सति भ्रातृभिः सहाविभक्तज्येष्ठः किंचित्स्वेन पौरुषेण धनं लभते। ततो धनाद्विद्याभ्यासवतां कनिष्ठभ्रातृणां भागो भवति नेतरेषाम् ॥ २०४॥

(४) **राघवानन्दः।** मृते पितरि स्वपौरुषेणाविभक्तो ज्येष्ठो यदा त्रियात्तत्रापि कनीयसो भागिन इत्याह **यदिति**। ते यदि विद्यानुपालिनः विद्याभ्यासिनः। विद्यानुपालिनामिति क्वचित्पाठः ॥ २०४॥

(५) **नन्दनः।** धनस्य विद्यार्जितस्याविभाज्यत्वं वक्ष्यन् तस्य पुरस्तादपवादमाह **यत्किचिदिति।** धनमत्र विद्यार्जितं विवक्षितं यदि विद्यानुपालिन इति लिङ्गादुत्तरश्लोकानुगुण्याच्च कनिष्ठाविद्याधिगते विद्याधने विद्यानुपालिनामपि ज्येष्ठानां न भागः। 'ज्येष्ठग्रहणाद्यवीयसा'मिति वचनाच्च ॥ २०४॥

(६) **रामचन्द्रः।** पितरि प्रेते यत्किंचिद्धनं ज्येष्ठः अधिगच्छति अविभक्तः सन् प्राप्नोति यदि विद्यानुपालितः ॥ २०४॥

(७) **मणिरामः।** अधिगच्छति स्वेन पौरुषेण धनं लभते तस्मात् धनात् विद्याऽनुपालिनः(नां) विद्याभ्यासवतां यवीयसां कनिष्ठानां भागो भवति, नाऽन्येषां, कनिष्ठानामित्यर्थः ॥ २०४॥

(९) **भारुचिः।** ज्येष्ठलब्धस्य वैद्या(?)स्सन्तो भागिनो यवीयांसः। न तु कनिष्ठलब्धस्य। ज्यायानित्येतदर्थालम्भ... ॥ २०४॥

**अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ॥**
**समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥ २०५॥**

(१) **मेधातिथिः।** **अविद्या** 'कृषिवाणिज्यराजोपसेवादि'। तत्र ईषन्न यूनाधिकभावो न गणयितव्यः। तत्रापि यदि केनचिदपि बह्वर्जितं तदाऽस्त्येवाऽविभागता। ज्येष्ठस्य तु ज्येष्ठांशनिषेधार्थं वचनम्। **ईषदाधिक्ये** तु सर्वेषां समांशकल्पना। **अपित्र्य इति** हेतुवचनादनपत्यधनस्याप्येष एव विधिः ॥ २०५॥

(२) **सर्वज्ञनारायणः**। यदि सर्व एव निर्विद्याः ईहात इतस्ततो गमनेन पितृधनक्षतिं विना धनमर्जितवन्तः। **अविद्यानामिति**। यदि सर्व एव निर्विद्याः यदि तु पितृधनेन वाणिज्यादिनार्जितं धनं तदा ज्येष्ठोद्धारोऽदेय इत्याह **अपित्र्य इति** ।। २०५ ।।

(३) **कुल्लूकः**। सर्वेषां भ्रातॄणां कृषिवाणिज्यादिचेष्टया यदि धनं स्यात्तदा पित्र्यवर्जिते तस्मिन्धने स्वार्जिते समो विभागः स्यान्न तूद्धारः, अपित्र्य इति निश्चयः ।। २०५ ।।

(४) **राघवानन्दः**। तद्रहितानामपि धनाद्यर्थमीहमानानां समो भाग इत्याह **अविद्यानां चेति**। अपित्र्ये पितृधनातिरिक्ते तस्मिंस्तु सोद्धारादिविषमविभाग उक्त इति। धारणा शास्त्रमर्यादा। तेन विद्यानभ्यासिनामनीहमानानां च न तादृग्धने विभाग इति भावः ।। २०५ ।।

(५) **नन्दनः**। ईहातः कृष्यादिचेष्टातः सर्वेऽपि यथासामर्थ्यं हरन्ति चेत्सर्वो हि विभागः स्यान्नान्यथेति अपित्र्येऽपितृकृते, पितृकृतस्य तु विभागवैषम्यमभ्यनुज्ञातमेव अत्र ईशनस्य(?) धनस्य समविभागवचनात्पूर्वस्मिन् श्लोके यवीयसां विद्याधनेषु समन्वयमात्रमभिहितं न स्वाम्यमित्यवगन्तव्यम् ।। २०५ ।।

(६) **रामचन्द्रः**। अविद्यानां सर्वेषां ईहातो वाणिज्यादिना चेद्धनं भवेत् समस्तत्र विभागः स्यात् अपित्र्य इति धारणा ।। २०५ ।।

(७) **मणिरामः**। ईहातः कृषिवाणिज्यादिचेष्टया चेज्ज्येष्ठः कनिष्ठो वा धनमुत्पादयति तदा अविद्यानामपि सर्वेषां अपित्र्ये स्वार्जिते तस्मिन् धने समविभागः स्यात्; नतूद्धार इत्यर्थः ।। २०५ ।।

(९) **भारुचिः**। ईहातश्चेष्टातः कृष्यादित इत्यर्थः। सर्वे चेच्चेष्टन्ते समस्तत्र विभागः स्यान्न तु गुणापेक्षः कश्चिद्विभागकल्प आश्रयितव्यः ।। २०५ ।।

**विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।।**
**मैत्र्यमौद्वाहिकं चैव माधुपर्किकमेव च ।। २०६ ।।**

(१) **मेधातिथिः**। विद्यया अध्यापनादिना शिल्पकौशलेन वा। तथा मित्रात् अर्जितम्। **औद्वाहिकं चैव माधुपर्किक**मार्त्विज्येन। यद्यप्येतदपि विद्याधनं भवति तथापि याजनेन निमित्तेनोपादीयमानत्वाद्भेदेन व्यपदिश्यते। श्वशुरगृहलब्ध**मौद्वाहिकम्**। अपरे उद्वाहनिमित्तेन यद्धनं लभ्यते ।। २०६ ।।

(२) **सर्वज्ञनारायणः**। विद्याधनं विद्याया धनं, एतच्च भ्रातॄणां तद्विद्यानुपालिनः तद्विद्यानुकूलपालित्वेऽपि ज्येष्ठस्य कनिष्ठेन विद्यया लब्धे। मैत्रं मित्रात्प्राप्तम्। औद्वाहिकं भार्याबन्धुभ्यो लब्धम्। माधुपर्किकं स्नातकत्वादिनार्हणार्थं दत्तान्मधुपर्काल्लब्धम् ।। २०६ ।।

(३) **कुल्लूकः**। विद्यामैत्रीविवाहार्जितं माधुपर्किकं मधुपर्कदानकाले पूज्यतया यल्लब्धं तस्यैव तत्स्यात्। 'यत्किंचित्पितरी' (९।२०४)त्युक्तदायमपवादः। विद्याधनं च व्याहृतं **कात्यायनेन** 'परभक्तप्रदानेन प्राप्ता विद्या यदान्यतः। तया प्राप्तं च विधिना विद्याप्राप्तं

तदुच्यते। उपन्यस्ते च यल्लब्धं विद्यया पणपूर्वकम्। विद्याधनन्तु तद्विद्याद्विभागे न विभज्यते॥ शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्॥ विद्याधनन्तु तत्प्राहुर्विभागे न विभज्यते॥' अतो यन्मेधातिथि-गोविन्दराजाभ्यां माधुपर्किकमार्त्विज्यधनं व्याख्यातं—तदयुक्तम्; विद्याधनत्वात्॥ २०६॥

(४) **राघवानन्दः**। अविभक्तैरपि विद्याद्युपार्जितं धनं न विभजनीयमित्याह **विद्याधन**-मिति। 'शिष्यादार्त्विज्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात्। अज्ञातशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनं तु तद्विद्याद्विभागे न विभज्यते' इति **कात्यायनो**क्तेः। विद्याधनं सप्तधा आर्त्विज्यतः आर्त्विज्यं कृत्वा। प्रश्नात् प्रश्नेन परितोष्य। स्वज्ञानशंसनात् खण्डनादज्ञानस्य। प्राध्ययनाद्विद्यार्जितगुणविशेषादित्यर्थः, मैत्रम् मित्रतो लब्धम्। माधुपर्किकं तत्संबन्धि राजतपात्रादि। तथा च **याज्ञवल्क्यः** (व्य. ११८) 'पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्॥ मैत्रमौद्वाहिकं चापि दायादानां न तद्भवेत्॥' पितृद्रव्याविरोधेनेत्यस्यायमर्थः,—पित्रा शरीरमात्रोद्धरितः सन्यद्धनं संचिनोति तत्कस्मैचिन्न देयं। नतु पितृद्रव्यमुपजीव्य यदर्जितमिति॥ २०६॥

(५) **नन्दनः**। विद्याधनं प्रवचनशिल्पार्जितं। मैत्र्यं मित्रतो लब्धं। औद्वाहिकं विवाहकाले लब्धं। माधुपर्किकं मधुपर्ककाले लब्धम्॥ २०६॥

(६) **रामचन्द्रः**। मैत्र्यं मित्रात् प्राप्तम्, औद्वाहिकं पारिबर्हम्। माधुपर्किकं मधुपर्ककाले प्राप्तम्॥ २०६॥

(७) **मणिरामः**। माधुपर्किकं मधुपर्कदानकाले पूज्यतया यल्लब्धं॥ २०६॥

(९) **भारुचिः**। औद्वाहिकग्रहणेन सर्वं श्वशुरगृहाल्लब्धं गृह्यते॥ २०६॥

**भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा॥**
**स निर्भाज्यः स्वकादंशात्किंचिद्दत्त्वोपजीवनम्॥ २०७॥**

(१) **मेधातिथिः**। ये भ्रातरः सह वसन्ति विद्यमानपितृधनाश्च कृष्यादिना व्यवहरन्ति तेषां यद्येको न व्यवहरेत्तस्येयं निर्भाज्यता पठ्यते, **स निर्भाज्यः स्वकादंशादिति**। भागान्नेतव्योऽपसारयितव्यः। **स्वकादंशाद्या**वदधिकं तदीयाद्धनाद्व्यवहारेणोत्पन्नं तत्तस्य न दातव्यं, न तु मूलधनस्य पैतृकस्य निषेधः। तत्रापि न सर्वेण सर्वं निर्भाज्यं, किंचिदन्योपजीवनं क्लेशफलमात्मनो गृहीत्वा शिष्टमस्मै दातव्यम्। अथवा **निर्भाज्यः** पृथक्कार्यः सह वस्तुं न देयम्। कदाचिदुत्तरकालशक्तिसाधारण्येन धनेनार्जितत्वात्समांशता। तत्र भागकल्पना **नारदेन** दर्शिता। तत्र वचनेनोद्गतस्य निर्गतस्य भूयान्भागो गृह्यतेऽनुक्तस्य स्वल्प इति॥ २०७॥

(२) **सर्वज्ञनारायणः**। भ्रातॄणां मध्ये यो नेहेत नेच्छेत दत्तं पित्र्यधनादंश उपजीवनं धनं किंचिद्दत्वा निर्भाज्यो विभक्तः कर्तव्यो भ्रातृभिः स्वधनात्॥ २०७॥

(३) **कुल्लूकः**। राजानुगमनादिकर्मणा यो धनमर्जितुं शक्तो भ्रातॄणां साधारणं धनं नेच्छति स स्वीयादंशात्किंचिदुपजीवनं दत्वा भ्रातृभिः पृथक्कार्यः। तेन तत्पुत्रास्तत्र धने कालान्तरे न विवदन्ते॥ २०७॥

(४) **राघवानन्दः।** यस्तु प्रकारान्तरेण जीवितुं शक्तो यदि नेहेत नांशमिच्छेत्तस्मै किंचिद्दत्वा विभजेदित्याह **भ्रातॄणामिति।** निर्भाज्यः [ निर्गतभागः उपजीवनं तदपेक्षितम् ।]* दानं तु तत्पुत्रादिदायनिवृत्त्यर्थमिति भावः ।। २०७ ।।

(५) **नन्दनः।** निर्भाज्योऽभागः ।। २०७ ।।

(६) **रामचन्द्रः। भ्रातॄणामिति।** योऽत्र स्वाधिकारी अलोभान्न जिघृक्षति तं प्रत्याह । **भ्रातॄणां** सकाशात् यः भ्राता धनं न ईहेत न स्वीकुर्यात् सः स्वकादंशात् निर्भाज्यः नितान्तं भाज्यः दापनीयः किंचिद्दत्वोपजीवनं किंचित् असारं तस्मै दत्वा सः विभक्तः कर्तव्यः। कीदृशः ? यः स्वकर्मणा उद्यमोपार्जितद्रव्येण शक्तः पूर्णः ।। २०७ ।।

(७) **मणिरामः।** स्वकर्मणा राजसेवादिना यः धनं अर्जितुं शक्तः सन् धनं भ्रातॄणां साधारणधनं नेहेत नेच्छति स स्वकादंशात् किंचित् उपजीवनं दत्वा निर्भाज्यः भ्रातृभिः पृथक्कार्यः। तेन तत्पुत्रास्तत्र धने कालांतरे न विवदंते ।। २०७ ।।

(९) **भारुचिः।** अददतामर्पितुं नैव विरोधोऽस्ति ।। २०७ ।।

**अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् ।।**
**स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ।।२०८।।**

(१) **मेधातिथिः।** विद्यानिमित्तस्य स्वयमर्जितस्यादानमुक्तम् । अनेन व्यतिरिक्तस्य कृष्यादिलब्धस्यादातव्यतोच्यते। "ननु चायमेव श्लोको वक्तव्यः–'**स्वयमीहितेन** स्वयं चेष्टया यल्लब्धं तन्नाकामो दातुमर्हतीति' किं विद्याधनादिश्लोकेन ?" उच्यते –मैत्रे विवाहादौ न सर्वस्य स्वयमीहोपपत्तिरिति भेदेन व्यपदेशः ।। २०८।।

(२) **सर्वज्ञनारायणः।** श्रमेणातिश्रमजन्यकर्मणा स्वयमीहितेन स्वमात्रोद्यमेन लब्धं नाकामो दातुमर्हति यावदिच्छति तावत्किंचिद्दद्यान्नतु समभागनियमः, श्रमेणेत्युक्तत्वात् । अश्रमार्जिते प्रागुक्तः समभागः ।। २०९ ।।

(३) **कुल्लूकः।** पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्जयेत्तत्स्वचेष्टाप्राप्तमनिच्छन्भ्रातृभ्यो दातुं नार्हति।। २०८।।

(४) **राघवानन्दः।** तत्र दद्युरित्याह **अनुपघ्नन्निति।** अनुपघ्नन् अनुपजीवन्। ईहितं लब्धं। विद्यया प्राप्तं। तत्तु व्याख्यातं पूर्वयाज्ञवल्क्यव्याख्याकाले ।। २०८ ।।

(५) **नन्दनः।** अनुपघ्नन्हिंसननपाश्रयन्निति(?) वा श्रमेण कृष्यादिकर्मणा पूर्वत्र सर्वेषु यथासामर्थ्यमीहमानेषु भ्रातृषु समविभाग उक्त इत्यत्राविरोधोऽनुसन्धेयः ।। २०८ ।।

(६) **रामचन्द्रः।** पितृद्रव्यं अनुपघ्नन् अव्ययं कुर्वन् स्वयमीहितलब्धं स्वव्यापारेण लब्धं यत् तत् अकामः सन् दातुं नार्हति।। २०८ ।।

(७) **मणिरामः।** पितृद्रव्यं अनुपघ्नन् पितृधनाऽनुपघातेन यत् श्रमेण कृष्यादिक्लेशात् उपार्जितं तत् स्वोद्यमेन प्राप्तं अकामः अनिच्छन् भ्रातृभ्यो दातुं न अर्हति, तत्रान्येषां सत्ताभावादित्यर्थः ।। २०८ ।।

**पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।।**
**न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ।।२०९।।**

**(१) मेधातिथिः।** ग्रहणादन्यदर्थयन्पिता **स्वयमर्जितं** तदाकामो न विभजनीयोऽधिकारप्राप्तैरपि पुत्रैः। "कः पुनर्जीवति पितरि पुत्राणां विभागकालः?"। उच्यते—यदा तावत्स्वयं पिता पुत्रान्विभजते। तदुक्तम्—"निवृत्ते रजसि मातुर्जीवति वेच्छतीति" (गौ० २८। २) तथा "मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते चापि रमणे पितर्युपरतस्पृहे" (नारद० १३।३) इति।

अन्यथा तु यदैव प्राप्ताः पुत्रा भवन्ति तदैव ते पितामहधनस्येशते। तथा चोक्तं—"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः" (या० स्मृ० व्य० १२१) इति।।

सत्यपि च पुत्रस्य स्वाम्ये यावदप्राप्तास्तावत् सर्वथा विशेषाभावात्सर्वे पितामहधनभाजः स्वत्वपूर्वकत्वाद्विभागस्य। बन्धक्रयादिक्रियासु पितृधनं जातपुत्रेण न नियोक्तव्यम्। योगकुटुंबभरणादौ तु विनियोगो दर्शितः। आचारेण सत्यपि चास्यामवस्थायां पुत्राणां स्वाम्ये 'पित्रा चाकामेन विभक्तानिति' निन्दादर्शनाद्बलाद्विभाजयन्तः पापा इत्यनुमीयते। यथाऽसत्प्रतिग्रहेण भवति स्वाम्यं दोषस्तु पुरुषस्य। तेनान्वयागतमितीदृशमशुद्धमेव। अतः संभवत्युपायान्तरे न पिताऽर्थनीयः। अधर्मो हि तथा स्यात्।

स्वयमर्जितमपि धनमधिकारप्राप्तान्गुणवतः पुत्रान् ज्ञात्वा विभक्तव्यमेव। उक्तं च—"वयसि स्थितः पिता पुत्रान्विभजेत् ज्येष्ठं श्रेष्ठांशेनेतरान्समैरंशैः' इति। न चैतत्पितामहधनविषयम्। न हि तत्र पिता ज्येष्ठस्याधिकांशदानाय प्रभवति। तुल्यत्वादुभयोः स्वाम्यस्य।

यत्त्विदं "न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः" (याज्ञ० व्य० ११६) इति तत्पितामहेऽपि स्वल्पया मात्रयेच्छन्ति। यत्र न परिपूर्णं भागद्वयं गृहीतं स्वयमर्जितविषये ह्यपवाद एव स्यात्।। २०९।।

**(२) सर्वज्ञनारायणः।** पैतृकं स्वपितृसंबन्धि अनवाप्तं स्वोद्यमेनापि स्वपित्रा प्राप्नुयायात् महता यत्नेन। अकामो न विभजेन्न विभजेत। एवं च स्वयमतिप्रयत्नाऽनुपार्जितं पितृद्रव्यं पुत्राणामिच्छयापि विभजेदित्युक्तम्। ततः परं च 'तत्र स्यात्सदृशं स्वाम्य'-(व्यव. १२१) मिति **याज्ञवल्क्य**वचनम् ।। २०९ ।।

**(३) कुल्लूकः।** यत्पुनः पितृसंबन्धि धनं तेनासामर्थ्येनोपेक्षितत्वादनवाप्तं पुत्रः स्वशक्त्या प्राप्नुयात्तत् स्वयमर्जितमनिच्छन्पुत्रैः सह न विभजेत्।। २०९ ।।

**(४) राघवानन्दः।** यद्धनं पितृपितामहादिसंबन्धि अथ केनापि बलवता न लब्धं पश्चात्पित्रा लब्धं स्वयमर्जितं तदेव तदकामः पिता न पुत्रेभ्यो विभजेदित्याह **पैतृकमिति**।

**याज्ञवल्क्योऽ**प्याह। क्रमादभ्यागतं द्रव्यं हृतमप्युद्धरेत्तु यः। दायादेभ्यो न तद्द्याद्विद्यया लब्धमेव च।' एतत्पुत्राणां समुत्थानकृतविभागे। स्वयंकृतविभागे तु 'विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतानि'ति। दायादेभ्यः स्वपुत्रेभ्यः॥ २०९॥

(५) **नन्दनः**। अनवाप्तमन्यैरपहृतत्वात्स्वयं पित्रा पूर्वप्रत्युत्पन्नं स्वयमाप्नुयात्प्रत्यापद्य भजेत् स्वयमर्जितत्वादित्यर्थः। एवं वदता पितामहादिधनस्य विभागकाले पित्रा पुत्रैः सह सममेवावश्यं विभाज्यमित्यर्थादुक्तं भवति॥ २०९॥

(६) **रामचन्द्रः**। पैतृकं द्रव्यं पिता यत् अनवाप्तं स्वपित्र्यं स्वपुत्रादिभिः अनवाप्तं यत् आप्नुयात् स्वयमर्जितं अकामः सन् तत् पुत्रैः सार्धं न भजेत्॥ २०९॥

(७) **मणिरामः**। यत्पुनः पैतृकं पिता द्रव्यं पितृसंबंधि धनं। अनवाप्तं असामर्थ्यात् पित्रा न प्राप्तं। पुत्रः स्वसामर्थ्येन प्राप्नुयात् तत्स्वयमर्जितं पितृधनं अकामः अनिच्छन् पुत्रैः सह न विभजेत्॥ २०९॥

(९) **भारुचिः**। पितामहधनस्येतरेऽपीशत इत्यनया शङ्कया प्रतिषेधः। अनेन च दर्शनेन सत्यां विभागप्रतिपत्तौ वित्तं विभजनीयं॥ २०९॥

**विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि।**
**समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥२१०॥**

(१) **मेधातिथिः**। स्पष्टार्थः श्लोकः। विभागधर्मे विभागस्योद्धारप्रत्याशङ्कानिवृत्त्यर्थं, "अपित्र्य इति धारणे"ति (९।२०५) वचनात्। पित्र्यस्य सर्वधनस्योद्धारः। इह तु भूतपूर्वगत्या पित्र्यं नास्तीत्याशङ्कया वचनम्॥ २१०॥

(२) **सर्वज्ञनारायणः**। विभक्ताः पूर्वं पुनर्धनं संगृह्य जीवन्तो यदि पुनर्विभागं कुर्युः। समो नतु ज्येष्ठोद्धारदानम्। ज्यैष्ठ्यं ज्येष्ठलभ्य उद्धारः॥ २१०॥

(३) **कुल्लूकः**। पूर्वं सोद्धारं निरुद्धारं वा विभक्ता भ्रातरः पश्चादेकीकृत्य धनं सह जीवन्तो यदि पुनर्विभागं कुर्वन्ति तदा तत्र समो विभागः कार्यः, ज्येष्ठस्योद्धारो न देयः॥२१०॥

(४) **राघवानन्दः**। प्रथमं पितृकृतविभागांस्तदुत्तरमेकीभूतान् संसृष्टिनः पुनरपि भागेच्छून्प्रत्याह **विभक्ता इति**। ज्यैष्ठ्याभावतात्पर्यकमिति॥ २१०॥

(५) **नन्दनः**। अथ संसृष्टीनां विभागे विशेषमाह **विभक्ताः सह जीवन्त इति**। विभजेरन्संसृष्टिभिः पुनरर्जितद्रव्यं ज्यैष्ठ्यं ज्येष्ठेन दत्तो विभागातिशयः एवं वदता प्रथमविभागे ज्येष्ठस्य भागातिशयपक्ष एवादरणीय इति॥ २१०॥

(६) **रामचन्द्रः**। पूर्वं विभक्ताः पश्चात्सह मिलित्वा जीवन्तो यदि पुनर्विभजेरन्॥ २१०॥

(७) **मणिरामः**। विभक्ताः पूर्वं सोद्धारं निरुद्धारं वा कृतविभागा भ्रातरः पश्चादेकीकृत्य सह जीवंतः॥ २१०॥

(९) **भारुचिः ।** पित्रा पुत्रविभागस्यैतद्दर्शनं जीवत्पितृकाणामस्ति विभाग इत्येतद्दर्शयति संसृष्टानां यो ज्येष्ठः नासौ ज्येष्ठं गृह्णीयात् । यत्र तु ज्येष्ठस्सह ज्येष्ठांशेन सम्पूज्यते तत्र पुनरस्य ज्येष्ठांश उद्ध्रियते ।। २१० ।।

**येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।।**
**म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ।। २११ ।।**

(१) **मेधातिथिः । येषां** भ्रातॄणां **ज्येष्ठः कनिष्ठो वा** भ्रातांश**प्रदानाद्धीयते ।** 'अंश-प्रदानं' विभागकालः । 'हीयते' पातित्याद्यविभागार्थं च हेतुमासादयेत् । **म्रियेत** वा । **तस्य भागो न लुप्यते ।** तस्येयं प्रतिपत्तिः ।। २११ ।।

(२) **सर्वज्ञनारायणः ।** हीयेत विभागानन्तरोत्पन्नक्लीबत्वादिना म्रियेतान्यतरो विभागा-नन्तरं तस्य भागो यः पूर्वं व्यवस्थितः स न लुप्यते न सर्वैर्विभज्य लोप्यः ।। २२१ ।।

(३) **कुल्लूकः ।** येषां भ्रातॄणां मध्ये कश्चिद्विभागकाले प्रव्रज्यादिना स्वांशाद्धीयेन्मृतो वा भवेत्तस्य भागो न लुप्येत् ।। २११ ।।

(४) **राघवानन्दः ।** तथाविधेषु यदि कश्चित्प्रव्रजेन्म्रियेत वा तदंशं सर्वे **सहोदरा वि-भज्य** गृह्णीयुरित्याह **येषामिति** द्वाभ्याम् । न लुप्यते किंतु यथायोगं विभज्यत इत्याह **सोदर्या** इति । अनूढभगिन्याः अस्य तात्पर्यमाह **याज्ञवल्क्यः** (व्यव० १३८) 'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्यादपहरेच्चांशं जातस्य च मृतस्य च' ।। तत्रापि 'अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरे'दिति ।। संसृष्टी तु विभक्तोऽत्र पुत्रपितृभ्रात्रैकत्र संस्थितः ।। पितृव्येनाथवा प्रीत्या स तु संसृष्ट उच्यत'इत्युक्तः । भगिन्योऽनूढाश्चेत्तस्य पुत्रपत्नीदुहितृपितृमात्रभावे ।। २११–२१२ ।।

(५) **नन्दनः ।** अंशप्रदानतो वा हीयेत दूरं प्रोषितत्वात् पतितो वा स्यात् ।। २११ ।।

(६) **रामचन्द्रः ।** येषां भ्रातॄणां मध्ये ज्येष्ठः कनिष्ठो वा अंशः प्रदानतः हीयेत सन्यस्य यतित्वादिना स्वयं भागं नाप्नोति शुद्धो वा अन्यतरः मध्यमः म्रियेत वा तस्य भागो न लुप्यते ।। २११ ।।

(७) **मणिरामः ।** अंश–प्रदानतः हीयेत-विभागकाले प्रव्रज्यादिना स्वांशात् हीयेत मृतो वा भवेत् न तस्य भागो लुप्यते ।। २११ ।।

(९) **भारुचिः ।** प्रोषितस्य मृतस्य वा भागमुद्धृत्य ।। २११ ।।

**सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।।**
**भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ।। २१२ ।।**

(१) **मेधातिथिः । सोदर्या भ्रातरो** येषां संसृष्टार्थे, ते गृह्णीयुः । **भगिन्यश्च सनाभयः ।** सोदर्या अप्रत्तास्ता हि सनाभिव्यपदेश्याः । प्रत्ताः पुनः पतिगोत्रभावमनुभवन्तीति न भ्रातॄणां 'सनाभयः' । **ये च संसृष्टा इति । च**शब्दो भगिनीं समुच्चिनोति । न त्वियमाशङ्का

कर्तव्या–"सोदर्या गृह्णीयुर्ये च भ्रातरः संसृष्टा" इति । तथा सत्यसोदर्याणामपि संसृष्टानां भागः प्रसज्येत । सन्त्येव सोदर्या असंसृष्टाः संसृष्टाश्च । संसृष्टा असंसृष्टाश्च सोदर्या यत्र सन्ति, तत्रोभयोरपि विभागेन विभागं गृह्णीयुः । न चेदं विरुध्येत । "अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् । असंसृष्टोऽपि वा दद्यात्सोदर्यो नान्यमात्रिकः" (याज्ञ० २।१३९) ।। अस्यायमर्थः –सापत्नो भ्राता सत्यपि संसृष्टित्वे न गृह्णाति । यदा सोदर्योऽसंसृष्टोऽपि विद्यते सोदर्याणां मध्याद्येन संसृष्टः स एव नान्यः, सत्यपि सोदर्यत्वे । तदुक्तं—"संसृष्टिनस्तु संसृष्टी सोदर्यस्य तु सोदरः" (याज्ञ० २।१३४) इति । यदा तु सोदरा नैव सन्ति तदा यैरेव सापत्नैः संसृष्टस्त एव गृह्णीयुर्न त्वितरे । सोदर्यविभक्तानां सह वसतां महानिकटमावसत्यपि सान्निध्यं विशेषकार्यं सामान्योत्थं विभक्तानामपि विज्ञायत इत्याहुः । तेन विभक्तानामप्यन्यतरप्रमेये सोदर्य एव गृह्णीयान्नास्य भागः परिलुप्यते । न चैतच्चोदनीयं "नैवास्य तदानीं भाग उत्थितः परलोको वा चिन्त्यते ।" यत उक्तम्— "समुत्पन्नो वाच्यः स्वामीति" । "अनीशास्ते हि जीवतोः" (९।१०४) इति तत्र पितुरूर्ध्वं समनन्तरमेव पुत्राणां स्वाम्यं दर्शयति ।। २१२ ।।

(२) **सर्वज्ञनारायणः** । यत्कार्यं तदाह **सोदर्या इति** । संसृष्टिनः सोदराः सापत्ना वा । सनाभयः सोदराः । तत्र च संसृष्टिसोदरसद्भावे तस्यैव तत् । तद*भावे सापत्नस्यापि संसृष्टिनः तदभावे भगिनीनां सोदर्याणां तदभावे तद्भ्रातृभ्रातृपुत्राणां तदभावे त्वसोदरादेरपि । एतच्च सर्वं पुत्रपत्नीदुहितृमातृपित्रभावे, तत्सद्भावे तु तेषामेव । केचित्तु वचनद्वयमेतत्प्राप्तविभागस्य क्षीरादेर्विभागाद्वा प्रागेव मृतस्य विभागकाले भागमाकृष्य सोदरादिभिर्ग्राह्यमित्येतत्पदं व्याचक्षते । अपरे तु विभक्ता एव यदि पुनः संसृष्टास्तन्मध्ये एकस्य भ्रातुर्मरणे तद्भागव्यवस्था श्लोकद्वयेन दर्शितेत्याहुः ।। २१२ ।।

(३) **कुल्लूकः** । किन्तु सोदर्या भ्रातरः समागम्य सहिता भगिन्यश्च सोदर्यास्तमंशं समं कृत्वा विभजेरन्सोदर्याणां सापत्न्यानामपि मध्यात् ये मिश्रीकृतधनत्वेनैकयोगक्षेमास्ते विभजेयुः समं सर्वे सोदर्या सपत्न्या वा । एतच्च पुत्रपत्नीपितृमातृभावे द्रष्टव्यम् ।। २१२ ।।

(५) **नन्दनः** । सोदर्या भ्रातरो विभागकाले सहिता भूत्वा समेत्यैकमत्यमुपागम्य तं प्रोषितप्रव्राजितादिभ्रातृभागं संविभजेरन् सोदराभावे संसृष्टास्तदभावे सनाभयो भगिन्यः समविभागविषयत्वादेवास्य संसृष्टिविभागोऽनन्तरमुक्तः । न पुनः संसृष्टिविषयत्वेन अपुत्रभ्रातृविभागविषयं चैतत्स्मृत्यन्तरानुगुण्यात् ।। २१२ ।।

(६) **रामचन्द्रः** । सोदर्याः सहिताः समेत्य समं भजेरन् ये च सापत्नभ्रातरः संसृष्टाः च पुनः भगिन्यश्च सनाभयः सहोदरभगिन्यः समम् ।। २१२ ।।

(७) **मणिरामः** । तर्हि किं स्यादत आह **सोदर्या इति** । सोदर्या भ्रातरो भगिन्यश्च सोदर्या ये च संसृष्टाः सापत्नानामपि मध्यादेकीकृतधनाः ते तं अंशं पृथक्कृत्य समं विभजेयुः, नत्वन्येषां तत्र संबंध इत्यर्थः । इदं च तस्य पुत्राद्यभावविषयं बोध्यं ।। २१२ ।।

(९) भारुचिः। भागं ते विभजेरन्, न सापत्नाः। सति तु संसारे ये संसृष्टास्ते विभजेरन्, न सोदर्या अप्यसंसृष्टाः ॥ २१२ ॥

**यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः ॥**
**सोऽज्येष्ठः स्यादभागश्च नियंतव्यश्च राजभिः ॥ २१३ ॥**

(१) **मेधातिथिः। विनिकारो** राजपूजादिष्ववज्ञा परे धनेन वचनम्। **अज्येष्ठो** बन्धुवत्पूज्य इत्युक्तम्। न सर्वेण सर्वे ज्येष्ठवृत्तिनिषेधः। **अभागकत्वं** च ज्येष्ठांशानर्हत्वम्। **नियन्तव्यम्,** अविशेषोपदेशात्। वाग्दण्डधिग्दण्डाभ्यां धनं चार्थानुरूपेऽपराधे ॥२१३॥

(२) **सर्वज्ञनारायणः।** विनिकुर्वीत लुप्तभागानल्पभागान्वा कर्तुं यतेत। अज्येष्ठो ज्येष्ठोचिताभिवादनाद्यनर्हः। एवं च ज्येष्ठ इत्यभिधानान्न कनिष्ठानां लुब्धत्वकरणेऽभागत्वमिति ग्राह्यम् ॥ २१३ ॥

(३) **कुल्लूकः।** यो ज्येष्ठो भ्राता लोभात्कनीयसो भ्रातॄन्वंचयेत् स ज्येष्ठभ्रातृपूजाशून्यः सोद्धारभागरहितश्च राजदण्डयश्च स्यात् ॥ २१३ ॥

(४) **राघवानन्दः।** लोभादिना ज्येष्ठस्य कनीयस्त्यागे राजदण्डमाह **य इति। विनि-कुर्वीत** निःसारयेत्। अज्येष्ठः ज्येष्ठत्वेन या पूजा तच्छून्यः। अभागः पितृधनाद्य-पात्रम् ॥ २१३ ॥

(५) **नन्दनः।** एवं ज्येष्ठस्य संसर्गादिविषये समविभागत्वमुक्त्वेदानीं तस्य क्वचिद्विषयेऽभागत्वमाह **यो ज्येष्ठो विनिकुर्वीतेति।** विनिकुर्वीत निराकुर्वीतेति ॥ २१३ ॥

(६) **रामचन्द्रः।** यो ज्येष्ठो लोभाद्यवीयसो भ्रातॄन् विनिकुर्वीत परिभवेत् सोऽज्येष्ठो ज्येष्ठवत्पूजार्हो न भवति। च पुनः अभागः अधिकांशहरो न ॥ २१३ ॥

(७) **मणिरामः।** यवीयसः विनिकुर्वीत लोभात्कनीयसो भ्रातॄन् वंचयेत् ॥ २१३॥

(९) **भारुचिः।** विनिकरणमन्यायेन यवीयसा न्यक्करणम्। धनोपयोगश्च तान-तिसन्धाय। अर्थाच्च कनिष्ठोऽपि नियन्तव्य इत्यापद्यते ॥ २१३ ॥

**सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ॥**
**न चादत्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥ २१४ ॥**

(१) **मेधातिथिः। विकर्मस्थाः** प्रतिषिद्धाचरणाः। कुटुंबार्थे चानुतिष्ठमानानां तेषामन्येषां भ्रातॄणां संबन्ध्युपविष्टं स्थापयेत् यदा ते वक्ष्यन्ते 'कुतस्तद्धनमिति तदा मूलं दर्शयिष्यामीति' तादृशं वृद्धिसहितमपि सर्वेषामपि दापयेत्। यदि तु तस्मिन्नेव काले भ्रातॄणां दर्शयेत् 'इदमधिकं दृश्यते तद्यथांशं गृह्णीताहमपि स्वतस्तत्पृथक्कृत्य वृद्धिं नेष्यामीति' तदा नास्ति तेषां भागः। तस्यैव तद्यौतकम् ॥ २१४ ॥

(२) **सर्वज्ञनारायणः**। विकर्मस्था ब्राह्मणाः सन्तो गोरक्षणशूद्रसेवादिकुवृत्तिपराः। **नचेति**। यौतकं पित्रर्थादन्यत्कृतं पृथग्भूतं स्वार्थव्ययं पितृधनात्कनिष्ठेभ्यस्तावददत्वा न कुर्वीत। **ज्येष्ठ इति**। तत्कुटुम्बव्ययचिन्ताकारिपरम् ।। २१४ ।।

(३) **कुल्लूकः**। अपतिता अपि ये भ्रातरो द्यूतवेश्यासेवादिविकर्मासक्तास्ते रिक्थं नार्हन्ति। नच कनिष्ठेभ्योऽननुकल्प्य ज्येष्ठः साधारणधनादात्मार्थमसाधारणधनं कुर्यात् ।। २१४ ।।

(४) **राघवानन्दः**। विकर्मस्थानां जीवनमात्रं नांश इत्याह **सर्व इति**। **विकर्मस्थाः** द्यूतपानाद्यासक्ताः [ द्यूते संबन्धिने कथनमस्येति यौतकं सर्वसाधारणधनादात्मार्थमसाधारण-करणमिति ] ।। २१४ ।

(५) **नन्दनः**। विकर्मस्था विप्रतिषिद्धकर्मप्रधानाः कनिष्ठेभ्यो भागं दत्वा ज्येष्ठः स्वदुहितुः स्त्रीधनं न कुर्वीत। न दद्यादशेषपितृधनग्राहिणा कनिष्ठेन समविभक्तेन ज्येष्ठेन भ्रातृसाधारणाद्धनात् दुहितृयौतकं देयं विभज्यत्वादंशादेवमिति भावः ।। २१४ ।।

(६) **रामचन्द्रः**। भ्रातरो धनविभागं नार्हन्ति। ज्येष्ठो यौतकं पित्रर्थात्पृथग्भूतं कनिष्ठेभ्योऽदत्वा न कुर्वीत ।। २१४ ।।

(७) **मणिरामः**। विकर्मस्थाः द्यूतादिव्यसनासक्ता अदत्त्वा साधारणधनात्तेषा-मंशं तेभ्य अदत्त्वा। यौतकं साधारणधनादात्मार्थमसाधारणधनं न च कुर्यात्। तथा चैकीभूतधनात्स्वसंबंधि कार्यं न कुर्यात्। सर्वसंबंधि कार्यं कुर्यादित्यर्थः ।। २१४ ।।

**भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह ।।**
**न पुत्रभागं विषमं पिता दद्यात्कथंचन ।।२१५।।**

(१) **मेधातिथिः**। यदुक्तं—"न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः" (याज्ञ० व्य० ११६) इति तस्यास्मिन्विषये प्रतिषेधः।

**सहोत्थानं** सर्व एव धनमर्जयन्तीत्यर्थः। कश्चित्कृष्यादिना कश्चित्प्रतिग्रहेण कश्चित्सेवया कश्चिद्यथाहृतं परिरक्षति यथोपयोगमसन्निहितेषु विनियुंक्ते। तत्सर्वमेकीकृत्य समं विभज-नीयम्। न स्नेहादिना कस्मैचित्पित्राऽधिकं देयम् ।। २१५ ।।

(२) **सर्वज्ञनारायणः**। सहोत्थानं संभूय वाणिज्यादिना वित्ताद्यर्जनम्। पिता अधिकायासादिकं कस्यचिदेकस्य दृष्ट्वाऽधिकं न दद्यात् ।। २१५ ।।

(३) **कुल्लूकः**। भ्रातॄणां पित्रा सहावस्थितानामविभक्तानां यदि सहधनार्जनार्थमुत्थानं भवेत्तदा विभागकाले न कस्यचित्पुत्रस्याधिकं पिता कदाचिद्दद्यात् ।। २१५ ।।

(४) **राघवानन्दः**। 'न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृत'(व्यव.११६) इति अस्यापवादकमाह **भ्रातॄणामिति**। उत्थानं धनादानं प्रतीच्छा। पितृकृत इति स्वयं यदा पुत्रान्विभजेत्तदा न्यूनाधिक्यमिति भावः ।। २१५ ।।

(५) **नन्दनः**। सहोत्थानं संभूयार्जनं विषमं ज्येष्ठानामधिभागप्रदानेन विषमम् ।।२१५।।

(६) **रामचन्द्रः**। यदि उत्थानं सह मिलित्वा धनार्जनं भवेत् पिता विषमं पुत्रभागं कथंचन न दद्यात् ।। २१५ ।।

(७) **मणिरामः**। यद्युत्थानं भवेत्सह यदि सह धनार्जनार्थमुद्यमो भवेत् तदा विभागकाले कस्यापि पुत्रस्य विषमं न्यूनाधिकं पिता न दद्यात् ।। २१५ ।।

(९) **भारुचिः**। येऽन्योन्योपार्जितधनाः पित्रा स्नेहेन गुणापेक्षया वा तेषां विषमो विभागो न कर्तव्यः। इदं च दर्शनं पितुरभिप्रायेण विभागस्य सत्यपितुः पित्रभिप्रायेण विभागे वैकल्पिकं ग्रहणं सदभिप्रायेण स्यात्, नान्यथा ।। २१५ ।।

## ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ।।
## संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ।। २१६ ।।

(१) **मेधातिथिः**। विभागोत्तरकालं पित्रा यद्विभागे भागद्वयं गृहीतं "द्वावंशौ प्रतिपद्येते" इति तदेव सत्यां पितुरिच्छायां ग्रहीतव्यम्। पितुरूर्ध्वं वा। न तत्र भ्रातृभिर्वाच्यं 'किमित्ययं द्वावंशौ गृह्णातीति'। अथ च नास्ति पितुरिच्छा, तदा समं च स्वसमोऽस्य भाग उद्धर्तव्यः।

यं पितुरूर्ध्वं संसृष्टास्तेषामेव स पैतृकोंऽशः तदुत्थं दद्यात्। अपरेषां स्वांशं "जातस्य च मृतस्य च" इति। जातस्य संसृष्टिन एव दद्युः। पितुरूर्ध्वं तदीयमंशं च तत एव। 'विभक्ताः सह' (९।२१०) इत्यनया बुद्धया। "भगिन्या आ प्र[illegible]वान्नैव विभागोऽस्ति' इति **वसिष्ठेन** दर्शितम् ।। २१६ ।।

(२) **सर्वज्ञनारायणः**। पित्र्यमेव पितृभागमेव। एतेन विभागकाले पितुरपि भागो दर्शितः। यदि तु विभागादूर्ध्वमनेकेषां जन्म तदापि स एव भागो विभज्य तैर्ग्राह्यः। **संसृष्टा** इति। यदि पुनः संसृष्टास्तेन सह क्वचिद्भ्रातरः स्युस्तदा तद्भ[illegible]न्तर्भावेन पितृधनं संसृष्टैः सह विभज्य ग्राह्यमित्यर्थः ।। २१६ ।।

(३) **कुल्लूकः**। यदा जीवतैव पित्रा पुत्राणामिच्छया विभागः कृतस्तदा विभागादूर्ध्वं जातः पुत्रः पितरि मृते पितृ[illegible]क्थमेव गृह्णीयात्। ये कृतविभागाः पित्रा सह पुनर्मिश्रीकृतधनास्तैः सहासौ पितरि मृते विभजेत् ।। २१६ ।।

(४) **राघवानन्दः**। सर्वेषां पितृकृतविभागे तदुत्तरकालीनापत्यान्तरोत्पत्तौ का गतिस्तत्राह **ऊर्ध्वमिति**। मृते पितरि पित्र्यं विभजनकाले यत्पितृभागं जीवति तु इच्छाया अनियतत्वेन ये तेन पित्रा सह संसृष्टास्तैः सह सङ्गतं स पिता विभजेतेत्यन्वयः। तत्र च स्पष्टगर्भायां मातरि पितृभागाभावे मृते पितरि विभक्तैरप्यंशो देयः। अस्पष्टगर्भायां तु प्रसूतिपर्यन्तं विभागाभावः। एवं पितामहधनं अपौत्रे प्रतिषिद्धं अपितु स्वातन्त्र्यादिति ध्येयं **बृहस्पति**नोक्तेः ।। २१६ ।।

(५) **नन्दनः**। पित्र्यमेव हरेत् पुनर्विभक्तं भ्रातृधनमंशसाम्याय विभज्य हरेत्। अस्यापवाद उत्तरार्धेनोच्यते तेन पित्रा यैर्विभक्ताः संसृष्टास्तैः समं वा विभजेत् ॥ २१६ ॥

(६) **रामचन्द्रः**। तेन पित्रा सह ये संसृष्टाः स्युः भवेयुः तैः संसृष्टैः सह स पिता विभजेत् ॥ २१६ ॥

(७) **मणिरामः**। जीवतैव पिता पुत्राणां विभागः कृतः तदुत्तरमन्यपुत्रोत्पत्तौ पितरि मृते च किं स्यात्तत्राह **ऊर्ध्वमिति**। तेन पित्रा। संसृष्टा एकत्रावस्थिताः ॥ २१६ ॥

**अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ॥**
**मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ २१७ ॥**

(१) **मेधातिथिः**। व्याख्यातोऽयं श्लोकः ॥ २१७ ॥

(२) **सर्वज्ञनारायणः**। पत्नीदुहित्रभावे पुत्रस्य धनं पितृगामीति प्राक्सूचितं, तत्र विशेषमाह **अनपत्यस्येति**। मातर्यपि वृत्तायां पश्चात्पितरि तद्ग्रहीतरि वृत्ते भ्रातृतत्सुतेष्वसत्सु तस्य वित्तान्तरोपार्जनासंभवे चायमनुग्रह उक्तः ॥ २१७ ॥

(३) **कुल्लूकः**। अनपत्यस्य पुत्रस्य धनं माता गृह्णीयात्; पूर्वं 'पिता हरेदपुत्रस्य ऋक्थ'(९।१८५)मित्युक्तत्वात्। इह माता हरेदित्यादि **याज्ञवल्क्येन** 'पितरौ' (याज्ञ. व्य. ८।१३५) इत्येकशेषकरणात्। **विष्णुना** च 'अपुत्रस्य धनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामी'त्येकशेषस्यैव कृतत्वान्मातापितरौ विभज्य गृह्णीयाताम्। मातरि मृतायां पत्नीपितृभ्रातृभ्रातृजाभावे पितुर्माता धनं गृह्णीयात् ॥ २१७ ॥

(४) **राघवानन्दः**। अनपत्यस्य सूनोर्मृतस्य मातुर्धनमित्याह **अनपत्यस्येति**। माता हरेदिति गर्भधारणपोषाभ्यां 'तेभ्यो माता गरीयसी'ति न्यायात्। मातरि मृतायां तु पितामही हरेत् 'पिता रिक्थं हरे'दिति **याज्ञवल्क्योक्तेः**। मातापितामह्यौ गृह्णीयातामित्युक्तं मनुना विष्णुना च। अपुत्रस्य धनं पत्न्यभिगामि तदभावे मातृगामि तदभावे पितृगामीति वचनजातविरोधाद्विभज्य पितरौ गृह्णीयातामिति **कुल्लूकः**। मातापित्रोरयोगव्यवच्छेदमात्रं पत्नीगामित्वेऽपि संगतं त्रयाणां सत्त्वे त्रितयमधिकारीति। अन्याभावसहकृतविकल्पस्याभावादिति तु तत्त्वम्। वृत्तायां मृतायाम् ॥ २१७ ॥

(५) **नन्दनः**। अनपत्यस्येत्युपलक्षणं, पुत्रपौत्रप्रपौत्रभार्यादुहितृरहितस्येत्यर्थः ॥ २१७ ॥

(६) **रामचन्द्रः**। अनपत्यस्य पुत्रस्य पत्नी दुहिता वा माता पितरि सत्यपि दायमाप्नुयात्। मातर्यपि च वृत्तायां पितुर्माता धनं हरेत् ॥ २१७ ॥

(७) **मणिरामः**। अनपत्यस्य पुत्रस्य पिता धनं हरेदिति पूर्वमुक्तम्, इदानीं मातुरपि तत्राधिकारमाह **अनपत्यस्येति**। पत्नीपितृभ्रातृभ्रातृपुत्राभावेऽपि पितुर्माता धनं गृह्णीयात् ॥ २१७ ॥

(९) **भारुचिः**। जीवत्यां मातरि पितामह्यां च न सोदरा ईशन्तेऽनपत्यस्य स्वधनस्य। नापि तत्पिता, असोदर्या न भ्रातरः ॥ २१७ ॥

**ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि ॥**
**पश्चाद् दृश्येत यत्किंचित्तत्सर्वं समतां नयेत् ॥ २१८ ॥**

(१) **मेधातिथिः।** अविज्ञानान्न्यूनमधिकं वा विभक्तं परतो ज्ञातं समांशकी कर्तव्यम्। किंच विभागोत्तरकालं लब्धे नास्ति ज्येष्ठस्योद्धार इति ॥ २१८ ॥

(२) **सर्वज्ञनारायणः।** पश्चाद्दृश्येत पूर्वनिह्नुतं यत्किंचिदृणं वा तत्सर्वं समं विभाज्यं नतु निह्नवकर्तुरपराधाद्भागाभावः। ऋण इत्यभिधानेन च ऋणमप्यर्थविभागकाले अर्थाभावे वा ऋणमात्रमपि विभजनीयम्। तत्र च ज्येष्ठत्वादिना विशेषो नास्तीत्यर्थात्कथितम् ॥ २१८ ॥

(३) **कुल्लूकः।** ऋणे पित्रादिधार्यमाणे धने च तदीये सर्वस्मिन्यथाशास्त्रं विभक्ते सति पश्चाद्यत्किंचित्पैतृकमृणं धनं वा विभागकालेऽज्ञातमुपलभ्येत तत्सर्वं समं कृत्वा विभजनीयं नतु शोध्यं ग्राह्यं, न वा ज्येष्ठस्योद्धारो देयः ॥ २१८ ॥

(४) **राघवानन्दः।** यदि पित्रादिकृतमादेयं देयव(मृण)र्णमस्ति तदा कथं विभागस्तत्राह **ऋण** इति। अज्ञाते ऋणे देये वा सति सर्वस्मिन्धने च विभक्ते यदि पश्चादृणं परिज्ञातं तत्सर्वं समतामुपशमतां नयेच्छोधयेत्। सर्वमधमर्णेभ्यः प्राप्तमृणं समं कृत्वा नयेदिति। दुहितरि धनान्वयत्वेऽपि न ऋणायान्वयः। अत एव **याज्ञवल्क्यः** (व्य० ११७) 'विभजेरन्सुताः पित्रोरूर्ध्वमृक्थमृणं समम्। मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वय'इति। मातुर्धनं तु दुहितर ऋणादृते भजेरन्नित्यर्थः ॥ २१८ ॥

(५) **नन्दनः।** यत्किञ्चित्कुत्रचित् ॥ २१८ ॥

(६) **रामचन्द्रः।** तत्सर्वं समतां समानतां नयेत् प्रापयेत् ॥ २१८ ॥

(७) **मणिरामः।** पश्चाद्दृश्येत विभागकाले अज्ञातमुत्पन्नं लभ्येत ॥ २१८ ॥

(९) **भारुचिः।** द्रष्ट्रा न तद् ग्राह्यमित्येवमर्थं पुनरुपदेशः। ज्येष्ठांशप्रतिषेधार्थो वा पूर्वज इत्येवमुक्तं ज्येष्ठस्य तदत्र न स्यात् ॥ २१८ ॥

**वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ॥**
**योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥ २१९ ॥**

(१) **मेधातिथिः।** वस्त्रपत्रालङ्कारकृतान्नोदकानामेकत्वं विवक्षितम्। **पत्रं** वाहनं गन्त्रीशकटादि। **अलङ्कारो**ऽङ्गुलीयकादि। **वस्त्रं** सममूल्यं, न तु महार्घम्। **उदकं** कूपवाप्यादि। **स्त्रियो** दास्यः। **योगक्षेमं** यतो योगे क्षेमो भवति, मन्त्रिपुरोहितामात्यवृद्धा वास्तु च। चौरादिभ्यस्ततो रक्षा भवति। स्मृत्यन्तरे च पठ्यते–'वास्तुनि विभागो न विद्यते'। **प्रचारं** यत्र गावश्चरन्ति। प्रवेत्रे (?) त्याह। तेन यत्पैतृकेनोक्तं 'न ह्यत्र धर्मातिक्रमः कश्चिदस्तीति' तदनुपपन्नं दर्शयति। अदृष्टासु हि ते प्रतिषेधाः। तदतिक्रमादधर्मो न स्यात् ॥ २१९ ॥

(२) **सर्वज्ञनारायणः।** वस्त्रं तेन तेन परिहितमधिकत्वेनापि दृश्यमानम्। पत्रं वाहनं अश्वादि तेन तेन परिगृहीतम्। एवमलंकारोऽङ्गुलीयादिः। कृतान्नं तत्तदुद्देशेन यत्सिद्धमन्नं विषयमपि। उदकं कूपादि। स्त्रियो भार्या एकस्यैका, अन्यस्य द्वे एवं वैषम्येऽपि। योगक्षेमं योगो राजादिलभ्यो निबन्धनादिः, स्वयमुपात्तः क्षेमः रक्षोपायः प्राकारेष्टकादिः। प्रचारो वर्त्म। यत्तु 'कृतान्नं च कृतान्नेन परिवर्त्य विभज्यत'इत्याद्युक्तं **बृहस्पतिना** तदतिप्रचुरकृतान्नादेऽपि तन्मात्रधनैर्विभागः कार्य इत्येतत्।। २१९।।

(३) **कुल्लूकः।** वस्त्रं वाहनमाभरणमविभागकाले यद्येनोपभुक्तं तत्तस्यैव न विभाज्यं। एतच्च नातिन्यूनाधिकमूल्यविषयं। यत्तु बहुमूल्यमाभरणादिकं तद्विभाज्यमेव। तद्विषयमेव। 'विक्रीय वस्त्राभरण'मिति **बृहस्पते**र्विभागवचनं कृतान्नमोदनसक्त्वादि तत्र विभजनीयं तत्रातिप्रचुरतरमूल्यं सक्त्वादि तावन्मात्रमूल्यधनेन। 'कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यत' इति **बृहस्पति**वचनाद्विभजनीयमेव। उदकं कूपादिगतं सर्वैरुपभोग्यमविभजनीयम्। स्त्रियो दास्याद्या यास्तुल्यभागा न भवन्ति ता न विभाज्याः किन्तु तुल्यं कर्म कारयितव्याः। योगक्षेमं मन्त्रिपुरोहितादि योगक्षेमहेतुत्वात्। प्रचारो गवादीनां प्रचारमार्गः। एतत्सर्वं मन्वादयोऽविभाज्यमाहुः ।। २१९।।

(४) **राघवानन्दः।** न्यूनाधिकमूल्याभावे तु पित्रादिदत्तं यद्येन भुज्यते तत्तस्यैवेति दृष्टार्थतयाह **वस्त्रमिति**। पत्रमश्वादि। कृतान्नं अविभागकाले यद्येन भुक्तम्। उदकं कूपतडागादिस्थम्। स्त्रियो दास्यः। योगोऽलब्धलाभः, लब्धस्य परिरक्षणं क्षेमः, तयोः प्रचारं प्रचर्यते निर्वाह्यते येनेति तद्धेतुमन्त्रिपुरोहितादिः। एतान्यपि दत्तानि न विभजनीयानि, अत्यन्तमूल्ये विभजनीयानि, 'विक्रीय वस्त्राभरण'मिति **बृहस्पत्युक्तेः**। दासदास्यस्तु समं कर्म कार्या इति भावः।। २१९।।

(५) **नन्दनः।** अथाविभाज्यमाह **वस्त्रं पात्रमलङ्कारमिति**। पात्रं उदपात्रं वस्त्रादीनि चत्वार्यभागवेलायां येन परिगृहीतानि विभागवेलायामुद्धारं तानि तस्मै देयानि द्रव्यान्तरे चेद्विभज्यानि। उदकं कूपादिस्थं दायादैः सर्वैरुपभोज्यं न विभाज्यं। स्त्रियो भार्यात्वेन परिगृहीता दास्यादयस्तासां स्वत्वेन विभागप्रसक्तावप्यविभाज्यत्वमुच्यते। ऋणं वा धनं वा विभागात्पश्चात्कुत्रचित् दृश्येतोभयमपि सर्वे विभक्ताः संविभजेरन्नित्यर्थः। **योगक्षेम इति**। अप्राप्तप्रापणं योगः, प्राप्तस्य रक्षणं क्षेमः, अत्र योगक्षेमशब्देन योगक्षेमहेतवो विवक्षिताः। योगहेतवो याज्याः, शिष्यादयः क्षेमहेतवो द्वारग्रामपालादयः उभयहेतवो ग्रामपत्तनाधिपादयस्तेऽपि पूर्ववदेव स्थापनीया न विभाज्याः। प्रचारः क्षेत्रारामादिप्रवेशयोग्यो मार्गः, सोऽपि सर्वैः प्रचरितव्योऽनुभावयितव्यो न विभाज्यः ।। २१९।।

(६) **रामचन्द्रः।** अविभाज्यमाह **वस्त्रमिति**। वस्त्रं पत्रं वाहनं अलंकारं मातुः कृतान्नं पक्वान्नं, उदकं कूपादि, स्त्रियः दास्यः, योगक्षेमौ अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेमः, प्रचारं मार्गं जलवाहादि विभाज्यं न प्रचक्षते।। २१९।।

(७) **मणिरामः।** पत्रं वाहनं वस्त्रादिकं न्यूनमूल्यं बहुमूल्यं तु विभाज्यमेव। कृतान्नं मोदकादि पक्वान्नं जलं कूपादिगतं स्त्रियो दास्यादयः। योगक्षेमं मंत्रिपुरोहितादि। प्रचारं गवादीनां प्रचुरमार्गः। एतत्सर्वं अविभाज्यं आहुः, सर्वैर्भोक्तव्यमित्यर्थः ।। २१९ ।।

(९) **भारुचिः।** एता (अपी)च्छया विभजेरन्। 'नाकामो दातुमर्हती'त्येतदनुवादोऽयं द्रष्टव्यः। सर्वत्र (वे)च्छातो दानमयुक्तं प्रतिषे(द्धुम्) सर्वत्र धनविभागे प्राप्ते वस्त्रं पतत्यनेनेत्यश्वादिः। अलङ्कारसामर्थ्यात् पितरि जीवति यद्येनम् अपरिगृहीतं, कृतान्नं तण्डुलादि, उदकं तदाधारकूपादि; स्त्रिय उपभोगदास्यः प्रतिनियता योगक्षेमं प्रचारं च येन द्रव्येण योगक्षेमार्थं प्रचरन्ति योगोऽनुपात्तपरिलाभः, क्षेममुपालब्धपरिपालनं, योगक्षेमं वा तदर्थं रा(ज्ञा) दीयमानं द्रष्टव्यम्, प्रचारं च प्रचरणभूमिजमिन्धनादि न विभाज्यं प्रचक्षते ।। २१९ ।।

**अयमुक्तो विभागो वः पुत्राणां च क्रियाविधिः ।।**
**क्रमशः क्षेत्रजादीनां द्यूतधर्मं निबोधत ।। २२० ।।**

(२) **सर्वज्ञनारायणः।** द्यूतं वक्तुमुपक्रमते **अयमिति**। पुत्राणां क्षेत्रजादीनां क्रियाविधिः पुत्रत्वोत्पादनविधिः क्रमेण। द्यूतधर्मं निबोधतेत्यन्वयः ।। २२० ।।

(३) **कुल्लूकः।** एष दायभागः पुत्राणां क्षेत्रजादीनां क्रमेण विभागकरणप्रकारो युष्माकमुक्तः। इदानीं द्यूतव्यवस्थां शृणुत ।। २२० ।।

(४) **राघवानन्दः।** विभागप्रकरणमुपसंहरन् द्यूतं प्रतिजानीते **अयमिति**। पुत्राणामौरसादीनाम्। क्रियाविधिः पिण्डदानं च ।। २२० ।।

(६) **रामचन्द्रः।** विभागानन्तरं द्यूतधर्मान् निबोधत शृणुत ।। २२० ।।

(७) **मणिरामः।** पुत्राणां क्षेत्रजादीनां क्रियाविधिः क्रमेण विभागकरणप्रकार उक्तः। इदानीं द्यूतव्यवस्थां शृणुत ।। २२० ।।

(९) **भारुचिः।** उपसंहारोपन्यासार्थः श्लोकः ।। २२० ।।

**द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ।।**
**राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ।। २२१ ।।**

(२) **सर्वज्ञनारायणः।** अत्र च तुल्यविषयत्वात्समाह्वयमप्येकीकृत्य दर्शयति **द्यूतमिति** ।। २२१ ।।

(३) **कुल्लूकः।** द्यूतसमाह्वयौ वक्ष्यमाणलक्षणौ। राजा स्वराष्ट्रान्निवर्तयेत् यस्मादेतौ द्वौ दोषौ राज्ञो राज्यविनाशकारिणौ ।। २२१ ।।

(४) **राघवानन्दः।** द्यूतमेव सप्रतियोगि सदोषमाह **द्यूतमिति** द्वाभ्याम्। राज्यान्तकरणौ राज्यनाशकौ ।। २२१ ।।

(५) **नन्दनः।** अत्र तावद्राज्ञः कर्तव्यमाह **द्यूतं समाह्वयञ्चैवेति।** द्यूतं प्राणिद्यूतं कुक्कुटमेषादि ॥ २२१ ॥

(६) **रामचन्द्रः।** द्यूतं, समाह्वयं प्राणिद्यूतं राजा राष्ट्रात् निवारयेत् ॥ २२१ ॥

(७) **मणिरामः।** द्रव्यैः कृतं द्यूतं, प्राणिभिः कृतं समाह्वय इति वक्ष्यमाणलक्षणं ॥ २२१ ॥

(९) **भारुचिः।** द्यूतसमाह्वयभेदप्रदर्शनार्थमिदमधुनोच्यते ॥ २२१ ॥

**प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ॥**
**तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥ २२२ ॥**

(२) **सर्वज्ञनारायणः।** प्रत्यक्षमनिह्नुतम् ॥ २२२ ॥

(३) **कुल्लूकः।** प्रकटमेतच्चौर्यं यत् द्यूतसमाह्वयौ तस्मात्तन्निवारणे राजा नित्यं यत्नयुक्तः स्यात् ॥ २२२ ॥

(४) **राघवानन्दः।** राज्ञाऽत्र प्रयत्नवता भाव्यमिति विवक्षन्दृष्टार्थवादमाह **प्रकाशमिति।** प्रकाशं द्यूतसमाह्वयद्रष्टृसर्वजनसमक्षं तास्कर्यं चौर्यम्। अतस्तयोस्तत्कर्त्रोः प्रतीघाते नाशे ॥ २२२ ॥

(६) **रामचन्द्रः।** तास्कर्यं चौर्यम्। यद्देवनसमाह्वयौ नृपतिः तयोः प्रतीघाते नाशाय यत्नवान्भवेत् ॥ २२२ ॥

**अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ॥**
**प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः॥ २२३ ॥**

(२) **सर्वज्ञनारायणः।** द्यूतं अप्राणिभिरक्षशलाकादिभिर्यत्क्रियते पणेन क्रीडनम्। प्राणिभिर्मेषादिभिर्युद्धकरणेन पणपूर्वकं यत्नेन नियम्य क्रीडनं तत्समाह्वयः॥ २२३ ॥

(३) **कुल्लूकः।** अक्षशलाकादिभिरप्राणैर्यत्क्रियते तल्लोके द्यूतं कथ्यते। यः पुनः प्राणिभिर्मेषकुक्कुटादिभिः पणपूर्वः स समाह्वयो ज्ञेयः। लोकप्रसिद्धयोरनयोर्लक्षणकथनं परिहारार्थम् ॥ २२३ ॥

(४) **राघवानन्दः।** तयोर्लक्षणमाह **अप्राणिभिरिति।** अप्राणिभिरक्षशलाकादिभिर्यत् क्रियते तत् द्यूतम्। प्राणिभिर्मेषकुक्कुटादिभिः यत्कर्म पणपुरःसरमिति शेषः ॥ २२३ ॥

(५) **नन्दनः।** द्यूतसमाह्वययोः करणत एव भेदो न स्वरूपत इत्यभिप्रायेणाह **अप्राणिभिर्यदिति।** अप्राणिभिर्दान्तिशार्ङ्गदारवमार्तिकैरक्षैः प्राणिभिः कृकवाकुमेषमहिषवर्त्यादिभिः ॥ २२३ ॥

(६) **रामचन्द्रः।** अप्राणिभिः अक्षशलाकादिभिः श्रू(क्रि)यते तल्लोके द्यूतमुच्यते। प्राणिभिर्यस्तु क्रियते स द्यूतसमाह्वयः॥ २२३ ॥

**द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ॥**
**तान्सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ २२४ ॥**

(२) **सर्वज्ञनारायणः।** घातयेत्ताडनादिना द्विजलिङ्गिनो द्विजलिङ्गोपवीतधराम् ॥ २२४ ॥

(३) **कुल्लूकः।** द्यूतसमाह्वयौ यः कुर्याद्यो वा सभिकः कारयेत्तेषामपराधापेक्षया राजा हस्तच्छेदादिवध कुर्यात्। यज्ञोपवीतादिद्विजचिह्नधारिणः शूद्रान् हन्यात् ॥२२४॥

(४) **राघवानन्दः।** निमित्तमनुवदन्नैमित्तिकमाह **द्यूतमिति।** कारयेत्सभिकः। घातयत्। अपराधानुरूपेण हस्तच्छेदादिना। तत्रैव ब्राह्मणत्वेन प्रतीयमाना अपि ये शूद्रास्तान्प्रत्याह **द्विजलिंगिन इति।** एतेऽवश्यमनपेक्ष्यतया ॥२२४॥

(६) **रामचन्द्रः।** द्विजलिङ्गिनः शूद्रान् राजा घातयेत् ॥ २२४ ॥

(७) **मणिरामः।** द्विजलिंगिनः यज्ञोपवीतादिद्विजचिह्नधारिणः शूद्रान् ॥ २२४ ॥

(९) **भारुचिः।** सभिका अधिकारवन्तो द्यूतं ताडयितव्याः। **न** केवलं कर्तारः प्रतिषेधपरत्वाच्च वधोपदेशस्यान्येनाप्युपायेन तेषां प्रतिषेधः कर्तव्यः, राजतन्त्रविरोधिनां। येन नह्यत्र धर्मातिक्रमः कश्चिदस्ति, एवं च सत्यत्र वधिस्ताडनार्थ एव विज्ञेयः। धर्मव्यवस्थाभेदिनस्तु शूद्रान्द्विजलिङ्गिनो घातयेदेव। द्विजलिङ्गिनश्च शूद्रा यज्ञोपवीतातपत्रधारिणो भोगशब्दवादिनः। परिव्राजकादिवेषधारिणश्च व्याकरणाध्ययनमपि च द्विजलिङ्गमिति शक्यं वक्तुम् ॥ २२४ ॥

**कितवान्कुशीलवान्क्रेरान्पाषण्डस्थांश्च मानवान् ॥**
**विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ २२५ ॥**

(२) **सर्वज्ञनारायणः।** कितवान् द्यूतसमाह्वयकर्तॄन्। कुशीलवान् नटान्। क्रूरानतिवक्रचेष्टितान्। पाषण्डान् बौद्धादीन्। विकर्मस्थानधर्महेतुकर्मकर्तॄन्। पतितानन्त्यजादीन्। शौण्डिकान् मद्यविक्रेतॄन्। निर्वासयेत् बहिरेव वासयेत् ॥ २२५ ॥

(३) **कुल्लूकः।** द्यूतादिसेविनो नर्तकगायकान्वेदविद्विषः श्रुतिस्मृतिबाह्यव्रतधारिणः अनापदि परकर्मजीविनः शौण्डिकान्मद्यकरान्मनुष्यान्क्षिप्रं राजा राष्ट्रान्निर्वासयेदिति कितवप्रसङ्गेनान्येषामप्यभिधानम् ॥ २२५ ॥

(४) **राघवानन्दः।** कितवान्दृष्टान्तीकृत्य प्रसंगेनान्यानपि संकलयति **कितवानिति।** कुशीलवान् नृत्यजीविनः। केरान्गायकान्। पाषण्डान् पाषण्डलिङ्गतद्रूपान् वेदविद्विषः विकर्मस्थान्। अनापद्यपि परधर्मरतान्। शौण्डिकान् ते हि मद्यस्त्रीप्रदानेन धर्मप्रणाशात् सर्वानर्थकारिणः। **मानवानिति।** तादृशानन्यानपि यद्वा कुशीलवादिदोषो मनुष्येष्वेव न गन्धर्वादिष्विति द्योतितम् ॥ २२५ ॥

(५) **नन्दनः।** कितवान्द्यूतवृत्तीन्। कुशीलवान्गायनवृत्तीन्। केलान्केलिशीलान्। शौंडिकान्मद्यपान्। पुरशब्दो राष्ट्रस्याप्युपलक्षणार्थः। कितवसधर्मत्वात् कुशीलवादीनामुपन्यासः प्रासङ्गिकः ॥ २२५ ॥

(६) **रामचन्द्रः।** कितवान् द्यूतसेविनः। कुशीलवान् विषयशीलान्। चौरान् वक्रचेष्टान्। विकर्मस्थान् अधर्मस्थान्। हेतुकर्तृन् पानासक्तान्। एतान्कितवादीन् पुरात् क्षिप्रं निर्वासयेत्॥ २२५॥

(७) **मणिरामः।** कितवान् द्यूतादिसेविनः। कुशीलवान् नर्तकगायकान्। केरान् वेदद्वेषिनः। पाखंडान् श्रुतिस्मृतिवाह्यव्रतधारिणः। विकर्मस्थान् अनापदि परकर्मजीविनः। शौंडिकान् मद्यपान्॥ २२५॥

**एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः॥**
**विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः॥ २२६॥**

(२) **सर्वज्ञनारायणः। एते** कितवादयः तथा **प्रच्छन्नतस्करा** वेषान्तरधराश्चौरा विकर्मक्रियया सज्जनेष्वपि द्यूतादिक्रियाप्रवर्तनेन **बाधन्ते** बाधां कुर्वन्ति। **भद्रिकाः** सद्वृत्ताः। अत्र कितवप्रसंगादप्युक्तम्॥ २२६॥

(३) **कुल्लूकः।** अत्र हेतुमाह **एत इति।** एते कितवादयो गूढचौरा राज्ञो राष्ट्रे वसन्तो नित्यं वंचनात्मकक्रियया सज्जनान्पीडयन्ति॥ २२६॥

(४) **राघवानन्दः।** अत एषां निरासे यत्नाधिक्यं सूचयति **एत इति।** वर्तमानाः स्वस्वकर्मणा **विकर्मक्रियया** विकर्मणा चौर्यादिना या क्रिया देहधारणादि तया **बाधन्ते साधुभिः** संगमय्य स्वदोषैस्तान्दूषयन्तीति भावः। **भद्रिका** भद्रेण साधुना धनपुत्रादिसूचककर्मणा जीवतीः॥ २२६॥

(५) **नन्दनः। भद्रिकाः** सुशीलाः **बाधन्ते** दुःशीलाः कुर्वन्ति॥ २२६॥

(६) **रामचन्द्रः। भद्रिकाः** सद्वृत्ताः प्रजाः विकर्मक्रियया वंचनादिक्रियया **एते बाधन्ते**॥ २२६॥

(७) **मणिरामः।** अत्र हेतुमाह **एत इति।** भद्रिकाः सज्जनान्॥२२६-२२७॥

(९) **भारुचिः।** क्रूरा भिन्नदृष्टयोर्वर्णलोपेन गुणवृत्त्योच्यन्ते। केलानित्यपरः पाठः। ते चातिकामुकाः केलीजीव. . .तानित्यपरे पठन्ति। सङ्केतकारिणः पाषण्डस्थांश्च मानवान् श्रुतिस्मृतिबाह्येष्वात्मलिङ्गेषु व्यवस्थितानधिकारविरोधेन कर्मस्थशब्दः स्वतन्त्रः। शौण्डिकविशेषण. . . .सर्वानेतान्निर्वासयेत् पुरात्। प्रवासनकार्यस्य चाविशेषाद्राष्ट्रादप्येतेऽर्थतो निर्वास्याः। अत्र च कितवप्रसंगेन कुशीलवा(दी)नामपि प्रतिषेधः क्रियते॥ २२६॥

**द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत्॥**
**तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान्॥ २२७॥**

(२) **सर्वज्ञनारायणः। पुराकल्पे** पुराणकथासु॥ २२७॥

(३) **कुल्लूकः।** नेदानीमेव परं किन्तु पूर्वस्मिन्नपि **कल्पे** द्यूतमेतदतिशयेन **वैरकरं** दृष्टमतः प्राज्ञः परिहासार्थ**मपि तन्न सेवेत**॥ २२७॥

(४) **राघवानन्दः**। द्यूतस्यानर्थाविहत्वमैतिह्येनाह **द्यूतमिति**। **पुराकल्पे** संसारानादितया बलभद्रदन्तवक्रयुधिष्ठिरदुर्योधनादिकाले। हास्यार्थं कुतूहलार्थमपि। द्यूतपदं समाह्वयोपलक्षकम् धनकारित्ववैरकरत्वहेतोरुभयसाधारण्यात् ॥ २२७ ॥

(५) **नन्दनः**। द्यूतस्य दोषमाह स्वयमपि राज्ञा द्यूतं न कार्यमिति चाह **द्यूतमेतत्पुराकल्पे दृष्टमिति**। **पुराकल्पे** पूर्वस्मिन्काले **वैरकरं दृष्टं** नलयुधिष्ठिरादिषु ॥ २२७ ॥

(९) **भारुचिः**। युधिष्ठिरादयोऽपरकालाः। देवासुरदृष्टं तु द्यूतं चिरवृत्तत्वादत्रोदाह्रियते 'ते देवा एक' इति श्रुतेः। एवं कृत्ये चायं द्यूतनिन्दार्थवादो विज्ञेयः। यतश्चैतदेवमतः ॥ २२७ ॥

**प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ॥**
**तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥ २२८॥**

(१) **मेधातिथिः**। विविधः कल्पो **विकल्पः**। सम एव राज्ञोच्यते। 'द्यूतधर्मं निबोधत' (९।२२०) इति तत आरभ्य द्वित्राः श्लोका विधायकाः। सर्वोऽप्यर्थवादः ॥ २२०-२२८ ॥

(२) **सर्वज्ञनारायणः**। प्रकाशं कर्तव्यवृत्त्युत्पादनेन। यथेष्टं यस्य यथेच्छति नृपस्तस्य तथा कार्यो दण्डभेदः, नत्वत्र शास्त्रे दण्डो नियम्यत इत्यर्थः ॥ २२८ ॥

(३) **कुल्लूकः**। **यो** मनुष्यस्तत् द्यूतं **गूढं प्रकटं वा** कृत्वा सेवेत तस्य यथा नृपतेरिच्छा भवति तथाविधो **दण्डो** भवति ॥ २२८ ॥

(४) **राघवानन्दः**। तस्मात्तत्कारी दण्डार्ह इत्याह **प्रच्छन्नमिति**। तत् द्यूतसमाह्वयं प्रच्छन्नं। यथा स्यात्प्रकाशं यथा स्यादिति। नृपतेरिच्छया दण्डो वधो वेत्यन्वयः। यद्वा पणे सहस्रं नृपतेरित्युक्तम् ॥ २२८ ॥

(५) **नन्दनः**। दण्डविकल्पः दण्डभेदोऽर्थहरणादिलक्षणः ॥ २२८ ॥

(६) **रामचन्द्रः**। तत् द्यूतं यः निषेवेत तस्य दण्डविकल्पः शतदण्डः स्यात् यथेष्टं नृपतेः तथा वा दण्डः ॥ २२८ ॥

(७) **मणिरामः**। नृपतेः यथेष्टं दंडविकल्पः यथा नृपतेरिच्छावशतया वधो दंडः ॥ २२८ ॥

(९) **भारुचिः**। 'प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः। तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा' ॥ २२८ ॥

**क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ॥**
**आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥ २२९ ॥**

(१) **मेधातिथिः**। क्षत्रियादयो निर्धना न बन्धनेनावसादयितव्याः। किं तर्हि? **कर्मणा** यद्यस्योचितं कर्म राजोपयोगि तेन दण्डधनं संशोधयितव्याः।

**ब्राह्मणस्तु** कुटुंबानामविरोधेन **शनैर्दाप्यः**। बन्धताडनकर्मणी तस्य निषिध्येते। धनिकविषयः प्रागुक्तः श्लोकः। दण्डविषयोऽयम्। अपौनरुक्त्यम् ॥ २२९ ॥

(२) **सर्वज्ञनारायणः**। आनृण्यं दण्डापक्रियाम्। कर्मणा गृहादिकर्मकरणेन ॥ २२९ ॥

(३) **कुल्लूकः**। इदानीं पराजितानां धनाभावे सतीदमाह **क्षत्रेति**। क्षत्रवैश्यशूद्र-जातीयो निर्धनत्वेन दण्डं दातुमसमर्थस्तदुचितकर्मकरणेन दण्डशोधनं कुर्यात्। ब्राह्मणः पुनः यथालाभं क्रमेण दद्यान्न कर्म कारयितव्यः ॥ २२९ ॥

(४) **राघवानन्दः**। दण्डं संकलयति **क्षत्रेति षड्भिः**। ऋणदानासमर्थस्यैव दण्डस्य **आनृण्यं** शोधनं **कर्मणा** चेतनादिना गच्छेत्कुर्यात्। विप्रस्तु दद्यादेव तच्चापि **शनैः** ॥ २२९ ॥

(५) **नन्दनः**। विप्रः शनैरर्थं दद्यान्न तु **दण्डानृण्यं कर्मणा गच्छेत्** ॥ २२९ ॥

(६) **रामचन्द्रः**। अनृणस्य भावं आनृण्यं, **कर्मणा** कर्मकरणेन **विप्रः शनैर्दद्यात्** ॥ २२९ ॥

(७) **मणिरामः**। इदानीं व्यवहारे पराजितानां धनाभावे सतीदमाह **क्षत्रेति**। कर्मणा तदुचितकर्मकरणेन आनृण्यं दंडशोधनं ॥ २२९-२३० ॥

(९) **भारुचिः**। यथोक्तं दण्डप्रकारमशक्नुवन्तो निर्धनत्वात् क्षत्रियादयो दण्डानुरूपाणि कर्माणि कुर्युः। ब्राह्मणेन तु स्वधर्मानुरोधेन शनैः शनैर्दण्डनीयः। तदेतदुक्तमप्यधुना पुनरुच्यते दण्डविषयार्थम्, पूर्वं तु कुसीदप्रकरणे तद्गतम् ॥ २२९ ॥

**स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् ॥**
**शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥ २३० ॥**

(१) **मेधातिथिः। दमम्**। कर्मकरणेऽप्यसमर्था दरिद्रा एव गृह्यन्ते। महापातकिनां साम्यात्तच्छिफादिभिस्ताडनम्। **शिफा** लता। **विदलं** वृक्षत्वक् ॥ २३० ॥

(२) **सर्वज्ञनारायणः**। अनाथो दरिद्रः, सततधनवत्संबन्धिशून्यः। शिफा वृक्षजटा, विदलो वेत्राद्यर्धम्, रज्जुश्चर्मादिकृता, एतैस्ताडनेन ॥ २३० ॥

(३) **कुल्लूकः**। स्त्रीबालादीनां पुनः शिफावेणुदलप्रहाररज्जुबन्धनादिभिर्दमनं राजा कुर्यात् ॥ २३० ॥

(४) **राघवानन्दः**। अदाने दण्डार्थमये दण्डप्रकारः स्त्र्यादीनामित्याह **स्त्रीति**। शिफा अङ्गुलीपञ्चकसाधनकः प्रहारो वटारोहो वा। **विदलो** वेणुशलाका ॥ २३० ॥

(५) **नन्दनः**। शिफा न्यग्रोधादिप्ररोहः **विदलो** वेणुदलम् ॥ २३० ॥

(६) **रामचन्द्रः। शिफा** कशा **विदलं** वेण्वादिविकारः **विदलः** तरुत्वक्रज्ज्वाद्यैः रज्जुकरणादिभिः **नृपतिः एतैर्दमं दद्यात्**। ॥ २३० ॥

(९) **भारुचिः।** विकर्मस्थानामेतदपराधानुरूपतः शिफादिभिस्ताडनम्। न पातकिनामपि चापलता विज्ञेया। एवं च सति येन येन दण्डप्रकारेण द्यूतनिवृत्तिः स्यात् तं तं दण्डप्रकारं कल्पयेदात्मेच्छया ॥ २३० ॥

**ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम् ॥**
**धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः ॥ २३१ ॥**

(१) **मेधातिथिः। ये कार्यिणामर्थिप्रत्यर्थिनां कार्येषु** व्यवहारदर्शितादिषु **नियुक्ता** अधिकृता राजस्थानीयप्रभृतयस्ते **धनोष्मणा पच्यमाना** अन्यतरस्माद्धनं गृहीत्वा **कार्याणि** नाशयेयु**स्तान्निःस्वान् कारयेत्** तत्सर्वस्वहरणं तेषां कार्यम्। सत्यानामभ्यासेन वर्तमानानां सत्यपि वक्ष्यमाणदण्डान्तरविधावेष एव दण्डो न्याय्यः।

येऽप्यन्ये सेनापतिप्रभृतयः कस्यचित्साहाय्यके नियुज्यन्ते ततश्चार्थं गृहीत्वा शयन्ति तेऽप्येवमेव दण्ड्याः। अन्ये तु 'येऽनियुक्ता' इत्यकारप्रश्लेषः' पठन्ति। ये राजवल्लेख्याद्वलातिशयाद्वाऽन्यस्य साहाय्यं कुर्वन्ति, कार्यनाशनार्थं द्वितीयस्य, तेषामयं दण्डः। **धनोष्मणे**त्यविवक्षितम्। अनियुक्ता इत्येतदेव प्रधानम् ॥ २३१ ॥

(२) **सर्वज्ञनारायणः। ये नियुक्ताः** प्राड्विवाकाद्याः हन्युरुत्कोचग्रहणजितमप्यजितं कुर्वन्तः। **धनोष्मणा** पाकः किं नो भवति राजा चेज्जानीयाद्दण्डमात्रं ग्रहीष्यतीत्यतिधनतया निर्भयता। निःस्वानपहृतसर्वस्वान् ॥ २३१ ॥

(३) **कुल्लूकः।** ये व्यवहारावेक्षणादिषु कार्येषु राज्ञा **नियुक्ता** उत्कोचधनतेजसा विकारं भजन्तः स्वाम्यादीनां कार्यं नाशयेयुस्तान्गृहीतसर्वस्वान् राजा कारयेत् ॥ २३१ ॥

(४) **राघवानन्दः।** किंच **य इति। कार्यिणामर्थिनाम्। धनोष्मणा पच्यमानान्** धनगर्वतेजसापन्नविकारान् ॥ २३१ ॥

(५) **नन्दनः।** अथान्यानपि दण्डान्प्रसङ्गादाह **ये नियुक्तास्त्विति। कार्येषु** व्यवहारेषु। धनोष्मणा धनलिप्साजनितेन सन्तापेन पच्यमानान्विक्रीयमाणान् ॥ २३१ ॥

(६) **रामचन्द्रः। ये कार्येषु नियुक्ताः कार्यिणां** कार्यार्थिनां **कार्याणि हन्युः** धनस्य ऊष्मणा ये पच्यमानाः धनस्य अभिमानेन नश्यत्प्राणभृत्यांस्तान्भृत्यान्नृपति**र्निःस्वान्** कारयेत् निःस्वान् नृपतिः **कारयेत्** ॥ २३१ ॥

(७) **मणिरामः।** धनोष्मणा पच्यमानाः उत्कोचधनतेजसाधिकारं लभंते ॥ २३१ ॥

(९) **भारुचिः।** धनोष्मणा कस्यचिद् व्यवहारतः साहाय्यं कुर्वन्ति, ते निःस्वाः कार्याः अथवा अधिकृतास्सन्तो धनं गृहीत्वा यऽन्यथा कार्याणि कुर्युः ते निःस्वाः कार्या इति ॥ २३१ ॥

क्षत्रियादिसाधारण्यात्। संस्कारस्योपनयनाख्यस्य क्षत्रियाद्यपेक्षया प्राधान्यविधाने विशेषाद्वर्णानामध्यापनवृत्त्युपदेशयोर्ब्राह्मण एवेश्वरः ।। ३ ।।

(४) **राघवानन्दः।** ब्राह्मणस्यैव धर्मवदने जात्युत्कर्षब्रह्ममुखजत्ववेदाध्यापकत्वसोमपातृत्वानि चत्वारि हेतव इत्याह **वैशेष्यादिति।** वैशेष्यात् ज्यैष्ठ्यात् 'ब्रह्म वा इदमग्र आसीदि'ति श्रुतेः। प्रकृतिश्रैष्ठ्यात् प्रकृतिरुत्पत्तिस्थलम् 'ब्राह्मणोऽस्य मुखमासीदिति' श्रुतेः। नियमस्य स्नातकव्रतकलापादेः। संस्कारस्य सोमपारवसंन्यासित्वस्य ।। ३ ।।

(५) **नन्दनः।** अन्यानपि हेतून्ब्राह्मणोत्कर्षसाधकानाह **वैशेष्यादिति।** प्रकृतिश्रैष्ठ्यात् ब्रह्मण उत्तमाङ्गब्राह्मण एव प्रकृतिः। तस्याः क्षत्रियादिप्रकृतिभ्यो बाह्वादिभ्यः श्रैष्ठ्यात्। धारणाद्रक्षणात् चतुर्षु हेतुषु प्रथमेन स्वरूपत उक्तः। कारणतः तृतीयचतुर्थाभ्यां कर्मत इत्यनुसंधातव्यमिति ।। ३ ।।

(६) **रामचन्द्रः।** वैशेष्यात् प्रकृतिश्रैष्ठ्यात् ब्राह्मणस्वरूपादानवैशिष्ट्यात् नियमस्य व्रतानां वेदस्य धारणात् संस्कारस्य विशेषात् अतिबाल्ये उपनयनादिसंस्कारविशेषात् ब्राह्मणो वर्णानां प्रभुः ।। ३ ।।

(७) **मणिरामः।** जात्युत्कर्षात्। प्रकृतिः कारणं हिरण्यगर्भमुखस्वरूपकारणोत्कर्षात्। नियमस्य च धारणात् नियम्यते अनेनेति नियमो वेदः तस्य धारणात्। अध्यापनरूपसंस्कारस्य विशेषात् ।। ३ ।।

(८) **गोविंदराजः।** अत्रार्थवादः **वैशेष्यादिति।** जात्युत्कर्षान्मुखोद्भवत्वेन च श्रेष्ठकारणजन्यत्वात् स्नातकस्य व्रतानां च करणात् संस्कारस्य चोपनयनाख्यस्य बालस्यैव विधानेन विशेषाद् वर्णानां वृत्तिवेदनतदुपदेशयोर्ब्राह्मण एवेशता ।। ३ ।।

(९) **भारुचिः।** विशिष्टत्वाद् ज्ञातित इतरेभ्यः। अथवा प्रतिज्ञैवेयम्। ततोऽत्र कारणं वक्ति – प्रकृतिश्रैष्ठ्यं तस्य मुखोद्भवत्वमुक्तम्। प्रथमेऽध्याये ब्राह्मणस्तुतावुत्तमाङ्गोद्भवादित्येतत्। नियमस्य च धारणात्। कृत्स्ने वेदाध्ययनधारणाभ्यासलक्षणस्य ब्राह्मणकर्तृकस्यैवोपदेशात्। एवं चातिशयविशेषापेक्षादेतदितराभ्यां विज्ञेयम्। स्नातकधर्माचरणापेक्षं चैतत् पूर्ववद् व्याख्येयम्। संस्कारस्य च श्रौतस्मार्तस्योपनयनादेः श्मशानकरणान्तस्य द्विजातिविषयस्य ब्राह्मणहेतुकत्वात् तस्य विशिष्टत्वम्। अथवाल्पे कर्मण्यग्निहोत्रादावेकशतविधस्याग्नेर्दर्शनेन सम्पादनम्। अश्वमेधादेर्वा वर्णान्तिकर्मणो दर्शनेन फलसम्पदपेक्षयेदमुच्यते– ब्राह्मणस्य विशेषोऽयम्। एवमादि ब्राह्मणस्यैव। चशब्दात् ज्येष्ठोपसंग्रहः प्रथमेऽध्याये ब्राह्मणस्तुतिप्रकरणोपदिष्टः समुच्चीयते। यतश्चैवमेव। ब्राह्मणस्य सर्ववर्णप्रभुत्वाद् अध्यापनाद्यधिकृतं कार्यमित्यर्थवादः ।।३।।

**ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।।**
**चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ।। ४ ।।**

(१) **मेधातिथिः।** के पुनरमी वर्णा नाम मनुष्यजातिवचनो वर्णशब्दो नेत्याह–चत्वारो वर्णा ब्राह्मणाद्याः शूद्रपर्यन्ताः। अन्ये तु बर्बरकैवर्तादयः संकीर्णयोनयो यथा वक्ष्यन्ते। तत्र चतुर्णां **त्रयो द्विजातयः**, उपनयनस्य तेषां विहितत्वात्। **एकजातिः** शूद्रो, न हि तस्यो-

पनयनमस्ति। उपनयनविधौ ब्राह्मणादिवर्णविशेषसंयोगात्। "अष्टमे ब्राह्मणमुपनयीतैका-दशे राजन्यं द्वादशे वैश्यम्" इति। न कस्मिंश्चित्काले शूद्रं पठन्ति। "ननु कालविशे-षानुपादानादनियतकालं शूद्रोपनयनमस्तु।" भवेद्यद्यसंयुक्ता सामान्येनोपनयनस्योत्पत्तिः स्यात्। एताश्च वर्णकालविशेषयुक्ता निमित्तार्थाः स्तुतयः स्युः। न तु पृथगुत्पत्तिर-स्यास्ति। तत्कस्य प्रमाणस्य सामर्थ्येनास्योपनयनमनियतकालं क्रियताम्? "यद्येवं किं तर्ह्यनेन **चतुर्थ एकजातिरिति?**" सत्यम्। आशङ्कामात्रनिवारणार्थम् 'मन्त्रवर्जं तदुच्यत' इति अमन्त्रकस्यानियतकालस्य प्राप्तिराशंक्येत। "ननु च पाकयज्ञविधावेतद्वाक्यं तत्सन्निधौ श्रवणात्तत्र कृतार्थं नान्यत्र भवितुमर्हति"। अत एवाशङ्कामात्रमित्युक्तम्। परमार्थतस्तु व्यवहारनियमार्थपरः श्लोकः ॥ ४ ॥

(२) **सर्वज्ञनारायणः।** एते द्विजातयो द्विजातिशब्दवाच्याः सावित्रीतो द्विजातिजन्मला-भात्। तथा चतुर्थो वर्ण एकजातिरेकमेवास्य जन्म मातुः सकाशात्, पञ्चमो वर्णो नास्ति, संकरजानामवर्णत्वात्। एतच्च तेषां वर्णप्राप्तिर्मा भूदित्येतदर्थमुक्तम् ॥ ४ ॥

(३) **कुल्लूकः।** ब्राह्मणादयस्त्रयो वर्णा द्विजास्तेषामुपनयनविधानात् शूद्रः पुनश्चतुर्थो वर्ण एकजातिरुपनयनाभावात्। पंचमः पुनर्वर्णो नास्ति। संकीर्णजातीनां त्वश्वतरवन्मातापितृ-जातिव्यतिरिक्तजात्यन्तरत्वान्न वर्णत्वं। अयं च जात्यन्तरोपदेशः शास्त्रे संव्यवहरणार्थः ॥ ४ ॥

(४) **राघवानन्दः।** शूद्रस्तु चतुर्थ एकजातिरित्यन्वयः। पञ्चमोऽनुलोमजो नास्तीति ॥ ४ ॥

(५) **नन्दनः।** उक्तमर्थं निगमयति **ब्राह्मणः क्षत्रियो वैश्य इति।** क्रमोपादानं ब्राह्मणाद् द्विजातेरपि क्षत्रियः किंचिदपकृष्टः, क्षत्रियाद्वैश्य इति ज्ञापनार्थं, शूद्रस्यैव जातित्वग्रहणं पृथगुपादानं चापकृष्टतमत्वख्यापनार्थं; पञ्चमो नास्ति, चत्वार एव वर्णा इत्यर्थः ॥ ४ ॥

(६) **रामचन्द्रः।** शूद्रस्तु चतुर्थं एकजातिः, पुनः पंचमः नास्ति ॥ ४ ॥

(७) **मणिरामः।** चतुर्थः शूद्र एकजातिः, उपनयनाभावात्। नास्ति तु पंचमः अर्थात् वर्णः। संकीर्णानां तु पितृमातृव्यतिरिक्तजात्यंतरत्वं न तु वर्णांतरत्वं ॥ ४ ॥

(८) **गोविन्दराजः। ब्राह्मण इति।** ब्राह्मणक्षत्रियवैश्यास्त्रयो वर्णा द्विजा उपनयनस्य तेषां विहितत्वात्। शूद्रः पुनश्चतुर्थो वर्णः एकवर्ण उपनयनाभावात्। पञ्चमः पुनर्वर्णो नास्ति अन्तरप्रभवानां मातापितृजातिव्यतिरिक्तजात्यन्तरत्वाद् अस्येतरवद् एवं चायमेषां वर्णत्वोपदेशः शास्त्रे व्यवहारार्थः। शूद्रस्योपनयनानुपदेशादेवैकजातित्वसिद्धौ चतुर्थ एकजातिस्तु इति इदं धर्मेण वस्तुधर्मज्ञा इत्यनेनायं मन्त्रः केशवपनादिना संस्कारान्तरवद् उपनयनं नास्तीति सूचनार्थम् ॥ ४ ॥

(९) **भारुचिः।** अथोर्योरस्त्रयो वर्णा इ. .दिविशेष एव वर्णशब्द उक्तः। यतस्तद्व्यच-तिरेकेण शूद्रे न प्राप्त इष्यते च। तस्यापि स्यादित्यतस्तदर्थोऽयं श्लोकारम्भः। व्यवहारार्थो वायं ब्राह्मणादीनां चतुर्णामपि वर्णसंज्ञोपदेशः शास्त्रे। तथा चानया व्यवहार एषां सर्वत्र शास्त्रे दृश्यते। वर्णापसदेषु वा वक्ष्यमाणेषु तदभावज्ञापनार्थं तावद्दर्शयति—'नास्ति तु पञ्चमः' इति।

एवं च सत्येत एव चत्वारो वर्णाः स्वतः सिद्धाः। कथं? रसवत्। यथाष्ट (प्राप्ताः) स्वतः सिद्धाः। यस्तु तेषां परस्परं सम्पर्काद्रसविशेष उपलभ्यते। नासौ जात्यन्तरस्तेभ्यो भवति। एवं वर्णानामपि परस्परसम्पर्काद्यश्चण्डालादिरुपलभ्यते। शास्त्रे नासौ जात्यन्तरं तेभ्यो भवितुमर्हति। ब्राह्मणशूद्रावेव हि वर्णौ प्रतिलोमतः सम्पृक्तौ यं जनयतः स चण्डालाख्यां लभते। येषामप्युत्पद्यते वर्णद्वयसम्पर्काज्जात्यन्तरमिति पक्षः। तेषामपि स्वतो नास्तीति कृत्वा युक्तो वर्णापसदेषु वर्णसंज्ञाप्रतिषेधः। एतावांस्तु विशेषः– उत्कर्षापकर्षयोस्तेषां कर्मसम्बन्धस्य च स्मृतिनिमित्तत्वाद्यथाशास्त्रमेतद्द्वयं विज्ञायते। ननु च संस्कारानुपदेशादेव शूद्रस्यैकजातित्वं सिद्धमिति। एवं तर्ह्यमन्त्रतोपनयनसंस्कारप्रतिषेधार्थमिदमेकजातिग्रहणं शूद्रस्य। तथा चोक्तम्– 'मन्त्रव(र्जं) न दुष्यन्ति प्रशंसां प्राप्नुवन्ति चे'ति। तथा च सत्यनियतकालादिसाधनोपनयनसंस्कारप्रतिषेधार्थमिदं शूद्रस्यैकजातिग्रहणं युक्तं मा भूत्। पाकयज्ञवदस्यामन्त्रकस्य प्राप्तिरिति उक्तानुवा(दो)ऽयं पादपूरणार्थः। एवं चान्यपरेऽस्मिन्नेकजातिनिर्देशे नास्ति चोद्यावकाशः। अथवोत्तरार्थः –तथा च दर्शयति ।। ४ ।।

**सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।।**
**आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते ।। ५ ।।**

(१) **मेधातिथिः।** के पुनरमी ब्राह्मणादयो नाम? न ह्येषां परस्परो भेदः शक्योऽवसातुम्। व्यक्त्यधीनाधिगमा हि जातयो न च व्यक्तयः, स्वावयवसन्निवेशविशेषावगमशून्याः शक्नुवन्ति तासां भेदमावेदयितुम्। न च ब्राह्मणक्षत्रियादीनां गवाश्वस्येव वाऽऽकारभेदोऽस्ति, येन रूपिसमवायाच्चाक्षुष्यः स्युः। नापि विलीनघृततैलगन्धरसादिभेदेन क्रियान्तरगोचराः। नापि शौचाचारपिङ्गलकेशत्वादिभिर्धर्मैः शक्यभेदावसानाः, तेषां सर्वत्र संकरोपलब्धेः। व्यवहारश्च पुरुषाधीनः, विप्रलंभभूयिष्ठत्वाच्च पुरुषाणां नान्ततो वस्तुसिद्धिः, इत्यतो जातिलक्षणमुच्यते।

**सर्ववर्णे**ष्वेतल्लक्षणं जातेर्य**त्तुल्यासु** समानजातीयासु संभूतासु **पत्नीषू**ढासु जातास्त एव **जात्या ज्ञेयाः।** प्रायेण मातापित्रोर्या जातिः सैवापत्यस्योढायां जातस्य वेदितव्या। संबन्धिशब्दत्वात्पत्नीग्रहणस्यातो वोढा 'पिता' लभ्यते। तेन येनैवोढा तत एव यस्तस्यामेव जातस्तदा तज्जातीयो भवति।

**अक्षतयोनि**ग्रहणं पुनर्विवाहसंस्कारेण पत्नीत्वमाशङ्कमानं निवर्तयति। सहोढकानीनमातॄणां च।

"ननु च नैवैतासां विवाहसंस्कारोऽस्ति, "पाणिग्रहणिका मन्त्राः कन्यासु" (८।२२६) इति वचनात्। यदपि "वोढुः स गर्भो भवति" (९।१७३) इति विवाहश्रवणेन शास्त्रीयसंस्कारप्रतिपत्तिः, प्राप्तिमात्रवचनत्वात्तस्य न विहितवचनीयं प्रत्यभिज्ञानमस्ति। तस्मात्स्वीकारमात्रे धातुर्वर्तते स्वीकर्तुरित्यर्थः। पित्रादीन् वंचयित्वा येनैव स्वीकृता तस्यैव सा भवति, ततः पुत्रश्चेति तस्यार्थः। पुनर्भूसंस्काराभावात्। "सा चेदक्षतयोनिः स्यात्" (९।१७६) इति पठ्यते। गतप्रत्यागतायामपि पुनःशब्दप्रत्यभिज्ञानाद्भर्तुरुक्ताः। न च ताभिः

सहाभिः सहाधिकारोऽस्ति, यज्ञसंयोगेऽस्ति पत्नीशब्दः। अतो'अक्षतयोनि'शब्दोऽतिरिच्यते। अत्र पूर्वे पत्नीशब्दपर्यायेण नारीष्विति पठन्ति, तदपि न किंचित्। केवले ह्यक्षतयोनिशब्दे त्वसंस्कृतास्वपि जातास्तज्जातीयाः स्युः। पत्नीशब्दपाठेन शास्त्रीयेण विधिना या संस्कृता भार्यात्वमापादिता सा गृह्यते। यास्तु कुमार्य एवोपगम्यन्ते भवन्ति ता 'अक्षतयोनयो' न तु 'पत्न्यः'। तस्मादक्षतयोनिशब्दस्य प्रयोजनं वाच्यम्"।

उच्यते–यत्तावदुक्तं 'न ताः 'पत्न्यो' यज्ञसंयोगाभावादिति' यदि विवाह्येरन् स एव यज्ञः स्यात्। तत्रापि पूषवरुणार्यम्णामस्त्येव यागः। समानार्थौ च यागयज्ञशब्दौ। तस्मात्स्युरेव पत्न्यः। अकन्यात्वादविवाह्यतयैव न पत्न्य इति युक्तम्।

अतश्चानर्थक्येऽक्षतयोनिशब्दस्य प्रयोजनमुच्यते। दृश्यते लक्षणयाऽसत्यपि यज्ञसंयोगे पत्नीशब्दः प्रयुज्यमानो लोके रजकस्य पत्नी। यथाऽन्यत्रावरुद्धासु स्त्रीषु गृहिणीशब्दः सोऽपि भार्यावचन एव केनचिद्धर्मसाम्येन तत्रापि प्रयुज्यते। यद्यपि सति मुख्ये लक्षणा न न्याय्या, तथापि मन्दधियां सुहृद्भूत्वा आशङ्कामात्रं निवर्तयति। किं नाम नाशङ्क्यते मूढमतिभिः?

**आनुलोम्य**ग्रहणमुत्तरार्थम्। येऽपि 'त एव त' इति पठन्ति तेषामपि स एवार्थस्तज्जातीया इति।

अत्रोच्यते–"किं प्रमाणमूलमेतत्स्मृतिकाराणां स्मरणम्? अकार्यरूपत्वान्न धर्माधर्मोपदेशतुल्यम्। प्रमाणान्तरञ्च नास्तीत्युक्तम्। स्मृत्यन्तरमूलत्वेऽन्धपरंपराप्रसङ्गः प्रमाणश्लोके दर्शितः"। उच्यते–वृद्धव्यवहार एव मूलं साधुत्वस्मृतिवत्। ननु च सापराधाऽसावित्युक्तम्। अत एव नियामिकाः स्मृतयः फलवत्यः। अभियुक्तस्मरणमन्यथेति न शक्यते वक्तुम्। शास्त्रस्थाः प्रसिद्धाः प्रमाणतराः। संभवति च तेषामनादिव्यवहारो मूलम्। एतत्स्मृतिसंस्कृतानां वावगताभिजनजातीयानां प्रत्यक्षमप्युपपद्यत इति केषांचिद्दर्शनम्। एतत्**स्मृतिविवेके** प्रपंचितम्। ननु च स्मृत्यन्तरे नायं विशेषोऽस्ति "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः। अनिन्द्येषु विवाहेषु पुत्राः संतानवर्धनाः।।" (याज्ञ० आचा० ९०) इति। आद्येनार्धेन जातिर्लक्ष्यते। उत्तरेण हि ब्राह्मादिविवाहजातानां संतानवर्धनत्वम्। तत्र 'सवर्णेभ्यः सवर्णास्वि'ति नात्र पत्नीशब्दोऽस्ति। कथं नास्ति? यावता "विन्नास्वेष विधिः स्मृत" (याज्ञ० आचा० ९२) इति। मा वा भूत्। अविशेषस्मृतेर्विशेषस्मृतिर्बलीयसी। अदर्शनाद्दर्शनं बलीयः। यत एकेन विशेषो न दृष्टोऽपरेण दृष्ट इति संभवत्येतत्। अतोऽभियुक्तस्मरणं संभवन्मूलतया प्रमाणम्।

"ननु चाव्याप्तेरलक्षणमेतत्। न हि सहोढकानीनपौनर्भवादीनामनेन ब्राह्मण्यं भवति। 'कुण्डगोलकयोः क्षेत्रजस्य च अनभिप्रेतमेव तत्तेषामिति' चेत् का तर्हि तेषां जातिः? कुण्डगोलकयोश्च असति ब्राह्मण्ये श्राद्धे प्राप्त्यभावादनर्थको निषेधः स्यात्। स्मृत्यन्तरविरोधश्च। "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" (या० व्यव० १३३) इति। किंच यदेव लक्षणं तदेव लक्ष्यम्। अनिर्ज्ञातं लक्ष्यं भवति। निर्ज्ञातं लक्षणम्। यथा को देवदत्त इति संशयेऽङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुः। इह तु यथा कश्चित् ब्रूयात्कः काक इत्युक्ते

काकाज्जात इत्युत्तरं तादृगेव 'को ब्राह्मणो' 'यो ब्राह्मणाज्जात' इति। जनकेऽपि हि ब्राह्मण्यमप्रसिद्धमेव। न्यायविरोधश्च। सजातीयात्सजातीयायां जातः स लोके सजातीयो भवति। यथा गोर्गवि गौरश्वाद्वडवायामश्वः।

अत्रोच्यते– यत्तावदुक्तं का तेषां जातिरिति—किमन्यया जात्या? मनुष्यास्तावद्भवन्ति। पुरुषधर्मैश्चाधिक्रियंते अनुपात्तजातिविशेषैः। पुत्रत्वाच्छ्राद्धादिभिश्च। दाने च सर्वेषामधिकारः।

"ननु च विशेषस्योपदेशेन विना व्यवहारो न सिध्यति। सर्वसाधारणत्वान्मनुष्यजातेः"। असदेतत्। सर्वस्यैव स्वसंज्ञाविशेषो विद्यते प्रतिपुरुषं – देवदत्तो यज्ञदत्त इति।

अथापि संबन्धव्यपदेशः कर्तव्य इति "कानीनः सहोढ" इत्येव व्यपदिश्यते। 'सोऽपि चातुर्वर्ण्ये सद्भावात्सामान्यरूप एवेति' चेद्देवदत्तस्य कानीन इत्यादि जनकेन व्यपदेशः करिष्यते। तस्मादसंबद्धमेतद्यदुच्यते व्यपदेशः कथमिति।

एवं तर्हि सर्व एव धर्माश्चातुर्वर्ण्यं प्रतिबोध्यन्ते "अन्तरप्रभवानां च" (मनु० १ । २)। तत्र बहुत्वं ब्राह्मणादिजातिचतुष्टयविषयम्। न चैतेषामप्येकजातिः। सर्वजातिष्वेतस्य लक्षणस्य प्रवृत्तेः। यथैव ब्राह्मणादूढायां ब्राह्मण्यां जातो ब्राह्मणः, एवं क्षत्रियादयोऽपि समजातीयमातृपितृजाताः। सर्वविशेषाभावे च कुतः सामान्यम्? न हि शिंशपादिसर्वविशेषाभावे वृक्षत्वसंभवः।

अन्तरप्रभवाश्चानुलोमप्रतिलोमाः। तत्रानुलोमा मातृजातीयाः। प्रतिलोमास्तु धर्महीना अन्यत्राहिंसादिभ्यः। ते च सर्वे स्वसंज्ञाभिर्विशेषतो निर्दिष्टाः। न चैषां नामापि तत्रास्ति। "तत्र कतमे ते धर्मा यत्रामी अधिक्रियेरन्। क्व च तद्वचनं यदेतानधिकुर्वीत। न हि कश्चिज्जातिविशेषः स्त्रियो धर्मविधिरस्ति। सर्ववर्णानाम'न्तरभावानां चेति' शास्त्रादधिकृतत्वाच्च"।

उच्यते– यत्तावदहिंसादिषु चातुर्वर्ण्यवचनं तन्नरमात्रोपलक्षणार्थमेव। सत्यपि प्रतिलोमाधिकारे मुख्यार्थवृत्तेः। प्रत्युत सहचारिजात्यन्तरपरत्वमेव लक्षयितुं क्षमं नान्तराऽवस्थातुमर्हति। तत्रैव च वक्ष्यामः। इदं चास्ति। "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः" (मनु० १० । ४१) इति। 'अपध्वंसो'ऽसंस्कारः। स चाष्टविधः। 'व्यभिचारेण वर्णानाम्' (मनु० १० । २४) इत्यादिनोक्तः। व्यभिचारः परस्त्रीषु गमनं सजातीयासु। अन्यद्वक्ष्यामः। तस्मादसत्यपि वर्णत्वे वाचनिक एव तेषामधिकारः।

क्षत्रियस्य तु मातृजातीयत्वमेव, लिङ्गदर्शनात्। पुत्रो द्व्यामुष्यायणस्य संविधानादितिकर्तव्यताविशेषः श्रुतः। अन्येष्वपि श्रौतेषु तस्य विधानान्तरं दृश्यते।

तस्मादेष ब्राह्मणादिजातीय एव समभागः स्वपितृव्येण, 'तस्माद्धर्मेण तं भजेत्" इति। न च यथोक्ते विधौ तद्युक्तम्। तदा ह्ययं शूद्रधर्मा। धनस्य यज्ञार्थतायामुक्तायां कुतस्तस्य तावद्भागः?

कुण्डगोलकौ क्षेत्रजावेव। शिष्टसमाचारश्चैवमेव। पाण्डुधृतराष्ट्रविदुराः क्षेत्रजाः सन्तो मातृजातीयाः। अतो युक्तः श्राद्धे प्रतिषेधः। किं च पतितोऽपि तत्र प्रतिषिद्धः, यस्य सर्वधर्मबहिष्कृतत्वात्प्राप्त्याशङ्कैव नास्ति।

यत्तु सजातीयेष्वपि स्मृत्यन्तरं तदुक्तानुवादत्वाद्यथासंभवं व्याख्येयम्। कार्यपुत्रविषयतया वा। यच्च निर्ज्ञातं लक्षणं भवति तत्किं ब्राह्मणार्थो नैव लोकप्रसिद्धः। यत्र ब्राह्मणादिशब्दः प्रयुज्यते तत्रापध्वंसनिवृत्त्यर्थं वचनम्। मातापित्रोरेतदेव जातिलक्षणम्। न चानवस्था, अनादित्वात्संसारस्य।

प्रस्तुतन्यायविरोधस्तु साक्षात् व्यवसायगम्यत्वे आसां जातीनां स्यात्। तास्तु स्मृतिलक्षणाः यथास्मरणं भवितुमर्हन्ति। यथा वा वसिष्ठादयः शब्दा अन्तरेणैवान्वयधर्ममनवच्छिन्नस्मृतिपारंपर्यकैश्च विदितार्थेषु प्रयुज्यन्ते, भवन्ति व्यवहारहेतवो वसिष्ठब्राह्मणा 'वासिष्ठाः' शृण्वंतीति। तद्वदेतद्द्रष्टव्यम्। यथा समाने ब्राह्मणत्वे केचिद्भृगवो वत्सा भारद्वाजा इत्यादिविशेषः स्मृत्येकप्रमाणः तथैव समाने पुरुषत्वेऽमी ब्राह्मणा अमी क्षत्रिया इत्यादिरुपपन्नो व्यवहारः।

यैरपि लिङ्गदर्शनत्वेन जाबालश्रुतिरुक्ता "सत्यकामो जाबालो मातरमपृच्छत्किंगोत्रोऽहमस्मीति। सैवं प्रत्यब्रवीत्, बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे नाहं तद्वेदेति", स एवमुपश्रुत्य हारिद्रुमतं गौतममियाय। तं होवाच ब्रह्मचर्यं भवतो विवत्स्यामि। स एवमुवाच। किंगोत्रस्त्वमसीति। स प्रत्युवाच। अपृच्छं मातरं सा माता प्रत्यब्रवीत् "यौवने त्वामि"त्यादि। गौतमो न चैतदब्राह्मणो वक्तुमर्हति समिधं सोम्याहर उप त्वा नेष्ये", । अस्यायमर्थः—बहुभिरहं यौवने पुंभिः संगताऽभूवं न जाने केन जातोऽसीति। गौतमस्तु सत्यवचनान्निश्चिकाय ब्राह्मणेनायं जातस्ततस्तमुपनिन्येऽतो मन्यामहे स्वैरिणीष्वप्यनूढासु समानजातीयाज्जातासु तज्जातीया भवन्ति।"

तदेतन्न किंचित्। यतो यौवने त्वामालभे, यौवने किल न स्मृतिर्दृढीभवति। उत्कलिकाबहुलत्वाद्यौवने चेतसः। किंच परिचारिणी परिचारिकाहेतोः क्षुधापीडिता बहु विचरन्ती नैकस्मिंस्थाने, ततो मे न स्मृतिरस्ति भर्तुः किं गोत्रमिति।

अतः स्थितमेतत्समानजातीयोढायां जातास्तज्जातीया इति। गौतमस्यापि न ततो वचनाद्ब्राह्मणोऽयमित्यवगमः। प्रागेवासौ तं ब्राह्मण इति वेद। गोत्रं तु न वेद। गोत्रप्रश्नेन चरणप्रश्नो वेदितव्यः। तत्र उपनयनभेदोऽस्ति। न तु गोत्रभेदेनोपनयने प्रयोजनम्।

ननु यथा केचिदाहुः "जातिप्रश्नोऽयमाभिजात्याद्गोत्र एव जातिमवगमिष्यामि साक्षाज्जातिप्रश्ने हि मुखरता स्यात्"॥ ५॥

(२) **सर्वज्ञनारायणः**। वर्णेष्वित्युपलक्षणं, संकीर्णेष्वपि तुल्यासु सवर्णासु मूर्धावसिक्तत्वादिजातिसजातीयासु वा पत्नीषु परिणीतासु नत्वेवमेत्र गृहीतासु। अत एव **याज्ञवल्क्यो** 'विप्रास्वेष विधि'रित्युपसंहारमाह। एतेन कुण्डगोलकयोर्वर्णबाह्यतोक्ता। अत एव **बौधायनः** 'एतानर्थस्य विवाहानाहुरेतैः संस्कृताभिरुत्पन्नास्तज्जातीया भवन्ति नान्य' इति।

**व्यासश्च** "भार्याजाताः समानाः स्युः संकराः स्युरतोऽन्यथे'ति। **देवलश्च** 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अववाट इति ख्यातः शूद्रजन्मा स जातितः। व्रतहीना असंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः॥' शूद्रजन्मेति त्रैवर्णाप्रवेश्यत्वाभिप्रायेणोक्तम्। शूद्रस्य तु जातोऽपि दास्यांशशूद्रेणांशहर इत्यभिधानादनूढोत्पन्नोऽणीतभार्योत्पन्न मत एव शूद्रः। नच कुण्डगोलकयोरब्राह्मणत्वे तत एव श्राद्धानधिकाराच्छ्राद्धप्रकरणे तद्वैयर्थ्यमेवं स्यात् पंक्तिदूषकतया हि तेषां तत्राभिधानं तच्च ब्राह्मणभ्रमस्य तत्र संभवात्प्रवेशे पंक्तेरेव दूषणाच्छ्राद्धं व्यर्थं भवतीत्येतदर्थमुक्तम्। तुल्यासु अक्षतयोनिषु परिणेतुरन्येनासंस्पृष्टासु। एतेन पौनर्भवस्याप्यब्राह्मण्यमुक्तम्। आनुलोम्येन वयस आनुलोम्येन वरापेक्षयाऽल्पवयसि कन्यायामुत्पन्न इत्यर्थः। तेनाधिकवयसः परिणीतायाः सवर्णाया अपि पुत्रो न ब्राह्मण इत्युक्तम्। अत एव यज्जातीयौ यन्मातापितरौ तज्जातीया एव॥ ५॥

(३) **कुल्लूकः।** ब्राह्मणादिषु वर्णेषु चतुर्ष्वपि, समानजातीयासु यथाशास्त्रं परिणीतास्वक्षतयोनिष्वानुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायामित्यनेनानुक्रमेण ये जातास्ते मातापित्रोर्जात्या युक्तास्तज्जातीया एव ज्ञातव्याः। आनुलोम्यग्रहणं चात्र मन्दोपयुक्तमुत्तरश्लोक उपयोक्ष्यते। गवाश्वादिवदवयवसंनिवेशस्य ब्राह्मणजात्यभिव्यञ्जकाभावादेतद्ब्राह्मणादिलक्षणमुक्तम्। अत्र च 'पत्नी'ग्रहणादन्यपत्नीजनितानां न ब्राह्मणादिजातित्वम्। तथा च **देवलः**—'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अववाट इति ख्यातः शूद्रधर्मा स जातितः॥ व्रतहीना न संस्कार्याः स्वतन्त्रास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः॥' **व्यासः**—'ये तु जाताः समानासु संस्कार्याः स्युरतोऽन्यथा'। **याज्ञवल्क्योऽ**पि (या. स्मृ. आ. ४।९०)—'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यभिधाय 'विन्नास्वेष विधिः स्मृतः' (या. आ. ४।९२) इति ब्रुवाणः स्वपत्न्युत्पादितस्यैव ब्राह्मणादिजातित्वं निश्चिकाय॥ ५॥

(४) **राघवानन्दः।** अक्षतयोनिष्विति विशेषणात् कानीनादेर्द्विजत्वं गौणम्। आनुलोम्येन ब्राह्मण्यां ब्राह्मणाज्जातः तथैव ब्राह्मणत्वजात्या विशिष्टः। एवं क्षत्रियविट्शूद्रेषु॥ ५॥

(५) **नन्दनः।** अथ वर्णानां लक्षणमाह **सर्ववर्णेषु तुल्यासु पत्नीष्विति।** तुल्यासु अर्हासु सापिण्ड्यदोषरहितास्वित्यर्थः। अक्षतयोनिष्वनन्यपूर्वासु आनुलोम्यमनिंद्याविवाहास्तेषु संभूता ये वर्णास्ते जात्यन्तरा एव ज्ञेयाः॥ ५॥

(६) **रामचन्द्रः।** अक्षतयोनिषु संभोगान्न क्षता योनयो यासां ता अक्षतयोनयस्तासु आनुलोम्येन संभूताः वयस आनुलोम्येन वरापेक्षया हीनवयसि कन्यायां जाताः ते अनुलोमजाः॥ ५॥

(७) **मणिरामः।** सर्ववर्णेषु ब्राह्मणादिषु चतुर्ष्विति। तुल्यासु समानजातीयासु। पत्नीषु यथाशास्त्रं परिणीतासु। अक्षतयोनिषु शुद्धासु। आनुलोम्येन ब्राह्मणा ब्राह्मण्यां॥५॥

(८) **गोविन्दराजः। स(र्व)वर्णेष्विति। आनुलोम्येन संभूता जात्या ज्ञेयास्तथैव ते।**

ब्राह्मणादिचतुर्ष्वपि वर्णेषु समानजातीयासु अक्षतयोनिषु यथाशास्त्रसमूढासु आनुलोम्येन ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायाम् इत्येवमनुक्रमेण ये जाताः ते पित्रोर्जातितज्जातीया एव बोद्धव्याः। सर्ववर्णेषु इत्युपादानाद् वर्णत्वमात्रेण तुल्यास्तु इत्याशङ्कानिवृत्त्यर्थं आनुलोम्य-ग्रहणम्। इदमेव च सकलमातापितृप्रबन्धस्यापि जातिलक्षणम्, अनादित्वेन पुनः संसारस्या-स्यैव व्यापकत्वात्। सर्वत्र चेह प्रकरणे जातिलक्षणप्रकरणं शास्त्रव्यवहारफलजातिपरिज्ञानार्थं गवाश्वादिवत् ब्राह्मणादीनां जातिभेदावबोधकस्याकारविशेषस्यानुपलब्धेः। एवं च पत्नी-ग्रहणाद् अपत्न्युत्पन्नानां नैव तज्जातीयत्वम्। तथा च **देवलः** 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अधरेट इति ख्यातः शूद्रधर्मा स जातितः।। व्रतहीना असंस्कार्याः सवर्णास्वपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः।।' इत्याह। तथा, 'सवर्णेभ्यः सवर्णासु जायन्ते हि स्वजातयः।' इत्येतदपि **याज्ञवल्क्य**वाक्यं मानवैकवाक्यत्वाद् 'भिन्नास्वेष विधिः स्मृत' इति चोपसंहारात् पत्नीविषयम्। एवं **व्यासः** 'स्वोढाजाताः समानाः स्युः संकराः स्युरतोऽन्यथा' इत्याह। **बौधायनश्च** 'एतान् वन्यान् विवाहानाहुरेतैः संस्कृताभ्यः उत्पन्ना-स्तज्जातीया भवन्ति न त्वन्य' इत्याह। **बृहस्पतिश्च** 'प्रातिलोम्येन संभूता नियोगेन विना च ये। सावित्रीपतिता जातास् त्रयः संकरजातयः'।। इत्याह। अन्ये तु 'सत्यकामो जाबालो जाबालं मातरं आमन्त्रयाञ्चक्रे। भवति, ब्रह्मचर्यं च वत्स्यामि, किंगोत्रोऽहमस्मीति। सा हैनमुवाच, नाहमेतद्वेद यद्गोत्रस्त्वमसि तात, बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे। साहमेतन्न वेद यद्गोत्रस्त्वमसि। जाबाला नु नामा अहमस्मि, सत्यकामो नामस्त्वमसि। स सत्यकाम एव जाबालो ब्रवीथ' इति। स ह हारिद्रुमतं गौतममेत्योवाच, ब्रह्मचर्यं भगवतो वत्स्यामि, उपेयां भगवन्तमिति। तं होवाच किंगोत्रो नु सोम्य असीति। स होवाच नाहमेतद्वेद भो यद्गो-त्रोऽहमस्मि। अपृच्छं मातरं, सा मां प्रत्यब्रवीत् बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि। जाबाला नु नामाहमस्मि, सत्यकामो नामस्त्वमसि। सोऽहं सत्यकामो जाबालोऽस्मि भो इति तं होवाच। नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्य आहर, उत त्वा नेष्य' इति जाबालश्रुतिदर्शनात् कुण्डगोलकयोश्च श्राद्धप्रतिषेधदर्शनाच्च एषां यस्यापि पितृजातीयत्वमिति। तच्चापरेण सह तेनाहमेतद्वेदेति मातुः निश्चयाभावान्नैतद-ब्राह्मणो विवक्तुमर्हति इति पितृतोऽपि तस्योत्पत्तिसंभवात् तदभिप्रायमेतत् स्यात्, यत्तु कुण्डगोलकयोः श्राद्धनिषेधदर्शनं तदुक्तं श्रुतिभ्रमेण ब्राह्मण्याशङ्कायां परिहारार्थं स्यान्नतु स्वभ्रष्टब्राह्मण्यजनकम्।। ५।।

(९) **भारुचिः। सर्ववर्णे(ष्वि) ति**। न द्विजातिष्वेव यथा (स्वी) कृतेषु तुल्यासु नारीषु केन पतिभिः कथं तुल्यासु जातितः अक्षतयोनिष्विति शास्त्रत ऊढास्वित्यर्थः। ननु च पत्नीग्रहणादेवाक्षतयोनित्वं सिद्धम्, येन यज्ञीयाः पत्न्यो भवन्ति ता अक्षतयोनय एव नेतराः। नारीशब्दपाठेन चोद्यमिदम्। पत्नीपाठे पितुर्हेत्वर्थोऽयं अक्षतयोन्युपदेशः पत्नी कस्मात्? अक्षतयोनित्वाद् गुणवतोऽपि च पत्नीशब्दो दृष्टः। यतोऽक्षतयोनिवचनं मुख्यार्थं विज्ञेयम्। 'सर्ववर्णेषु तुल्यास्वि'त्यनेन चानुलोम्यग्रहणमिहानर्थकं सदनन्तरश्लोकार्थं वेदितव्यम्। अत एताभ्यां ये सम्भूता वर्णास्ते जात्या ज्ञेयास्त एव। त एवेत्यनेन पितृवर्णग्रहणमित्येतदुक्ता-

र्थम्। यथा ब्राह्मणजातिभ्यां मातापितृभ्यां सम्भूतो वर्णस्तज्जातिर्भवति। एवं क्षत्रियादिभ्योऽपि सम्भूतास्तज्जातीया विज्ञेयाः गवादिवत्। ननु चैवं सत्यवक्तव्यमेवेदं जातिलक्षणं भवति। वक्तव्यमेव ब्राह्मणत्वस्यान्यकारणनिवृत्त्यर्थम्। तथा चार्थवादास्तत्त्वदृष्टिसर्वा... हेतवः। वृत्तस्थमपि चण्डालं देवा ब्राह्मणं विदुरित्येवमादाय यतो न संस्काराध्ययनवृत्तादिभिर्ब्राह्मण्यं, किन्तर्हि ? उभयाभिजनतः यथावोचामेति। जातिस्त्वधिकरणकारणं संस्कारादीनां विज्ञेयम्। न च वेलैवोत्कर्षहेतुः। यतश्च न ब्राह्मणादीनां जातिभेदः प्रत्यक्षः अनुमेयो वा। मनुष्यत्वादिशेषेति तद्व्यतिरिक्ते संस्थानविशेषानुपलब्धेः गोमहिषाश्वखण्डरादिवत्। एवं च सति प्रत्यक्षानुमानाभ्यामप्राप्ते शास्त्रमर्थवदिदं बोद्धव्यम्। यथा कुशलाकुशलकर्मणोः पुरुषव्यापाराभिसम्बन्ध इति। एवं च समानप्रसवात्मकत्वमात्रे गवादय उदाहरणत्वेन ज्ञेयाः। तथा चाभ्युपगतमेतत्। भवत्येकवर्णजननसन्नियोगेनायं ब्राह्मणत्वादिजातिसम्बन्ध इति। यद्येकमत्यं जनयितृजातिसदृशं भवतीति मन्यसे जनयित्रोस्तर्हीदं जातिलक्षणम्। एतदेव साधारणत्वाल्लक्षणस्येति। नन्वेवं सत्यनवस्था। भवतु, को दोषः ? अवस्थायामेवैतल्लक्षणं समर्थं भवति, नान्यथा। गवादिवत्। न चैवं सति दृष्टविरोधः शास्त्रविरोधो वा। यतो न किञ्चिदेतदिति ॥५॥

**स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान्सुतान् ॥**
**सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥६॥**

(१) **मेधातिथिः। अनन्तरा**स्वव्यवहितास्वानुलोम्येन य उत्पन्नाः पुत्रास्ते **सदृशा** ज्ञेयाः, न तु तज्जातीयाः। यथा ब्राह्मणात्क्षत्रियायां क्षत्रियाद्वैश्यायाम्। तेन सदृशाः, न तु त एव। अत्र हेतु–**मातृदोषविगर्हितान्**। तत्सदृशग्रहणान्मातृत उत्कृष्टान्पितृतो निकृष्टान्। **द्विजैरिति** बहुवचननिर्देशान्मातृतश्च ग्रहणादानुलोम्येष्वेतत्संभवति। प्रातिलोम्ये पितृतो ग्रहणेन मातृतः, पितुर्निकृष्टजातीयत्वात्। अत आनुलोम्यग्रहणं पूर्वश्लोके। यदुक्तमुत्तरार्थमिति तदिहानर्थकम्। अतः परेषु श्लोकेषूपदिश्यते ॥ ६ ॥

(२) **सर्वज्ञनारायणः।** अनन्तरजातासु ब्राह्मणस्य क्षत्रियायां क्षत्रियस्य वैश्यायां वैश्यस्य शूद्रायाम्। द्विजैरित्यनुवादस्तेषामेवानन्तरजसंभवात्। सदृशान् पितुर्मातुश्च नतु सजातीयान् क्रमात्स्मृत्यन्तरोक्तमूर्धावसिक्तमाहिष्यकरणसंज्ञान्। पितृमातृसादृश्याभिधानं ब्रह्मक्षत्रियवैश्याजातान् श्रैष्ठ्यार्थम्। मातृदोषेण मातृभिन्नजातीयत्वेन विगर्हितान् वर्णमध्यबहिष्कृतान् ॥ ६ ॥

(३) **कुल्लूकः।** आनुलोम्येनाव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिर्ये उत्पादिता पुत्राः यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां तान्मातुर्हीनजातीयत्वदोषाद्गर्हितान्पितृसदृशान्नतु पितृसजातीयान्मन्वादय आहुः। पितृसदृशग्रहणान्मातृजातेरुत्कृष्टाः पितृजातितो निकृष्टा ज्ञेयाः। एतेषां च नामानि मूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि। वृत्तयश्चैषा**मुशनसो**क्ताः–हस्त्यश्वरथशिक्षाअस्त्र-

धारणं च मूर्धाभिषिक्तानां, नृत्यगीतनक्षत्रजीवनं सस्यरक्षा च माहिष्याणां, द्विजातिशुश्रूषा-धनधान्याध्यक्षता राजसेवादुर्गांतःपुररक्षा च पारशवोग्रकरणानामिति ।। ६ ।।

(४) **राघवानन्दः ।** स्वजातीया व्यवहितजातीयासु ब्राह्मणक्षत्रियवैश्यैरुत्पादित-त्वान्न ते द्विजातय इत्याह **स्त्रीष्विति** सार्धेन। सदृशान् तद्भिन्नत्वे सति तद्गतभूयोधर्म-शालिनः। अत आह मातृदोषविगर्हितान् मातुर्हीनजातित्वेन जात्यन्तरकर्मान्तरयुक्तत्वेन निन्दितान् मूर्धाभिषिक्तमाहिष्यकरणाख्यानिति शेषः।। ६ ।।

(५) **नन्दनः ।** अथ वर्णसंकरजातानाह **स्त्रीष्वनन्तरजातास्विति ।** अनन्तर-जातास्वनन्तरवर्णजातासु द्विजैरुत्पादितान्ब्राह्मणेन, क्षत्रियायां क्षत्रियेण वैश्यायां, वैश्येन शूद्रायाञ्चोत्पादितान्सुतान् सदृशान्। एवकारो जात्यन्तरभ्रमनिवृत्त्यर्थः। भ्रमप्राप्तौ कारण-त्वेनोक्तं मातृदोषविगर्हितामिति विशेषणं तथापि सदृशानित्यर्थः, ऊढासुतविषयमेतन्मातृ-दोषमात्रस्यैवोपन्यासादनुद्वाहस्योभयदोषवत्त्वात् ।। ६ ।।

(७) **मणिरामः ।** क्षत्रियात् क्षत्रियायां इत्यादिक्रमेण ये संभूताः उत्पन्नाः ते जात्या त एव पितृजातिरूपा एव ज्ञेयाः। पत्नीग्रहणात् अन्यस्त्रीजनितानां न ब्राह्मणादिजातित्वं। 'द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अबावढ इति ख्यातः शूद्रधर्मा स ईरित' इत्यादिदेवलादिवचनात् ।। ६ ।।

(८) **गोविन्दराजः । स्त्रीष्विति ।** अव्यवहितवर्णजातीयासु भार्यासु द्विजातिभिः ये उत्पादिताः पुत्राः यथा ब्राह्मणेन क्षत्रियायां क्षत्रियेण वैश्यायां वैश्येन शूद्रायां तन्मातुर्हीन-जातीयत्वे गर्हिता, न ते एव पितृसदृशान् तान् मन्वादय आहुः। न तु पितृजातीयनामानि च एषां मूर्धावसिक्तमाहिष्यकरणाख्यानि याज्ञवल्क्यादिभिरुक्तानि। वृत्तयश्च एषां अथ **उशनसा** निर्दिष्टा—हस्त्यश्वरथशिक्षा अस्त्रधारणं च मूर्धावसिक्तानां, गीतनृत्यनक्षत्रैः जीवनं सस्यरक्षा च महिष्याणां, स्वजातिशुश्रूषा धान्याध्यक्षता राजसेवा दुर्गान्तःपुररक्षा च पारशवोग्रकरणानामिति ।। ६ ।।

(९) **भारुचिः ।** अनंतरजातासु स्त्रीषु अव्यवहितवर्णजातासु । यथा ब्राह्मणः क्षत्रियायां, क्षत्रियो वैश्यायां, वैश्यः शूद्रायामिति। तान् मातुर्हीनजातीयत्वदोषगर्हितान् पितृसदृशान् जानीयात्...नतु पितृसजातीयान् मन्वादय आहुः। तथा च मातृजातेरुत्कृष्टाः पितृजातितो निकृष्टा ज्ञेयाः। तेषां नामानि मूर्धाभिषिक्तमाहिष्यकरणाख्यानि स्मृत्यंतरोक्तानि ज्ञेयानि।

किमर्थमिदम्? अधिकारादनुलोमस्तुत्यर्थं। द्विजैर्हि ब्राह्मणादिभिः क्षत्रियाद्यासु स्त्रीष्वनन्तरजातासूत्पादितान् सुतान् सदृशानेव तानाहुः। केन? पित्रा, न तु तज्जातीयस्त्व-धमेव सादृश्यवचनात्। यथा गोसदृशो गवय इति अत्र कारणं. .द्वति यस्मान्मातृदोषविग-र्हितास्ते। उक्तं चास्माभिर्जातिलक्षणम् 'सर्ववर्णेषु तुल्यास्वि'ति तु मातृसदृशानाहुः, तेषामेत-द्विरुध्यते। मातृदोषविगर्हितानिति, यस्मादनुलोमेष्वेवैतत् समर्थं भवति पितृदोषाद्धि. . . नन्तर्ग्रहणात् प्रतिलोमेषु। एवं च सति किञ्चिद्धीनास्ते पितृभ्य इति गम्यते। मातृतश्चो-

त्कृष्टा तथा च सत्यानुलोम्यवचनं पूर्वश्लोकोक्तमधिकारार्थं वेदितव्यम्। नैतच्छ्लोकार्थं अनन्तराभिधानसामर्थ्याद् बहुवचनाच्चाद्विजैरिति ॥ ६ ॥

**अनन्तरासु जातानां विधिरेष सनातनः ॥**
**द्व्येकान्तरासु जातानां धर्म्यं विद्यादिमं विधिम् ॥७॥**

(१) **मेधातिथिः।** आद्येनार्धश्लोकेनोक्तमर्थमनुवदति। द्वितीयेन वक्ष्यमाणसंक्षेपः। द्व्येकान्तरा द्व्यन्तरा ब्राह्मणस्य शूद्रा। एकान्तरा वैश्या। नातीव श्लोकः सप्रयोजनः ॥ ७ ॥

(२) **सर्वज्ञनारायणः।** द्व्यन्तरासु स्वद्वितीयान्तरितासु स्वस्यानन्तरवर्णव्यतिरिक्तवर्णस्त्रीष्विति यावत्, ब्राह्मणस्य वैश्यायां शूद्रायां च क्षत्त्रस्य शूद्रायाम्। धर्म्यं धर्मादनपेतं विधिं प्रकारम्। यद्यप्यग्रे संज्ञामात्रमुक्तं तथापि तत्संज्ञानुवादेनान्यत्रोक्तान्धर्मानभिप्रेत्य धर्ममित्युक्तम् ॥ ७ ॥

(३) **कुल्लूकः।** एष पारंपर्यगततया नित्यो विधिरनन्तरजातिभार्योत्पन्नानामुक्तः। एकेन द्वाभ्यां च वर्णाभ्यां व्यवहितासूत्पन्नानां। यथा ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन शूद्रायामिमं वक्ष्यमाणं धर्मादनपेतं विधिं जानीयात् ॥ ७ ॥

(४) **राघवानन्दः।** अम्बष्ठादीनामुत्पत्तिमाह **द्वीति**। द्विश्चैका चेति छेदः। ताभ्यामेतासु जातानां विधिमुत्पत्तिं इमं वक्ष्यमाणम्। तेनात्र विप्रस्यैकान्तरा क्षत्रिया तामपेक्ष्य वैश्या द्व्यन्तरा तां चापेक्ष्य शूद्रा त्र्यन्तरा इति तिस्रः। क्षत्रिया तु वैश्या द्व्यन्तरामपेक्ष्यैकान्तरा शूद्रा। एवं द्वे अत एव वक्ष्यति 'विप्रस्य त्रिषु वर्णेष्वि'त्यादि ॥ ७ ॥

(५) **नन्दनः।** एष विधिः पूर्वश्लोकाभ्यामुक्तो विधिः। द्व्यन्तरासु स्वानन्तरजातिभ्यां व्यवहितासु ब्राह्मणस्य वैश्यासु क्षत्रियस्य शूद्रास्वित्यर्थः। ब्राह्मणस्य त्र्यन्तरायाः शूद्राया अप्युपलक्षणमेतत्, इमं विधिं वक्ष्यमाणं वर्णान्तरत्वं द्व्यन्तरत्र्यन्तरयोः ॥ ७ ॥

(६) **रामचन्द्रः।** द्व्यन्तरासु ब्राह्मणेन वैश्यायां शूद्रायां च। नृपकन्यायां वैश्ये उत्पन्ने शूद्रे उत्पन्ने सति उभौ अम्बष्ठौ भवतः। 'आत्मा विज्ञायते पुत्र'इति ॥ ७ ॥

(८) **गोविंदराजः। अनन्तरास्विति।** एष नित्यो विधिः अनन्तरजातिभार्योत्पन्नानां उक्तः, एकेन द्वाभ्यां व्यवहिताः तदुत्पन्नानां यथा ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां ब्राह्मणेन च शूद्रायां इमं वक्ष्यमाणं धर्मादनपेतं नामविधानं जानीयात् ॥ ७ ॥

(९) **भारुचिः।** अनंतरासु प्रोक्तासु जातानां एष सनातनः नित्यः विधिः उक्तः। द्व्येकांतरासु एकेन द्वाभ्यां च व्यवहितासु जातानां इमं वक्ष्यमाणं धर्म्यं धर्मादनपेतं विधिं विद्यात् जानीयात्। द्व्येकांतरत्वं तु ब्राह्मणेन वैश्यायां क्षत्रियेण शूद्रायां। ब्राह्मणेन शूद्रायामिति। ब्राह्मणाच्छूद्रकन्यायामुत्पन्नस्य द्वे नामनी निषादः पारशवश्चेति।

अनुलोमाधिकारादयमप्येकान्तरद्व्यन्तरासु पूर्ववद्धर्म्यो विधिर्वचनसामर्थ्याद्विज्ञेयः। सोऽयमेकान्तरा सूच्यते... ॥ ७ ॥

**ब्राह्मणाद्वैश्यकन्यायामंबष्ठो नाम जायते ॥**
**निषादः शूद्रकन्यायां यः पारशव उच्यते ॥ ८ ॥**

[ **विप्रान् मूर्धावसिक्तस्तु क्षत्रियायां सुतो भवेत् ।**
**क्षत्रियाद् वैश्यकन्यायां × × × षस्तु सुतः स्मृतः ॥१॥** ]

(१) **मेधातिथिः।** एकान्तरा ब्राह्मणस्य वैश्या, तत्र जातोऽ**बष्ठः।** स्मृत्यन्तरे (गौ. ४।२०) 'भृज्यकण्ठ' इत्युक्तः। द्व्यन्तरायां शूद्रकन्यायां **निषादः पारशवश्च।** निषादशब्दः प्रतिलोमजातीयेऽपि वर्तते। **कन्याग्रहणं** स्त्रीमात्रोपलक्षणार्थमिति व्याचक्षते, वैश्यस्त्रियामित्यर्थः। एवं सर्वत्र द्रष्टव्यम् ॥ ८ ॥

(२) **सर्वज्ञनारायणः।** निषादसंज्ञायां मत्स्यघातकर्मता मा भूदित्यस्य निषादान्तरत्वं द्योतयितुं पारशवसंज्ञानुवादः ॥ ८ ॥

(३) **कुल्लूकः।** कन्याग्रहणादत्रोढायामित्यध्याहार्यं, **विन्नास्वेष विधिः स्मृत इति याज्ञवल्क्ये**न स्फुटीकृतत्वाच्च। ब्राह्मणाद्वैश्यकन्यायामूढायामंबष्ठाख्यो जायते। शूद्रकन्यायामूढायां निषाद उत्पद्यते यतः संज्ञान्तरेण पारशवश्चोच्यते ॥ ८ ॥

(४) **राघवानन्दः।** वैश्यशूद्रयोर्नास्त्येव द्व्यन्तरजातिरित्याह **ब्राह्मणादिति। य इति** नवमाध्यायोक्तानुवादः ॥ ८ ॥

(५) **नन्दनः।** ब्राह्मणस्य संभूतावाह **ब्राह्मणाद्वैश्यकन्यायामिति।** पारशव उच्यते पारशवनामा चेत्यर्थः ॥ ८ ॥

(६) **रामचन्द्रः।** शूद्रकन्यायां ब्राह्मणाज्जातो निषादः यः पारशव इति नाम्ना उच्यते ॥ ८ ॥

(८) **गोविन्दराजः। ब्राह्मणादिति।** 'विन्नास्वेष विधिः स्मृतः' इति याज्ञवल्क्यदर्शनात् ब्राह्मणाद् वैश्यकन्यायां ऊढायां अंबष्ठाख्यो जायते। शूद्रकन्यायां ऊढायां निषाद उत्पद्यते। यः पारशव इत्यनेन संज्ञान्तरेणाशास्त्र उच्यते। संज्ञान्तरकथनं मत्स्यघातवृत्तिप्रतिलोमनिषादभ्रान्तिनिराकरणार्थम् ॥ ८ ॥

(९) **भारुचिः।** नामतः न वर्णतः। यः स्मृत्यन्तरे। हजुकण्ठनामा द्व्यन्तरायां तु ब्राह्मणादेव निषादः शूद्रकन्यायाम् ॥ ८ ॥

**क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् ॥**
**क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते ॥ ९ ॥**

(१) **मेधातिथिः। आचारविहारौ** कायचेष्टावाग्व्यापारश्च। तावस्य क्रूरौ भवतः। स्वभावानुवादोऽयम्। **वपुः**शब्दः स्वभाववचन एव। उभयजातिसंभूतत्वादुभयधर्मा भवति ॥ ९ ॥

(२) **सर्वज्ञनारायणः।** क्रूरो हिंस्र आचारो वृत्तं तेन विहारः क्रीडा यस्य ॥ ९ ॥

(३) **कुल्लूकः।** क्षत्रियाच्छूद्रकन्यायामूढायां क्रूरचेष्टः क्रूरकर्मरतिश्च क्षत्रशूद्रस्वभाव उग्राख्यः पुत्रो जायते ।। ९ ।।

(४) **राघवानन्दः ।** क्षत्रियात्तूग्रजातेरुत्पत्तिरित्याह **क्षत्रियादिति ।** शूद्रवपुः क्षत्रियः पिता, शूद्रा माता, ताभ्यां वपुर्यस्य सः, विप्रान्मूर्धावसिक्तो हि क्षत्रियायां, विशः स्त्रियाम् जातो, 'अंबष्ठस्तु शूद्रायां निषादः पारशवोऽपि वा । वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ स्मृतौ सुतौ ।। वैश्यात्तु करणः शूद्रयां विन्नास्वेष विधिः स्मृत'इति **याज्ञवल्क्योक्ते-**र्मूर्धाभिषिक्तमाहिष्यकारणानां क्षत्रविट्शूद्रकन्यासु विधिवदूढासु यथाक्रममन्तर्भावो ज्ञेयः ।। ९ ।।

(५) **नन्दनः।** क्षत्रियस्य द्व्यन्तरायां जातमाह **क्षत्रियाच्छूद्रकन्यायामिति ।** क्षत्रियोत्पन्ननिमित्तैः क्रूराचारैः विहारः कालक्षेपो यस्यास्ति स क्रूराचारविहारवान् ।। ९ ।।

(७) **मणिरामः।** क्षत्रशूद्रवपुः क्षत्रशूद्रस्वभावः ।। ८ ।।

(८) **गोविन्दराजः। क्षत्रियादिति।** क्षत्रियात् शूद्रकन्यायां ऊढायां क्रूरचेष्टावान् पापस्वभावः क्षत्रियशूद्रोत्पन्नदेहः प्राण्युग्राख्यो नरो जायते । वृत्तिश्चास्य पूर्वश्लोके उशनसोक्ता दर्शिता ।। ९ ।।

(९) **भारुचिः।** क्षत्रियनिमित्तस्य क्रूराचारतास्य विधीयते, एवं च सत्यानुलोम्येन सम्भूता इत्येतदधिकारसामर्थ्यान्न केवलमनन्तरजाता एवानुलोमा उत्कृष्टा भवन्ति । 'स्त्रीष्वनन्तरजातास्वि'त्येवमादिवचनात् । किन्तर्हि ? एकान्तरद्व्यन्तरा अपि तु सदृशा मातृदोषविगर्हणाद् ज्ञेयाः । तथा च दर्शयति ।। ९ ।।

**विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः ।।**
**वैश्यस्य वर्णे चैकस्मिन्षडेतेऽपसदाः स्मृताः ।। १० ।।**

(१) **मेधातिथिः।** अत्र त्रिपादी अनुवाद एव । चतुर्थस्तु पादोऽपसदाभिधानार्थः। एते त्रैवर्णिकानामेकान्तरद्व्यन्तरस्त्रीजाता **अपसदा** वेदितव्याः। अपसदाः पुत्रार्थफलादवसन्नाः समानजातीयपुत्रापेक्षया निंद्यन्ते ।। १० ।।

(२) **सर्वज्ञनारायणः।** षडेते अनन्तरद्व्यन्तरजाः प्रागुक्ताः। अपसदाः सदः सस्यं प्रजारूपं सापकृष्टानेनेत्यपसद इति नाम कृतम् ।। १० ।।

(३) **कुल्लूकः।** ब्राह्मणस्य क्षत्रियादित्रयस्त्रीषु क्षत्रियस्य वैश्यादिवर्णद्वयोः स्त्रियोः वैश्यस्य च शूद्रायां वर्णत्रयाणामेतेषु षट् पुत्राः सवर्णपुत्रकार्यापेक्षयाऽपसदा अवसन्ना निकृष्टाः स्युः ।। १० ।।

(४) **राघवानन्दः।** अत एवाह **विप्रस्येति।** नृपतेर्द्वयोः वैश्याशूद्रयोः एकस्मिन् शूद्ररूपे शूद्रायां वैश्यात्करणाख्यः। अपसदाः निकृष्टजाः सवर्णापेक्षया ।। १० ।।

(५) **नन्दनः।** अथ तासु तेभ्यश्चौर्यतो जातानाह **विप्रस्य त्रिषु वर्णेष्विति।** त्रिषु

क्षत्रियादिषु। द्वयोर्वैश्यशूद्रयोः। एकस्मिन् शूद्रे। वर्णशब्देन वर्णस्त्रियो विवक्षिताः। सदशब्देन फलमुच्यते, अपगतसदा अपसदाः। सवर्णानन्तरा पुत्रकार्यहीना इत्यर्थः।। १०।।

(६) **रामचन्द्रः**। विप्रस्य कन्यायां त्रिषु (क्षत्रिय)वैश्यशूद्रेषु जातेषु सत्सु नृपतेः क्षत्रियस्य कन्यायां वर्णयोः वैश्यशूद्रयो. नृपकन्यायां चैवं वैश्ये उत्पन्ने शूद्रे उत्पन्ने सति उभौ अपसदौ 'आत्मा विज्ञायते पुत्र' इति वैश्यस्य यो वर्ण एकस्मिन् शूद्रे उत्पन्ने सति।। १०।।

(७) **मणिरामः**। त्रिषु वर्णेषु क्षत्रियवैश्यशूद्रेषु द्वयोः वैश्यशूद्रयोः। एकस्मिन् शूद्रे अपसदाः सवर्णपुत्रकार्यापेक्षया निकृष्टाः।। १०।।

(८) **गोविन्दराजः**। **विप्रस्येति**। ब्राह्मणक्षत्रियादिवर्णत्रयस्त्रीषु क्षत्रियस्य वैश्यादिवर्णद्वयस्त्रियोः वैश्यस्य च शूद्राख्यवर्णस्त्रियाम्। एत उक्तास्ते सवर्णपुत्रकापेक्षया-ऽपसदा पुत्रकार्यादवशीर्णा इत्येते अपसदाः तन्निकृष्टाः स्मृताः।। १०।।

(९) **भारुचिः**। मातृदोषविगर्हणाय...सदा उच्यन्ते अपि मातृजातिभ्योऽन्येभ्यो मनुष्येभ्यः एवं च स(त्या)पेक्षिकोऽयमपशब्दस्तेषु विज्ञेयः। उत्कृष्टेष्वेव स पुनस्त्रिः प्रतिलोमहीनतयाऽपसदाः। अपसदवत्यव(शिष्टा) स्सदा(र्थवान्) पुत्रकाधीना इत्यर्थः। सवर्णासु तत्रापेक्ष्योच्यन्ते।। १०।।

**क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः ॥**
**वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ ॥११॥**

(१) **मेधातिथिः**। आनुलोम्ये पूर्वो विधिः। प्रातिलोम्ये न त्वयमुच्यते। **कन्या**ग्रहणमुक्तार्थम्। **वैश्यान्मागधवैदेहौ** यथासंख्येन। राजस्त्रियां मागधः ब्राह्मण्यां वैदेहः।। ११।।

(२) **सर्वज्ञनारायणः**। अनुलोमजानुक्त्वा प्रतिलोमजानाह **क्षत्रियादिति**। राजा-ङ्गना क्षत्रस्त्री।। ११।।

(३) **कुल्लूकः**। एवमनुलोमानुक्त्वा प्रतिलोमानाह **क्षत्रियादिति**। अत्र विवाहा-संभवात्कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम्। अत्रैव श्लोके 'राजविप्राङ्गनासुता'विति ब्राह्मण्यां क्षत्रियाज्जात्या सूतनामा संजायते। वैश्याद्यथाक्रमं क्षत्रियाब्राह्मण्योर्मागधवैदेहाख्यौ पुत्रौ भवतः। एषां च वृत्तयो **मनुनै**वाभिधास्यन्ते।। ११।।

(४) **राघवानन्दः**। प्रतिलोमजानाह **क्षत्रियादिति** द्वाभ्याम्। कन्याग्रहणं योषि-न्मात्रपरम्। 'ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा। शूद्राज्जातस्तु चाण्डालः सर्व-धर्मबहिष्कृतः। क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च। शूद्रादायोगवं वैश्याज्जनया-मास वै सुत'मिति **याज्ञवल्क्य**वचनमेवानयोर्व्याख्यानमिति विरम्यते। अङ्गेन स्व-भोगाय नीयत इत्यङ्गना।। ११।।

(५) **नन्दनः**। एवमनुलोमजा उक्ताः, अथ प्रतिलोमजानाह **क्षत्रियाद्विप्रकन्याया-मिति**।। ११।।

(६) **रामचन्द्रः।** क्षत्रियाद्विप्रकन्यायां जातः सूतः। वैश्याद्राजकन्यायां मागधः वैतालिको भवति। वैश्याद्विप्रकन्यायां वैदेहो नाम भवति ॥ ११ ॥

(७) **मणिरामः।** प्रतिलोमानाह **क्षत्रियादिति।** वैश्यात् क्षत्रियायां मागधः, वैश्याद्ब्राह्मण्यां वैदेह इत्यर्थः ॥ ११ ॥

(८) **गोविन्दराजः।** एवमनुलोमानुक्त्वा प्रतिलोमानाह **क्षत्रियादिति।** अस्मिन् श्लोके पूर्वार्धं सुगमम्। उत्तरार्धं व्याख्यातम्। अत्र विवाहासंभवात् कन्याग्रहणं स्त्रीमात्र-प्रदर्शनार्थम्। क्षत्रियाब्राह्मण्योः यथाक्रमं मागधवैदेहाख्यौ पुत्रौ भवतः। एषां वृत्तयोऽ-स्मिन्नेव शास्त्रे निर्दिष्टाः। अनिर्दिष्टवृत्तीनां पुनः शास्त्रान्तरोक्ता अस्माभिर्यथावसरं निर्दिश्यन्ते ॥ ११ ॥

(९) **भारुचिः।** एवमनुलोमानन्तरमधुना प्रतिलोमानाह प्रातिलोम्येन यथाक्रमं क्षत्रियाद् ब्राह्मण्यां सूतः। वैश्यात् क्षत्रियायां मागधः। ब्राह्मण्यां वैदेहकः ॥ ११ ॥

**शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् ॥**
**वैश्यराजन्यविप्रासु जायन्ते वर्णसंकराः ॥१२॥**

(१) **मेधातिथिः।** अत्रापि यथासंख्यमेव। **वैश्यराजन्य** इति निर्देशे जातिपरेऽपि सामर्थ्यात्स्त्रीलिङ्गप्रतिपत्तिः। 'मृगक्षीर' 'कुक्कुटाण्ड' इति यथावृत्तानुरोधात्स्त्री-प्रत्ययो न कृतः ॥ १२ ॥

(२) **सर्वज्ञनारायणः।** वैश्यराजन्यविप्रासु तज्जातीयस्त्रीषु क्रमादायोगवादयस्त्रयः, एषां च प्रतिलोमपरिणयनासंभवादपरिणीतास्वेव जन्म ॥ १२ ॥

(३) **कुल्लूकः।** शूद्राद्वैश्याक्षत्रियाब्राह्मणीषु क्रमेणायोगवः क्षत्ता नृणामधमश्चा-ण्डालश्च वर्णानां संकरो येषु जनयितव्येषु ते वर्णसंकरा जायन्ते ॥ १२ ॥

(४) **राघवानन्दः।** शूद्राद्वैश्यक्षत्रियविप्रकन्यासु यथाक्रममायोगवक्षत्तृचण्डालाः स्युरिति भावः ॥ १२ ॥

(५) **नन्दनः।** राजन्यशब्दे छन्दोनुरोधात् स्त्रीप्रत्ययो नियुक्तः ॥ १२ ॥

(६) **रामचन्द्रः।** शूद्राद्वैश्यायामायोगवः। शूद्रात्क्षत्रियायां क्षत्ता। शूद्राद्ब्राह्मण्यां जातश्चाण्डालः। सर्वधर्मबहिष्कृता वैश्यराजन्यविप्रास्वेवं वर्णसंकरा जायन्ते। विप्रान्मूर्धा-भिषिक्तो हि क्षत्रियायां विशस्त्रियां। शूद्रयां निषादो जातः। पाराशर्योऽपि वायोगी। ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः। शूद्राज्जातस्तु चाण्डालः। क्षत्रिया मागध-वैश्यात्। 'शूद्रादायोगवं वैश्या जनयामास वै सुतम्। वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ। वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः' ॥ १२ ॥

(७) **मणिरामः।** शूद्राद्वैश्यायां आयोगवः, शूद्रात् क्षत्रियायां क्षत्ता, शूद्राद्ब्राह्मण्यां चांडालः ॥ १२ ॥

(८) **गोविन्दराजः। शूद्रादिति। वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः।** शूद्रात् द्विजातिवर्णानां मैथुनाख्यसङ्करे सति वैश्यायामायोगवः क्षत्रियायां क्षत्ता ब्राह्मण्यां चाण्डालो मनुष्याधमो जायते ।। १२ ।।

(९) **भारुचिः।** एवं प्रातिलोम्येन शूद्राद्वैश्यायामायोगवः क्षत्रियायां क्षत्ता, ब्राह्मण्यां चण्डाल इति। अत्र तु श्लोके वैश्यराजन्ययोर्वर्णनिर्देशात् स्त्रीलिङ्गमविवक्षितम्। तदविवक्षा च पद्यग्रन्थानुविधानेन। इतरथा हि स्त्रीलिङ्गपाठे श्लोकभङ्गः स्यादिति ।। १२ ।।

**एकान्तरे त्वानुलोम्यादंबष्ठोग्रौ यथा स्मृतौ ।।**
**क्षत्तृवैदेहकौ तद्वत्प्रातिलोम्येऽपि जन्मनि ।।१३।।**

(१) **मेधातिथिः। एकांतरे** वर्णे ब्राह्मणवैश्यायामम्बष्ठः, क्षत्रियाच्छूद्रायामुग्रः, एतावानुलोम्येन एवमेकान्तरे प्रातिलोम्येन शूद्रात्क्षत्रियायां **क्षत्ता** वैश्याद्ब्राह्मण्यां **वैदेहः;** तौ **तुल्यौ** भवनादिक्रियासु, न तु यजनादिषु।

चण्डाल एकः प्रतिलोमोऽस्पृश्यः। यथा च दिवाकीर्तिश्लोके तत्स्पर्श एव स्नानं नान्येषु प्रतिलोमेषु। सूतमागधायोगवानामनन्तरजातानां चाण्डालवद्दण्डापूपिकायां सिद्धः स्पर्शादिसंवन्धः ।। १३ ।।

(२) **सर्वज्ञनारायणः।** विप्राद्वैश्यायां यथाम्बष्ठो यथा वा क्षत्रियाच्छूद्रायामुग्रः पुत्र आनुलोम्येन जातोप्यनन्तरस्त्रीजातपुत्रापेक्षया निन्दितस्तथा वैश्याद् विप्रायां जातो वैदेहः शूद्रात्क्षत्रियायां जातश्च क्षत्ता। अनन्तरप्रतिलोमजातापेक्षयैकान्तरितजातत्वान्निन्दित इत्यर्थः। यथा स्मृतौ निन्दिताविति शेषः ।। १३ ।।

(३) **कुल्लूकः।** एकान्तरेऽपि वर्णे ब्राह्मणाद्वैश्यकन्यायामंबष्ठः क्षत्रियाच्छूद्रकन्यायामुग्रः, एतावानानुलोम्येन यथा स्पर्शाद्यर्हौ तद्वदेकान्तरे प्रतिलोमजननेऽपि शूद्रात्क्षत्रियायां क्षत्ता, वैश्याद्ब्राह्मण्यां वैदेहः। एतावपि स्पर्शादियोग्यौ विज्ञेयौ। एकान्तरोत्पन्नयोः स्पर्शाद्यनुज्ञानादनन्तरोत्पन्नानां सूतमागधायोगवानां स्पर्शादियोग्यत्वं सिद्धं भवति। अतश्चाण्डाल एवैकः प्रतिलोमतः स्पर्शादौ निरस्यते ।। १३ ।।

(४) **राघवानन्दः।** क्षत्तृवैदेहयोः स्पृश्यत्वं सदृष्टान्तमाह **एकान्तर** इति। स्वस्वजातितो भिन्नैका जातिरन्तरा व्यवधानं यस्य जन्मनस्तस्मिन्नेकान्तरे जन्मनि यथानुलोमजावम्बष्ठोग्रौ स्पृश्यावेवं शूद्रात्क्षत्रियाजः क्षत्ता वैश्याद्ब्राह्मणीजो वैदेहश्च तुल्यौ स्पृश्यत्वादिना स्मृतावित्यन्वयः। वर्णसंकराणां मातृजातीयसंस्कारं प्रापयितुं तेषामनुवादः ।। १३ ।।

(५) **नन्दनः।** उक्तमेवार्थं श्लोकत्रयेण प्रपञ्चयति **एकान्तरे त्वानुलोम्यादिभिः।** आनुलोम्यादेकान्तरे जन्मनि यथा ब्राह्मणाद्वैश्यायामंबष्ठः, यथा क्षत्रियाच्छूद्रायामुग्रः, यथा प्रातिलोम्येनैकान्तरे जन्मनि शूद्रात्क्षत्रियायां क्षत्ता तथा वैश्याद्ब्राह्मण्यां वैदेहकः, आयोगवश्च क्षत्ता चण्डालश्चेति प्रातिलोम्येन जायन्ते। शूद्राद्वैश्यायामायोगवः, क्षत्रियायां क्षत्ता, ब्राह्मण्यां चण्डाल इत्यर्थः। वैश्यान्मागधवैदेहौ क्षत्रियाद्ब्राह्मण्यां सूत इत्यर्थः। परेऽन्ये एतेऽप्यपसदा इत्यर्थः ।। १३ ।।

(६) **रामचन्द्रः।** एकेन अन्तरे आनुलोम्यात् ब्राह्मणाद्वैश्यकन्यायां अम्बष्ठः। यः पुनः शूद्रात् वैश्यायां आयोगवः। शूद्रात्क्षत्रियायां क्षत्ता। शूद्राद्ब्राह्मण्यां अधमः एकेन अन्तरे राजन्यात् शूद्रायां जात उग्रः अम्बष्ठोग्रौ यथा स्मृतौ भाषणस्पर्शयोग्यौ क्षत्तृवैदेहकौ प्रतिलोमेन जन्मनि तद्वत् भाषणस्पर्शयोग्यौ। क्षत्रियायां शूद्रात् क्षत्तारं जनयति, ब्राह्मण्यां वैश्यात् वैदेहकः॥ १३॥

(७) **मणिरामः।** यथा आनुलोम्यात्, एकांतरे ब्राह्मणाद्वैश्यायां क्षत्रियात् शूद्रायां यथा क्रमेणांबष्ठोग्रौ स्पर्शयोग्यौ स्मृतौ तथा प्रातिलोम्येऽपि तद्वत् एकांतरेण शूद्रात् क्षत्रियायां क्षत्ता, वैश्याद्ब्राह्मण्यां वैदेहः। एतावपि स्पर्शादियोग्यौ विज्ञेयौ। तथा प्रतिलोमजश्चाण्डाल एवैकः स्पर्शाद्यनर्हः॥ १३॥

(८) **गोविन्दराजः। एकान्तर इति।** एकव्यवहिते वर्णे वर्णानुक्रमेण ब्राह्मणाद् वैश्यायां क्षत्रियात् शूद्रायां उत्पन्नौ अम्बष्ठोग्रौ यथा स्पर्शाद्यर्हौ तद्वत् प्रातिलोम्ये जननेऽपि क्षत्रियवैदेहकौ स्पर्शादियोग्यौ विज्ञेयौ। एकान्तरोत्पन्नयोश्च स्पर्शाद्यभ्यनुज्ञानाद् अर्थान्तरोत्पन्नानामपि सूतमागधायोगवानां स्पर्शादियोग्यत्वं सिद्धं भवति। एवं चण्डाल एवैकोऽत्र पर्युदास्यते॥ १३॥

(९) **भारुचिः।** एवमेतान् प्रतिलोमानुक्त्वा विशेषविवक्षयेदमधुनोच्यते—एकान्तरावनुलोमावम्बष्ठोग्रौ यथा संस्पर्शनादौ व्यवहारे अवर्जनीयौ एवं प्रतिलोमावपि सन्तौ क्ष(त्र)वैदेहकौ तद्वद्विज्ञेयौ स्मृतौ; मागधायोगवानां तु प्रातिलोम्येऽनन्तरत्वाद्दण्डापूपिकया सिद्धः क्षत्तृवैदेहकाभ्यामुत्कर्ष इति। एवं च चण्डालपर्युदासोऽत्र विवक्षितः। तथा चोक्तमेव 'दिवाकीर्त्या चे'त्येवमादि॥ १३॥

**पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्॥**
**ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षते॥१४॥**

(१) **मेधातिथिः।** यथा ब्राह्मणात्क्षत्रियायां वैश्यायां च एवं क्षत्रियादुभयोस्**ताननन्तरनाम्ना** प्रचक्षते। **अनन्तराऽनुलोमा** जातिः समाना तेषां, मातृजातीया इत्यर्थः।

अनन्तरग्रहणमविवक्षितमत एवाह **मातृदोषादिति।** पितृजात्युत्कर्षेण नो दूष्यन्ते। अतश्च सत्यपि वर्णसंकरत्वे वचनान्मातृजात्याः स्मृताः संस्कारास्तेषु कर्तव्या इत्युक्तं भवति। न ह्येतद्वचनमन्तरेण क्षत्रियादिसंस्कारास्तेषु लभ्यन्ते; अश्वतरवज्जात्यन्तरत्वात्। **वचनेन तु मातृजातावुक्तायामदोषः॥ १४॥**

(२) **सर्वज्ञनारायणः।** अनन्तरस्त्रीजाः विप्रस्य क्षत्रियायां क्षत्रस्य वैश्यायां वैश्यस्य शूद्रायाम्। अनन्तरनाम्नः क्षत्रियादिनाम्नः प्रचक्षते मातृदोषात्। क्षत्रियादिमातृकत्वान्मातृजातिसाधारणो धर्मस्तेषामित्यर्थः। अनन्तरनाम्न इति नामग्रहणान्नाममात्रं न जातिरिति दर्शितम्॥ १४॥

(३) **कुल्लूकः।** मातृदोषादिति हेतूपन्यासात् अनन्तरग्रहणमनन्तरवच्चैकान्तरद्व्यन्तरप्रदर्शनार्थं, ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः पूर्वमुक्ताः

पुत्रास्तान्हीनजातिमातृदोषान्मातृजातिव्यपदेश्यानाचक्षते। मातापितृव्यतिरिक्तसंकीर्णजातित्वेऽप्येषां मातृजातिव्यपदेशकथनं मातृजातिसंस्कारादिधर्मप्राप्त्यर्थम् ।। १४ ।।

(४) **राघवानन्दः**। पुनः स्पृश्यत्वार्थमनुलोमजात्यन्तरत्रयमाह **पुत्र इति**। द्विजन्मनामनन्तरासु स्त्रीषु उग्राम्बष्ठायोगवजातीयासु विप्राद्यैः पुत्रा जायन्ते ते अनन्तरनाम्न आवृतादिनामकजातियोगिनः। तत्संज्ञा मातृजातिसंस्कारार्थेति **मेधातिथिः** ।। १४ ।।

(५) **नन्दनः**। पक्षान्तरमाह **पुत्रा येऽनन्तरस्त्रीजा इति**। अनन्तरनाम्नोऽनन्तरवर्णनाम्नः क्रमेण क्षत्रियवैश्यशूद्रनाम्नः मातृजातीयानित्यर्थः ।। १४ ।।

(६) **रामचन्द्रः**। अनन्तरस्त्रीजा ये पुत्रा अम्बष्ठोग्रक्षत्तृवैदेहकायोगवा एते पुत्रा अनन्तरस्त्रीजाता अनन्तरनाम्नः ।। १४ ।।

(७) **मणिरामः**। अनंतरग्रहणमेकांतरद्व्यंतरोपलक्षणार्थं। ये द्विजातीनां क्रमेण आनुलोम्येन अनंतरस्त्रीजाः अनंतरैकांतरद्व्यंतरस्त्रीषु जाता उक्ताः पूर्वं ये पुत्राः तान् मातृदोषात् हीनजातिरूपात् अनंतरनाम्नः—मातृजातिव्यपदेश्यान्—आचक्षते। एषां संकीर्णजातित्वेऽपि मातृजातिव्यपदेशकथनं मातृजातिसंस्कारादिधर्मप्राप्त्यर्थं ।। १४ ।।

(८) **गोविन्दराजः**। **पुत्रा इति**। ये द्विजातीनां अनन्तरैकान्तरद्व्यन्तरजातिस्त्रीषु उत्पन्नाः क्रमेणोक्ताः पुत्रास्तान् हीनमातृकत्वात् मातृजातिव्यपदेशानाचक्षत इतीदमेवं मातापितृव्यतिरिक्तजातित्वात् धर्मास्ते मातृजातिगतसंस्कारादिधर्मप्राप्त्यर्थं वचनं मातृदोषाद् इति हेतूपादानाद् अनन्तरग्रहणं एकान्तरप्रदर्शनार्थम् ।। १४ ।।

(९) **भारुचिः**। ब्राह्मणादनन्तराः क्षत्रियाः, तस्यां जातो वर्णेनानन्तरनामा भवति। मातृजातिः क्षत्रियशब्देनोच्यते। प्रयोजनं क्षत्रियजाति.....रेष्वस्यापि ग्रहणं यथा स्यादिति कथञ्चन स्यात्। मातृजातितो यस्मादुत्कृष्टा अनुलोमा उक्ताः 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहुर्मातृदोषविगर्हितान्' (१०।६) इति श्लोके। अथोभयवर्णवर्जितानामुभयत्राप्राप्तौ सत्यामिदमाह—एवं क्षत्रियेण वैश्यायां जातो वैश्यनामा भवति। तत्प्रयोजनं चोक्तम्। नन्वेवं सति ब्राह्मणेन वैश्यानामानन्तर्याभावात् तत्रोत्पन्नस्य वैश्यव्यपदेशो न प्राप्नोति। एवं क्षत्रियेण शूद्रायां ब्राह्मणेन वा। नैष दोषः; आनन्तर्यस्याविवक्षितत्वात्। अपरवर्णासु स्त्रीषु जातास्सन्तः स्त्रीजातिनामानस्ते भवन्तीति। एवं च सति ब्राह्मणक्षत्रियाभ्यां वर्णद्वयजानामनुलोमतां त्रयाणामुपनयनादिसंस्कारप्राप्तमिदं विज्ञेयम्। तथा च सति शूद्रायामुत्पन्ना स्त्रयोऽपि ब्राह्मणादिभ्यस्तु नामानो. . .मातृदोषाच्छूद्रवदसंस्कार्याः। एवं **गौतमः**— 'प्रतिलोमास्तु धर्महीना' इत्युक्त्वाऽनन्तरमेवाह—'शूद्रायां चानुलोमा अपीति' ।। इदानीं यत्र मातृजातित्वं उत्कृष्टजा(तेरपि ने)च्छति ।। १४ ।।

**ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।।**
**आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ।।१५।।**

(२) **सर्वज्ञनारायणः**। ब्राह्मणादिति अनुलोमां संकरस्त्रीषूत्तमवर्णजनितमेतत्कुलम् ।। १५ ।।

(३) **कुल्लूकः।** क्षत्रियेण शूद्रायामुत्पन्नोग्रा उग्रा चासौ कन्या चेत्युग्रकन्या तस्यां ब्राह्मणादावृतनामा जायते। ब्राह्मणेन वैश्यायामुत्पन्ना अंबष्ठा, तस्यां ब्राह्मणादाभीराख्यो जायते, शूद्रेण वैश्यायामुत्पन्नाऽऽयोगवी, तस्यां ब्राह्मणाद्धिग्वणो जायते ।। १५ ।।

(४) **राघवानन्दः।** ते एवावृताभीरधिग्वणजातय इत्याह **ब्राह्मणादिति** ।। १५ ।।

(५) **नन्दनः।** अथान्यान्सङ्करजातानाह **ब्राह्मणादुग्रकन्यायामिति** ।। १५ ।।

(६) **रामचन्द्रः।** आवृतो हस्तिपः। अम्बष्ठकन्यायां विप्रात् आभीरः। ब्राह्मणात् आयोगव्यां धिग्वणः ।। १५ ।।

(७) **मणिरामः। ब्राह्मणादिति।** सर्वत्रान्वेति आभीरनामा जातिः। धिग्वण-नामा ।। १५ ।।

(८) **गोविन्दराजः। ब्राह्मणादिति ।** क्षत्रियेण शूद्रायामुत्पन्ना उग्री, तस्यां ब्राह्मणाद् आवृतो नाम्ना जायते। ब्राह्मणेन वैश्यायां उत्पन्ना अम्बष्ठो, ब्राह्मणादाभीराख्यो जायते। अनयोश्च हस्त्यादिस्वाधिका आवृतानां गोजाविरक्षा आभीराणां इत्यर्थे औशनसे वृत्तिरुक्ता। शूद्रेण वैश्यायामुत्पन्ना आयोगवी, तस्यां ब्राह्मणाद् आभीराख्यो जायते ।। १५ ।।

(९) **भारुचिः।** तत्रेदं प्रतिषेधमारभते जातो–वेदितव्यः। ब्राह्मणादिति वर्तते। अनुलोमस्त्रीषु तावदेवमुत्कृष्टात् यथा चानुलोमः स्त्रीषु। जात्यन्तरमेवं प्रतिलोमं स्त्रीष्वपि दर्शयति **आयोगव्यामिति।** ब्राह्मणजातिरेव न मातृजातिर्भवति। यथा च ब्राह्मणादिभ्यः क्षत्रियाद्यास्वनुलोमजाता मातृनामानो भवन्ति। मातृदोषविगर्हणया (च न त)ज्जातीया भवन्ति ।। १५ ।।

**आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् ।।**
**प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ।।१६।।**

(२) **सर्वज्ञनारायणः।** **आयोगव** इति प्रागुक्तमातृकर्मणाधमः सर्वसंकरजेभ्योऽप्यधमः। शूद्राज्जाता एत इत्यर्थः। आयोगव्यां जातः कैवर्ताख्यः सोऽत्र निषादजत्वान्निषादः, एवं वैश्यादित्यत्रापि ।। १६ ।।

(३) **कुल्लूकः।** आयोगवः क्षत्ता चण्डालश्च मनुष्याणामधम इत्येते त्रयो व्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु पुत्रकार्यादपगतास्त्रयः शूद्रा जायन्ते। पुत्रकार्यक्षमत्वप्रतिपादनार्थ-मुक्तानामप्येषां पुनर्वचनं। एवमुत्तरश्लोक उक्तानामपि ।। १६ ।।

(४) **राघवानन्दः।** पुत्रकार्यविच्छेदाय षण्णां प्राप्तमपसदत्वमनुवदति **आयोगवश्चेति** द्वाभ्याम्। अपत्यकार्यात्सीदन्तीत्यपसदाः ।। १६ ।।

(७) **मणिरामः।** अपसदाः पुत्राः ।। १६ ।।

(८) **गोविन्दराजः। आयोगव** इति। आयोगवः क्षत्ता चण्डालो मनुष्याधम इत्येते त्रयो व्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु शूद्रादपसदाः पुत्रकार्यादवगताः जायन्ते ।। १६ ।।

(९) **भारुचिः**। किन्तर्हि ? उभयजातिविवक्षिता जात्यन्तरं यतस्तान् दर्शयति **आयोगवश्चेति**। यथा च शूद्रादेते त्रयस्त्रिषु। एवं वैश्यान्मागधवैदेहौ। उत्कृष्टवर्णद्वये यथा(सं)ख्येन प्रतिलोमौ भवतः ॥ १६ ॥

**वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव तु ॥**
**प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः ॥ १७ ॥**

(२) **सर्वज्ञनारायणः**। त्रयोऽपसदा अत्यन्तापकृष्टा इत्यर्थः ॥ १७ ॥

(३) **कुल्लूकः**। क्षत्रियाब्राह्मण्योर्मागधवैदेहौ क्षत्रियाद्ब्राह्मण्यां सूत इत्येवं प्रातिलोम्येनापरेऽपि त्रयः पुत्रकार्यादपसदा जायन्ते ॥ १७ ॥

(४) **राघवानन्दः**। प्रतीपं प्रातिकूल्यम्। 'संकरो नरकायैवे'(भ.गी.)त्युक्तेः प्रातिलोम्यमेवात्र हेतुः ॥ १७ ॥

(६) **रामचन्द्रः**। वैश्यात् क्षत्रियायां मागधः। वैश्यात् विप्रकन्यायां वैदेहः। क्षत्रियात् विप्रकन्यायां सूतः भवति। एते प्रतीपं विपरीतं जायन्ते ॥ १७ ॥

(७) **मणिरामः**। कार्योऽनर्हाः ॥ १७–१९ ॥

**जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः ॥**
**शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः ॥ १८ ॥**

(१) **मेधातिथिः**। अयं 'निषादो'ऽस्मिँश्लोके न शूद्रायां ब्राह्मणाज्जातो यः प्रागुक्तः। किं तर्हि ? यः प्रतिलोमो वक्ष्यमाणः, प्रतिलोमाधिकारात्प्रतिलोमा हि पुल्कसा जातिः प्रसिद्धा। एवं शूद्रान्निषाद्यां कुक्कुटकः ॥ १८ ॥

(२) **सर्वज्ञनारायणः**। निषादात् ब्राह्मणशूद्रापुत्रात्। एवं निषाद्यामित्यपि ॥ १८ ॥

(३) **कुल्लूकः**। निषादाच्छूद्रायां जातो जात्या पुल्कसो भवति। निषाद्यां पुनः शूद्राद्यो जातः स कुक्कुटकनामा स्मृतः ॥ १८ ॥

(४) **राघवानन्दः**। अन्यानपि तथाविधानाह **जात इति** द्वाभ्याम् ॥ १८ ॥

(६) **रामचन्द्रः**। क्षत्रियायां निषादाज्जातो जात्या पुल्कसः भवति। निषाद्यां शूद्राज्जातः कुक्कुटकः स्मृतः ॥ १८ ॥

(८) **गोविन्दराजः**। **वैश्यादिति**। **जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः। शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः** ॥

पुरुषजातेः प्रतिलोमत्वान्न निषादोऽत्र पारशवः, पितुः प्रतिलोमे हि यथा **व्यासः**

**'उग्रा मागधसंयोगाज्जातः कुन्तलकाभिधः। स नापित इति प्रोक्तः क्षुरकर्मविधानकृत् ॥ क्षत्रियाज्जायते वैश्यान्मागधो वाक्यजीवनः। शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् ॥'**

इत्येवं य एतस्मान्निषादाच्छूद्रायां जातो जातितः पुल्कसः साक्षाद् भवति। निषाद्यां पुनरेवं विधायां एव यः शूद्राज्जातः स कुक्कुटकनामा स्मृतः, तस्य च कुक्कुटकानां प्रहरकरणं चक्रतोमरभिण्डिमालप्रासासिपरशुलगुडलोहजालिकासत्त्वघ्नानि कर्माणीति शङ्खेन वृत्तिरुक्ता ।। १७-१८ ।।

(९) **भारुचिः**। जातस्यानुलोम्यात् पुल्कसत्वमयुक्तम्। प्रतिलोमत्वात् पुल्कसजातेरिति। एवमेव ।। १८ ।।

**क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।।**
**वैदेहकेन त्वंबष्ठ्यामुत्पन्नो वेण उच्यते ।। १९ ।।**

(१) **मेधातिथिः**। अनुलोमाः स्त्रियः, प्रतिलोमाः पुमांसः, तयोः संभवे **श्वपाकवेणौ** प्रतिलोमजातीयौ ।। १९ ।।

(२) **सर्वज्ञनारायणः**। क्षत्तृजात इति पितृदोषात् ।। १९ ।।

(३) **कुल्लूकः**। शूद्रेण वैश्यायां जातः क्षत्ता, क्षत्रियेण शूद्रायां जाता उग्रा, तेन तस्यां जातः श्वपाक इत्युच्यते। वैदेहकेनांबष्ठ्यां ब्राह्मणेन वैश्याज्जातायां वेण इति कथ्यते ।। १९ ।।

(४) **राघवानन्दः**। वेणो मवुरुडः ।। १९ ।।

(६) **रामचन्द्रः**। उग्रायां उग्रजात्यां क्षत्तुः जातः श्वपाकः। अंबष्ठ्यां वैदेहकेन जातः वेन इति उच्यते ।। १९ ।।

(८) **गोविन्दराजः**। क्षत्तुरिति। क्षत्तुः शूद्राक्षत्रियजातायामुत्पन्नः श्वपाक इत्युच्यते। वैदेहकेन वैश्यतो ब्राह्मणजातेन अम्बष्ठ्यां ब्राह्मणेन वैश्याजातायामुत्पन्नो वेन इति कथ्यते ।। १९ ।।

(९) **भारुचिः**। उत्कर्षापकर्षौ चैतेषां शास्त्रतः कल्पयितव्यौ। वर्णसङ्करप्रकरणे चाप्रतिलोमा अपि सङ्कीर्णयोनयो व्रात्याज्जाता वक्तव्या इति ।। १९ ।।

**द्विजातयः सवर्णासु जनयंत्यव्रतांस्तु यान् ।।**
**तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ।। २० ।।**

(१) **मेधातिथिः**। नैते प्रतिलोमवर्णसंकराः स्युः। अतोऽस्मिन्विधावुच्यन्ते।

**द्विजातयो यान्सवर्णासु जनयन्ति** तेऽवेदव्रता भवन्ति, अब्रह्मचारिणः **सावित्रीपरिभ्रष्टा** उपनयनहीनाश्च तदा **व्रात्या** इति **तान्निर्दिशेत्**।

**अव्रताञ्जनयन्तीति** नायं संबन्धः। न हि व्रतिनोऽव्रता वा जन्यन्ते, जातानामुपनयनसंस्कारविधानात्। उक्तव्रात्यलक्षणानुवादः, उत्तरविवक्षया।

यस्त्वयं पाठोऽव्रतायाञ्जनयन्ति तान्व्रात्यान्विनिर्दिशेत्' तदसत्; उक्तव्रात्यलक्षणविरोधात् ।। २० ।।

(२) **सर्वज्ञनारायणः**। सावित्रीपरिभ्रष्टाननुपदेश्यसावित्रीकान्। व्रात्यनाम्नो वर्ण-बाह्यान् ।। २० ।।

(३) **कुल्लूकः**। द्विजातयः सवर्णासु स्त्रीषु यान्पुत्रानुत्पादयन्ते ते चेदुपनयनाख्यव्रत-हीना भवन्ति तदा तानकृतोपनयनान्व्रात्येत्यनया संज्ञया व्यपदिशेत्; 'अत ऊर्ध्वं त्रयोऽप्येते' (२।३९) इत्युक्तमपि व्रात्यलक्षणं प्रतिलोमजपुत्रवदस्याप्युपकाराक्षमपुत्रत्वदर्शनार्थ-मस्मिन्संकीर्णप्रकरणेऽनूदितम् ।। २० ।।

(४) **राघवानन्दः**। व्रात्यानामिव तज्जानामपि पुत्रकार्यनिवृत्त्यर्थं व्रात्यत्वमाह **द्विजातय** इति। ते स्वयमव्रताः कालेऽप्राप्तोपनयनाः अनुलोमेनोद्वाहितास्वक्षतयोनिषु सवर्णास्वपि जनयन्ति यान् तान् सावित्रीभ्रष्टत्वेनाव्रतानिति कृत्वा व्रात्यान्निर्दिशेदित्यन्वयः ।। २० ।।

(५) **नन्दनः**। अथ त्रैवर्णिकानामनुपनीतानां जात्यन्तरत्वमाह **द्विजातयस्सवर्णास्विति**। यान्सुताञ्जनयन्ति तानव्रताननुपनीतान् अत एव सावित्रीपरिभ्रष्टान् ।। २० ।।

(६) **रामचन्द्रः**। अव्रतान् अकृतयज्ञोपवीतान् सावित्रीपरिभ्रष्टान् व्रात्यान् इति अभि-निर्दिशेत् कथयेत् ।। २० ।।

(७) **मणिरामः**। अव्रतान्-ते च उपनयनाख्यव्रतहीना भवंति-तान् सावित्रीपरिभ्रष्टान् अकृतोपनयनान् व्रात्यान् विनिर्दिशेत्। उक्तमपि व्रात्यलक्षणं प्रतिलोमजपुत्रवत्पुत्रकार्याऽ-क्षमत्वप्रदर्शनार्थं संकीर्णप्रकरणे उक्तं ।। २० ।।

(८) **गोविन्दराजः**। इदानीं व्रात्यजातानामप्रतिलोमानामपि सतां संस्कारत्वप्रति-पादनार्थं अत ऊर्ध्वं 'त्रयोऽप्येत' इत्याद्युक्तं व्रात्यलक्षणं अनुवदितुमाह **द्विजातय** इति। द्विजाति-स्त्रीषु यान् पुत्रान् उत्पादयति ते चेत् उपनयनाख्यव्रतहीना भवन्ति, तदा तान् अकृतोपनयनान् व्रात्या इत्यनया संज्ञया व्यपदिशेत् ।। २० ।।

(९) **भारुचिः**। यत इदमुच्यते—सावित्रीपतिताद्व्रात्यो जायते; न तु सावित्रीपतितो व्रात्यो भवति। एवं च सति व्रात्यस्तोमप्रायश्चित्तं सावित्रीपतितस्य न भवति। अन्यत्त्वस्य प्रायश्चित्तं कल्प्यम्। इतः प्रभृति चैते व्रात्याज्जाताः पुत्रपौत्रा व्रात्या इति केचित्—तदयुक्तम्। उक्तत्वाद्व्रात्यलक्षणस्योपनयनप्रकरणे— 'अत ऊर्ध्वं त्रयोऽप्येत' इत्यादि। तस्मान्नेदं व्रा(त्य)लक्षणमव्रताद्यो जायते स व्रात्य इति। किं तर्हि? अव्रत एव व्रात्य इत्युक्तं (यतस्ते) नास्य विरोधादनर्थोऽयम्। विप्रतिषिद्धं चैतत्। यदि द्विजातयः कथं व्रताः? अथाव्रताः कथं द्विजातयः? कथं तर्ह्यस्य पा..... द्विजातयः? सवर्णासु जनयन्त्य-व्रतांस्तु यान्। तान् सावित्रीपरिभ्रष्टानुपनयनादिसंस्काररहीनान् व्रात्यानित्यभिनिर्दिशेत्। उक्तव्रात्यलक्षणानुवाद उत्तरप्रकरणादिसम्बन्धार्थः। सोय....।।२०।।

**व्रात्यात्तु जायते विप्रात्पापात्मा भूर्जकण्टकः ।।**
**आवन्त्यवाटधानौ च पुष्पधः शैख एव च ।।२१।।**

(१) **मेधातिथिः।** सवर्णास्विति पूर्वश्लोकादनुवर्त्यते। इह स्त्रीजातेरनुपादानादवश्यंभावाच्च तदपेक्षायाः स्मृत्यन्तरे वैश्यायां ब्राह्मणाज्जातो **भृज्जकण्टकः** स्मर्यते। अतो विशिनष्टि **पापात्मेति।** स ह्यनुलोमत्वान्न **पापात्मा।** अयं चासंस्कृतात्मनो व्रात्याज्जातोऽनधिकारित्वाद्युक्तं यन्निन्द्यते। न च पर्यायशब्दा देशभेदेन प्रसिद्धप्रयोगभेदाः। पूर्वैस्तु व्याख्यातं तत्पुत्रपौत्राणामेता आख्याः। भृज्जकण्टको ब्राह्मण्यां जातः। **आवन्त्यश्चा**वन्त्याम्। तस्यामेव **वाटधानः।** वाटधानात्पुष्प**शेखरः**?। एवमुत्तरेष्वपि ॥ २१ ॥

(२) **सर्वज्ञनारायणः।** व्रात्याद्विप्रात् व्रात्यायामेव विप्रायां। सवर्णास्वित्यनुवृत्तेः तत्र भूर्जकण्टकः सवर्णयोरपत्यम्। भूर्जकण्टकस्त्रियां विप्राद्व्रात्यादावन्त्यः। आवन्त्यां वाट इत्यादिपूर्ववज्जातिस्त्रीषु व्रात्येन विप्रेण जनिता विप्रजाः। ऋणादिष्वपि व्रात्यक्षत्रियादिजनितेषु सुधन्वाचार्यादिषु च व्रात्यवैश्यजनितेषूह्यम्। आद्यस्य तज्जातीयस्त्रियामुत्तरेषां तु पूर्वपूर्वजातिस्त्रियां जन्मेति। पापात्मेति विशेषणं निन्दार्थम् ॥ २१ ॥

(३) **कुल्लूकः।** व्रात्याद्ब्राह्मणात्सवर्णास्वित्यनुवृत्तेर्ब्राह्मण्यां पापस्वभावो भूर्जकण्टको जायते। तथाऽऽवन्त्यवाटधानपुष्पधशैखा जायन्ते। एकस्य चैतानि देशभेदप्रसिद्धानि नामानि ॥ २१ ॥

(४) **राघवानन्दः।** ते तु व्रात्यास्त्रयस्तज्जातानाह **व्रात्यात्त्विति** त्रिभिः। तत्र तथाविधब्राह्मणजाः पञ्च भूर्जकण्टकादयः। झल्लादयः सप्त क्षत्रियजाः। पञ्च वैश्यजाः। पंचेति देशसंज्ञाभिरेते प्रसिद्धा इति **मेधातिथिः।** देशभेदेनैकैकस्य नामानीति **कुल्लूकः,** अन्यथैकजात्या वर्णद्वयानुपपत्तेः ॥ २१–२३ ॥

(५) **नन्दनः।** विप्रादिति विशेषणं व्रात्यत्वेऽप्यस्य विप्रत्वमूलच्छेदो नास्तीति सूचयितुं। असंस्कृतपितृजातः पापतर इत्यभिप्रायेणोक्तं **पापात्मेति।** पञ्चैते सजातिषूढासु स्त्रीषु जाता अपि संस्कारविप्रकर्षादुत्तरोत्तरमपकृष्टावृत्तितो देशतो वा भिन्नसंज्ञा विज्ञेयाः, षष्ठादीनामवचनन्तु जात्यन्तरत्वेनाप्रसिद्धेः ॥ २१ ॥

(६) **रामचन्द्रः।** ब्राह्मणक्षत्रियवैश्यजातीनां व्रात्यजातिर्भवति, उपनयनाभावात्। व्रात्याद्विप्राद्विप्रकन्यायां भूर्जकण्टको नाम जातिर्जायते। भूर्जकण्टकः स्मृतः कण्टको ज्ञेयः आवन्त्यः ॥ २१ ॥

(७) **मणिरामः।** व्रात्यात्-विप्रात्-सवर्णास्विति पुनरावर्तते ब्राह्मण्यां भूर्जकंटको जायते तस्यैव देशभेदेन आवंत्यः वाटधान-पुष्पध-शैखेति नामानि ज्ञेयानि ॥ २१ ॥

(८) **गोविन्दराजः। व्रात्यात्तु जायते विप्रात् पापात्मा भृज्जकण्टकः** इति। उक्तलक्षणाद् व्रात्यात् सवर्णासु इत्य(ति)पुनरावृत्तेः ब्राह्मण्यां पापवतोत्पन्नत्वात् दुष्टशरीरः भृज्जकण्टकाख्यो जायते। तथा वाटधानपुष्पधशैखाख्या जायन्त इति एकस्यैव देशभेदप्रसिद्धैतानि नामानि। एवं उत्तरत्रापि **गौतमेन** ब्राह्मणाद् वैश्यायां जातो भृज्जकण्टक उक्तः। स च अनुलोमत्वादपाप्मेति विशेषणं। एषां च वृत्तयोऽथ औशनस उक्तः–अभिचारमूलकर्म द्विषतां मन्त्रौषधीश्च अभिमुखीकरणं नाशनं वा भृज्जकण्टकानां आवन्त्यवाटधानैः स्वसैन्यानां विजित्वा चर्या व्रात्याजैरन्यैः परराष्ट्राणां कोशमन्त्रवृत्तज्ञानं मित्रामित्रता च ज्ञेयेति ॥ २१ ॥

(९) **भारुचिः।** व्रात्याद्विप्राद्वर्णायामेव तस्याः पूर्वश्लोकेऽधिकृतत्वादिह वचनात् स्त्री... जायते वर्णः। स भूर्जकण्टकनामा भवति। व्रात्याभिजनः स्मृत्यन्तरे–वैश्यायां ब्राह्मणाज्जातो भूर्जकण्टकः स्मर्यते। स चानुलोमत्वादपापात्मा, यत इदं तदपेक्षं विशेषणमुच्यते–पापात्मत्वमस्य व्रात्यजातत्वाद् असंस्कृतात्मनः। ततोऽपि ब्राह्मण्यामेवा (वन्त्यां) पापतरः। न तु भूर्जकण्टकस्त्रियाम्। तस्यां हि जातो वर्णस्तन्नामा भवति। अत इदं विशेष्यते ब्राह्मण्यामेव। एतेनोत्तरा व्याख्याता। एवमा(व)न्त्याद्वा दधाने पापतमः। तस्मात् पुष्पधकः। ततोऽपि शैव इति। इयद्विकारत्वाद्वायं नाम्ना निर्देशं पञ्चधा ब्राह्मणा व्रात्यजातानां निदर्शनार्थो वा। एवमुत्तरयोरपि बोद्धव्यम्। क्षत्रियव्रात्याज्जाताः क्षत्रियायामधुनोच्यते॥ २१॥

**झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च॥**
**नटश्च करणश्चैव खसो द्रविड एव च॥२२॥**

(२) **सर्वज्ञनारायणः।** और्णादयः सप्त राजन्याद्व्रात्यात्॥ २२॥

(३) **कुल्लूकः।** क्षत्रियाद्व्रात्यात्सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्या जायन्ते। एतान्यप्येकस्यैव नामानि॥ २२॥

(५) **नन्दनः।** श्लोकद्वयमनेन व्याख्यातम्॥ २२–२३॥

(६) **रामचन्द्रः।** राजन्याद्व्रात्यात्क्षत्रियायां जातः झल्लः निच्छिविः नटः करणः खसः द्रविडः॥ २२॥

(७) **मणिरामः।** राजन्यात् व्रात्यात्-क्षत्रियायां झल्लादयः॥ २२॥

(८) **गोविन्दराजः। झल्लो मल्लश्चेति।** क्षत्रियाद् व्रात्यायां सवर्णायां झल्लमल्लनिच्छिविनटकरणखसद्रविडाख्या जायन्ते। इत्येषां च वृत्तयः अथ उशनस उक्तः, चारवृत्तित्वान्नटकरणानाम् उदकाहरणं प्रपावेश्मदानं च खसद्रविडानां व्रात्यजैः अन्यैः इत्यादिपूर्वश्लोके दर्शितम्॥ २२॥

(९) **भारुचिः।** एते च पूर्ववद्व्याकरणीयाः॥२२॥

**वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च॥**
**कारुषश्च विजन्मा च मैत्रः सात्वत एव च॥ २३॥**

(१) **मेधातिथिः।** एताभिः संज्ञाभिः प्रसिद्धा एवंजातीया वेदितव्याः॥ २२–२३॥

(२) **सर्वज्ञनारायणः।** सुधन्वाचार्यादयः पञ्च वैश्याद्व्रात्यात्॥ २३॥

(३) **कुल्लूकः।** वैश्यात्पुनर्व्रात्यात्सवर्णायां सुधन्वाचार्यकारुषविजन्ममैत्रसात्वताख्या जायन्ते। एकस्य चैतान्यपि नामानि॥ २३॥

(६) **रामचन्द्रः।** वैश्याद्व्रात्याद्वैश्यायां जाताः सुधन्वादिसात्वतान्ताः॥ २३॥

(७) **मणिरामः।** वैश्यात्तु व्रात्यात् सवर्णायां सुधन्वादयः॥ २३॥

(८) **गोविन्दराजः। वैश्यादिति।** वैश्यात् पुनः व्रात्यात्सुधन्वाचार्यकारुषविजन्ममैत्र-सात्वताख्या जायन्ते। वृत्तयश्च एषां अपि औशनस उक्ताः आचार्यसात्वतैः देवपूजनं शिष्टानां व्रात्यजैरन्यैरित्यादिदर्शनम् ।। २३ ।।

(९) **भारुचिः।** वैश्याच्च व्रात्यात् सुधन्वादयः पूर्ववद्विज्ञेयाः। नामनिर्देशे च प्रयोजनम्। य एभिर्नामभिः तम ... र्देश उच्यन्ते वर्णाः त एवंप्रकारादि विज्ञेयाः। अविज्ञातयोस्तयोरपि सन्तः किमर्थं पुनरन्तरप्रभावानामभिधानप्रकरणे व्रात्या जाता उच्यन्त इति ।। २३ ।।

**व्यभिचारेण वर्णानामवेद्यावेदनेन च ।।**
**स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः।। २४।।**

(१) **मेधातिथिः। व्यभिचारः** परस्त्रीगमनम्। तत्समानजातीयासु परकीयास्व-नुलोमप्रतिलोमासूढास्वनूढासु च स्वयम्। **अवेद्यावेदनम**विवाह्याविवाहः। 'अविवाह्याः' स्वसृनप्त्र्यादयस्तदयोन्यः। **स्वकर्मणां त्याग** उपनयनवेदग्रहणादीनाम्। क्षात्त्रवृत्त्यादयोऽपि पुत्रपौत्रान्वयिन एवमुक्त इति केचित् ।। २४ ।।

(२) **सर्वज्ञनारायणः।** यथा ब्राह्मण्यां क्षत्रियस्य व्यभिचारात्सूत इति। अवेद्यावेदने-नाविवाह्यानामसवर्णानां सवर्णानामपि सगोत्रादीनां विवाहे मूर्धावसिक्तचाण्डालाद्याः। स्वकर्मणामुपनयनव्रतानां त्यागात् व्रात्यजाः। वर्णसंकराश्चातुर्वर्ण्यबाह्याः ।। २४ ।।

(३) **कुल्लूकः।** ब्राह्मणादिवर्णानामन्योन्यस्त्रीगमनेन सगोत्रादिविवाहेनोपनयनरूप-स्वकर्मत्यागेन वर्णसंकरो नाम जायते, अतो युक्तमस्मिन्प्रकरणे व्रात्यानामभिधानम् ।। २४ ।।

(४) **राघवानन्दः।** प्रकारान्तरेणापि वर्णसंकरो भवतीति संक्षिप्याह **व्यभिचारेणेति।** विहाय विन्नास्वपतिमाभिमुख्येन कामुकम्। चरतीति स्वतन्त्रा या सा स्मृता व्यभिचारिणीति व्यभिचारेण वर्णानामन्योन्यस्त्रीगमनेनेति दृष्टान्तार्थः। व्यतिषङ्गेनेति **मेधातिथिः।** नियुक्ता-तिरिक्तपरस्त्रीगमनेनेत्यर्थः। अवेद्याः सगोत्राः सवर्णा वा तासां विवाहेन। **स्वकर्मणां** संध्यादीनां त्यागेन स्वकालाप्राप्तोपनयनैर्व्रात्यानां संकरत्वस्योक्तत्वात् ।। २४ ।।

(५) **नन्दनः।** यदीदं संस्काराभावे जात्यन्तरत्वमुक्तं तदनुपपन्नमित्याशङ्क्य दृष्टान्तेन स्थापयति **व्यभिचारेण वर्णानामिति।** अवेद्या अविवाह्याः पुनर्भ्वादयस्तासां वेदनेन विवाहेन संकरो मातापित्रोरविद्याजातिप्राप्तिः। 'व्यभिचारेण वर्णाना'मिति प्रसिद्धव्यभिचारो दृष्टा-न्तार्थः ।। २४ ।।

(६) **रामचन्द्रः।** वर्णानां व्यभिचारेण च पुनः अवेद्यावेदनेन च **अविवाह्याविवाहेन** स्वकर्मणामुपनयनादीनां त्यागेन वर्णसंकरा जायन्ते ।। २४ ।।

(७) **मणिरामः।** व्यभिचारेण परस्परस्त्रीगमनेन। अवेद्यावेदनेन च सगोत्राद्य-विवाह्याविवाहेन च ।। २४ ।।

(८) **गोविन्दराजः। व्यभिचारेणेति।** ब्राह्मणादीनां वर्णानां इतरेतरस्त्रीगमने स्वगो-

त्वाद्यविवाह्याविवाहेन उपनयनाख्यस्वकर्मत्यागेन वर्णसंकरो नाम इत्युत्पद्यते। अतो युक्त-मित्यस्मिन्प्रकरणे व्रात्यजातानामभिधानम् ।। २४ ।।

(९) **भारुचिः**। यस्मात्-व्यभिचारो वर्णानां प्रतिलोमस्त्रीग्रहणेन मुख्यः। अनुलोमेऽपि मुख्यवर्णापेक्षयोच्यते। अवेद्यावेदनं पुनरेतज्जाताव(पि) कामचारी पुन(र्भुवा)दिस्त्रीपरिग्रहेण स्वकर्मणां च त्यागः उपनयनादिसंस्कारहानिरधिकृता। एवं च सति सवर्णसंस्कारहेतु-प्रदर्शनार्थमिदं युक्ताभिधानं परिहारार्थं चैषाम् ।। २४ ।।

**संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः ।।**
**अन्योन्यव्यतिषक्ताश्च तान्प्रवक्ष्याम्यशेषतः ।। २५ ।।**

(१) **मेधातिथिः**। **व्यतिषङ्गः** संबन्धः। इतरेतरमनुलोमानामनुलोमैः प्रतिलोमैश्चैवं प्रतिलोमानामन्यैः प्रतिलोमैरनुलोमैश्च। वक्ष्यमाणासंज्ञार्थं वचनम् ।। २५ ।।

(२) **सर्वज्ञनारायणः**। य उक्ताः प्रतिलोमानुलोमजास्तेऽपि यदा अन्योन्यं संकीर्णैरेव व्यवतिष्ठन्ते व्यभिचरन्ति। व्यतिषङ्गजत्वाद्व्यतिषक्ता व्रात्याः। तत्र ये जायन्ते तान्वक्ष्या-मीत्यर्थः ।। २५ ।।

(३) **कुल्लूकः**। ये संकीर्णयोनयः प्रतिलोमैरनुलोमैश्च परस्परसंबन्धाज्जायन्ते तान्विशेषेण वक्ष्यामि ।। २५ ।।

(४) **राघवानन्दः**। पुनश्च सूतादीनां चण्डालातिरिक्तपञ्चानामनुलोमजत्वाद्यर्थमाह **संकीर्णेति** त्रिभिः। अनुलोमजा इति दृष्टान्तार्थम्। अन्योन्यव्यतिषक्ताः अन्योन्यं परस्त्री-पुंभ्यः कामतो व्यतिषक्तेभ्यो जाताः ।। २५ ।।

(५) **नन्दनः**। एवं संकीर्णपितृमातृकाः प्रायशः प्रतिलोमानुलोमा उक्ताः, इदानीं संकीर्णपितृमातृकान्प्रतिलोमजानुलोमजान्वक्ष्यामीत्याह **संकीर्णयोनय इति**। संकीर्णयोनयः संकीर्णेभ्यो जाता अन्योन्यव्यतिषक्ताः प्रतिलोमानुलोमजैः संबद्धाः ।। २५ ।।

(६) **रामचन्द्रः**। ये प्रतिलोमानुलोमजाः, प्रतिलोमजानाह सूतवैदेहचाण्डालाः अनुलो-मजा अंबष्ठनिषादमाहिष्यो प्रकरणाः षट् अन्योन्यव्यतिषक्ताः प्रतिलोमानुलोमानां परस्पर-व्यभिचारयुक्ताः तान् ।। २५ ।।

(७) **मणिरामः**। अन्योन्यव्यतिषक्ताः परस्परसंबंधाज्जायमानाः ।। २५–२६ ।।

(८) **गोविन्दराजः**। **संकीर्णयोनय** इति। ये मिश्रयोनयः प्रतिलोमाभ्यः स्त्रीभ्यः प्रतिलोमैरनुलोमैश्च जायन्ते अनुलोमाभ्यश्चानुलोमैः प्रतिलोमैश्च जायन्ते। एवं परस्पर-संबद्धान् तान् अशेषेण प्रवक्ष्यामि ।। २५ ।।

(९) **भारुचिः**। अन्योन्यव्यतिषक्तानां प्रतिलोमैरनुलोमैश्चैवमनुलोमा अपि विज्ञेयाः। वक्ष्यमाणार्थोपक्षेपतश्चित्तप्रणिधानार्थं यतस्तदर्थमयं पूर्वश्लोकोक्तानां प्रथमं...लोमानामपवाद उत्तरार्धः ।। २५ ।।

**सूतो वैदेहकश्चैव चण्डालश्च नराधमः ॥**
**मागधः क्षत्तृजातिश्च तथाऽऽयोगव एव च ॥ २६ ॥**

(१) **मेधातिथिः।** उक्तलक्षणा एते प्रातिलोमा उत्तरार्थं पुनरुपन्यस्यन्ते ॥ २६ ॥

(२) **सर्वज्ञनारायणः।** सूतादयः प्रागुक्ताः ॥ २६ ॥

(३) **कुल्लूकः।** एते षडुक्तलक्षणाः सूतादयः उत्तरार्थमनूद्यन्ते ॥ २६ ॥

(४) **राघवानन्दः।** प्रतिलोमजादपि नराधमः शूद्रस्य ब्राह्मणीगमने महापातकित्वा-नूत्तस्या अपि तथात्वात्। चण्डालग्रहणं निवीतं मनुष्याणामिति। वदत्यतिरेकमुखेन स्तुत्यर्थः ॥ २६ ॥

(५) **नन्दनः।** तत्र प्रतिलोमजेभ्यः प्रसूतान्वक्तुं प्रतिलोमजानुक्तांस्तावदनुक्रामति **सूतो वैदेहकश्चैवेति।** सूतो विप्रायां क्षत्रियाज्जातः वैदेहकस्तस्यामेव वैश्यात् चण्डालतस्तस्या-मेव शूद्रात् मागधः क्षत्रियायां वैश्यात् क्षत्ताजातिस्तस्यामेव शूद्रात् अयोगवो वैश्यायां शूद्राज्जात इति पूर्वमुक्तं हीत्यर्थः ॥ २६ ॥

(६) **रामचन्द्रः। सूत इति** द्वाभ्यामाह। ततः सूतः वैदेहकः चाण्डालाः नराधमा ज्ञेयाः मागधः क्षत्ता अयोगव एते षट् सदृशान्वर्णान् प्रतिलोमानुलोमयोनिषु जनयन्ति। प्रवरासु उत्तमासु चकारात् क्षत्रियपुत्रो मागधो ब्राह्मण्यां अपकृष्टासु योनिषु मातृजात्या मातृसमान-जातीयाः ॥ २६–२७ ॥

(८) **गोविन्दराजः। सूत** इति। सूतादय उक्तलक्षणा उत्तरार्थमनूद्यम् ॥ २६ ॥

(९) **भारुचिः।** उत्तरविवक्षार्थमेषां पुनर्ग्रहणम्। तदिदमुच्यते ॥ २६ ॥

**एते षट् सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु ॥**
**मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु ॥२७॥**

(१) **मेधातिथिः। एते** सूतादयः प्रतिलोमाः स्वयोनिषु **सदृशान् जनयन्ति,** तज्जा-तीयानित्यर्थः। तद्यथा–सूतः सूतायां सूतमेव जनयति। एवं चण्डालः चण्डालायाम्।

ये च **मातृजात्याः प्रसूयन्ते**ऽनुलोमा मातृजातीया ये पूर्वमुक्ता'स्ताननन्तरनाम्नः' (१०-१४) इति, तेऽपि **स्वयोनिषु** सदृशानेव जनयन्ति। यथाऽम्बष्ठोऽम्बष्ठायाम्।

तथा वैश्यायामात्मनो हीना वैश्याञ्जनयन्ति। मातृजातित्वस्योक्तत्वात्।

अन्ये पुनः पठन्ति 'मातृजातौ प्रसूयन्ते'। अर्थश्चायम्–स्वयोनिषु अम्बष्ठादौ मातृजातौ च वैश्यायां सदृशानेव जनयन्ति। यद्यपि शुद्धवैश्येभ्य उत्कृष्टा अम्बष्ठाद-यस्तथापि साम्यमुच्यते, वैश्यधर्म उभयेषामधिकारात्।

अनुलोमग्रहणं मातृजातिपदसामर्थ्याल्लभ्यते सत्यपि प्रकृतिप्रतिलोमप्रत्यवमर्शकत्वे एत इति।

प्रवरासु च योनिषु प्रतिलोमा गच्छन्तो जनयन्ति हीनतरमित्येवं ज्ञेयं, वक्ष्यमाण-पर्यालोचनया।

न हि अयोगवादिभिः स्वजातीयासु जनिता अयोगवादिव्यपदेशं लभन्ते। सदृश-ग्रहणं तु प्रातिलोम्यसामान्येन। हीनतरत्वं चावान्तरविशेषमनपेक्ष्य प्रयुक्तम्। तेनायमत्र वाक्यार्थः—'प्रतिलोमेभ्यः समानजातीयासूत्कृष्टजातीयासु च प्रतिलोमा एव भवन्ति' ॥२७॥

(२) **सर्वज्ञनारायणः**। स्वयोनिषु सूतादिजातीयासु स्त्रीषु सदृशान् स्वसदृशधर्माणः। तथा मातृजात्यां सूतादिमातृसमजातीयायां ब्राह्मण्यादिरूपायाम्। तथा मातृजातिषु प्रवरा-सूत्तमासु यथा क्षत्रियापुत्रो मागधो ब्राह्मण्यामिति। स्वजातीयस्वमातृजातितदुत्कृष्टजाति-योगात् त्रिविधो व्यभिचारः॥ २७॥

(३) **कुल्लूकः**। एते पूर्वोक्ताः षट् प्रतिलोमजाः स्वयोनिषु सुतोत्पत्तिं कुर्वन्ति। यथा शूद्रेण वैश्यायां जात आयोगवः आयोगव्यामेव मातृजातौ वैश्यायां प्रवरासु क्षत्रिया-ब्राह्मणीयोनिषु चकारादपकृष्टायामपि शूद्रजातौ सर्वत्र सदृशान्वर्णाञ्जनयन्ति, सदृशत्वं च न पित्रपेक्षया किन्तु मातृजात्यादिषु चातुर्वर्ण्यं स्त्रीष्वेव पितृतोऽधिकगर्हितपुत्रोत्पत्तेर्वक्ष्यमाण-त्वात्तत्सदृशान्पितृतोऽधिकगर्हितान्स्वजातावपि जनयन्तीत्येतावदेवाप्राप्तत्वादनेन विधीयते। किन्तु जघन्यवर्णेनोत्तमवर्णस्त्रीषु जनितत्वात्क्रियादुष्टा आयोगवाद्याः प्रतिलोमजाः क्रिया-दुष्टाभ्यां च मातापितृभ्यां तुल्याभ्यामपि जनिते आयोगवादिपुत्रे ब्रह्महन्त्रनन्तरजनितो ब्रह्महन्तृमातापितृजनितवदधिकदुष्ट एव न्याय्यः शुद्धब्राह्मणादिजातीयेन शुद्धब्राह्मण्यादिसम-जातीयायां जनितः पितृतुल्य एवोचितो नतु क्रियादुष्टोभयजनितोऽपि॥ २७॥

(४) **राघवानन्दः**। किंच एते षट् सूतादयः स्वयोनिषु ब्राह्मणीक्षत्रियावैश्यासु सदृशान् सजातीयान्। एतदेव निगमव्याजेन हेतून्प्रदर्शयन्नाह **मातृजात्यामिति**। प्रवरासु स्वयोनिषु तत्तन्मातृजात्यवच्छिन्नासु प्रसूयन्ते; यतः अत एव 'प्रतिलोमजास्तु कर्महीना' इति **गौतम**वचनम्। अत एव मातृवद्वर्णसंकर इत्यपि संगच्छते। यथा शूद्रात् वैश्यायामायोगव एवमायोगव्यामेव मातृजातौ वैश्यायां प्रवरायामायोगवः यं सुतं जनयेत्स सुतो वैश्यजात्यु-क्तसंस्कारार्हः। एवं शूद्रात्क्षत्रियाजः क्षत्ता क्षत्रियायां, क्षत्रजातौ यं जनयेत्स क्षत्रियसंस्कारार्हः। वैश्यात्क्षत्रियाजो मागधः, सच क्षत्रियायां यं जनयेत्सोऽपि क्षत्रियसंस्कारार्हः। एवं सूतवैदेह-योरपि। प्रवरास्विति विशेषणाच्चण्डालस्य न संस्कार इति **मेधातिथिः**। पितृतोऽधिक-गर्हितान्स्वजातावपि जनयन्तीत्येतावन्मात्रं विवक्षितमिति **कुल्लूकः**॥ २७॥

(५) **नन्दनः**। ततः किमित्यपेक्षायामाह **एते षडिति**। एते सूतादयः षट् सदृशा-न्सजातीयान्वर्णान् योनिषु सूतीवैदेहिकीचण्डालीप्रभृतिषु जनयन्ति, वर्णशब्दो मनुष्यावान्तर-जातिमात्रवचनः, मातृजात्यां स्वमातृजातिसदृशानेव जनयन्ति, सूतवैदेहकचण्डालानां मातृजातिर्ब्राह्मणजातिः मागधक्षत्त्रोर्मातृजातिः क्षत्रियजातिः आयोगवस्य मातृजाति-वैश्यजातिः तासु जातिषु सदृशानेव जनयन्तीत्यर्थः। किञ्चिरप्रवरासु च योनिष्वात्मनः प्रवरासु मातृजातिव्यतिरिक्तासु चातुर्वर्ण्यस्त्रीषु च सदृशानेव प्रसूयन्ते जनयन्ति। अनेन

श्लोकेनैतदुक्तं भवति—सूतः सूत्यां सूतमेव जनयति नान्यं, एवं मातृजात्यां च ब्राह्मण्यां सूतमेव तदितरासु क्षत्रियवैश्यस्त्रीषु च सूतमेव, एवं वैदेहकादयोऽपीति ।। २७ ।।

(६) **रामचन्द्रः** । एते सूतादयः स्वयोनिष्वेव सदृशान् जनयन्ति । तद्यथा—आयोगव आयोगव्यामेव सदृशं जनयति नान्यस्याम् । तथेतरे क्षत्तादयः प्रतिलोमास्तावदेवम् । अनुलोमा मातृजातौ मास्तु स्वयोन्यां च सदृशान् जनयन्ति यथाम्बष्ठोऽम्बष्ठयां सदृशायामेव, वैश्यायां चैवात्मनो हीनायां वैश्यं जनयति । नान्यस्याम् एव । एवमितरेऽप्यनुलोमाः पारशवादयः यद्यपि चैतेषामम्बष्ठादीनां केवलवैश्यादिभ्यः उत्कर्षतो विशेषोऽस्ति, तथापीदं सादृश्यमुच्यते । येनोभयेषामप्येतेषां वैश्यादिधर्मान् प्रति विशेषो नास्ति । यत इदमुच्यते—स्वयोन्यां मातृजातौ च सदृशान् जनयति इति । तथा चोक्तं 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम् । ताननन्तरनाम्नस्तु मातृदोषान् प्रचक्षते' इति । आयोगवादयः प्रतिलोमजाता मातृजात्यां प्रसूयमा(नान्) प्रवरासु चेति धर्महीनतरान् जनयन्ति एवमानुलोम्या अप्यम्बष्ठादयो वेदितव्याः ।। २७ ।।

(८) **गोविन्दराजः** । **एत** इति । एते षट् सूतादयः प्रतिलोमाः स्वजातीयासु स्त्रीषु सूतान् सूतायां सूतमेव जनयति इत्येवं समानजातीयान् वर्णप्रभवत्वाद् वर्णान् जनयन्ति । अनुलोमाः पुनः मातृजातीयायां स्वजातीयायां च सदृशं जनयन्ति । तद्यथा—अम्बष्ठो वैश्यायां अम्बष्ठायां वा अम्बष्ठमेव जनयति । संकीर्णयोनयो ये तु प्रतिलोमानुलोमजा इत्यनुलोमानामपि प्रस्तुतत्वात् प्रतिलोमेभ्यश्च मातृजातीयायां सदृशजननासंभवात् द्वितीयार्धश्लोकोऽनुलोमविषयतया व्याख्यायते ।। २७ ।।

(९) **भारुचिः** । एते षट् पूर्वोक्ताः सूतादयः स्वयोनिषु सुतोत्पत्तिं कुर्वंति । यथा आयोग.... एवमायोगव मातृजात्यां वैश्यायां प्रवरासु च योनिषु क्षत्रियाब्राह्मणीयोनिषु.... निकृष्टयोनिषु शूद्रासु सर्वत्र सदृशान् वर्णान् जनयति । सदृशत्ववर्णपित्रपेक्षया किंतु मातृजात्या चातुर्वर्ण्यस्त्रीष्वेव पितृतोऽधिकनिंदितोत्पत्तेः ।। २७–२८ ।।

**यथा त्रयाणां वर्णानां द्वयोरात्माऽस्य जायते ।।**
**आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमात् ।।२८ ।।**

(१) **मेधातिथिः** । **अस्य** ब्राह्मणस्य **त्रयाणां वर्णानामात्मा जायते** । **द्वयोर्वर्णयोः** क्षत्रियवैश्ययोर्द्विजत्वं जायते, तथा स्वयोनौ । एवं त्रयाणां वर्णानां ब्राह्मणो द्विजान् जनयति ।

एवं बाह्येष्वपि प्रातिलोम्येन वैश्यक्षत्रियाभ्यां क्षत्रियब्राह्मणयोरात्मा द्विजत्वं भवति । सति च द्विजत्वे उपनयनं कर्तव्यम् । वक्ष्यति च 'एते षट् द्विजधर्माण' इति । एतावांस्तु विशेषः—अनुलोमाज्जाता मातृजात्या मातृजातीया । स्तुतिमात्रमिदं वक्ष्यामः ।। २८ ।।

(२) **सर्वज्ञनारायणः** । आनन्तर्यादनन्तरवर्णे आत्मजातिसदृशजातिमूर्धावसिक्तादिः । स्वयोन्यां स्ववर्णे चात्मजातीय एव । तथा बाह्येष्वपि । तथा हि मूर्धावसिक्तान्मूर्धा-

वसिक्तायां तज्जातीय एव । तत एवावन्त्यामात्मसदृश इत्यादिः । पारशव्यां तु ततोऽपि हीनजातिरेवमनुलोमजानपेक्ष्य प्रतिलोमजानामतिहीनत्वात्तेषां प्रतिलोमजानां स्वजातीयायामनन्तरायां सदृशव्यवहितायां हीनतरमपत्यमिति ।। २८ ।।

(३) **कुल्लूकः** । यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्यात् द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्यात् द्विज उत्पद्यते, सजातीयायां च द्विजो जायते; एवं बाह्येष्वपि क्षत्रियवैश्याभ्यां वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जातिषूत्कर्षापक्रमो भवति । शूद्रजातप्रतिलोमापेक्षया द्विजाद्युत्पन्नप्रतिलोमप्राशस्त्यार्थमिदम् । **मेधातिथिस्तु** द्विजत्वप्रतिपादकमेतदेषां वचनमुपनयनार्थमित्याह – तन्न; 'प्रतिलोमजास्तु धर्महीना'इति **गौतमेन** संस्कारनिषेधात् ।। २८ ।।

(४) **राघवानन्दः** । एतेषामुत्कृष्टत्वं सदृष्टान्तं निगमयति **यथेति** । त्रयाणां विप्रादीनां मध्ये यथास्य ब्राह्मणस्य स्वयोन्यामिवानुलोम्येन द्वयोः क्षत्रियावैश्ययोः आत्मा द्विज उत्पद्यते, एवं च बाह्येषु वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योरात्मा द्विज उत्पद्यते; एवं क्षत्रियवैश्ययोरपि । तेषु आयोगवादितिसृष्वपि ब्राह्मण्यादिषु ।। २८ ।।

(५) **नन्दनः** । एतदेव स्थापयति **यथा त्रयाणां वर्णानामिति** । त्रयाणां ब्राह्मणक्षत्रियवैश्यानां आनन्तर्याऽनन्तरजातया स्वयोन्यां द्वयोरात्मा स्वस्ववर्णो यथा जायते तथा बाह्येष्वपि क्रमः प्रतिलोमानामपि तथा प्रकारः । एतदुक्तं भवति - यथा वैदेहकः स्वस्यां ब्राह्मण्यां च वैदेहकं आयोगवः स्वस्यां क्षत्रियायां चायोगवं क्षत्ता स्वस्यां चण्डाल्यां च क्षत्तारं जनयति।।२८।।

(६) **रामचन्द्रः** । यथेति दृष्टान्तः । यथा त्रयाणां क्षत्रियादीनां स्वयोन्यामानन्तर्यात् द्वयोः क्षत्रियवैश्ययोरात्मैव जायते । तद्यथा–क्षत्रियात्क्षत्रियायां वैश्याद्वैश्यायां उत्तमासु योनिषु 'आत्मैव जायते पुत्र'इति श्रुतेः । शूद्रायां इति तथा बाह्येषु आयोगवादिषु प्रतिलोमजेषु क्रमः ।। २८ ।।

(७) **मणिरामः** । वर्णानां क्षत्रियवैश्यशूद्राणां मध्यात् द्वयोः क्षत्रियवैश्ययोः कन्ययोः अस्य ब्राह्मणस्य आनंतर्यात् आनुलोम्यात् आत्मा द्विजः जायते, स्वयोन्यां तु सजातीयायां च द्विजो जायते । तथा बाह्येष्वपि प्रतिलोमेष्वपि क्षत्रियात् ब्राह्मण्यां वैश्यात् क्षत्रियायां द्विजो जायते इत्यर्थः । शूद्रोत्पन्नप्रतिलोमापेक्षया द्विजात्युत्पन्नप्रतिलोमप्राशस्त्यार्थमिदमुक्तं ।। २८ ।।

(८) **गोविन्दराजः । यथेति । आनन्तर्यात् स्वयोन्यां च तथा बाह्येष्वपि क्रमः ।** यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्यात् द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्य आनुलोम्याद् द्विज उत्पद्यते स्वजातीयायां च द्विजो जायते । एवं च बाह्येष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जाते व्युत्क्रमो भवतीति । शूद्रजातिप्रतिलोमापेक्षया द्विजात्युत्पन्नप्रतिलोमस्तुतिः । यत् तु 'द्विजत्वप्रतिपादकं एतदेषां वचनं उपनयनार्थं इत्याहुः–तदसत्; 'प्रतिलोमास्तु धर्महीना' इति **गौतमीये** प्रतिलोमानां संस्कारनिषेधात् ।। २८ ।।

(९) **भारुचिः** । यथा ब्राह्मणक्षत्रियाभ्यां जनयितृभ्यां क्षत्रियवैश्ययोरात्मास्य द्विजत्वं जायते । जातस्सन्नधिकारसामर्थ्यात् द्विजो भवति । एवमेव बाह्येष्वपि प्रातिलोम्येनैव वर्तमानेषु

द्वाभ्यामेव वैश्यक्षत्रियाभ्यां क्षत्रि(य)ब्राह्मण्योरात्मा द्विजत्वं भवति। सति च द्विजत्वे उपनयनादेः संस्कारस्य...तिषेधं वक्ष्यति षडेते द्विजधर्माणो भवन्ति इति। एतावांस्तु विशेषः – यथैवानुलोमजान्मातृदोषान्मातृहान्यां मातृजातीयाः, एवं प्रतिलोमजाताः पितृ-हान्या न पितृजातीयाः। अथ–प्रातिलोम्येन क्षत्रियब्राह्मण्योर्ये मागधसूतौ तयोरनु-लोमजाताभ्यां सामान्यापादानं स्तुत्यर्थम्, स्तुतिश्च व्यवहारार्था। अथवा चण्डालादिप्रति-लोमपर्युदासार्था स्तुतिः॥ २८॥

**ते चापि बाह्यान्सुबहूंस्ततोऽप्यधिकदूषितान् ॥**
**परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥२९॥**

(१) **मेधातिथिः। ते चाप्यायोगवादयः षट् बाह्यान् सुबहून् परस्परदारेषु जनयन्ति।** तद्यथा...आयोगवः क्षत्तृजायायां क्षत्ताऽऽयोगव्याम्। परस्परमात्मापेक्षया गर्हितान् जनयन्ति। ततोऽपि बाह्यतः चण्डाल्याम्। एवं सर्वत्र॥ २९॥

(२) **सर्वज्ञनारायणः**। तदेतदाह **ततोऽप्यधिकदूषितानिति** ॥ २९॥

(३) **कुल्लूकः**। ते चायोगवादयः षट् परस्परजातीयासु भार्यासु सुबहूनानुलोम्ये-ऽप्यधिकदुष्टान्सत्क्रियाबहिर्भूताञ्जनयन्ति। तद्यथा–आयोगवः क्षत्तृजायायामात्मनो हीन-तरं जनयति, तथा क्षत्ताप्यायोगव्यामात्मनो हीनतरमुत्पादयति; एवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यं॥ २९॥

(४) **राघवानन्दः**। तेभ्योऽपि संकरजातीन्वक्तुमाह **त इति**। आयोगवादयस्ते अधिकदूषितान् पूर्वेभ्योऽपि निकृष्टान्॥ २९॥

(५) **नन्दनः**। अनन्तरासु जातानां पितृवर्णत्वमपि पक्षान्तरमिति **ते चापि बाह्या-निति**। ते सूतादिभ्यः प्रसूता अपि ततोऽभ्यधिकदूषितान्स्वेभ्यो हीनतमानत एव विगर्हितान्सु-बहून्परस्परस्य दारेषु जनयन्ति स्वयोनिषु स्वानेव जनयन्ति परस्परस्य दारेष्विव॥ २९॥

(६) **रामचन्द्रः**। ते आयोगवादयः बाह्यान् वर्णबाह्यान् विगर्हितान् परस्पर-दारेषु जनयन्ति॥ २९॥

(७) **मणिरामः**। ते चापि बाह्या आयोगवादयः षट् परस्परस्य दारेषु सुबहून् आनुलोम्येष्वपि अधिक-दूषितान् दुष्टान् विगर्हितान् सत्क्रियाबहिर्भूतान् सुतान् जनयंति। तद्यथा–आयोगवः क्षत्तायां स्वतो हीनतरं जनयति तथा क्षत्ता आयोगव्यां, आत्महीनतरमु-त्पादयति। एवमन्येष्वपि प्रतिलोमेषु ज्ञेयं॥ २९॥

(८) **गोविन्दराजः। त** इति। तेऽप्यायोगवादयः षट् परस्परजातीयासु भार्यासु प्रतिलोमान् सुष्ठु बहून् आत्मनोऽधिकदुष्टान् निन्दितान् जनयन्ति। तत् तथाऽऽयोगवः क्षत्र्यां आत्मनो हीनतरं जनयति, क्षत्ता आयोगव्यां आत्मनो हीनतरं उत्पादयति, इत्येवं अन्येष्वपि प्रतिलोमेषु द्रष्टव्यम्॥ २९॥

(९) **भारुचिः।** ते चायोगवादयः षडपि बाह्यान् सुबहून् परस्परस्य दारेषु। तद्यथा—आयोगवः क्षत्त्यां क्षत्तायोगवाभ्यामित्येवं जनयतस्ततोऽभ्यधिकदूषितानन्तरान् जनयन्ति, तद्यथा—आयोगवः क्षत्त्यामात्मनो बाह्यहीनतरं जनयति। ततोऽपि बाह्यतरस्यां तथा क्षत्तायोगव्यामात्मनो बाह्यतरं जनयति। ततोऽपि चण्डालाभ्याम्; एवं चण्डालः क्षत्त्यामात्मनो बाह्यतरमायोगव्याम्। अनेनैव न्यायेन मागधो वैदेह्यात्मनो बाह्यतरं जनय(ति)। ततोऽपि बाह्यतरं सूतायाम्। तथा वैदेहको मागध्याम्...बाह्यतरं जनयति, ततो बाह्यतरं सूतायाम्' तथा च सूतमात्मनो बाह्यतरं मागध्यां ततोऽपि वैदेह्याम्, एवमनेन क्रमेण पुनः पुनरभ्यावृत्ति जनयन्तः परस्परदारेषु सुबहूननन्तांश्च दशविधान् जनयन्ति ॥ २९ ॥

**यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ॥**
**तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥३०॥**

(१) **मेधातिथिः।** एवं परस्परगमने स्त्रीप्रतिलोमानां पूर्वेण बाह्यतरोत्पत्तिर्वर्णिता। इदानीं चातुर्वर्ण्यं कथ्यते। सूयतिर्जनिनात्यन्तसमानार्थोऽत्र प्रकरणे प्रयुक्तः। **प्रसूयते** जनयतीत्यर्थः। तदुत्तरश्लोकेन निर्दिश्यते ॥ ३० ॥

(२) **सर्वज्ञनारायणः।** तथा बाह्यतरं चाण्डालतोऽप्यधमम्। बाह्यात् चाण्डालात्। चातुर्वर्ण्ये चातुर्वर्ण्या स्त्री प्रसूयते ॥ ३० ॥

(३) **कुल्लूकः।** यथा ब्राह्मण्यां शूद्रोऽपकृष्टं चाण्डालाख्यं प्राणिनं प्रसूयते जनयत्येवं बाह्यश्चाण्डालादिवर्णचतुष्टये चाण्डालादिभ्योऽप्यपकृष्टं पुत्रं प्रसूयते ॥ ३० ॥

(४) **राघवानन्दः।** तत्र दृष्टान्तमाह **यथेति**। बाह्यं बहिरेव वर्तमानं जन्तुं जन्ममरणमात्रशालिनम्। बाह्यश्चाण्डालादिः धर्मादावनधिकारित्वात् ततोऽपि भिन्नं संकरान्तरम्। चातुर्वर्ण्ये चातुर्वर्ण्यस्त्रीषु ॥ ३० ॥

(५) **नन्दनः।** वर्णजातानां सूतादिप्रतिलोमजानां च परस्परसंकर उक्तः। प्रतिलोमजप्रसूतानां जनकेभ्यः प्रतिलोमजेभ्यो न्यूनतमत्वमुदाहरणविशेषेण व्यनक्ति **यथैव शूद्रो ब्राह्मण्यामिति।** बाह्यजन्तुं चण्डालं बाह्यः सूतादिः चातुर्वर्ण्ये चतुर्वर्णस्त्रीषु ॥ ३० ॥

(६) **रामचन्द्रः।** यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं निकृष्टं चाण्डालं प्रसूयते तथा बाह्यः आयोगवः बाह्यतरं अत्यन्तनिकृष्टं चतुर्वर्णेषु प्रसूयते ॥ ३० ॥

(७) **मणिरामः।** बाह्यजन्तुं चाण्डालाख्यं प्राणिनं। तथा बाह्यः चण्डालादिः चातुर्वर्ण्येषु ब्राह्मणादिषु बाह्यतरं स्वतो व्यपकृष्टतरं पुत्रं प्रसूयते ॥ ३० ॥

(८) **गोविन्दराजः। यथेति। तथा बाह्यतरं बाह्याद् बाह्यो वर्णः प्रसूयते।** यथा शूद्रो ब्राह्मण्यां निकृष्टं चाण्डालाख्यं प्राणिनं जनयति; एवं बाह्यात् चाण्डालादेः ब्राह्मणादिषु चतुर्ष्वपि वर्णेषु चाण्डालादिभ्यो निकृष्टतरं जायते ॥ ३० ॥

(९) **भारुचिः।** एवं च परस्परस्य दारेषु व्याख्याय चातुर्वर्ण्ये त्वाचष्टे। एवमेते त्रिंशत् भवंति। बाह्यहीनशकाभ्यां षट् प्रतिलोमजा उक्ता अत्र बाह्याः चांडालक्षत्तायोगववैदेहमागध-

सूताः षट् प्रातिलोम्येन स्त्रीषु बाह्यतरान् पंचदश पुत्रान् जनयंति। यथा चांडालं क्षत्रादिषु पंचस्त्रीषु क्षत्ता आयोगव्यादिषु चतसृषु आयोगवो वैदेह्यादिषु त्रिषु वैदेहो मागधसूत्योर्द्वयोः मागधसूत्यामेवं पंचदश जनयंति। पुनःशब्दात् हीनाः सूतादयश्चांडालांताः षट् आनुलोम्येनापि स्वापेक्षया हीनान् पंचदश पुत्रान् जनयंति। तद्यथा–सूतो मागध्यादिषु पंचसु मागधो वैदेह्यादिषु चतसृषु वैदेहो आयोगव्यादिषु तिसृषु आयोगवः क्षत्ताचांडालयोः क्षत्ताचांडालायामेव पंचदश जनयति। इत्थं षष्टिसंकरजातयो जाताः ॥ ३० ॥

**प्रतिकूलं वर्तमाना बाह्या बाह्यतरान्पुनः ।**
**हीना हीनान्प्रसूयन्ते वर्णान्पञ्चदशैव तु ॥३१॥**

(१) **मेधातिथिः**। एकैकस्य तु वर्णस्य संकीर्णयोनयो भवन्ति। कस्यचिदनुलोमाः, कस्यचित्प्रतिलोमाः, कस्यचिदनुलोमप्रतिलोमाः। ब्राह्मणस्यानुलोमाः, शूद्रस्य प्रतिलोमा एव। क्षत्रियवैश्ययोरनुलोमाः प्रतिलोमाः। क्षत्रियस्य द्वावनुलोमौ, एकः प्रतिलोमः। वैश्यस्यैकोऽनुलोमो द्वौ प्रतिलोमौ। एवमेते द्वादशानुलोमाः प्रतिलोमाः। एतेषामेकैकस्य चतुर्षु गच्छतश्चत्वारो भेदा भवन्ति। ते च केचित् हीनाः केचिदहीनाः। **बाह्यतरास्तु** सर्व एव। बाह्यतरत्वं मातापितृजातेर्विप्रकर्षः, कर्मभ्यो हीनत्वात्। तदेवमुदाहरणैः स्फुटीक्रियते। प्रतिलोमांस्तावद् गृहीत्वा वक्ष्यामः। आयोगवो वैश्यायां शूद्राज्जातः शूद्रायां वैश्यायां क्षत्रियायां ब्राह्मण्यां चतुरो जनयति। सोऽयमात्मना सह पंचधाऽऽयोगवः। एवं क्षत्तृचण्डालावपि। एवं शूद्रास्त्रयः पंचकाः पंचदशधा भवन्ति।

एवं वैश्यप्रभवौ द्वौ प्रतिलोमौ क्षत्रियायां मागधो ब्राह्मण्यां वैदेहकः। शूद्रायामनुलोमः। तत्र यः शूद्रायां जातः स यदा चातुर्वर्ण्यं जनयति तदैष एव प्रकारः। स यदा शूद्रां गच्छति तदा हीनतरो वर्णो जायते तदपेक्षया। एवं वैश्यां गच्छन्हीनतरं जनयति।

एवं क्षत्रियायां ब्राह्मण्यां च केवलशूद्राज्जाता उत्कृष्टा। एवमित्यपेक्षावशाद्धीनांश्चाहीनांश्च। एवं क्षत्रिये ब्राह्मणे च द्रष्टव्यम्। ब्राह्मणस्य त्वयं विशेषः। अनुलोमा एव तस्य भवन्ति।

एवं चतुर्वर्णानां प्रत्येकं पंचदशधा भेदाः षष्टिः संपद्यन्ते, मुख्याश्चत्वारो वर्णाः सा चतुःषष्टिर्भवति। परस्परसंपर्कात्तेषामन्येऽनन्तभेदा भवन्ति। तदुक्तम् "ते चापि बाह्यान्सुबहून्" (१०-२९) इति।

**प्रतिकूलं** शास्त्रव्यतिक्रमेण। **वर्तमाना** मिथुनीभवन्तः। **हीनाहीना**नित्येकं पदम्। अथवा हीनाः सन्तोऽहीनान्**प्रसूयन्ते** जनयन्तीत्यर्थः। **वर्णान्पंचदशैवेति** 'नास्ति तु पंचम' (१०-४) इति पंचमस्य वर्णाभावात्पंचदशसुवर्णत्वमुपचाराद्द्रष्टव्यम् ॥ ३१ ॥

(२) **सर्वज्ञनारायणः** एतत्प्रपञ्चयति **प्रतिकूलमिति**। बाह्या वर्णबाह्यास्तादृशानेव तथा हीना अत्यधमा हीनानत्यधमानेव प्रसूयन्ते। शूद्रात् ब्राह्मण्यादिषु चण्डालक्षत्रायोगवाख्यास्त्रयो हीना अधमा बाह्यवर्णा व्रात्यश्च प्रतिकूलं प्रतिलोमं वर्तमानाः शूद्रादिस्त्रीषु चतसृषु हीनान्नवान्यान्प्रसूयन्त इति प्रत्येकं चाण्डालादिभ्यश्चत्वारश्चत्वार इति

तथा द्वादश। तथा स्वजातीयासु त्रीनिति पञ्चदश बाह्यान् जनयन्ति। वर्णान्वर्णरूपतया न वस्तुतस्तादृशान् ॥ ३१ ॥

(३) **कुल्लूकः**। एतदेव विस्तारयति **प्रतिकूलमिति**। अत्र **मेधातिथि-गोविन्दराज**-योर्व्याख्यानं चातुर्वर्ण्यबाह्यश्चण्डालक्षत्रायोगवाः शूद्रप्रभवास्त्रयश्चातुर्वर्ण्ये गच्छन्त आत्मनो हीनतरान्परस्परापेक्षयापकृष्टोत्कृष्टवर्णप्रभवत्वात्पञ्चदशवर्णान्संपादयन्ति। तद्यथा–चण्डालः शूद्रायामात्मनो हीनतरं वैश्याक्षत्रियाब्राह्मणीजातेभ्य उत्कृष्टं जनयति। एवं वैश्यायां ततोऽप्यपसदं क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं जनयति। ततोऽपसदं, क्षत्रियायां ब्राह्मणीजाता-दुत्कृष्टं, ततोऽपि हीनं ब्राह्मण्यां जनयति। एवं क्षत्रायोगवावपि चातुर्वर्ण्ये चतुरश्चतुरो जनयतः, इत्येते शूद्रप्रभवचण्डालक्षत्रायोगवेभ्यः चातुर्वर्ण्ये द्वादशप्रभेदा उत्पद्यन्ते। आत्मना च चण्डालक्षत्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदश उत्पद्यन्ते। एवं वैश्यक्षत्रियब्राह्मणप्रभवाः प्रत्येकं पञ्चदश संभवन्ति, एवं षष्टिश्चातुर्वर्ण्येन सह चतुःषष्टिप्रभेदा भवन्ति। ते तु परस्परगमनेन नानावर्णाञ्जनयन्तीति–नैतन्मनोहरं; पूर्वश्लोके षण्णां प्रति-लोमजानां प्रकृततत्त्वात्तद्विस्तारकथनत्वाच्चास्य। अत्रापि श्लोके 'प्रतिकूलं वर्तमाना' इत्यु-पादानात्प्रतिलोमजमात्रविषयोऽयं श्लोको नानुलोमजविषयः। तथा च वैश्यक्षत्रियब्राह्मण-प्रभवाश्च प्रत्येकं पञ्चदश संभवन्त्येवं षष्टिरिति न संगच्छते। न च संभवमात्रेणैवेयं षष्टि-रुक्ता न दुष्टतया, शूद्रप्रभवायोगवक्षत्तृचण्डाला एव चातुर्वर्ण्यसंतानोपेताः पञ्चदश गर्हिता इति वाच्यं। यतो वैश्यक्षत्रियाभ्यामपि प्रतिलोमत उत्पादितानां त्रयाणां हीनत्वात्तैरपि चातुर्वर्ण्ये जनितानां गर्हितत्वस्य संभवात् 'तथा बाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयत' (१०।३०) इति मनुनैवानन्तरं स्फुटमुक्तत्वात्। युवाभ्यामपि तथैव व्याख्यातत्वाच्चातुर्वर्ण्येन सह चतुःषष्टिरिति सर्वथैवाप्रकृतम्। नहि संकीर्णप्रकरणे शुद्धचातुर्वर्ण्यगणनोचिता। किंच 'वर्णान्पञ्चदश प्रसूयन्त' इति श्रूयमाणद्वादशजनानुक्त्वा ते चात्मना चण्डालक्षत्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदशेति न युक्तम्। अपि चात्मना सह पञ्चदश संपादयन्तीति न संगच्छते, असंपाद्यत्वादात्मनः पञ्चदश संपद्यन्त इति च व्याख्यानेऽध्याहार एव दोषः; तस्मादेवं व्याख्यायते–प्रतिकूलं वर्तमानाः प्रतिलोमजाः बाह्याः, द्विजप्रतिलोमजेभ्यो निकृष्ट-त्वात्। शूद्रप्रभवायोगवक्षत्तृचण्डालास्त्रयः पूर्वश्लोकादनुवर्तमाने चातुर्वर्ण्ये स्वजातौ 'एते षट्सदृशा'नित्यत्र (१०।२७) सजात्युत्पन्नस्य पितृतो गर्हितत्वाभिधानात् आत्मापेक्षया बाह्यां-तरान्प्रत्येकं पञ्चदश पुत्राञ्जनयन्ति। तद्यथा–आयोगवश्चातुर्वर्ण्यस्त्रीषु चायोगव्यामात्मनो निकृष्टान्पञ्च पुत्राञ्जनयति। एवं क्षत्तृचाण्डालावपि प्रत्येकं पञ्च पुत्राञ्जनयतः, इत्थं बाह्यास्त्रयः पञ्चदश पुत्राञ्जनयन्ति। तथानुलोमजेभ्यो हीना वैश्यक्षत्रियप्रभवा मागध-वैदेहसूता आत्मापेक्षया हीनान्पूर्ववच्चातुर्वर्ण्यस्त्रीषु संजातौ प्रत्येकं पञ्च पुत्राञ्जनयन्तो हीना अपि त्रयः पञ्चदशैव पुत्राञ्जनयन्ति। एवं त्रिंशदेते भवन्ति। अथवा बाह्यशब्दो हीनशब्दश्च षडेव प्रतिलोमजानाह। अत्र बाह्याश्चाण्डालक्षत्रायोगववैदेहमागधसूताः षट् यथोत्तरमु-त्कर्षात्प्रातिलोम्येन स्त्रीषु वर्तमाना बाह्यतरान्पञ्चदशैव पुत्राञ्जनयन्ति। तद्यथा–चाण्डालाः क्षत्रियादिषु पञ्चसु स्त्रीषु, क्षत्तायोगव्यादिषु चतसृषु, आयोगवो वैदेह्यादितिसृषु, वैदेहो

मागधीसूत्योः, मागधः सूत्यां, सूतस्तु प्रतिलोमाभावात्प्रातिलोम्येन पञ्चदशैव पुत्राञ्जनयति। पुनरिति निर्देशाद्धीनाः सूतादयश्चाण्डालान्ताः षड्यथोत्तरमपकर्षात् आनुलोम्येनापि प्रतिलोमोक्तरीत्या स्वापेक्षया हीनान्पञ्चदशैव पुत्राञ्जनयन्त्येवं त्रिंशदेते भवन्ति ।। ३१ ।।

(४) **राघवानन्दः।** ते बाह्याः कति इत्यपेक्षां पूरयति **प्रेति।** प्रतिकूलं प्रातिलोम्यम् बाह्याः सूतादयः षडेव हीनाः स्वयं हीनान् नव बाह्यतरान्। जनयन्तीति वर्णान् पञ्चदशैतेषु वर्णपदमुपचारात् ।। ३१ ।।

(५) **नन्दनः।** प्रतिकूलं वर्तमाना असजातीयस्त्रीषु वर्तमानाः। हीना अनुलोमजेभ्योऽपकृष्टाः। बाह्याः प्रतिलोमजाः षट् सूतादयः हीनानात्मनोऽपकृष्टान् बाह्यतरान्बाह्यतरनाम्नः प्रसूयन्ते वर्णाः पञ्चदशैव ते ते बाह्यान्तरवर्णाः संकरजातयः प्रत्येकं सूतादिभिरुत्पादिताः पञ्चदशैव नाधिकाः असजातीयानां जनयितॄणां पञ्चदशत्वात्तत्प्रसूतानां वर्णानां पञ्चदशत्वं ब्राह्मणप्रभृतयश्चतस्रः अनुलोमजास्त्रयः षट् प्रतिलोमजाश्च। एवं षोडशजातिषु स्त्रीषूत्पादिताः सजातीयाः पञ्चदशैवेति सूतादयस्तावदासु षोडश स्त्रीषु स्वस्त्रीमन्तरेणासु पञ्चदशसु पञ्चदशवर्णाञ्जनयन्ति, एवं वैदेहकादयोऽपि प्रत्येकमिति ।। ३१ ।।

(६) **रामचन्द्रः।** प्रतिकूलं वर्तमानात् आनुलोम्येन वर्तमानान् बाह्यान्तरान्पुनः प्रसूयन्ते। हीना हीनान्प्रसूयन्ते वर्णान् वर्णभवरवात्। वर्णान् पञ्चदशैव तु द्विजात्युत्पन्नशूद्रपुरुषजातानां त्रयाणां चातुर्वर्ण्यसंबन्धे द्वादश रूपतश्च त्रय इति ।। ३१ ।।

(८) **गोविन्दराजः।** एतदेव प्रपञ्चयति **प्रतिकूलमिति।** चातुर्वर्ण्यबाह्याः चण्डालाः क्षत्तायोगवाः शूद्रप्रभवाः त्रयः चातुर्वर्ण्ये गच्छन्त आत्मनो हीनतरान् परस्परापेक्षयोत्कृष्टान् आत्मना सह पञ्चदशवर्णप्रभवत्वाद् वर्णान् संपादयन्ति। तद्यथा– चण्डालः शूद्रायां आत्मनो हीनतरं वैश्याक्षत्रियाब्राह्मणीजातेभ्यः उत्कृष्टं जनयति। ततोऽप्यपसदं क्षत्रियायां ब्राह्मणीजाताद् उत्कृष्टं जनयति। ततोऽपि हीनं ब्राह्मण्यां जनयति। एवं क्षत्रायोगवावपि चातुर्वर्ण्ये च चतुरश्चतुरो जनयेते। इत्येते शूद्रप्रसवेभ्यः चण्डालक्षत्रायोगवेभ्यः (अ. २) द्वादशप्रभेदा उत्पद्यन्ते। आत्मना च चाण्डालक्षत्रायोगवास्त्रयः इत्येवं शूद्रप्रभवाः पञ्चदश (अ. ४) क्षत्रियब्राह्मणप्रभवाश्च पञ्चदश भवन्ति। एवं षष्टिः चातुर्वर्ण्येन सह चतुःषष्टिस्पष्टप्रभेदा भवन्ति। ते तु परस्परस्य गमनेन अनन्तान् जनयन्ति ।। ३१ ।।

(९) **भारुचिः।** तदेव विस्तारयति **प्रतिकूलमिति।** प्रतिकूलवर्तमानाः प्रतिलोमजाः। बाह्याः आयोगवक्षत्ताचांडालास्त्रयः। चातुर्वर्ण्ये स्वजातौ च बाह्यतरान् स्वाऽपेक्षया अतिनिंदितान् प्रत्येकं पंचदश पुत्रान् जनयंति। तद्यथा आयोगवो ब्राह्मण्यादिषु चतुर्षु आयोगव्यां च पंच पुत्रानुत्पादयति। एवं क्षत्ता चांडालश्च पंच पंच उत्पादयतः। इत्थं बाह्यास्त्रयः पंचदश पुत्रानुत्पादयंति। तथा क्षत्रियवैश्याभ्यो त्रयः प्रतिलोमजाः मागधवैदेहसूताः अनुलोमजेभ्यो हीना आत्मापेक्षया हीनान् पूर्वोक्तरीत्या पंच पंच पुत्रान् उत्पादयंति, तेऽपि मिलिताः पंचदशाः; एवमेते त्रिंशत् भवंति। वाह्यहीनशब्दाभ्यां षट् प्रतिलोमजाः उक्ताः, अत्र बाह्याः चांडालक्षत्तायोगववैदेहमागधसूताः षट्, प्रातिलोम्येन स्त्रीषु बाह्यतरान् पञ्चदश पुत्रान् जनयंति। यथा चांडालं क्षत्रादिषु पंच स्त्रीषु, क्षत्ता आयोगव्यादिषु चतसृषु, आयोगवो वैदेह्यादिषु त्रिषु,

वैदेहो मागध्यसूत्योर्द्वयोः, मागध्यसूत्यामेवं पंचदश जनयंति। पुनःशब्दात् हीनाः सूतादयश्चांडालांताः षट् आनुलोम्येनापि स्वापेक्षया हीनान् पंचदश पुत्रान् जनयंति। तद्यथा—सूतो मागध्यादिषु पंचसु मागध्यो वैदेह्यादिषु चतसृषु, वैदेहो आयोगव्यादिषु तिसृषु, आयोगवः क्षत्ताचांडालयोः क्षत्ताचांडालायामेव पंचदश जनयति। इत्थं षष्टि संकरजातयो जाताः।

तदिदानीमुच्यते **प्रतिकूलमिति**। एत एव षट् चातुर्वर्ण्ये प्रसूयमाना आत्मनो बाह्यतरान् जनयन्ति। तद्यथा—चण्डालश्शूद्रायामात्मनो हीनतरं जनयति, ततोऽपि बाह्यतरं वैश्यायां ततोऽपि क्षत्र्यां ततोऽपि ब्राह्मण्याम्। एवमेव क्षत्ता चतुर्षु वर्णेषु चत्वारो जनयन् परस्परमात्मनो बाह्यतरं जनयति। तथायोगवश्चतुर्षु वर्णेषु एवमेवा...नवतरं जनयति। एते शूद्रप्रभवेभ्यश्चण्डालक्षत्तायोगवेभ्यश्चतुर्षु वर्णेषु द्वादश वर्णभेदा जायन्ते। आत्मनश्च त्रयश्चण्डा(लाः) क्षत्तायोगव...शूद्रप्रभवाः प्रतिलोमेन पञ्चदश वर्णभेदा भवन्ति। एते च शूद्रप्रभवाः पञ्चदश वर्णाः पुनः पुनश्चातुर्वर्ण्ये बाह्यतरान्तरकल्पान् जनयन्ति। अथ वैश्यप्रभवाः प्रतिलोमाः पञ्चदशवर्णाः...उच्यन्ते। वैश्यस्य द्वौ प्रतिलोमौ, एकस्त्वनुलोमजः मागधवैदेहकौ क्षत्रियायां ब्राह्मण्यां च। शूद्रायां त्वस्यानुलोमजः। एतेषां वैश्येन शूद्रायां जातो यदा चातुर्वर्ण्ये प्रसूयते सदा शूद्रमात्मनोर्बाह्यतरं शूद्रं जनयति। ततोऽपि हीनतरवैश्यायामायोगवः ततोऽपि हीनतरं क्षत्रियायां क्षत्तारं, तस्मादपि हीनतरं ब्राह्मण्यां चण्डालः। एते तु पूर्वेभ्यः केवलशूद्रप्रभवेभ्यः उत्कृष्टतरा विज्ञेयाः। एवं मागधः शूद्रायां जनयन् केवलवैश्यजाताच्छूद्राद्धीनतरं जनयति। तथा वैश्यायां केवलवैश्यजाताद्धीनतरं जनयति। एवं क्षत्रियायामात्मनो हीनतरं मागधं जनयति। तथा ब्राह्मण्यां केवलवैश्यजाताद्वैदेहकाद्धीनतरं जनयति। तदेवं मागधाश्चातुर्वर्ण्ये चतुरो जनयन्ति। एवं वैदेहकस्य वक्ष्यामः। वैदेहकः शूद्रायां जनयन् केवलवैश्यजाताद्धीनतरं जनयति। एवं वैश्यायां क्षत्रियायां (ब्राह्मण्यां) च केवलवैश्यजातेभ्यो मागधजातेभ्यश्च हीनतरं जनयति। एवं वैदेहकोऽपि चातुर्वर्ण्ये (चतुरो) जनयति। एवमेतेभ्यो वैश्यप्रभवेभ्यस्त्रिभ्यश्चातुर्वर्ण्ये आत्मनश्च त्रय इति। एवं वैश्यप्रभवा अपि पञ्चदश वर्णा वेदितव्याः। अथ क्षत्रियस्य वैश्यायां शूद्रायां ब्राह्मण्यां प्रतिलोमजः क्षत्रियेण जातः शूद्रायां चातुर्वर्ण्ये प्रसूयमानः उग्रनामा शूद्रायामात्मनो हीनतरं जनयति। वैश्यजातात्तु शूद्रादुत्कर्ष...ब्राह्मण्यां चालोपक्षत्तृचण्डालानुत्तरोत्तरं हीनान् जनयति। एते तु वैश्यप्रभवेभ्यः आयोगवादिभ्य उत्कृष्टतरा वेदितव्याः। एवमेत उग्रपुत्राश्चत्वारः। क्षत्रियेण...कादुत्कृष्टतरं जनयति। एते क्षत्रियायां तु। तथा प्रतिलोमजाः क्षत्रियेण ब्राह्मण्यां जातस्सूतनामा। चातुर्वर्ण्ये प्रसूयमानश्शूद्रायामात्मनो हीनतरां जनयति। मागधवैदेहकशूद्रेभ्यस्तूत्कृष्टम्। एवं वैश्यायां क्षत्रियायां ब्राह्मण्यां चात्मनो हीनतरं मागधवैदेहकजातेभ्यस्तूत्कृष्टतरम्। एवं सूतनामा चातुर्वर्ण्ये चतुरो जनयति। एवं क्षत्रियपुत्रेभ्यो द्वादश। आत्मानं च त्रय इति क्षत्रियप्रभवाः पञ्चदशवर्णा भवन्ति। ब्राह्मणस्य त्वन्तलोमजा एव त्रयः। तत्र पारशवः सर्वशूद्रेभ्य उत्कृष्टः चातुर्वर्ण्ये प्रसूयमान...द्रायामात्मनो हीनतरं जनयति। केवलवैश्यजाताच्चोत्कृष्टं क्षत्रियजातातूग्रात्प्रतिपद्यन्ते। तथा वैश्यायामात्मनो हीनतरं जनयति वैश्यजाताच्चोत्कृष्टम्। क्षत्रियायां

तु केवलवैश्यक्षत्रियाभ्यामुत्कृष्टतरं मागधं जनयति । एवं वैदेहकं वैश्यायां जातश्चातुर्वर्ण्ये प्रसूयमानः शूद्रायामात्मनो हीनतरं जनयति । एते तु क्षत्रियायां तु मागधं जनयन् केवलवैश्यजातान्मागधादुत्कृष्टतरं जनयति । तथा ब्राह्म(ण्यां) वैदेहकं जनय(ति) केवलं वैश्यं वैदेहब्राह्मण्यां जनयन् पूर्वाभ्यां क्षत्रियवैश्यप्रभवाभ्यां जातः वैदेहकाभ्यामुत्कृष्टतरं जनयति । एवमेते बहुपुत्राश्चत्वारः । तथा च क्षत्रियायां ब्राह्मणेन जातश्चातुर्वर्ण्ये प्रसूयमानश्शूद्रायां पुत्रं जनयन् आत्मनो हीनतरं जनयति । क्षत्रियप्रभवात्तूग्रादुत्कृष्टतरम् । तथा वैश्यायां जनयन्नात्मनो हीनतरं जनयति । वैश्यक्षत्रियजाताभ्यामुत्कृष्टरम् । तथा क्षत्रियायामात्मनो हीनतरं जनयति केवलक्षत्रियात्तूत्कृष्टतरम् । एवं ब्राह्मण्यां सूतं जनयन्नात्मनो हीनतरं जनयति पूर्वसूत्राद्दुत्कृष्टः । एवं च ब्राह्मणजातात् क्षत्रियाच्चत्वारः । त एवं ब्राह्मणप्रभवेभ्यस्त्रिभ्यो द्वादश । आत्मनश्च त्रय इत्येवं ब्राह्मणप्रभवाः पञ्चदश वर्णा भवन्ति । एवमेते चतुर्भ्यो वर्णेभ्यः षष्टिर्वर्णाः । आत्मनश्चत्वारः । इत्येते चतुष्षष्टिर्वर्णभेदाः यथास्थूलं वेदितव्याः; एतेषां पुनः पुनर्विद्यमाना असंख्येया वर्णभेदा भवन्ति । तदेवं 'सङ्कीर्णयोनयो ये' तु प्रतिलोमानुलोमजाः । अन्योन्यव्यतिषक्ताश्चेत्यस्यायं श्लोकस्य प्रपञ्चो विज्ञेयः । वर्णापसदा अपि सन्तो वर्णपदपर्चर्यन्ते (?) इव । शब्दलोपेन वर्णा तथा चोक्तम्– 'ब्राह्मण्याः क्षत्रिया वैश्यास्त्रीवर्णा द्विजातयः । चतुर्थ एकजातीयः शूद्रो नास्ति तु पञ्चमः' इति ।।

प्रसाधनोपचारज्ञमदासं दासजीवनम् । सैरिन्ध्रं वागु(रा) वृत्तिं सूते दस्युरयोगवे ।। प्रसाधनोपचारज्ञमिति वृत्त्युपदेशः अदासः सन्दास्यजीवनः । प्रसाधनोपचारज्ञ नयापरम-(त) जीवी यस्मात् सैर(न्ध्र)मिति वर्णनामेदम् । अन्यस्त्वाह ग्रन्थकारः– सैर(न्ध्रि)-द्रौपदीदर्शनात् वागुरवृत्तित्वमारणवस्तुहिंसनाख्यं युक्तमार्याणां देवपित्रर्थमौषधार्थं च । प्राणयात्रामात्रार्थं वा पुत्रदारात्ययं प्राप्तस्य ।। ३१ ।।

**प्रसाधनोपचारज्ञमदासं दास्यजीवनम् ।**
**सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ।।३२।।**

(१) **मेधातिथिः । प्रसाधनं** मण्डनम् । **उपचारो**ऽनुवृत्तिः । केशरचनाकुंकुमचन्दनादिनाऽनुलेपनविच्छित्तिः पाणिपादविमर्दनं प्राप्तिलोभात् कर्मकारिक्षिप्रकारिकार्याणामवसरमित्यादिविधिज्ञ एवमुच्यते । **अदासं दास्यजीवनम्** । वत्सरभृत्य षण्मासभृत्या च कंचन सेवते । अथवैतद्विधिज्ञतया सर्वोपस्थापको भवति जीवनाय । मता (?) **वागुरावृत्तिम्** । द्वितीयोऽयं वृत्त्युपायः । 'वागुरा' अरण्यपशुहिंसनम् । तच्चार्याणां देवपित्र्यर्थं क्षुधार्थं च, न तु व्याधवत्पशून्हत्वा मांसविक्रयेण जीवनम् । राजनियोगाद्बहुप्राणिवधो जीविकार्थः ।

**सैरन्ध्र**नामानं **सूते** उत्पादयति । **दस्यु**र्नाम वक्ष्यमाणः । **अयोगवे** जातिविशेषे । सामर्थ्यात्स्त्रीत्वलाभः ।। ३२ ।।

(२) **सर्वज्ञनारायणः ।** अन्यानपि कांश्चिदुपलक्षणतया संकीर्णजान्वृत्त्या सह दर्शयति **प्रसाधनेति** । प्रसाधनमहरणं । उपचारो गात्रसंवाहनादिः । अदासं दास्यानर्हं शूद्रस्यैव तदर्हत्वात् । दास्यजीवनं दासयोग्येन कर्मणा जीवनम् । सैरन्ध्रनामानम् । वागुरावृत्तिं

पाशबन्धनवृत्तिम्। दस्युः प्रागुक्तपञ्चदशविधसंकरजात्यन्तरः। अयोगवे अयोगवस्त्रियाम् जातिवाचित्वात्स्त्रीलिङ्गनिर्देशः ॥ ३२ ॥

(३) **कुल्लूकः।** केशरचनादिः प्रसाधनस्तस्योपचारज्ञं अदासमुच्छिष्टभक्षणादिदासकर्मरहितमङ्गसंवाहनादिदासकर्मजीवनं पाशबन्धनेन मृगादिवधाख्यवृत्त्यन्तरजीवनं सैरिन्ध्रनामानं 'मुखबाहूरुपज्जाना'मिति (१०।४५) श्लोके वक्ष्यमाणो दस्युरायोगवस्त्रीजातौ शूद्रेण वैश्यायामुत्पन्नायां जनयति, तच्चास्य मृगादिमारणं देवपित्रौषधार्थं वेदितव्यम् ॥ ३२ ॥

(४) **राघवानन्दः।** तानेव नव विवृणोति **प्रसाधनेति।** प्रसाधनोपचारज्ञं केशप्रसाधनादिनिपुणम्, अदासं हिंसोपजीवित्वेऽपि दासाद्भिन्नं उच्छिष्टाभोजित्वात्। दास्यजीवनं दासकर्मणा जीवनवन्तम्। वागुरावृत्तिं वागुरा मृगबन्धनी तया मृगघातिनम्। आयोगवे शूद्राद्वैश्याजन्यायाम्। दस्युर्वक्ष्यमाणः ॥ ३२ ॥

(५) **नन्दनः।** अपरमपि संकीर्णयोनिमाह **प्रसाधनोपचारज्ञमिति।** दस्युः प्रतिलोमः सूतादिः। अयोगवे आयोगवस्त्रियां वृत्तभङ्गपरिहारार्थे ह्रस्वः। सैरन्ध्रनामानं प्रसाधनोपचारवृत्त्या जीवन्नतम्। अदासं कस्यचिदपि न दासभूतं। दस्यूनां बहुत्वात्सैरन्ध्राणामपि बहुत्वं वृत्तिभेदोपन्यासेन सूचितम् ॥ ३२ ॥

(६) **रामचन्द्रः।** प्रसाधनं अलंकरणमात्रं संवहनादिउपचारज्ञं। अदास्यं दास्यानर्हमदास्यं। यत् जीवनं प्राणनं आयोगवो दस्युः वागुरावृत्तिं पाशबन्धनवृत्तिं सूते ॥ ३२ ॥

(८) **गोविन्दराजः। प्रसाधनोपचारज्ञमदासं दास्यजीवनमिति।** केशरचनादिप्रसाधनाङ्गसंवाहनाद्युपचारक्षमदासमशूद्रत्वात् प्रसाधनादिदासकर्मजीवनं पाशबन्धनेन च मृगादिवधजीवनं सैरन्ध्राख्यं 'मुखबाहूरुपज्जाना'मिति वक्ष्यमाणो दस्युरायोगव्यां शूद्राजातायां जनयति। एतस्य मृगादिहिंसनं आर्याणां देवपित्रौषधार्थं आत्मपुत्रदारात्ययप्राप्तः स्यात्। एवं अन्येषां अपि प्रायो वधजीविनां वेदितव्यम् ॥ ३२ ॥

(९) **भारुचिः।** दस्युः आयोगवि-सैरंध्रनामानं सूते। तस्य प्रसाधनादिकर्म जीवनं जीवनोपायं। प्रसाधनोपचारज्ञं-केशचरणादिप्रसाधनांगसंवहनज्ञातारं। दासजीवनं दासकर्मणा पाशवेधनेन मृगादिवधाख्येन वृत्त्यंतरेण जीवनं। वागुरावृत्तिं वाग्भुवास्तुतिकरणरूपा वृत्तिर्यस्तं ॥ ३२ ॥

**मैत्रेयकं तु वैदेहो माधूकं संप्रसूयते ॥**
**नॄन्प्रशंसत्यजस्त्रं यो घण्टाताडोऽरुणोदये ॥३३॥**

(१) **मेधातिथिः। मैत्रेयकं** नाम्ना वर्णमायोगव्याम्। **संप्रसूयते** जनयति। **वैदेहनामा** ब्राह्मण्यां वैश्याज्जातो यः। पाठान्तरं **मैरेयकमिति।**

**माधूकम्।** उपमापदमेतत् मधूककुसुमतुल्यम् मधुरभाषित्वात्। अथवा मधुकायतीति 'अन्येष्वपि दृश्यते' (पा. ३।२।१०१) इति डः। अन्येषामपीति दीर्घः। स्वार्थिकेन चादिवृद्धिस्तस्य वृत्तिः।

**नूनं** मनुष्यान् **प्रशंसन्ति** अजस्रं सर्वदा बन्दीति यः कथ्यते। **अरुणोदये** प्रबोधकाले घण्टां ताडयत्याहन्ति, राज्ञामीश्वराणां चान्येषां प्रबोधाय। आयोगव्यामेवानुजनयति, प्रकृतत्वात् ॥ ३३ ॥

(२) **सर्वज्ञनारायणः।** मैत्रेयकं मैत्रेयकनामानम्। माधूकं मधुरस्तुतिपाठकम्। सूते अयोगवस्त्रियामेव। घण्टाताडो घण्टावाद्यकारी ॥ ३३ ॥

(३) **कुल्लूकः।** वैश्याद्ब्राह्मण्यां जातो वैदेहः। प्रकृतायामायोगव्यां मैत्रेयाख्यं मधुरभाषिणं जनयति यः प्रातर्घण्टामाहत्य राजप्रभृतीन्सततं वृत्त्यर्थं स्तौति ॥ ३३ ॥

(४) **राघवानन्दः। मैत्रेति।** मैत्रेयकं माधूकं मधुरभाषिणं अयोगव्यां। **नूनं** राजादीन्। घण्टाताडः तत्ताडनशीलः। अरुणोदये प्रातः प्रातरेव तान्बोधयन्प्रशंसतीति। वैदेहो वैश्यात् ब्राह्मणीजः ॥ ३३ ॥

(५) **नन्दनः।** माधुरं मधुरभाषिणं सुतं प्रसूयते, आयोगव इत्यनुवर्तते, तस्य वृत्तिरुत्तरार्धेनोक्ता। घण्टां ताडयतीति घण्टाताडः ॥ ३३ ॥

(६) **रामचन्द्रः।** वैदेहो मैत्रेयकनामानं तु पुनः माधूकं मधुरस्तुतिपाठकमायोगव्यां संप्रसूयते। अरुणोदये यो **नूनं** जने संघण्टानादः भाषायां 'जागा' इति प्रसिद्धः ॥ ३३ ॥

(७) **मणिरामः।** वैदेहः प्रवृत्तयाऽऽयोगव्यामेव मैत्रेयकं प्रसूयते। कथंभूतं माधूकं ? मधुरभाषिणं। तस्य कर्माऽऽह **नूनमिति।** अरुणोदये यः घंटाताडः घंटां आहत्य **नूनं** राज-प्रभृतीन् अजस्रं निरंतरं प्रशंसति ॥ ३३ ॥

(८) **गोविन्दराजः। मैत्रेयकमिति।** वैदेहो वैश्याद् ब्राह्मणीजातः प्रकृतायां आयोगव्यां मैत्रेयकाख्यं मधुरभाषिणं जनयति यः प्रातः घंटामाताड्य राजप्रभृतीन् अनवरतवृद्ध्यर्थं स्तौति ॥ ३३ ॥

(९) **भारुचिः।** मैत्रेयकं तु नाम्ना मैरेयकं वा पाठान्तरेण वैदेहको जनयति। वैश्यजातो ब्राह्मण्यां य उक्तः मैत्रेयकं च गुणेन विशिनष्टि–माधूकं मधुरभाषिणं सम्प्रसूयते। आयोगव्यामधिकृतायां तस्य वृत्तिनिर्देशः। नूनं प्रशंसत्यजस्रं यो घण्टाताड्यरुणोदये प्रातर्गायनस्तुतिवन्दनादिभिः ॥ ३३ ॥

**निषादो मार्गवं सूते दासं नौकर्मजीविनम् ॥**
**कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः ॥३४॥**

(१) **मेधातिथिः।** प्रतिलोमप्रकरणात् न यः शूद्रायां ब्राह्मणाज्जातो निषादः पूर्वमुक्तः स इह गृह्यते, अपि तु दस्युवत्प्रतिलोम एव। **मार्गवं** नाम प्रतिलोमं **सूते,** आयोगव्यामेव। यस्येमे अपरे नामनी 'दासः' **कैवर्त** इति। **आर्यावर्तः** प्रसिद्धः। तस्य वृत्तिर्नौकर्मणा नौवाहनेन जीवति ॥ ३४ ॥

(२) **सर्वज्ञनारायणः**। निषादः शूद्रायां विप्राज्जातः अयोगवस्त्रियामेव सूते। मार्गवं मार्गवनामानम्। दासं दासापरनामानम् अयोगव इत्यधिकारादेतावप्यायोगव्यामेव ॥ ३४ ॥

(३) **कुल्लूकः**। ब्राह्मणेन शूद्रायां जातो निषादः प्रागुक्तायामायोगव्यां मार्गवं दासापरनामानं नौव्यवहारजीविनं जनयति। आर्यावर्तदेशवासिनः कैवर्तशब्देन यं कीर्तयन्ति॥ ३४ ॥

(४) **राघवानन्दः**। निषादो ब्राह्मणात् शूद्रकन्याजः। मार्गवं मृगयुरिव हिंसाकर्मिणं। नौकर्मजीविनं नावो यत्कर्म मत्स्यघातनोत्तारणादि तेन जीवितुं शीलम्। तस्यैव देशभेदेन नामान्तरं 'कैवर्त' इति॥ ३४ ॥

(५) **नन्दनः**। निषादः शूद्रायां ब्राह्मणाज्जातः पूर्वमुक्तः। मार्गवं मार्गवनामानं क्वचिद्दाशनामानं। सूते आयोगव इत्येव॥ ३४ ॥

(६) **रामचन्द्रः**। निषादः आयोगव्यां मार्गवं सूते दासं नौकर्मजीविनं ॥ ३४ ॥

(७) **मणिरामः**। निषादः आयोगव्यामेव मार्गवं-दाशाऽपरनामानं नौकर्मजीविनं सूते। आर्यावर्तनिवासिनं यं-मार्गवं कैवर्तं कैवर्तशब्देन प्राहुः॥ ३४ ॥

(८) **गोविन्दराजः। निषादो मागधमिति**। प्रतिलोमाधिकारात् प्रतिलोमो निषादो व्यासोक्तो य उक्तः स प्रकृतायां आयोगव्यां मागधं दासापरनामानं नौव्यापारजीविनं जनयति यं आर्यावर्तनिवासिनः कैवर्तशब्देन ब्रुवते॥ ३४॥

(९) **भारुचिः**। निषादो नाम ब्राह्मणजातस्तं शूद्रं प्रतिलोमो वेदितव्यः, प्रतिलोमाधिकारसामर्थ्यात्। न तु ब्राह्मणजातः शूद्रायाम्, अनुलोमत्वात्। स निषादोऽधिकृतायामेवायोगव्यां मार्गववर्णनाम्ना जनयति–कर्मजीविनमिति। कैवर्तमिति यं प्राहुस्तृतीये नाम्ना आर्यावर्तनिवासिनो जानपदाः वागुरावृत्तित्वमारणवस्तुहिंसनाख्यं युक्तमार्याणां देवपित्रर्थमौषधार्थं च। प्राणयात्रा-मात्रार्थं वा पुत्रदारात्यर्थं प्राप्तस्य।

येऽनन्तरं उपदिष्टास्त्रयो मार्गवपर्यन्तास्तेषां मातृजातिर्नोक्ता, तत्प्रतिपादनार्थोऽयं श्लोकः॥ ३४ ॥

**मृतवस्त्रभृत्स्वनार्यासु गर्हितान्नाशनासु च ॥**
**भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् त्रयः ॥ ३५ ॥**

(१) **मेधातिथिः**। **आयोगवीषु** स्त्रीष्वेते जायन्ते। तासां च विशेषणम्। **मृतवस्त्रभृत्सु** शववासांसि परिदधतीष्वित्यर्थः। **अनार्या** अस्पृश्याः। **गर्हितमु**च्छिष्टं मांसादि चान्नमश्नन्ति॥ ३५ ॥

(२) **सर्वज्ञनारायणः**। अन्येऽपि त्रयस्तस्यामेव जायन्त इत्याह **मृतेति**। पूर्वार्धेनायोगवीनां धर्म उक्तः ॥ ३५ ॥

(३) **कुल्लूकः**। सैरिन्ध्रमैत्रेयमार्गवा हीनजातीयास्त्रयः मृतवस्त्रपरीधानासु क्रूरासूच्छिष्टादिभक्तान्नाशनायोगवीषु पितृभेदाद् भिन्ना भवन्ति ॥ ३५ ॥

(४) **राघवानन्दः**। त्रयाणामेषां मातृराह **मृतेति**। मृतवस्त्रभृत्सु तदेव वासो यासां तासु गर्हितान्नाशनासु गर्हितं लशुनमद्याद्यशनं यासां तासु। आयोगवीकन्यासु। **पृथगिति** तासामेकजातीयत्वेऽपि पतीनां भिन्नजातीयत्वात् ॥ ३५ ॥

(५) **नन्दनः**। अनार्यासु केनचित्कर्मदोषेण निन्द्यासु जातिहीना मातृकर्मदोषेण निकृष्टतमाः एते उत्तरश्लोके वक्ष्यमाणाः ॥ ३५ ॥

(६) **रामचन्द्रः**। मृतवत्सासु अनार्यासु अविवाहितासु गर्हितमन्नमश्नन्त्योऽनार्याः तासु **योगी** [श्वर] 'कदर्यवृद्धचौराणां क्लीबरङ्गावतारिणाम्।" एते गर्हिता। एतासु आयोगवीषु एते जातिहीनाः पृथक् त्रयो भवन्ति ॥ ३५ ॥

(८) **गोविन्दराजः**। **मृतवस्त्रभृत्स्वनार्यासु** इति। एते सैरन्ध्रमैत्रेयकमागधहीन-जातीयाः त्रयः शववस्त्रपरिधानासु क्रूरासु उच्छिष्टादिभक्ष्याख्यायोगवीषु पितृभेदाद् भिन्नजातयो भवन्ति ॥ ३५ ॥

(९) **भारुचिः**। आयोगविपितृबाह्या वादेतव्याः (?) निषादवत् न तु शूद्रेण वैश्याया जाताः। तथा च दर्शयति त्रिभ्यो यथोपदिष्टेभ्यो वर्णेभ्यो दस्युवैदेहकनिषादेभ्यः श्लोकत्रयाधिकृतेभ्यः ये तु 'पुनस्सूतो दस्यायोगव' इत्येवं प्रथमश्लोकस्यान्त्यपादं पठन्ति तेषां तत्र क्षत्रियजातो ब्राह्मण्यां सूत उक्तः। एवं च सति सूतवैदेहकनिषादेभ्यः एवंविध(स्याऽऽ)योगवीषु श्लोकत्रयोपदिष्टानामन्ते वर्णा जायन्ते ॥ ३५ ॥

**कारावरो निषादात्तु चर्मकारं प्रसूयते।**
**वैदेहिकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥ ३६ ॥**

(१) **मेधातिथिः**। उत्तरत्र वैदेह्यामेव जायन्त इत्येवकारकरणलिङ्गादिहापि वैदेह्यां **निषादात्कारावरो** नाम जायत इति संबंधप्रतीतिः।

**वैदेहिकाद्द्वावन्ध्रमेदौ**। कस्यां स्त्रियाम्? कारावरीनिषाद्योः। तयोरत्र सन्निधानात्। वैदेह्यां च वैदेह्याद् भिन्नवर्णसंभवादेवं व्याख्यायते। स्त्रीभेदेन चैकस्माद्वर्णादेते द्वे जाती। **बहिर्ग्रामं प्रतिश्रयो** निवासो ययोः ॥ ३६ ॥

(२) **सर्वज्ञनारायणः**। निषादादायोगव्यां कारावरनामा चर्मकारस्तद्वृत्तिः प्रसूयते प्रजायते। वैदेहकादायोगव्यामेव...अन्ध्रोऽनन्यपूर्वायामन्यपूर्वायां तु मेदः ॥ ३६ ॥

(३) **कुल्लूकः**। 'वैदेह्यामेव जायत'(१०/३७) इत्युत्तरत्र श्रवणात् अत्राप्याशङ्कायां सैव संबध्यते। निषादाद्वैदेह्यां जातः कारावराख्यश्चर्मच्छेदनकारी जायते, अत एवौशनसे कारावराणां चर्मच्छेदनाचरणमेव वृत्तित्वेनोक्तम्। वैदेहकसैरिन्ध्रभेदाख्यौ ग्रामबहिर्वासिनौ अन्तरानिर्देशाद्वैदेहकेन च वैदेह्यां जातस्य गर्हितवैदेहकस्याप्युचितत्वात्। कारावरनिषाद-जात्योश्चात्र श्लोके सन्निधानात्कारावरनिषादस्त्रियोरेव क्रमेण जायते ॥ ३६ ॥

(४) **राघवानन्दः**। वैदेह्यां कारावरादिषण्णामेव जन्मेति वक्तुं पितृभेदमाह

**कारेति** द्वाभ्याम्। निषादवैदेहकचण्डालनिषादाश्चत्वारः पितरः कारावरान्ध्रमेदाद्याः षट् पुत्रा वैदेह्यामिति जात्येकवचनं चेति पौल्कस्यां शूद्रनिषादजातायां अत्र नवजातेरन्यद्विशेषणं सैरन्ध्रकः मैत्रेयकः मार्गवः कारावरः अन्ध्रमेदौ देशभेदेनैक एव पाण्डुसोपाकः आहितुण्डिकः सोपाकः अन्त्यावसायी चैते नव सूतादयः षट् तेन पञ्चदश बाह्याबाह्यतरा इति व्याख्यायन्ते पञ्चदश शब्दस्वरसात्। **कुल्लूकस्तु** सूतादयः षडेते सैरन्ध्रादयो न वेति पञ्चदश तथा अयोगवक्षत्तृचण्डालाश्चातुर्वर्ण्यस्त्रीषु स्वयोन्यां च पञ्च पञ्च जनयन्तीति एवं दश पूर्वोक्ताश्च पञ्चदशेति त्रिंशत्। **मेधातिथिस्तु** विप्रस्यानुलोम्येन त्रयः प्रतिलोमाभावात् क्षत्रियस्य ब्राह्मण्यामेकः प्रतिलोमः, अनुलोमद्वयं वैश्याशूद्रयोः वैश्यस्य च विप्राक्षत्रिययोः प्रतिलोमद्वयमनुलोम एकः शूद्रायां, शूद्रस्य तु प्रतिलोमत्रयं विप्राक्षत्रियवैश्याङ्गनासु अनुलोमाभावादिति द्वादश संकरास्तेषां मातृजातीयप्रतिलोमानुलोमासु पञ्चसु प्रत्येकं पञ्च पञ्चेति षष्टिरेवं संकरा इति ।। ३६–३९ ।।

(५) **नन्दनः**। तानेव त्रीनाह **कारावर इति**। चर्मकारश्चर्मसंस्कारवृत्तिः। कारावरान्ध्रमेदाः क्रमेण मृतवस्त्रभृत्स्वनार्यासु गर्हितान्नाशनास्वायोगवीषु जायन्त इति ।। ३६।।

(६) **रामचन्द्रः**। निषादाद्वैदेह्यां कारावरो नाम चर्मकारः प्रसूयते वैदेहकादंध्रमेदौ भवतः ।। ३६ ।।

(७) **मणिरामः**। निषादात् वैदेह्यां कारावरः। स न चर्मकारः चर्मच्छेदनादिकर्ता वैदेहिकात् वैदेह्यां अंध्रमेदौ अंध्रमेदनामानौ भवतः। बहिर्ग्रामप्रतिश्रयौ बहिर्ग्रामिवासिनौ ।। ३६ ।।

(८) **गोविन्दराजः**। **कारावर इति**। 'वैदेह्यामेव जायत' इत्यस्य वक्ष्यमाणस्यावधारणस्य पूर्वत्रापि वैदेह्यवबोधकत्वादिहाश्रुतापि वैदेही लक्ष्यते। निषादस्य प्रतिलोमाधिकारात् प्रतिलोम उक्तः, तेन निषादाद् वैदेह्यां कारावराख्यः कारावराणां चर्मच्छेदनसीवनमिति पौरान् संदर्शनात् चर्मच्छेदनसीवनवृत्तिर् जायते। वैदेहिकाद् अन्ध्रमेदाख्यौ अरण्यनिवासिनौ स्तुत्यन्तरनिर्देशात् वैदेह्यां च भिन्नजात्युत्पादः स्यात् न आद्यत्वात् कारावरनिषादजात्योश्च श्लोकेऽत्र संनिधानात् कारावरनिषादस्त्रियोरेव जायते ।। ३६ ।।

(९) **भारुचिः**। 'वैदेहिकादन्ध्रमेदौ बहिर्ग्र्यामेव जायते' इति वक्ष्यमाणश्लोकलिङ्गान्निषादात् कारावरनामा वर्णश्चर्मकरणवृत्तिर्वैदेह्यां जायते। वैदेहिकादन्ध्रमेदौ कारावरनिषादवर्णयोः स्त्रियोः अन्ययोरसम्भवादेतल्लोकोपदिष्टयोश्च वर्णयोः सन्निहितत्वाद्वैदेहकाच्च वैदेह्या इन्ध्रमेदयोर्वर्णयोरसम्भवात्। परिशेषात् कारावरनिषादः। . . . यावेन (गृह्येते)। एवं हि स्त्रीवर्णभेदे वैदेहिकादन्ध्रमेदौ भिन्नवर्णौ युक्तौ न तु वैदेह्याम् ।। ३६ ।।

**चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।।**
**आहिण्डिको निषादेन वैदेह्यामेव जायते ।।३७।।**

(१) **मेधातिथिः**। **चाण्डालात्** वैदेह्यां **पाण्डुसोपाको** नाम वर्णो जायते।

तस्य वृत्तिस्त्वक्सारव्यवहारवान्। 'त्वक्सारो' वेणुः तद्व्यवहारेण वंशक्रयविक्रया-दिना कटादिकरणेन वा जीवति। निषादात्तस्यामेवाहिण्डकस्तस्य वृत्तिरेषैव, अन्वेष्या वा।। ३७।।

(२) **सर्वज्ञनारायणः**। चाण्डालादायोगव्यामेव पाण्डुसोपाकः पाण्डुसोपाकनामा। त्वक्सारव्यवहारो वेणुविदलैर्जीवनम्। अत्र चान्ध्रमेदयोर्मातापितृजात्यभेदादिकत्वं विवक्षता पूर्वं त्रय इत्युक्तम् निषादेन विप्रशूद्राजेन।। ३७।।

(३) **कुल्लूकः**। वैदेह्यां चण्डालात्पाण्डुसोपाकाख्यो वेणुव्यवहारजीवी जायते। निषादेन च वैदेह्यामेवाहिण्डिकाख्यो जायते। अस्य च धनस्थानेषु बाह्यसंरक्षणादाहिण्डि-कानामित्यौशनसे वृत्तिरित्युक्ता। समानमातापितृकत्वेऽपि कारावराहिण्डिकयोर्वृत्तिभेदसंश्रव-णाद्व्यपदेशभेदः।। ३७।।

(५) **नन्दनः**। 'आहिण्डिको निषाद्यान्तु वैदेहेनैव जायते' इति पाठः। त्वक्सारो वेणुवेत्रादिस्तस्य व्यवहारो विक्रयकर्म।। ३७।।

(६) **रामचन्द्रः**। चाण्डालाद्वैदेह्यां पाण्डुसोपाकनामा त्वक्सारव्यवहारवान् वेणु-व्यवहारजीवी जायते। निषादेन वैदेह्यामाहिण्डिको जायते।। ३७।।

(७) **मणिरामः**। सोपाकः त्वक्सारव्यवहारवान्-वंशव्यवहारी कारावराऽहितुंडि-कयोरैक्येऽपि वृत्तिभेदार्थं पुनः कथनं।। ३७।।

(८) **गोविन्दराजः**। **चाण्डालादिति**। चाण्डालात् वैदेह्यां पाण्डुसोपाकाख्यो वेणु-व्यवहारजीवी जायते। स च निषादेन वैदेह्यां एव अहितुण्डिकाख्यो जायते। अस्य वन्धनस्थानेषु वाह्यसंरक्षणं आहितुण्डिकानाम् इति औशनसे वृत्तिरुक्ता।। ३७।।

(९) **भारुचिः**। चण्डालाद्वैदेह्यामेकजातौ वर्णद्वयमिदं पाण्डुसोपाकाहिण्डिकलक्षणो जायते। एवं चात्र वर्णापसद(प्र)करणे मातृभेदाद्वा एकवर्णजातयोरपि भेदः पितृभेदाद्वा एकस्यामेव स्त्रियां भेदो विज्ञेयः।। ३७।।

**चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्।।**
**पुल्कस्यां जायते पापः सदा सज्जनगर्हितः।।३८।।**

(१) **मेधातिथिः**। **व्यसनं** दुःखं तस्य **मूलं** मारणं तद्वृत्तिर्वध्यमारणं राजादेशादनाथ-शववहनं तद्वस्त्रादिग्रहणं प्रेतपिण्डभोजनमित्येवमादिवृत्तिः। **पुल्कस्यां चाण्डालेन** जायते। अथवा **मूलादिवृक्षादीनां** तद्**व्यसनं** विभागकरणं सा वृत्तिर्व्यवच्छिन्नेषु वृक्षेषु यदनुवृत्तं मूलं तदुद्धृत्य विक्रयादिना जीवति।। ३८।।

(२) **सर्वज्ञनारायणः**। चण्डालेन पुल्कस्यां मूलव्यसनवृत्तिमान् मूलखननं कृत्वा तद्विक्रयणजीवन इत्यर्थः।। ३८।।

(३) **कुल्लूकः**। शूद्रायां निषादेन जातायां पुल्कस्यां चण्डालेन जातः सोपाकाख्यः

पापात्मा सर्वदा साधुभिर्निन्दितो मारणोचितापराधस्य मूल वध्यः तस्य व्यसनं राजादेशेन मारणं तेन वृत्तिर्यस्य स जायते ॥ ३८ ॥

(५) **नन्दनः।** मूलव्यसनमौषधखननम् ॥ ३८ ॥

(६) **रामचन्द्रः।** चाण्डालेन सोपाकनामा तथा पुल्कस्यां जायते। कीदृशः? मूलव्यसनवृत्तिमान् मूलखननवृत्तिमारणोचितः. यद्वा मूल वध्यं तस्य व्यसनं राजादेशेन मारणं वा ॥ ३८ ॥

(७) **मणिरामः।** पुल्कस्यां चंडालेन सोपाकः। मूलव्यसनवृत्तिमान् मूलव्यसनं मारणवृत्तिरित्यर्थः। वध्यं मारणं। राजादेशादनाथशव (निबर्हणं) तद्वस्त्रादिग्रहणम्। प्रेतपिण्डभोजनमित्येवमादिवृत्तिः। पुल्कस्यां चण्डालेन जायते ॥ ३८ ॥

(८) **गोविन्दराजः। चाण्डालेन चेति। पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥** चण्डालेन पुक्कस्यां जातो निषादात् शूद्रायां इत्युक्तायां सोपाकाख्यः पापात्मा सर्वदा साधुभिर् निन्दितो राजाज्ञया वध्यमारणवृत्तिर् जायते ॥ ३८ ॥

**निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् ॥**
**श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥३९॥**

(१) **मेधातिथिः।** अन्त्यावसायिनं चण्डालमेव वदन्ति। अथवा निषाद्यां चण्डालादुत्पन्नस्यान्त्यावसायीति नामधेयम्। **श्मशानगोचरं** शवदहनादिवृत्तिः। अतश्चाण्डालादपि कुत्सिततरो विज्ञेयः। तदेतदानन्त्यात् संकराणां प्रदर्शनमात्रं कृतम् ॥ ३९ ॥

(२) **सर्वज्ञनारायणः।** निषादस्त्री निषादजातीया स्त्री ॥ ३९ ॥

(३) **कुल्लूकः।** निषादी चण्डालादन्त्यावसायिसंज्ञं चण्डालादिभ्योऽपि दुष्टतमं श्मशानवासिनं तद्वृत्तिं च जनयति ॥ ३९ ॥

(५) **नन्दनः।** श्मशानगोचरं-श्मशानवासिनं तद्वृत्तिजीविनं च ॥ ३९ ॥

(८) **गोविन्दराजः। निषादस्त्रीति।** प्रतिलोमनिषादस्त्री चण्डालाद् अन्त्यावसायाख्यं पुत्रं चण्डालादिभ्यो दुष्टतमं श्मशानवासिनं तद्वृत्तिं च जनयति ॥ ३९ ॥

(९) **भारुचिः।** श्मशानगोचरस्तद्वृत्तिस्यस्थाननिवासश्च। एवं च सत्ययं चण्डालादपि पापतरो विज्ञेयः, तदेतदानन्त्यात् सङ्करस्य प्रदर्शनमात्रं विज्ञेयम् ॥ ३९ ॥

**सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः ॥**
**प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥४०॥**

(१) **मेधातिथिः।** यान्येतान्यनन्तरमुद्दिष्टानि त्वक्सारव्यवहारादीनि कर्माणि तैः अप्रसिद्धाः सोपाकादिनामतया तज्जातीया वेदितव्याः। पित्रा मात्रा च विभागेन दर्शिताः। **प्रच्छन्ना वा प्रकाशा वा** तज्जातीया **वेदितव्याः।** आयोगव्यां माता विभागो निषादाद्वैदेहिकादन्ध्रमेदाविति पित्रा दर्शितो विभागः ॥ ४० ॥

(२) **सर्वज्ञनारायणः।** पितृमातृप्रदर्शिताः पितृमातृविशेषेण कथिताः। स्वकर्मभिर्गर्हितकर्मवर्तनशीलतया वेदितव्याः प्रच्छन्नाऽप्रच्छन्ना अपि ।। ४० ।।

(३) **कुल्लूकः।** वर्णसङ्करविषय एता जातयो यस्येयं जनयित्र्ययं जनकः स एवंजातीय इत्येवं पितृमातृकथनपूर्वकं दर्शिताः। तथा गूढाः प्रकटा वा तज्जात्युदितकर्मानुष्ठानेन ज्ञातव्याः ।। ४० ।।

(४) **राघवानन्दः।** संकीर्णप्रकरणमुपसंहरति **संकर इति।** पितृतो मातृतः कर्मभिर्वा विभाव्या इत्याह **प्रच्छन्ना वेति** ।। ४० ।।

(५) **नन्दनः।** पितृमातृविगर्हिताः पितृमातृदोषविगर्हिताः आसु जातिषु द्विजधर्मिणः ब्राह्मणक्षत्रियवैश्यशूद्रस्त्रीजाताः, अनुलोमजा इति यावत्; द्विजधर्मिणो न केवलं स्वजातिजानामेव द्विजधर्मित्वं किन्त्वनन्तरासु जातानामपि साकल्येन द्विजधर्मित्वमस्तीत्यर्थः। तत्र ब्राह्मणाद्ब्राह्मण्याञ्जातस्य यो द्विजधर्मस्स एव तस्मात्क्षत्रियायाञ्जातस्यापि एवमुत्तरयोरपि योज्यं, वैश्याच्छूद्रायाञ्जातस्यानेन शूद्रेभ्यो वैशिष्टयमित्यवगन्तव्यम् ।।४०।।

(६) **रामचन्द्रः।** संकरे एता जातयः पितृमातृप्रदर्शिताः पितृमातृपूर्वकं कथिता **प्रच्छन्न वा** प्रकाशान्तस्वकर्मभिर्वेत्तव्याः ।। ४० ।।

(७) **मणिरामः।** पितृमातृप्रदर्शिताः इयं माता अयं पिता एवंप्रकारेण पितामातृकथनपूर्वकं दर्शिताः ।। ४० ।।

(८) **गोविन्दराजः। सङ्कर** इति। वर्णसङ्करविषये एता जातयो अस्य इयं जननी अयं जनकोऽयं एवंजातीय इति एवं पितृमातृकथनपूर्वकं प्रदर्शिताः। एताश्च गूढाः प्रकटा वा तज्जातिचोदितकर्माचरणदर्शनेन बोद्धव्याः ।। ४० ।।

(९) **भारुचिः।** कर्मणा शास्त्रोपदिष्टजातिरनुमातव्या, जातिप्रदर्शनाच्च स्वकर्मस्वेता नियोज्याः ।। ४० ।।

**सजातिजानन्तरजाः षट सता द्विजधर्मिणः ।।**

संकरजास्ते **शूद्राणां सधर्माणः** समानाचारास्तद्धर्मैरधिक्रियन्त इत्यर्थः। प्रतिलोमानां तु विशेषो वक्ष्यते।

अनन्तरग्रहणमनुलोमोपलक्षणार्थमेव। तेन व्यवहितोऽपि ब्राह्मणाद्वैश्यायां जातो गृह्यते। षट्संख्यातिरिक्तत्वान्न शूद्रायां पारशवः ॥ ४१ ॥

(२) **सर्वज्ञनारायणः।** अनुलोमजेषु विशेषमाह **स्वजातीति।** ब्राह्मणस्य ब्राह्मण्यां अनन्तरयोश्च क्षत्रियावैश्ययोरिति त्रयः क्षत्रियस्य, क्षत्रियावैश्ययोः द्वौ, वैश्यस्य वैश्यायामेक इति षट् द्विजानां सुताः द्विजधर्मिणः पितृजातीयसदृशाः। अत्र स्वजातिजग्रहणाद्वृत्त्यन्तरत्वेन योग्याः उपनयनादौ। अपरे त्वपध्वंसजाः संकरजाः शूद्रसधर्माणो न तथाविधसंस्काराद्यर्हाः ॥ ४१ ॥

(३) **कुल्लूकः।** द्विजातिसमानजातीयासु जातास्तथानुलोम्येनोत्पन्ना ब्राह्मणेन क्षत्रिया-वैश्ययोः क्षत्रियेण वैश्यायामेवं षट् सुपुत्रा द्विजधर्मिण उपनेयाः, **ताननन्तरनाम्नस्त्विति** (१०।१४) यदुक्तं तत्तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कस्यचिद्भ्रमः स्यात्, अत एषां द्विजातिसंस्कारार्थमिदं वचनम्। ये पुनरन्ये द्विजात्युत्पन्ना अपि सूतादयः प्रतिलोमजास्ते शूद्रधर्माणो नैषामुपनयनमस्ति ॥ ४१ ॥

(४) **राघवानन्दः।** तत्र विप्रादिवत् करणान्तानां त्रयाणां द्विजवदाशौचोपनयानाद्यति-दिशन् आयोगवक्षत्तृचण्डालमागधवैदेहसूतानां षण्णां शूद्रवदाशौचादिप्राप्तिमाह **सजातिजा इति। अपध्वंसजा इति।** पारिभाषिका आयोगवादयः ॥ ४१ ॥

(५) **नन्दनः।** सङ्कीर्णजातीनां परिज्ञानोपायं शूद्रधर्मिणश्चाह **स्वजातिजानन्तरजा इति।** ब्राह्मणक्षत्रियवैश्यशूद्राः स्वजातिजाः अनन्तरवर्णजाताः अपध्वंसजाः प्रतिलोमजातयः ॥ ४१ ॥

(६) **रामचन्द्रः।** स्वजातिजाः षट् सुताः द्विजधर्मिणः द्विजधर्मार्हाः उपनेयाः। शूद्राणां सधर्माणः सर्वे अपध्वंसजाः संकरजाः स्मृताः ॥ ४१ ॥

(७) **मणिरामः।** सजातिजाः द्विजातिसमानजातीयासु जाताः। अनंतरजाः आनु-लोम्येन जाताः। अन्ये सर्वे सूतादयः अपध्वंसजाः प्रतिलोमजाः ॥ ४१ ॥

(८) **गोविन्दराजः। स्वजातिजानन्तरजा** इति। द्विजातीनां समानजातीयासु भार्यासु जाताः तथा नान्योत्पन्ना ब्राह्मणक्षत्रियाभ्यां क्षत्रियावैश्ययोरित्येते षट् सुता द्विजधर्माणः उपनेतव्याः। तान् अनन्तरनाम्नस्तु इति अयं नामनिर्देशो व्यवहारार्थो न संस्कारार्थ इति कस्यचिद् भ्रान्तिः स्याद् इत्यत इदमेषां उपनयनार्थं वचनम्। ये पुनरन्ये सङ्करजाः सूतादयः ते सर्वे तुल्यरूपाः तेषां उपनयनं नास्ति द्विजात्युत्पन्नानामपि ॥ ४१ ॥

(९) **भारुचिः।** स्वजातिजास्त्रिभ्यो द्विजातिभ्यः त्रयो ब्राह्मणीक्षत्रियवैश्यासु जाताः यथा संस्कारार्हाः तथानन्तरजाः ब्राह्मणक्षत्रियाभ्यां वैश्ययोर्जाताः षट् सुता द्विजधर्मिणः। एवं च स्वजातिजातानामनन्तरजार्थग्रहणं न स्वार्थम्। ननु च ब्राह्मणक्षत्रियाभ्यामनन्तरवर्णयोः क्षत्रियवैश्ययोर्जातौ द्वावेव भवतः। येन ब्राह्मणजाता वैश्यामला (?) रजः। असावप्यनन्तरज एवं अनुलोमार्थत्वात् द्विजधर्मत्व (प्रवर्त) न्निवर्तयति। 'शूद्रायां तु सधर्माणस्सर्वेऽपध्वंसजाः स्मृताः' इति। ब्राह्मणादिजाता अपि सन्तः। एवं च नैभिः सह...षड्ग्रहणम्। किं तर्हि?

स्वजातिजैस्सहानन्तरजानां। तथा च गौतमः—'प्रतिलोमास्तु धर्महीनाः शूद्रायां चे'ति। ननु च 'पुत्रा येऽनन्तरजा........श्लोकार्थे। इति अयं पुनरुक्तः श्लोकः'। तत्र ह्युक्तानन्तर (नाम्नां हि) मातृदोषान् प्रचक्षत इति। अनन्तरनामत्वं चोभयथा प्रसज्यते। व्यवहारार्थं संज्ञया संस्कारार्थं च। यतः सन्देहनिवृत्त्यर्थमिदं त्रयाणां। द्विजातिधर्मत्वाभिधानम्। अथवा हेत्वर्थमिदं पूर्वश्लोकस्य कथं तानन्तन्तरना(म्ना) हि मातृदोषान् प्रचक्ष (त इ) त्यत्र कारणं वक्ति। यस्मात्—षट्सु द्विजधर्माणः इति। एवमपुनरुक्तत्वमस्य पूर्वश्लोकाद्विज्ञेयम्॥ ४१॥

**तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे॥**
**उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः॥४२॥**

(१) **मेधातिथिः।** त एतेऽनन्तरजास्तपःसामर्थ्येन **बीज**सामर्थ्येन **युगे युगे** जन्मनि जन्मनि **उत्कर्षमपकर्षं** च गच्छन्ति। तद्वक्ष्यामः 'शूद्रायां ब्राह्मणाज्जात' (१० । ६४) इत्यत्र। यदुक्तं 'स्वकर्मणां त्यागेनेति' तस्यैवायं प्रपञ्चः॥ ४२॥

(२) **सर्वज्ञनारायणः।** तपोबीजप्रभावेण तपसा जात्युत्कर्षार्थिकृतेन बीजस्य च द्विजजातीयसंबन्धिनः प्रभावेण ते योग्यतया व्यवहिता अपि द्विजधर्माणः युगे युगे उत्तरोत्तरप्रसूतिषु क्रमान्मनुष्येषु जन्मतो जात्युत्कर्षप्रथमप्रथमजातितः श्रेष्ठत्वमसत्कर्मकरणाच्चापकर्षंशूद्रतोऽप्यधमां जातिं यान्ति। युगपदं मातापितृयोगसाध्यतया तत्साध्यायां संततौ वर्तते। एतेन ब्राह्मणात्क्षत्रियायां जातो मूर्धावसिक्तो मूर्धावसिक्तां विवाह्य स्वाचारादप्युक्तायां जनयति सततउत्कृष्टः। एवमुत्तरोत्तरं ज्ञेयम्। एवं क्रमेण पञ्चमी प्रसूतिर्ब्राह्मणजातिरेव भवति। एकान्तरवर्णजानां तु सप्तमी प्रसूतिः। एवं क्षत्रियाद्वैश्यायां जातेऽपि। एतदुक्तं **याज्ञवल्क्येन** 'जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा।' एवमसत्कर्मणां सद्विधानवत्पूर्वजात्युत्कर्षोऽपि द्रष्टव्यः॥ ४२॥

(३) **कुल्लूकः।** सजातिजानन्तरजाः, तपःप्रभावेण, विश्वामित्रवत्, बीजप्रभावेण ऋष्यश्रृङ्गादिवत्, कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षं गच्छन्ति। अपकर्षं च वक्ष्यमाणहेतुना यान्ति॥ ४२॥

(४) **राघवानन्दः।** तपोबीजप्रभावैः सूतादीनामप्युत्कर्षो भवतीत्याह—तपो युगे जन्मनि। तपःप्रभावेण विश्वामित्रवत्। बीजप्रभावेण ऋष्यश्रृङ्गवत्। अपकर्षः कर्मणां त्यागादिना॥ ४२॥

(५) **नन्दनः।** एवं तावद्बीजक्षेत्रवशाज्जातीनामुत्कर्षापकर्षा वृत्ताविदानीं हेत्वन्तरवशादप्याह **तपोबीजप्रभावैश्चेति।** ते ब्राह्मणादयो द्विजधर्मिणश्च वर्णास्तप एव बीजं तपोबीजं, तपोबीजत्ववचनं जात्यन्तरोत्पादकत्वनिबन्धनं युगे युगे मिथुने मिथुने सन्ताने सन्ताने पुत्रपौत्रादिष्वपीत्यर्थः। युगशब्दस्य सन्तानवचनत्वमुत्तरत्र व्यक्तीभविष्यति। इह मनुष्येषु

मध्ये जन्मत उत्कर्षमपकर्षं च गच्छति, तस्मादुत्कर्षहेतुः सेव्योऽपकर्षहेतुस्त्याज्य इत्यभिप्रायः ॥ ४२ ॥

(६) **रामचन्द्रः।** युगे युगे जन्मनि जन्मनि तपोबीजप्रभावैरुत्कर्षं गच्छन्ति। जन्मतः जात्या इह मानुषेषु अपकर्षं नीचत्वं गच्छन्ति ॥ ४२ ॥

(७) **मणिरामः।** तपःप्रभावेण विश्वामित्रवत्। बीजप्रभावेण ऋष्यशृंगादिवत् युगे युगे कृतत्रेतादौ उत्कर्षं गच्छंति। अपकर्षं वक्ष्यमाणरीत्या ॥ ४२ ॥

(८) **गोविन्दराजः। तपोबीजप्रभावेण ते गच्छन्ति युगे युगे** इति। **ते स्वजातिजा** इति। अनन्तरजाः तपःप्रभावेण हेतुना जातितो गच्छन्ति ॥ ४२ ॥

(९) **भारुचिः।** अयं च श्लोको ब्राह्मणादिजातानां क्षत्रियाद्यासु पूर्वश्लोकविहितस्य संस्कारस्य स्तुत्यर्थो विज्ञेयः। तथा वक्ष्यति 'शूद्रायां ब्राह्मणाज्जात' इत्येवमादि। एवं च सत्येष वर्णविभाग उत्कर्षापकर्षसम्बन्धो मनुष्यविषय एव द्रष्टव्यः, न गवादिषु। अतश्च गवादीनां मातरि स्वसरि च जातस्यापरिहारः ॥ ४२ ॥

## शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ॥
## वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ ४३ ॥

(१) **मेधातिथिः। क्रियालोपो** यत्र संस्कार्यतया संबध्यते, यथोपनयनादिषु; यत्र वा कर्तृतया यथा नित्याग्निहोत्रसंध्योपासनादिषु। तासां **लोप** उभयासामप्यननुष्ठानम्। अतश्च न केवलमुपनयनसंस्काराभावेन जातिभ्रंशः, अपि तूपनीतानां विहितक्रियात्यागेनापि। तथा चाह **शनकैरिति**। पुत्रपौत्रादिसंततेः प्रभृति शूद्रत्वं, न तु जातस्यैव। उपनयनाभावे तु तस्यैव व्यपदेशान्तरं प्रवर्तते। यद्यपि सा जातिर्न निवर्तते तत्पुत्रपौत्राणां भृज्जकण्टकादिजात्यन्तरमेव व्यपदेशहेतुकमिति ब्राह्मणातिक्रमेण ब्राह्मणविधिविहितातिक्रमेणेत्यर्थः। अथवा शास्त्रार्थसंशये प्रायश्चित्ते वा परिषद्गमनाभावः ॥ ४३ ॥

(२) **सर्वज्ञनारायणः।** अत्र दृष्टान्तमाह **शनकैरिति**। शनकैः क्रमेण वृषलत्वं शूद्रत्वं गताः क्रियालोपात्। तत्र हेतुः—ब्राह्मणादर्शनम् ॥ ४३ ॥

(३) **कुल्लूकः।** इमा वक्ष्यमाणाः क्षत्रियजातय उपनयनादिक्रियालोपेन ब्राह्मणानां च याजनाध्यापनप्रायश्चित्ताद्यर्थदर्शनाभावेन शनैः शनैर्लोके शूद्रतां प्राप्ताः ॥ ४३ ॥

(४) **राघवानन्दः।** तत्रैव कैमुतिकन्यायमाह **शनै(नकै)रिति** द्वाभ्याम्। क्रियालोपेन उपनयनाद्यभावेन। ब्राह्मणादर्शनेन याजनाध्यापनप्रायश्चित्ताद्यर्थं तेषां दर्शनाभावेन ॥ ४३ ॥

(५) **नन्दनः।** तपोबीजप्रभाव उत्कर्षहेतुत्वेनोक्तः, कः पुनरपकर्षहेतुरत्रेत्यपेक्षायामाह **शनकैरिति।** शनकैः संताने संताने ब्राह्मणानामदर्शनात्क्रियालोपात् ब्राह्मणादर्शननिमित्तात्क्रियालोपात्। इमा उत्तरश्लोके वक्ष्यमाणाः ॥ ४३ ॥

(६) **रामचन्द्रः।** लोके क्रियालोपात् सत्क्रियालोपात् इमाः क्षत्रियजातयः शनकैः वृषलत्वं शूद्रतां ब्राह्मणादर्शनेन ब्राह्मत्वबोधितकर्माननुष्ठानेन ॥ ४३ ॥

(७) **मणिरामः ।** अपकर्षप्रकारमाह **शनकैरिति ।** इमा : वक्ष्यमाणाः । क्रिया उपनयनादि । वृषलत्वं शूद्रत्वं ब्राह्मणाऽदर्शनेन च । प्रायश्चित्तार्थं ब्राह्मणानां समीपे आगमनेन ।। ४३ ।।

(८) **गोविन्दराजः ।** तथा चाह **शनकैरिति ।** इमा वक्ष्यमाणाः क्षत्रियजातयः सत्य उपनयनादिक्रियालोपेन ब्राह्मणानां च यजनाध्यापनप्रायश्चित्ताद्यर्थं दर्शनाभावेन शनैः शनैः लोके शूद्रतां प्राप्ताः ।। ४३ ।।

(९) **भारुचिः ।** 'व्यभिचारेण वर्णानामावेद्यावेदनेन च । स्वकर्मणां च त्यागेन जायते वर्णसङ्करः ।।' इति (१०।२४) यदुक्तं तस्य प्रपञ्चोऽयं शूद्रवत्कर्मानधिकारेति या लो . . . चात्र हेतुः **ब्राह्मणादर्शनेन** चेति । तदभावात् प्रायश्चित्ताभावमाह—अथवोभयार्थं ब्राह्मणादर्शनं क्रियालोपहेतुः । प्रायश्चित्ताभावहेतुश्च अपकर्षहेतुप्रदर्शनं च परिहारार्थम् । यतस्ते प्रदर्श्यन्ते ।।४३।।

**पुण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः ।**
**पारदा पह्लवाश्चीनाः किराता दरदाः खशाः ।। ४४ ।।**

(१) **मेधातिथिः ।** पुंड्रकादयः शब्दाः परमार्थतो जनपदशब्दाः, इह तु 'क्षत्रियेषु मुख्यास्तत्संबन्धत्वाज्जनपदेषु वर्तन्त' इत्येतद्दर्शनमाश्रितम् । यथा लुग्विधौ 'तस्य निवासो', 'जनपदे लुगिति' न तु यथा 'लुग्योगात्प्रख्यानादिति' ।

नैतेषु देशेषु बाहुल्येन चातुर्वर्ण्यमस्तीत्येतदालंबनं वृषलत्ववचनम् । यदि वा पुंड्रादयः शब्दाः कथंचिद्देशसंबन्धेन विना दृश्यन्ते, तदैतज्जातीया वेदितव्याः । 'महाभारतादौ क्षत्रिया वर्ण्यन्ते तथाऽद्यत्वेऽप्येते क्षत्रिया एवेति' कस्यचित् भ्रान्तिः स्यादत एवमुक्त-'मेते वृषला' इति ।

ये चैते दिगन्तवासिनः किरातवेनदरदादयस्तेषामप्राप्तरूपं वेदेनानूद्यते 'न जनमियान्नांतमियादिति' (बृ० उप० १ । ३ । १०) ।। ४४ ।।

(२) **सर्वज्ञनारायणः ।** तानाह **पुण्ड्रका इति** ।। ४४ ।।

(३) **कुल्लूकः ।** पौण्ड्रादिदेशोद्भवाः संतः क्रियालोपादिना शूद्रत्वमापन्नाः ।। ४४ ।।

(४) **राघवानन्दः ।** पौण्ड्रकादय एकादश, पतितक्षत्रिया नरजातयः ।। ४४ ।।

(५) **नन्दनः ।** ता एव जातीरुदाहरति **पौण्ड्रका इति** ।। ४४ ।।

(६) **रामचन्द्रः ।** एते पौण्ड्रकादयः खशान्ता उक्ताः ।। ४४ ।।

(७) **मणिरामः ।** पुण्ड्रकादयो हि किरा(ताः) क्षत्रियास्सन्तः क्रियालोपाच्छूद्रीभूताः ।। ४४ ।।

(८) **गोविन्दराजः । पौण्ड्रका** इति । पौण्ड्रकादयः क्षत्रियाः सन्तः क्रियालोपादिना शूद्रत्वमापन्नाः ।। ४४ ।।

(९) **भारुचिः ।** ये शूद्रतां गतास्तानाह **पौण्ड्रका इति ।** पौड्रादिदेशोद्भवाः ।। ४४ ।।

**मुखबाहूरुपज्जानां या लोके जातयो बहिः ।।**
**म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ।।४५।।**

(१) **मेधातिथिः ।** असदविद्यमानार्थासाधुशब्दान्वया वाक् **म्लेच्छो**च्यते। यथा शबराणां किरातानामन्येषां वान्त्यानाम्।

**आर्यवाच** आर्यावर्तनिवासिनः। ते चातुर्वर्ण्यादन्यजातीयत्वेन प्रसिद्धास्तदा **दस्यव** उच्यन्ते। एतदुक्तं भवति– न देशनिवासेन म्लेच्छवाक् संकरत्वे कारणमपि तु यथोक्त-बर्बरादिशब्दप्रसिद्धिर्मुखादिजानां बहिष्क्रियते ब्राह्मणादिशब्दैरप्रसिद्धैरित्यर्थः। ते सर्वे दस्यव उच्यन्ते ।।४५।।

(२) **सर्वज्ञनारायणः ।** उक्तमर्थमाक्षेप्याह **मुखेति ।** पञ्चम्यर्थे षष्ठी। चतुर्भ्यो वर्णेभ्यो येऽन्ये ते यदि म्लेच्छदेशस्थतया म्लेच्छवाचः स्युर्यदि वार्यदेशवासादार्यवाचस्तथापि दस्यवोऽपसदा एव ।।४५।।

(३) **कुल्लूकः ।** ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना या जातयो बाह्या जाता म्लेच्छभाषायुक्ता आर्यभाषोपेता वा ते दस्यवः सर्वे स्मृताः ।।४५।।

(४) **राघवानन्दः ।** बाह्यानुलोमप्रतिलोमजानां त्रिशतां कर्माणि वक्ष्यंस्तान-नुवदति **मुखेति** द्वाभ्याम्। मुखबाहूरुपज्जानां ब्रह्मक्षत्रियविट्शूद्राणां तेभ्यश्चतुर्भ्यो बहिर्जा-तयस्ताः म्लेच्छवाचः म्लेच्छवत् भाषणानि येषां ते ।।४५।।

(५) **नन्दनः ।** अनुलोमजातीनां प्रतिलोमजानां च साधारणीं संज्ञामाह **मुखबाहू-रुपज्जानामिति ।** आर्यवाचः संस्कृतवाचः ।।४५।।

(६) **रामचन्द्रः ।** मुखबाहूरुपज्जानां चतुर्वर्णानां जातयः याः लोके बहिर्द्विजक्षत्र-वैश्यशूद्रात् अन्ये सर्वे ते दस्यवः स्मृताः ।।४५।।

(७) **मणिरामः ।** मुखबाहूरुपज्जानां ब्राह्मणादिचतुर्णां बहिः बाह्याः। म्लेच्छवाचः म्लेच्छभाषायुक्ताः। आर्यवाचः आर्यभाषायुक्ता वा। ते सर्वे दस्यवः स्मृताः ।।४५।।

(८) **गोविन्दराजः । मुखबाहूरुपज्जानामिति।** ब्राह्मणक्षत्रियवैश्यशूद्राणां या बाह्याः क्रियालोपादिना जातयो म्लेच्छभाषोपेता आर्यभाषायुक्ता वा बर्बरकालाद्यास् ते सर्वे दस्युशब्दवाच्याः स्मृताः ।।४५।।

(९) **भारुचिः ।** न केवलं क्षत्रियाणां, किन्तर्हि? सर्ववर्णानामेव क्रियालोपाद्बाह्य-त्वम्। **ब्राह्मणादर्शनेन चेति ।** यतश्चैतदेवम् अतस्त्रयोऽप्यपभ्रंशहेतवः यत्नतः परिहरणीयाः। ते च बर्बरा मण्डिका इत्येवमादयः। 'सूते दस्युरयोगव' इत्यत्राप्यनेन वेदितव्यः ।। ४५ ।।

**ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ।।**
**ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः ।।४६।।**

(१) **मेधातिथिः ।** **अपसदा** अनुलोमाः प्रतिलोमाः। **अपध्वंसजा** गोबलीवर्दवद्भेदः।

**द्विजाना**मुपयोगिभिः प्रेष्य**कर्मभिर्वर्तयेयुः** आत्मानम्। **निन्दितैः** प्रेष्यकार्यत्वान्निन्दितानि। तथा च वक्ष्यते ॥४६॥

(२) **सर्वज्ञनारायणः।** तथा च वक्ष्यते द्विजानामपसदा द्विजसधर्माणः षट् ये चापध्वंसजाः शूद्रसधर्माणः। निन्दितैर्द्विजानां कर्मभिः द्विजानां भृत्यतया तत्तदुशनःप्रभृतिस्मृत्युक्त' कर्म कुर्वन्ति ॥४६॥

(३) **कुल्लूकः।** ये द्विजानामानुलोम्येनोत्पन्नाः 'षडेतेऽपसदाः स्मृता' (१०।१०) इति तेषामपि पितृतो जघन्यत्वेनापसदशब्देन प्रागभिधानादपध्वंसजास्ते द्विजात्युपकारकैरेव निन्दितैर्वक्ष्यमाणैः कर्मभिर्जीवेयुः ॥४६॥

(४) **राघवानन्दः।** अपसदा मूर्धाभिषिक्तादयः षट्। अपध्वंसजाः सूतादयः। सैरन्ध्रादीनां विशेषणेनैव कर्मलाभः। प्रायेण निन्दितैः द्विजातिषु प्रतिषिद्धैः द्विजानां द्विजात्यपेक्षितैः कर्मभिः ॥४६॥

(५) **नन्दनः।** अथ दस्यूनां साधारणीं वृत्तिमाह **ये द्विजानामपसदा इति**। अपसदाः चौर्यजाता अनुलोमजाः अभिषिक्तादयः। अपध्वंसजाः प्रतिलोमजाः सूतादयः अनुलोमजेष्वप्यनन्तराः पुत्रव्यतिरिक्ता अंबष्ठादयश्च सजातीयेष्वपि कुण्डगोलकादयश्च द्विजानामेव कर्मभिर्द्विजार्थैरेव कर्मभिः चिकित्साऽश्वसारथ्यादिभिर्वर्तयेयुर्जीवेरन् ॥४६॥

(६) **रामचन्द्रः।** ये द्विजानां ब्राह्मणक्षत्रियविशां सकाशादपसदाः सूताम्बष्ठवैदोपध्वंसजाः ते निन्दितैः कर्मभिः सेवादिभिः द्विजानां कर्मभिः उपयोगिभिर्वर्तेरन् ॥४६॥

(७) **मणिरामः।** द्विजातिस्त्रीषु शूद्रादिभिः प्रतिलोमजाता आयोगवादयश्चण्डालवर्जं ये चापध्वंसजाः शूद्रायां द्विजातिभिरनुलोमा अपि सन्तः। तथा चोक्तम्—'शूद्रायां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः।' ते निन्दितैर्वर्तेयुरात्मानम्। वृत्तिनियमार्थोऽयमुपदेशस्तेषाम् ॥४६॥

(८) **गोविन्दराजः। य** इति। ये द्विजानां प्रातिलाम्येनोत्पन्ना ये च द्विजातिभिरपि शूद्रायां आनुलोम्येन जातास्ते द्विजात्युपकारकैरेव अनिन्दितैः कर्मभिः जीवेयुः ॥४६॥

(९) **भारुचिः।** ये द्विजानां आनुलोम्येन उत्पन्नाः षट् ते अपसदाः स्मृताः। ये च द्विजातिकान्यासु प्रतिलोमे षट् सूतादयः उत्पन्नाः ते अपध्वंसजाः स्मृताः। ते, द्वादश अपि द्विजानां निंदितैः वक्ष्यमाणैः कर्मभिरेव वर्तयेयुः जीवेयुः ॥४६॥

**सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सनम्।।**
**वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः ।। ४७ ।।**

(१) **मेधातिथिः। स्त्रीकार्य**मन्तःपुररक्षाकारित्वम्। **वणिक्पथः** स्थलपथवारिपथादिः प्रसिद्धः ॥४७॥

(२) **सर्वज्ञनारायणः।** तदेव कियदप्याह **सूतानामिति।** स्त्रीकार्यमन्तःपुररक्षा। वणिक्पथो वाणिज्यम् ॥४७॥

(३) **कुल्लूकः**। सूतानामश्वदमनयोजनादिरथसारथ्यं जीवनार्थं अम्बष्ठानां रोगशान्त्यादिचिकित्सा, वैदेहकानामन्तःपुररक्षणं, मागधानां स्थलपथवणिज्या ।।४७।।

(४) **राघवानन्दः**। तानि कर्माण्याह **सूतानामिति** दशभिः। चिकित्सितं भिषक्क्रिया स्त्रीकार्यमन्तःपुरादिरक्षा। वणिक्पथः नौयायित्वम् ।।४७।।

(५) **नन्दनः**। तेषां साधारणीं च वृत्तिमाह **सूतानामश्वसारथ्यमिति**। स्त्रीकार्यमन्तःपुरादिषु स्त्रीरक्षा। वणिक्पथो वाणिज्यम् ।।४७।।

(६) **रामचन्द्रः**। अम्बष्ठानां शूद्रादम्बष्ठा जाताः चिकित्सकं शास्त्रं वैद्यकं। स्त्रीकार्यं अन्तःपुररक्षणम् ।। ४७ ।।

(७) **मणिरामः**। तानि कर्माण्याह **सूतानामिति**। स्त्रीकार्यं अंतःपुररक्षादि। वणिक्पथः वाणिज्यं ।।४७।।

(८) **गोविन्दराजः**। **सूतानामिति। वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः।** सूतानाम् अश्वदमनयोजनादिकम्, अम्बष्ठानां कायशल्यादिचिकित्सा, वैदेहकानामन्तःपुररक्षादि, मागधानां स्थलपथवारिपथवाणिज्या। अम्बष्ठश्चात्र अवद्यायां शूद्रजातौ बौधायनदर्शनाद् विज्ञेयो न तु ब्राह्मणेन वैश्याज्जातः एतच्छास्त्रोक्ता ये द्विजानामपसदा ये यापध्वंसजाः सुताः ते निन्दितैः वर्तयेयुरिति प्रस्तुतत्वात् ।।४७।।

(९) **भारुचिः**। तथा च दर्शयति—तत्राम्बष्ठजातः प्रतिलोमो गृह्यते। सामर्थ्यात्। अम्बष्ठयां वा प्रतिलोमेन। काञ्चुकीयत्वे मागधानां वणिक्पथः हंसपथवारिपथाख्याः।

**मत्स्यघातो निषादानां तष्टिस्त्वायोगवस्य च ।।**
**मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ।। ४८ ।।**

(१) **मेधातिथिः**। त्वष्टिर्दारुतक्षणं तक्षकर्म ।।४८।।

(२) **सर्वज्ञनारायणः**। निषादा निषादजानां कैवर्तानां तेन कैवर्तोऽपि निषादपदेनोच्यत इति दर्शितम्। तथा च 'जाता निषादा रुद्राया' मित्यत्र निषादपदेन स एवोच्यत इति। त्वष्टिस्तक्षणं काष्ठादेः। झल्लमल्लपदाभ्यां प्रागुक्तौ ।। ४८ ।।

(३) **कुल्लूकः**। निषादानामुक्तानां मत्स्यवधः आयोगवस्य काष्ठतक्षणं, मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुमारणं चुञ्चुर्मद्गुश्च वैदेहकबन्दिस्त्रियोर्ब्राह्मणेन जातौ बौधायनेनोक्तौ बोद्धव्यौ। बन्दिस्त्री च क्षत्रियेण शूद्रायां जाता सोग्रैव ग्राह्या ।।४८।।

(४) **राघवानन्दः**। त्वष्टिः काष्ठतक्षणम्। चुञ्चुमद्गू वैदेहीमागध्यौ ब्राह्मणजौ बोधायनोक्तौ ।।४८।।

(५) **नन्दनः**। तष्टिस्तक्षणं चुञ्चुमद्गू जातिविशेषौ शास्त्रान्तरप्रसिद्धिमाश्रित्योक्तौ अथवा तद्विषयश्लोको नूनं लेखकापराधाद् भ्रष्टः ।।४८।।

(६) **रामचन्द्रः**। आयोगवस्य त्वष्टिस्तक्षणम्। मेदान्ध्रचुंचुमद्गूनां आरण्यपशुजीवनम् ।।४८।।

(७) **मणिरामः।** त्वष्टिः काष्ठतक्षणं, वैदेहकस्त्रियां ब्राह्मणाज्जातः चुञ्चुः। बन्दिस्त्रियां विप्राज्जातो मद्‌गुः। निषादप्रभवा बाह्याः निषादशब्देन गृह्यन्ते, सामर्थ्यात्। तथा च कृतव्याख्यानमेतत् पुरस्तादिति ।।४८।।

(८) **गोविन्दराजः।** **मत्स्यघात** इति। **मेदान्ध्रचुंचुमद्‌गूनामारण्यपशुहिंसनम्।** आयोगवस्य तक्षणं मेदान्ध्रचुंचुमद्‌गूनामारण्यपशुमारणं। मागधक्षत्तारौ चुंचुमद्‌गू। यथाह **यमः** 'क्षत्रियांया तु वैश्येन चुंचुको नाम जायते। शूद्रेण जायते मद्‌गुः क्षत्रिया यत्र मुह्यति'।

(९) **भारुचिः।** संज्ञान्तरेणानयोर्निर्देशो देशभेदेनैषां सर्वेषामनेकनामता च भवतीति ज्ञापनार्थम्। तथा च स्मृत्यन्तरे 'तेषां नामान्तराण्यपि दृश्यन्ते' ।।४८।।

**क्षत्त्रुग्रपुल्कसानां तु बिलौकोवधबन्धनम् ।।**
**धिग्वणानां चर्मकार्यं वेणानां भाण्डवादनम् ।। ४९ ।।**

(१) **मेधातिथिः। बिलौकसो**ऽहिनकुलगर्गरादयः। तेषां **वधबन्धनं** क्षत्त्रादीनां जीविका। **चर्मकार्यं** कवचादिसीवनमुपानद्ग्रथनमित्येवमादि। **भाण्डवादनं** मुरजार्ध-मुरजादीनाम् ।।४९।।

(२) **सर्वज्ञनारायणः।** बिलौकसः सर्पाद्याः। भाण्डवादनं वाद्यभाण्डवादनम् ।।४९।।

(३) **कुल्लूकः।** क्षत्त्रादीनां बिलनिवासिगोधादिवधबन्धनं, धिग्वणानां चर्मकरणं तद्वि-क्रयश्च 'चर्मकरणं तद्विक्रयश्च जीवनं धिग्वणानां'**मित्यौशन**सदर्शनात्, अत एव कारावरेभ्य एषां वृत्तिच्छेदः वेणानां कांस्यमुरजादिवाद्यभाण्डवादनम् ।।४९।।

(४) **राघवानन्दः।** बिलौकोवधबन्धनं बिलौको गोधाकूर्मादि। चर्मकार्यं चर्मशोधनं पादुकादिनिर्माणं कारावरस्येति विशेषः। भाण्डं वादनभाण्डं कांस्यमुरजादि ।।४९।।

(५) **नन्दनः।** बिलौकोवधबन्धनं बिलौकसः श्वाविमूषिकगोऽश्वादयः चर्मकार्यं चर्म-कारकृत्यं शस्त्रमार्जनम् ।।४९।।

(६) **रामचन्द्रः।** क्षत्ता उग्रः पुल्कसः बिलौकसर्पादीनां वधजीवनं सर्पान् बद्ध्वा जीवन्ति ।।४९।।

(७) **मणिरामः।** बिलौकोवधबंधनं बिलनिवासिनां गोधादीनां वधबंधनं भांडवादनं कांस्यमुरजादिभांडवादनं ।।४९।।

(८) **गोविन्दराजः। क्षत्त्रुग्रपुल्कसानामिति।** क्षत्त्रादीनां श्वाविड्गोधादिवधबन्धन-मुग्रश्चात्र निकृष्टकर्माभिधानादुग्रजातिः प्रतिलोमः कश्चिद्वेदितव्यो नर्तकोऽनुलोमस्तस्य हि द्विजातिशुश्रूषाधानाध्यक्षता इत्याद्यौ**शनसो**क्ता वृत्तिर्दर्शिता। धिग्वणानां चर्मकरणतद्विक्रयौ, 'चर्मकरणं तद्विक्रयजीवनं धिग्वणानां चे'ति औशनसदर्शनात्। अतः कारावरेभ्यः एषां वृत्तिभेदौ वेणानां च वंशमुरजादिवाद्यभाण्डवादनम् ।।४९।।

**चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ॥**
**वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥ ५० ॥**

(१) **मेधातिथिः**। बहिर्ग्रामनिवासिनः पर्वतलक्षणप्रदेशे निवसेयुः। **विज्ञाता** जातिचिह्नं विदुषाम्। यद्यस्य कर्म विहितं स तेनैव जीवेत्। उत्कृष्टं कर्मसंकरं कर्तुं न लभते ॥५०॥

(२) **सर्वज्ञनारायणः**। एते सूतादयः विज्ञाताश्चिन्हिताः ॥५०॥

(३) **कुल्लूकः**। ग्रामादिसमीपे ख्यातवृक्षश्चैत्यद्रुमस्तन्मूले श्मशानपर्वतवनसमीपेषु चामी प्रकाशकाः स्वकर्मभिर्जीवन्तो वसेयुः ॥५०॥

(४) **राघवानन्दः**। किंच **चैत्येति**। स्वकर्मभिर्विज्ञाताश्चैत्यवृक्षादिषु वसेयुरित्यन्वयः ॥५०॥

(५) **नन्दनः**। विज्ञातास्ते ज्ञातयः वर्तयन्तः जीवन्तः ॥५०॥

(६) **रामचन्द्रः**। स्वकर्मभिर्वर्तयन्तो विज्ञाता एते पौण्ड्रकादयः यस्य ॥५०॥

(७) **मणिरामः**। उपवनेषु ग्रामादिसमीपे चैत्यद्रुमः ख्यातवृक्षः ॥ ५० ॥

(८) **गोविन्दराजः**। **चैत्यद्रुमश्मशानेषु** इति। ग्रामादिसमीपे ख्यातवृक्षश्चैत्यस्तन्मूलश्मशानपर्वतवनसमीपेषु एते प्रकाशाः सन्तः स्वकर्मभिर्जीवन्तो वसेयुः ॥ ५० ॥

(९) **भारुचिः**। ग्रामादिसमंपेषु अमी पूर्वोक्ताः। विज्ञाताः प्रकाशाः स्वकर्मभिर्जीवन्तः।

**चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः ॥**
**अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् ॥ ५१ ॥**

(१) **मेधातिथिः**। **प्रतिश्रयो** निवासस्तेषां **ग्रामान्निष्क्रान्तः** स्यात्। **अपपात्राश्चिरवस**नीयास्तैर्येषु पात्रेषु भुक्तं तानि न संस्कार्याणि, त्यक्तव्यानि। सौवर्णराजताभ्यामन्यानि। तयोः शुद्धिविशेषा उक्ताः। अथवाऽ**वपात्राः**। तदीयेषु च सक्तेषु पात्रेषु सक्तुभक्तादि न दातव्यम्। भूमिष्ठे पात्रेऽन्यहस्तस्थे वा दत्वा तत्पात्रं भूमौ स्थितं ते गृह्णीयुः। भिन्नं वा पात्र**मवपात्रं** यथा वक्ष्यति "भिन्नभाण्डे च भोजनम्" इत्यादि। **धनमेषां श्वगर्दभम्**। गवाश्वादि सुवर्णरजतादि न धनत्वेन गृह्णीयुः ॥ ५१ ॥

(२) **सर्वज्ञनारायणः**। चाण्डालश्वपचानां तु ग्रामभमलाद्याकर्षकर्तृकत्वाद्ग्रामाद्बहिरेवावस्थानम्। अवपात्राः पात्रबहिर्भूताः तैः स्पृष्टं पात्रादि न स्पृश्यमित्यर्थः ॥ ५१ ॥

(३) **कुल्लूकः**। प्रतिश्रयो निवासः चण्डालश्वपाकानान्तु ग्रामाद्बहिर्निवासः स्यात्। पात्ररहिताः कर्तव्या यत्र लोहादिपात्रे तर्भुक्तं तत्संस्कृत्यापि न व्यवहर्तव्यं, धनं चैषां कुक्कुरखरं न वृषभादि, वासांसि च शववस्त्राणि, भिन्नशरावादिषु च भोजनं लौहवलयादिश्चालङ्करणं सर्वदा च भ्रमणशीलत्वम् ॥ ५१–५२ ॥

(४) **राघवानन्दः**। उक्तः श्वपाकः श्वपचः तेषां प्रतिश्रयो निवासः। अवपात्राः तैर्भुक्तानि पात्राणि संस्कृतान्यपि न व्यवहरणीयानि ॥ ५१ ॥

(५) **नन्दनः**। बहिर्ग्रामान्निर्गतः अपपात्रा अपगतकांस्यादिपानभोजनपात्रा मृण्मयपात्रा इत्यर्थः ॥ ५१ ॥

(६) **रामचन्द्रः**। अपपात्रा अस्पृश्यपात्राः धातुमयपात्ररहिताः कर्तव्याः। एषां चाण्डालादीनां धनं श्वगर्दभम् ॥ ५१ ॥

(७) **मणिरामः**। प्रतिश्रयः निवासः। अपपात्राः पात्ररहिताः ॥ ५१ ॥

(८) **गोविन्दराजः**। **चण्डालश्वपचानामिति**। **वासांसीति**। चण्डालश्वपाकानां ग्रामाद् बहिर्निवासः स्यात्। पात्रबहिष्कृताश्च कर्तव्याः यतः तदुक्तं, लोहादिपात्रं संस्कारेणापि न शुध्यति। धनं चैषां श्वखरं नान्यत्, वासांसि च शववस्त्राणि। खण्डशरावादिषु च भोजनम्। आयसं च अलंकरणम्। सर्वदा नैकत्रावस्थानम् ॥ ५१–५२ ॥

**वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम् ॥**
**कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥**

(१) **मेधातिथिः**। सर्वकालं **परिव्रज्या**, नैकत्र स्थाने वसेयुः ॥ ५२ ॥

(२) **सर्वज्ञनारायणः**। कार्ष्णायसं लौहम्। परिव्रज्या सर्वतो भ्रमणमेकत्रानवस्थानम् ॥ ५२ ॥

(४) **राघवानन्दः**। अत एवाह **भिन्नभाण्डेति**। पृथक्पात्रे भोजनं देयम्। कार्ष्णायसमलंकारः कृष्णायो लोहं तद्विकारः, प्रव्रज्या भ्रमणं न तेषां स्थिरनिकेतनम्। नित्यपदेन संन्यासी व्यावर्तितः 'दयार्थं सर्वभूतानां वर्षास्वेकत्र संवसे'दिति संन्यासिनः स्थितिस्मरणात् ॥ ५२ ॥

(५) **नन्दनः**। परिव्रज्या दूरोपसर्पणम् ॥ ५२ ॥

(६) **रामचन्द्रः**। कार्ष्णायसं लोहमयं, परिव्रज्या नित्यभ्रमणं, परिधानार्थं मृतानां चेलानि वासांसि ॥ ५२ ॥

(७) **मणिरामः**। कार्ष्णायसं लौहं। परिव्रज्या च नित्यशः सर्वदाभ्रमणशीलत्वं ॥ ५२ ॥

**न तैः समयमन्विच्छेत्पुरुषो धर्ममाचरन् ॥**
**व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥**

(१) **मेधातिथिः**। **समयः** 'संकेत' 'एककार्यता 'संगति'रित्यनर्थान्तरम्। एकत्र स्थानासनविहारास्तैः सह न कर्तव्या इत्यर्थः। **विवाहो** दारग्रहणादिः। **सोऽप्येवमेव** ॥ ५३ ॥

(२) **सर्वज्ञनारायणः**। समयं व्यवहारम्। व्यवहारः संभाषणे भाजनादिः ॥ ५३ ॥

(३) **कुल्लूकः**। धर्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादिव्यवहारं न कुर्यात्, तेषां च ऋणदानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सहान्योन्यं स्यात् ॥ ५३ ॥

(४) **राघवानन्दः**। यो हि धर्ममाचरन् स तैः समयं दर्शनालापादि नान्विच्छेदित्यन्वयः। व्यवहारः ऋणादिः ॥ ५३ ॥

(५) **नन्दनः**। समयं संगतं धर्ममाचरन्धार्मिकमिति यावत्, मिथोऽन्योन्यव्यवहारः क्रयविक्रयौ ॥ ५३ ॥

(६) **रामचन्द्रः**। समयं व्यवहारं तैः सह नियच्छेत् ॥ ५३ ॥

(७) **मणिरामः**। धर्मं आचरन् तैः सह समयं न अन्विच्छेत्। धर्मानुष्ठानसमये चंडालश्वपाठार्कसिंहदर्शनादिव्यवहारं न कुर्यात्। व्यवहारः ऋणादिरूपः ॥ ५३ ॥

(८) **गोविन्दराजः**। **न तैरिति**। धार्मिकः पुरुषः चण्डालश्वपचैः सह लोकयात्रादि-व्यवहारान् न कुर्यात्। तेषां च दानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सह परस्परं स्यात् ॥ ५३ ॥

**अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ॥**
**रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥५४॥**

(१) **मेधातिथिः**। तत्साक्षादेषां न दातव्यम्। प्रेष्यैः कैश्चित्पूर्वोक्तेन प्रकारेण दापयितव्यः। रात्रौ स्पर्शाशङ्कयाऽन्तर्ग्रामनगरचर्याप्रतिषेधः ॥ ५४ ॥

(२) **सर्वज्ञनारायणः**। अन्नं पक्वं पराधीनं परपाकसिद्धं न स्वयं गृहे निवसन्तः पचेयुरित्यर्थः। भिन्नभाजने भग्नशरावादौ ॥ ५४ ॥

(३) **कुल्लूकः**। अन्नमेषां परायत्तं कार्यं, साक्षादेभ्यो न देयं; किन्तु प्रेष्यैर्भिन्नपात्रे दातव्यम्; ते च रात्रौ ग्रामनगरयोर्न पर्यटेयुः ॥ ५४ ॥

(४) **राघवानन्दः**। पराधीनं परंपरया देयं, तत्रापि भिन्नभाजने भग्ने। रात्रौ न चरेयुः दस्युत्वात्तेषामिति भावः ॥ ५४॥

(५) **नन्दनः**। भिन्नभाण्ड इत्येव सिद्धे भिन्नभाजन इति पुनर्वचनमादराति-शयार्थम् ॥५४॥

(६) **रामचन्द्रः**। अन्नं एषां पराधीनं परपाकसिद्धं स्वसहायशूद्रद्वारा दातव्यं वा भिन्नभाजने भिन्नशरावादौ ॥ ५४ ॥

(८) **गोविन्दराजः**। **अन्नमिति**। अन्नं चैषां परायत्तं न तु स्वतः साधितम्। तच्च भिन्नपात्रे एषां दातव्यम्। ते च रात्रौ ग्रामनगरयोर्न पर्यटेयुः ॥ ५४ ॥

(९) **भारुचिः**। साक्षान्न दातव्यं किंतु प्रेष्यैः भिन्नपात्रे दातव्यमित्यर्थः ॥ ५४ ॥

**दिवा चरेयुः कार्यार्थं चिह्निता राजशासनैः ॥**
**अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ॥ ५५ ॥**

(१) **मेधातिथिः**। **दिवा** विचरन्ति **कार्यार्थं** क्रयविक्रयस्वकार्यसिद्ध्यर्थम्। राजकार्याय

वा चरेयुर्नगरोत्सवप्रेक्षादिनिमित्तम् । तत्रापि च **चिह्निता राजशासनै**रुपलक्षिता राजादिष्टैर्वस्त्रादिचिन्हैः, वध्यवधशासनैर्वा परशुकुठारादिभिः स्कन्धारोपितैः ।। ५५ ।।

(२) **सर्वज्ञनारायणः** । राजशासनैः राज्ञा नियमितैश्चिन्हैः लोहाभरणवत्पिच्छादिभिः । निर्हरेयुः बहिर्नयेयुः ।। ५५ ।।

(३) **कुल्लूकः** । दिवा ग्रामादौ क्रयविक्रयादिकार्यार्थं राजाज्ञया चिन्हाङ्किताः सन्तः पर्यटेयुः, अनाथं च शवं ग्रामान्निर्हरेयुरिति शास्त्रमर्यादा ।। ५५ ।।

(४) **राघवानन्दः** । दिवसे चेच्चिन्हिताः ललाटादिष्वङ्किताः । निर्हरेयुर्ग्रामात् ।।५५।। राजशासनैः राजाज्ञाभिः चिन्हिताः लोका न स्पृशेयुरेतदर्थं चिन्हाङ्किताः ।। ५५ ।।

(८) **गोविन्दराजः** । **दिवेति** । दिवा ग्रामादौ राजादिष्टक्षुरादिचिन्हाङ्किताः सन्तः सप्रयोजनं पर्यटेयुः । अनाथं शवं ग्रामान्निर्हरेयुरिति साधुमर्यादा ।। ५५ ।।

**वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।।**
**वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ।। ५६ ।।**

(२) **सर्वज्ञनारायणः** । यथाशास्त्रं दण्डप्रकरणोक्तक्रमेण ।। ५६ ।।

(३) **कुल्लूकः** । वध्यांश्च शास्त्रानतिक्रमेण शूलारोपणादिना सर्वदा राजाज्ञया हन्युः तद्वस्त्रशय्यालङ्कारांश्च गृह्णीयुः ।। ५६ ।।

(४) **राघवानन्दः** । वध्यान् वधार्हान् । यथाशास्त्रं शूलार्पणादिना ।। ५६ ।।

(५) **नन्दनः** । नृपाज्ञया यथाशास्त्रं यथाशासनं यथाज्ञप्तं हन्युः शय्याश्चाभरणानि च वध्यानामिति विपरिणामः ।। ५६ ।।

(७) **मणिरामः** । यथाशास्त्रं शूलारोपणादिना ।। ५६ ।।

(८) **गोविन्दराजः** । **वध्यानिति** । राजाज्ञया च शास्त्रानतिक्रमेण, शुद्धवधशूलारोपणादिना सर्वदा वधार्हान् हन्युः तद्वस्त्रशय्यालंकरणानि च गृह्णीयुः ।। ५६ ।।

(९) **भारुचिः** । वृत्तिनिवासप्रकरणं वर्णापसदानामेवैतत् । आगमाभावे चानतवेतं(?) प्रतिलोमं निन्दितकर्माभ्याससामर्थ्यात् अविज्ञातमागत... ।।५६।।

**वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।।**
**आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ।। ५७ ।।**

(१) **मेधातिथिः** । **वर्णादपेतं** चातुर्वर्ण्याद्भ्रष्टम् । **अविज्ञातं** सत्यां शङ्कायां जारजातम् । वक्ष्यमाणैः **कर्मभिः** स्वभावातिशयैश्च निश्चिनुयात् । हीनकर्मरतिः क्रूरकर्मा च सत्यां शङ्कायां **कलुषयोनिजो** जारजातो वेदितव्यः ।। ५७ ।।

(२) **सर्वज्ञनारायणः**। वर्णापेतं वर्णभ्रष्टं वर्णबाह्यम् । अविज्ञातं तथा च निश्चितम् । तथा कलुषयोनिजमननुरूपविवाहजातम् । अनार्यं वस्तुतः । कर्मभिर्वक्ष्यमाणैः स्वैः संकरजानां साधारणैः ।। ५७ ।।

(३) **कुल्लूकः**। वर्णत्वादपेतं मनुष्यं सङ्करजातं लोकतस्तथात्वेनाविज्ञातमत एवार्यसदृशं वस्तुतः पुनरनार्यं निन्दितयोन्यनुरूपाभिश्चेष्टाभिर्वक्ष्यमाणाभिर्निश्चिनुयात् ॥ ५७ ॥

(४) **राघवानन्दः**। देशान्तरादौ प्रच्छन्नाः कथं ज्ञायेरन्, तत्राह **वर्णेति** षड्भिः। वर्णापेतं वर्णाच्चातुर्वर्ण्यादपेतं संकरतां गतम् विभावयेन्निश्चिनुयात् कृष्णवर्णादियुतं वा। आर्यरूपं दैवात्सुवर्णशोभनं वस्त्रादिधारिणं कर्मभिरपेयपानचौर्याद्यैः ॥ ५७ ॥

(५) **नन्दनः**। अन्यगूढोत्पन्नानां परिज्ञानोपायमाह **वर्णापेतमिति**। वर्णापेतं चातुर्वर्ण्याद्बहिष्ठं कलुषयोनिजं संकीर्णयोनिजं विभावयेदनुमिमीत ॥ ५७ ॥

(६) **रामचन्द्रः**। वर्णापेतं वर्णभ्रष्टम् ॥ ५७ ॥

(७) **मणिरामः**। वर्णापेतं वर्णरहितं कलुषयोनिजं संकरजातं। अविज्ञातं लोके संकरजत्वेन ज्ञातं। अत एव आर्यरूपमिव वस्तुतः अनार्यं। स्वैः कर्मभिः निंदितैः वक्ष्यमाणैः भावयेत्। अयं सम्यक् दृश्यते परंतु निंदितकार्यं करोत्यतोऽयं संकरजात इति निश्चयं कुर्यात् ॥ ५७ ॥

(८) **गोविन्दराजः**। **वर्णापेतमिति**। वर्णत्वाद् भ्रष्टं मनुष्यं सङ्करजातं लोकतः तथाविधेन अज्ञातम् अत एव चार्यसदृशं वस्तुतः पुनरनार्यं कलुषयोनिजं अनुरूपाभिः चेष्टाभिः निश्चिनुयाद्, अतश्च निश्चित्य परिहरेत् ॥ ५७ ॥

(९) **भारुचिः**। एवं च लोके कार्याणां कारणानुविधानं दृष्टम्। यतश्चैतदेवमतः। वर्णेभ्यो ब्राह्मणादिभ्यो... नार्यकर्मभिः स्वैः कलुषयोन्यनुरूपैरित्यर्थः ॥ ५७ ॥

**अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ॥**
**पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥**

(१) **मेधातिथिः**। **अनार्यो** द्वेषमत्सरप्रधानः। **निष्ठुरः** स्वार्थपरः। **क्रूरो** लोभहिंसापरः। **निष्क्रियात्मा** विहितक्रियावर्जितः। एतैः स्वभावैः कलुषयोनिता व्यज्यते ॥ ५८ ॥

(२) **सर्वज्ञनारायणः**। अनार्यता अनृजुता। निष्ठुरता अक्रियया वैमुख्यम्। कलुषयोनिजं वर्णापेतं च ॥ ५८ ॥

(३) **कुल्लूकः**। निष्ठुरत्वपरुषभाषित्वहिंस्रत्वविहिताऽननुष्ठातृत्वानि संकरजातित्वं अस्मिंल्लोके प्रकटीकुर्वन्ति ॥ ५८ ॥

(४) **राघवानन्दः**। कलुषयोनित्वव्यञ्जककर्माण्याह **अनार्यतेति**। निष्ठुरता परुषभाषिता। क्रूरता अनिमित्तहिंसनं। निष्क्रियात्मता अशीतिन्यूनवत्त्वेऽपि क्रियारहितता। कलुषयोनिजं कलुषा जात्यन्तरबीजाक्रान्ता जात्यन्तरा या योनिस्ततो जातम् ॥ ५८ ॥

(५) **नन्दनः**। कानि पुनस्तानि कर्माणीत्यपेक्षायामाह **अनार्यतेति**। अनार्यता नास्तिकता निष्ठुरता नृशंसता क्रूरता स्वल्पापराधेऽपि प्रखरभावता निषिद्धात्मता सकलकर्मनिवर्जनशीलता व्यञ्जयन्ति अनुमापयन्ति अनार्यतादी समस्तानि न पुनर्व्यस्तानि ॥ ५८ ॥

(६) **रामचन्द्रः।** पुरुषं पूर्वोक्ता गुणाः व्यञ्जयन्ति। ईर्ष्यामत्सरप्रधानोऽनार्यः। स्वार्थपरो निष्ठुरः। लोभहिंसापरः क्रूरः। विहितक्रियारहितो निष्क्रियः ॥ ५८ ॥

(८) **गोविन्दराजः।** **अनार्यतेति।** नैर्घृण्यपरुषभाषित्वहिंस्रत्वविहितप्रतिषिद्धानुष्ठान-शीलत्वानि सङ्करजातं पुरुषं अस्मिन् लोके प्रकटीकुर्वन्ति ॥ ५८ ॥

(९) **भारुचिः।** कानि एनांसितानि? यत इष्यते- .... तस्य भाष्यमिदं वेति। निष्ठुरता क्रूरता निष्क्रियात्मतेति। एवमादीनां कलुषयोनिलिङ्गानां निदर्शनार्थान्येतानि नान्यनिवृत्त्य-र्थानि। एवं च सत्ये च सत्यमादीनि। पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजं मुस्य(?) कुलसम्भूतमपि कस्य पुनर्हेतोः बीजानुविधानात्तत्रार्याणाम् ॥५८॥

**पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा॥**
**न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥ ५९ ॥**

(१) **मेधातिथिः।** **दुर्योनिः** संकीर्णजन्मा। **प्रकृतिं स्वा**मात्मीयं कारणं न नियमेन निगृह्णाति ॥ ५९ ॥

(२) **सर्वज्ञनारायणः।** पित्र्यं मातुरुभयं वा न भजते किंतु स्वामेव संकरजातिप्रकृतिं प्रयच्छति प्रतिगृह्णातीति योज्यम् ॥ ५९ ॥

(३) **कुल्लूकः।** यस्मात् **पित्र्यं वेति।** असौ सङ्करजातो दुष्टयोनिः पितृसंबन्धि दुष्ट-स्वभावत्वं सेवते, मातृसंबन्धि वोभयसंबन्धि वा न कदाचिदसावात्मकारणं गोपायितुं शक्नोति ॥ ५९ ॥

(४) **राघवानन्दः।** न नियच्छति स्वकारणमपह्नोतुं न शक्नोति ॥ ५९ ॥

(५) **नन्दनः।** लिङ्गान्तरमप्याह **पितुर्वा भजते शीलमिति।** **प्रकृतिं** कारणम् ॥ ५९ ॥

(६) **रामचन्द्रः।** एवं चागमतो विज्ञातस्य प्रतिपत्तयेऽनुमानं युक्तम् ॥५९॥

(८) **गोविन्दराजः।** **यस्मात् पित्र्यमिति।** तज्जनकयोः दुष्टस्वभावत्वेन अकार्य-कारित्वाद् असौ दुष्टयोनिः पितृसंबन्धि दुष्टभावत्वं सेवते मातृसंबन्धोभयगतं वा; अतो न कदाचिद् असौ आत्मकारणं गोपायितुं शक्नोति ॥ ५९ ॥

**कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसङ्करः ॥**
**स श्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥ ६० ॥**

(१) **मेधातिथिः।** तस्य शीलं येन जातो, न तु यस्य क्षेत्रम्। स लोके प्रसिद्धः ॥ ६० ॥

(२) **सर्वज्ञनारायणः।** तदेव स्फुटयति **कुल इति।** योनिसंकरोऽसदृशयोनिसांकर्यम्। तच्छीलं सङ्करशीलम् ॥ ६० ॥

(३) **कुल्लूकः।** महाकुलप्रसूतस्यापि यस्य योनिसङ्करः प्रच्छन्नो भवति स मनुष्यो जनकस्वभावं स्तोकं प्रचुरं वा सेवत एव ॥ ६० ॥

(४) **राघवानन्दः।** तदेव स्पष्टयति **कुलेति।** मुख्ये विप्रादिरूपे योनिसंकरः स्वोत्पादकयोनौ विजातीयरेतःप्रवेशात् तच्छीलं तयोः पितृमात्रोः स्वभावम् ॥ ६० ॥

(५) **नन्दनः।** एतदेव स्थिरीकरोति **कुले मुख्येऽपीति।** तच्छीलं पितृमातृशीलं संश्रयति यथा परिज्ञातजन्मानो बाह्यव्यवहारादि बाह्या एवमनुचितजन्मानोऽप्येतदित्यभिप्रायः॥ ६० ॥

(८) **गोविन्दराजः।** **कुल** इति। महाकुलोत्पन्नस्यापि यस्य योनिसङ्करः प्रच्छन्नो भवति स जनः स्वपितृगतं स्वभावं ईषद्वा बाहुल्येन सेवत एव ॥ ६० ॥

(९) **भारुचिः।** प्रच्छन्नतया विज्ञातः यथावत् ... रा स भजतः तस्मादव्यभिचार्यं तदनुमानं विज्ञेयम्। यथा भद्रं न मृगसङ्कीर्णानां जातिविशेषाणां शास्त्रलक्षणादनुमानात्तद्विशे-(ष) प्रतिपत्तिः, एवमिहापीति। अस्योपदेशप्रयोजनं यथैवागमतो विज्ञातैः वर्णापसदैः सह व्यवहारो न क्रियते। एवमनुमानतो विज्ञातैः सहेति। यतश्चैतदेवं अतो वर्णसङ्करो राज्ञोऽपि प्रयत्नतो रक्षणीयः। यस्मादाह ॥ ६० ॥

**यत्र त्वेते परिध्वंसा जायन्ते वर्णदूषकाः ॥**
**राष्ट्रियैः सह तद्राष्ट्रं क्षिप्रमेव विनश्यति ॥ ६१ ॥**

(१) **मेधातिथिः।** तस्माद्वर्णसंकरो राज्ञा परिवर्जनीयः। **राष्ट्रिया** जानपदाः। **राष्ट्र**ममात्यादयः ॥ ६१ ॥

(२) **सर्वज्ञनारायणः।** यत्र राष्ट्रे वर्णसंकरप्रवृत्त्या प्रथमं जायन्ते वर्णसंकराः संकरजाः। राष्ट्रियैः राष्ट्रजैः ॥६१॥

(३) **कुल्लूकः।** यस्मिन्राष्ट्र एते वर्णसङ्करा वर्णानां दूषका जायन्ते तद्राष्ट्रं राष्ट्रवासिजनैः सह शीघ्रमेव नाशमेति, तस्माद्राज्ञा वर्णानां सङ्करो निरसनीयः ॥६१॥

(४) **राघवानन्दः।** यत्र राष्ट्रे राष्ट्रियैः राष्ट्रनिवासिभिर्जनैः ॥ ६१ ॥

(५) **नन्दनः।** राष्ट्रे स्वस्मिन्वर्णसङ्करो राज्ञा परिहरणीय इत्यभिप्रायेणाह **यत्र त्वेते परिध्वंसा इति** परिध्वंसाः संकरजन्मानः गूढोत्पन्नत्वादपरिज्ञानाद्ये वर्णास्तैस्सह संगच्छेरन्नेतान्दूषयन्तीति वर्णदूषकाः ॥६१ ॥

(६) **रामचन्द्रः।** वर्णदूषकाः वर्णसंकरा जायन्ते ॥६१॥

(७) **मणिरामः।** ध्वंसाः वर्णसंकराः ॥६१॥

(८) **गोविन्दराजः।** **यत्रेति।** यस्मिन् राष्ट्रे एते वर्णानां दूषकाः सङ्करजा विनिपाता जायन्ते तद्राष्ट्रं राष्ट्रवर्तिजनैः सह शीघ्रमेव नाशमेति। तस्माद् राज्ञा वर्णसङ्करो रक्षणीयः ॥ ६१ ॥

(९) **भारुचिः।** राज्ञो रक्षणार्थमिदं निन्दावचनं विज्ञेयम् विपर्ययस्तुत्यर्थम्। इदानीमेषां कर्मस्वनधिकृतानां शुद्धिहेतुरयमुच्यते उत्कर्षार्थम् ॥६१॥

**ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ॥**
**स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥ ६२ ॥**

(१) **मेधातिथिः । अनुपस्कृतो** धनमगृहीत्वा । **अभ्यवपत्तिरनुग्रहः । बाह्यानां** प्रतिलोमानाम् । **सिद्धिकारणं** उत्कृष्टजातौ जन्मसिद्धेः सिद्धिहेतुत्वादेवमुच्यते । तादृशं जन्म लभन्ते यथाधिकृता भवन्ति । स्वर्गादिप्राप्तिर्वा **सिद्धिः** ॥ ६२ ॥

(२) **सर्वज्ञनारायणः ।** अनुपस्कृतः स्वकीयदृष्टकार्याभिसन्धिरूपोपस्कारशून्यः । स्त्रीबालाभ्युपपत्तौ ब्राह्मणेतरवर्णयोरपि स्त्रीबालयोरुपरक्षार्थं देहत्यागः बाह्यानां प्रागुक्तानां सूतादीनां सिद्धिः स्वर्गगमनम् ॥ ६२ ॥

(३) **कुल्लूकः ।** गोब्राह्मणस्त्रीबालानामन्यतरस्यापि परित्राणार्थं दृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमजानां स्वर्गप्राप्तिकारणम् ॥ ६२ ॥

(४) **राघवानन्दः ।** किंच **ब्राह्मणेति ।** देहत्यागोऽनुपस्कृतो लाभख्यातिपूजाद्यनाक्रान्तः स्त्रीबालाद्युपपत्तौ तेषां मारणादिभ्यो रक्षणं च बाह्यानां वर्णधर्मबहिष्कृतानां सिद्धिकारणं स्वर्गगमनहेतुः किल्बिषनाशहेतुर्वा ॥ ६२ ॥

(५) **नन्दनः ।** अथ बाह्यानां धर्मानाह **ब्राह्मणार्थ** इति । अनुपस्कृतोऽर्थकामानुबन्धरहितः बाह्यवर्णा धर्मेष्वधिकृताः प्रतिलोमजाः ॥ ६२ ॥

(६) **रामचन्द्रः ।** अनुपस्कृतः स्वकीयदृष्टकार्याभिधरूपोपस्कारशून्यः ब्राह्मणेष्वपि स्त्रीबालयोः अभ्युपपत्तौ रक्षार्थं देहत्यागः बाह्यानां आयोगवादीनाम् ॥ ६२ ॥

(७) **मणिरामः ।** परि अनुपस्कृतः दृष्टप्रयोजनरहितः । अभ्युपपत्तौ परित्राणार्थं । सिद्धिकारणं स्वर्गप्राप्तिकारणं । दुष्टाः लभन्ते तैः कृत्वा स्वर्गं इत्यर्थः ॥ ६२ ॥

(८) **गोविन्दराजः । ब्राह्मणार्थ** इति । **स्त्रीबालाभ्यवपत्तौ च बाह्यानां सिद्धिकारणम्,** गोब्राह्मणस्त्रीबालपरित्राणार्थं दृष्टप्रयोजनानपेक्षः प्राणत्यागः प्रतिलोमार्थं स्वर्गप्राप्तिकारणम् ॥ ६२ ॥

(९) **भारुचिः ।** बाह्याः प्रतिलोमा गृह्यन्ते । अनुपस्कृतेन धनेनापरिक्रीतः । देहत्यागविशेषणमिदं । सिद्धिरधिकार(स्था)न जन्मनः सिद्धिरधिकारणादुच्यतेऽधिकारसामर्थ्यात् । अथवा व्यवहितैव । स्वर्गप्राप्तिनियोगार्थमिदं प्रायश्चित्तशास्त्रं प्रतिलोमा नामेति केचित् कल्पयन्ति । अपरे तु दण्डापूपिकया सर्वेषामविशेषेणेदमिच्छन्ति । अस्य देहत्यागस्य प्रायश्चित्तार्थमुपदेशाद् बाह्यानां पुरुषधर्मार्थमिदमुच्यते ॥ ६२ ॥

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ॥**
**एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ६३ ॥**

(१) **मेधातिथिः । शौचं** मृज्जलादिबाह्यगतम् । **सामासिकं** समस्तस्य सर्वमनुष्यभेदजातेरुक्तम्, न ब्राह्मणादिजातिविभागेन । व्याख्यातमन्यत् ।

"यद्यहिंसाप्रतिलोमानां धर्मः स्यात्कथं? तर्हि तदुक्तम्।—'मत्स्यघातो निषादानां', 'बिलौकोवधबन्धनम्', क्षत्तादीनामरण्यपशुहिंसनमेव च"।।

केचिदाहुः– ये जीविकाहेतुतया वध्यत्वेनोक्तास्ततोऽन्यत्राहिंसा।

अन्ये मन्यन्ते– 'अहिंसा' तेषामभ्युदयसाधनहेतुत्वेन धर्मो, न तु प्रतिषेधो हिंसायाः संमत इति। यथा "न मांसभक्षणे दोष" इतिवत्।

"यद्यहिंसा धर्मस्तेषां कथं तर्हि तैर्जीवितव्यम्?" "यथा कुतश्चिदवगमात् तेषामनुपपन्ना हिंसानिवृत्ति'र्धर्मायेति' चेत्तदा को जीवनोपायः? अन्याश्च वृत्तयः प्रतिवर्णनियताः। अध्यापनादयस्तावदत्यन्तासंभवादप्राप्ताः। कृष्यादयोऽपि वैश्यनियताः। शूद्रस्य सेवाऽया वा साधारणी वृत्तिरस्ति'"।

यथा "वर्तेरन्विद्याशिल्पं" (१० । ११६) इत्यत्र दर्शयिष्यामः। यदपीदमुच्यते "ते निन्दितैर्वर्तयेयुर्द्विजानामेव कर्मभिः" इति तत्र किमस्ति निन्दिततरमन्यदतो हिंसायाः? न च मत्स्यघातो द्विजानामुपयुज्यते। श्राद्धेऽतिथिभोजनादौ च कदाचित्क उपयोगो, न सार्वकालिको जीविकाभावः। तस्मान्न घातादि स्वतंत्रम्।। ६३।।

(२) **सर्वज्ञनारायणः।** अहिंसा हिंसानिवृत्तिः, अस्तेयं परद्रव्यानभिलाषः। शौचं मनःकायशौचम्। इन्द्रियनिग्रहः कामार्थं तदप्रवर्तनम्। सामासिकं साधारणम्। बाह्यैः सह चातुर्वर्ण्यं चतुर्वर्णानाम्। बाह्यानामप्येतद्धर्मसाधनमित्यर्थः। अत एव **याज्ञवल्क्यः** 'सर्वेषां धर्मसाधन'मित्याह।। ६३।।

(३) **कुल्लूकः।** हिंसात्यागो यथार्थाभिधानम्, अन्यायेन परधनस्याग्रहणं, मृज्जलादिना विशुद्धिरिन्द्रियसंयम इत्येवं धर्मसंक्षेपतश्चातुर्वर्ण्यानुष्ठेयं मनुराह प्रकरणसामर्थ्यात्संकीर्णानामप्ययं धर्मो वेदितव्यः।। ६३।।

(४) **राघवानन्दः।** असाधारणं धर्ममुक्त्वा साधारणं धर्ममाह **अहिंसेति।** सत्यं यथोपलब्धाभिधानम्। चातुर्वर्ण्य इति दृष्टान्तार्थः, अन्यथा प्रकरणबाधः। यथाऽयं धर्मश्चातुर्वर्ण्ये साधारणस्तथाऽपसदानामपीति भावः। अत एव बौद्धा अपि तत्स्वीकुर्वते सामासिकं समासवदनेकोपसंग्राहकत्वादिति **मेधातिथिः।** यद्यपि वध्यघातनं बिलौक्यादिहिंसनं न युक्तं तथापि प्रकारान्तरेण जीवितुं शक्तानां ततो निवृत्तिसिद्धेः करणं तदतिरिक्ताहिंसनं चेति भावः।। ६३।।

(६) **रामचन्द्रः।** सामासिकं साधारणम् चातुर्वर्ण्ये मनुः अब्रवीत्।। ६३।।

(७) **मणिरामः।** सामासिकं संक्षेपतः। प्रकरणसामर्थ्यात्संकीर्णानामप्ययं धर्मो ज्ञातव्यः।। ६३।।

(८) **गोविन्दराजः। अहिंसेति। श्राद्धकर्मातिथेयं च दानमक्रोधमार्जवम्। प्रजनं स्वेषु दारेषु तथा चैवानसूयता।।** हिंसावर्जनं यथोपलब्धाभिधानं परस्वाग्रहणं मृद्वारि-

शुद्धिरिन्द्रियसंयम इत्येतं सांक्षेपिकं धर्मं चातुर्वर्ण्यानुष्ठेयं मनुराह। प्रकरणसामर्थ्याच्च चातुर्वर्ण्यग्रहणस्यान्तरप्रभवे दर्शनार्थत्वे सत्यन्तरप्रभवविषयमपीदं वाक्यम् ।। ६३ ।।

(९) **भारुचिः**। एवं च प्रकरणसामर्थ्यात् चातुर्वर्ण्यान्तरप्रभवानामप्यहिंसादिपुरुषधर्मो विज्ञेयः। एवं चायं शनकैः सिद्धिहेतुरेषां पूर्वस्तु सामर्थ्यात्सह्यत इति विज्ञाते पूर्वस्मात् ब्राह्मणादिवर्णलक्षणशास्त्रात् सर्ववर्णेषु तुल्यास्वित्यैवमादेरन्यथा ब्राह्मणत्वादीन्यप्राप्तानीष्यन्ते च। तान्युत्कर्षापकर्षाभ्यामपि ।। ६३ ।।

**शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ।।**
**अश्रेयान् श्रेयसीं जातिं गच्छत्याऽऽसप्तमाद्युगात् ।। ६४ ।।**

(१) **मेधातिथिः**। 'गर्भं गृह्णाति', 'गर्भश्च श्रवणाज्जात' इति पुल्लिङ्गनिर्देशेऽप्यर्थयोगता विज्ञेया। अत इदमुक्तं भवति।—**शूद्रायां ब्राह्मणात्** या जाता कुमारी, सा **चेच्छ्रेयसा** जात्युत्कर्षवता ब्राह्मणेनैव, **प्रजायते** विवाहादिसंस्कृताऽपत्योत्पत्तिहेतुसंबन्धं प्राप्नोति। तस्यामपि यदि कुमारी जायते सा ब्राह्मणेनैव विवाह्यते। एवमनया परंपरया सप्तमे पुरुषे प्राप्ते ब्राह्मण्यां यस्तत्र जायते तस्य भवति।

**श्रेयसेति** यद्यप्युत्कृष्टजातीयमात्रे वर्तते, तथापीह ब्राह्मणपदसन्निधानादुत्तरत्र च "शूद्रा ब्राह्मणतामेति" इति वचनात् ब्राह्मण्यप्राप्तिः शूद्रवर्णस्य विज्ञेया। अनयैव कल्पनया पञ्चमे वैश्यायां जातस्य वर्णस्य; तृतीये क्षत्रियायाम्। अत्रापि स्त्रीत उत्कर्षः। एवं वैश्यस्य तृतीये क्षत्रियत्वम्। शूद्रायां जातायाः कुमार्या वैश्यान्तरेण संयोगे तृतीये जन्मनि वैश्यत्वम्। क्षत्रियजातायाः शूद्रायाः पञ्चमे **युग** इति। 'युग'शब्दो जन्मवचनः। **अश्रेया**न्निकृष्टजातीयः **श्रेयसी**मुत्कृष्टाजातिं **गच्छति** प्राप्नोति। आङ अभिविधौ व्यापकार्थः।। ६४ ।।

(२) **सर्वज्ञनारायणः**। यः पारशव उक्तः श्रेयसा श्रेष्ठवर्णेन सह प्रजायते श्रेष्ठायां पारशव्यामेव वृत्तादिमत्यामपत्यं जनयति, एवमासप्तमाद्युगादासप्तमात् उत्कर्षतेजोत्कर्षभावतः पितृपरंपरया विच्छिद्यते स्वधर्मान्तरच्युतिस्तदाऽश्रेयानपि सप्तमे श्रेयसीं जातिं द्विजातितामाप्नोति। तस्य सप्तमी संततिर्द्विजातितां याति। यदि मध्ये श्वश्रूतुल्यैरेव विवाहैरुत्पत्तिरित्यर्थः। युगशब्दो मातापित्रोर्युग्मतया तत्परः ।।६४।।

(३) **कुल्लूकः**। इदानीं'सर्ववर्णेषु तुल्यास्वि'त्युक्तलक्षणव्यतिरेकेणापि ब्राह्मण्यादिदर्शयितुमाह **शूद्रेति**। शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः प्रजायत इति सामर्थ्यात्स्त्रीरूपः स्यात्। सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूयते सा दुहितरमेव जनयति, साप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति, साप्येवमेवं सप्तमे युगे जन्मनि स पारशवाख्यो वर्णो बीजप्राधान्याद्ब्राह्मण्यं प्राप्नोति 'आसप्तमाद्युगा'दित्यभिधानात्सप्तमे जन्मनि ब्राह्मणः संपद्यत इत्यर्थः ।। ६४ ।।

(४) **राघवानन्दः**। तपोबीजप्रभावैरित्युक्तेर्न्यूनं पूरयति **शूद्रायामिति। जात इति।** पारशवाख्यो वर्णः स च स्त्रीरूपः। अन्यथा जातः प्रजाया इति पुनरुक्तिः। सा चेच्छ्रेयसा

ब्राह्मणेनोढा श्रेयसीं दुहितरं प्रजायते सूते स्त्रियं साप्यन्येन ब्राह्मणेन परिणीयते ततोऽप्यन्या दुहिता प्रजायते साप्यन्येन ब्राह्मणेनोढा सप्तमे पञ्चमे वा जन्मनि श्रेयसीं ब्राह्मण्यं प्राप्नोतीत्यन्वयः ।।६४।।

(५) **नन्दनः।** अथानुलोमजसंतानानान्धर्मोत्कर्षवशेन प्रत्यपत्यं जात्युत्कर्षो भवतीत्याह **शूद्रायां ब्राह्मणादिति।** शूद्रायां ब्राह्मणाज्जातः पारशवः श्रेयसा प्रजायते चेद्धर्मेण युक्तो भवति चेत् अश्रेयानपकृष्टजातिरपि श्रयसीमुत्कृष्टतरां जातिमासप्तमाद्युगादासप्तमात्संतानात् इच्छति। एतदुक्तं भवति। पारशवसंतानविच्छिन्नसंतानश्चेत् सप्तमादप यादारभ्य ब्राह्मत्वमापद्यत इति। यथा चाह **बौधायनः** निषादेन निषाद्यामापञ्चमाज्जातेरपहन्ति शूद्रतां तमुपनयत्यश्मे याजयेत्तपोबीजप्रभावेणेत्यादिश्लोकस्यायं प्रपञ्चः ।।६४।।

(६) **रामचन्द्रः।** शूद्रायां ब्राह्मणाज्जातः पारशवः श्रेयसा ब्राह्मणेन चेत् प्रजायते अश्रेयान् अहीनवर्णः श्रेयसीं उत्कृष्टजातिं आसप्तमात् जन्मतः सप्तमपुरुषः ब्राह्मणो भवति। तद्यथा **याज्ञवल्क्यः** 'मूर्धावसिक्तादयः यथा ब्राह्मणेन शूद्रायामुत्पादिता निषादी सा ब्राह्मणेनोढा दुहितरं कांचिज्जनयति, सापि ब्राह्मणेनोढान्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणः जनयति। अंबष्ठी साप्यनेन प्रकारेण पंचमी षष्ठं ब्राह्मणं जनयति। मूर्धावसिक्ताप्यनेन प्रकारेण चतुर्थी पंचमं ब्राह्मणमेव जनयति। उग्रा क्षत्रियोढा माहिष्या च [यथाक्रमं षष्ठं पंचमं] क्षत्रियं च जनयति। तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् ।।६४।।

(७) **मणिरामः।** शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः चेत् श्रेयसा प्रजायते श्रेष्ठेन ब्राह्मणेन प्रसूयते। प्रसवसामर्थ्यात्स्त्रीरूपः पारशवो ज्ञातव्यः, स वर्णः आसप्तमात् युगात् सप्तमे जन्मनि अश्रेयानपि श्रेयसीं जातिं ब्राह्मणत्वं प्राप्नोति। तथा च शूद्रायां ब्राह्मणात्कन्या जाता सा पारशवा ब्राह्मणेनैव विहिता कन्यामेव प्रसूता एवं क्रमेण सप्तमे जन्मनि पारशवाख्यो वर्णो बीजप्राधान्यात् ब्राह्मण्यं प्राप्नोतीत्यर्थः ।।६४।।

(८) **गोविन्दराजः।** इदानीं 'सर्ववर्णेषु तुल्या'स्वित्येतल्लक्षणव्यतिरेकेणापि ब्राह्मणादि दर्शयितुमाह **शूद्रायामिति।** शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः स्त्रीलक्षणः। सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूते दुहितरं च जनयति साप्यन्येन ब्राह्मणेन ऊढा सती दुहितरमेव जनयति। साप्येवमेवेत्येवं स पारशवाख्यो निकृष्टे स बीजप्राधान्यात् सप्तमे युगे ब्राह्मणजातिं प्राप्नोति। सप्तमो जातः ब्राह्मणः संपद्यते ।।६४।।

(९) **भारुचिः।** शूद्रायां ब्राह्मणाज्जातो वर्ण (स्त्री) लक्षणः पारशवाख्यः श्रेयसा चेद् ब्राह्मणेनैव पुन्नाम्ना पुनः पुनः प्रजायते। एवमनेन प्रकारेणासावश्रेयान् शौद्रा वर्णः श्रेयसीं ब्राह्मणजातिं गच्छत्यासप्तमाद्युगात् जन्मन इत्यर्थः। बीजप्राधान्येन। अतश्चानेन युगपरिवर्तक्रमेण ।।६४।।

**शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ॥**
**क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥ ६५ ॥**

(१) **मेधातिथिः। शूद्रो ब्राह्मणतामेति** इत्युक्तोऽर्थः। **ब्राह्मणश्चैति शूद्रताम्।** ब्राह्मणोऽत्र पारशवो ब्राह्मणजातो विज्ञेयः। स चोक्तलक्षणशूद्रां यदि परिणयते तदाऽपकर्षं जन्मनि प्राप्नोति। तृतीय इति व्याचक्षते।

यथोक्ते युगपरिवर्ते उत्कर्षं प्राप्ता यथा संस्कारैः कर्मभिश्चाधिक्रियन्ते ।।६५।।

(२) **सर्वज्ञनारायणः।** एतत्स्फोटयति **शूद्र इति।** शूद्रः शूद्रासंतानजः ब्राह्मणा ब्राह्मणसंतानजः। शूद्रतामेति यथा तदग्रे वक्ष्यति। क्षत्रियाद्वैश्याद्वा शूद्रायां जातोऽप्येवं सप्तमे युगे तूत्कर्षं लभते। तथा मूर्धावसिक्तादीनां तत्तत्सदृशविवाहपरंपरया पञ्चमपुरुषे प्रकृतिजातिलाभसिद्धिः ।।६५।।

(३) **कुल्लूकः।** एवं पूर्वश्लोकोक्तरीत्या शूद्रो ब्राह्मणतां याति, ब्राह्मणश्च शूद्रतामेति। ब्राह्मणोऽत्र ब्राह्मणाच्छूद्रायामुत्पन्नः पारशवो ज्ञेयः; स यदि पुमान्केवलशूद्रोद्वाहेन तस्यां पुमांसमेव जनयति सोऽपि केवलशूद्रोद्वाहेनापरं पुमांसमेव जनयति, सोऽप्येवं, तदा स ब्राह्मणः सप्तमं जन्म प्राप्तः केवलशूद्रतां बीजनिकर्षात्क्रमेण प्राप्नोति। एवं क्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात्। किंतु जातेरपकर्षात् 'जात्युत्कर्षो युगे ज्ञेयः'। सप्तमे पञ्चमेऽपि वेति **याज्ञवल्क्य** (आचार. १।९६) दर्शनाच्च क्षत्रियाज्जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ बोद्धव्यौ। **वैश्याज्जातस्य** ततोऽप्युत्कर्षात्। याज्ञवल्क्येनापि वाशब्देन पक्षान्तरस्य संगृहीतत्वाद्वृद्धव्याख्यानुरोधाच्च तृतीयजन्मन्युत्कर्षापकर्षौ ज्ञेयौ अनेनैव न्यायेन वैश्यायां जातस्य पञ्चमे जन्मन्युत्कर्षापकर्षौ क्षत्रियायां जातस्य तृतीये क्षत्रियेण वैश्यायां जातस्य तृतीय एव बोद्धव्यौ ।।६५–।।

(४) **राघवानन्दः।** पूर्वोक्तमनुवदन् ब्राह्मणोऽप्येवं शूद्रां परिणीय शूद्रयां यातीत्याह **शूद्र** इत्यर्धेन। उक्तमर्थं क्षत्रियवैश्ययोरतिदिशति **क्षत्रियेत्यर्धेन।** अत एवाह **याज्ञवल्क्यः आचा** (१६०) 'जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तर'मिति।। युगे जन्मनि विप्रोढाशूद्रागर्भोऽपि श्रेष्ठः यतो 'निषादस्य पतिं याजये'दिति वेदे श्रूयते। स चेत् शूद्रायां पुत्रः सूते स पुत्रः शूद्रां परिणीय तत्र पुत्रं जनयत्येवं सप्तमावधौ तद्वंश्यस्य शूद्रत्वमेव। विप्रस्य क्षत्रियवैश्ययोरपीति **याज्ञवल्क्यवचने** व्यत्ययपदाशयः ।।६५।।

(५) **नन्दनः।** न केवलमनुलोमजानामेवायं न्यायः किन्तु प्रतिलोमजानामपीत्याह **शूद्रो ब्राह्मणतामिति।** श्रेयसा चेत्प्रजायत इत्यनुकर्षः, ब्राह्मणश्चैति शूद्रतामश्रेयसा चेत्प्रजायत इत्यभिप्रायः। क्षत्रियाज्जातमुग्रनामानम् ।।६५।।

(६) **रामचन्द्रः।** शूद्रः पूर्वोक्तरीत्या यथा ब्राह्मणतां एति तथैव ब्राह्मणः शूद्रतामेति। यथा पारशवः पुत्रो जात; तस्य स्त्रीशूद्राः तस्यां पुत्रो जातः तेनापि शूद्रकन्यैव परिणीतेति क्रमेण सप्तमः शूद्रो भवतीत्यर्थः। एवं क्षत्रियवैश्यावपि ज्ञेयौ ।।६५।।

(८) **गोविंदराजः।** शूद्र इति। एवमुक्तनीत्या शूद्रो ब्राह्मणतां प्राप्नोति। यदि पुनः ब्राह्मणाच्छूद्रायां पुमानुत्पद्यते स केवलशूद्रोद्वाहेन ततः पुमांसमेव जनयति, सोऽपि केवलशूद्रोद्वाहेन नान्यं पुमांसमेव तदा स ब्राह्मणः सप्तमां संततिं प्राप्तः शनैः शनैः बीजनिष्कर्षात् केवलशूद्रतां प्राप्नोति। सप्तमो जातः शूद्रः संपद्यते। एवं क्षत्रियवैश्याभ्यां शूद्राज्जातस्योत्कर्षापकर्षौ जानीयात्। किंतु जातितारतम्यात् क्षत्रियस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ च वैश्यस्य तृतीय इति व्याचक्षते। एवमनेनैव न्यायेन ब्राह्मणो वैश्याज्जातस्य पञ्चमे उत्कर्षापकर्षौ क्षत्रियाज्जातस्य तृतीयेन वैश्याज्जातस्य च तृतीय एव ॥६५॥

(९) **भारुचिः।** यथा शूद्र एव ब्राह्मणश्चैति शूद्रताम्। पारशवाख्याः शूद्रपुरुषसम्बन्धेन। एवं च शूद्रपुरुषादपकर्षः (पारशव)वर्णस्य शूद्रत्वमासप्तमाद्युगाद्विज्ञेयम्। शूद्राया-मुत्कर्षापकर्षौ च विद्यात्। पञ्चमे युगे परिवर्तते। अत्रापि स्त्रीत उत्कर्षः पुरुषादपकर्षः। वैश्याज्जातोऽपि विज्ञेयः, स तेनैव न्यायेन ब्राह्मणजातोऽपि वर्णः क्षत्रियात् तृतीये जन्मनि ब्राह्मणो विज्ञेयः। उत्कर्षः अपकर्षश्च तृतीये जन्मनि क्षत्रियसम्बन्धेन क्षत्रियवर्णाद्विज्ञेयः। तथा च ब्राह्मणाद्वैश्यायां पञ्चमे जन्मन्युत्कर्षापकर्षौ सामर्थ्याद्विज्ञायते। क्षत्रियेण च वैश्यायामनन्तरायामेष एव न्यायः। यथा ब्राह्मणस्य क्षत्रियायामिति। अशाब्दं चैतत् सामर्थ्यसिद्धं व्याख्येयम्। प्रथमश्लोकलिङ्गं...। अथवा दृष्टा यथा ब्राह्मणवर्णो योनिदोषात् पारशवात्मना शूद्रसम्बन्धेन निकृष्यमाणे शूद्रो भवत्यासप्तमा-द्युगात्। एवं पारशवो वर्णः (स्त्र्या)ख्यं ब्राह्मणे वर्तमानो ब्राह्मणवर्णो भवति। अस्य च ब्राह्मणसंस्कारः श्रौतस्मार्ताधिकाराश्च पूर्वस्मरणवद्युक्ताः। अपरस्त्वाह श्रौतेष्वस्य कर्मस्वधिकारः–तदयुक्तम्; समानशास्त्रत्वात् पूर्वोत्तरयोः। तथा चोक्तं पुरस्तादि(ति।) एवमिदं बीजप्राधान्यमुपश्रुत्याह–यदि शूद्रो ब्राह्मणतामेति बीजप्राधान्येन ब्राह्मणश्चैति शूद्र-ताम्। शूद्रः क्षेत्रप्राधान्येन ॥ ६५॥

**अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ॥**
**ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥ ६६ ॥**

(१) **मेधातिथिः।** किंशब्दः क्षेपे। यदि बीजप्राधान्याद्धीनजातीयासु जाता मातृ-जातेरुत्कृष्टाः क्रमेण पितृजातितां प्राप्नुवन्ति, इदं तर्हि क्षेत्रप्राधान्येऽपि द्रष्टव्यम्, यथा क्षेत्रजः पुत्रः। अतश्च यथा**ऽनार्यायां** शूद्रायां **ब्राह्मणाज्जात** उत्कृष्टो भवति, **यदृच्छया** यथा-कथंचिदनूढायामपि, एवं **ब्राह्मणायामनार्या**च्छूद्रात्क्षेत्रप्राधान्येन **श्रेयस्त्वम्।** यथोक्तं "क्वचित् बीजं क्वचिद्योनिः" इति ॥६६॥

(२) **सर्वज्ञनारायणः।** प्रागेवोक्तं ब्राह्मणस्याब्राह्मण्यं यत्र तद्विचार्य निर्धारयति **अनार्यायामिति।** सावित्रीपतितादिकन्यायां ब्राह्मणाच्छ्रेष्ठाद्यदृच्छया अबुद्धिपूर्वमपि। बुद्धि-पूर्वं तु किं वाच्यमित्याशयः। ब्राह्मण्यामुत्तमायामनार्यात्पतितसावित्रीकादेः ॥६६॥

(३) **कुल्लूकः।** एकः शूद्रायां यदृच्छयाऽनूढायामपि ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातो द्वयोर्मध्ये क्व चोत्पन्नस्य श्रेयस्त्वमिति चेत्संशयः स्यात्; संशयबीजं च यथा बीजोत्कर्षात्। ब्राह्मणाच्छूद्रायां जातः साधुः शूद्रः। एवं क्षेत्रोत्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात्? ॥६६॥

(४) **राघवानन्दः।** अनूढाविशेषेणानुलोमप्रतिलोमजौ श्रेष्ठत्वाश्रेष्ठत्वेन संदिग्धेऽनार्यायामिति संशय्य जनकानुरूपेण निर्णयमाह **अनार्यायामिति** त्रिभिः। अनार्यपदमत्र शूद्रपरं, आर्यपदं तु ब्राह्मणपरमिति। यदृच्छयोद्वहनं विना ॥६६॥

(५) **नन्दनः।** अनार्यायां शूद्रायां ब्राह्मणब्राह्मणीशब्दौ द्विजात्युपलक्षणार्थौ, यदृच्छया कामचारेणोत्पन्नः कश्चिदनार्याच्छूद्राद्ब्राह्मणस्समुत्पन्नः कश्चित्तयोः श्रेयस्त्वं बीजोत्कर्षेण क्षेत्रोत्कर्षेण वा केन भवेत्? अत्रेतिशब्दो द्रष्टव्यः। भवेच्चेदित्यन्वयः चेदिति वा प्रश्नश्चेच्छृणुतेत्यभिप्रायः ॥६६॥

(६) **रामचन्द्रः।** अनार्यायां शूद्रायां अनूढायां यदृच्छया ब्राह्मणः समुत्पन्नः तु पुनः अनार्यात् शूद्राद्ब्राह्मण्यां श्रेयस्त्वे उत्कृष्टत्वे क इति चेत् किंचन न भवेत् ॥६६॥

(७) **मणिरामः।** अनार्यायां शूद्रायां। यदृच्छया अनूढायामपि। अनार्यात् शूद्रात्। शूद्रयोर्मध्ये क्व उत्पन्नस्य श्रेयस्त्वं इति चेत् संदेहो भवेत् तत्राग्रिममुत्तरं ज्ञेयं ॥६६॥

(८) **गोविन्दराजः।** **अनार्यायामिति।** यः शूद्रायामनूढायां ब्राह्मणादुत्पन्नो यश्च ब्राह्मण्यामपि शूद्राज्जातस्तयोः कस्य प्रशस्ततरत्वमिति यदि भवतां संशयः स्यादिति भृगुर्बीजप्राधान्येनोत्कर्षं उपन्यस्ते सति क्षेत्रबीजकारणत्वाज्जगतः क्षेत्रप्राधान्येनाप्युत्कर्षः किमिति न स्यादित्यृषीणां भ्रान्तिमाशङ्कमानस्तानाह ॥६६॥

(९) **भारुचिः।** एवं च सति अनार्यतो वा ब्राह्मण्यां श्रेय(स्त्वं) क्षेत्री चेद् भवेत् अनार्यायां शूद्रायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया अप्यनूढायां। किं पुनरूढायां यथा न (गर्ह्यः) प्रशस्तश्च। केवलशूद्रवैश्यक्षत्रियजातेभ्यो भवति।

एवं ब्राह्मण्यामप्यनार्या(यां) शूद्राज्जातस्यागर्ह्यत्वं पारशववत् प्राप्नोति। क्षेत्र प्राधान्यात् श्रेयस्त्वं चास्य क्षत्रियावैश्यजाताभ्यां प्राप्नोति क्षेत्रसामर्थ्यात्। तथा च क्षेत्रजातास्सुता उपदिष्टाः शास्त्रत इति बीजप्राधान्याक्षेपाभिप्रायोऽयं श्लोको वेदितव्यः। न संशयप्रश्नाख्यः। यथा चेदं केचिदाहुः 'क्वचिद्बीजं क्वचिद्योनि' रिति बीजयोन्याः प्राधान्यावस्थानात् सम्मोह इव जायत इति। एवं च सति बीजप्राधान्यप्रकरणमनुगृहीतं भवति ॥ ६६ ॥

**जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः ॥**
**जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥ ६७ ॥**

(१) **मेधातिथिः।** **नार्यां** स्त्रियामनार्यायां हीनजातीयाया**मार्याज्जात** उत्कृष्टजातीयाद्ब्राह्मणादार्य एव **भवेत्।**

किं ब्राह्मणजातीयत्वम् ? नेत्याह—**गुणैः**। गुणतो गौण्या वृत्त्या पाकयज्ञाद्यधिकारमात्रेण। वक्ष्यमाणानार्यापेक्षयाऽऽर्य इत्युच्यते। **अनार्याच्छूद्रादार्यायां** ब्राह्मण्यां **जातोऽनार्य** एवैष **निश्चयः**।

एतदुक्तं भवति—यावद्वचनमेव प्राधान्यमवतिष्ठते, नानुमानेन शक्यमन्यत्प्रसंजयितुम्। अतः समानजातीयागमनमेव युक्तं, क्षेत्रप्राधान्यं क्षेत्रज एव नान्यत्र ।।६७।।

(२) **सर्वज्ञनारायणः**। अनार्यायां नार्यामार्याज्जातः आर्या एव श्रेष्ठ एव बीजप्राधान्याद्भवेत्। गुणैर्यद्यार्यगुणैर्युज्यते। यद्यार्यायामनार्याज्जातः स ब्राह्मणोत्पन्नोऽपि शूद्रतुल्य इत्यर्थः ।।६७।।

(३) **कुल्लूकः**। तत्र निर्णयमाह **जात इति**। शूद्रायां स्त्रियां ब्राह्मणाज्जातः स्मृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्यो भवति। शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमत-उत्पन्नतया शूद्रधर्मेष्वप्यनधिकारादप्रशस्य इति निश्चयः। न्यायप्राप्तोऽप्यर्थो वचनप्रामाण्यादत्र बोध्यते ।।६७।।

(४) **राघवानन्दः**। अनार्या योषिति आर्याज्जात आर्य एव। तथा अनार्यादार्याजातोऽपि अनार्यः ।।६७।।

(५) **नन्दनः**। बीजमुत्कर्षहेतुर्न क्षेत्रमित्यस्यार्थः ।।६७।।

(६) **रामचन्द्रः**। नार्यां स्त्रियां अनार्यायां इन्द्रियाज्जातः गुणैः पाकयज्ञादिभिः आर्यः द्विजः भवेत्। अनार्यायां जातोऽपि अनार्यः शूद्रस्य पाकयज्ञानधिकारात् इति निश्चयः ।।६७।।

(७) **मणिरामः**। अनार्यायां शूद्रायां। नार्यां स्त्रियां आर्यात् ब्राह्मणात् जातः गुणैः आर्यः श्रेष्ठो ज्ञेयः ।।६७–७०।।

(८) **गोविन्दराजः**। अत्र निर्णयमाह **जात** इति। शूद्रायां ब्राह्मणाज्जातः स्मृत्यभ्यनुज्ञानैः पाकयज्ञादिभिरनुष्ठीयमानैः प्रशस्यो भवति। शूद्रात्पुनर्ब्राह्मण्यामपि जातः प्रतिलोमत्वेन शूद्रधर्मेष्वप्यनधिकारात् न प्रशस्य इति निश्चयो यतो यावद्वचनमत्र प्राधान्यमवतिष्ठते नानुमानतः ।।६७।।

(९) **भारुचिः**। चण्डालादिभिः तस्य शूद्रधर्मैरप्यनधिकारात्। अस्याभिप्रायः—को हि शक्तो धर्मस्याहेतुतः साधुत्वमवधारयितुम्। एवं हि हेत्वनवस्थानाद् धर्मानवस्थानमपि प्रसज्येत। तथा चैतत् पुरस्तात् प्रत्याख्यातमेव। अचिन्त्यस्याप्रमेयस्यान्यत्र। एवं च सति यथोपदेशं बीजयोन्याः प्राधान्यमभ्युपगन्तव्यम्, न त्वनुमानतः। उपदेशविषयादन्यत्रापि। यथा सुख-दुःखयोः धर्माधर्मोत्पत्ताविति। तथा च कृत्वा ।।६७।।

**तावुभावप्यसंस्कार्याविति धर्मो व्यवस्थितः ।।**
**वैगुण्याज्जन्मतः पूर्व उत्तरः प्रतिलोमतः ।। ६८ ।।**

(१) **मेधातिथिः**। **उभावपि**, चण्डालः पारशवश्च**असंस्कार्या**वनुपनेयौ। अत्र हेतुवन्नि-गदोऽर्थवादः। **वैगुण्याज्जन्मतः पूर्वः**। ब्राह्मणाद्यः शूद्रायां जातः, सत्यपि बीजप्राधान्ये

विगुणमेतस्य जन्म, योनिदोषात्। उत्तरश्चण्डालः। स प्रतिलोमोऽत्यन्तप्रातिलोम्यात्, सत्यपि क्षेत्रप्राधान्ये, पितृदोषात् ॥६८॥

(२) **सर्वज्ञनारायणः**। यद्यपि पूर्वस्य श्रैष्ठ्यं तथापि मातृदोषेण जन्मवैगुण्यात्पूर्वो न संस्कारार्हः, उत्तरस्तु प्रातिलोम्यात् क्षेत्रापेक्षया बीजस्यापकर्षादित्याह **तावुभाविति**। एतच्च पूर्वस्योपनयनादियोग्यत्वमार्यतोक्त्या प्रागुक्तापि पुनः संस्कारानर्हताभिधानान्नास्योपनयने उपनेतृदोषः। उपनीतत्वेऽपि च यज्ञादियोग्यत्वं नास्त्यतोऽग्राह्ययाजनं तद्याजनमिति दर्शयितुं संस्कारानर्हत्वमुक्तम्। अत एवाग्रे सर्वसंस्कारमिति विशेषयति ॥६८॥

(३) **कुल्लूकः**। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यवस्थिता शास्त्रमर्यादा। पूर्वः पारशवः शूद्राजातत्वेन जातिवैगुण्यादनुपनेयः। प्रतिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वादित्युत्तरत्वेनानुपनेयः ॥६८॥

(४) **राघवानन्दः**। तौ पारशवचण्डालौ असंस्कार्यौ उपनयनादिरहितौ जन्मनः। आविर्भावोऽस्या जनन्याः पूर्वः संस्कारानर्हः। उत्तरोऽपि संस्कारानर्हः प्रतिलोमतः पितुर्जातिः ॥६८॥

(५) **नन्दनः**। असंस्कार्यावनुपनेयौ पूर्व आर्यः जन्मनो वैगुण्यात्क्षेत्रासौष्ठवात् उत्तरः प्रतिलोम्यतावीजासौष्ठवादिति यावत् ॥६८॥

(६) **रामचन्द्रः**। तौ उभौ पारशवचाण्डालौ (अ)संस्कार्यौ वैगुण्याज्जन्मनः मातृदोषेण जातः पूर्वः अनुलोमजः असत्, उत्तरः प्रतिलोमजः सन् असत् ॥६८॥

(७) **मणिरामः**। न केवलं चण्डालादिः। किं तर्हि? पारशवादयोऽपि। तथा चोक्तम् 'वैगुण्याज्जन्मनः पूर्व उत्तरः प्रतिलोमतः ॥' पारशवादिः। सत्यपि बीजप्राधान्ये क्वचिदुत्तरः चण्डालादिः प्रतिलोमतः पितृदोषात् सत्यपि योनिप्राधान्ये क्वचित् लोकदृष्ट्या तु स्वजातिजानन्तरजान् पु(नः) स्तौति ॥६८॥

(८) **गोविन्दराजः**। **ताविति**। तौ पारशवचण्डालौ द्वावप्यनुपनेयौ चेति शास्त्रमर्यादा स्थिता। शूद्राज्जातत्वेन जातिवैगुण्यात् पारशवानुपनेयचाण्डालस्य प्रातिलोम्येन उत्पन्नत्वात् ॥६८॥

**सुबीजं चैव सुक्षेत्रे जातं संपद्यते यथा ॥**
**तथाऽऽर्याज्जात आर्यायां सर्वं संस्कारमर्हति ॥ ६९ ॥**

(१) **मेधातिथिः**। पूर्वोक्तावसंस्कार्यौ, स्वजातिजास्तु संस्कार्याः, इत्युभयत्राप्यर्थवादः। अत एतदेव स्थितं "क्वचिद्बीजं क्वचिद्योनिः" इति यथोपदेशात्। एकान्तरपरिग्रहस्तु न युक्तः ॥ ६९ ॥

(३) **कुल्लूकः**। यथा शोभनबीजं शोभनक्षेत्रे जातं समृद्धं भवति, एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सवर्णसंस्कारं क्षत्रियवैश्यसंस्कारं च सर्वश्रौतस्मार्तं चार्हति। नच 'पारशवचण्डाला'विति पूर्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

(४) **राघवानन्दः**। सदृष्टान्तं प्रतियोगितयाह **सुबीजमिति**। सुक्षेत्रे शोभनं बीजमिव ब्राह्मणेनोढब्राह्मणीजः संस्कारार्हः [इत्यनुवादमात्रं सर्वसंस्कारान्तेऽस्यैव पारिव्राज्य-दर्शनाच्चेति शंकरभगवदुक्तेः] ॥ ६९ ॥

(५) **नन्दनः**। कस्तर्हि संस्कारयोग्य इत्यपेक्षायामाह सुबीजमेव **सुक्षेत्र** इति ॥ ६९ ॥

(६) **रामचन्द्रः**। तथा आर्यात् आर्यायां जातः स च संस्कारं अर्हति ॥ ६९ ॥

(८) **गोविन्दराजः**। **सुबीजमिति**। यथा शोभनं बीजं शोभने क्षेत्रे जातं समृद्धं भवति एवं द्विजातेर्द्विजातिस्त्रियामानुलोम्येन जातः स्वजातिजानन्तरजैकान्तरजरूपं सर्वं श्रौतं स्मार्तं संस्कारमर्हति न पारशवचण्डालमिति पूर्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

(९) **भारुचिः**। तथार्यजा (त) स्त्वार्यायां सर्वसंस्कारमर्हति। उपदेशसामर्थ्यात् श्रौतं स्मार्तं च। कः पुनरसौ स्वजातिजोऽनन्तरजश्च शूद्रवर्जं पारशवादिस्त्वनुलोमोऽपि स्मार्तमेव पाकयज्ञादि (कं न) श्रौतः मातृदोषविगर्हणादित्युक्तम्। प्रतिलोमाः पुनरायोगवादयः पुरुषधर्म्यैरपाहिंसादिभिरधिक्रियते। ब्राह्मणादि(त्रा)णे च देहत्यागेन एवं च सत्येकान्त-परिग्रहेण सर्वत्र यत् ॥६९॥

**बीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः ॥**
**बीजक्षेत्रे तथैवान्ये तत्रेयं तु व्यवस्थितिः ॥ ७० ॥**

(१) **मेधातिथिः**। यथा त्रय एते पक्षाः। तेषां कश्चित्पक्षः केनचित्परिगृहीतः। केचिदाहुर्बीजमेव ज्यायः। तथा च ब्राह्मणाज्जातः क्षत्रियादिस्त्रीषु मातृजातित उत्कृष्टः। अन्ये पुनराहुः—क्षेत्रं श्रेष्ठं, यतः क्षेत्रियो यत्र क्षेत्रे जातः तज्जातीयो भवति, तस्यैव च तदपत्यम्।

अपरे मन्यन्ते—उभये बीजक्षेत्रे ज्यायसी। तदुक्तं "सुबीजं चैव सुक्षेत्र" (१०।६९) इति। तदेतत्सर्वमारोचयमान आह **तत्रेयं तु व्यवस्थितिः** इयमत्र निरूप्यावस्थितम् ॥ ७० ॥

(२) **सर्वज्ञनारायणः**। बीजमेक इति विप्रतिपत्तेः संशयहेतोरभिधानम् ॥ ७० ॥

(३) **कुल्लूकः**। दर्शनान्तराण्युक्तस्यैवार्थस्य स्थैर्यार्थमाह **बीजमिति**। केचित्पण्डिता बीजं स्तुवन्ति, हरिण्याद्युत्पन्नऋष्यश्रृङ्गादेर्ब्रह्ममुनित्वदर्शनात्। अपरे पुनः क्षेत्रं स्तुवन्ति, क्षेत्रस्वामिपुत्रत्वदर्शनात्। अन्ये पुनर्बीजक्षेत्रे उभे अपि स्तुवन्ति, सुबीजस्य सुक्षेत्रे समृद्धिदर्शनात्। एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया ॥ ७० ॥

(४) **राघवानन्दः**। [बीजप्राधान्यं] उक्तमपि स्मारयन्नाह **बीजमिति** त्रिभिः। मतभेदेनैवम् ॥ ७० ॥

(५) **नन्दनः**। इयं वक्ष्यमाणा ॥ ७० ॥

(६) **रामचन्द्रः**। एके बीजं ऋष्यश्रृङ्गादयो मनीषिणः क्षेत्रं वियोगपातादौ प्रशंसन्ति। तथा अन्यबीजक्षेत्रे इयं व्यवस्थितिः ॥ ७० ॥

(८) **गोविन्दराजः।** दर्शनान्तराण्यपास्यैवार्थस्योपोद्वहनार्थमाह **बीज**मिति। केचिद् बीजं स्तुवन्ति, यक्षाद्युत्पन्नानां ऋष्यश्रृङ्गादीनां ऋषित्वदर्शनादपरे पुनः सूरयः क्षेत्रं स्तुवन्ति, समृद्धिदर्शनात् तदेतस्यां पुनर्विप्रतिपन्नत्वादियं वक्ष्यमाणा व्यवस्था विज्ञेया ।। ७० ।।

(९) **भारुचिः।** तदयुक्तं – एवं यत् उभयत्रैकान्तयोर्दोषदर्शनात्। यदप्येकान्तत आहुः तदप्यसाधु, यस्मात् क्षेत्रे वैगुण्येऽपि सति क्षत्रियावैश्ययोर्ब्राह्मणक्षत्रियाभ्यां गर्ह्यास्त्रयोऽधिकृताश्च यथा सम्भवं कर्मभिर्दृश्यन्ते तत्रैवमेकान्तत्रयेऽपि दोषदर्शनादियमेव स्थितिः यथोक्ता विज्ञेयेति। अथवा सुबीजमेव सुक्षेत्रे इतीयमुत्कर्षापेक्षा व्यवस्थोच्यते। पूर्वा तु यथाविषयं उपदेशसामर्थ्याद्विज्ञेया ।। ७० ।।

**अक्षेत्रे बीजमुत्सृष्टमन्तरैव विनश्यति ।।**
**अबीजकमपि क्षेत्रं केवलं स्थण्डिलं भवेत् ।। ७१ ।।**

(१) **मेधातिथिः।** **अक्षेत्रे** ऊषरे **उत्सृष्ट**मुप्तमपि **बीजमन्तरै**वादत्वैव फलं **नश्यति। अबीजक**मयोग्यबीजकं वा **क्षेत्रं स्थण्डिलमेव भवे**त्खिलमेव। ततो न फलं लभ्यत इत्यर्थः ।। ७१ ।।

(२) **सर्वज्ञनारायणः।** अनिश्चये हेतुमाह **अक्षेत्र इति**। अन्तरैवाङ्कुरोत्पादात्प्रागेव ।। ७१ ।।

(३) **कुल्लूकः।** ऊषरप्रदेशे बीजमुप्तं फलमददन्तराल एव विनश्यति। शोभनमपि क्षेत्रं बीजरहितं स्थण्डिलमेव केवलं स्यान्नतु सस्यमुत्पद्यते, तस्मात्प्रत्येकनिन्दया 'सुबीजं चैव सुक्षेत्र' (१०।६९) इति प्रागुक्तमुभयप्राधान्यमेवाभिहितम् ।। ७१ ।।

(४) **राघवानन्दः।** अक्षेत्रे ऊषरादौ अन्तरा अंकुरमजनयित्वैव स्थण्डिलं सस्यानुत्पत्तिस्थलम्। मनुजपक्षे अन्तरालजातिर्भूत्वा विनश्यति संस्कारानर्हः। स्थण्डिलं योग्यपुत्राजनकम् ।। ७१ ।।

(५) **नन्दनः।** अक्षेत्रे क्षेत्रं विनान्तरैव मध्य एव विनश्यति वस्तु न भविष्यति नापि प्ररोहति अबीजकं बीजं विनोभयमन्योन्यापेक्षमित्यर्थः ।। ७१ ।।

(६) **रामचन्द्रः।** अबीजकं क्षेत्रं केवलं स्थण्डिलं भवेत् ऊषरं भवेत् ।। ७१ ।।

(७) **मणिरामः।** अंतरैव फलमदत्वैव, तस्मादुभयोः प्राधान्यमिति स्वीकारः कृतः ।। ७१ ।।

(८) **गोविन्दराजः। अक्षेत्र** इति। ऊषरप्रदेशे बीजमुप्तमदत्वैव फलं विनश्यति। शोभनमपि च क्षेत्रं बीजरहितं शुद्धस्थण्डिलमेव स्यात् सस्यानुत्पादः। तस्मादुभयं प्रधानमिति न्याय्यम् ।। ७१ ।।

(९) **भारुचिः।** उभयप्राधान्यमेव च परिगृह्य वान्वयव्यतिरेका उच्यन्ते सूपस्कृतमपि केवलं बीजरहितं स्थण्डिलमिव निष्फलं भवेत् ।। ७१ ।।

**यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् ।।**
**पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ।। ७२ ।।**

(१) **मेधातिथिः । पूजिताः** सर्वेण केनचित्प्रणम्यन्ते । **प्रशस्ताः** स्तुतिवचनैः स्तूयन्ते । **तस्माद्बीजं विशिष्यत** इति बीजप्राधान्यवादिनः – तदेतदयुक्तमित्युक्तम् । "तत्रेयं तु व्यवस्थितिः" इति ।

अथवा **बीजप्रभावेणेति** न बीजप्राधान्यं दर्शितमपि तु दूषणमेव । यदाशंक्यते बीज-प्राधान्यान्मत्रदपालादीनां **तिर्यग्जा ऋषय** इति बीजप्राधान्यं तद्दर्शनात् न तत्र बीजप्राधान्येन तदपत्यानामृषित्वमपि य तपःश्रुतादिजेन प्रभावेण धर्मविशेषेण ।। ७२ ।।

(२) **सर्वज्ञनारायणः ।** यद्येवं तथापि बीजस्यातिप्राधान्याद्बीजशुद्धिरेव ग्राह्येति स्वमतमुपसंहरति **यस्मादिति ।** तिर्यग्जा ऋष्यश्रृङ्गादयः पूजिता अभवन् । प्रशस्ताश्च ऋषयो ब्रह्मर्षयः ।। ७२ ।।

(३) **कुल्लूकः ।** इदानीं बीजप्राधान्यपक्षे दृष्टान्तमाह **यस्मादिति ।** यस्माद्बीज-माहात्म्येन तिर्यग्जातिहरिण्यादिजाता अपि ऋष्यश्रृङ्गादयो मुनित्वं प्राप्ताः पूजिताश्चाभिवाद्य-त्वादिना वेदज्ञानादिना प्रशस्ता वाचा संस्तुतास्तस्माद्बीजं प्रस्तूयते । एतच्च बीजप्राधान्य-निगमनं बीजयोन्योर्मध्ये बीजोत्कृष्टाजाति प्रधानमित्येवंपरतया बोद्धव्यम् ।। ७२ ।।

(४) **राघवानन्दः ।** हरिण्यादिजाता ऋष्यश्रृङ्गादयस्तिर्यग्जाः प्रशस्ताः । अन्येषु सत्सु ऋषिषु दशरथयज्ञ ऋष्यश्रृङ्गः प्राशस्त्यं गतः । तिर्यग्जोऽपि संस्क्रियते तज्जातेरपर्युदस्त-त्वात् । 'न शूद्रे पातकं किंचिन्नच संस्कारमर्हतीति' शूद्रजातेः पर्युदस्तत्वान्न पारशवादेः संस्कार इति भावः ।। ७२ ।।

(५) **नन्दनः ।** तथापि बीजं प्रधानमित्याह **यस्माद्बीजमिति ।** तिर्यग्जाः ऋष्य-श्रृङ्गादयः ।। ७२ ।।

(७) **मणिरामः।** बीजप्राधान्यपक्षे दृष्टांतमाह **यस्मादिति ।** तिर्यग्जाः हरिण्यादिजाः ऋषयः ऋष्यश्रृङ्गादयः ।। ७२ ।।

(८) **गोविन्दराजः ।** बीजप्राधान्यपक्षे दृष्टान्तमाह **तस्मादिति ।** यस्माद्बीजमाहा-त्म्येन तिर्यग्जातिमातृजा अपि ऋष्यश्रृङ्गादयः संपन्नाः पूजिताश्च पादवन्दनादिभिः पूजाभिः प्रशस्ताश्च बालाः संस्तुताः । तस्माद् बीजं कैश्चित् स्तूयत इति बीजप्राधान्यं पुनर्गमयत्वेन (?)ज्ञापयति तद्बीजयोग्योर्मध्याद् बीजोत्कृष्टजातिः प्रशस्यत इति ।। ७२ ।।

(९) **भारुचिः ।** अथ चोभयप्राधान्यं क्वचिदुच्यते बीजं च प्रभावं च बीजप्रभावे द्वंद्वैकवद्भावः नपुंसकलिङ्गः बीजं यथोक्तं प्रभावः प्रतिनिविष्टधर्मविशेषाविष्कृतात्मत्वं तेन बीजप्रभा तिर्यग्जा अपि सन्तः ऋष्यशृङ्गप्रभृतयः । तस्माद्बीजं प्रशस्यते इत्याहुः । एतच्चैका-न्तपरिग्रहे सत्युक्तदोषं बीजप्राधान्यम् । पुनर्निगमनायैतद् ज्ञापयति । बीजयोन्योः बीजोत्कृष्टजातिः प्रशस्यत इति । तथा च सत्यनुलोमानुत्कृष्टानेव सतः स्तौति क्षत्रिय-वैश्याजान् शूद्रावर्जम् । बीजयोन्योरवोचामेति ।। ७२ ।।

**अनार्यमार्यकर्माणमार्यं चानार्यकर्मिणम् ।।**
**संप्रधार्याब्रवीद्धाता न समौ नासमाविति ।। ७३ ।।**

(१) **मेधातिथिः**। **अनार्यः** शूद्रः। स **आर्यकर्मा** द्विजातिशुश्रूषादिरतः पाकयज्ञयाजी च देवद्विजनमस्कारपरः। **आर्यो** ब्राह्मणादिः सो**ऽनार्यकर्मा** प्रतिषिद्धाचरणो विहितकर्मत्यागी। तावुभौ **संप्रधार्य** तद्गुणत्वेनावगम्य तयोः किं कस्यचित्सातिशयो गुणः कस्याश्चित् वा अन्ते निरूपणबुद्धिः। **संप्रधार्य धाता** प्रजापतिर्मनुर्बुद्धया निरूप्या**ब्रवीत्**।

**न समौ** जातेर्गरीयस्या उत्कृष्टगुणोऽपि शूद्रः **तुल्यो न स्यात्**। पुनराह **ना समौ**। किं जात्या तूत्कृष्टयाऽपि बहुदोषावगृहीतस्य।

एतदुक्तं भवति – न जातिबलमाश्रित्य नरो माननीयः किंतु गुणा माननीयाः। न गुणहीनं जातिः परित्रातुमलम्। प्रायश्चित्तोपदेशवैयर्थ्यप्रसङ्गात्।

"अनार्यायां समुत्पन्नः"(१०/६६) इत्यत आरभ्य यावदयं श्लोको वर्णसङ्करनिन्दा कर्मप्रशंसाऽर्थो नात्र किंचिद्विधीयते प्रतिषिध्यते वा। नापूर्वार्थो ज्ञाप्यतेऽभिलक्षणवत्। तस्मात्प्रशंसार्था एवैते ।। ७३ ।।

(२) **सर्वज्ञनारायणः**। यथा क्षेत्रविशेषोत्पन्नत्वेऽपि बीजदोषान्न श्रेष्ठत्वं तथा दुष्ट-कर्मकरणादपि न श्रैष्ठ्यमित्याह **अनार्यमिति**। अनार्यं व्रात्याद्युत्पन्नमार्यकर्माणं ब्राह्मण-कर्मकर्तारम्। तथा आर्यमव्रात्योत्पन्नमपि निन्दितकृष्यादिकरम्। न समौ ब्राह्मणैः सदृशौ दोषसद्भावात्। नासमौ नात्यन्तमपकृष्टौ ब्राह्मण्यभावात्। एवं च वृत्त्युत्कर्षे तेषामपि क्रमादुत्कर्ष इत्युक्तम्। अत एवापस्तम्बो येषामपतितसावित्रीकाः पूर्वपुरुषाः वेषे ज्ञायन्ते तेषामपि प्रायश्चित्तपूर्वकं संस्कारं विहितवान्। एतदर्थमेव च 'आर्यं चानार्यकर्माणि'मित्यप्रक्र-तमप्युक्तम् ।। ७३ ।।

(३) **कुल्लूकः**। शूद्रं द्विजातिकर्मकारिणं द्विजातिं च शूद्रकर्मकारिणं ब्रह्माविचार्य 'न समौ नासमा'वित्यवोचतायतः शूद्रो द्विजातिकर्मापि न द्विजातिसमः, तस्यानधिकारिणो द्विजातिकर्माचरणेऽपि तत्साम्याभावात्। एवं शूद्रकर्मापि द्विजातिः न शूद्रसमः, निषिद्धसेवनेन जात्युत्कर्षस्यानपायात्, नाप्यसमौ निषिद्धाचरणेनोभयोः साम्यात्। तस्माद्यद्यस्य विगर्हितं तत्तेन न कर्तव्यमिति संकरपर्यन्तवर्णधर्मोपदेशः ।। ७३ ।।

(४) **राघवानन्दः**। अनधिकारिणा क्रियमाणं कर्म न फलायेति ज्ञापनार्थं चातुर्वर्ण्येषु प्रथमाध्यायाद्युक्ताः स्वधर्मवृत्तीः संस्मारयन्नापद्धर्ममाह **अनार्येत्यध्यायसमाप्तेः**। अनार्यं क्षत्रियादिभार्यकं आर्यकर्माणं याजनादिकर्तारं आर्यं युद्धसेवादिकारिणं समौ कर्मणा जात्य-न्तरानुत्पत्तेः नाऽसमौ उभयोर्निषिद्धाचरणस्य तुल्यत्वात् 'परधर्मो भयावह'इत्युक्तेः ।। ७३ ।।

(५) **नन्दनः**। अनार्यमद्विजातितोऽपकृष्टं आर्यकर्माणं गुणतो विशिष्टं न समौ नातिविषमावल्पान्तरावित्यर्थः ।। ७३ ।।

(६) **रामचन्द्रः**। अनार्यं व्रात्यादुत्पन्नं आर्यकर्माणं च पुनः आर्यमनार्यकर्भिणं धाता संप्रधार्य अवधार्य समौ न असमौ न इत्यब्रवीत् ।। ७३ ।।

(७) **मणिरामः**। संप्रधार्य विचार्य । द्विजातिधर्मानधिकारिणस्तदाचरणेऽपि न द्विजसमता भवतीति न समत्वं । निषिद्धशूद्रधर्माचरणे न जात्युत्कर्षता न गच्छतीति नाऽसमत्वमित्यर्थः ।। ७३ ।।

(८) **गोविन्दराजः**। **अनार्यमिति**। शूद्रं द्विजातिकर्मकारिणं द्विजातिं च शूद्रकर्मकारिणं प्रजापतिर्विचार्य न समौ तौ नाप्यसमावित्याह । यतः शूद्रो द्विजातिकर्माणि न द्विजातिसमः, तस्य द्विजातिकर्माधिकारे सति तत उत्कर्षाभावात् निषिद्धाचरणेन च प्रत्यवायात् द्विजातिरपि शूद्रकर्माणि आचरन् न शूद्रसमो निषिद्धसेवने जातेऽपि महाभाग्यान्नाप्यसमोऽपि निषिद्धाचरणेनोभयोः पातित्यात्; तस्माद् यस्य विहितं तत्तेन कर्तव्यमिति सङ्करपर्यन्तवर्णोपदेशः ।। ७३ ।।

(९) **भारुचिः**। अनार्य (स्ताव) च्छूद्र आर्यकर्मा द्विजातिकर्मापि सन्नसमो द्विजातिभिः। कस्मात् ? तस्य तेनानधिकाराद्रुत्कर्षाभावात् । न केवलमुत्कर्षाभावः । अपरश्च प्रत्यवायः प्रतिषिद्धसेवनात् ब्राह्मणः शूद्रकर्मापि सन्नसमः शूद्रेण । जाते (मं) हाभाग्यात् प्रतिषिद्धसेवनेऽपि एवं तावदनयोरसाम्येन चासमौ येनोभावपि तौ प्रतिषिद्धसेवनया पतितौ । तथा च **गौतमः** 'आर्यानार्ययोर्व्यतिक्षेपे कर्मणः सा...मित्याह-सैयमेवं कर्मप्रशंसासामर्थ्याद्विज्ञायते । एवं च सति न जातिबलमाश्रित्य कर्माणि हापयेत् । यस्मात् संयुक्ते हि जातिकर्मणी । कार्यमदृष्टं पुरुषार्थाख्यं साधयत इदानीमापत्कल्पप्रकरणोपन्यासार्थमिदं प्रस्तूयते ब्राह्मणादीनां वर्णानाम् ।। ७३ ।।

**ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः ।।**
**ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम् ।। ७४ ।।**

(१) **मेधातिथिः**। आपद्धर्माणामुपोद्घातः। **योनिः** कारणम्। **ब्राह्मणा ब्रह्मयोनिस्थास्ते षट्कर्माण्युपजीवेयु**रनुतिष्ठेयुः । अनेकार्था धातवः। **यथाक्रमं** यथाधिकारम् । यस्मिन् कर्मणि योऽधिकारी। कानिचिद्विध्यर्थानि कानिचिद्दृष्टार्थानि ।। ७४ ।।

(२) **सर्वज्ञनारायणः**। ब्रह्मयोनिस्थाः ब्राह्मणमातापितृजन्याः सम्यक् कृत्स्नानि षट्कर्माणि उपजीवेयुरनुतिष्ठेयुः, नतु व्रात्यादयः; तेषामध्ययनादावनधिकारात् । यथाक्रमं यथायोगम् ।। ७४ ।।

(३) **कुल्लूकः**। इदानीं ब्राह्मणानामापद्धर्मं प्रतिपादयिष्यन्निदमाह **ब्राह्मणा इति**। ये ब्राह्मणा ब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाः स्वकर्मानुष्ठाननिरताश्च ते षट्कर्माणि वक्ष्यमाणान्यध्यापनादीनि क्रमेण सम्यगनुतिष्ठेयुः ।। ७४ ।।

(४) **राघवानन्दः**। विप्रस्य वृत्तीराह **ब्राह्मणा इति** चतुर्भिः। ब्राह्मणा ब्रह्मबुभूषवः। ब्रह्मयोनिस्था ब्रह्मयोनिजाः ।। ७४ ।।

(५) **नन्दनः**। एवं तावद्धर्माधिकारिणो वर्णाः सान्तरप्रभावाः सोत्कर्षापकर्षाः प्रतिपादिताः, आपद्धर्मान्वक्तुमनापद्धर्मं पूर्वोक्तं संक्षिप्य सप्तभिः श्लोकैरनुभाषते **ब्राह्मणा**

**ब्रह्मयोनिस्था** इति। ब्रह्मयोनिधर्म इति यावत्तत्स्था: अथवा वेदस्य योनित्वेन प्रवक्तृत्वेन स्थिता:। यथाक्रममित्यस्यायमर्थः—स्वयं नित्यं स्वाध्यायशील: स्यादध्यापयेच्च स्वयं यजेद्याजयेच्च स्वयं दद्यात्प्रतिगृह्णीयाच्चेति षट्कर्माणि वक्ष्यमाणानि सम्यगापत्कल्पेनोपजीवेयुरनुतिष्ठेयु: ।। ७४ ।।

(६) **रामचन्द्रः**। ते यथाक्रमं द्विजा: षट्कर्माणि षट्कर्मणा उपजीवेयु: ।। ७४ ।।

(७) **मणिरामः**। इदानीमापद्धर्मं प्रतिपादयिष्यन्निदमाह **ब्राह्मणेति**। ब्रह्मयोनिस्था: ब्रह्मध्याननिष्ठा: ।। ७४ ।।

(८) **गोविन्दराजः**। इदानीमापद्धर्मविवक्षयेदमाह **ब्राह्मणा इति**। ये ब्राह्मणा ब्रह्मप्राप्तिकारण आत्मज्ञानाभ्यासे व्यवस्थिता: ते षट्कर्माणि सम्यगनुतिष्ठेयु:। यानि च स्वकर्मानुष्ठाननिरताश्च ते षट्कर्माणि वक्ष्यमाण आत्मज्ञानाभ्यासे व्यवस्थिता: सम्यगनुतिष्ठेयु: ।। ७४ ।।

(९) **भारुचिः**। ब्रह्मयोनिस्था इत्येतत् स्वयमेव विवृणोति—ये स्वकर्मस्ववस्थिता: न वर्णान्तरकर्मसु ते सम्यगुपजीवेयु: षट्कर्माणि। तथा च वक्ष्यति—'वैश्यवृत्तिमनातिष्ठन्नित्येव'मादि। यथाक्रममिति शास्त्रविहितेन क्रमेणानुपरिपाट्या आचारो(प)क्रम:। तेन यथा चैतिहासिका: प्रवारा: श्रुति: क्रमादधीतेत्येवमादिकर्ममात्रानुष्ठाने चोपजीवनशब्दो विज्ञेय:। आजीवकर्मसम्बन्धेन वा ।। ७४ ।।

**अध्यापनमध्ययनं यजनं याजनं तथा ।।**
**दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ।। ७५ ।।**

(१) **मेधातिथिः**। प्रथमेऽध्याये शास्त्रस्तुत्यर्थं एषां पाठ:। इह तु विध्यर्थम्। यद्यपि तेषां केवलानां विधिरुक्तस्तथापीह समस्य निर्दिश्यते सौहार्देन। विध्यन्तरमागत्यमेवेद रूपम्। वचनाच्चैतेषां कर्मणाम्। अतो यथाविहितमनूद्य वक्ष्यमाणोऽर्थो विधीयते ।। ७५ ।।

(२) **सर्वज्ञनारायणः**। तान्येव षट् कर्माणि प्रथमाध्यायोक्तान्यपि स्मारयति **अध्यापनमिति** ।। ७५ ।।

(३) **कुल्लूकः**। तानि कर्माण्याह **अध्येति**। अध्यापनाध्ययने साङ्गस्य वेदस्य तथा यजनयाजने दानप्रतिग्रहौ चेत्येतानि षट् कर्माणि ब्राह्मणस्य वेदितव्यानि ।। ७५ ।।

(४) **राघवानन्दः**। किंच **अध्यापनमिति**। दानं स्वस्वत्वध्वंसपुर:सरं परस्वत्वापत्तिफलकम्। अग्रजन्मनो विप्रस्य ।। ७५ ।।

(७) **मणिरामः**। षट्कर्माण्याह **अध्ययनमिति** ।। ७५—७७ ।।

(८) **गोविन्दराजः**। **अध्यापनमिति**। अध्यापनादीनि षट् कर्माणि ब्राह्मणस्यानुष्ठेयानि अध्ययनाध्यापने साङ्गस्य वेदस्य पाठशिष्यप्रवचने यजनयाजने यागार्त्विज्ये ते षट्कर्माणि ।। ७५ ।।

(९) **भारुचिः**। तानि पुनः विध्यर्थं हिस्यादि . . . मिहोपदेशः, प्रथमेऽध्याये तु शास्त्रस्तुत्यर्थं उक्तः। अथ तु विधिरेषां पूर्वशास्त्रादेव विज्ञातुं शक्यस्तत आपत्प्रकरणार्थ-मेषामिहोपदेशो विज्ञेयः ।। ७७ ।।

**षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।।**
**याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ।। ७६ ।।**

(१) **मेधातिथिः**। कर्मत्रिकविभागः स्पष्टप्रयोजनः। एकं त्रिकं दृष्टार्थमुपात्तं सामर्थ्यात्। अन्यस्यादृष्टार्थता। **विशुद्धो**ऽपापकर्मा। एवं शूद्रोऽपि विशुद्धः प्राप्नोति। को भवतो मत्सरः? स्मृत्यन्तरविरोधः प्राप्नोति। 'प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्चे'ति। एवं तर्हि यथाऽविरोधो भवति तथा व्याख्येयम्। न ह्यविरोधे संभवति विरोधो न्याय्यः। अपि वाऽनुवाद एवायं, 'राजतो धनमन्विच्छेत्' (४।३३) इति। एवमादावस्यार्थस्य विहितत्वात् ।। ७६ ।।

(२) **सर्वज्ञनारायणः**। जीविका जीवनोपायः। याजनाध्यापने शुद्धे अदुष्टे। विशुद्धः परिग्रहदोषरहितः ।। ७६ ।।

(३) **कुल्लूकः**। अस्य ब्राह्मणस्यैषामध्यापनादीनां षण्णां कर्मणां मध्याद्याजनमध्यापनं विशुद्धप्रतिग्रहैःद्विजातिभ्यो धनं लिप्सेत् प्रशस्तेभ्यो द्विज इति वचननिर्देशाद् द्विजातेः प्रतिग्रह इत्येतानि त्रीणि कर्माणि जीवनार्थानि ज्ञेयानि ।। ७६ ।।

(४) **राघवानन्दः**। षण्णां कर्मणां मध्ये जीविकाः जीवनहेतवः ।। ७६ ।।

(५) **नन्दनः**। विशुद्धात्स्वकर्मनिरतात्त्रैवर्णिकात् ।। ७६ ।।

(८) **गोविन्दराजः**। **षण्णामिति**। एषामध्यापनादीनां षण्णां कर्मणां मध्याद्याजन-मध्यापनं प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत। प्रतिगृह्णीयाच्चेति **गौतम**दर्शनाद्धार्मिकात् द्विजातेः प्रतिग्रह इत्येतानि त्रीणि कर्माणि जीवनार्थानि ।। ७६ ।।

(९) **भारुचिः**। इदानीं वर्गद्वयप्रविभागो दृष्टादृष्टत्वादेषां प्रतिक्रियते। विशुद्धात् प्रतिग्रहोऽयमुच्यते; यतः स विचार्यते कः पुनरिह शुद्धः। यो जात्या कर्मणा चेति। नन्वेवं सति ब्राह्मण एवैको विशुद्धः प्राप्नोत्युभयसम्पदा एवं च तस्मिन् मुख्यो निरपेक्षत्वाद्विशुद्धः प्रत्ययः। स्मृत्यन्तरे 'तु प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत प्रतिगृह्णीयाच्चे'ति क्षत्रियवैश्यावप्युपगृह्येते, इह तु यदि विशुद्धशब्दः क्षत्रियवैश्ययोरपि ग्राहकः परिकल्प्यते ब्राह्मणव्यतिरेकेण तेन शूद्रेण को मत्सरः? असावपि हि जात्या कर्मणापि शुद्धः। विशेषोऽस्ति चेत्, क्षत्रियवैश्ययोरपि ब्राह्मणात् परस्परविशेषोऽस्ति। यतः शूद्रो वा ग्राह्यो वृत्तस्थः क्षत्रियवैश्यौ वा उत्स्रष्टव्यौ ब्राह्मणं परिगृह्योच्यते—सत्यप्येतस्मिन् वेदाध्ययनं वैदिककर्मसम्बन्धं चावेक्ष्य त्रयाणामप्यविशिष्टैव कर्मशुद्धिरधिकारसाम्यादुच्यते। तथा चाविशेषेण त्रिभ्योऽपि स्मृत्यन्तरे प्रतिग्रहोऽनुज्ञायते, स्वकर्मस्थेभ्यः, न तु शूद्रात्। एवं च सति तथैवेहापि व्याख्येयम्। विशुद्धग्रहणं च प्रतिग्रहसम्बन्धमपि सद्याजनाध्यापनार्थमपि

सामर्थ्याद्द्रष्टव्यम् । इतरथा हि ताभ्यामसम्बन्धं शूद्रार्थमेवैतत् स्यादेतस्य याजनाध्यापनानधिकारात् ।। ७६ ।।

**त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति ॥**
**अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥ ७७ ॥**

(१) **मेधातिथिः ।** जीविकाकर्माण्येतानि क्षत्रियस्य न भवन्ति । यानि त्वदृष्टार्थानीष्टयध्ययनदानानि न निवर्तन्ते । वेदस्य च प्रकृतत्वादेतदध्यापनं निषिध्यते । न तु धनुर्वेदशिल्पकलाविद्यानाम् ।। ७७ ।।

(२) **सर्वज्ञनारायणः ।** ब्राह्मणाद् ब्राह्मणसंबन्धिनो धर्माः ।। ७७ ।।

(३) **कुल्लूकः ।** ब्राह्मणापेक्षया क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि वृत्त्यर्थानि त्रीणि कर्माणि निवर्तन्ते । अध्ययनयागदानानि तु तस्यापि भवन्ति ।। ७७ ।।

(४) **राघवानन्दः ।** याजनादित्रयो ब्राह्मणात् ब्राह्मणं स्वधर्मित्वेन प्राप्य क्षत्रियं प्रति निवर्तन्त इत्यन्वयः ।। ७७ ।।

(५) **नन्दनः ।** ब्राह्मणानां ब्राह्मणसंबन्धिनां धर्माणां मध्ये याजनाध्यापनप्रतिग्रहाः याजनाध्यापनप्रतिग्रहाणां रक्षा युद्धानामिव तेषां जीविकात्वेऽपि धर्मत्वनिवृत्त्यभावख्यापनार्थं धर्मा इत्युक्तम् ।। ७७ ।।

(६) **रामचन्द्रः ।** त्रयो धर्माः क्षत्रियं प्रति निवर्तन्ते अध्ययनं याजनं प्रतिग्रहः एतत्त्रयम् ।। ७७ ।।

(८) **गोविन्दराजः । त्रय इति ।** ब्राह्मणानपेक्ष्य क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि त्रीणि वृत्त्यर्थानि कर्माणि निवर्तन्ते । एवं च सत्यध्ययनयागदानानि भवन्ति ।। ७७ ।।

(९) **भारुचिः ।** अत्र च धर्मशब्दो वृत्तिकर्मविषय एव द्रष्टव्यः, तन्निर्देशसामर्थ्यात् । एवं च सति याज्याध्ययनदानादि तस्या दृष्टार्थानि न प्रतिषिध्यन्ते । तथा च तानि वक्ष्यन्ति । अत्र चाधिकाराद्वेदाध्यापनं प्रतिषिध्यते क्षत्रियस्य सहाङ्गैः । न तु धनुर्वेदादीनाम् ।। ८८ ।।

**वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः ॥**
**न तौ प्रति हितान्धर्मान्मनुराह प्रजापतिः ॥ ७८ ॥**

(१) **मेधातिथिः ।** पूर्वेणैतद्व्याख्यातम् । **तौ** क्षत्रियवैश्यौ **प्रत्ये**तेऽध्यापनादयो **धर्मा मनुना** प्रजापतिना नोक्ताः, न स्मृता इत्यर्थः ।। ७८ ।।

(२) **सर्वज्ञनारायणः ।** एते धर्मा अध्यापनादयस्त्रयः ।। ७८ ।।

(३) **कुल्लूकः ।** यथा क्षत्रियस्याध्यापनयाजनप्रतिग्रहा निवर्तन्ते तथा वैश्यस्यापीति

शास्त्रव्यवस्था, यस्मान्मनुः प्रजापतिः तौ क्षत्रियवैश्यौ प्रति तानि वृत्त्यर्थानि कर्माणि कर्तव्यत्वेन नोक्तवान् । एवं वैश्यस्याप्यध्ययनयागदानानि भवन्ति ।। ७८ ।।

(४) **राघवानन्दः** । एवं **वैश्यं प्रतीति** । तौ क्षत्रियवैश्यौ । तान्याजनादीन् ।। ७८ ।।

(५) **नन्दनः** । एतौ क्षत्रियवैश्यौ तानध्यापनादीन् ।। ७८ ।।

(६) **रामचन्द्रः** । तथैव वैश्य प्रति तान्धर्मान् अध्ययनादीन् मनुः प्रजापतिर्नाह ।।७८।।

(७) **मणिरामः** । एते अध्यापनाद्यास्त्रयः । तौ प्रति क्षत्रियवैश्यौ प्रति । तान् त्रीन् ।। ७८–७९ ।।

(८) **गोविन्दराजः** । **वैश्यमिति** । यथैव क्षत्रियस्याध्यापनयाजनप्रतिग्रहा निवर्तन्ते एवं वैश्यस्यापीति शास्त्रव्यवस्था । यस्मान्मनुः प्रजापतिः क्षत्रियवैश्ययोरेतानि वृत्त्यर्थानि कर्माणि कर्तव्यत्वेन स्मृतवान् । एवं च वैश्यस्याप्यध्ययनयागदानानि भवन्ति ।। ७८ ।।

(९) **भारुचिः** । वृत्तिकर्मप्रतिलो ... ... नामिज्यादीनां पूर्ववदिहाप्यप्रतिषेधो विज्ञेयः । तथा च तानि वक्ष्यति ।। ७८ ।।

**शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः ।।**
**आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ।। ७९ ।।**

(१) **मेधातिथिः** । इदं तयोर्जीविकाकर्म । **शस्त्रं** खड्गादि । **अस्त्रं** तन्मन्त्राः धनुर्वेदप्रसिद्धाः । अयमभ्युक्तानुवाद एव । **वणिक्पशु**शब्दौ कर्मान्तिभर्विन प्रयुक्तौ, वणिज्या पशुपालनं च । यद्यप्यध्ययनादिधर्माः सर्वेषां सन्ति तथापि प्राधान्यमेतेषाम् ।। ७९ ।।

(२) **सर्वज्ञनारायणः** । शस्त्रं खड्गादिकमुक्तं अस्त्रं शराद्विमुक्तं तद्धारणं न तत्साध्यं द्रव्यादिकं लक्षयति तदाजीवनार्थं क्षत्रस्येत्यर्थः । वणिक् वाणिज्यं पशुः पशुपाल्यं वणिक्पशुकृषीरिति प्रथमाबहुवचने, पूर्वसवर्णेन छान्दसं रूपम् । एतच्च सर्वत्र यागो जीवनार्थम् । धर्मो धर्मसाधनम् । यजिर्यागः ।। ७९ ।।

(३) **कुल्लूकः** । शस्त्रं खड्गादि, अस्त्रं बाणादि, एतद्धारणं प्रजारक्षणाय क्षत्रियस्य च वृत्त्यर्थम् । वाणिज्यपशुरक्षणकृषिकर्माणि वैश्यस्य जीवनार्थानि । धर्मार्थाः पुनरनयोर्दानाध्ययनयागा भवन्ति ।। ७९ ।।

(४) **राघवानन्दः** । क्षत्रियवैश्ययोरसाधारणान्याह **शस्त्रेति** । शस्त्रं खड्गादि, अस्त्रं तत्प्रेरकमन्त्रादि । आजीवनार्थं वृत्त्यर्थं, वणिक् वाणिज्यं तेन सह पशुकृषी वा । धर्मस्तु दानादित्रयमित्यन्वयः । धर्मो धर्मार्थम् ।। ७९ ।।

(५) **नन्दनः** । क्षत्रियवैश्ययोर्वृत्तिं धर्मं त्वाह **शस्त्रास्त्रभृत्त्वं क्षत्रस्येति** । शस्त्रमायुधरूपं शस्त्रास्त्रभरणेन तत्कार्याणि रक्षायुद्धादीनि लक्ष्यन्ते । वणिग्वाणिज्यं पशुरक्षणं यजिर्यजनम् ।। ७९ ।।

(६) **रामचन्द्रः** । क्षत्रस्य शस्त्रास्त्रभृत्त्वं शस्त्रं खड्गादिकं, अस्त्रं शरादिकम् ।।७९ ।।

(८) **गोविन्दराजः। शस्त्रास्त्रभृत्त्वमिति।** वृत्त्यर्थत्वेन रक्षणार्थं खड्गाद्यायुधप्रहरणमन्त्रधारणं क्षत्रियस्य। वाणिज्यपशुपालनकर्षणानि वैश्यस्य जीवनार्थान्यदृष्टार्थाः पुनरनयोर्दानाध्ययनयागा भवन्ति ।। ७९ ।।

(९) **भारुचिः।** आजीव(निः) स्वकर्मसु स्वयमभ्यासोऽध्यापनं च वेदाभ्यासशब्देन सामर्थ्यादिहोच्यते न त्वध्ययनम्। समानत्वाद्विशिष्टानि, 'स्वकर्मस्वि'ति वचनाद् वृत्तिरपि सत्येषा ब्राह्मणस्यैव ज्यायसी दृष्टादृष्टपुरुषार्थप्रयोजनत्वात्। तथा च क्षत्रियस्य रक्षणं वृत्त्यर्थं धर्मार्थं च विज्ञेयम्। तथा वैश्यस्य धनव्यवहारो ब्राह्मणादिपुष्टचर्थमवश्यानुष्ठेयः। येन तस्य धनातिसर्ग एव विशिष्टो धर्मः। अथवा विशिष्टानि स्वकर्मस्थितिवचनात् इदमन्यद्विज्ञायते। यथा अनीचाद्वा वेदाभ्यासमात्रेणैव ब्राह्मणः सूतो भवति। एवं क्षत्रियोऽनधी(या)नश्चायजमानश्च। प्रजासंरक्षणमात्रेणैवोत्कृष्यते वैश्यश्च वार्तयैव द्विजात्यर्थया इज्याध्ययनासम्भवेऽपीति ।। ७९ ।।

**वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम् ।।**
**वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ।। ८० ।।**

(१) **मेधातिथिः। वेदाभ्यासो** वृत्तिप्रकरणादध्यापनम्। एवं **विशिष्टानि स्वकर्मसु।** शास्त्रीयवृत्तिकर्मस्वन्येभ्यो जीवनकर्मभ्य इमानि श्रेयस्करतराणि ।। ८० ।।

(२) **सर्वज्ञनारायणः।** वेदाभ्यासः सदा जप्यपरता। वार्ताकर्म वार्तया कृष्यार्जितेन धनेन कर्म दानयागकर्म नतु वार्तारूपं तस्य कर्म जीविकात्वात् स्वाध्यायसमभिव्याहारयोगात् ।। ८० ।।

(३) **कुल्लूकः।** वेदाभ्यासो वेदाध्यापनं रक्षावार्ताभ्यां वृत्त्यर्थाभ्यां सहोपदेशात् तद्ब्राह्मणस्य, प्रजारक्षणं क्षत्रियस्य, वाणिज्यं पाशुपाल्यं वैश्यस्य। एतान्येतेषां वृत्त्यर्थकर्मसु श्रेष्ठानि ।। ८० ।।

(४) **राघवानन्दः। किंच वेदेति।** वेदाभ्यासरक्षावार्ताश्च द्विजानां यथाक्रममतीव प्रशस्ता इति भावः ।। ८० ।।

(५) **नन्दनः।** वार्ताकर्म वाणिज्यकर्म ।। ८० ।।

(६) **रामचन्द्रः।** रक्षणं प्रजायाः, द्विजस्य वेदाभ्यासः, **वैश्यस्य** वार्ताकर्म, **स्वकर्म** स्वकर्मसु विशिष्टानि ।। ८० ।।

(७) **मणिरामः।** वार्ताकर्म वाणिज्यं पशुपाल्यं च ।। ८० ।।

(८) **गोविंदराजः। वेदाभ्यास इति।** वृत्त्यर्थाभ्यां सहोपदेशादध्ययनस्य समानत्वाद् वेदाभ्यासोऽध्यापनं ब्राह्मणस्य। लोकसंरक्षणं क्षत्रियस्य। कृषिवाणिज्यपशुपाल्यं वैश्यस्य इत्येतान्येषां वृत्त्यर्थत्वेऽपि सत्यदृष्टजनकत्वात् स्वकर्ममध्ये प्रशस्तानि ।। ८० ।।

**अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।।**
**जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ।। ८१ ।।**

(१) **मेधातिथिः।** यदाऽस्य शरीरकुटुंबनित्यकर्मावसादो भवति, न तेभ्यः पर्याप्तं धनं भवति, तदाऽयं '**अजीवन्नि**'त्युच्यते। **यथोक्तेना**ध्यापनादिना। तदा क्षत्रियवत् ग्रामनगररक्षादिना शस्त्रास्त्रधारणेन सति संभवे सर्वाधिपत्येन **जीवेत्**। जीवतिव्याख्यातार्थः शरीरमात्रसंधारणे न वर्तते। किं तर्हि? कुटुंबस्वकर्माणि नित्यकर्मावस्थितामपि लक्षयति। **स ह्यस्य प्रत्यनन्तरो**ऽनन्तर एव प्रत्यनन्तरः। हेतुवचनाद्व्यवहितवृत्तिः पापकरी। स्ववृत्तिपरित्यागेऽपि नैवं मन्तव्यं शास्त्रातिक्रमकृतस्तत्र न विशेषो वैश्यशूद्रेष्वपीति तथा चाह॥ ८१॥

(२) **सर्वज्ञनारायणः।** अनापद्वृत्तिरुक्ताऽऽपद्वृत्तीः प्रस्तौति **अजीवन्निति**। प्रत्यनन्तरोऽनन्तरतः प्रतिनिधिः॥ ८१॥

(३) **कुल्लूकः।** अधुनाऽऽपद्धर्ममाह **अजीवन्निति**। यथोक्तेनाध्यापनादिस्वकर्मणा ब्राह्मणो नित्यकर्मानुष्ठानेन कुटुंबसंवर्धनपूर्वकमजीवन्क्षत्रियकर्मणा ग्रामनगररक्षणादिना जीवेत्; यस्मात्क्षत्रियधर्मोऽस्य सन्निकृष्टा वृत्तिः॥ ८१॥

(४) **राघवानन्दः।** यथोक्तेन याजनाध्यापनप्रतिग्रहेण। पूर्वस्य पूर्वस्य प्राशस्त्यार्थं प्रत्यनन्तरः प्रातिलोम्यवृत्तावप्यव्यवहितः संनिधेरपि मानत्वात्॥ ८१॥

(५) **नन्दनः।** अथापद्धर्मानाह **अजीवंस्त्विति**॥ ८१॥

(६) **रामचन्द्रः।** अजीवंश्चेत् क्षत्रियधर्मेण जीवेत् स क्षात्रधर्मः अस्य द्विजस्य प्रत्यनन्तर उक्तः॥ ८१॥

(७) **मणिरामः।** आपद्धर्ममाह **अजीवन्निति**। हि यस्मात् स क्षत्रियधर्मः अस्य विप्रस्य अनंतरः निकटवर्ती॥ ८१॥

(८) **गोविन्दराजः।** एवं नैसर्गिकं स्वधर्ममेषामुक्त्वाऽधुनापद्धर्ममाह **अजीवन्निति**। उक्तरूपेण पुनरध्यापनादिना स्वकर्मणा ब्राह्मणकुटुंबस्थितिनित्यकर्मानुष्ठानपूर्वकमजीवन् क्षत्रियकर्मणा ग्रामरक्षणनगरादिना जीवेत्; यस्मात् सोऽस्य संनिकृष्टवर्णनोदितत्वात् सन्निकृष्टा वृत्तिः॥ ८१॥

(९) **भारुचिः।** एवमेतानि ब्राह्मणादीनामाजीवनार्थानि धर्माय च कल्प्याह– धर्मात्मकुटुम्बा(या)देयमजीवद् भवति, यतः एतस्यामवस्थायामुत्सृज्य स्वकर्म क्षत्रियवृत्तिर्ग्रामनगरदेशादिरक्षणमस्य स्यात्। अपरे त्वेकपुरुषोत्थानेन राजत्वमाहुः। एवं च प्रत्यनन्तरहेतुवचनादस्य ईषत्प्रत्यवायता गम्यते। क्रमभेदे च प्रत्यवायगौरवम्॥ ८१॥

**उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्॥**
**कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥ ८२॥**

(१) **मेधातिथिः।** **उभाभ्यामप्यजीवंस्तु** क्रमोऽनेन प्रदर्श्यते। प्रथममनन्तरा वृत्तिस्तदभावे व्यवहितेति। **कृषिगोरक्षा**ग्रहणं वैश्यवृत्तिमात्रप्रदर्शनार्थम्। तथा च वाणिज्यायामविक्रेयप्रतिषेधं वक्ष्यति। **जीवेद्वैश्यस्य जीविका**मिति। सामान्यविशेषभावेन

क्रियायाः साध्यसाधनभावः प्रागुपपादितः। तत्र कृषिवाणिज्यकुसीदान्यनापद्यैवोक्तान्य-ध्यापनादिवत्। "प्रभृतं कर्षणं स्मृतम्"। "सत्यानृतं तु वाणिज्यम्" इति तु केचिदाहुः। "कृषिवाणिज्ये चास्वयंकृते। कुसीदं चेति" (गौ. १०/५-६) उक्तं स्वयंकरणमत्राभ्यनुज्ञायते।

यत्त्वध्यापनादिवदिति साम्यमाशङ्कितमत्रैव परिहृतम्। यदि सर्वेषां कृष्यादयः समत्वेन स्युः कथमिदमुच्यते "वणिक्पशुकृषीर्विशः आजीवनार्थम्" ब्राह्मणक्षत्रिययोरपि नाऽऽजीवनार्थस्तदा। किंच 'याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः' इत्यत्र तान्यपि समाख्यास्यन्। तस्मादध्यापनादिनियमैर्जीवतः कृष्यादयः प्रतिषिद्धा एव। यस्तु प्रकरणादन्यत्रैषामुपदेशः स तत्रैव प्रदर्शितप्रयोजनः ॥ ८२ ॥

(२) **सर्वज्ञनारायणः**। उभाभ्यां स्ववर्णानन्तरवृत्तिभ्याम्। जिज्ञासागोरक्षं कृष्यर्थं-गोरक्षणम्। कृषिरत्रास्वयंकृता ॥ ८२ ॥

(३) **कुल्लूकः**। ब्राह्मण उभाभ्यां स्ववृत्तिक्षत्रियवृत्तिभ्यामजीवन्केन प्रकारेण वर्तेतेति यदि संशयः स्यात्तदा कृषिपशुरक्षणे आश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत्, कृषिगोरक्षग्रहणं वाणिज्यदर्शनार्थं। तथा च विक्रेयाणि वक्ष्यति। स्वयंकृतं चेदं कृष्यादि ब्राह्मणापद्वृत्तिः। अस्वयंकृतस्य 'ऋतामृताभ्यां जीवेत' (४/४) त्यनापद्येव विहितत्वात् ॥ ८२ ॥

(५) **नन्दनः**। उभाभ्यां धर्मक्षयधर्माभ्यामिति भवेत्केनेदिति यः प्रश्नो भवेत्केनेत्कृणु-तेत्यर्थः। कृषिगोरक्षशब्दो वाणिज्यस्याप्युपलक्षणार्थः, गां रक्षतीति गोरक्षस्तस्य कर्म गौरक्ष्यम् ॥ ८२ ॥

(६) **रामचन्द्रः**। उभाभ्यां ब्रह्मक्षत्रयोर्वृत्तिभ्यां अजीवंस्तु तदा वैश्यजीवी कृषि पशु-वृत्तिं गोरक्षमास्थाय जीवेत् ॥ ८२ ॥

(७) **मणिरामः**। उभाभ्यां स्वक्षत्रियवृत्तिभ्यां ॥ ८२ ॥

(८) **गोविन्दराजः**। **उभाभ्यामिति**। ब्राह्मणक्षत्रियवृत्तिभ्यामपि जीवन् ब्राह्मणः केन प्रकारेण वर्तेत इति यदि संशयः स्यात् तदा कृषिगोरक्षणे आश्रित्य वैश्यवृत्तिमनुतिष्ठेत्। कृषिगोरक्षग्रहणं वाणिज्या वा अपि प्रदर्शनार्थम्। तथा च विक्रेयाविक्रेयाणि वक्ष्यति। स्वयंकृतं चेदं ब्राह्मणस्यापदि कृष्याद्युच्यते अस्वयंकृतस्यापदि 'ऋतामृताभ्यां जीवेत' (४।४) त्यादिनाभ्यनुज्ञानात् ॥ ८२ ॥

(९) **भारुचिः**। कृषिगोरक्षग्रहणं च सर्ववैश्यवृत्तिप्रदर्शनार्थम्। स्वयंकरणपक्षे चेयं ब्राह्मणस्य वैश्यवृत्तिरुच्यते, अस्वयंकृता तु पूर्वमुक्ता 'ऋतामृताभ्यां जीवेत' त्येवमादौ ॥ ८२ ॥

**वैश्यवृत्त्याऽपि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा ॥**
**हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥ ८३ ॥**

(१) **मेधातिथिः**। कृषिनिन्देतरवैश्यवृत्तिस्तुत्यर्था, न पुनस्तस्याः प्रतिषेधार्था। तथा च सति उपदेशो व्यर्थोऽस्या आपद्यते ॥ ८३ ॥

(२) **सर्वज्ञनारायणः**। स्वयंकृतायां दोषमाह **वैश्यवृत्त्येति**। पराधीनामनेकोपकरणसीतादिसंपाद्याम् ॥ ८३ ॥

(३) **कुल्लूकः**। संप्रति कृष्यादेर्बलाबलमाह **वैश्येति**। ब्राह्मणः क्षत्रियोऽपि वा वैश्यवृत्त्यापि जीवन्भूमिष्ठजन्तुहिंसाबहुलां बलीवर्दादिपराधीनां कृषिं यत्नतस्त्यजेत्। अतः पशुपालनाद्यभावे कृषिः कार्येति द्रष्टव्यम्। 'क्षत्रियोऽपि वे'त्युपादानात्क्षत्रियस्याप्यात्मीयवृत्त्यभावे वैश्यवृत्तिरस्तीत्यभिगम्यते ॥ ८३ ॥

(४) **राघवानन्दः**। वैश्यस्य जीविकामास्थायेत्युक्तेः कृष्यादेः चतुष्टयस्य प्राप्तत्वेन कृषिमनूद्य निषेधति **वैश्येति**। हिंसाप्रायां हिंसा प्रायेण बाहुल्येन यत्र ताम्। पराधीनां हलवृष्टिकर्षकाद्यधीनाम् ॥ ८३ ॥

(५) **नन्दनः**। पराधीनां स्वयमेकेन कर्तुमशक्याम् ॥ ८३ ॥

(६) **रामचन्द्रः**। पराधीनां अनेकोपकरणसाध्यां कृषिं स्वयंकृतां वर्जयेत् ॥ ८३ ॥

(७) **मणिरामः**। हिंसाप्रायां हिंसाबहुलां पराधीनां बलीवर्दादिपराधीनां तथा च पशुपाल्याभावे कृषिः ॥ ८३ ॥

(८) **गोविन्दराजः**। बलाबलमधुना कृष्यादेः प्राह **वैश्यवृत्त्येति**। ब्राह्मणः क्षत्रियो वा वैश्यवृत्त्यापि जीवेत्। भूमिं भूमिशयांश्च हन्तीति वक्ष्यमाणया नीत्या हिंसाबहुलां बलीवर्दाद्यायत्तां कृषिं यत्नतः परिहरेत्। अतः गोरक्षाभाव इयं कार्येत्यपि गम्यते। 'क्षत्रियोऽपि वे'त्युपादानात् क्षत्रियस्यापि स्ववृत्त्यभावे वैश्यवृत्तिरस्तीति गम्यते ॥ ८३ ॥

**कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ।**
**भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् ॥ ८४ ॥**

(१) **मेधातिथिः**। **कृषिं** लोकाः साध्वेव कर्मेति मन्यन्ते। यदुक्तम् 'कर्षतः पुरुषस्य बहु धान्यं भवति' ततोऽतिथ्यादिभ्योऽन्नदानेनोपकरोत्यतः साध्वी। तथा चोक्तं "नाकृष्यतोऽतिथिप्रियः"। "कृषिं यत्नेन कुर्वीत मौर्व्या सर्वत्र यत्नतः"। तथा "लाङ्गलं पवीरवं सुशेवं सुमतित्सरु। उदित्कृषतिगामविप्रफर्व्यं च पीवरीम्" (**वाजसनेयिसंहिता** १२/७१) इत्यादि। ते न सम्यक् मन्यन्ते। सा हि वृत्तिः सद्भिर्निन्द्यते। कस्य हेतोः? **भूमिं हन्ति काष्ठमयोमुखं** लाङ्गलम्। **भूमिशयांश्च**। भूमौ शेरते ये प्राणिनस्तृणजलूकादयस्तांश्च **हन्ति**।

ननु च भूमेः कीदृशं हननं हि सा प्राणिवत्काष्ठहत्यापीडामनुभवति। अनुभूतं तु सर्वैर्विदारणं भूमेर्दोषवदिति ज्ञापयति ॥ ८४ ॥

(२) **सर्वज्ञनारायणः**। भूमिं भूमिदेवताम् ॥ ८४ ॥

(३) **कुल्लूकः**। साध्विदं जीवनमिति कृषिं केचिन्मन्यन्ते, सा पुनर्जीविका साधुभिर्निन्दिता, यस्माद्धलकुद्दालादिलोहप्रान्तं काष्ठं भूमिं भूमिष्ठजन्तूंश्च हन्ति ॥ ८४ ॥

(४) **राघवानन्दः।** तद्दोषसहिष्णुं प्रत्याह **कृषिमिति**। भूमिशयान् प्राणिनः। अयोमुखं फलाकाराद्ययोमुखे यस्य तत् लाङ्गलमित्यर्थः। अत एव कुद्दालाद्यपि गृहीतम् ॥ ८४ ॥

(५) **नन्दनः।** हिंसाप्रायतां प्रपञ्चयति **कृषिं साध्विति मन्यन्त इति**। काष्ठं काष्ठमयं हलादिकं तेन वाणिज्याद्यभावे कृषिः कर्तव्येति सूचितम् ॥ ८४ ॥

(६) **रामचन्द्रः।** कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्भिर्विगर्हिता। अयोमुखं काष्ठं हि भूमिं भूमिशयान् जीवान् हन्ति ॥ ८४ ॥

(७) **मणिरामः।** भूमिशयान् भूमिस्थजंतून्। अयोमुखं काष्ठं हलकुद्दालिकं ॥ ८४ ॥

(८) **गोविन्दराजः। कृषिः साध्वितीति।** कृषिर्युक्तरूपेति केचिन्मन्यन्ते। सा पुनर् जीविका साधुभिर्निन्दिता। यस्माद् हलकुद्दालाद्ययःप्रान्तं काष्ठं भूमिबिलनिवासिनश्च प्राणिनो हन्ति ॥ ८४ ॥

(९) **भारुचिः।** एवं च वैश्यवृत्तेः प्रकरणभेद उपपद्यते—बहुलमासामिदमधुनोच्यते कृष्यपवा (दो) ऽयभितरवैश्यवृत्तिस्तुत्यर्थः। कृषेरुपदेशसामर्थ्यादितद्विज्ञायते। इतरथा ह्यनुपदेशार्हैव सा प्रसज्येत। 'निन्दितं न समाचरे'दित्यनेन कारणेन भूमिविलेखन-प्रतिषेधार्थोऽर्थवादो न चैतन्याद्भुवः। यथा भूमिशयानाम्। अपरे त्वाहुः—'एतस्मादेव नखाग्रेणापि भूमिविलेखनं न कर्तव्य'मिति ॥ ८४ ॥

**इदं तु वृत्तिवैकल्यात्त्यजतो धर्मनैपुणम् ॥**
**विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम् ॥ ८५ ॥**

(१) **मेधातिथिः। इदमिति** वक्ष्यमाणस्य प्रतिनिर्देशः। विशः पण्यं **विट्पण्यं,** वैश्यानां यद्विक्रेयं तदपि वृत्तिवैकल्याद्धनाभावाद्ब्राह्मणेन विक्रेयम्। उद्धार्याणि द्रव्याण्**युद्धार**-शब्देनोच्यन्ते। **उद्धृत उद्धारो** यस्मिन् तदेवमुच्यते। वक्ष्यमाणानि द्रव्याण्यत उद्धृत्यान्यानि विक्रेयाणि। **वित्तवर्धनमिति** स्वभावानुवादः। वाणिज्यायां हि धनवृद्धिः प्रसिद्धा। **त्यजतो धर्मनैपुणं** धर्मे या निष्ठा। अतस्तेन पण्यविक्रयो न कर्तव्य इति ज्ञापयति। अतश्चेदमवगम्यते सर्वासां वैश्यवृत्तीनां गर्हिततरा कृषिः। ततो न्यूना वाणिज्या। ततो गोरक्षा ॥ ८५ ॥

(२) **सर्वज्ञनारायणः।** इदं वक्ष्यमाणं वित्तवैकल्याद्वित्ताभावात्। धर्मनैपुणं धर्मवृत्तिं स्वजीविकां त्यजतो विप्रस्य क्षत्रियस्य च। विट्पण्यं वैश्यविक्रेतव्यं तद्गतोद्धारं त्यक्तत्याज्यं त्यक्तपातित्यहेतुरसादिविक्रयमित्यर्थः ॥ ८५ ॥

(३) **कुल्लूकः।** ब्राह्मणस्य क्षत्रियस्य चात्मीयवृत्तेरसंभवे, धर्मं प्रति यथोक्तनिष्णात-तत्वं त्यजतो वैश्येन यद्विक्रेतव्यं द्रव्यजातं तद्वक्ष्यमाणवर्जनीयवर्जितं धनवृद्धिकरं विक्रेयं ॥८५॥

(४) **राघवानन्दः।** यज्वनः कुटुम्बिनो विप्रस्य वित्तवर्धनोपायमाह **इदमिति।** वृत्तिवैकल्याद्वृत्त्यभावात् धर्मनैपुणं स्वधर्मनिष्ठां त्यजतो विप्रस्य त्वयमिदं विट्पण्यं वैश्येन यद्विक्रीयते। तेन चर्मपादुकादिव्यावृत्तिः, उद्धृतोद्धारं विक्रेयं विनिमेयं राजदण्डविशिष्टं कुसीदं च ॥ ८५ ॥

(५) **नन्दनः।** तथा वाणिज्यवृत्त्या नियममाह **इदन्तु वृत्तिवैकल्यादिति।** धर्मनैपुणमनापद्धर्मं वृत्तिवैकल्यात्त्यजतो विप्रस्य इदमिति वक्ष्यमाणं विट्पण्यं विट्क्रेयं वित्तवर्धनं लाभवर्धनं उद्धृत उद्धारो यस्मात्तदुद्धृतोद्धारमुद्धृतमुद्धार्यं त्यजन्निषिद्धमिति यावत् ।। ८५ ।।

(६) **रामचन्द्रः।** इदं धर्मनैपुण्यं वित्तवैक्लव्यात्त्यजतां विट्पण्यं वैश्यविक्रेयं उद्धृतोद्धारं परित्यक्ताविक्रेयं वित्तवर्धनम् ।। ८५ ।।

(७) **मणिरामः।** ब्राह्मणस्य क्षत्रियस्य च वृत्तिवैकल्यात् स्वस्योक्तजीवनवृत्त्यभावात् धर्मनैपुणं धर्मे भक्तिं त्यजतः। विट्पण्येषु वैश्येन यद्विक्रेतव्यं तेषु द्रव्येषु मध्ये वित्तवर्धनं धनवृद्धिकरं विक्रेयं विक्रयेण जीवनं कुर्यात्। कथंभूतं तत्? कृतोद्धारं वक्ष्यमाणनिषिद्धं विक्रयरहितं ।। ८५ ।।

(८) **गोविन्दराजः। इदमिति।** ब्राह्मणस्य क्षत्रियस्य वा स्ववृत्त्या अजीवतो धनाभावाद् धर्मं प्रति निष्णातत्वं त्यजतो वैश्येन यद् विक्रेतव्यं तद्वर्जितवक्ष्यमाणवर्जनीयं धनवृद्धिकरं विक्रेतव्यम् ।। ८५ ।।

(९) **भारुचिः।** इदं तु वित्तवैकल्यात् त्यजते धर्मनैपुणम् विट्पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्धनम्। धर्मनैपुणत्यागवचनादस्यापि हीना गम्यते गोरक्ष्यात्। एवं च सति। कृषेर्वाणिज्यमुत्कृष्टम्। तथापि गोरक्ष्यः ज्याय इत्येतत् सामर्थ्याद्गम्यते, सोऽयमधुना विट्पण्यार्थमुच्यते विक्रीणानश्च पण्यम् ।। ८५ ।।

**सर्वान् रसानपोहेत कृतान्नं च तिलैः सह।।**
**अश्मनो लवणं चैव पशवो ये च मानुषाः ।। ८६ ।।**

(१) **मेधातिथिः।** मधुरादयः षड्रसाः। तत्प्रधानानि द्रव्याणि गुडदाडिमकिराततिक्तकादीनि प्रतिषिध्यन्ते। न हि केवलानां रसानां संभवः। यद्यपि रसशब्दो न स्वयं द्रव्ये शुक्लादिशब्दवद्वर्तते सामानाधिकरण्येन, तथापि लक्षयति द्रव्यम्। 'गंगायां घोष' इति यथा। **अपोहेत** त्यजेन्न विक्रीणीयादिति यावत्। **कृतान्नं** सिद्धमन्नमोदनादि तण्डुलादि च। **तिलैः सह** तिला अपि न विक्रेयाः। न तु पुनस्तिलकृतान्नयोः सहप्रयुक्तयोः प्रतिषेधः केवलयोरभ्यनुज्ञानम्। **अश्मानः** सर्वपाषाणाः। **लवणम**पाषाणरूपमपि, सैन्धवस्य पाषाणशब्देन ग्रहणम्। रसपक्षे लवणस्य नित्यार्थ आरंभः। तेन मधुरादीनां पाक्षिको विक्रयः। **पशवो** ग्राम्या आरण्याः। **मानुषा** मनुष्याः ।। ८६ ।।

(२) **सर्वज्ञनारायणः।** तदेवाह **सर्वानिति।** रसान् पत्रकाष्ठादिनिर्यासान् अपोहेत विक्रये त्यजेत्, न विक्रीणीतेत्यर्थः। अश्मनः उपलान्। पशवश्छागाः। ये च मानुषास्तानिति पूरणीयम् ।। ८६ ।।

(३) **कुल्लूकः।** तानि वर्जनीयान्याह **सर्वानिति।** सर्वानचोद्यमानानधर्मान्यथा सिद्धार्थतिलपाषाणलवणपशुमनुष्यान्न विक्रीणीत। रसत्वेनैव लवणस्य निषेधसिद्धौ विशेषेण निषेधो दोषगौरवज्ञापनार्थः। तच्च प्रायश्चित्तगौरवार्थमेवमन्यस्यापि पृथङ्निषेधो व्याख्येयः ।। ८६ ।।

(४) **राघवानन्दः।** प्राप्तपण्यं परिसंख्याति **रसानिति** चतुर्भिः। अपोहेत ब्राह्मण इति शेषः। रसान् सर्षपादिस्नेहान्। कृतान्नं पक्वान्नं। अश्मनः पाषाणतद्विकारान्। पशवो ये च मानुषा गवाश्वादयः॥ ८६॥

(५) **नन्दनः।** कानि पुनस्त्याज्यानि द्रव्याणीत्याह **सर्वान् रसानिति।** अपोहेत त्यजेन्न विक्रीणीयात् ये पशवो ये च मानुषास्तानपि॥ ८६॥

(६) **रामचन्द्रः। सर्वानिति** चतुर्भिराह। सर्वान् रसान्विक्रये परित्यजेत्। कृतान्नं सिद्धान्नम्। पशवः छागादयः॥ ८६॥

(७) **मणिरामः।** वर्जनीयान्याह **सर्वेति**॥ ८६॥

(८) **गोविन्दराजः।** तानि वर्जनीयान्याहुः **सर्वानिति।** सर्वान् खण्डादीन् रसांस्तथा सिद्धान्नतिलपाषाणपशुलवणमनुष्यान् न विक्रीणीत। लवणस्य रसशब्देनैव ग्रहणसिद्धौ पृथग्वचनं दोषविशेषज्ञापनार्थम्। एतेनान्यस्यापि पृथगाम्नातव्याख्यातम्॥ ८६॥

(९) **भारुचिः।** अत्र च र(सः) प्रधानं द्रव्य...नि सामर्थ्याद्रिस उच्यते, यथा तगरोशीरचन्दनसमुदायो गन्ध(प्र)धानो गन्धशब्देन। कृतान्नं च तण्डुलादिप...कमपरे। अश्मानः सर्वपाषाणाः लवणस्यापाषाणार्थं आरम्भः, न तु सैन्धवार्थः। तस्य पाषाणशब्देन ग्रहणात् (रस)पक्षे च लवणस्य नित्यार्थं आरम्भः, पशवो ये च मानुषाः पशवश्च ग्राम्यारण्या मानुषाश्च पशवोऽपि॥ ८६॥

**सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च॥**
**अपि चेत्स्युररक्तानि फलमूले तथौषधीः॥८७॥**

(१) **मेधातिथिः। तान्तवं** तन्तुनिर्मितं वस्त्रपटबृहतिकादि। **रक्तं** लोहितम्। लोहिते वर्णे रक्तशब्दः प्रसिद्धतरः। तथा हि–रक्तो गौर्लोहित उच्यते, यद्यपि शुक्लस्य वर्णान्तरापादनमपि रञ्जेरर्थः **शाणक्षौमाविकान्य**रक्तान्यपि यत आह **अपि चेत्स्युररक्तानि।** शिष्टं प्रसिद्धम्॥८७॥

(२) **सर्वज्ञनारायणः।** तन्तुकृतं पटादि कुसुम्भादिरक्तम्। शाणं शणसूत्रकृतं आविकमविरोमकृतम्। अरक्तमप्येतत्त्रयम्। फलप्रदं क्रीतपण्यफलपरम्। अन्यस्या**पस्तम्बेन** क्रीतपण्यमेव हरेत् मुञ्जवल्कलैर्मूलफलैरिति विक्रेतव्यतया विधानात्। औषधीस्त्रिवृदाद्याः॥ ८७॥

(३) **कुल्लूकः।** सर्वं तन्तुनिर्मितं वस्त्रं कुसुभादिरक्तं वर्जयेत्। शणक्षुमातन्तुमयान्याविकलोमभवानि च यद्यलोहितान्यपि भवेयुस्तथापि न विक्रीणीत; तथा **फलमूल**-गुडूच्यादीनि वर्जयेत्॥८७॥

(४) **राघवानन्दः।** तान्तवं कार्पासजं रक्तं चेत् शाणं शणविकारः। **क्षौमं क्षुमो**-द्भवम्। आविकं कम्बलादि। तान्तवे रक्ते प्रतिषेधः। शाणादिषु रक्तेष्वपीति **भावः।** फलमूले फलं ताम्बूलादि, मूलं लशुनादि, औषधीरपक्वाः॥ ८७॥

(५) **नन्दनः**। रक्तं रागरूषितं शाणक्षौमाविकानि रक्तान्यपि चेत्स्युस्तान्यपोहेत ।।८७।।

(६) **रामचन्द्रः**। सर्वं तान्तवं रक्तं रक्तवस्त्रं क्षौमाविकानि अरक्तानि ।।८७।।

(७) **मणिरामः**। तान्तवं तंतुनिर्मितं वस्त्रं रक्तं कुसुंभादिरक्तं वर्जयेत्। शाणक्षौमाऽऽविकानि अरक्तान्यपि ।। ८७ ।।

(८) **गोविन्दराजः**। **सर्वमिति**। सर्वतन्तुनिर्मितं रक्तं पट्टबृहतिकादि वर्जयेत् क्षौमौर्णातन्तुमयान्यलोहितान्यपि यदि भवेयुस्तथापि वर्जयेत्। तथा फलमूलद्रव्याद्यौषधीर् वर्जयेत् ।।८७।।

(९) **भारुचिः**। शाणादीनामरक्तार्थ आरम्भः। तथौषधयो विक्रेयाः ।। ८७ ।।

**अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।।**
**क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ।। ८८ ।।**

(१) **मेधातिथिः**। **शस्त्रं** खड्गपाशादि। **गन्धास्तगरोशीरचन्दनादयो** द्रव्यविशेषाः। रसशब्दवदेतद्द्रव्याख्येयम्। **क्षीरं** रसाविकारं स्मृत्यंतरप्रसिद्धमतो मस्तुकिलाटोदश्विदादीन्यपि न विक्रेयाणि **दधिघृत**ग्रहणं प्राधान्यादुपात्तम्। **मधु** मधूच्छिष्टमेकदेशलोपाद्देवदत्तो दत्त इतिवत्। स्मृत्यन्तरे हि तत्प्रतिषिद्धम्। इह च क्षौद्रशब्देन सारघस्य निषिद्धत्वात्। माध्वीकस्य च मद्यग्रहणेनोत्तरत्र प्रतिषेधात्। अन्ये तु माध्वीकस्यैवाप्राप्तमद्यावस्थस्य प्रतिषेधार्थं मधुशब्दं वर्णयन्ति–तदयुक्तम्, नायं निष्पीडितमृद्वीकारसवचनः। किं तर्हि ? मद्यरूपतयैव वर्तते। उभौ 'मध्वासवज्ञो वावि'ति प्रयोगदर्शनात्, क्षीबता मद्यकृतैव। गुडस्य रसत्वप्रतिषेधनिवृत्त्यर्थं ग्रहणम्। अन्ये तु खण्डमत्स्यण्डिकादीनामनुज्ञानार्थं व्याचक्षते ।। ८८ ।।

(२) **सर्वज्ञनारायणः**। अपो जलं। शस्त्रं लोहं। गन्धान् चन्दनादीन्। क्षारं यवक्षारादि। क्वचित्क्षीरमित्यपि पाठः। क्षौद्रं मधु मधूच्छिष्टं दधीति क्वचित्पाठः। मज्जा जन्तूनामस्थिपीतसार आकृष्टः। गुडस्य तदाकारत्वेऽपि दृढतयाऽफलत्वशङ्कां निरसितुं पुनरुक्तिः ।।८८।।

(३) **कुल्लूकः**। जललोहविषमांससोमक्षीरदधिघृततैलगुडदर्भान् तथा गन्धवन्ति सर्वाणि कर्पूरादीनि, क्षौद्रं माक्षिकं मधु मधूच्छिष्टं 'सभ्रामरमधूच्छिष्टे'ति **याज्ञवल्क्येन** (आ. २/३३) पठितं वर्जयेत् ।। ८८ ।।

(४) **राघवानन्दः**। शस्त्रं शृङ्गादिनिर्मितं लोहनिर्मितस्य लोहनिषेधेन निषिद्धत्वात्। विषं शैलजादि। सोमं सोमलताम्। गन्धान् गुग्गुलादीन्। क्षौद्रं माक्षिकं मधु मधूच्छिष्टं सिक्थम्। अत्र ये पुनरुक्ताः पदार्थास्तेषु प्रायश्चित्ताधिक्यं ज्ञेयम् ।।८८।।

(७) **मणिरामः**। लोहं क्षौद्रं माक्षिकं मधु मधूच्छिष्टं, सिक्थमिति यावत् ।।८८।।

(८) **गोविन्दराजः**। **अप** इति। उदकायुधविषमांससोमक्षीरदधिघृततैलगुडदर्भांस्तथा

गन्धवन्ति कर्पूरादीनि सर्वाणि क्षौद्रं च माक्षिकं मधु च मधूच्छिष्टं सिक्थकं तथा 'शस्त्रासव-मधूच्छिष्टे'ति याज्ञवल्क्येन पठितं वर्जयेत् ।।८८।।

(९) **भारुचिः।** क्षीरदधिघृतग्रहणमिह सर्वक्षीरविकारप्रदर्शनार्थम् । एवं च मस्तु .... लाटादीन्यपि विक्रेयाणि। क्षीरादीनां च प्राधान्यात् ग्रहणं प्रदर्शनार्थं युक्तम्, नतु परिसंख्यार्थम् । स्मृत्यन्तरे चोक्तम्–'क्षीरं सवितारमिति।' सशब्देन गुळ...धाय पूर्वश्लोके तत उपगुळग्रहणं नित्यार्थम् । एवं च तरुरसानां विकल्पेन प्रतिषेधः । अथ तु रसशब्देन गुळो न गृह्यते, तत एष रसानां विकल्पो नास्ति । एतेन मधु... ।।८८।।

**आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ।।**
**न नीलीं च लाक्षां च सर्वांश्चैकशफांस्तथा ।।८९।।**

**[त्रपु सीसं तथा लोहं तैजसानि च सर्वशः ।**
**बालांश्चर्म तथास्थीनि सस्नायूनि च वर्जयेत् ।।१।।]**

(१) **मेधातिथिः। आरण्यपशु**शब्दौ गुडलवणेनैव व्याख्यातौ । ग्राम्यपश्वानुज्ञानार्थम् । ग्राम्या अपि पशवो हिंसायां संयोग इति निषिद्धार्थः ।

**वयांसि** पक्षिणः । **एकशफा** अश्वाश्वतरगर्दभादयः । **दंष्ट्रिणः** श्वशूकरादयः ।

'बहूनि'ति 'तथा'शब्दस्थाने पठन्ति । एकस्य विक्रये तथा न दोषः ।।८९।।

(२) **सर्वज्ञनारायणः।** दंष्ट्रिणः कुक्कुराद्यान् ग्राम्यानपि । वयांसि पक्षिणः । नीलीं नीलीरोगः (?) ।।८९।।

(३) **कुल्लूकः।** आरण्यान्सर्वान्पशून्हस्त्यादीन्दंष्ट्रिणः सिंहादीन् तथा पक्षिजलजन्तून्म-द्यादीन् एकशफांश्चाश्वादीन् न विक्रीणीत ।।८९।।

(४) **राघवानन्दः।** दंष्ट्रिणः सूकरादीन् । वयांसि पक्षिणः । एकशफान् अश्वगर्दभा-दीन् ।।८९।।

(५) **नन्दनः।** दंष्ट्रिणो मार्जारादयः । एकशफा अश्वादयः ।।८९।।

[**नन्दनः।** तैजसानि कांस्यादीनि अस्थीनि गजदन्तादीनि । अत्र सामान्यतोऽपि निषेधो विशेषतश्च निषेधो दोषातिशयप्रकाशनार्थः ।।८९।।]

(६) **रामचन्द्रः।** आरण्यान्पशून् हस्त्यादीन् दंष्ट्रिणः सूकराद्यान् सर्वान् एतान् तथा एकशफान् वर्जयेत् ।।८९।।

(८) **गोविन्दराजः। आरण्यानिति।** आरण्यान् पशून् हस्त्यादीन् सर्वान् दंष्ट्रिणः सिंहादीन् एकशफानश्वादीन् तथा पक्षिमद्यनीलीलाक्षान् न विक्रीणीत ।।८९।।

(९) **भारुचिः।** बहूनित्यपरे पठन्ति । आरण्यपशुनिषेधो नित्यार्थः । एवं च 'पशवो ये च मानुषा' इत्य(तः) श्लोके ग्राम्यपशूनां विकल्पो विज्ञायते । अत्रापि चैकशफग्रहणा-

दश्वाश्वतरगर्दभानामविकल्पः । गोखुराणां (इति) ये तु पठन्ति—'सर्वांश्चैकशफान् बहूनिति'। एवं च सति तेषां विशेषार्थः पुनरारम्भः । एकशफा बहवो विक्रेयाः इति ।। ८९ ।।

**काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः ।।**
**विक्रीणीत तिलान् शुद्धान्धर्मार्थमचिरस्थितान् ।। ९० ।।**

(१) **मेधातिथिः** । "कृतान्नं च तिलैः सह" इति प्रतिषिद्धानां तिलानां स्वरूपप्रयोजनविशेषाश्रयः प्रतिप्रसवः ।

**शुद्धानचिरस्थितानिति** च स्वरूपविशेषः । **धर्मार्थमिति** प्रयोजनविशेषः । **शुद्धा** व्रीह्यादिभिरमिश्राः । कृशराद्यर्थं मिश्राणां विक्रयासंभवः । **अचिरस्थिताः** । अर्धादिकं लाभमनपेक्ष्य स्वल्पं मूल्यमद्य कालान्तरे चागामिनि बहु मूल्यं लभेयेत्येवं न प्रतीक्षितव्यम् । अथवा **शुद्धा** अकृष्णाः । कृष्णतिलानां प्रतिषेधः । **अचिरस्थितानिति** वेयमर्थः । चिरस्थितं हि कृष्णं भवति । कृष्णा उत्पाद्य क्रीत्वा न विक्रेयाः । **स्वयं कृष्यां कृषीवल इति** प्रायिकोऽनुवादो, न विवक्षितानि पदानि । प्रतिग्रहाद्यर्जितानामप्यप्रतिषेधः ।

धर्मप्रयोजने यत्र तिलान् विक्रीणीते । इह च रूपकैर्गावो दक्षिणाद्यर्थं स्वाध्यायाग्निहोत्राद्यर्थं क्रीयन्ते । व्रीह्यादयो वा दर्शपूर्णमासाद्यर्थं स धर्मार्थो विक्रयः । यस्य वा तिला एव दानादिधर्मायोपयुज्यन्ते, भेषजतैलोपयोगे वा क्रेतुः, सोऽप्येवमेव ।। ९० ।।

(२) **सर्वज्ञनारायणः** । तिलान्विक्रीणीत हिरण्येनापि । शुद्धान् बुसशून्यान् । धर्मार्थं क्रेता यदि दानाद्यर्थं क्रीणीते । अचिरस्थितान् लवनानन्तरमेव नतु लाभार्थं चिरं स्थापयित्वा । एवं च कृष्युत्पत्तिशुद्धत्वधर्मार्थत्वाचिरस्थत्वविशिष्टतिलविक्रयो ब्राह्मणस्याप्यापत्तिरिति दर्शितम् ।। ९० ।।

(३) **कुल्लूकः** । कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्तरेणामिश्रानुत्पत्त्यनंतरमेव नतु लाभार्थं कालान्तरं प्रतीक्ष्य धर्मनिमित्तमिच्छतो विक्रीणीत निषिद्धस्य तिलविक्रयस्य धर्मार्थमयं प्रतिप्रसवः ।। ९० ।।

(४) **राघवानन्दः** । तिलवाणिज्यं निषिद्धं कृष्युत्पन्नतिलान्प्रत्याह **काममिति** । शुद्धानन्यद्रव्यामिश्रितान् धर्मार्थं यज्ञादिकर्मनिमित्तं तदैव विक्रीणीत, नतु लाभार्थं चिरं संचिनुयात् ।। ९० ।।

(५) **नन्दनः** । तिलानां प्रतिप्रसवमाह **काममुत्पाद्य कृष्यान्त्विति** । शुद्धानिति विशेषणात्कृष्णानां प्रतिषेधः ।। ९० ।।

(६) **रामचन्द्रः** । विक्रीणीत हिरण्येनापि ।। ९० ।।

(७) **मणिरामः** । शुद्धान् केवलान् न तु द्रव्यांतरमिश्रितान् । अचिरस्थितान् उत्पत्त्यनंतरमेव नतु लाभार्थं कालांतरं प्रतीक्ष्य ।। ९०-९१ ।।

(८) **गोविन्दराजः** । **काममिति** । **विक्रीणीत तिलान् शुद्धान् धर्मार्थमचिरस्थितान्** ।

कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्तरेणामिश्रानुत्पत्तिकाल एव धर्मनिमित्तमिच्छतो विक्रीणीतेति 'कृतान्नं च तिलैः सहे'ति प्रतिषिद्धानामयं प्रतिप्रसवः ।। ९० ।।

(९) **भारुचिः।** तिलानां विक्रयप्रतिषेधादयं तेषां विशेषाश्रयो विक्रयप्रतिप्रसवः। शुद्धग्रहणं मिश्रीकृतान्यद्रव्यप्रतिषेधार्थम्। अथवा तिलशब्दस्यावधारणार्थत्वं दर्शयति। एवं च नेदमन्यधान्यप्रदर्श(नं) कारणस्य समानत्वादिति। धर्मार्थं नित्यकर्मसङ्गे पुत्रदारात्ययप्राप्तौ अचिरस्थितानित्यर्घप्रतीक्षणप्रतिषेधः। अस्यार्थवादः ।।९०।।

**भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः ।।**
**कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ।। ९१ ।।**

(१) **मेधातिथिः।** प्रकृततिलविशेषव्यतिरेकेण तिलविक्रयप्रतिषेधे विशेषोऽयमर्थवादः। "ननु चोक्तं प्रतिषेधानां दोषसूचनं फलतयैव संबध्यते। तत्किं **भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलः। कृमिभूत** इत्ययमर्थवाद" इति।

उच्यते। असंभविनः फलस्य शास्त्रान्तरेण विरुद्धस्य च श्रवणादेवमुच्यते। तथा पितृभिः सहेत्युच्यते, न च तैः किंचिदपराद्धम्। सुकृतदुष्कृतयोः फलं हि कर्तृगामि। न च पितॄणां कथंचिदपि कर्तृत्वमित्येतत्प्रागुक्तमेव। किंच "सद्यः पतति मांसेन" इति पतितत्ववचनं 'परेषां' न पातित्यमिति नियमात्। तस्मादस्ति किंचिदनिष्टमित्येतावन्मात्रं प्रतिषेधेन संबध्यते। यथाश्रुतमेव न युक्तम्। भोजनादिक्रिया यत्र सद्व्यतिरेकेण अदन्यद्विक्रयस्नानादि तत्र **तिलैर्यः कुरुते** स कृमित्वं प्राप्नोति यथोक्तेन दोषेण संयुज्यते ।। ९१ ।।

(२) **सर्वज्ञनारायणः।** यदन्यत्कुरुते विक्रयाद्यनापत्तौ ।। ९१ ।।

(३) **कुल्लूकः।** भोजनाभ्यङ्गदानव्यतिरिक्तं यदन्यन्निषिद्धं विक्रयादि तिलानां कुरुते, तेन पितृभिः सह कृमित्वं प्राप्तः कुक्कुरपुरीषे मज्जति ।। ९१ ।।

(४) **राघवानन्दः।** अत आह **भोजनेति।** अभ्यञ्जनं तैलादिना। दानपदं धर्मार्थतदर्थविक्रयोपलक्षकम्। **अन्यत्** क्रयविक्रयादि न कर्तव्यमित्यत्र तात्पर्यं पितृभिः सहेति विरुद्धफलश्रवणात् सुकृतदुष्कृतयोः फलं तु कर्तर्येवेतिनात्र पितृकृणामपराधः कश्चिदितिमैव (?) ।।९१।।

(५) **नन्दनः।** कुरुते विप्र इति शेषः ।। ९१ ।।

(६) **रामचन्द्रः।** भोजनात् अभ्यञ्जनात् दानात् तिलैः विक्रयं कुरुते स **पुरुषः** श्वविष्ठायां कृमिभूतः पितृभिः सह मज्जति ।। ९१ ।।

(८) **गोविन्दराजः। भोजनाभ्यञ्जनादिति।** भोजनाभ्यञ्जनदानव्यतिरिक्तमन्वयादन्नविक्रयादि यदि तिलानां कुरुते तदा पितृभिः सह कृमित्वं प्राप्तः श्वपुरीषे निमज्जतीति पूर्वव्यक्तिक्रमफलकथनम् ।। ९१ ।।

**सद्यः पतति मांसेन लाक्षया लवणेन च ।।**
**त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ।। ९२ ।।**

(१) **मेधातिथिः।** उक्तार्थः ॥ ९२ ॥

(२) **सर्वज्ञनारायणः।** पतति द्विजातिकर्मभ्यो हीयते। एतदेव स्पष्टीकृतं **शूद्रो भवतीति।** त्र्यहेणेति त्रिर्विक्रयणमुपलक्ष्यते ॥९२॥

(३) **कुल्लूकः।** मांसलाक्षालवणविक्रयैर्ब्राह्मणस्तत्क्षणादेव पततीति दोषगौरवव्याख्यानार्थमेतत्। पञ्चानामेव महापातकिनां पातित्यहेतूनां वक्ष्यमाणत्वात् क्षीरविक्रयात्त्र्यहेण शूद्रतां प्राप्नोति। एतदपि दोषगौरवात्प्रायश्चित्तगौरवख्यापनार्थम् ॥९२॥

(४) **राघवानन्दः।** उक्तद्रव्येषु कानिचिदनुवदन् तद्विक्रये [दोषमाह सद्य इति द्वाभ्याम्। त्र्यहेणाव्यवहितेन ] ॥९२॥

(५) **नन्दनः।** मांसेन विक्रीतेन ॥९२॥

(८) **गोविन्दराजः। सद्य** इति। मांसलाक्षालवणविक्रयी ब्राह्मणः तत्क्षणादेव पतितो भवतीति दोषगौरवख्यापनार्थम्। एतत् पञ्चानामेव महापातकानां पातित्यनियमादेतद्विक्रये **वा पण्यानां** च विक्रय इति उपपातकप्रायश्चित्तस्य लघुतादर्शनात्। एतेन त्र्यहक्षीरविक्रयात् शूद्रतां प्राप्नोति इत्येतदपि व्याख्यातम्। तथा वैश्यभावगमनं च वक्ष्यमाणम् ॥९२॥

(९) **भारुचिः।** सद्यः विक्रयकाले एव ॥९२॥

**इतरेषां तु पण्यानां विक्रयादिह कामतः ॥**
**ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥ ९३ ॥**

(१) **मेधातिथिः। कामत** इति वचनादनापदीत्यनुमीयते। गुरुलघुत्वदर्शनं मांसादीनां प्रायश्चित्तविशेषार्थम्। गुरुणि गुरूणि लघुनि लघूनीति वक्ष्यामः ॥९३॥

(२) **सर्वज्ञनारायणः।** इतरेषामपण्यानां कृतान्नादीनां निषिद्धानां कामतोऽकामतस्तु **पापमात्रम्** ॥९३॥

(३) **कुल्लूकः।** ब्राह्मण उक्तेभ्यो मांसादिभ्योऽन्येषां प्रतिषिद्धानां पण्यानामिच्छातो **नतु प्रमादाद्द्रव्यान्तरसंश्लिष्टानां** सप्तरात्रविक्रयणेन वैश्यत्वं गच्छति ॥९३॥

(४) **राघवानन्दः।** इतरेषां निषिद्धानां पण्यानां विक्रयिणां ॥९३॥

(५) **नन्दनः।** अपण्यानामविक्रेयाणां कामतः अनापदि ॥९३॥

(६) **रामचन्द्रः।** इतरेषां पण्यवस्तूनाम् ॥९३॥

(७) **मणिरामः।** इतरेषां मांसादिभ्यः अन्येषां निषिद्धानां ॥९३॥

(८) **गोविन्दराजः। इतरेषामिति।** उक्तदोषेभ्यो मांसादिभ्योऽन्येषां **प्रतिषिद्धानां पण्यानां** इच्छातो नतु प्रमादादन्यद्रव्यसंपृक्तानां सप्तरात्रविक्रयेण ब्राह्मणो **वैश्यत्वं** प्राप्नोति ॥ ९३ ॥

(९) **भारुचिः।** मांसादीनां श्लोकद्वयेन गुरुलघुत्वप्रदर्शनं प्रायश्चित्तार्थं विज्ञेयम्। गुरुणि गुरुप्रायश्चित्तं यथा स्यात् लघु लघ्विति" ॥ ९३ ॥

**रसा रसैर्निमातव्या न त्वेव लवणं रसैः ।।**
**कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः ।।९४।।**

(१) **मेधातिथिः** । **रसाः** पूर्वोक्तास्ते **रसैर्निमातव्याः** । मधुररसं गुडादि दत्वाऽऽम्लादि-रसमामलक्यादि ग्रहीतव्यम् । **न** केवलं **लवणं** दत्वा रसान्तरमादेयम् । पाठांतरं 'लवणं तिलैरिति' । अस्मिन्पाठे तिलैरेव लवणस्य प्रतिषेधो न रसान्तरैः । **कृतान्नं** सक्त्वोदनाद्यन्नेन पायसापूपादिना निमातव्यम् । **तिलास्तु धान्येन** व्रीह्यादिना **तत्समाः** । प्रस्थं दत्वा प्रस्थ एव ग्रहीतव्यो नार्थापेक्षयाऽधिकं वाऽऽदेयम् । 'विनिमयो' नाम विक्रय एव । क्रीणातिस्तु द्रव्यविनिमये पठयते । न हि तद्युक्तम्, "विक्रये प्रकृतिविनिमयमस्त्विति" गौतमो भेदं दर्शयति । एवं तर्हि प्रसिद्धेन रूपकादिना द्रव्यार्पणं 'विक्रयः' । तदन्यद्रव्यपरिवृत्ती 'विनिमयः' ।। ९४ ।।

(२) **सर्वज्ञनारायणः** । रसा गुडादयो रसैर्निमातव्याः । परिवर्तनेन ग्राह्याः । लाभ-प्रेप्सया इयत्तानवधारणेन ग्रहणं विनिमयो विक्रयस्त्वियत्तावधारणेन लाभेच्छयेति विशेषः । तत्र रसानां रसैर्विनिमयः कार्यो नतु विक्रयः । लवणं तु मृन्निर्यासतया रसभूतं विनिमेयमपि न रसैः । कृतान्नं सक्त्वाद्यकृतान्नेन यवादिना विनिमेयम् । नतु नेत्यत्रान्वितमप्राप्तार्थनिषेधा-योगात् । तिला धान्येनेति स्वयं कृष्याद्युत्पादितत्वाद्यभावेऽपि धान्यैर्विनिमये नास्ति दोष इत्यर्थः । किंतु तत्समानन्यूनाधिकाः ।। ९४ ।।

(३) **कुल्लूकः** । रसा गुडादयो रसैर्घृतादिभिः परिवर्तनीयाः, लवणं पुनः रसान्तरेण न परिवर्तनीयं सिद्धान्नं चामान्नेन परिवर्तनीयं, तिला धान्येन धान्यप्रस्थः प्रस्थेनेत्येवं तत्समाः परिवर्तनीयाः ।। ९४ ।।

(४) **राघवानन्दः** । [विप्रक्षत्रिययोरुक्तरसादिपरिवर्तनेन दोष इति] वदन् वाच-निकप्रतिनिधीनाह **रसा इति** । अकृतान्नेनामेन ।। ९४ ।।

(५) **नन्दनः** । अथ रसादीनां विक्रयोपायमाह **रसा रसैर्निमातव्या इति** । रसा रसैः कृतान्नं कृतान्नेन धान्येन तिलाश्च निमातव्या व्यत्येतव्याः तत्समः समपरिमाणः लवणं रसैर्नतु निमातव्यम् ।। ९४ ।।

(६) **रामचन्द्रः** । रसै रसा निमातव्याः मानं परस्परं कर्तव्याः अन्यरसैः लवणं न । अकृतान्नेन कृतान्नं तिला धान्येन तत्समाः ।। ९४ ।।

(७) **मणिरामः** । रसाः गुडादयः । रसैः घृतादिभिः । निमातव्याः परिवर्तनीयाः । गुडादिकं दत्त्वा घृतादिकं ग्राह्यं । तथा घृतादिकं दत्त्वा गुडादिकं ग्राह्यमिति परस्परं परिवर्तनं न विक्रेयमित्याशयः । लवणं तु रसांतरेणापि न परिवर्तनीयं ।। ९४ ।।

(८) **गोविन्दराजः** । **रसा** इति । रसा गुडादयो रसैर्घृतादिभिः परिवर्तनीयाः । लवणं पुना रसान्तरेण न परिवर्तनीयम् । सिद्धान्नमसिद्धान्नेन परिवर्तनीयम् । तिला धान्येन प्रस्थः प्रस्थेनेत्येवं विनिमातव्याः ।। ९४ ।।

(९) **भारुचिः** । लवणस्य तिलैर्नियमप्रतिषेधाद्रसैरन्यैस्तिला निमातव्याः। तिला धान्येन व्रीह्यादिना धान्येन तत्सममेव (प्रस्थं) प्रस्थे (न) निमातव्याः न त्वास्थितया ।।९४।।

**जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः ।।**
**न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ।।९५।।**

(१) **मेधातिथिः** । **एतेन सर्वेणापि** । प्रतिषिद्धपण्यप्रतिप्रसवोऽयं राजन्यस्य । न किंचित्तस्याविक्रेयं वैश्यवत् । किंतु सत्यपि स्ववृत्तित्यागे **न ज्यायसीं** ब्राह्मण**वृत्तिं** कदाचिद**प्यभिमन्येत** । इमां करोमीति चेतसि न कुर्यात् ।

प्रतिकूलं दैव**मनयः** । एतदापदुपलक्षणार्थम् । **गतः** प्राप्तः, आपद्गत इति यावत् ।।९५।।

(२) **सर्वज्ञनारायणः** । एतेन सर्वेण निषिद्धेनापि रसादिना विक्रीतेन अनयमवृत्तिम् । ज्यायसीं ब्राह्मणस्य वृत्तिं प्रतिग्रहादि अभिमन्येत स्वीकुर्यात् ।।९५।।

(३) **कुल्लूकः** । क्षत्रियः आपदं प्राप्तः 'एतेने'त्यभिधाय 'सर्वेणे'त्यभिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन वैश्यवज्जीवेत् न पुनः कदाचिद्ब्राह्मणजीविकामाश्रयेत् । न केवलं क्षत्रियः क्षत्रियवदन्योऽपि ।।९५।।

(४) **राघवानन्दः** । आपद्गतक्षत्रियस्य तु वैश्यवृत्तिमनुवदन् [विप्र]वृत्तिं निषेधति **जीवेदिति** । सर्वेण निषिद्धविक्रयेणापि अत एवास्य मांसादिविक्रयो न पातित्यहेतुः । अतस्तत्प्रकरणे ब्राह्मणपदम् । अनयमापदम् । ज्यायसीं अध्यापनयाजनादिकाम् । अन्नप्रतिलोमपरिणयनवत्प्रतिलोमवृत्तिरपि निषिद्धा । यत्त्वापत्काले क्षत्रियादप्यध्ययनं अब्राह्मणादध्ययनमापत्काले विधीयत इति विप्रस्य तद्विप्राकांक्षाप्रयुक्तत्वान्न तस्य जीविकाद्यर्थतेति भावः।।९५।।

(५) **नन्दनः** । अनयमापदं, एतेन वाणिज्येन सर्वेण प्रतिषिद्धद्रव्यविक्रयेणापीत्यर्थः; ज्यायसीं वृत्तिं ब्राह्मणवृत्तिम् ।। ९५ ।।

(६) **रामचन्द्रः** । अनयं गतः आपद्गतः ज्यायसीं विप्रसंबन्धिनीं वृत्तिं कर्हिचित् ।।९५।।

(७) **मणिरामः** । राजन्यः क्षत्रियः । अनयं गतः आपदं प्राप्तः, एतेन सर्वेण । ब्राह्मणस्य यन्मांसादिविक्रयणं निषिद्धं तेनापि जीवेत् । नतु ज्यायसीं वृत्तिं ब्राह्मणवृत्तिं अध्यापनादिकां अभिमन्येत अंगीकुर्यात् ।। ९५ ।।

(८) **गोविन्दराजः** । **जीवेदिति** । क्षत्रिय आपदं प्राप्त एतद्रसादि सर्वं द्रव्यादिविक्रयेणापि जीवेन्न तु कदाचिद् ब्राह्मणजीविकामाश्रयेत् ।। ९५ ।।

(९) **भारुचिः** । सर्वेणेत्ययं प्रतिषिद्धः,...रण्यप्रतिप्रसवः पूर्वेणाजीविनः । ज्यायस्या वृत्तेः प्रतिषे(धो) नित्यानुवादः । 'न त्वेव ज्यायसीं वृत्ति'मिति यदुक्तं तस्य प्रतिषेधस्य निन्दार्थवादः ।। ९५ ।।

**यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः ।।**
**तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ।। ९६ ।।**

(१) **मेधातिथिः । यो जात्याऽधमो** निकृष्टः क्षत्रियादिः । सत्यपि प्रकृतत्वे राजन्यस्य, सर्वेषामयं ब्राह्मणवृत्तिप्रतिषेध एवमेवायं श्लोकः । **उत्कृष्टो** निरपेक्षो ब्राह्मण एव । **कर्मभि**रध्ययनादिभिर्जीवति । दण्डचोऽयं सर्वस्वग्रहणप्रवासनैः ।। ९६ ।।

(२) **सर्वज्ञनारायणः** । एवं वैश्यादेरपि क्षत्रधर्मग्रहो निषिद्ध इत्याह **य इति** ।। ९६ ।।

(३) **कुल्लूकः** । यो निकृष्टजातिः सँल्लोभादुत्कृष्टजातिविहितकर्मभिर्जीवेत्तं राजा गृहीतसर्वस्वं कृत्वा तदानीमेव देशान्निःसारयेत् ।। ९६ ।।

(४) **राघवानन्दः** । तत्रैवं दृष्टादृष्टार्थं सामान्योक्तिमाह **य इति** द्वाभ्याम् । जात्या क्षत्रियत्वादिनाधमः । उत्कृष्टकर्मभिः उत्कृष्टाः पूर्वपूर्वेण तेषां कर्मभिः । प्रवासयेत् बहिर्निर्वासयेत् ।। ९६ ।।

(६) **रामचन्द्रः** । जात्या अधमः उत्कृष्टकर्मभिर्न जीवेत् ।। ९६-९७ ।।

(७) **मणिरामः** । प्रवासयेत् देशान्निष्कासयेत् ।। ९६ ।।

(८) **गोविंदराजः** । **य इति** । यो निकृष्टजातिः संल्लोभादुत्कृष्टजातिनोदितमकर्मभिर्जीवेत्तं राजा सर्वस्वमपहृत्य तदानीमेव देशान्निर्वासयेत् ।। ९६ ।।

(९) **भारुचिः**। तस्य सर्वस्वमपहृत्य प्रवासनं नियमेन कुर्यात् । धार्मिको राजा । यद्यपि चैतत् प्रकरणसामर्थ्यात् क्षत्रियविषयं शास्त्रं, तथापि समानत्वात् कारणस्य वैश्यशूद्रयोरपि विज्ञेयम् ।। ९६ ।।

**वरं स्वधर्मो विगुणः परधर्मात्स्वधिष्ठितात् ।।**
**परधर्मेण जीवन्हि सद्यः पतति जातितः ।।९७ ।।**

(१) **मेधातिथिः** । पूर्वस्य विधेर्निन्दार्थवादोऽयम् । यो यस्य विहितो **धर्मो** जात्याश्रयेण **विगुणो**ऽप्यपरिपूर्णाङ्गोऽपि युक्तोऽनुष्ठातुम् । न परधर्मः सर्वाङ्गसंपूर्णोऽपि । अत्र निन्दार्थवादः **परधर्मेणेति** ।। ९७ ।।

(२) **सर्वज्ञनारायणः**। अत्र वैश्यवृत्तेरुक्ताया वरमशुद्धात्प्रतिग्रहो विगुणीभूतापि स्ववृत्तिः स्ववृत्तितया प्रशस्तेत्यवतारयति **वरमिति**। पतति जातितः स्वानन्तरजातितुल्यतां याति ।। ९७ ।।

(३) **कुल्लूकः** । विगुणमपि स्वकर्म कर्तुं न्याय्यं, न परकीयं संपूर्णमपि यस्माज्जात्यन्तरविहितकर्मणा जीवंस्तत्क्षणादेव स्वजातितः पततीति दोषो वर्जनार्थः ।। ९७ ।।

(४) **राघवानन्दः** । पारक्यः परकीयः स्वनुष्ठितः साङ्गोऽपि न श्रेयान् । 'स्वधर्मो विगुणः श्रेयान् परधर्मो भयावहः' (भ. गी. ३।३५)इति स्मृतेः। जातितः कर्म जात्यन्तरप्राप्त्या जात्यन्तरं जायते, ततः साम्यादिति **मनुभट्टोक्तेः** ।। ९७ ।।

(५) **नन्दनः**। वरशब्द उत्कृष्टवचनः ।। ९७ ।।

(७) **मणिरामः** । स्वनुष्ठितः संपूर्ण अपि ।। ९७ ।।

(८) **गोविन्दराजः।** **वरमिति।** स्वकर्म विगुणमपि कर्तुं न्याय्यं न तु परकीयं संपूर्णमपि। यस्मादपरनोदितकर्मणा जीवंस्तत्क्षणादेव जातितः पततीति निन्दातिशयो वर्जनार्थम्॥ ९७॥

(९) **भारुचिः।** अयमपरो निन्दार्थवादः। उत्कृष्टवर्णवृत्त्यनुष्ठानप्रतिषेधैः स्वधर्मः परधर्म इति प्रकरणात्तु वृत्तिविषयो धर्मशब्दः॥ ९७॥

**वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्तयेत्॥**
**अनाचरन्नकार्याणि निवर्तेत च शक्तिमान्॥ ९८॥**

(१) **मेधातिथिः।** **स्वधर्मेणाजीवतो** वैश्यस्य शूद्रवृत्तिरनुज्ञायते। पादधावनादिशुश्रूषया। **अनाचरन्नकार्याणि।** उच्छिष्टापमार्जनाद्य'कार्यम्', तत्परिहर्तव्यम्। **शक्तिमान्निवर्तेतेति** सर्वशेषः। अत्र केनचिदुक्तम् सामर्थ्यात् ब्राह्मणक्षत्रिययोरप्येतददतिदिश्यते। तत्रापरेण संदिह्यते। कथं शूद्रवृत्तिं ब्राह्मणः कुर्यात्? एवं हि श्रूयते—"उत्कृष्टं चापकृष्टं च विद्येते कर्मणो तयोः। मध्यमे कर्मणो हित्वा सर्वसाधारणे हि ते" इति—तदयुक्तम्; न त्वस्यायमर्थो ब्राह्मणस्य शूद्रवृत्तिरनुज्ञायते सामर्थ्यादिति। किं तर्हि? **निवर्तेत च शक्तिमानिति** यदस्माभिरुक्तं सर्वशेष इति॥ ९८॥

(२) **सर्वज्ञनारायणः।** अकार्याण्युच्छिष्टभक्षणादीनि। निवर्तेत शक्तिमान् यदि जीवन् शक्तः प्रकारान्तरेण तदा न कुर्यादित्यर्थः॥ ९८॥

(३) **कुल्लूकः।** वैश्यः स्ववृत्त्या जीवितुमशक्नुवन् शूद्रवृत्त्यापि द्विजातिशुश्रूषयोच्छिष्टभोजनादीन्यकुर्वन्वर्तेत निस्तीर्णापत्क्रमशः शूद्रवृत्तितो निवर्तेत॥ ९८॥

(४) **राघवानन्दः।** विप्रराजन्ययोरापद्धर्ममुक्त्वा वैश्यशूद्रयोरप्याह **वैश्य** इति त्रिभिः। अजीवन्निति च्छेदः। अकार्याणि उच्छिष्टभक्षणादीनि। निवर्तेत शूद्रवृत्तेः। शक्तिमान् लब्धस्ववृत्तिश्चेत् लब्धवृत्त्योर्विप्रक्षत्रिययोरपि निवृत्तिः प्रायश्चित्तपूर्विका शक्तिमानित्यनेन सूचिता॥ ९८॥

(५) **नन्दनः।** अजीवन्निति पदं, अकार्याण्यभक्ष्यभक्षणादीनि शक्तिमानापद्विमुक्तः निवर्तेत शूद्रवृत्तितः॥ ९८॥

(६) **रामचन्द्रः।** वैश्यः स्वधर्मेणाजीवन् शूद्रवृत्त्यापि वर्तयेत् अकार्याणि उच्छिष्टभक्षणादीनि न कुर्यात् शक्तिमान्निस्तीर्णापत् क्रमशः शूद्रवृत्त्या निवर्तेत॥ ९८॥

(७) **मणिरामः।** शूद्रवृत्त्या त्रिवर्णसेवोच्छिष्टभोजनादिरूपया वर्तेत। जीवेत शक्तिमान् निस्तीर्णापत्॥ ९८॥

(८) **गोविन्दराजः।** **वैश्य** इति। वैश्यः स्ववृत्त्या जीवन् शूद्रवृत्त्यापि द्विजशुश्रूषया उच्छिष्टभोजनादीनि अकार्याण्यकुर्वन् जीवेन्निस्तीर्णापत्कालः शूद्रवृत्तितो निवर्तेत॥ ९८॥

(९) **भारुचिः।** सामर्थ्याद् ब्राह्मणक्षत्रिययोरप्येतदिष्यते॥ ९८॥

**अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ॥**
**पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः ॥ ९९ ॥**

(१) **मेधातिथिः**। **कारुकाः** शिल्पिनः सूदतन्तुवायादयः। तेषां कर्माणि पाकवयनादीनि प्रसिद्धानि । **तैर्जीवेत्** । **पुत्रदारात्यय**स्तद्भरणासमर्थता । एतेन धनतन्त्रभंगेन तस्यापदि विवाहादिकर्मणामेषां विधानान्निकृष्टताऽनुमीयते ॥ ९९ ॥

(२) **सर्वज्ञनारायणः** । पुत्रदारात्ययं प्राप्तस्तेषां जीवनाभावेन कर्तुमशक्नुवन् । कारुकाणां विशिष्टकर्मकराणां चित्रकारादीनां कर्मभिः ॥ ९९ ॥

(३) **कुल्लूकः**। शूद्रः द्विजातिशुश्रूषां कर्तुमक्षमः क्षुदवसन्नपुत्रकलत्रः सूपकारादि-कर्मभिर्जीवेत् ॥ ९९ ॥

(४) **राघवानन्दः**। पुत्राद्यत्ययं नाशं ॥ ९९ ॥

(५) **नन्दनः**। शूद्रस्यापद्वृत्तिमाह **अशक्नुवंस्तु शुश्रूषामिति**। अशक्नुवन्वृत्तिहान्येति शेषः ॥ ९९ ॥

(६) **रामचन्द्रः**। पुत्रदारात्ययं प्राप्तः भृत्यभावेन जीवनम् ॥ ९९ ॥

(७) **मणिरामः**। पुत्रदाराऽत्ययं प्राप्तः। क्षुत्पीडितपुत्रकलत्रे । कारुककर्मभिः सूपकारादिभिः ॥ ९९ ॥

(८) **गोविन्दराजः**। **अशक्नुवन्निति**। शूद्रो द्विजातिशुश्रूषया अजीवन् क्षुदवसन्नात्मकलत्रः सूपकारकर्मभिर्जीवेत् ॥ ९९ ॥

(९) **भारुचिः**। एतस्माच्च विज्ञायते शूद्रकर्मभ्यः कारुककर्माण्यत्यन्तनिकृष्टानि। वर्णापसदानां वृत्तिः ॥ ९९ ॥

**यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ॥**
**तानि कारुककर्माणि शिल्पानि विविधानि च ॥ १०० ॥**

(१) **मेधातिथिः**। **प्रचरितै**रनुष्ठितैः। **शुश्रूष्यन्ते** सेव्यन्ते। तदुपयोगीनि यानि **कर्माणि शिल्पानि**। यद्यपि शिल्पमपि कारुकर्मैव, तथापीह भेदेनोपादानात्तक्षकिवर्धकिप्रभृतयः कारवस्तेषां कर्माणि तक्षणवर्धनादीनि। **शिल्पानि** पत्रच्छेदरूपकर्माण्यालेख्यानि ॥ १०० ॥

(२) **सर्वज्ञनारायणः**। शिल्पानि पटनिर्माणादीनि ॥ १०० ॥

(३) **कुल्लूकः**। पूर्वोक्तकारुकर्मविशेषाभिधानार्थमिदं यैः कर्मभिः कृतैर्द्विजातयः परिचयन्ते तानि च कर्माणि तक्षणादीनि शिल्पानि च चित्रलिखितादीनि नानाप्रकाराणि कुर्यात् ॥ १०० ॥

(४) **राघवानन्दः**। यैः कटघटनिर्माणैः सुरचितैः सुष्ठुकृतैः शुश्रूष्यन्ते शुश्रूषामाप्नुवन्ति। द्विजात्यपेक्षितकारुककर्माणि कुर्यादिति भावः ॥ १०० ॥

(५) **नन्दनः** । कानि पुनस्तानि कारुकर्माणीत्याह **यैः कर्मभिः सुचरितैरिति** । शिल्पानि सुवर्णलोहच्छत्रादिकरणानि ।। १०० ।।

(६) **रामचन्द्रः** । सामान्यतः सर्वं कारुकर्म प्राप्तौ विशेषमाह **यैरिति** । तथा च यैः कारुककर्मभिर्ब्राह्मणादीनां सेवा भवति तानि तक्षणादीन्येव कुर्यात्, नान्यानीत्यर्थः ।। १०० ।।

(८) **गोविन्दराजः । यैरिति** । यैः कर्मभिरनुष्ठितैः द्विजातयः परिचर्यन्ते तानि कारुककर्माणि तक्षणादीनि शिल्पानि च लाक्षादीनि नानाप्रकाराणि कुर्यात् ।। १०० ।।

(९) **भारुचिः** । कारुककर्माणि शिल्पानि विविधानि च कारुककर्माणि वर्धकिलोहकारादिनानाशिल्पान्यालेख्यादीनि आपत्काले शूद्रवृत्त्यर्थमिदं श्लोकद्वयं प्रकरणसामर्थ्याद्विज्ञेयम् ।। १०० ।।

**वैश्यवृत्तिमनातिष्ठन्ब्राह्मणः स्वे पथि स्थितः ।।**
**अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् ।। १०१ ।।**

(१) **मेधातिथिः । अनातिष्ठन्निच्छया** । एतदुक्तं भवति— क्षत्रवृत्त्यसंभवे यदि वा वैश्यवृत्तिमाचरेदसत्प्रतिग्रहं वा । तुल्ये एते वृत्ती । असत्प्रतिग्रहात्क्षत्रवृत्तिः श्रेयसी । अथवाऽ**नातिष्ठन् वैश्यवृत्तिम**संभवे । ततश्चासत्प्रतिग्रहो वैश्यवृत्तेर्हीनतरः । **स्वे पथि स्थित** इति ब्रुवन्नापद्वृत्तीनां समुच्चयोऽस्तीति ज्ञापयति । **अवृत्त्या कर्षितः । सीदन्न**वसादं प्राप्नुवन् ।। १०१ ।।

(२) **सर्वज्ञनारायणः । वरं स्वधर्म इति** । यदुक्तं तत्स्फारयति **वैश्येति** । स्वे पथि स्ववृत्तौ स्थित उद्यतः, अत एव क्षत्रवृत्तिमप्यनातिष्ठन् । इमं वक्ष्यमाणम् ।। १०१ ।।

(३) **कुल्लूकः** । ब्राह्मणो वृत्त्यभावपीडितोऽवसादं गच्छन्क्षत्रियवैश्यवृत्तिमनातिष्ठन् 'स्वधर्मो वरमविगुण' इत्युक्तत्वात् । स्ववृत्तावेव वर्तमान इमां वक्ष्यमाणां वृत्तिमनुतिष्ठेत्, अतश्च विगुणप्रतिग्रहादिस्ववृत्त्यसंभवे परवृत्त्याश्रयणं ज्ञेयम् ।। १०१ ।।

(४) **राघवानन्दः** । किंचान्यत् वैश्यवृत्त्याऽपरितुष्यतो ब्राह्मणस्य स्ववृत्तौ स्वाच्छन्द्यमाह **वैश्येति** द्वाभ्याम् । स्वे पथि वेदाभ्यासादौ । इममसत्प्रतिग्रहाख्यम् ।। १०१ ।।

(५) **नन्दनः** । अथ ब्राह्मणस्यापद्यप्यनाश्रितवृत्त्यन्तरस्य स्वधर्मनिरतस्य कर्तव्यमाह **वैश्यवृत्तिमनातिष्ठन्निति** स्वे पथि स्वे धर्मे, इमं वक्ष्यमाणम् ।। १०१ ।।

(६) **रामचन्द्रः** । ब्राह्मण इति क्षत्रियस्याप्युपलक्षणम् । इमं वक्ष्यमाणलक्षणम् ।।१०१।। 'स्वधर्मो विगुणः श्रेयानि'त्युक्तान्निदितं स्वकर्ममेव कर्तव्यं नान्यत्कर्मभि(र्मे)त्याह **वैश्यवृत्तिमिति** । इमं वक्ष्यमाणं ।। १०१ ।।

(८) **गोविन्दराजः । वैश्यवृत्तिमिति** । ब्राह्मणवृत्त्यभावपीडितोऽवसादं गच्छन् क्षत्रियवैश्यवृत्तिमनुतिष्ठन् स्ववृत्तौ वर्तमान इदं वक्ष्यमाणं वृत्तिकर्मानुतिष्ठेत् । अतश्च परवृत्तितोऽसत्प्रतिग्रहो ब्राह्मणस्य श्रेयांस्तदुक्तं 'वरं स्वधर्मो विगुण' इति ।। १०१ ।।

(९) **भारुचिः**। स्वे पथि स्थित इति च लिङ्गात् क्षत्रियवृत्तिमप्यनातिष्ठन् इति गम्यते, न तु समुच्चयेन ।। १०१ ।।

**सर्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयं गतः ।।**
**पवित्रं दुष्यतीत्येतद्धर्मतो नोपपद्यते ।। १०२ ।।**

(१) **मेधातिथिः**। **सर्वत** इति प्रतिग्राह्यजातिगुणानामपेक्षा न कर्तव्या। अत्रापि हीनहीनतरहीनतमेषु क्रमेण पूर्वपूर्वाभावे उत्तरोत्तरप्राप्तिरस्त्येव। यथा क्षत्रवृत्त्यभावे वैश्यवृत्तिः। **पवित्रं** गङ्गास्रोतस्तदमेध्यसंसर्गे न **दुष्यति**। "नदी वेगेन शुध्यति" इत्युक्तम्। एवं ब्राह्मणोऽपीति ।। १०२ ।।

(२) **सर्वज्ञनारायणः**। पवित्रं वन्ह्यादि। धर्मतो धर्मबलात् ।। १०२ ।।

(३) **कुल्लूकः**। ब्राह्मण आपदं प्राप्तः सर्वेभ्योऽपि निन्दिततमेभ्यः क्रमेण प्रतिग्रहं कुर्यात्। अत्रार्थान्तरन्यासो नामालङ्कारः। यस्मात्पवित्रगङ्गादिरथ्योदकादिना दुष्यतीत्येतच्छास्त्रस्थित्या नोपपद्यते ।। १०२ ।।

(४) **राघवानन्दः**। अनयं मरणम्, पवित्रं वेदाभ्यासेन सर्वदा पूतो विप्रः प्रकरणात्पवित्रं वन्ह्यादिदृष्टान्तीवाधर्मतो धर्मशास्त्रात्स्वधर्मत्वाद्वा यत्पवित्रं तन्न दुष्यति न दुष्टमिति प्रमितम् ।। १०२ ।।

(५) **नन्दनः**। सर्वतः अप्रतिग्राह्यादपि प्रतिगृह्णीयादिति याजनाध्यापनयोरप्युपलक्षणम् ।। १०२ ।।

(६) **रामचन्द्रः**। अनयं गतः आपद्गतः धर्मतः पवित्रं द्विजं न दुष्यति एतदुपपद्यते युक्तमेव ।। १०२ ।।

(७) **मणिरामः**। निंदितस्वकर्म (मैं) मेवाह **सर्वत इति**। सर्वतः निंदिततरनिंदिततमेभ्यः। अर्थांतरेणैतद्दृढयति **पवित्रमिति**। यस्मात् पवित्रं वस्तु गंगादि अपवित्रेण रथ्याजलादिना दुष्यति एतत् धर्मतः शास्त्रस्थित्या न उपपद्यते ।। १०२ ।।

(८) **गोविन्दराजः**। **सर्वत** इति। ब्राह्मण आपद्गतः निन्दितानिन्दितमेभ्यः क्रमेण प्रतिग्रहं कुर्याद् यस्मात् पवित्रगङ्गादिरथ्योदकादि न दुष्यत्येतच्छास्त्रस्थित्या नोपपद्यते। तच्च ब्राह्मण आपद्यसत्प्रतिग्रहेण न प्रत्यवैति ।। १०२ ।।

(९) **भारुचिः**। यथैव च वर्णान्तरकर्मानुष्ठान...नन्तरमस्य क्रमेणोक्तम् एवं प्रतिग्राह्याण्याप्ये .. शस्त्रानां गुरुलघुत्वाल्लघोरभावे असत्प्रतिग्रहोऽपि गुरोः सकाशात् स्यादिति। एवं च...प्रशस्तः स्यात्। तदभावे अप्रशस्ततरात् तस्याप्यभावे अप्रशस्ततमात्। तथा च वक्ष्यति-'सर्वस्वं वा वेदविदे ब्राह्मणायोपपादये'दिति। यदि चैतदेवं न स्यात् तेन्न तर्ह्ययं ब्रह्महत्याप्रायश्चित्तोपदे(शोऽ)नर्थकः स्यात्; न चैतदिष्टम्। अतो यथोक्त एव शास्त्रार्थः। पवित्रं च ...... दुष्यतीत्ययमापद्धर्मस्तुत्यर्थवादः ईषत्प्रत्यवायहेतुर्वेति कृत्वा। अथवा प्राणधारणस्य प्रयोजनातिशयदर्श(नमनर्थकं) स्यात् येन जीवन्नयं शक्ष्यति ह्यतिक्रमाकुशलञ्च निहर्तुमिति ।। १०२ ।।

**नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ॥**
**दोषो भवति विप्राणां ज्वलनांबुसमा हि ते ॥ १०३ ॥**

(१) **मेधातिथिः**। पूर्वेणासत्प्रतिग्रह उक्तः। अनेन याजनाध्यापने अनुज्ञायेते। **गर्हितादिति** सिंहावलोकितवत्पूर्वाभ्यामप्यभिसंबध्यते। यथाग्निरापश्च सर्वत्र शुद्धा एवं ब्राह्मणा अपीति प्रशंसा। केचिदाहुः—असत्प्रतिग्रहवदसद्याजनाध्यापने अप्यनुज्ञायेते। यद्य-भविष्यतां, तदा पूर्वश्लोक एव प्रतिग्रहवदपठिष्यताम्। इह तु विधिप्रत्यवायाभावा**द्दोषो भवति विप्राणा**मिति। वर्तमानप्रत्ययेन सिद्धव्यपदेशादर्थवादताप्रतीतेः। किंच प्रतिवचनं तावदर्थवादः, पूर्वेण सिद्धत्वात्तदेकवाक्यत्वापत्तेर्याजनाध्यापने अप्येवं भवितुमर्हतः। वयं तु ब्रूमोऽसंभवेऽसत्प्रतिग्रहस्य तत्रापि वृत्तिर्युक्ता। यतः प्रवृत्तिः स्मर्यते। 'यथाकथंचित्स आत्मानमुद्धरेदन्यत्र प्रत्यवायेभ्यः'। कर्मार्थस्त्वापद्धर्मपाठः ॥ १०३ ॥

(२) **सर्वज्ञनारायणः**। गर्हितादिति त्रिष्वन्वितम्। विप्राणां वेदविद्यावताम्। यथा ज्वलनोऽशुचीनपि दहन् अप्पूरनद्यादिर्मलक्षालनं कुर्वन्नपि न दुष्यति ॥ १०३ ॥

(३) **कुल्लूकः**। यस्मात् **नाध्यापनादिति**। ब्राह्मणानामापदि गर्हिताध्यापनयाजन-प्रतिग्रहैरधर्मो न भवति यस्मात्स्वभावतः पवित्रत्वेनाग्न्युदकतुल्यास्ते ॥ १०३ ॥

(४) **राघवानन्दः**। अत एवाह **नेति**। यथा याजनाध्यापने दोषानापादके दृष्टान्तः ज्वलनेन ग्रीष्मातपेन युक्तोऽर्क इव वेदाभ्यासेन युक्तो विप्रः प्रतिग्रहोऽपि तथा 'विशुद्धाच्च प्रतिग्रह' इत्यत्र विशुद्धपदं तदर्जितधनस्य फलसिद्धत्वार्थम् ॥ १०३ ॥

(५) **नन्दनः**। एतदेव स्थिरीकरोति **नाध्यापनाद्याजनाच्चेति** ॥ १०३ ॥

(६) **रामचन्द्रः**। ज्वलनार्कसमाहितः समीपे आपद्गतस्य दोषो न ॥ १०३ ॥

(७) **मणिरामः**। तदेव स्पष्टयति **नाध्यापनादि**त्यादिभिः श्लोकैः ॥ १०३ ॥

(८) **गोविन्दराजः**। **नाध्यापनादिति**। ब्राह्मणानामपि गर्हिताध्यापनयाजनप्रतिग्रहै-रधर्मो न भवति। तस्मात् पवित्रत्वेनाग्न्युदकतुल्यास्ते ॥ १०३ ॥

(९) **भारुचिः**। अत्राध्यापनयाजनयोर्गर्हितयोर्नानुज्ञानम्, असत्प्रतिग्रहस्तुत्यर्थत्वात् तयो-र्ग्रहणस्य। स चाधिकृत एव। 'सर्वतः प्रतिगृह्णीया'दिति न त्वसदध्यापनयाजनेऽधिकृते। तथा च सति पूर्ववदयमप्यर्थवादो व्याख्यातः ॥ १०३ ॥

**जीवितात्ययमापन्नो योऽन्नमत्ति ततस्ततः ॥**
**आकाशमिव पङ्केन न स पापेन लिप्यते ॥ १०४ ॥**

(१) **मेधातिथिः**। पूर्वेणासत्प्रतिग्रह उक्तः। अनेन परिग्रहदुष्टमन्नमभ्यनुज्ञायते। **ततस्तत इति** जातिकर्मानपेक्षमन्नस्वामिनमाह। शेषोऽर्थवादः ॥ १०४ ॥

(२) **सर्वज्ञनारायणः**। किं पुनः? प्रतिग्रहादि कुर्वन् ॥ १०४ ॥

(३) **कुल्लूकः**। यः प्राणात्ययं प्राप्तः प्रतिलोमजादन्नमश्नाति सोऽन्तरिक्षमिव कर्दमेन पापेन न संबध्यते ॥ १०४ ॥

(४) **राघवानन्दः**। किंच **जीवितेति**। य इति सामान्यशब्दोऽपि ब्राह्मणविषय एव प्रकरणात् अन्येषां प्रतिग्रहनिषेधाच्च। अत्र अनदनीयोदनम् अवृत्तिकर्शितत्वं जीवितात्ययमिति लिङ्गत्रयं पवित्रमित्यादिदृष्टान्तद्वयं च लौकिकालौकिकसर्वथादोषतात्पर्यकम् ॥१०४॥

(५) **नन्दनः**। सर्वत्र भोजनमप्यस्यादृष्टमित्याह **जीवितात्ययमापन्न** इति ॥ १०४ ॥

(६) **रामचन्द्रः**। जीवितात्ययं आपन्नः जीवितस्य अत्ययं नाशं प्राप्तः सन् यतस्ततः प्रतिलोमजातान् यः अन्नं अत्ति भक्षयति ॥ १०४ ॥

(७) **मणिरामः**। यतस्ततः प्रतिलोमजात् ॥ १०४ ॥

(८) **गोविन्दराजः**। **जीवितात्ययमिति**। यः प्राणात्ययं प्राप्तः प्रतिलोमादपि अन्नमश्नाति सोऽन्तरिक्षमिव कर्दमेन पापेन न संबध्यते। अत्र परवृत्त्यर्थवादः ॥ १०४ ॥

**अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः ॥**
**न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥ १०५ ॥**

(१) **मेधातिथिः**। **अजीगर्तो** नाम ऋषिः। स क्षुत्परिपीडितः पुत्रं **सुतं** शुनःशेपनामानं **हंतुमुपासर्पत्** प्रचक्रमे। न चासौ क्रव्याद इति युज्यते। शौनःशेपमाख्यानं बह्वृचिषु प्रसिद्धम्। नात्र विस्तर आगमस्योपयुज्यते। परमार्थस्तु परकृतिरूपोऽर्थवादः। एवं सर्व एते द्रष्टव्याः ॥ १०५ ॥

(२) **सर्वज्ञनारायणः**। सुतं शुनःशेपम् ॥ १०५ ॥

(३) **कुल्लूकः**। अत्र परकृतिरूपार्थवादमाह **अजीगर्त** इति। ऋषिरजीगर्ताख्यो बुभुक्षितः सन्पुत्रं शुनःशेपनामानं स्वयं विक्रीतवान् यज्ञे गोशतलाभाय यज्ञयूपे बद्ध्वा विशसिता भूत्वा हंतुं प्रचक्रमे। नच क्षुत्प्रतीकारार्थं तथा कुर्वन्पापेन लिप्तः। एतच्च **बह्वृचब्राह्मणे** शुनःशेपाख्यानेषु व्यक्तमुक्तम् ॥ १०५ ॥

(४) **राघवानन्दः**। अत्रार्थे ऐतिह्यं प्रमाणयति **अजीगर्त** इति चतुर्भिः। सुतं शुनःशेपम्, हन्तुं वरुणार्थं पुरुषमेधे। उपासर्पद्विक्रीतस्य सुतस्य पुनर्हननार्थं गतवान् ॥ १०५ ॥

(५) **नन्दनः**। अत्र शिष्टाचारान्दर्शयति **अजीगर्तः सुतं हंतुमिति**। आचरन्निति हेत्वर्थे शतृप्रत्ययः ॥ १०५ ॥

(६) **रामचन्द्रः**। अजीगर्तः ऋषिः। सुतं शुनःशेपं। दोषेण न अलिप्यत ॥ १०५ ॥

(८) **गोविन्दराजः**। **अजीगर्त** इति। अजीगर्ताख्यऋषिः बुभुक्षितः पुत्रं शुनःशेपं हन्तुं प्रचक्रमे, न च तथा क्षुत्प्रतीकारं कुर्वन् पापेन लिप्तवान् ॥ १०५ ॥

(९) **भारुचिः**। पुत्रं शुनःशेपनामानं उपासर्पत् प्रचक्रमे ॥ १०५ ॥

**श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः ।।**
**प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ।। १०६ ।।**

(१) **मेधातिथिः ।** एवं **वामदेवो** नाम ऋषिः । स **आर्तः** क्षुधा **श्वमांसमत्तुं** भक्षयितुमैच्छत् ।। १०६ ।।

(२) **सर्वज्ञनारायणः ।** श्वमांसमिच्छन्नार्तोऽत्तुमितीच्छामात्रेणापि पापोत्पत्तिं दर्शयति ।। १०६ ।।

(३) **कुल्लूकः ।** वामदेवाख्यऋषिर्धर्माधर्मज्ञः क्षुधार्तः प्राणत्राणार्थं श्वमांसं खादितुमिच्छन्दोषेण न लिप्तवान् ।। १०६ ।।

(४) **राघवानन्दः ।** श्वमांसं शुनो मांसं वामदेवोऽप्यत्तुमिच्छन्न लिप्तवानित्यन्वयः ।। १०६ ।।

(५) **नन्दनः ।** न लिप्तवान्दोषं न स्पृष्टवान् ।। १०६ ।।

(६) **रामचन्द्रः ।** श्वमांसं वामदेवः क्षुधार्तोऽत्तुमिच्छन्पापेन न लिप्तवान् ।। १०६ ।।

(७) **मणिरामः ।** श्वमांसं कुक्कुरमांसं अत्तुं भक्षितुं ।। १०६ ।।

(८) **गोविन्दराजः ।** **श्वमांसमिच्छन्निति ।** वामदेवाख्यऋषिः कार्याकार्यवित् क्षुधार्तः प्राणपरित्राणार्थं श्वमांसं भक्षयितुमिच्छन् पापेन न लिप्तवान् ।। १०६ ।।

**भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने ।।**
**बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ।। १०७ ।।**

(१) **मेधातिथिः ।** **वृधो** नाम तक्षा अप्रतिग्राह्यः । ततो **बह्वीर्गा भरद्वाजो** नाम ऋषिः प्रतिजग्राह ।। १०७ ।।

(२) **सर्वज्ञनारायणः ।** बह्वीर्गा इति सतात्पर्यं विशेषणं, 'एकैव गौः प्रतिग्राह्ये'ति वचनात् । बृहत्तक्ष्णो रथकारात् ।। १०७ ।।

(३) **कुल्लूकः ।** भरद्वाजाख्यो मुनिः महातपस्वी पुत्रसहितो निर्जने वनेऽरण्य उषित्वा क्षुत्पीडितो वृधुनाम्नस्तक्ष्णो बह्वीर्गाः । प्रतिगृहीतवान् ।। १०७ ।।

(४) **राघवानन्दः ।** वृधोर्वृधुनामकस्य तक्ष्णो आयोगवजातेः विजने निह्नुत्य प्रतिजग्राहेत्यन्वयः । अत्र हेतुः—महातपा इति तेन संभवत्प्रकारान्तरे न कार्यं तदिति भावः ।।१०७।।

(६) **रामचन्द्रः ।** बृहत्तक्ष्णो राज्ञः प्रतिग्रहः ।। १०७ ।।

(७) **मणिरामः ।** वृधोस्तक्ष्णोः वृधुनाम्नस्तक्ष्णोः ।। १०७ ।।

(८) **गोविन्दराजः ।** **भारद्वाज** इति । **बह्वीर्गाः प्रतिजग्राह** वृधुतक्ष्णो**र्महामनाः ।** भारद्वाजाख्यो मुनिर्मनस्वी सपुत्रो निर्जने वने क्षुत्पीडितो वृधुनाम्नस्तक्ष्णोः बह्वीर्गाः प्रतिगृहीतवान् ।। १०७ ।।

**क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ॥**
**चण्डालहस्तादादाय धर्माधर्मविचक्षणः ॥ १०८ ॥**

(१) **मेधातिथिः।** **विश्वामित्रो** नाम महामुनिः प्रसिद्धः। स कस्मिंश्चिदवसरे क्षुधादुःखेन **श्वजाघनीं चण्डालहस्तादादायात्तुम**भ्यागत आभिमुख्येनाध्यवसितः। न केवलं परिदुष्टेऽन्ने दोषोऽस्ति यावत्स्वभावदुष्टेऽपीति श्वजाघनीग्रहणम्। सर्वदोषदुष्टमप्यापदि भक्षयितव्यमिति श्लोकतात्पर्यार्थः ॥ १०८ ॥

(२) **सर्वज्ञनारायणः।** श्वजाघनीं शुनः पुच्छमूलमांसम् ॥ १०८ ॥

(३) **कुल्लूकः।** ऋषिर्**विश्वामित्रो** धर्माधर्मज्ञः क्षुत्पीडितः चण्डालहस्ताद्गृहीत्वा कुक्कुरजघनमांसं भक्षितुमध्यवसितवान् ॥ १०८ ॥

(४) **राघवानन्दः।** **श्वजाघनीं** शुनो जघनवर्तमानं मांसम् ॥ १०८ ॥

(५) **नन्दनः।** **श्वजाघनीं** श्वमांसं अत्तुं भक्षितुम् ॥ १०८ ॥

(६) **रामचन्द्रः।** क्षुधार्तो विश्वामित्रः **श्वजाघनीं** श्वपुच्छमूलमांसं **अत्तुं अभ्यागात्** ॥ १०८ ॥

(७) **मणिरामः।** **श्वजाघनीं** कुक्कुरजघनमांसं ॥ १०८ ॥

(८) **गोविन्दराजः।** **क्षुधार्त** इति। विश्वामित्रः कार्याकार्यवित् क्षुत्पीडितः चण्डाल-हस्तात् श्वश्रेणीं (?) प्रतिगृह्य भक्षयितुमध्यवसितवान् ॥ १०८ ॥

(९) **भारुचिः।** जीवितात्यये सर्वान्नाभ्यनुज्ञानार्थाः पञ्च श्लोकाः स्वपरकृत्यर्थवादा विज्ञेयाः ॥ १०८ ॥

**प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि ॥**
**प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः ॥१०९॥**

(१) **मेधातिथिः।** आपदीषद्गर्हितयोजनाध्यापनयोः संभवे न गर्हितप्रतिग्रहे वर्तितव्यमिति श्लोकार्थः ॥ १०९ ॥

(२) **सर्वज्ञनारायणः।** अत्र पुनर्विशेषमाह **प्रतिग्रहादिति** ॥ १०९ ॥

(३) **कुल्लूकः।** गर्हितानामप्यध्यापनयाजनप्रतिग्रहाणां मध्याद्ब्राह्मणस्यासत्प्रतिग्रहो निकृष्टः परलोके नरकहेतुः ततश्चापदि प्रथमं निन्दिताध्यापनयाजनयोः प्रवर्तितव्यं तदसंभवे त्वसत्प्रतिग्रह इत्येवंपरमेतत् ॥ १०९ ॥

(४) **राघवानन्दः।** याजनाध्यापने प्रतिग्रहात्प्राशस्त्ये इत्यनुवदति **प्रतिग्रहादिति।** प्रत्यवरः प्रति पूर्वं अपेक्ष्यावरो निकृष्टः प्रेत्य स्थितस्यापि नरकहेतुत्वात् ॥ १०९ ॥

(५) **नन्दनः।** याजनाध्यापनाभ्यामसत्प्रतिग्रहस्यावरत्वमाह **प्रतिग्रहाद्याजनाच्चेति।** प्रेत्य परलोके ॥ १०९ ॥

(६) **रामचन्द्रः।** प्रतिग्रहः प्रत्यवरः हीनहीनः ॥ १०९ ॥

(७) **मणिरामः।** प्रत्यवरः निकृष्टः ॥ १०९ ॥

(८) **गोविन्दराजः। प्रतिग्रहादिति।** 'आपत्करणाज्जपहोमैरपैत्येन' इति वक्ष्यमाण-दर्शनात् गर्हितयाजनाध्यापनप्रतिग्रहाणां मध्यात् असत्प्रतिग्रहो निकृष्टो ब्राह्मणस्य परलोके नरकहेतुः अत आपदि प्रथममसद्याजनाध्यापनयोः प्रतिवर्तितव्यम्। तदभावेऽसत्प्रतिग्रह इत्येवंपरमेतत् ॥ १०९ ॥

(९) **भारुचिः।** प्रकरणादसत्प्रतिग्रहनिन्दामीषद्गर्हितयाजनाध्यापनवृत्तिसंस्तुत्यर्था-सामर्थ्यात्। एवं च स(ति षडतीषद्) गर्हित याजनेऽध्यापने वा सति वृत्त्यर्थेनासःप्रतिग्रहे प्रवर्तते ! ते तदर्थाः विज्ञायते इतरथाभ्यापत्कल्पविहितासत्प्रतिग्रहनिन्दापूर्वकशास्त्रविरोधिनी प्रसज्येत; न चैतदिष्टम्। अतस्तन्निन्दया इतरवृत्तिस्तुतिर्विज्ञेया ॥ १०९ ॥

**याजनाध्यापने नित्यं क्रियते संस्कृतात्मनाम् ॥**
**प्रतिग्रहस्तु क्रियते शूद्रादप्यंत्यजन्मनः ॥ ११० ॥**

(१) **मेधातिथिः।** अत्रैव हेतुरूपोऽर्थवादः। प्रवृत्तिरेवेदृशो लोकस्य यदनुपनीता नाधीयते न च यजन्ते। अतः सुष्ठुवार्तोऽपि न शूद्रं याजयिष्यत्यध्यापयिष्यति वा। दानं तु सार्ववर्णिकं प्रसिद्धम्। **शूद्रादपि प्रतिग्रहः** कर्तुं प्राप्नोत्यतः स प्रत्यवरः ॥११०॥

(२) **सर्वज्ञनारायणः।** संस्कृतात्मनां द्विजानामेव संभवति नतु तस्य शूद्रे प्रसंगः। प्रतिग्रहस्तु प्रवर्तमानः शूद्रेऽपि प्रसज्यत एवेति युक्तेर्निन्दितत्वात्। न केवलं शूद्रात् किंतु अप्यन्त्यजन्मनः चण्डालात् ॥११०॥

(३) **कुल्लूकः।** अत्र हेतुमाह **याजनेति।** याजनाध्यापने आपद्यनापदि चोपनयन-संस्कृतात्मनां द्विजातीनामेव क्रियेते; प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते तस्मादसौ ताभ्यां गर्हितः ॥११०॥

(४) **राघवानन्दः।** अत्र हेतुमाह **याजनेति।** संस्कृतात्मनां वेदेनैव संस्कारो द्विजानाम्। शूद्रस्य याजनमपि प्रतिग्रहवन्निन्दितम् ॥११०॥

(५) **नन्दनः।** अत्र कारणमाह याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनान्त्रैवर्णिकाना-मेव नित्यमापद्यनापद्यपि क्रियते ॥११०॥

(६) **रामचन्द्रः।** (अन्त्य)जन्मनः निकृष्टजातेः ॥११०॥

(७) **मणिरामः।** तत्र हेतुमाह **याजनाध्यापन इति** ॥ ११० ॥

(८) **गोविन्दराजः।** अत्र हेतुमाह **याजनाध्यापन** इति। याजनाध्यापने आपद्यनापदि च द्विजातीनामेव क्रियेते। प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते, अतोऽसौ गर्हितः ॥ ११० ॥

(९) **भारुचिः।** सा च क्रमार्थेत्युक्तम्। अत्र कारणमाह यतश्चैतदेवमतो यथोपदिष्टः क्रमः प्रतिपादनी(यः) ॥ ११० ॥

**जपहोमैरपैत्येनो याजनाध्यापनैः कृतम् ॥**
**प्रतिग्रहनिमित्तं तु त्यागेन तपसैव च ॥ १११ ॥**

(१) **मेधातिथिः। जपेन होमेन चैनः पापमपैति** विनश्यति। तेन न क्षतिः। प्रतिग्रहाद्यदेनस्तत्**त्यागेन** तस्य प्रतिग्रहस्य, **तपसा**, वक्ष्यमाणेन "मासं गोष्ठे पयः पीत्वा" इत्यादि ॥१११॥

(२) **सर्वज्ञनारायणः।** जपहोमैर्नतु तद्रुपात्तवित्तत्यागैरेव अतः सुशकप्रायश्चित्ततापि। त्यागेन प्रतिग्रहोपात्तवित्तस्य। तपसा चान्द्रायणादिना। तपसैवेति क्वचित्पाठः। तद्वित्तस्य त्यागासंभवे तपसापि भूयसाऽपैतीत्यर्थः ॥१११॥

(३) **कुल्लूकः।** एनोग्रहणादसत्प्रतिग्रहयाजनाध्यापनैर्यदुपपन्नं पापं तत्प्रायश्चित्तप्रकरणे वक्ष्यमाणक्रमेण जपहोमैर्नश्यति असत्प्रतिग्रहजनितं पुनः प्रतिगृहीतद्रव्यत्यागेन 'मासं गोष्ठे पयः पीत्वे'त्येवमादिवक्ष्यमाणतपसाऽपगच्छति ॥१११॥

(४) **राघवानन्दः।** प्रायश्चित्तगौरवादपि ताभ्यां प्रतिग्रहोऽवर इत्याह **जपेति**। एनः पापम् त्यागेन तद्द्रव्यस्य। तपसा 'गोष्ठे पयः पीत्वे'त्येवमादिवक्ष्यमाणेन ॥१११॥

(५) **नन्दनः।** प्रतिग्रहस्तु दानस्य सर्वसाधारणत्वादन्त्यजन्मनः प्रतिलोमादपि क्रियते कर्तुं प्राप्तो भवति, तेन प्रतिग्रहः प्रत्यवर इत्याह **जपहोमैरपैत्येन इति**। प्रायश्चित्तगौरवादप्यसत्परिग्रहः प्रत्यवर इत्यर्थः ॥१११॥

(६) **रामचन्द्रः।** तु पुनः त्यागेन प्रतिगृहीतवस्तुनः त्यागेन वा तपसैव गोष्ठे पयः पीत्वा वक्ष्यमाणतपसा ॥१११॥

(७) **मणिरामः।** प्रायश्चित्तमाह **जपहोमैरिति**। त्यागेन प्रतिगृहीतद्रव्यत्यागेन तपसा 'मासं गोष्ठे पयः पीत्वे'ति वक्ष्यमाणउपायेन ॥१११॥

(८) **गोविन्दराजः।** किं च **जपहोमैरिति**। अतो ग्रहणादसद्याजनाध्यापने यदुत्पन्नं पापं तत्प्रायश्चित्तप्रकरणवक्ष्यमाणरूपेण जपहोमैर्निवर्तते। असत्प्रतिग्रहजनितं पुनस्तद्द्रव्यत्यागेन 'मासं गोष्ठे पयः पीत्वे'त्येवमादिवक्ष्यमाणतपसा चोपशाम्यति ॥१११॥

(९) **भारुचिः।** प्रकरणादयं प्रतिग्रहोऽसत्प्रतिग्रहो विज्ञेयः। छन्दोभङ्गभयात्। सच्छन्दोऽत्र न पठितः। प्रतिग्रहोपपदं जपहोमत्यागतपसां च प्रायश्चित्तप्रकरणोपदिष्टानामिहोपदेशः स्तुत्यर्थः, न विध्यर्थः ॥१११॥

**शिलोञ्छमप्याददीत विप्रोऽजीवन्यतस्ततः ॥**
**प्रतिग्रहाच्छिलः श्रेयांस्ततोऽप्युञ्छः प्रशस्यते ॥ ११२ ॥**

(१) **मेधातिथिः।** अस्याप्यनुवादोऽर्थवादमेवाह महदेतदन्याय्यं यत्परद्रव्यग्रहणम्। तत्र कदाचिदश्रूयमाणस्य ग्रहणेऽपीदं भवद्दुष्यतोऽप्येतावता प्रशस्यत्वम्। अत्र शिलः प्रतिग्रहसमानजातीयः। स एवायं प्रकर्षप्रत्ययहेतुर्भवति। **प्रतिग्रहाच्छिलः श्रेयानिति।** यतो

निकृष्टमपेक्ष्योत्कृष्टत्वनिमित्तं प्रकर्षमनुभवति। न हि भवति चण्डालाद्ब्राह्मणः श्रेयान्। अतः शिलोञ्छयोरपि ग्रहणेऽनस्वग्रहणम्। तथापि शिलोञ्छं श्रेयः। यद्यपि शिलोञ्छवृत्तिरत्यन्तोत्कृष्टोक्ता तथाप्यस्ति प्रतिग्रहेण किंचित्साम्यम्। यतस्तत्राधिदेवतानिष्ठितभृत्यागतं क्रियावैकल्यम्। असत्प्रतिग्रहेऽप्यात्मनि ग्रह उपपन्नो न कुप्यतीत्ययमिति। तत्रेतरसंनिहितद्रव्यस्याऽऽत्मनिग्रहः। अतः शिलोञ्छवृत्तिरपि न निरवद्या। ततो युक्तं **प्रतिग्रहाच्छिलः श्रेयानि**त्यादि ।।११२।।

(२) **सर्वज्ञनारायणः। शिलोञ्छमिति**। जीवनासंभवे यतस्ततोऽपि चाण्डालादिक्षेत्रजादि यतस्ततोऽपीत्यन्वयः। 'लूनशीर्णमनुज्ञातं शिल'मिति **देवलः**। तदेव 'स्वामिना' त्यक्तं तदनुमतिं विनैव गृह्यमाणमुञ्छः। एकैककणादानमुञ्छः, कणिशादानं तु शिलमित्यन्ये। तद्वृत्तिद्वयजीवनसंभवे सत्प्रतिग्रहोऽपि न कार्यः। तत्राप्युञ्छेन जीवनसंभवे शिलं न ग्राह्यं, तत्रोपरोधसंभवात् ।।११२।।

(३) **कुल्लूकः**। ब्राह्मणः स्ववृत्त्याऽजीवन्यतस्ततोऽपि शिलोञ्छं गृह्णीयान्नतु तत्संभवेऽसत्प्रतिग्रहं कुर्यात् यस्मादसत्प्रतिग्रहाच्छिलः प्रशस्तः, मञ्जर्यात्मकानेकधान्योन्नयनं शिलस्ततोऽप्युञ्छः श्रेष्ठः। एकैकधान्यादिगुडकोच्चयनमुञ्छः ।।११२।।

(४) **राघवानन्दः**। याजनादिभ्योऽपि शिलोञ्छे प्रशस्ते इत्यनुवदंस्तयोरपि शिलादुञ्छं प्रशस्ततरमित्याह **शिलेति**। उञ्छेन जीवञ्छिलं न कुर्यात्। शिलेन जीवन्नध्यापनं न कुर्यात्। अध्यापनेन जीवन्याजनं न कुर्यात्। याजनेन जीवन्प्रतिग्रहं न कुर्यात्। तत्रापि विशुद्धेन जीवन्नविशुद्धं न कुर्यादिति भावः ।।११२।।

(५) **नन्दनः**। कल्पान्तरमाह **शिलोञ्छमप्याददीतेति**। अजीवन्निति पदं यतस्ततो विशिष्टाविशिष्टधनेभ्यः क्षेत्रखलादिषु शिलमुञ्छं वाददीत उत्तरार्धेन यतस्ततः प्रतिग्रहशिलोञ्छानां विशेष उक्तः, यतस्ततः प्रतिग्रहादन्यतःप्रतिग्रहाच्छिलः श्रेयान्, ततोऽपि तस्मादपि एतौ शिलोञ्छौ अदत्तादानविषयौ चतुर्थाध्यायोक्तावापद्धर्मवृत्त्यर्थौ। उञ्छो धान्यशः आदानं, कणिशाद्यर्जनं शिलमिति ।।११२।।

(६) **रामचन्द्रः**। पूर्वं शिलोञ्छं शिलं वा उञ्छं वा यदाऽपर्याप्तं तदा यतस्ततः महापातकिनोऽपि उपपातकादिभ्योऽपि गृह्णीयात्। ततः शिलात् उञ्छः प्रशस्यते ।।११२।।

(७) **मणिरामः**। शिलोञ्छेनाजीवनसिद्धौ प्रतिग्रहं न कुर्यादित्यर्थः। तत्र हेतुमाह **प्रतिग्रहादिति**। मंजर्याद्यनेकधान्येनोच्चयनं शिलः। एकैकधान्याद्युच्चयनमुञ्छः ।।११२।।

(८) **गोविन्दराजः। शिलोञ्छमिति**। ब्राह्मणः स्ववृत्त्या अजीवन्नुपपातकिभ्योऽपि शिलोञ्छं गृह्णीयान्न तु तत्संभवे असत्प्रतिग्रहेण वर्तते। यस्मादसत्प्रतिग्रहात् शिलोच्चयनं प्रशस्तं। ततोऽप्येकैकधान्यकणोच्चयनमिति ।।११२।।

(९) **भारुचिः**। असत्प्रतिग्रहपक्षे (शि)लोञ्छाभ्यां दुर्धराविमौ विज्ञेयौ, सत्प्रतिग्रहादित्येके। येन (शि)लोञ्छयोः किलासत्प्रतिग्रहात् साधुवादो न युक्तः। अत्यन्तहीनत्वादसत्प्रतिग्रहस्य (शि)लोञ्छाभ्यां दुर्धरौ हि तावकृतात्मभिरिति यदुक्तं तदेतदरादसत्यम्।

यस्मात् (शि)लोञ्छवृत्तिनो तद्यप्यात्मनिग्रहोऽस्ति; तथापि देवतातिथिभृत्यगतमवश्यमस्य क्रियावैकल्यं जायते, असत्प्रतिग्रहे चात्मनिग्रह उच्यते। 'न तु तृप्येत् स्वयं तत' इति वचनात् तीव्रतश्च सन्निहितद्रव्यस्यात्मनिग्रहः। तथा द्रव्यस्यार्जनर(क्षण)प्रतिपादनेषु प्रयत्ननियमः। अपि च (शि)लोञ्छवृत्तिनोऽप्यस(च्छि)लोञ्छगन्धोऽस्ति 'यतस्तत' इति वचनात् अविशेषेण सर्वकृषीवलेभ्यः एताविह (शि)लोञ्छा(वुच्येते)। यतः असत्प्रतिग्रहापकरणाल्लिङ्गाच्च। 'विप्रो जीवन्यतस्तत' इति एतस्माद्विज्ञायते च। सत्प्रतिग्रहपक्ष एतौ (शि)लोञ्छौ। एवं च नाधिकार उत्स्रक्ष्यते, न लिङ्गम्। गुणवृत्त्या कल्प इष्यत इति। तथा च सत्यसत्प्रतिग्रहात् (शि)लोञ्छयोः साधुवाद एतद् गम्यते। तदभावेऽसत्प्रतिग्रहः स्यात्। 'यथा याजनाध्यापनयो'रित्युक्तम् ।।११२।।

**सीदद्भिः कुप्यमिच्छद्भिर्धनं वा पृथिवीपतिः ।।**
**याच्यः स्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ।। ११३ ।।**

(१) **मेधातिथिः।** अत्र त्रीणि निमित्तानि राजप्रतिग्रहे उच्यन्ते। **सीदद्भिः** कुटुंबावसादं प्राप्तैरापदीत्यर्थः। **कुप्यमिच्छद्भिः।** कुण्डलकटकाद्युष्णीषासनादि काञ्चनादि। अन्यद्वा **धनं** गोहिरण्यादि यज्ञोपयोग्यन्यद्वा। **विप्रैः पृथिवीपतिर्याच्यो** देशेश्वरोऽभ्यर्थयितव्यः। अत्र यदुक्तं 'न राज्ञः प्रतिगृह्णीयात्' इति स दुष्टराजविषयः प्रतिषेधो द्रष्टव्यः। तथा चोक्तं "लुब्धस्योच्छास्त्रवर्तिन" इति। **अदित्सन्** याचितः सन् दातुं यो नेच्छति, स त्यागमर्हति। तस्य विषये न वस्तव्यम्। अथवा **त्यागो** हानिः। अन्यस्य चानिर्देशाद्धर्महानिं प्राप्नोति ।। ११३ ।।

(२) **सर्वज्ञनारायणः।** सीदद्भिरन्नाभावेन उञ्छस्याप्यलाभात्। तथा कुप्यं कांस्यताम्रादीच्छद्भिस्तदर्थिभिः। तथा धनं बहुसुवर्णादिकोशमिच्छद्भिः। अजीवनदशायामतिरागौत्कटचे वा नृपतिर्याच्यो नान्यथेत्यर्थः। स च नृपोऽदित्सन्ब्राह्मणै रन्यैरपि त्याज्यः ।।११३।।

(३) **कुल्लूकः।** स्नातकैर्ब्राह्मणैर्धनाभावाद्धर्मार्थं कुटुंबावसादं गच्छद्भिः सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादिकुप्यं धनं यागाद्युपयुक्तं हिरण्याद्यप्यापत्प्रकरणात्क्षत्रियोप्युच्छास्त्रवर्ती याचितव्यः स्यात्। यश्च दातुं नेच्छति कृपणत्वेनावधारितः स त्याज्यो न याचनीय इत्यर्थः। **मेधातिथिगोविन्दराजौ** तु त्यागमर्हतीति तस्य देशे न वस्तव्यमिति व्याचक्षाते ।। ११३ ।।

(४) **राघवानन्दः।** स्नातकैर्हि राज्ञोऽपि धनं ग्राह्यमित्याह **सीदद्भिरिति**। बहुवचनलिङ्गाद्बहुतरकुटुम्बैः। कुप्यं सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि। धनपदं सुवर्णादिपरम्। पृथिवीपतिः राजा याच्यः आपत्प्रकरणत्वादुच्छास्त्रवर्त्यपि अन्यथा धर्मजीवनयोर्हानावतीव पातकितेति भावः। अदित्सन्कार्पण्यात्। त्यागं तस्य राज्ञः देशस्य वा ।। ११३ ।।

(५) **नन्दनः।** कुप्यं वस्त्रादिकं धनं हिरण्यादिकं त्यागं याजनादिषु नादेयत्वम् ।।११३।।

(६) **रामचन्द्रः।** स्नातकैर्विप्रैः सीदद्भिः कुप्यं ताम्रादिधनं इच्छद्भिः पृथिवीपति-

याच्यः स्यात् । अदित्सन् अप्रयच्छन् तर्हि त्यागं अर्हति ब्राह्मणैरन्यैस्त्याज्यः तद्देशे न स्थातव्यम् ।। ११३ ।।

(७) **मणिरामः** । सीदद्भिः धनाभावात् कुटुंबावसादं गच्छद्भिः । स्नातकैः ब्राह्मणैः ।। कुप्यं सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादिधनं यागाद्युपयुक्तं हिरण्याद्यपि इच्छद्भिः पृथिवीपतिः याच्यः स्यात् यः अदित्सन् दातुं न इच्छति, कृपण इति यावत् सः अर्हति कृतात क्षेत्रात् लुप्तः स स्यात् । अदोषकृत् अदुष्टं । तथा गवाद्यपि पूर्वं पूर्वमुद्दिष्टं ।। ११३ ।।

(८) **गोविन्दराजः । सीदद्भिरिति ।** स्नातकैर्ब्राह्मणैर्धनाभावात् धर्मात्मकुटुंबावसादं गच्छद्भिरसारद्रव्यं गृहोपयोगि शयनासनासनादि वा धनं धान्यं हिरण्यादि वेच्छद्भिः पार्थिवः क्षत्रियो क्षत्रियोऽपि वोच्छास्त्रवर्ती याचितव्यः स्यात् । अददतस्तस्य देशे न वस्तव्यमिति । इदं न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ।

यो राज्ञः प्रतिगृह्णाति लुब्धस्योच्छास्त्रवर्तिनः । इत्यक्षत्रियोच्छास्त्रवर्तिनोऽराज्ञोऽनापदि निषिद्धयोरापद्यभ्यनुज्ञानार्थम् ।। ११३ ।।

(९) **भारुचिः** । अयं च प्रतिषेधविषये क्षत्रियाद्राज्ञः क्षत्रियादपि वा लुब्धादुच्छास्त्रवर्तिनः सकाशादयं प्रतिग्रहो विज्ञेयः । उपाध्या (य) स्त्वाह -क्षत्रियादेव राज्ञः. . . प्राथ (म्य)कल्पकोऽयम् । कुप्यं काष्ठमयं शयनासनाद्यसारं धनं वा गोहिरण्यादि याच्य. . स्यादयोगे क्षुदवसन्नात्मकलत्रापत्यधर्ममन्त्रेण ।।११३।।

**अकृतं च कृतात्क्षेत्राद्गौरजाविकमेव च ।।**
**हिरण्यं धान्यमन्नं च पूर्वं पूर्वमदोषवत् ।। ११४ ।।**

(१) **मेधातिथिः । अकृतम**कृष्टं क्षेत्रं प्रशस्यम् । **अजाविकं** च भवति । परस्परविशेष उक्तार्थः श्लोको गम्यते ।। ११४ ।।

(२) **सर्वज्ञनारायणः । अकृतं** खिलं । **कृतं** परिकर्मितं । **अन्नं** पक्वं । कृतादकृतं । ततः क्रमेणा**जादौ** । तत्रापि **पूर्वं पूर्वं न दोषवत्** परिग्रहेऽल्पदोषम् ।। ११४ ।।

(३) **कुल्लूकः । अकृतम**नुप्तसस्यं क्षेत्रतत्कृतादुप्तसस्यात्प्रतिग्रहे दोषरहितं तथा गोछागमेषहिरण्यधान्यसिद्धान्नानां मध्यात्पूर्वं पूर्वमदुष्टम् ततश्चैषां पूर्वपूर्वासंभवे परः परो ज्ञेयः ।। ११४ ।।

(४) **राघवानन्दः** । ग्राह्येष्वेतेषु पूर्वपूर्वप्रशस्तिमाह **अकृतेति** । अकृतमनुप्तसस्यं क्षेत्रं ततो नीवारादेर्ग्रहणम् । कृतादुप्तसस्यात् । अन्नं सिद्धान्नम् । नात्र तर्कापेक्षा किमिव वचनं न करोतीति न्यायात् ।। ११४ ।।

(५) **नन्दनः** । अथ ब्राह्मणस्य प्रतिग्रहे द्रव्यविशेषेषु दोषतारतम्यमाह **अकृतञ्च गृहं क्षेत्रमिति । पूर्वं पूर्व**मदोषकं परस्मात्परस्मात्पूर्वं पूर्वं द्रव्यं प्रतिग्रहणेऽल्पदोषम् ।। ११४ ।।

(६) **रामचन्द्रः । अकृतं** अनुप्तसस्यं क्षेत्रात् **कृतात्** हलादिना **पूर्वं अदोष**भाक् ।। ११४ ।।

(८) **गोविन्दराजः। अकृतमिति।** कृष्टात् क्षेत्रात् प्रतिग्रहेऽकृष्टमनुप्तं तथा गोच्छागैडकहिरण्यधान्यानां मध्यात् पूर्वं पूर्वमदुष्टतमं चैषां पूर्वस्यासंभवे परः परः प्रतिग्राह्यः ॥ ११४ ॥

(९) **भारुचिः।** उत्तरस्योत्तरस्य परित्यागेऽभ्युदयः ॥ ११४ ॥

**सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ॥**
**प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥११५॥**

(१) **मेधातिथिः। दायो**ऽन्वयागतं धनम्। **लाभो** निध्यादेः। पित्राद्यर्जिताद्वा बन्धात्संविभागः। यद्यपि तत्पित्रादिक्रमायातं तथापि न तद्दायशब्देन शक्यमभिधातुं, बहुसाधारण्यात्। तथा च 'निबन्धो द्रव्यमिति' (याज्ञ. २-१२१) स्मृत्यन्तरे पठितम्। अथवा मित्राच्छ्वशुरगृहाद्वा यल्लब्धं प्रीत्या स 'लाभः'। **क्रयः** प्रसिद्धः। **जयः** संग्रामे। **प्रयोगकर्मयोगौ** कुसीदकृषिवाणिज्यानि। अतश्च वर्णभेदेनैतेषां धर्म्यत्वम्। तत्राद्यास्त्रयः सर्वसाधारणाः। 'जयः क्षत्रियस्य'। 'प्रयोगकर्मयोगौ' वैश्यस्य। 'सत्प्रतिग्रहो' ब्राह्मणस्य विशेषः। सर्ववर्णेऽपि प्राग्दर्शनन्यायो विभागः। केचित्क्रये विवदन्ते—तन्न युक्तम्; सर्वव्यवहारोच्छेदप्रसङ्गात्। **जयं** यानबन्धेनापि केचिदिच्छन्ति सर्वविषयम्—तदयुक्तम्; द्यूतधनस्य स्मृत्यन्तरेष्वशुद्धित्ववचनात् पाशुकद्यूतेत्यत्र। तथा परे **प्रयोग**मव्यापारमाहुः। तथा हि प्रयोगो दृश्यते 'ज्ञानपूर्वप्रयोग' इति। तत्र शब्दस्य प्रयोग इति गम्यते। तथा 'कर्मयोगः' कर्मप्रचारः ॥ ११५ ॥

(२) **सर्वज्ञनारायणः।** धर्म्या धर्मादनपेताः। दायः पित्रादिधनस्य विभागादिना लभ्यस्य प्राप्तिः। लाभो निध्यादेरकस्माल्लाभः। क्रयो धनेन प्राक्स्थितेन भूम्यादेः परिग्रहः। जयो युद्धोद्योगात्प्राप्तिः। प्रयोगः कलावाणिज्यादिना वर्धनम्। कर्मयोगः शिल्पादिकर्म कृत्वा भृतिग्रहः। सत्प्रतिग्रहः शुद्धाच्छुद्धस्य द्रव्यस्य तिलादिव्यतिरिक्तस्य प्रतिग्रहः। अत्राद्यास्त्रयः सर्वेषां वर्णानां ततः परे त्रयः क्षत्रविट्शूद्राणामेवं क्रमादन्त्यो विप्रस्यैवेति ॥ ११५ ॥

(३) **कुल्लूकः।** दायाद्याः सप्तधनागमाः। यथा धनाधिकारं धर्मादनपेतास्तत्र दायोऽन्वयागतधनं। लाभो निध्यादेः मैत्र्यादिलब्धस्य च। क्रयः प्रसिद्धः। एते त्रयश्चतुर्णामपि वर्णानां धर्म्याः। जयधनं विजयत्वेन क्षत्रियस्य। धर्म्यः प्रयोगो वृद्ध्यादिधनस्य कर्मयोगश्च कृषिवाणिज्ये एतौ प्रयोगौ वैश्यस्य धार्म्ये। सत्प्रतिग्रहो ब्राह्मणस्य धर्म्यः एवं चैतेषां धर्मत्ववचनादेतदभावेऽन्येष्वनापद्विहितेषु वृत्तिकर्मसु प्रवर्तितव्यं तदभावे चातद्विहितेषु प्रकृतेष्वित्येतदर्थमेतदिहोच्यते ॥ ११५ ॥

(४) **राघवानन्दः।** प्रतिग्रहप्रसंगेन धनोपायान्तरमनुवदन्नुपसंहरति **सप्तेति।** वित्तागमा धनस्य प्राप्त्युपायाः धर्म्या धर्मादनपेताः। दायः पित्रादिधनादेर्विभजनम्। लाभो निध्यादेः। क्रयः स्वधनेन विनिमयेन वा। जयः द्यूतयुद्धाद्यैः। प्रयोगो वृद्ध्यर्थं धनस्य। कर्मयोगः कृषिवाणिज्ये। अत्र दायलाभक्रयाश्चातुर्वर्ण्यस्य साधारणाः। जयः

क्षत्रियस्यासाधारणः। प्रयोगकर्मयोगौ वैश्यस्य। सत्प्रतिग्रहो ब्राह्मणस्य। आपदि प्रतिग्रहशङ्कानिरासाय विवरणम् ।। ११५ ।।

(५) **नन्दनः**। अथ ब्राह्मणस्यानापद्विषयांस्तावदाह **सप्त वित्तागमा इति**। धर्म्या धर्मयुक्ता अनापद्विषया इत्यर्थः। दायः प्रसिद्धः। लाभो निध्यागमादिः। क्रयः क्षेत्रादिक्रयः। जयो वादिषु प्रतिवादिनिग्रहः। प्रयोगः अध्यापनं कर्मयोगो याजनं सत्प्रतिग्रहो विशुद्धद्विजातिप्रतिग्रहः ।। ११५ ।।

(६) **रामचन्द्रः**। दायः पित्र्यांशलाभः निध्यादेः प्राक्स्थितस्य भूम्यादेः परिग्रहः। जयो युद्धयोगादेः प्राप्तिः। प्रयोगः कलावाणिज्यादिना वर्धनम्। कर्मयोगः शिल्पादिकर्म कृत्वा सप्तैते धर्म्या वित्तागमाः वित्तस्य आगमोपायाः ।। ११५ ।।

(७) **मणिरामः**। सप्त वित्तागमाः धनागमा धर्म्याः श्रेष्ठाः। तानाह **दाय**इत्यादीति। दायः स्ववंशगतं धनं। लाभः निध्यादेः क्रया एते त्रयश्च चतुर्णामपि वर्णानां धर्म्याः। जयः विजयेन धनार्जनं इदं क्षत्रियस्यैव। प्रयोगः वृद्ध्यर्थं धनप्रयोगः। कर्मयोगः कृषिवाणिज्ये। एतौ द्वौ वैश्यस्य, सत्प्रतिग्रहो ब्राह्मणस्येत्यर्थ ।। ११५ ।।

(८) **गोविन्दराजः**। **सप्तेतिः**। **प्रयोगः सर्वयोगश्चेति**। सत्पधनागमा दायादयो धर्मादनपेतास्तत्र दायोऽन्वयागतं धनं। लाभो निधिः प्रतीतो वा कुतश्चित्। क्रयः प्रसिद्धः। एते त्रयश्चतुर्णामपि वर्णानां धर्म्याः। जयो युद्धेन क्षत्रियस्य धर्म्यो वृद्ध्यर्थं धनप्रयोगश्च कृषिवाणिज्ये इत्येते वैश्यस्य धर्म्याः। सत्प्रतिग्रहो ब्राह्मणस्य धर्म्यः। इत्येवं च सति एषु धर्म्यवचनाद् एतद् भावेनैष्वनापच्चोदितेषु वृत्तिकर्मसु प्रवर्तितव्यं तदभावे भावे च वापद्युदितेषु प्रकृतेष्वित्येवमर्थमिहोच्यते ।। ११५ ।।

(९) **भारुचिः**। दायं पित्र्यं ज्ञातिधनं वा। लाभो निध्यधिगमः। संविभागतो कुतश्चिदन्योन्योपकारनिमित्तः क्रयजप्यौ प्रसिद्धौ। प्रयोगो धर्म्यः कुसीदः। कर्मयोगः कृषिवाणिज्यो अस्य यत्कृते सत्प्रतिग्रहो व्याख्यातः। एतेषां दायलाभेन चतुर्णामपि वर्णानां साधारणोऽप्रतिषेधात् क्रये विवदन्ते। चतुर्णामित्येके। वैश्यस्येत्यपरे, येन क्रयनिमित्त उपकारो न युक्तो ब्राह्मणादीनामिति। एवं तर्हि शाकाद्यपि क्रीत्वा नोपयोक्तव्यं ब्राह्मणादिभिः। अन्ये तु क्रयविक्रयादप्युपजीवनात् प्रतिषेधं मन्यमानब उपभोगे दानादौ च ब्राह्मणादीनां क्रीत्वाप्युपयोगं मन्यन्ते। जयस्तु धर्म्यवचनात् क्षत्रियस्येतरेभ्यो विशिष्टः। प्रयोगकर्मयोगौ च ब्राह्मणक्षत्रिययोर्वैश्यवृत्तिप्रवृत्ते सत्यं धर्म्यतरौ, वैश्ये हि कृषिवाणिज्यकुसीदा (दीनि) अविशेषेणाभ्यनुज्ञातानि। तस्या अपि धर्म्यवचनादस्वयं क्रियायामभ्युदयविशेषसिद्धिमविरुद्धां मन्यामहे। एवं च सत्येषां दायादीनां धर्म्यनिर्देशात् दायादिभिर्वृत्तिविशेषैस्सन्निहितद्रव्याणां ब्राह्मणादीनां न नियोगतो याजनादिवृत्तिता स्यात्। ब्रह्मचा(रि)भैक्षवत्। अथास्य श्लोकस्यायमन्योऽर्थः। यथा प्रकृतौ ब्राह्मणस्य सत्प्रतिग्रहादयो धर्म्याः एवम यान्यव्यापत्कल्पोपदिष्टानि ब्राह्मणादीनां कर्माण्यभाववैकल्पिकानि धर्माण्येव विज्ञेयानि। तथा च सति विहितार्थानुष्ठानस्तुतिरात्मकुटुम्बधारणार्था। आपदि तस्य प्रयोजनातिशयदर्शनात् ।। ११५ ।।

**विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः ।।**
**धृतिर्भैक्षं कुसीदं च दश जीवनहेतवः ।। ११६ ।।**

(१) **मेधातिथिः ।** सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायते । तत्र **विद्या** वेदविद्याव्यतिरेकेण वैद्यकतर्कभूतविषासनविद्या सर्वेषां जीवनार्था न दुष्यति । **शिल्पं** व्याख्यातम् । **भृतिः** प्रेष्यकत्वम् । **सेवा** परवृत्तानुवृत्तित्वम् । **धृतिः** संतोषः । दृष्टान्तार्थं चैतत् । अतो यथाविहितवृत्त्यभावेनैते जीवनोपायाः संकीर्यन्ते । पुरुषमात्रविषयत्वात् ।। ११६ ।।

(२) **सर्वज्ञनारायणः ।** विद्यादयो दश जीवनहेतवः प्राणधारणहेतवः धर्माधर्मसाधारणाः । विद्या विद्यातिशयस्तेन प्रासादादिना धनलाभः । शिल्पं चित्रादिकौशलम् । भृतिः परप्रेषणं कृत्वा मासादिनियतभृतिः । सेवा चाटुकारेण नियतं धनप्राप्तिः, गोरक्षं पशुपालनं कृत्वा यथोक्तपशुभागग्रहणम् । वाणिज्यं, कृषिः कर्षणम् । धृतिः प्राप्तेनाल्पेनापि संतोषः । भैक्ष्यं याच्ञया लब्धं । कुसीदं वृद्ध्या धान्यादिदानम् । सर्वमेतदापदि यथायोगं वर्णानां, तत्र विप्रस्य 'सेवा श्ववृत्ति'रित्यादिना सेवा निन्दिता ।। ११६ ।।

(३) **कुल्लूकः । आपत्प्रकरणाज्जीवनहेतव** इति निर्देशात् एषां मध्ये यया वृत्त्या यस्यानापदि न जीवनं तया तस्याप्यद्यभ्यनुज्ञायते, यथा ब्राह्मणस्य भृतिसेवादि, एवं शिल्पादावपि ज्ञेयम् । विद्या वेदविद्याव्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या सर्वेषामापदि जीवनार्थं न दुष्यति, शिल्पं गन्धयुक्त्यादिकरणं, भृतिः प्रैष्यभावेन वेतनग्रहणं, सेवा पराज्ञासंपादनं, गोरक्ष्यं पशुपाल्यं, विपणिर्वणिज्या, कृषिः स्वयंकृता, धृतिः संतोषः, तस्मिन्सत्यल्पकेनापि जीव्यते, भैक्ष्यं भिक्षासमूहः कुसीदं वृद्ध्या धनप्रयोगः स्वयं कृतोऽपि इत्येभिर्दशभिरापदि जीवनीयम् ।।११६।।

(४) **राघवानन्दः ।** अनापद्धर्मान् संक्षिप्योक्त्वा आपद्धर्मान्संक्षिपति **विद्येति ।** विद्या तर्कनयादि वेदस्यानापद्धर्मत्वात् । शिल्पं चित्रादिकृतिः । भृतिर्वेतनम् । सेवा परचित्ताराधनम् । विपणिर्वाणिज्यम् । धृतिः संतोषः, धनार्थव्याजेनापि धृतिमते साधुरिति कृत्वा धनं प्रयच्छन्तो दृश्यन्ते 'अर्थस्य मूलं निकृतिः क्षमा चे'त्युक्तेः । जीवनहेतवः जीवनप्रयोज्याः, अतः 'सर्वपुरुषाणामापदि वृत्तिरियमनुज्ञायत'इति **मेधातिथिः** ।।११६।।

(५) **नन्दनः ।** अथापद्विषयानर्थलाभानाह **विद्या शिल्पं भृतिः सेवेति ।** विद्या नृत्यवादित्रादि । शिल्पं छत्रादिनिर्माणं । भृतिर्भारोद्वहनं द्विजातिविषये । विपणिर्वाणिज्यं गिरिपर्वतप्ररूढफलमूलविक्रयः । कुसीदं वृद्धिप्रयोगः जीवनहेतवः आमादिजीवनमात्रहेतवो नत्वर्थार्जनहेतवः ।।११६।।

(६) **रामचन्द्रः ।** भृतिः भृतकाध्यापनं विपणिः कृषिः धृतिः प्राप्तेनाल्पेन संतोषः ।।११६।।

(७) **मणिरामः ।** धर्माधिकाराद्यस्य विप्रतिषिद्धं तत्तस्यैतस्यामवस्थायामभ्यनुज्ञायते । यथा ब्राह्मणस्यार्थे नाध्यापनमित्येवमादि । पुत्रदात्ययप्राप्तस्य स्थित्यै तथा च कृत्वोक्तं **दश जीवनहेतवः** इति । अपरे तु धृतिनिर्दिदक्षया विद्यादीनां निर्देशं मन्यन्ते । यस्मान्न

धृतिमन्तरेण विद्यादयो जीवनहेतवो भवन्ति। धृत्यनुगतास्त्वेते जीवनाय पर्याप्ताः। अतः सर्वत्र धृतिः कर्तव्येति धृत्यर्थोऽयमुपदेशः ॥११६॥

(८) **गोविन्दराजः। विद्येति। आपत्प्रकरणाज्जीवनहेतव** इति च निर्देशात् तेषामध्याप्येन यस्यानापदि जीवनं निषिद्धं तेन तस्यापद्यभ्यनुज्ञायते यथा ब्राह्मणस्य भृतकाध्यापकत्वेन। तदनेनापद्यभ्यनुज्ञायते। एवं शिल्पादिष्वपि विज्ञेयम्। शिल्पं गन्धयुक्त्वादिकर्मकरणं भृतिः प्रेक्षत्वं सेवा चित्तानुवर्तनं गोरक्षा पाशुपाल्यं विपणिर्वणिज्या कृषिः स्वयं कृताभिधृतिः संतोषः तस्मिन् हि सति स्वल्पकेनापि जीव्यते; भैक्ष्यं स्नातकस्यापि, कुसीदं वृद्ध्या धनप्रयोगः स्वयंकृतोऽपि इत्येभिर्दशभिरापदि जीवनम् ॥११६॥

(९) **भारुचिः।** इदानीं यस्य यया वृत्त्या जीवनं निषिद्धं तस्य आपदि तयापि जीवनं भवतीत्याज्ञापयति **विद्येति।** विद्या वेदव्यतिरिक्तवैद्यतर्कविषाऽपनयनादि। इयमापदि सर्वेषां जीवनार्हा। शिल्पं सुगंधादिकरणं। भृतिः प्रेष्यभावेन वेतनंग्रहणं। कृषिः स्वयंकृतापि। धृतिः संतोषः। तस्मिन्सति स्वल्पेनापि जीव्यते। भैक्ष्यं भिक्षासमूहः। कुसीदं वृद्ध्या धनप्रयोगः स्वयंकृतोऽपि, जीवनहेतवः आपदीत्यर्थः ॥११६॥

**ब्राह्मणः क्षत्रियो वाऽपि वृद्धिं नैव प्रयोजयेत् ॥**
**कामं तु खलु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम् ॥ ११७ ॥**

(१) **मेधातिथिः। धर्मार्थ**मिति पूर्वोक्तैवाऽऽपत्तिवृत्तिर्वेदितव्या। **पापीयस** इति वचनाद्धार्मिकादल्पाऽपि न ग्रहीतव्या। यदुक्तं 'अध्यापनतुल्यानि कृषिवाणिज्यकुसीदानि' तदापद्गतेन ॥११७॥

(२) **सर्वज्ञनारायणः।** कुसीदमिदानीं ब्राह्मणक्षत्रिययोरकर्तव्यतया दर्शयति **ब्राह्मण** इति। अत्यन्तापदि वृद्धिदा(द्ध्यादिध)नमपि पापिष्ठेषु सूतादिष्वत्यन्तापकृष्टेषु कर्तव्यम्। तदापि नातिबहु किंत्वल्पमेव, तच्च धर्मार्थं पञ्चमहायज्ञादिधर्मोद्देशेनेत्यर्थः ॥११७॥

(३) **कुल्लूकः।** ब्राह्मणः क्षत्रियो वापि वृद्ध्यादिधनमापद्यपि न प्रयुञ्जीत किन्तु निकृष्टकर्मणा धर्मार्थमनुकल्पितया वृत्त्या प्रयुञ्जीत ॥११७॥

(४) **राघवानन्दः।** विप्रक्षत्रिययोरनापदि कुसीदाभावमनुवदन्नापदि तत्र लभ्याल्पतामाह **ब्राह्मण** इति। धर्माद्यर्थं पापीयसे पापकर्मणे स्वस्मादधमवर्णाय वा। अल्पिकां अल्पपरिमाणां अशीतिभागाम् वृद्धिम् ॥११७॥

(५) **नन्दनः।** कुसीदस्यात्रापदि जीवनमात्रत्वमुक्तं, वित्तार्थस्तु कुसीदो न ब्राह्मणक्षत्रिययोरापद्ययुक्त इत्याह **ब्राह्मणः क्षत्रियो वापीति।** पापीयसः शूद्रादेः अल्पिकामल्पवृद्धियुक्ताम् ॥११७॥

(६) **रामचन्द्रः।** वृद्धिं वृद्धिजीविकां। न प्रयोजयेत् धर्मार्थं पापीयसे निकृष्टकर्मणे कामं भैक्षिकं खलु दद्यात् अल्पकं स्वल्पकलया ॥११७॥

(७) **मणिरामः।** वृद्धिं वृद्ध्या धनं आपद्यपि न प्रयुंजीत। किंतु पापीयसेऽपि धर्मार्थं अल्पिकां अल्पवृद्ध्या दद्यात् ॥११७॥

(४) **राघवानन्दः।** अनिन्दितो (लोकैरिति शेषः) ॥१२८॥

(५) **नन्दनः।** सद्वृत्तानुष्ठानस्य फलमाह **यथा यथा हि सद्वृत्तमिति** ॥१२८॥

(६) **रामचन्द्रः।** तथा तथा इमं लोकं अमुं परलोकं अनिन्दितं प्राप्नोति ॥१२८॥

(८) **गोविन्दराजः। यथेति।** यस्मादनिन्दकः शूद्रो यथावद् द्विजात्याचारमनिषिद्ध-मनुतिष्ठति तथा तथा अगर्हितः सन्निह लोके कीर्तिं परलोके स्वर्गं प्राप्नोति ॥१२८॥

**शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः ॥**
**शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥ १२९ ॥**

(१) **मेधातिथिः। शक्तेनापि** कृष्यादिकर्मणा **धनसंचयः शूद्रेण न** कर्तव्यः। तत्र हेतुस्वरूपमर्थवादमाह **शूद्रो धनं** बह्वासाद्य स्वीकृत्य **ब्राह्मणानेव बाधते**। "का पुनर्ब्राह्मणानां बाधा ?"। महाधनत्वादत्यर्थं ब्राह्मणान्प्रतिग्राहयेत्। शूद्रप्रतिग्रहश्च तेषां प्रतिषिद्धः। तत्र निमित्तभावमापद्यमानो दुष्येत्। एतच्च न विहितं कुर्वतः कर्मदोषाशङ्का। तस्माद् ब्राह्मणान्न परिचरेदित्येषैव 'बाधा'॥ १२९॥

(२) **सर्वज्ञनारायणः।** शक्तेनार्जनसमर्थेनापि ॥१२९॥

(३) **कुल्लूकः।** धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गसंवर्धनपञ्चयज्ञाद्युचितादधिकबहु-धनसंचयो न कर्तव्यः। यस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनमदात् शुश्रूषायाश्चा-करणात् ब्राह्मणानेव पीडयतीत्युक्तस्यानुवादः ॥१२९॥

(४) **राघवानन्दः।** शक्तेनापि तेन धनोद्यमो न कार्यः। तत्र हेतुः **शूद्रो हीति।** बाधते धनगर्वितः ॥१२९॥

(६) **रामचन्द्रः।** शक्तेन समर्थेन ॥१२९॥

(८) **गोविन्दराजः। शक्तेनेति।** धनार्जनशक्तेनापि हि शूद्रेण न धनसंचयः कर्तव्यः। अपि त्वाश्रितब्राह्मणाय यदि नियमतो धनं देयमित्येवंपरमेतत्। तथा च **गौतमः** 'यं चार्थमाश्रियेत भर्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः स्या'दिति। अत्रार्थवादः शूद्रोऽर्हति, तस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनोत्सेका शुश्रूषा ॥१२९॥

(९) **भारुचिः।** महाफलैः शिल्पादिभिः वृत्त्यन्तरैः पर्याप्तधनः शूद्रो विशेषतो दानेन गुणवद्ब्राह्मणेभ्यो वृत्तिः शूद्रप्रतिग्रहोपच्छन्दनेन महतो ब्राह्मणान् स्वधर्मात् प्रच्यावयेत्। अयं तावन्नार्थः—नहि शास्त्रोपदिष्टं कुर्वतः सत्यपि परोपघाते कश्चिद्दोषोऽस्ति। यदि स्यात् नवश्राद्धादिष्वपि ददतो दोषः स्यात्। असावपि परस्परोपघातं करोति। योऽर्थमानाभ्यां गुणवतो ब्राह्मणान् प्रतिपूजयति तस्मान्नायमर्थः। धनोत्सेकाच्छूद्रो ब्राह्मणबाधने वर्ततेत्ययमपि न शक्योऽभ्युपगन्तुम्। सर्वेषामेव गृह्येत ब्राह्मणादिना तुल्यं। केन कः शूद्रे विशेषः। येन तस्यैवमर्थसञ्चयं निषिध्येत। अयं तर्ह्यन्योऽर्थः। न केवलं नित्यदानं शूद्रस्याभ्यनुज्ञायते। किं तर्हि? अभ्युदयप्रयोजनमप्यनेन दानमनुष्ठेयम्। एवं च न कार्यो धनसञ्चय इत्यय-मेवमर्थः प्रतिषेधः'। अथवोक्तम्—'प्रकल्प्यास्य तैर्वृत्तिः सुकुटुम्बाद्यथार्हतः।' इत्येवमादि।

(१) **मेधातिथिः। विजय**शब्देन विजयफलं युक्तं स्वधर्मतया विधीयते। तथा **चाहवे न स्यात्पराङ्मुखः।** भये उपस्थिते पराङ्मुखो युद्धे न स्यादित्यर्थः। अनेन प्रकारेण प्रजा **रक्षित्वा वैश्याद्बलिर्हा**रयितव्यः। वैश्या महाधना भवन्ति। ततस्तथाहरणे नियुक्ताः कृतापराधा न हन्यन्ते ।। ११९ ।।

(२) **सर्वज्ञनारायणः।** विजयो युद्धे परहिंसा स्वधर्मोऽसाधारणो धर्महेतुः, अतो न तत्र दोषः। धर्म्यमनापदि वक्ष्यमाणम् ।। ११९ ।।

(३) **कुल्लूकः।** कस्मात् पुनरापद्यपि राज्ञोऽपि रक्षणमुच्यते? यस्मात् **स्वधर्म इति।** राज्ञः शत्रुविजयः स्वधर्मो विजयफलं युद्धमित्यर्थः, प्रजारक्षणप्रयुक्तस्य यदि कुतश्चिद्भयं स्यात्तदा स युद्धपराङ्मुखो न भवेत्। एवं च शस्त्रेण वैश्यान्दस्युभ्यो रक्षित्वा तेभ्यो धर्मादनपेतमाप्तपुरुषैर्बलिमाहारयेत् ।। ११९ ।।

(४) **राघवानन्दः।** वैश्येतराणां भागमुक्त्वा, राज्ञे वैश्यविषयकतद्विशेषमाह **स्वधर्म** इति सार्धेन। विजयान्वेषी न पराङ्मुखः स्यात् ।। ११९ ।।

(५) **नन्दनः।** क्षत्रियस्य मुख्या वृत्तिरेषेति श्लोकाभ्यामाह **स्वधर्मो विजयस्तस्येति।** तस्य स्वधर्मो विजयः तस्मादाहवे पराङ्मुखो न स्यात् ।। ११९ ।।

(६) **रामचन्द्रः।** धर्म्यं धर्मार्हं बलिं आहरेत् ।। ११९ ।।

(८) **गोविन्दराजः।** कस्मात् पुनरापद्यपि रक्षणमुच्यते? यस्मात् **स्वधर्म** इति। राज्ञः शत्रुपराजयः स्वधर्मः। प्रजारक्षणप्रवृत्तस्य च यदि कुतश्चिद् भयं स्यात् तदा न युद्धपराङ्मुखः स्यादेवं शस्त्रेण वैश्यान् क्षत्रियो दस्युभ्यो रक्षित्वा तेभ्यो धर्मादनपेतं आप्तपुरुषैर्बलिमाहरेत् ।। ११९ ।।

(९) **भारुचिः।** क्षत्रियस्य। विजयः विजयमूलं युद्धं स्वधर्मः। यदि प्रजारक्षणे कुतश्चिद्भयं स्यात्तदा युद्धे पराङ्मुखो न भवेत्। एवंप्रकारेण वैश्यान् दुष्टेभ्यो रक्षित्वा वैश्यात् धर्म्यं बलिं आहारयेत् गृह्णीयात् ।। ११९ ।।

**धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम् ।।**
**कर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ।। १२० ।।**

(१) **मेधातिथिः।** धान्यव्यवहारिणां लाभादष्टमो भागो ग्रहीतव्यः। **विट्**शब्दः प्रजावचनः। हिरण्यव्यवहारिणां विंशतितमः। शूद्राः **कर्मोपकरणाः** कर्म उपकरणमुपकारो येषाम्। न ते किंचिद्दापयितव्याः। एवं **शिल्पिनः कारव**स्तदेवमुक्तं प्राक् 'शिल्पिनो मासि मासि' इत्यादि। अधिकभागग्रहणार्थोऽयं श्लोकः ।। १२० ।।

(२) **सर्वज्ञनारायणः।** विशां वैश्यानामष्टमं, शूद्राणां तु चतुर्थमेव शुल्कं भागम्। **विंशत्कार्षापणमिति।** धान्यादिषु विंशद्विंशतिकार्षापणमूल्यं तादृशालाभे कार्षापण एको राज्ञा ग्राह्य इत्यवरः पक्षः; संभवे त्वधिकमपि ग्राह्यमित्यर्थः। कर्मोपकरणाः कर्मभिर्विश्वमुपकुर्वन्तस्तन्तुवायादयः शूद्राः कारवो वर्णबाह्या नटचित्रकाराद्याः शिल्पिनश्च रथकाराद्यास्तेऽपि कर्म

कृत्वा भृतित्वेऽपि विंशतिकार्षापणालाभे कार्षापणावरं शुल्कं दद्युरिति शेषः। त्रिंशत्कार्षापणावरमिति क्वचित्पाठः ।। १२० ।।

(३) **कुल्लूकः।** कोऽसौ बलिस्तमाह **धान्य इति।** धान्ये विंश उपचये वैश्यानामष्टमं-भागं शुल्कमाहारयेत्। धान्यानां द्वादशोऽपि भाग उक्तः, आपद्ययमष्टम उच्यते, अत्यन्तापदि प्रागुक्तश्चतुर्थो वेदितव्यः। तत्रापि विंशं ग्राह्यं; तथा हिरण्यादीनां कार्षापणान्तानां विंशति-तमं भागं शुल्कं गृह्णीयात्तत्रापि पञ्चाशद्भाग आदेयो राज्ञा। पशुहिरण्ययोरित्यनापदि पञ्चाशद्भाग उक्तः। आपद्ययं विंश उच्यते। तथा शूद्राः कारवः सूपकारादयः शिल्पिनः तक्षादयः कर्मणैवोपकुर्वन्ति, नतु तेभ्य आपद्यपि करो ग्राह्यः ।। १२० ।।

(४) **राघवानन्दः।** धर्म्यं बलिमाह **धान्य इति।** अनापदि विंशां धान्यानां द्वादशभाग उक्तः; हिरण्यादिकार्षापणानां तु पञ्चाशद्भागः, अत्र तु तेषां संकोच उक्तः, 'धान्यानामष्टमो भागः षष्ठो द्वादश एव वे'त्युक्तत्वात्। तत्र विंशं प्रति षष्ठांशग्रहणे सपादाढकत्रयं द्वादशांशग्रहणे किंचिदधिकसार्धाढकं चतुर्थांशग्रहणे त्वाढकपञ्चकम्। एवं च सुवर्णादिषु विंशं प्रति तोलकमन्यत्रैवम्। परिचारककारुशिल्पिनां तु विशेषमाह **कर्मेति।** कर्मोपकरणाः कर्मैव उपकरणकरो येषां ते तथा तेषामपि विंशं प्रत्येककैः स्वकर्मणि प्रयोक्तव्योऽनापद्यपि ते करदा इत्यर्थः ।। १२० ।।

(५) **नन्दनः।** विंशां कार्षापणावरं यः शुल्को धान्यव्यतिरिक्तेषु विंशो भागः पूर्वमुक्तः स पणः कार्षापणावरः कार्षापणान्न्यूनतरश्चेन्न ग्राह्यः। कर्मोपकरणाः कर्मोपकारिणः। करार्थं कर्मैव शूद्रादीन्कारयेन्नार्थं दापयेदित्यर्थः ।। १२० ।।

(६) **रामचन्द्रः।** धान्ये विंशां अष्टमं शुल्कं अष्टमं भागं विंशं अपरं वा कर्मोपकरणाः कर्म कर्तुं शूद्रा योग्याः ।। १२० ।।

(८) **गोविन्दराजः।** कोऽसौ धर्म इत्यत आह **धान्येऽष्टममिति।** कृषिर्जीविनां वैश्यानां धान्यविषये उपचयतोऽष्टमं भागं शुल्कमाहारयेद् हिरण्यादीनां कार्षापणान्तानां विंशतितमं चतुर्थतमम् ।। १२० ।।

(९) **भारुचिः।** प्रजासंरक्षणं कुर्वन्। एवं च सति सोऽयमुच्यते— . . . सर्वधर्मे . . . . भागो ग्रहीतव्यः। जानपदात् स्वबलापेक्षया हिरण्यव्यवहारिणां च लाभाच्छुल्कं विंशो भागः। सोऽयमनुवादो विज्ञेयः। पूर्वोक्तस्य कर्मोपकरणाः शूद्राः . . . . . .। तथा च कारवः शिल्पिनश्च। कारुशिल्पव्यपदेशश्च गोबलीवर्दन्यायेन। शूद्रवृत्तिं कांक्षन्नापदीति वर्तते। क्षत्रमाराधयेद्यदि क्षत्रमाराधयितुमिच्छेत्। तदभावे बलिमाह **धान्ये इति।** धान्ये उपचीयमाने विंशां वैश्यानां अष्टतमं भागं शुल्कं गृह्णीयात्। अयं च आपदि। अनापदि द्वादशोऽपि भाग उक्तः। अत्यंतापदि धान्यचतुर्थभागः प्रागुक्तो ग्राह्यः। तथा विंशं कार्षापणाऽवरं। कार्षापणादिप्रमाणद्रव्यं पशोर्वा वृद्धौ आपदि विंशतितमं भागं वैश्यात् बलिं आहरेत्। अनापदि पंचाशद्भागस्योक्तत्वात्। तथा शूद्राः। कारवः सूपकारादयः। शिल्पिनः तक्षादयश्च एते कर्मोपकरणाः। एभ्यः कर्माण्येव कारयेत्, नतु बलिं गृह्णीयात् ।। १२० ।।

**शूद्रस्तु वृत्तिमाकांक्षन्क्षत्रमाराधयेदिति ॥**
**धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥ १२१ ॥**

(१) **मेधातिथिः । शूद्रस्तु वृत्तिमाकांक्षे**त्तदा **क्षत्रमाराधयेत्** । वृत्तिग्रहणाज्जीविकार्थमेव क्षत्राराधनम्, न धर्मार्थम् । ब्राह्मणाराधनं तूभयार्थमपीत्युक्तं भवति । एवं **धनिनं** वैश्यमाराध्य जीवेत् ॥ १२१ ॥

(२) **सर्वज्ञनारायणः** । यदि वृत्तिमाकांक्षन्भवेच्छूद्रस्तदा क्षत्रमाराधयेदित्यन्वयः ॥ १२१ ॥

(३) **कुल्लूकः** । शूद्रो ब्राह्मणशुश्रूषयाऽजीवन्यदि वृत्तिमाकांक्षेत्तदा क्षत्रियं परिचर्य तदभावे धनिनं वैश्यं परिचर्य जीवितुमिच्छेत् । द्विजातिशुश्रूषणासामर्थ्ये तु प्रागुक्तानि कर्माणि कुर्यात् ॥ १२१ ॥

(४) **राघवानन्दः** । ब्राह्मणशुश्रूषोः शूद्रस्य धनाकांक्षायां तदुपायमाह **शूद्रस्त्विति** । यदि वा धनिनं वैश्यमित्यन्वयः ॥ १२१ ॥

(५) **नन्दनः** । अथ शूद्रस्यापदि वृत्तिमाह **शूद्रस्तु वृत्तिमाकांक्षेदिति** । क्षत्रमाराधयेदपि क्षत्रमप्याराधयेत् ॥ १२१ ॥

(६) **रामचन्द्रः** । शूद्रस्तु वृत्तिमाकांक्षन्नापदि क्षत्रमाराधयेत् । धनिनं वा वैश्यं उपाराध्य जिजीविषेत् ॥ १२१ ॥

(७) **मणिरामः** । शूद्रो ब्राह्मणसेवया अजीवन् यदि वृत्तिं आकांक्षेत् तदा क्षत्रं आराधयेत्, तदभावे धनिनं वैश्यं वा उपाराध्य परिचर्य जिजीविषेत् जीवितुमिच्छेत् । द्विजातिशूश्रूषणाऽसामर्थ्ये च प्रागुक्तानि कारुशिल्पादीनि कर्माणि कुर्यात् ॥ १२१ ॥

(८) **गोविन्दराजः** । **शूद्रस्येति** । शूद्रो ब्राह्मणशूश्रूषया अजीवन् यदि वृत्त्याकाङ्क्षी स्यात् तदा क्षत्रियं परिचरेत्, तदभावे धनवन्तं वैश्यं परिचर्य जीवितुमिच्छेत्, तदभावेऽत्यन्तापद्युक्तानि कारुकर्माणि कुर्यात् । एवं च क्षत्रियवैश्याराधनं शूद्रस्य वृत्त्यर्थमेव धर्मार्थं च ॥ १२१ ॥

(९) **भारुचिः** । एवं च सति क्षत्रियवैश्याराधनं वृत्तिरेव केवला शूद्रस्य ॥ १२१ ॥

**स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ॥**
**जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥१२२॥**

(१) **मेधातिथिः** । आराधयेदित्युक्तं भवति । तदाह **जातब्राह्मणशब्दस्य** 'ब्राह्मणोऽयमिति' यदाऽस्य एष शब्दो भवति, तदासौ **कृतकृत्यः** कृतार्थो वेदितव्यः । अथवा जातब्राह्मणव्यपदेशस्येति व्याख्येयम् । ब्राह्मणाश्रितोऽयमिति यदाऽस्य व्यपदेशो जायते ॥ १२२ ॥

(२) **सर्वज्ञनारायणः** । [ उभयार्थं वृत्त्यर्थं स्वर्गार्थं च । विप्रानेवाभिवाचयेदिति

क्वचित्पाठः । ] अभिवाचनं सेवा । जातब्राह्मणशब्दस्य ब्राह्मणदासोऽयमिति जातप्रसिद्धेः । सा ब्राह्मणदासत्वेन प्रसिद्धिः ।। १२२ ।।

(३) **कुल्लूकः** । स्वर्गप्राप्त्यर्थं स्वर्गस्ववृत्तिलिप्सार्थं वा ब्राह्मणानेव शूद्रः परिचरेत् । तस्माज्जातब्राह्मणाश्रितोऽयमिति शब्दो यस्य शाकपार्थिवादित्वात्समासः । साऽस्य शूद्रस्य कृतकृत्यता तद्व्यपदेशतयाऽसौ कृतकृत्यो भवति ।। १२२ ।।

(४) **राघवानन्दः** । तस्य यद्यनापदि चेद्द्विजशुश्रूषणमेवोभयत्र सुखदमित्याह **स्वर्गार्थ-**मिति । स शूद्रः । उभयार्थं दृष्टार्थं जातब्राह्मणशब्दस्य जातो ब्राह्मणाश्रितोऽयमिति शब्दो यस्य स तथा तस्य शाकपार्थिवादित्वात्समासः । अतः सा शुश्रूषा तादृशी शब्दप्रवृत्तिर्वा कृतकृत्यता कर्तव्यपर्यन्तता 'दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्ये'त्युक्तेः ।। १२२ ।।

(५) **नन्दनः** । उभयार्थमैहिकपारत्रिकार्थमाराधयेत् । जातब्राह्मणशब्दस्य दास्यादिति शेषः । ब्राह्मणाराधनेन ब्राह्मणवद्भवतीत्यर्थः ।। १२२ ।।

(६) **रामचन्द्रः** । उभयार्थं स्वर्गार्थं भूमौ सुखार्थं च शूद्रो जातब्राह्मणशब्दस्य जातब्राह्मणव्यपदेशस्येत्यर्थः । ब्राह्मणाश्रितोऽयमिति यदस्य व्यपदेशो जायते ब्राह्मणस्य दासोऽयं सा सेवा अस्य शूद्रस्य कृतकृत्यता ।। १२२ ।।

(७) **मणिरामः** । सा हि अस्य शूद्रस्य . . . . कृतकृत्यता ।। १२२ ।।

(८) **गोविन्दराजः** । **स्वर्गार्थमिति** । वृत्तिप्राप्त्यर्थमथवा स्वर्गवृत्तिलिप्सया इत्येवमुभयार्थं ब्राह्मणानेव शूद्रः परिचरेत् । यस्माद् ब्राह्मणाश्रितोऽयमित्येवमुत्पन्नव्यपदेशस्य जात्युपदेशता तयासौ कृतकृत्यो भवति ।। १२२ ।।

(९) **भारुचिः** । शूद्रः येनास्येदं ब्राह्मणाराधनं वृत्त्यर्थमपि सद्धर्माय । एवं च सत्येषा स्तुतिरस्योपपन्ना भवति । यतश्चैतदेवमतः विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।।१२२।।

**विप्रसेवैव शूद्रस्य विशिष्टं कर्म कीर्त्यते ।।**
**यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ।।१२३।।**

(१) **मेधातिथिः** । ब्राह्मणशुश्रूषैव मुख्यः शूद्रस्य धर्मः । **ततो यदन्य**द्व्रतोपवासादि **कुरुते तदस्य निष्फलम्** । न तु दानपाकयज्ञादीनामस्य प्रतिषेधः, प्रत्यक्षविधानात् । इतर-प्रतिषेधो ब्राह्मणशुश्रूषास्तुत्यर्थः ।। १२३ ।।

(२) **सर्वज्ञनारायणः** । यदतोऽन्यदेतद्विना कुरुते ।। १२३ ।।

(३) **कुल्लूकः** । यत एवमतः **विप्रेति** । ब्राह्मणपरिचर्यैव शूद्रस्य कर्मान्तरेभ्यः प्रकृष्टं कर्मशास्त्रेऽभिधीयते यस्मादेतद्व्यतिरिक्तं यदसौ कर्म कुरुते तदस्य निष्फलं भवतीति पूर्वस्तुत्यर्थं नत्वन्यनिवृत्तये, पाकयज्ञादीनामपि तस्य विहितत्वात् ।। १२३ ।।

(४) **राघवानन्दः** । तामेव द्रढयन्नन्यदस्य निषेधति **विप्रसेवेति** । निष्फलं दृष्टधनादि-संपत्तिरपि न परलोकफलहेतुः ।। १२३ ।।

(५) **नन्दनः**। एतदेव प्रपञ्चयति **विप्रसेवैव शूद्रस्येति**।। १२३ ।।

(६) **रामचन्द्रः**। यतः सैवास्य कृतकृत्यता अत आह **विप्रेति**।। १२३ ।।

(८) **गोविन्दराजः**। यत एवमतः **विप्रसेवेति**। ब्राह्मणशुश्रूषैव शूद्रस्य विशिष्टं कर्म कर्मान्तरेभ्यः शास्त्र उच्यते । यस्माद् एतद्व्यतिरिक्तं यदसौ कर्म कुरुते तदस्य निष्फलं भवतीति पूर्वार्थवादो नत्वन्यनिवृत्त्यर्थः, पाकयज्ञादीनां विहितत्वात् ।। १२३ ।।

(९) **भारुचिः**। क्षत्रियवैश्याराधनम् अथवा यदतोऽन्यत् प्रकुरुते पाकयज्ञादि । **तद्भवत्यस्य निष्फलमिति**। एवं च सति (इयं) विहितकर्मनिन्दा विप्रसेवास्तुत्यर्थम् उपदेशसामर्थ्याद्धि जायते ।। १२३ ।।

**प्रकल्प्य तस्य तैर्वृत्तिः स्वकुटुंबाद्यथार्हतः ।।**
**शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम् ।। १२४ ।।**

(१) **मेधातिथिः**। द्विजातीनामयं धर्मः । **तस्य वृत्तिः** कल्पनीया शुश्रूषमाणस्य । **स्वकुटुंबादिति**। पुत्रवदसौ पालनीयः। आत्मीयां **शक्तिमवेक्ष्य**। **दाक्ष्यं च** तस्य कार्येषु योगम् । **भृत्यानां** च पुत्रदाराणां तदीयानां **परिग्रहं** कियंतोऽस्य भर्तव्या इत्येतदवेक्ष्य सर्वेषां भरणं कर्तव्यम् ।। १२४ ।।

(२) **सर्वज्ञनारायणः**। तैर्द्रव्यैः स्वकुटुम्बार्थधनात् । शक्तिं कर्मसु सामर्थ्यम् । दाक्ष्यमुत्साहम् । भृत्यानां भरणीयानां पुत्रादीनां परिग्रहमियतास्येति विशिष्टसंख्याभरणीयत्वम् ।। १२४ ।।

(३) **कुल्लूकः**। तस्य परिचारकशूद्रस्य परिचर्यासामर्थ्यं कर्मोत्साहं पुत्रदारादिभर्तव्यपरिमाणं चावेक्ष्य तैर्ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया ।।१२४।।

(४) **राघवानन्दः**। तादृशस्य शूद्रस्य विप्रदत्तदेहभरणमनुजानंस्तं नियमयति **प्रकल्प्येति** द्वाभ्याम् । तैर्विप्रैः । वृत्तिर्वस्त्राच्छादनादिका । स्वकुटुम्बात् स्वगृहात् । यथार्हतः यद्यदर्हति न तदतिक्रमतः । शक्तिं परिचर्यासामर्थ्यम् । दाक्ष्यं कर्मसामर्थ्यम् । परिग्रहं पुत्रादिसंख्याम् ।। १२४ ।।

(५) **नन्दनः**। तैर्ब्राह्मणादिभिः भृत्यानां भर्तव्यानाम् ।। १२४ ।।

(६) **रामचन्द्रः**। तैः द्विजैः स्वकुटुम्बात्तस्य यथार्हतो वृत्तिः प्रकल्प्या ।। १२४ ।।

(७) **मणिरामः**। सत्यामपि धर्मार्थायां विप्रसेवायां प्रकल्प्या तस्य तैर्वृत्तिः । अर्थाच्चैतदापद्यते । वृत्तितोऽप्याश्रितस्य किं पुनरावृत्ते शूद्रस्य पुत्रवच्चास्य शुश्रूषा न वृत्तिपरिक्रयेण येनासौ धर्मोपनतः एवंविधस्यापि च शूद्रस्य ।। १२४ ।।

(८) **गोविन्दराजः**। **प्रकल्प्येति**। तस्य शुश्रूषोः शूद्रस्य शुश्रूषासामर्थ्यमुत्साहं पुत्रदारादिभर्तव्यपरिमाणतामवेक्ष्य तैर्ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया ।। १२४ ।।

(९) **भारुचिः** तस्य परिचारकशूद्रस्य । शक्तिं परिचर्यासामर्थ्यं । दाक्ष्यं कर्मोत्साहं

भृत्यानां च परिग्रहं पुत्रदारादि भर्तव्यपरिमाणं च वीक्ष्य दृष्ट्वा तैः विप्रैः स्वकुटुंबात् स्वगृहात्। यथार्हतः शूद्रकुटुंबस्य अनुरूपा वृत्तिः जीविका। प्रकल्प्या कल्पनीया इत्यर्थः ।। १२४ ।।

**उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।।**
**पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ।। १२५ ।।**

**(१) मेधातिथिः।** उच्छिष्टशब्दो व्याख्यातार्थः। अतिथ्यादिभुक्तशिष्टमाश्रिताय शूद्राय दातव्यम्। एवं वासांसि **जीर्णानि** धौतानि शुक्लानि। **पुलाका** असारधान्यानि। एवं **परिच्छदाः** शय्यासनादयः ।। १२५ ।।

**(२) सर्वज्ञनारायणः।** उच्छिष्टं पाकभाण्डावशिष्टं नतु भुक्तोच्छिष्टं निषिद्धत्वात्। पुलाकाः तुच्छधान्यासारभूतानि धान्यानि विक्रीय जीवितुं जीर्णाः परिच्छदाः ।। १२५ ।।

**(३) कुल्लूकः।** तस्मै प्रकृताश्रितशूद्राय भुक्तावशिष्टान्नं ब्राह्मणैर्देयं। एवं च न शूद्राय मतिं दद्यान्नोच्छिष्टमित्यनाश्रितशूद्रविषयमवतिष्ठते। तथा जीर्णवस्त्रासारधान्यजीर्णशय्यापरिच्छदा अस्मै देयाः ।। १२५ ।।

**(४) राघवानन्दः।** किंच **उच्छिष्टमिति।** जीर्णानि स्वभोगेन। पुलाकाः असारधान्यानि। परिच्छदाः शय्यासनादयोऽपि जीर्णाः 'न शूद्राय मतिं दद्यादि'त्यादिकं त्वनाश्रितशूद्रविषयम् ।। १२५ ।।

**(५) नन्दनः।** 'न शूद्राय मतिं दद्यान्नोच्छिष्ट'मिति यदुक्तं तस्यापद्विषये प्रतिप्रसवो यदुच्छिष्टमन्नं दातव्यमिति। पुलाकास्तुच्छधान्यानि। परिच्छदा आसनादयः ।। १२५ ।।

**(६) रामचन्द्रः।** धान्यानां पुलाकाः असारधान्यानि चूर्णानि ।। १२५ ।।

**(७) मणिरामः।** पुलाकाः असारधान्यं परिच्छदः जीर्णवस्त्रपरिच्छदः। तथा च 'न शूद्राय मतिं दद्यान्नोच्छिष्ट'(४।८०)मिति निषेधोऽनाश्रयशूद्रविषयो ज्ञातव्यः ।। १२५ ।।

**(८) गोविन्दराजः।** किंच **उच्छिष्टमिति।** अस्य च प्रकृतस्याश्रितस्य शूद्रस्य पात्रस्थं भुक्तावशिष्टं ब्राह्मणेन देयम्। एवं च 'न शूद्राय मतिं दद्यान्नोच्छिष्ट'मिति अनाश्रितशूद्रविषयमिति व्याख्यातम्। तथा जीर्णवस्त्रासारधान्यजीर्णशय्यादीन्यस्य देयानि ।। १२५ ।।

**(९) भारुचिः।** प्रतिषिद्धार्थस्य प्रतिप्रसवोऽयम्। यदुक्तं–'न शूद्राय मतिं दद्यान्नोच्छिष्टं' एवं च सत्यनाश्रितशूद्रविष(योऽयं) प्रतिषेधो द्रष्टव्यः। ब्राह्मणाश्रितशूद्रविषयोऽयं प्रतिषेधो द्रष्टव्यः। ब्राह्मणाश्रितशूद्रविषयोऽस्त्वयं प्रतिप्रसवः प्रकरणसामर्थ्यात् जीर्णमिति। ब्राह्मणपरिभुक्तानि गृह्यन्ते। आसनं शयनास्तरणोपधानादयः, एवंविधेऽपि च 'न शूद्रे पातकं किञ्चिदि'ति सामर्थ्यान्न ब्रह्महत्यादि यथासम्भवं प्रतिषिध्यते। किं तर्हि? लशुनादिभक्षजाः। येन तदभावलक्षणं द्विजातिधर्मः, तथा चोक्तम् (५।२६) 'एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः' ।। १२५ ।।

**न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ॥**
**नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥ १२६ ॥**

(१) **मेधातिथिः।** सर्वोऽयमनुवादश्लोकः। यदस्याहृत्यशृङ्गग्राहिकया न प्रतिषिद्धं, यथा हिंसास्तेयाद्यनादृतवर्णविशेषं सामान्यशास्त्रप्रतिषिद्धं, न तद्व्यतिक्रमादस्य पापमुत्पद्यते। श्रुतमेवास्य शब्देन यथा हिंसास्तेयादिस्तत्रास्य भवत्येव दोषः। **न च संस्कारमुपनयन**-लक्षणमर्हति। तदुक्तं 'त्रयो वर्णा द्विजातय" इति। एवं **नास्याधिकारो धर्मेऽस्ति** स्नानोपवासदेवतार्चनादौ नास्य नित्योऽधिकारोऽस्ति। अकरणे न प्रत्यवैति।

**न धर्मात्प्रतिषेधनम्।** येषु स्नानोपवासव्रतादिषु नित्याधिकारो नास्त्यकरणे प्रत्यवाया-भावोऽथ निषेधो नास्ति तादृशेभ्यो धर्मेभ्यो न प्रतिषेधः। न चेदृशादस्य प्रतिषेधः। अतः शिष्टाप्रतिषिद्धत्वादभ्युदयकामस्य तदनुष्ठानं युज्यते। एवं लशुनादिभक्षणनिवृत्तिरप्यभ्युदया-यास्य वेदितव्या। सामान्यशास्त्रे विहितं 'निवृत्तिस्तु महाफलेति'। अतो न धर्मात्प्रति-षेधनमिति यत्रारम्भः ॥१२६॥

(२) **सर्वज्ञनारायणः।** पञ्चयज्ञादिकरणरूपाद्धर्मात्प्रतिषेधनम् ॥१२६॥

(३) **कुल्लूकः।** लशुनादिभक्षणेन शूद्रे न किंचित्पातकं भवति, नतु ब्रह्मवधादावपि 'अहिंसा सत्य'मित्यादेश्चातुर्वर्ण्यसाधारणत्वेन विहितत्वात्। नचाप्युपनयनादिसंस्कारमर्हति, नास्याग्निहोत्रादिधर्मेऽधिकारोऽस्ति अविहितत्वात्। नच शूद्रविहितात्पाकयज्ञादिधर्मादस्य निषेधः। एवं चास्य सर्वस्य सिद्धार्थत्वादयं श्लोक उत्तरार्थोऽनुवादः ॥१२६॥

(४) **राघवानन्दः।** शूद्रस्य विप्रसेवेति पुनःपुनर्द्रढयन्प्राप्तमर्थवादतयाऽनुवदति **नेति** चतुर्भिः। पातकं सूनादिकृतं नतु विप्रवधादिकृतं 'अहिंसा सत्यमस्तेय'मित्यादिचातुर्वर्ण्य-साधारणस्योक्तत्वात्। न धर्मात्पञ्चयज्ञादेः ॥१२६॥

(५) **नन्दनः।** पातकं विहितकर्माननुष्ठानप्राप्तः प्रत्यवायः शूद्रे नास्ति तस्याऽविहित-धर्मत्वात्। संस्कारं निषेकादिकं श्रौते धर्मेऽधिकारो नास्ति धर्मात्पाकयज्ञादेः ॥१२६॥

(६) **रामचन्द्रः।** शूद्रेऽभक्ष्यभक्षणे कृते किंचित्पातकं न ॥१२६॥

(८) **गोविन्दराजः। न शूद्र इति।** न शूद्रे पातकं किञ्चिद् भवति लशुनाद्यभक्षण-भक्षणेनैतदुक्तं द्विजातीनां भक्षाभक्षमित्युक्त्वान्न ब्राह्मणादिभिः अहिंसा सत्यमस्तेयमित्यादि सर्वविषयत्वान्न चोदितत्वान्न चोपनयनाख्यं संस्कारमसावर्हति 'गर्भाष्टम' इत्यादि कालत्रैवर्णिक-कृतस्य चोदितत्वान्न चास्याग्निहोत्रादौ श्रौते धर्मेऽधिकारेऽन्यविवाहत्वं, न च स्मार्त-धर्माञ्छूद्रकर्तृकत्वादस्य निवारणमस्ति विहितत्वात् तथा चत्वारः न चेच्छूद्रः पततीति निश्चयो न चैव संस्कारमिहार्हति इति श्रुतिप्रयुक्तं न धर्ममश्नुते न चास्य धर्मात् प्रतिषेधनं स्मृतापेति। एवं चास्याथ धर्मस्य प्रेतसिद्धत्वादयं श्लोकानुवाद उत्तरार्थः ॥१२६॥

(९) **भारुचिः।** शूद्रस्य लशुनादिभक्षणे पातकं नास्ति ब्रह्मवधादौ तु पातकमस्त्येव, अहिंसा 'सत्यमस्तेयं'मित्यादेश्चातुर्वर्ण्यसाधारणत्वेन विहितत्वात् संस्कारं उपनयनादिकं। धर्मे अग्निहोत्रादौ। धर्मात् पाकयज्ञादिधर्मात् ॥१२६॥

नास्याधिकारो धर्मोऽस्ति । ?"इति उत्तरार्थस्त्वितीदमारभ्यते।' न धर्मप्रतिषेधनम् ।। इति तथा च वक्ष्यति–

'धर्मेप्सवस्तु धर्मज्ञाः' 'यथा यथा हि सद्वृत्ति'मिति च। अथवा विकल्पार्थोऽस्यारम्भः। शूद्रस्य हि कानिचित् कर्माणि अमन्त्रकाण्यनुज्ञायन्ते पाकयज्ञादीनि । तेषामनुष्ठानाद् ब्राह्मण- माश्रित्यास्य शूद्रस्याधिकारो धर्मेऽस्ति नियोगतः। न चैतस्मात् प्रतिषेधनम्। एवं च सत्युक्तप्रतिषेधत्वाविकल्पेनैषां क्रिया स्यात्। (तस्य) चास्य क्रियायामभ्युदयः, अक्रियायां प्रत्यवायाभाव इत्येतत् सिद्धं भवति। प्रकरणसामर्थ्याद् ब्राह्मणाश्रितस्यैतत् इतरस्य वा ।।१२६।।

**धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः ।।**
**मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ।।१२७।।**

(१) **मेधातिथिः।** एतदेवाह–धर्ममाप्तुमिच्छन्तोऽभ्युदयकामाः। **सतां** साधूनां **धर्ममनुष्ठिताः** समाश्रिताः। **मन्त्रवर्जं न** दुष्यन्ति। अतस्ते अनेकाहोपवासदेवतार्चनगुरु- ब्राह्मणनमस्कारादि सतां वृत्तमाचरन्तो न दुष्यन्ति। **प्रशंसां** फलं **च प्राप्नुवन्ति।**

न पुनरेतन्मन्तव्यं "यानि समन्त्रकाणि ब्राह्मणादीनां कर्माणि दर्शपौर्णमासादीनि तानि मन्त्रवर्जं शूद्रस्य न दुष्यन्तीति"। यतः समन्त्रेषूत्पन्नेषु मन्त्ररहितेनानुष्ठानमशाब्दं स्यात्। **मन्त्रवर्ज**मित्येतस्य दर्शितो विषयः। तथा च भगवान् **व्यासः**–

**"न चेह शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति।**
**स्मृतिप्रयुक्तं तु न धर्ममश्नुते न चास्य धर्मे प्रतिषेधनं स्मृतम्" ।। इति।**

एतदपि यथाविहितानुवाद्येव। लशुनसुरापानादेर्न पतति। संस्कारानर्हतोक्तैव। उक्तं चानुपनीतत्वात् श्रुतिविहितधर्माभावे स्मृतिविषये सामान्यविहिता धर्मा यथोक्तप्रकारास्ते नास्य प्रतिषिध्यन्ते। तथा च स्मृत्यंतरं–"पाकयज्ञैः स्वयं यजेत्, अनुज्ञातोऽस्य नमस्कारो मन्त्र इति" (गौतम० १० । ६४-६५)।

ये पुनराहुः–"आवसथ्याधानपार्वणवैश्वदेवान्नपाकयज्ञादिषु शूद्राणां पाक्षिकोऽधिकारः" तेषामभिप्रायं न विद्मः। आवसथ्याधानं तावद्गृह्यकारैराम्नातं त्रैवर्णिकोद्देशेनैव। मन्वादि- भिश्च नैवमाम्नातम्। तथा केवलं "वैवाहिकाग्नौ कुर्वीत गृह्यं कर्मेति" (३।६७) तत्र नैवाम्नातम्। कुतः शूद्रस्याधानम्? अथ पाकयज्ञविधानादग्न्याधानाक्षेपस्तदपि न, लौकिकाग्नौ वैश्वदेवो भविष्यति। यावद्वचनं वाचनिकं नान्यदाक्षेप्तुमलम्। विवाहाग्नावित्यत्रैव प्रदर्शि- तम्। पार्वणशब्देन च यद्यामावास्यं श्राद्धमुच्यते तदभ्यनुजानीमः, अष्टकापार्वणश्राद्धवैश्व- देवानां विहितत्वात्। अथ दर्शपौर्णमासौ, तदपाकृतम् ।।१२७।।

(२) **सर्वज्ञनारायणः।** तदेवाह **धर्मेप्सव** इति। मंत्रवर्जं न सोमयागादिकर्मकामयज्ञ- करणे प्रशंसां प्राप्नुवन्ति धर्मं च लभन्त इत्यपि द्रष्टव्यम्। पञ्चमहायज्ञकरणे न दोष इत्युक्तम्। सतां वृत्तमनुष्ठिताः सतां वृत्तं लक्षीकृत्योद्युक्ताः। प्रशंसां सच्छूद्रताम् ।।१२७।।

(३) **कुल्लूकः।** ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामास्त्रैवर्णिकानामाचारमनिषिद्धमाश्रितास्ते। 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्'दिति **याज्ञवल्क्य**वचनान्नमस्कारमन्त्रेण मन्त्रान्तररहितं पञ्चयज्ञादिधर्मान्कुर्वाणा न प्रत्यवयन्ति ख्यातिं च लोके लभन्ते ।।१२७।।

(४) **राघवानन्दः।** अत एवाह **धर्मेति**। धर्मेच्छवो धर्मं कर्तुकामाः। धर्मज्ञाः पुराणादिद्वारा धर्मानुष्ठानज्ञाः। तथा च **याज्ञवल्क्यः** 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्।' सतां धर्मं ब्राह्मणाद्यमनुष्ठितं पञ्चयज्ञादिरूपम्। मन्त्रवर्ज नमोतिरिक्तमन्त्रवर्जम् ।।१२७।।

(५) **नन्दनः।** यद्यप्येवं तथापि धर्मेप्सवो धर्मज्ञाः सतां वृत्तिनिषेकादिसंस्कारं मन्त्रवर्जितमनुष्ठिता अनुष्ठितवन्तः शूद्रा न दुष्यन्ति" ।।१२७।।

(६) **रामचन्द्रः।** धर्मेप्सवः धर्मज्ञाः मन्त्रवर्जं अध्ययनवर्जं न दुष्यन्ति।

धर्मेप्सवः धर्मप्राप्तिकामाः। सतां वृत्तं त्रैवर्णिकानामाचारं आश्रिताः संतः मंत्रवर्जं तंत्रांतरविहितं पंचयज्ञान् कुर्वाणाः न दुष्यंति न प्रत्यवदंति प्रशंसां च प्राप्नुवंतीत्यर्थः ।।१२७।।

(७) **मणिरामः।** अनसूयकः परगुणाऽनिंदकः शूद्रः ।।१२८–१२९।।

(८) **गोविन्दराजः।** तथा च दर्शयति **धर्मेप्सव** इति। ये पुनः शूद्राः स्वधर्मवेदिनो धर्मप्राप्तिकामास्त्रैवर्णिकानां संबन्धिनमनिषिद्धमाचारं आश्रितास्तेऽमन्त्रकमन्नप्राशनपाकयज्ञादि कुर्वाणा न प्रत्यवयन्ति न तूपनयनं 'चतुर्थ एक जातिस्त्वि'त्युक्तत्वात् ख्यातिं च लोके प्राप्नुवन्ति ।।१२७।।

(९) **भारुचिः।** इतरस्य वा तथा च सत्याह **धर्मेप्सव इति**।

अप्रतिषिद्धमासेवनाप्रकरणाद्ब्राह्मणाश्रितशूद्रा उच्यन्ते। न चानेन मन्त्रप्रतिषेधेनाग्निहोत्रादिष्वप्यस्याधिकारोऽनुज्ञायते। मन्त्रवर्जं न दुष्यन्तीत्येतस्माद् येन श्रुत्याग्निहोत्रादिषु शूद्रः पर्यदस्तः, तस्माद्धर्मेप्सवः स्मार्तविषयम्। नियमसंस्कारेषु पाकयज्ञेषु चा (व) साक्ष्याधानपार्वणवैश्वदेवान्नप्राशनादिषु शूद्राणां पाक्षिकोऽधिकार इत्युक्तम्। तथा च स्मृत्यन्तरम् ।।

'पाकयज्ञे स्वयं यज्ञे तस्यैक' इति, एवं च यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः। तथा तथेमञ्चामुञ्च लोकं प्राप्नोत्यनिन्दितः। स्मार्तानां कर्मणां शूद्रक्रियापक्षेस्तुरनुष्ठानप्ररोचनार्थाः (?) ।।१२८–१२९।।

**यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः ।।**
**तथा तथेमं चामुं च लोकं प्राप्नोत्यनिन्दितः ।। १२८ ।।**

(१) **मेधातिथिः।** उक्तार्थः श्लोकः ।।१२८।।

(२) **सर्वज्ञनारायणः।** तत्र युक्तिमाह **यथेति**। अनसूयकोऽद्विजद्वेष्टा ।।१२८।।

(३) **कुल्लूकः।** परगुणानिन्दकः शूद्रो यथा यथा द्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा जनैरनिन्दित इह लोक उत्कृष्टः स्मृतः स्वर्गादिलोकं च प्राप्नोति ।।१२८।।

**(४) राघवानन्दः ।** अनिन्दितो (लोकैरिति शेषः) ।।१२८।।

**(५) नन्दनः ।** सद्वृत्तानुष्ठानस्य फलमाह **यथा यथा हि सद्वृत्तमिति** ।।१२८।।

**(६) रामचन्द्रः ।** तथा तथा इमं लोकं अमुं परलोकं अनिन्दितं प्राप्नोति ।।१२८।।

**(८) गोविन्दराजः । यथेति ।** यस्मादनिन्दकः शूद्रो यथावद् द्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा अगर्हितः सन्निह लोके कीर्तिं परलोके स्वर्गं प्राप्नोति ।।१२८।।

**शक्तेनापि हि शूद्रेण न कार्यो धनसंचयः ।।**
**शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ।। १२९ ।।**

**(१) मेधातिथिः । शक्तेनापि** कृष्यादिकर्मणा **धनसंचयः शूद्रेण न** कर्तव्यः । तत्र हेतुस्वरूपमर्थवादमाह **शूद्रो धनं** बह्वा**साद्य** स्वीकृत्य **ब्राह्मणानेव बाधते ।** "का पुनर्ब्राह्मणानां बाधा ?" । महाधनत्वादत्यर्थं ब्राह्मणान्प्रतिग्राहयेत् । शूद्रप्रतिग्रहश्च तेषां प्रतिषिद्धः । तत्र निमित्तभावमापद्यमानो दुष्येत् । एतच्च न विहितं कुर्वतः कर्मदोषाशङ्का । तस्माद् ब्राह्मणान्न परिचरेदित्येषैव 'बाधा' ।। १२९।।

**(२) सर्वज्ञनारायणः ।** शक्तेनार्जनसमर्थेनापि ।।१२९।।

**(३) कुल्लूकः ।** धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गसंवर्धनपञ्चयज्ञाद्युचितादधिकबहुधनसंचयो न कर्तव्यः । यस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनमदात् शुश्रूषायाश्चाकरणात् ब्राह्मणानेव पीडयतीत्युक्तस्यानुवादः ।।१२९।।

**(४) राघवानन्दः ।** शक्तेनापि तेन धनोद्यमो न कार्यः । तत्र हेतुः **शूद्रो हीति ।** बाधते धनगर्वितः ।।१२९।।

**(६) रामचन्द्रः ।** शक्तेन समर्थेन ।।१२९।।

**(८) गोविन्दराजः । शक्तेनेति ।** धनार्जनशक्तेनापि हि शूद्रेण न धनसंचयः कर्तव्यः । अपि त्वाश्रितब्राह्मणाय यदि नियमतो धनं देयमित्येवंपरमेतत् । तथा च **गौतमः** 'यं चार्थमाश्रियेत भर्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः स्या'दिति । अत्रार्थवादः शूद्रोऽर्हति, तस्माच्छूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनोत्सेका शूश्रूषा ।।१२९।।

**(९) भारुचिः ।** महाफलैः शिल्पादिभिः वृत्त्यन्तरैः पर्याप्तधनः शूद्रो विशेषतो दानेन गुणवद्ब्राह्मणेभ्यो वृत्तिः शूद्रप्रतिग्रहोपच्छन्दनेन महतो ब्राह्मणान् स्वधर्मात् प्रच्यावयेत् । अयं तावन्नार्थः—नहि शास्त्रोपदिष्टं कुर्वतः सत्यपि परोपघाते कश्चिद्दोषोऽस्ति । यदि स्यात् नवश्राद्धादिष्वपि ददतो दोषः स्यात् । असावपि परस्परोपघातं करोति । योऽर्थमानाभ्यां गुणवतो ब्राह्मणान् प्रतिपूजयति तस्मान्नायमर्थः । धनोत्सेकाच्छूद्रो ब्राह्मणबाधने वर्ततेत्ययमपि न शक्योऽभ्युपगन्तुम् । सर्वेषामेव गृह्येत ब्राह्मणादिना तुल्यं । केन कः शूद्रे विशेषः । येन तस्यैवमर्थसञ्चयं निषिध्येत । अयं तर्ह्यन्योऽर्थः । न केवलं नित्यदानं शूद्रस्याभ्यनुज्ञायते । किं तर्हि? अभ्युदयप्रयोजनमप्यनेन दानमनुष्ठेयम् । एवं च न कार्यो धनसञ्चय इत्ययमेवमर्थः प्रतिषेधः' । अथवोक्तम्—'प्रकल्प्यास्य तैर्वृत्तिः सुकुटुम्बाद्यथार्हतः ।' इत्येवमादि ।

एवं च सति ब्राह्मणमाश्रितस्य शूद्रस्यायमुपदेशः–'शक्तेनापि हि शूद्रेण न कार्यो धन-सञ्चयः' इति। तथा स्मृत्यन्तरम्। यश्चार्यमाश्रयेत भर्तव्यं धनक्षीणोऽपि तेन चोत्तरस्त-दर्थोऽस्य निचयः स्यादिति।

**एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्तिताः॥**
**यान्सम्यगनुतिष्ठंतो व्रजन्ति परमां गतिम्॥ १३० ॥**

(१) **मेधातिथिः। सम्यगापद्धर्मा**नुष्ठानात्**परमा गतिः** प्राप्यते। शरीररक्षणाद्वि-हितातिक्रमो न भवतीति, युक्ता शुभफलप्राप्तिः। नापद्गतेनासत्प्रतिग्रहादौ। विचिकि-त्सितव्यमिति शास्त्रन्यायानुवादः ॥१३०॥

(२) **सर्वज्ञनारायणः।** आपद्धर्माः प्रसंगायाताः। सम्यगापत्काल एव ॥१३०॥

(३) **कुल्लूकः।** अमी चतुर्णां वर्णानामापद्यनुष्ठेया धर्मा उक्ताः, यान्सम्यगाचरन्तो विहितानुष्ठानान्निषिद्धानाचरणाच्च निष्पापतया ब्रह्मज्ञानलाभेन परमां गतिं मोक्षलक्षणां लभते॥१३०॥

(४) **राघवानन्दः।** उपसंहरति **एत इति।** यानापद्धर्मान्। सम्यक् तत्कालानुरूपेण। परमां मोक्षाख्याम्। लब्धविप्रजन्मान इति शेषः ॥१३०॥

(५) **नन्दनः।** प्रकरणार्थं फलोपपादनेनोपसंहरति **एते चतुर्णां वर्णानामिति** ॥१३०॥

(६) **रामचन्द्रः।** चतुर्णां वर्णानां उक्ताः। चातुर्वर्ण्यः धर्मविधिः ॥१३०-३१॥

इति श्रीरामचन्द्रविरचितटीकायां दशमोऽध्यायः ॥१३०॥

(८) **गोविन्दराजः। एत** इति। चतुर्णां वर्णानां आपद्यनुष्ठेया धर्माः त एते कथिताः। यान् सम्यगाचरन्तो आत्मसंरक्षणे सत्यात्मज्ञानाद्यबाह्या ब्रह्मप्राप्तिं भजन्ते ॥१३०॥

(९) **भारुचिः।** आत्मकुटुम्बप्राणधारणस्य प्रयोजनातिशयदर्शनाद् धर्मतन्त्रसङ्गे च तदनुष्ठानार्थस्याग्निहोत्रादेर्नित्यस्य कर्मण इयमेव स्थितिरुपपन्ना। 'यान् सम्यगनुतिष्ठन्त' इत्येवमादि। अथवा महाफलानामल्पप्रत्यवायानुषङ्गापेक्षयेदं स्तुतिवचनमुपपन्नमापद्धर्मोप-संहारार्थः श्लोकः ॥१३०॥

**एष धर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्तितः॥**
**अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्॥ १३१ ॥**

**इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥ १० ॥**

(१) **मेधातिथिः।** पाठादेव सिद्धार्थोऽयमिति ॥१३१॥

(२) **सर्वज्ञनारायणः।** चातुर्वर्ण्यस्य तद्भवस्य संकरस्य च। कीर्तितो दशभिरध्यायैः ॥१३१॥

मनुवृत्तौ जातिविवेकापद्धर्माधिकारनामा दशमोऽध्यायः ॥१०॥

(३) **कुल्लूकः।** अयं चतुर्णां वर्णानामाचारः समग्रः कथितः, अत ऊर्ध्वं **प्रायश्चित्ता-नुष्ठानं** शुभमभिधास्यामि ।।१३१।।

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां दशमोऽध्यायः ।।१०।।

(४) **राघवानन्दः।** वृत्तवर्तिष्यमाणयोः संबन्धं वक्तुं वृत्तमनूद्य वर्तिष्यमाणं प्रतिजानीते **एष इति।** शुभं शोधकम् वध्यघातकसंगतिः ।।१३१।।

इति मन्वर्थचन्द्रिकायां दशमोऽध्यायः ।।१०।।

(५) **नन्दनः।** पूर्वोक्तं सर्वमर्थमुपसंहृत्यार्थान्तरं प्रस्तौति **एष धर्मविधिः कृत्स्न इति।** उत्तरे अध्याये प्रायश्चित्तप्राधान्यस्य वक्ष्यमाणत्वात्सत्यप्यर्थान्तरोपन्यासे प्रायश्चित्तंवक्ष्या-मीत्युक्तम् ।।१३१।।

इति श्रीनन्दनविरचिते मानवव्याख्याने दशमोऽध्यायः ।।१३१।।

इति श्रीमिश्रगंगारात्मजदीक्षितमणिरामकृतायां सुखबोधिन्यां दशमोऽध्यायः समाप्तः ।।१०।।

(८) **गोविन्दराजः। एष** इति। यच्चतुर्णां वर्णानां धर्मानुष्ठानं तदेतदखिलं कथितमधुना ऊर्ध्वं प्रायश्चित्तविधिं वक्ष्यामि ।।१३१।।

इति श्रीभट्टमाधवात्मजगोविन्दराजविरचितायां मन्वाशयानुसारिण्यां प्रतिलोमानु-लोमजातकनिरूपणं नाम दशमोऽध्यायः ।। १०।।

(९) **भारुचिः।** एष धर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्तितः। अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ।। पूर्वार्धश्लोकश्चात्र सर्वधर्मोपसंहारार्थः। उत्तरः प्रायश्चित्तोपन्यास-सिद्धय इति ।।१३१।।

इति भारुचिकृते विवरणे दशमोऽध्यायः ।।

**मनुस्मृतौ दशमोऽध्यायः संपूर्णः ।।**

---

भारतीयविद्या-श्रेणी—ग्रन्थः ४०

# मनुस्मृतिः

मेधातिथि-सर्वज्ञनारायण-कुल्लूक-राघवानन्द-नन्दन-
रामचन्द्र-मणिराम-गोविन्दराज-भारुचि

इति व्याख्यानवकेन समलङ्कृता

◎

## षष्ठमो विभागः

११–१२ अध्यायात्मकः

◎

भारतशासनस्य शिक्षणविभागस्यार्थसाहाय्येन प्रकाशिता

◎

सम्पादकः

जयन्तकृष्ण हरिकृष्ण दवे

महामहोपाध्याय, विद्यावाचस्पति
एम्.ए., एल्एल्.बी., अॅड्व्होकेट (सु. को.)

इत्यनेन

भारतीयविद्याभवनस्य संमान्यनियामकेन परिष्कृता

१९८४

भारतीय विद्या भवनम्

कुलपति के. एम्. मुनशीपथः, चौपाटी

मुम्बई ४०० ००७

Bhāratīya Vidyā Series—Vol. No. 40

# MANU-SMṚTI

With Nine Commentaries by Medhātithi, Sarvajñanārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmacandra, Maṇirāma, Govindarāja and Bhāruci

VOLUME VI (Adhyāyas 11-12)

*Edited by*
JAYANTAKRISHNA HARIKRISHNA DAVE
Mahāmahopādhyāya, Vidyāvāchaspati
M.A., LL.B., ADVOCATE (SUPREME COURT)
Hon. Director, Bharatiya Vidya Bhavan

*Published with the financial assistance of the Ministry of Education, Government of India*

1984
**BHARATIYA VIDYA BHAVAN**
Kulapati K. M. Munshi Marg, Chowpatty, Bombay-400 007

# समर्पणम्

वन्दे वेदान्तवेद्यं तत् तत्त्वं सच्चित्सुखात्मकम् ।
ग्रन्थोऽयं तातपादेभ्यो नमोवाकं समर्प्यते ।। १ ।।

हरिकृष्णाभिधानास्ते लालशङ्करसूनवः ।
प्राज्ञा दवेकुलोत्पन्नाः सदाचारव्रते स्थिताः ।। २ ।।

पूर्वं राजकुमाराणां शिक्षकास्तदनन्तरम् ।
सुचिरं राजसचिवा वानप्रस्थास्ततोऽभवन् ।। ३ ।।

प्राच्यनव्यासु विद्यासु व्युत्पन्नास्ते बहुश्रुताः ।
कुटुम्बे वर्धिता प्रीतिस्तैः शास्त्रे संस्कृते तथा ।। ४ ।।

पितामहाश्च श्वशुरास्तेषां सन्यासिनोऽभवन् ।
तातपादा अपि श्वेतवस्त्रसन्यासिजीवनाः ।। ५ ।।

कृष्णानन्दगुरोरर्थे काश्यां प्रस्थापितो मठः ।
प्रातः सायं प्रतिदिनं वेदान्तश्रवणे रताः ।। ६ ।।

उपास्ति-ज्ञान-सम्पन्ना गार्हस्थ्येऽपि महर्षयः ।
प्रोत्साहितस्तैर्बालोऽहं विद्यार्जनविधौ सदा ।। ७ ।।

मनुस्मृतेरयं भागो नवव्याख्यायुतो मया ।
स्थाप्यते पुरतस्तेषां श्राद्धतर्पणचेतसा ।। ८ ।।

जयन्तकृष्ण हरिकृष्ण दवे

## PREFACE

The project of Manusmṛti with nine Sanskrit Commentaries by Medhātithi, Sarvajña-nārāyaṇa, Kullūka, Rāghavānanda, Nandana, Rāmaçandra, Manirāma, Govindarāja and Bharuçi had been entrusted to me by the Government of India to be published by the Bharatiya Vidya Bhavan with the financial assistance of the Ministry of Education, Government of India. It was intended to be published in six volumes, each volume covering two Adhyāyas.

Volumes 1, 2, 3 and 5 are already published earlier. The fourth volume covering the seventh and the eighth Adhyāyas had to be given to two different presses in order to expedite the publication. On account of various press problems, it had to be ultimately decided to get it printed at the same old press. For this fourth volume, the whole of the seventh Adhyāya and part of the eighth Adhyāya are already printed and the remaining part of the eighth Adhyāya is in the press; as the eighth Adhyāya is comparatively bigger in size, it is expected to be completed and published within the next few months.

In the meantime, printing of the sixth and the last volume covering the eleventh and the twelth Adhyāyas was in progress and the same is being published now. Verse index of the entire Manusmṛti is added at the end. As the first and the last Adhyāyas of Manusmṛti contain philosophical and ethical thoughts the editor has discussed this subject in the next few pages, particularly in the light of the nine commentaries which are being edited under this project.

The Editor expresses warm thanks to the Government of India for the kind and continuous financial assistance. Thanks are also due to the Press for its kind co-operation, excellent printing and completing the work in spite of heavy odds.

*Bharatiya Vidya Bhavan,*
*Kulapati Munshi Marg,*
*Chowpatty, Bombay-400 007.*
*August 31, 1984*

JAYANTKRISHNA HARIKRISHNA DAVE
(*Editor*)

## INTRODUCTION

### *PHILOSOPHY OF MANU*

The extant Manusmṛti, in 12 chapters, is considered by modern scholars more than 2000 years old — between 200 B.C. to 200 A.D. To understand its philosophical and ethical basis, we hope to more specifically analyse the first and the last chapters of M.S. We shall also refer to the views of the commentators. The first four verses of Manusmṛti are intende to show that this Śāstra would show or describe the means of attaining all the four goals of life — Dharma, Artha, Kāma and Mokṣa. Great sages ask the question, and Maṇu (Prajāpati) is the instructor (through his pupil Bhṛgu). Dharma can be known only from Śāstra; out of the three pramaṇas (Pratyakṣa, Anumāna and Śabda) Dharma, not being visible cannot be known by Pratyakṣa. Inference (Anumāna) is based on Pratyakṣa and therefore that also cannot reveal Dharma. Therefore, Dharma can be known only from Śabda that is Śāstra (Medhā.). As in 10-63 Dharmas like Ahimsā etc. are prescribed for all, therefore this Śāstra is for the benefit of all people. It says:—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥

Abstention from injuring creatures, Truth, non-stealing, purity and control of organs — this is the summary of the lore for all the four castes as prescribed by Manu. Dharma is the subject of this Śāstra. The Sambandha is Pratipādya-Pratipādaka. Purpose is Swarga and Mokṣa. Manu's words are authoritative because they have their root or basis in Veda. It is said that whatever Manu said is medicine. Bṛhaspati asserts the authority of Manu and says that whatever does not agree with Manu is not authoritative. The word Manu is derived from Manana (contemplation) and he is so called as he has contemplated on the meaning of the entire Veda. He is called omniscient (Sarvajñanānamaya) and in Chapter 12-123, Manu is identified with Agni, Prajāpati, Indra, Prāna and Brahma (Kullūka). This Śāstra is revealed by Swāyambhuva Manu (Nandana). This work reveals the traditional Dharmas which are six fold i.e. Dharmas of Varṇa, Āśrama, Varṇaśrama, Guṇa, Nimitta and Sādhārana Dharma (Rāmaçandra).

Medhā. has leaning towards Purvamimāmsā and therefore he says that only those parts of the Veda which prescribe some act to be done are authoritative while other parts which describe a Siddha Vastu or an established fact are merely an Arthavāda or meant for glorification. Kullūka says that Medhā. has "Karma-mimāmsā-Vāsanā" and therefore he says so: but Vedas are authoritative in giving knowledge about Brahma and therefore it is not correct to say that only that portion of Veda which prescribes some act to be done is alone authoritative; if it is so, then the whole of the Jñānakānda of Veda would become un-authoritative as Brahma is a Siddha Vastu. But except for this preference for Karmamimāmsā, Medhā. does show at all proper places the Vedāntic basis of Manusmṛti.

Manu was asked by sages to describe the duties of Varṇas, Āśramas and intermediate castes but from verse five, Manu starts describing the creation and evolution of the universe. The relevance of this description of creation is explained by Medhā. in this way: The Śāstra has a great and extensive scope. What is described here is the entire cosmic process of created beings from Brahmā to inanimate objects depending upon the practice of Dharma and Adharma (Right and Wrong): for example it is stated in Verse 1-49 that trees etc. are pervaded by darkness (inertia) which is the result of their acts --- they have inner consciousness and are affected by pleasure or pain.

तमसा बहुरूपेण वेष्टिताः कर्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ।।

I-49

Further it is stated in 12-23 as under

एता दृष्ट्वा तु जीवस्य गतीः स्वेनैव चेतसा ।
धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः ।।

XII-23

Having contemplated in his mind the various transitions and births of the individual soul through the practice of Dharma and Adharma one must fix his mind on practising Dharma alone. This shows that Dharma is Superior and Adharma is

just the reverse. It is therefore necessary to expound Dharma and Adharma. This is the great purpose of this Śāstra, and this justifies the description of creation from 1-5 of Manu-Smṛti.

Govindarāja supports this explanation of Medhā., but Kullūka and Rāghavānand reject this explanation. Kullūka says that knowledge of Ātman is also Dharma. Manu in 6-92 says that the following ten are of the nature of Dharma and there he mentions Dhṛti etc. along with Vidyā also. Vidyā is interpreted by all including Medhā. as Ātmajñāna. Mahābhārata has mentioned Ātmajñāna and Titīkṣa as the Dharma common for all. In Yājñavalkya Smṛti, Ātmadarśana is mentioned as the highest Dharma. Brahma-sutra 1-1-2 States that Brahma is the cause of creation sustenance and destruction of the universe. This Ātmajñāna is the highest Dharma which should necessarily be mentioned at the start in the first chapter as also in the concluding chapter of M.S. Having therefore described this Parama Dharma in the first chapter, M.S. from the second chapter onwards describes the various Samskāras (purificatory rites) etc. as subservient to this highest Dharma. In this way the description of the creation and evolution of the universe from 1-5 of M.S. is justified.

In 1-5, M.S. says that there existed "this" enveloped in darkness, unperceived, without distinctive marks, unattainable by reasoning, unknowable, and wholly immersed as it were in deep sleep.

Kullūka says that in the beginning there was only *Sat* i.e. Brahma and Prakṛti was also of the nature of and non-manifest from Brahma.

Rāghavānanda says that in order to have Brahmajñāna (which is the highest Dharma) Manu wants to declare that the whole universe has its basis in Avidyā (ignorance) and therefore he says that in the beginning there was Tamas i.e. Avidyā. In other words Brahma as limited by Avidyā is the cause of this universe. There was thus Brahma — Sat — in the beginning, not *Śūnya* or void as postulated by Nihilists. He says that this Ātmajñāna is the main subject of this Treatise and that is known from the six distinguishing marks like

